# कामिकागमः

## पूर्वभागः

### तन्त्रावतारपटलः

कैलासदक्षिणे शृङ्गे नानाश्चर्यसमन्विते
प्रवृद्धवटवृक्षोत्थच्छायाच्छन्नेऽतिविस्तृते १
व्याघ्रचर्मपरीधाने पीठे रत्नोपशोभिते
देवदानवगन्धर्वसिद्धविद्याधरादिभिः २
सेव्यमानं महादेवं श्रीकण्ठं विश्वनायकम्
कौशिकः काश्यपोऽगस्त्यो गौतमो नारदस्तथा ३
सनत्कुमारस्सनकस्सनातनसनन्दनौ
भृगुश्चात्रिभरद्वाजवसिष्ठाद्या महर्षयः ४
जिज्ञासवः परं ज्ञानं शिवशक्त्युन्मुखीकृताः
प्रणम्य चरणौ तस्य प्राहुरीशमुमापतिम् ५
ऋषयः
भगवन् देवदेवेश पशुपाशविमोचक
सृष्टिस्थितितिरोभावलयानुग्रहकारक ६
वियदादिमहामायावृत्तेस्साक्षात्प्रवर्तक
सहजानन्दसन्दोहस्वसंविल्लक्षणात्मक ७
परसंवित्स्वरूपिण्या शक्त्या परमया युत
दिग्देशकालनिर्मुक्त जगदाह्लादकारण ८
वयं नियुक्ता देवेश त्वयेज्यायां शिवस्य तु
तदर्थं सारभूतं तु शास्त्रं शिवमुखोद्भवम् ९
वक्तुमर्हसि देवेश भक्तानामनुकम्पया
इत्येवं ऋषिभिः पृष्टो भगवान् वृषभध्वजः १०
प्राह गम्भीरया वाचा स्फुरच्चन्द्रार्धशेखरः
साधु पृष्टं हि युष्माभिश्शृणुध्वं संशितव्रताः ११
कामिकाख्यान्महातन्त्रादुद्धृतं शास्त्रमुत्तमम्

अवतीर्णमिदं मेरौ प्रणवाद्यवतारकैः १२
क्रियाचर्यासमोपेतं योगज्ञानान्वितं परम्
इत्येवमुक्त्वा ऋषयः प्रणेमुर्दण्डवत्क्षितौ १३
तेषामाज्ञां शिवो दत्वा प्राह तन्त्रमनुत्तमम्
आदावभूद्द्विधा ज्ञानमधिकारिविभेदतः १४
परापरेण भेदेन पतिपश्वर्थदर्शकम्
शिवप्रकाशकं ज्ञानं शिवज्ञानं परं स्मृतम् १५
वेदाद्यमपरं ज्ञानं पशुपाशार्थदर्शकम्
यथा विलक्षणं चक्षुः क्षपायां नृबिडालयोः १६
तथा विलक्षणं ज्ञानमेवमेतत्परापरम्
लौकिकं वैदिकं चैव तथाध्यात्मिकमेव च १७
अतिमार्गं च मन्त्राख्यं तन्त्रमेतदनेकधा
सद्योवाममहाघोरपुरुषेशानमूर्तयः १८
प्रत्येकं पञ्चवक्त्रास्स्युस्तैरुक्तं लोकिकादिकम्
पञ्चविंशतिभेदेन स्रोतोभेदः प्रकीर्तितः १९
एष्वेवान्तर्गतं वक्तुं वाङ्मयं वस्तुवाचकम्
तेष्वेव मन्त्रतन्त्राख्यं सदाशिवमुखोद्गतम् २०
सिद्धान्तं गारुडं वामं भूततन्त्रं च भैरवम्
ऊर्ध्वपूर्वकुबेरास्ययाम्यवक्त्राद्यथाक्रमम् २१
ईशानवक्त्रादूर्ध्वस्थाज्ज्ञानं यत्कामिकादिकम्
दशाष्टादशभेदेन शिवरुद्रावतारकैः २२
षट्षष्टिभिः क्रमेणैव कथितं तु शिवाज्ञया
तदेव युगभेदेन सद्योजातादिमूर्तिभिः २३
प्रकाशितं चतुर्भेदं मूर्तिसंख्यावशेन तु
संख्यया गारुडं तद्वत्पूर्ववक्त्राद्विनिर्गतम् २४
सावित्र्याद्यं च सिद्ध्यर्थमुक्तं तदवतारकैः

नयसूत्रादिभेदेन वामं वामाद्विनिर्गतम्  २५
चतुर्विंशतिसंख्याकमवतीर्णं शिवाज्ञया
कौलादिविंशत्संख्यातं भूततन्त्रं तु सद्यतः  २६
द्विविधं तन्त्रमुद्भूतं भैरवं दक्षिणास्यतः
असिताङ्गादिभिर्भूमौ कथितं तदनेकधा  २७
प्रत्येकं तन्त्रभेदोक्तौ जायते ग्रन्थविस्तरः
अथ सिद्धान्ततन्त्राणामवतारो निगद्यते  २८
तनोति विपुलानर्थांस्तत्त्वमन्त्रसमाश्रितान्
त्राणं च कुरुते यस्मात्तन्त्रमित्यभिधीयते  २९
कामिकं प्रणवाख्यस्य परार्धग्रन्थसंख्यया
प्रणवात्त्रिकलः प्राप्तः त्रिकलाच्च ततो हरः  ३०
त्रयश्चैवोपभेदास्स्युर्वक्त्रारं भैरवोत्तरम्
नारसिंहं च विप्रेन्द्राः कथ्यते कामिकत्रयम्  ३१
योगजं तु सुधाख्यस्य प्रोक्तं तल्लक्षसंख्यया
सुधाख्याद्भस्म संप्राप्तस्ततः प्राप्तो विभुः क्रमात्  ३२
वीणाशिखोत्तरं तारं सन्तं सन्ततिरेव च
आत्मयोगं च पञ्चैते योगतन्त्रस्य भेदकाः  ३३
चिन्त्यं सुदीप्तसंज्ञस्य प्रोक्तं शतसहस्रकैः
दोप्ताच्च गोपतिः प्राप्तस्ततः प्राप्ता तु चाम्बिका  ३४
सुचिन्त्यं सुभगं वामं पापनाशं परोद्भवम्
अमृतं चिन्त्यतन्त्रस्य षड्विधं तु प्रकीर्तितम्  ३५
कारणं कारणाख्यस्य कोटिग्रन्थेन चोदितम्
कारणाच्छर्वरुद्रस्तु शर्वात्प्राप्तः प्रजापतिः  ३६
कारणं पावनं दौर्गं माहेन्द्रं भीममेव च
ततस्तु मारणं द्वेष्टं सप्तधा कारणं तथा  ३७
अजितं सुशिवाख्यस्य नियुतग्रन्थसंख्यया

सुशिवाख्याच्छिवः प्राप्तस्तच्छिवादच्युतस्ततः ३८
प्रभूतञ्च परोद्भूतं पार्वती पद्मसंहिता
चतुर्भेदमिदं तन्त्रं चास्मिन् तन्त्रे प्रकीर्तितम् ३९
दीप्तमीशस्य विख्यातं नियुतग्रन्थसंख्यया
ईशानमूर्तिस्संप्राप्तस्ततः प्राप्तो हुताशनः ४०
अमेयं शब्दमाच्छाद्यमसंख्यममितौजसम्
आनन्दं माधवोद्भूतमद्भुतं चाक्षतं तथा ४१
दीप्तं तु नवधा प्रोक्तं सूक्ष्मतन्त्रं निबोधत
सूक्ष्मं सूक्ष्मस्य संप्रोक्तं तद्ग्रन्थं पद्मसंख्यया ४२
सूक्ष्माद्वैश्रवणः प्राप्तस्तस्मात्प्राप्तः प्रभञ्जनः
तत्सूक्ष्ममेकभेदं स्यात्सूक्ष्ममित्यभिधीयते ४३
सहस्रं कालसंज्ञस्य प्रोक्तं वै शङ्खसंख्यया
कालाद्भीमस्ततः प्राप्तो भीमाद्धर्मो यथा तथा ४४
अतीतं मङ्गलं शुद्धमप्रमेयं तु जातिभाक्
प्रबुद्धं विबुधं हस्तमलङ्कारं सुबोधकम् ४५
एते सहस्रतन्त्रस्य दशसंख्याः प्रकीर्तिताः
अंशुमानम्बुसंज्ञस्य पञ्चलक्षेण कीर्तितः ४६
अग्रश्चैवाम्बुसंज्ञाच्च अग्रात्प्राप्तस्ततो रविः
विद्यापुराणतन्त्रं च वासवं नीललोहितम् ४७
प्रकारणं भूततन्त्रमात्मालङ्कारमेव च
काश्यपं गौतमं चैन्द्रं ब्राह्मं वासिष्ठमेव च ४८
ऐशानं नामतः प्रोक्तमंशुमान् द्वादश स्मृतः
सुप्रभेदं महाशास्त्रं दशेशस्य प्रकीर्तितम् ४९
विघ्नेश्वरो दशेशाच्च शशी प्राप्तो गणेश्वरात्
त्रिकोटिसंख्यया प्रोक्तो भेदश्चात्र न विद्यते ५०
क्रियादिज्ञानपर्यन्तं तन्त्रमत्रैव दृश्यते

शिवभेदमिति प्रोक्तो रुद्रभेदस्तथोच्यते  ५१
रुद्रस्यानादिसंज्ञस्य विजयं तन्त्रमुत्तमम्
परमेशस्ततः प्राप्तस्त्रिकोटिग्रन्थसंख्यया  ५२
विजयं चोद्भवं सौम्यमघोरं मृत्युनाशनम्
कुबेरं च महाघोरं विमलं विजयाष्टकम्  ५३
निःश्वासं तु दशार्णस्य प्रोक्तं तत्कोटिसंख्यया
दशार्णात् शैलजा प्राप्ता चाष्टभेदेन भेदितः  ५४
निःश्वासोत्तरनिःश्वासौ निःश्वासस्य मुखोदयम्
निःश्वासनयनं चैव तथा निःश्वासकारिका  ५५
घोरसंज्ञं यमाख्यं च गुह्यं चाप्येवमष्टधा
निधनस्य स्वयंभूतं त्रिकोटयर्धेन कीर्तितम्  ५६
निधनेशात्स्वयंभूतं श्रुतवान्नलिनोद्भवः
प्रजापतिमतं पद्मं स्वायम्भुवमिति त्रिधा  ५७
आग्नेयं यच्च तद्व्योम्नो ग्रन्थसंख्यायुतत्रयात्
आग्नेयं तन्त्रमेकं तु तस्मात्प्राप्तो हुताशनः  ५८
तेजस्तु वीरं संप्राप्तो नियुतग्रन्थसंख्यया
प्रजापतिस्ततः प्राप्तस्त्रयोदशविभेदकम्  ५९
प्रस्तारं फुल्लमल्लञ्च प्रबोधं बोधबोधकम्
अमोहं मोहसमयं हाकटं शाकटाधिकम्  ६०
हलं विलेखनं भद्रं वीरं वीरे त्रयोदश
रौरवं ब्राह्मणेशस्य चार्बुदाष्टकसंख्यया  ६१
नन्दिकेशस्ततः प्राप्तः षड्भेदञ्च विधीयते
कालघ्नं च कलातीतं रौरवं रौरवोत्तरम्  ६२
महाकालमतं चैन्द्रं रौरवं षड्विधं मतम्
मकुटं तु शिवाख्यस्य शतसाहस्रसंख्यया  ६३
महादेवस्ततः प्राप्तो भेदश्च द्विविधो भवेत्

मकुटोत्तरं च मकुटं द्विविधेन विधीयते ६४
सर्वात्मकस्य विमलं त्रिलक्षग्रन्थसंख्यया
वीरभद्रस्ततः प्राप्तो भेदाः षोडशसंख्यया ६५
अनन्तं भोगमाक्रान्तं वृषपिङ्गं वृषोदरम्
वृषाद्भुतं सुदन्तं च रौद्रं भद्रविधं तथा ६६
अरेवतमतिक्रान्तमट्टहासमलङ्कृतम्
अर्चितं धारणं तन्त्रं विमलं षोडशैव तु ६७
चन्द्रज्ञानमनन्तस्य त्रिकोटिग्रन्थसंख्यया
बृहस्पतिस्ततः प्राप्तो भेदाश्चात्र चतुर्दश ६८
स्थिरं स्थाणुं महान्तं च वारुणं नन्दिकेश्वरम्
एकपादपुराणं च शङ्करं नीलरुद्रकम् ६९
शिवभद्रं कल्पभेदं श्रीमुखं शिवशासनम्
शिवशेखरमाख्याकं देव्या मतं तथैव च ७०
चन्द्रज्ञानस्य तन्त्रस्य चतुर्दशविधो भवेत्
मुखबिम्बं प्रशान्तस्य शतसाहस्रसंख्यया ७१
दधीचिस्तु ततः प्राप्तो भेदाः पञ्चदशैव तु
चतुर्मुखमलायोगं संस्तोभं प्रतिबिम्बकम् ७२
आत्मालङ्कारवायव्ये तौटिकं तुटिनीरकम्
कलात्ययं तुलायोगं कुट्टिमं पट्टशेखरम् ७३
महाविद्या महासौरं बिम्बं पञ्चदशैव तु
प्रोद्गीतं शूलिनः प्रोक्तं लक्षत्रितयसंख्यया ७४
कवचाख्यस्ततः प्राप्तो भेदाः षोडशसंख्यया
कवचं चैव वाराहं पिङ्गलामतमेव च ७५
पाशबन्धं दण्डधरमङ्कुशं च धनुर्धरम्
शिवज्ञानं च विज्ञानं श्रीकालज्ञानमेव च ७६
आयुर्वेदं धनुर्वेदं सर्पदंष्ट्रीविभेदनम्

गीतं भरतमातोद्यं प्रोद्गीतं षोडशैव तु ७७
ललितं चालयेशस्य प्रोक्तमष्टसहस्रकम्
आलयाल्लालितः प्राप्तो ललितं ललितोत्तरम् ७८
कौमारं चैव तद्भेदं त्रिविधं परिकीर्तितम्
बिन्दोस्सिद्धमिदं तन्त्रं कोटिकोट्यर्धसंख्यया ७९
बिन्दुसंज्ञात्तु सिद्धाख्यं प्राप्तश्चण्डेश्वरः परः
सारोत्तरमथान्यत्तु औशनोत्तरमेव च ८०
शालाभेदं शशीखण्डं सिद्धं तन्त्रं चतुर्विधम्
सन्तानं शिवनिष्ठस्य षट् सहस्रं तु संख्यया ८१
असंवायस्ततः प्राप्तो भेदस्सप्तविधो भवेत्
लिङ्गाध्यक्षं सुराध्यक्षं शङ्करं त्वमलेश्वरम् ८२
असंख्यमनिलं द्वन्द्वं सन्तानं सप्तधेरितम्
सोमदेवस्य शर्वोक्तं द्विलक्षेणैव संख्यया ८३
नृसिंहः प्राप्तवान् सोमाद्भेदः पञ्चविधो भवेत्
शिवधर्मोत्तरं चैव वायुप्रोक्तं तथैव च ८४
दिव्यप्रोक्तमथैशानं शर्वोद्गीतं विधीयते
श्रीदेव्यास्तु समाख्यातं पारमेश्वरमुत्तमम् ८५
ग्रन्थद्वादशलक्षं तु सप्तधा प्रसृतं तु तत्
उशनोमुनिसंप्राप्तः श्रीदेव्याश्च यथाक्रमात् ८६
मतङ्गं यक्षिणीपद्मं पारमेश्वरमेव च
पुष्करं सुप्रयोगं च हंसं सामान्यमेव हि ८७
किरणं देवविभवे कोटिपञ्चकसंख्यया
संवर्तकस्ततः प्राप्तो भेदास्तु नवसंख्यया ८८
गारुडं नैर्ऋतं नीलं रूक्षं भानुकधेनुके
प्रबुद्धं बुद्धकालाख्ये नवधा किरणो भवेत् ८९
शिवस्य वातुलं प्रोक्तं ग्रन्थाः शतसहस्रकम्

महाकालस्ततः प्राप्तो भेदा वै द्वादशैव तु ९०
वातुलं चोत्तरं चैव कालज्ञानं प्ररोहितम्
सर्वं धर्मात्मकं श्रेष्ठं नित्यं शुद्धं महाननम् ९१
विश्वं विश्वात्मकं चैव वातुले द्वादश स्मृताः
अष्टाविंशतितन्त्राणां मूलभेदाः प्रकीर्तिताः ९२
कामिकं पादयुग्मं स्याद्योगजं गुल्फमेव च
चिन्त्यं पादाङ्गुलिः प्रोक्तः कारणं जङ्घिका भवे ९३
अजितं जानुदेशं स्याद्दीप्तमूरुप्रदेशकम्
सूक्ष्मन्तु गुह्यमेवं स्यात्सहस्त्रं कटिदेशकम् ९४
अंशुमान् स्यात्पृष्ठतलं सुप्रभेदं तु नाभिकम्
विजयं कुक्षिदेशं स्यान्निःश्वासं हृदयं भवेत् ९५
स्वायंभुवं स्तनौ द्वौ तु अनलं नेत्रमेव च
वीरं कण्ठप्रदेशस्तु रौरवं श्रोत्रमेव च ९६
मकुटं माकुटं तन्त्रमङ्गप्रत्यङ्गमेव च
बाहू तु विमलं प्रोक्तं चन्द्रज्ञानमुरस्थलम् ९७
बिम्बतन्त्रं सुवदनं प्रोद्गीतं रसना भवेत्
ललितं स्यात्कपोलं तु सिद्धं चैव ललाटकम् ९८
सन्तानं कुण्डलं विद्याच्छर्वोक्तमुपवीतकम्
पारमेशेन हारं तु किरणं रत्नभूषणम् ९९
वातुलं वसनं प्रोक्तं शिवधर्म त्रिपुण्ड्रके
कल्पञ्चैव तु संयोगे शिवधर्मानुलेपने १००
बिम्बं पुष्पे च माल्ये च सिद्धान्तेन निवेदितम्
तन्त्रात्मकशरीरेण मन्त्रमूर्तिमयेन तु १०१
एतेषामुपभेदैश्च सादाख्यं मूर्तिमत्स्थितम्
शिवरुद्रात्मकं तन्त्रमष्टाविंशतिसंख्यकम् १०२
चिन्तामणिरिव भ्राजि चैकधा बहुधा दिशेत्

यद्यप्येको भवेद्वक्ता श्रोतृभेदादनेकधा १०३
कर्षणादिप्रतिष्ठान्तं मूलेनैव समाचरेत्
कृतश्चेदुपभेदेन कर्ता भर्ता विनश्यति १०४
केवलं यजनं प्रोक्तमुपभेदैर्विशेषतः
प्रतिष्ठाद्यं तु मूलैश्चेत् अष्टाविंशतिभिर्वरम् १०५
येन तन्त्रेण चारब्धं कर्षणाद्यर्चनान्तकम्
तेन सर्वं प्रकर्तव्यं न कुर्यादन्यतन्त्रतः १०६
कारयेदन्यतन्त्रेण नोक्तं चेत्तु विशेषतः
उक्तानि प्रतिषिद्धानि पुनस्संभाषितानि च १०७
सापेक्षनिरपेक्षाणि शिववाक्यान्यनेकधा
चतुष्पादयुतान्येव भुक्तिमुक्त्यर्थसाधनम् १०८
एतान्येवाथ श्रुत्वा तु देवैर्मुनिवरादिभिः
संक्षेपतोऽपि कथितं सर्वेषामनुकम्पया १०९
एषामध्ययनं कार्यं शिवविप्रैर्गुरुक्रमात्
अध्यापनं च कर्तव्यं न कार्यमितरैर्नरैः ११०
दीक्षाविहीनविप्राद्यास्त्रिवर्णाश्शूद्रजातयः
सवर्णाद्यनुलोमाश्च शिल्पिनः कारुकादयः १११
पठन्ति शिवशास्त्रञ्चेत्तत्पापान्नृपराष्ट्रयोः
अचिरेण विनाशः स्यात्तस्माद्राजा निवारयेत् ११२
शिवसिद्धान्ततन्त्रेण प्रारब्धं कर्षणादिकम्
न कुर्यादन्यशास्त्रेण कुर्याच्चेत्तन्त्रसंकरः ११३
तन्त्रसंकरदोषेण राजा राष्ट्रं च नश्यति
गारुडं भूततन्त्रं च भैरवं वामतन्त्रकम् ११४
कापालं पाञ्चरात्रं च लाकुलं कुलशास्त्रकम्
तन्त्रं पाशुपतं चान्यत्पुराणं धर्मशास्त्रकम् ११५
इतिहासं षडङ्गं च ऋग्यजुस्सामसंज्ञकम्

अथर्वणं तथा बौद्धमार्हतं मतमेव च ११६
ऊर्ध्वस्रोतोऽक्षपाच्छास्त्रादपरं तदनुक्रमात्
कामिकादि शिवज्ञानं मूर्धा भगवतस्सदा ११७
इतराणि महेशस्य हृत्कण्ठाद्यङ्गकानि वै
पूर्वपक्षतया तानि कथितानीह शम्भुना ११८
हेयोपादेयवस्तूनां निर्णये परमार्थतः
तत्सर्वमधरीकृत्य शैवसिद्धान्त ईरितः ११९
सिद्धान्तशास्त्रनिष्ठैश्च शिवविप्रैर्यथाक्रमम्
शास्त्रान्तरैस्तु संस्थाप्य लिङ्गं तदुभयार्थकम् १२०
पूजनीयं नृपग्रामयजमानाभिवृद्धये
शैवस्सर्वाधिकारी स्यात्स्वकीये च परत्र च १२१
शैवास्सर्वेषु कुर्वन्ति ये गृहस्था द्विजोत्तमाः
यामले मातृतन्त्रे च कापाले पाञ्चरात्रके १२२
बौद्धे चार्हमते चैव लाकुले वैदिकेऽपि च
अन्येष्वपि च मार्गेषु तत्तच्छास्त्रैः स्वशास्त्रतः १२३
शैवाः कुर्वन्ति दीक्षाद्यं तल्लिङ्गस्थापनादिकम्
मुख्यत्वादिह शैवस्य मुखमाहात्म्यतोऽपि च १२४
अधिकारोऽस्ति सर्वत्र नान्येषां शिवदर्शने
तस्मात्परार्थमात्मार्थं स्थापनं यजनं तथा १२५
शिवविप्रेण कर्तव्यमन्येषां स्वार्थमेव हि
परार्थमपि कुर्याच्चेल्लोपेन नृपतेस्तथा १२६
तद्राष्ट्रस्य च नाशः स्यादचिरेण न संशयः १२७
इति कामिकाख्ये महातन्त्रे क्रियापादे तन्त्रावतारपटलः प्रथमः

## अथ मन्त्रावतारपटलः

अथ संक्षेपतो वक्ष्ये मन्त्राणामुद्धृतिं क्रमात्

मन्त्रं विना क्रिया नास्ति कर्षणाद्यर्चनान्तकम् १
मननं सर्ववेदित्वं त्राणं संसार्यनुग्रहः
मननत्राणधर्मित्वान्मन्त्र इत्यभिधीयते २
मन्त्रो द्विरूपो विज्ञेयो वाच्यवाचकभेदतः
वाग्रूपो वाचकः प्रोक्तो वाच्यस्त्वर्थात्मकः स्मृतः ३
वाच्यवाचकयोश्चैव तादात्म्यं क्वचिदिष्यते
नादो मन्त्र इति प्रोक्तस्स नादो जायते परात् ४
नादाद्बिन्दुस्समुद्भूतो बिन्दोराद्यस्वरो भवेत्
तस्मात्स्वरद्वयं द्वौ द्वौ तेषां भेदस्त्रयोदश ५
स्वराः षोडश जीवाख्याः कादयो देहवन्मताः
संख्यया ते चतुस्त्रिंशत्त एव व्यञ्जनानि तु ६
प्राणोपाधिविभेदेन व्याप्तं तैरेव सर्वतः
तैरेव रचितं शास्त्रं परापरविभेदितम् ७
नव खण्डं तु नादाख्यं पञ्चाशद्वर्णभेदितम्
विकारभूतभूताख्यवेदवेदेन्दुसंख्यया ८
खण्डानां निर्णयो वर्णैरेवमेव नवात्मकः
स नादः कथ्यते विप्राः पर्यायैश्शिवनामभिः ९
स्थूलस्सूक्ष्मः परश्चेति त्रिविधः परिपठ्यते
शब्दबोधानुभूतात्मा सर्वप्राणिहृदि स्थितिः १०
पञ्चाशद्रुद्रभेदेन पञ्चाशच्छक्तिभेदतः
संस्थिता मातृका ज्ञेया साधकैस्तत्त्वदर्शिभिः ११
तद्व्यासो वक्ष्यते विप्राः पश्चाद्वर्णाध्ववर्णनैः
ऋषय ऊचुः
भगवन् प्राणिनो लोके क्षीणसत्वाचिरायुषः १२
लोभमोहमहामानरागद्वेषादिभिर्युताः
तेषां योग्यमशक्तानां शक्तानां च यथातथा

बहुधा मन्त्रसद्भावो वक्तव्यः करुणानिधे १३
ईश्वर उवाच
येन येन प्रकारेण सुखोपायो भवेन्नृणाम्
तेन तेन प्रकारेण कथयामि समासतः १४
चिन्तामणिमन्त्रः
जीवाद्यं पञ्चमं वायुपूर्वं कारणकार्ययुक्
चिन्तामणिरिति ख्यातो मन्त्रोऽयं शिववाचकः १५
पञ्चविंशच्चतुर्थस्य पञ्चमं पञ्चविंशकम्
अष्टकात्पञ्चमं युग्मं मायाबीजसमन्वितम् १६
भेदो द्वितीयबीजस्थं धातुपूर्वं यथाक्रमम् १७
हृच्छिरश्शूलिका वर्म हेतयो मुनिपुङ्गवाः
सद्योजातादयो वापि तत्स्थाने ह्युभयं तु वा १८
मन्त्रस्समुदितो वापि वाचकः स्याच्छिवस्य तु
यदा हंस विशायेति मन्त्रं पञ्चाक्षरं भवेत् १९
तदा तद्वर्णभेदेन कार्या वक्त्राङ्गकल्पना
अथवाऽन्यप्रकारेण मन्त्रलक्षणमुच्यते २०
सान्तार्कबीजसंयोगात्पादहृद्गुह्यमस्तकैः
हृच्चूडास्यतनुत्राणमूर्ध्वमूलदृगस्त्रकान् २१
उद्धरेत्क्रमशो मन्त्री सज्वालान्सृष्टिरस्त्रकम्
यद्वानलासनारूढो वर्णव्योमेन्दुभास्करैः २२
यष्टभूजलवह्न्यादि व्योमबीजाङ्गसङ्गमात्
मन्त्रोऽयं मूलभूतस्तु प्राग्वदस्याङ्गकल्पना २३
तत्त्वंपदार्थयोर्वापि समायोगस्य कारणम्
खबीजानलबीजस्थं कारणोक्तं सितार्णकम् २४
ससृष्टिमुद्धरेद्ध्रस्वं तद्वा शिवपदान्वितम्
तारमाद्यं तदन्यं खबीजं स्वस्यापि नेति च २५

उद्धरेद्दीपकं प्राग्वन्मूलमन्त्रोयमीरितः
तत्र ब्रह्माङ्गसंक्लृप्तिरनुलोमविलोमतः  २६
कालान्तकमन्त्रः--
अथ कालात्मनश्चेह वक्ष्येहं मन्त्रलक्षणम्
सनाभि पद्मं संलिख्य प्राग्दलाद्यक्षरान्न्यसेत्  २७
पूर्वोरकादौ योन्यस्य विकारं तस्य दक्षिणे
एवं प्रदक्षिणं न्यासो मन्त्रोद्धारो दलक्रमात्  २८
श्रीस्थितिश्च विसर्गस्थो मकारो मूतयाचया
ये निपाताश्च विश्वेश स्वराद्यो नास्वरादिकम्  २९
मश्च वश्च भकारोन्तिजाक्षिज्ञार्वस्तनोन्ततः
मनेताताश्च सिद्धं या दीपको कथयोपकृत्  ३०
नानिपञ्च प्रयोश्चाथ स्याच्चितुश्च न सस्थतः
च्याशियश्च यकारश्च वकारो यश्च वा ततः  ३१
नानापव्याथवा नाच धारमद्भिभगास्तराः
ज्ञार्वावन्तो द्विधा धूक्च नियौतत्तद्विसर्गतः  ३२
यरोमश्च मकारश्च स्वराद्यो नानमा तथा
वरौ द्वराद्यौ तुश्चैव नदावन्ते तथा च ने  ३३
यमाद्यं वसुभेनां च समेद्य प्रनधुस्तथा
निर्गार्हासी प्रसा प्राश्चै स्वकुशामी प्लको ततः  ३४
व्योम स्वराद्यो योर्वाश्च रुचौमस्सविसर्गकः
वश्च स्वश्च तथा दीं‌श्चस्तिसृ धूथमते तथा  ३५
मर्वभूताश्च पप्तौ च नकारोन्ते ननौ तथा
शार्गीन्द्र इगुश्चैव योरव्यमवराटिकाः  ३६
धूनभोसि विसर्गोज भूमिस्तुत नशास्तथा
सविसर्गे मकारस्तु व्योन्ताश्च न भवौ तथा  ३७
भ्याभ्यागाप तथापिङ्ग ते धूधूनिंश्चयोशता

तशश्च दर्शिकारोन्ते मयष्का स्याश्चवे तथा ३८
कर्तृश्च तिथिकार्याश्च जकारश्च विसर्गकः
मश्च दीपोथ रागार्वा सूरूपू पग्वसूपव ३९
रूस्वराद्यो यनेराश्च सौगश्च कृचयौ च ते
ते स्वराद्याथ भूरामोधिशखाद्यर्पितं न्वथा ४०
पानायोहा स्तथावाच स्वरद्यो द्यो तथैव च
ह्याता स्वराद्यो बीजाद्यो जकारः सविसर्गकः ४१
अकारो दीपकोन्वश्च भाववर्वाश्च प्रभौ तथा
दिक् धूपदीपको यश्च धागरायास्तथश्चवौ ४२
जाययाश्चोध रूपज्योस्मभुस्म तथा च यः
देते भन्दरताश्चैव पीठश्च न्दमश्च एव च ४३
सयवीयाश्च रौ रौ च तगो ज्योतांश्च विंशतिः
स्वराद्यस्सविसर्गोप शिवौ मुचवसौ तथा ४४
स्वराद्यस्सकलश्चैवं सविसर्गो म एव च
दृश्च स्वराद्यो मश्चैव दीपको शादृमू तथा ४५
प्रेति नाश्च स्वराद्यश्च ज्योना दीपौ वसौ तथा
चर्वास्तथा नाद्विपंश्च विंश्च व सविसर्गकः ४६
स्वराद्योरु तथा चैव रुतिकारो विसर्गयुत्
देशश्च शद्धामुरश्चैव कारस्सार्चिसागशाः ४७
मकारस्सविसर्गान्ते प्रादद्विरायेन विन्यसेत्
चक्रं तु गन्धपुष्पाद्यैः समभ्यर्च्य च दर्शयेत् ४८
शिष्यस्य शिवभक्तस्य शिवविप्रस्य धीमतः
गुर्वाज्ञापूर्वकं चैव गृह्णीयान्मन्त्रमुत्तमम् ४९
अन्यथा स्वीकृतेऽन्यत्र तज्जपेद्यद्यनर्थकृत्
शिवाद्यवनिपर्यन्तं भूतभावादिकं क्रमात् ५०
मन्त्रेस्मिन् संस्थितं ज्ञात्वा मुच्यते पाशबन्धनात्

चैत्र्यादि दिनमारभ्य फाल्गुन्यन्तदिनान्तकम्  ५१
यजेद्वर्णं प्रतिदिनं एकैकं प्रणवादिकम्
नाभिपद्मदलेष्वष्टौ वर्णा दीपकपूर्वकाः  ५२
तैरेतान् संपुटान् कृत्वा जपेद्ध्यायेद्यजेदिति
एकेन वा यदेदह्ना चक्रेस्मिन्सव्यवस्थितम्  ५३
रुद्रमन्त्रचक्रम् --
अथातो रुद्रमन्त्रस्य चक्रलक्षणमुच्यते
व्योमतत्वपदानां तु कन्यकाङ्गगणो दवः  ५४
तेषूर्ध्वपङ्क्तितो न्यासश्चोद्धारः क्रमतः स्थितः
दीपकोव्यो यदाप्या च दीक्षर्वा च तथा च ना  ५५
यकाराष्टद्वयं चैव रूपपिंश्चलिलो तथा
सद्वयञ्चायतञ्चैव स्वराद्योव्यानयेष्टदे  ५६
नपारुतेज कालश्च तुश्च ण च नती तथा
द्याकालतधनास्यांश्च संल्लिखेदाद्यपंक्तिके  ५७
मव्यारूप च व्यायौ च हा पापघ्नश्च शेशवः
त्त्वमानालं च भाशिश्च भुवं दधचितो तथा  ५८
रूरूपस्ते तथा रूरू लावमोगो तथैव च
प्रश्च सश्च द्वितीयान्ते नेतवा विश्वदीपकः  ५९
हासायश्च विषाकश्च पथश्रीश्चबराशयाः
दगुसाश्च तथा णेरु विविलाम तथैव च  ६०
पापिकारस्तथा निश्च द्वयं रेथयुक् शिव
त्रेपपूस्त्रस्तुश्चैव नित्यं नात्रे तृतीयके  ६१
रियनेनाश्च देयौ च पनादीतंश्चले तथा
रेफपूर्वोपितायौ यवयाप्यमस्तथैव च  ६२
द्योधाणपि तथाणेणे णेयणेसे तथापरे
नन्तश्च अद्यव्यापी च विलिखेद्वेदपङ्क्तिके  ६३

सप्रमाण तथा वाच अदशाष्ट्वास्तथैव च
ष्टालित्रयगकारश्च आददश्चेययौ तथा ६४
जापास्सेपि विसर्गश्च णेकारो मूपष्टाश्चरू
पुनद्रहे तपश्चैव व्योकारश्च अनेवजाः ६५
तारं कं पञ्चमे पङ्क्तौ विन्यसेदनुपूर्वशः
याशियाने विधाभिश्च यागाया यूश्च वी तथा ६६
अशिवाश्च तलौ शश्च रलात्राव विरूययौ
तुस्सविस्सर्गो मं वा व्योदकाश्च रूढी च विभोयच ६७
हरो पादजभूमब्जाश्च बाह्योक्तः दाचरौ लिश्चविन्
यवाव्योदक बरूद्धिस्वपिहोचागरोरुपादचमूः ६८
मवाश्च साधे च यरुतमं नादियमेचका
अयोद्योदिश्च कलहलन्यैश्चैवसप्तमे मायामश्च मीश्च तथाचनर ६९
काशब्राहुस्तथान्तश्च रसपङ्क्तौ समालिखेत्
बाह्ये सश्च तथारू रू समाद्यो यश्च णे तथा ७०
नेपिश्च तथा तथाश्च भीरुश्च द्विजातिकश्च यः
तथा ब्राह्मयो कदाश्चरौ विनयेतश्च साये च ७१
यरू ततो येथ मेचका अयोद्योनिश्च कव
हलिश्चैवसप्तमोवा त्रयातश्च दींश्च वशशिरूश्च द्विदादितिकश्च ७२
सन्धेषकाश्च पंक्तोनौ ययौमू पविवाभुवाः
रूनक्यारास्तथापेतु मिश्च बीजादिकश्च कः ७३
शवभं च तथा तश्च थ्यश्च गोन्येषमस्य तु
तिसिसरूलित जीनाश्च शास्तिया ववचाश्च ये ७४
मत्कारो नातिकः शरंत्राणे त्रवियष्टणा
गुह्याप्यानां च पार्वं च शकारान्तारमेव च ७५
तथा कामक ज्ञायतमेतु क्रमादालिख्य साधकः
रेफपूर्वो वकारश्च पाकिनाष्टतथैव च ७६

णकाकः पूर्वलीपस्तांश्च बन्तायाका च मासशक्त्याप्रीहानरासमाः
सविसर्गो देशमान्तके यश्च ययौ यश्च ताय मया मयास्यथैव च ७७
न पूर्वो द्रायमामाश्च रूरूपि नवगा भवाः
मविपितृ तथा मोमः व्यानायादास्तथैव सः ७८
नकारपूर्वो द्रीपाश्च प्रश्च शश्च तथा नवाः
स्वकारश्च रुकारश्च पङ्क्तौ एकादशे ह्निपेत् ७९
शिश्चानाश्च ऋकारश्च स्वराद्यो यदि शयनम्
रश्च दिश्च तथाज्योपि विश्च णेणे तथैव च ८०
नपूर्वस्तर्थयाणे भूपर्यसाश्च तथाचवित्
देवविश्च तथा शक्तिद्रिका रश्च नपूर्वकः ८१
नश्च शब्दो च बा भाद्रा योकारान्तेऽर्कपङ्क्तिके
नटचनात्तथा क्यन्नामे च विश्च विशष्मणे ८२
णे च स्वरार्थोश्च बद्वन्द्वोगयरूसंसरं तथा
वौरेपि पूर्वे वश्चैव बीजाद्योनाविवास्तथा ८३
पिकारो दीपको थश्चविषूशानादिकश्चतः
णाञ्च सर्गसकारश्च लिखेतास्तंत्रयोदशे ८४
स्यांशावियोय सोद्या च रोक्त्यो रौ स्फगरू तथा
भकारे रेफपूर्वश्च स्वराद्योपिश्च मा तथा ८५
दातंचह्यचिरा नाभयेद्यां ह्रीं राष्णषास्तथा
षांश्चसपसौ सरेपाद्येवौ वकारो दीपकोन्तकः ८६
यकैर्गिरिडरश्चपृसधात्राशान्तश्चरायनाः
णेया शिधाश्वरातद्या विविणीयु रू ८७
स्थूसान्तत भेदेषुश्चतु श्चंतेतिथिपङ्क्तिके
लीनेगश्च शिवौवश्च रायाया ययागास्तथा ८८
नपूर्वस्त स्वराद्यश्च रूपादिति विसर्गमः
नो नाश्च विद्यश्च ह्रीं स्वाद्या लश्च भाचये ८९

राशिरश्शिबं पूर्वोमः चं पङ्क्तौ सोसशे न्यसेत्
धापवान्ता च वध्वाश्च द्वैद्विन्तोयासरे पोहरू चः ९०
भञ्च वियंच वैद्यातं च स्वराद्यं च परश्च रूसूच्यपाः
पुनो भपौरिका लोलाश्चैव नन याभाश्च वै ९१
विकारोऽनुस्वारसंयुक्तो मश्च सप्तदशे लिखेत्
तकारश्च ययो भूश्च काच निश्च कपूर्वशः ९२
शकारे रेफपूर्वश्च धकारश्च नपूर्वकः
रूकारो रूपिकाणेसनिशदतास्तथा च वित् ९३
धूधौ च तश्च रूश्चैव सविसर्गो मतस्सखः
सवीयश्च सर्गो मकारकः ९४
परपद्मा विसर्गान्तो मकारश्च प्यनश्चसः
सर्वशिश्चैव तेगश्च हाज्ञोदष्टदिशो लिखेत् ९५
ग्रवासु लगु रू रूरविश्च णेराशुदाश्च वै
नित्यान्तसे ये प्रथूशाये षाकार स्वञ्चवाक् भवः ९६
यश्चह्निस्सतदीपं च रश्च काच तथा जवः
लसदश्च धकारश्च विश्च वैकोनविंशके ९७
मविघ्नभ्याव वीरूणेरेयन्धाशिया तथा
नद्योभ धृतिजश्चैव सुयंरणयं च विंशके ९८
राकायेण तथाणेपि पुश्च तश्च सुरादयः
नवन्तामोदि वश्चैव सविसर्गश्च तारकम् ९९
सर्वकुश्चाथ स्वाभर्चि सकारोद्मैश्च बिन्दुयुक्
नमर्वरप्रविसर्गो मरेफयुतं वकारकम् १००
बश्च वश्च पसस्फुश्च चकाश्चैकविंशके
माच वश्च तथा तेपि णेञ्च वाच षपूर्वकम् १०१
सोकारो भङ्गुरोमोति नारूतेभूस्सकार च
मषभाश्चेतर्वद्मं नैत्मकुश्च तारकम् १०२

जाकारपूर्वो तन्त्रश्चैव ग्राचधाश्ति नपूर्वकः
ज्ञाचर्वश्च रभौतश्च द्वाविंशत्पङ्क्तिके न्यसेत्  १०३
भुजाजाना धरेकान्तं धविभीता तथा चटा
पाच जश्च विसर्गाश्च दीपनश्च स्वराद्यकः  १०४
वेराजवा भगववो दत्तदानेच कमौ चशि
मश्च या च तथा वश्च सश्च दुश्च तथा च पौ  १०५
पृश्चयश्च मकारश्च त्रयोविंशतिके लिखेत्
सेचयच तथा लाच पुश्च तोच वरूचणे  १०६
सोथवाद्यो काराहुश्च शश्चप्रजश्चथा
यस्तुशिश्च प्रकाराश्च मकारस्सविसर्गकः  १०७
पञ्चकुश्च नवौचैव पक्वभिर्द्धनिषां रचाः
भुञ्चभाव तथायञ्च चतुर्विंशतिके क्षिपेत्  १०८
वियोचष्वञ्च कूरूपी तारश्यञ्च तथा नरः
पचन्ति प्रसविर्गश्च वविसर्ग ममोचवा  १०९
वश्चपोत ववासश्च वरारुस्तथा च रा
सानुस्वरं च संयुक्तो पूर्वस्संयोगपश्चिमे  ११०
रंयैः क्रमशः पञ्चविंशत् पङ्क्तौ समालिखेत्
नारूपिश्च विणेश्चावा वान्तौ सम सर्गकः  १११
रश्च ग्राद्यस्वरोपोन शतदोषवहा तथा
पुनर्वसश्चैव तथार्द्राह्वी दिगणाज्ञा  ११२
भरका दीपवागे चतिषड्विंशके न्यसेत्
पञ्च णे च बिभाश्चैव मोच वै तनमेमम  ११३
रूश्चसपञ्चैव वा भगबन्ते वशाच पौ
सवौ मसविसर्गञ्च पमवाश्च शिश्चतः  ११४
तकारो मकारो लञ्च कशौ --- चै
यतौ च यतौ च भदज्यां कारोय  ११५

णाश्चैव मसयस्सप्तविंशके
मश्चप्रश्च तथा द्याच याये वोत च श्ववाचकैः १९६
ओङ्कारश्च रोषधि विसर्गैमः
देवषचरेत्पीयुत् स्थीश्चतारतथा तञ्च नेचरश्च सरौ च यः ११७
आकारो मकरी चैव तं कारश्च सपूर्वकः
नश्चकश्च विसर्गस्सधी च बहिश्चहिन सथा ११८
नश्च कुश्च क्रमेणैव अष्टाविंशतिके न्यसेत्
कुश्च यश्च यकारश्च स्वराद्यो रश्चमोचरः ११९
वर्गवो मताश्चश्च ओङ्कारो भूत एव च
आकारश्च सबिन्दुश्च येनमेन्यः प्र एव च १२०
जवा च वश्च तथा भकार भाच कतभौ च वैः
ओङ्कारश्च विमकारश्च कातपाश्च तथा च मो १२१
द्रकारश्च तथा ते च त्रिंशदेकोनके न्यसेत्
पिश्च नश्चिषितौ चैव गुश्च पश्च तथा च नः १२२
हकारस्सविसर्गश्च दापौ चैव प्रदीपकम्
बुंश्च तथासृच ईकारश्च सबिन्दुकाः १२३
मनस्सश्च सविसर्ग वकारश्च शिपूर्वकः
भश्च सश्च लिकारश्च वकारो रेफपूर्वकम् १२४
कश्चहश्च उकारश्च यश्चगुश्च वतौ च हिं
येनश्च यन्वो समतो दकारश्च ययौ तथा १२५
नकारश्च वकारश्च त्रिंशत्पङ्क्तौ तु विन्यसेत्
सविसर्गो तकारश्च लाचमस्सविसर्गकः १२६
ह्याराग्निश्च प्रदीपश्च मकारो नपरस्तथा
नश्चशिश तथा पश्च मकारश्च सपूर्वकः १२७
विकारश्च कपूर्वश्च यकारश्च सबिन्दुकः
सविसर्गो मकारश्च स्वराद्यश्च तथा रवौ १२८

नद्वयोनिरवाश्चैव कशदश्च सबिन्दुकः
हुङ्कारश्च तथा रूमौ मकारश्च न पूर्वकः १२९
तश्च विश्च तथा गौच तिकारश्च न पूर्वकम्
लतोमस्सविसर्गश्च लिकारो बिन्दुसंयुतः १३०
स्वकारो रेफसंयुक्तो एकत्रिंशतिके लिखेत्
नश्च शिश्च तथा तिश्च यकारोद्यस्वरोज च १३१
वर्गवो भाजशिश्चैव स्वराद्योखञ्चतुञ्च वै
ष्येच जश्च मृकारश्च वहनास्वाच मश्च वै १३२
चकारे मपरं किञ्चित् तञ्च पश्च पपोवहे १३३
नद्वयस्सविसर्गश्च मकारश्च न पूर्वकः
करिकारश्च तथा काच लिश्चानुस्वारसंयुतम् १३४
विसर्गेण समायुक्तो मश्च भश्च तथाच न
यकाररातभागाच द्वात्रिंशत्पङ्क्तिके न्यसेत् १३५
खश्चगश्च स्वराद्यशधूचनश्च विसर्गकः
निशवश्च तथा शिश्च नपूरुश्च तथा च गौ १३६
तारावाश्च तथा मोहाशिसूरि तथास्वाश्च तः
तथा च शिभे प्रायाश्चैव गारुडा १३७
यनयाश्च तथावश्च त्रयस्त्रिंशतिके लिखेत्
तकारो वागवस्तश्च नहुंषट्स्वाश्च सश्च वै १३८
तकारो बिन्दुसंयुक्ते वहन्नेवोश्चवोचने
शिश्च रश्च सबिन्दुश्च जपूर्वश्च ज्ञकारकः १३९
सूच मश्च प्रदीपश्च ततौ चैव तु विप्रभाः
दाहाते लिलनश्चैव ऊननाश्च तथा चलि १४०
तेकारश्चैव पङ्क्त्यन्ते पञ्चत्रिंशतिके लिखेत्
भश्च वस्सविसर्गश्च निश्च तश्च तथा च षट् १४१
नकारपूर्वो दश्चैव वकारो रेफसंयुतः

गश्च तेज तथा वेचे नगाभश्च तपूर्वकः १४२
स्वा च पा च कयायाद्व मश्च द्रश्च गयौ तथा
तकारापूर्वजो मंचैव वचो देयानाग च १४३
सोमविसर्गो मकारश्च स्वरेका पादकारयुक्
मकारस्सविसर्गश्च मो चगा च तथैव च १४४
मृवानस्सारसंयुक्तष्षट्त्रिंशत्पङ्क्तिके लिखेत्
ओंकारोधश्च भाश्चैव षट् च सुश्च तथा च सा १४५
विकलानुस्वारसंयुक्तप्रदीपञ्च नमस्तथा
यश्च वश्च तथा हाश्च मकारश्च तपूर्वकः १४६
वश्च ते च वप्रौ च प्रश्च तथाच वा भवेत्
बाश्च प्रदीश्च लाश्च मश्च स्सविसर्गकः १४७
यश्चभश्चैव दौकारो लिकारे बिन्दुसंयुतः
शिद्वयोश्च तथा यश्च मकारस्सविसर्गिकः १४८
ज्ञकर्मवासवाने तु सप्तत्रिंशतिके लिखेत्
एवं विन्यस्त चक्रे तु चक्रं मन्त्रं समुद्धरेत् १४९
कूटार्णं भानुवह्नयङ्गस्वरो तम्मूलमन्त्रकम्
जीवान्तं जीवसंयुक्तं बिन्दुसृष्टियुतं तु वा १५०
एषां प्रधानवर्णेन ब्रह्माङ्गपरिकल्पनात्
अन्येषामपि देवानां नामाद्वर्णं सबिन्दुकम् १५१
तत्तन्नाम्ना चतुर्थ्यन्तं मन्त्रविन्मन्त्रमुद्धरेत्
यक्षरक्षोग्रहादीनामेवमेवं प्रयोजयेत् १५२

मातृकामन्त्रः--

मातृका सर्वमन्त्राणां मुख्यभूता भवेदिह
ताश्शक्तिरुद्रसंयुक्ताः केवलं वा समभ्यसेत् १५३
अनया साध्यते सर्वं तस्मादेतान्न्यसेज्जपेत्

मालामन्त्रः--

मालामन्त्रक्रमं वक्ष्ये श्रूयतां मुनिपुङ्गवाः १५४
जङ्घोतान्-नात्-भूत्-उस-मासुनं-
बम्-य-हे-न्ध-प-न्चि-म-नु-ल-म्यि
मरि-ज्ञ-षि-क-द्यो-य-ग्रा-कू-मृ-कम्
यम्-र्वां-ब-गखंत्रियम्-व
मन्त्रोऽयं त्र्यम्बकाद्यस्तु सर्वकामफलप्रदः
सृष्ट्यादौ भिद्यते देवि बहुधा शिवशक्तिका १५५
आदिशक्तिः शिवस्य स्यात् सादाख्यस्य मनोन्मनी
महेशस्य भवानी स्यात् शक्तिरेवं त्रिधा मता १५६
शुक्लं खमनुवर्णाद्यामादेर्मन्त्रं प्रकल्पयेत्
मनोमन्या खवह्नी च मायाबीजसमन्वितौ १५७
भवान्यास्सविसर्गस्तु गौर्या मन्त्रमिति स्मृतम्
अन्यासां सर्वशक्तीनां खनामाद्यर्णमुच्यते १५८
शक्तीनां मन्त्रकं प्रोक्तं मेलामन्त्रं शृणुष्वथ
तारं खं षान्तकूटं हरलयवरयू तारपूर्वं सबिन्दुं
नादं हुंफट्क्तसर्गो वषडपि सहितं वातये नाभिवौषट्
चाट्शुक्लं खन्दुबिन्दुध्वनि शपषपरट् द्विंगंख शुक्लौ
नादं सर्गैस्सकामं भुवनपतिरमास्प्रेंसभौ सर्गनादः १६०
चाग् बिन्दुर्नादबिन्दुर्मनसिजलिपिना बिन्दुनादद्वयं च
प्रोक्तं शुक्लौ च बिन्दुध्वनिरपि मनु वै वालिकायां विसर्गः
षान्तं खं वाचबिन्दुध्वनिरपि मनुवै शुक्लषान्तं सकामं
ह्रीं बिन्दुर्नादध्वनिपरसमे बिन्दुनादं विमेला १६१
मेलामन्त्रजपे मनुं प्रतिगुरुं पञ्चाशदार्णान् पठन्
आदौ मातृकया मनुं जपविधौ संयोज्य तस्मात्परम्
मन्त्रस्यास्य तु मध्यमे सति तथा मन्त्रान्ततो वा पठे-
द्यान् यान् कामयते नितान्तमतुलान् कामानवाप्नोत्यसौ १६२

मालामन्त्राश्च ते ख्याता विंशत्यर्णाधिकाश्च ये
दशाक्षराधिका मन्त्रास्तन्नयूना बीजसंज्ञकाः १६३
माला वार्द्धक्यफलदा मन्त्राश्चैव तु यौवने
भूतार्णाद्यधिका बाल्ये तन्नयूनफलदास्सदा १६४
स्वाहा नमश्च शेषाश्च स्त्रीक्लीबपुरुषात्मकाः
वश्योच्चाटविषादादौ पुमांसः क्षुद्रकर्मणि १६५
रोगापहारे वनिताः क्लीबाश्चान्यत्र कर्मणि
व्योमाग्निकूटदीपार्णैराग्नेयप्रचुरस्ततः १६६
सौम्योवशिष्टस्तौ शस्तौ क्रूरसौम्ये च कर्मणि
नमः फट्कारयोगाभ्यां क्रूरसौम्यौ परैः परः १६७
सिद्धिदो न भवेन्मन्त्रस्सुप्तः किञ्चित्प्रबोधयुक्
वामदक्षमरुद्वाहकालयोस्तौ गुणौ मतौ १६८
आग्नेयमन्त्रमेवं स्यात्सौम्यस्येते विपर्ययात्
पुटद्वयप्रवाहे तु प्रबोधस्सौम्यरौद्रयोः १६९
अनिषीतिनराश्यर्णप्रमुखान्वर्जयेन्मनून्
युग्मेन्द्वनलवेदेन्दुचन्द्राक्षिद्विक्षिपाणयः १७०
व्योमाक्षिनेत्रपाणीन्दुनेत्रानलखखाग्नयः
खकैव्योमाक्षि व्योद्नयाग्नि वर्णाश्चाश्वयुजादयः १७१
जीवान्ते रेवतीयुक्तौ वर्णैरेवं दिनक्रमः
वेदाग्न्यानलपाश्याक्षि लोचनैर्भूतपञ्चकैः १७२
अजादयश्च तुहश्च शेषाष्षष्ठगतास्स्मृताः
इत्यर्णकल्पनाराशेरानुकूल्यप्रसिद्धये १७३
यस्यानुकूलो मन्त्रो यस्साधकस्य स सिद्धिदः
स्वस्तिके लिपिमालिख्य शङ्करं षोडशात्मकैः १७४
सिद्धस्साद्धय स्वसिद्धोरि साधकस्यादिमाक्षरात्
मन्त्राद्यर्णान्तिका भूयस्सिद्धसाध्यादिकल्पनात् १७५

सिद्धसिद्धास्सिद्धसाद्ध्यस्सिद्धस्वसिद्धास्सिद्धारिः
एवमन्यत्र साद्ध्यादौ चतुर्द्धा कल्पना मता १७६
जपादिष्टप्रदस्सिद्धस्साद्ध्यश्च जपतर्पणैः
स्वसिद्धः पाठमात्रेण साधकानिष्टदो रिपुः १७७
प्रचुरश्शत्रुवर्णैस्तु मन्त्रो नाशकरस्स्मृतः
शिष्योऽपि शीलसंपन्नः पुत्रो वा शिवभक्तिमान् १७८
तस्य देयोऽथ गुरुणा सहस्रं तं जपेद्गुरुः
पुत्रे क्षिप्तं छलात्प्राप्तं गृहीतं ग्रन्थरूपतः १७९
प्रकारान्तरतः प्राप्तं जपेद्यदि विनाशकृत्
जपेद्धादिक्रियासिद्ध्यै मन्त्रपस्साधकोत्तमः १८०
तस्माच्च साधनादन्ये मन्त्रास्सर्वत्र सिद्धिदाः
एकार्णसिद्धिदश्चैव दशलक्षजपादिभिः १८१
अर्णाधिक्यात् जपह्रासः कर्तव्यो युक्तितः क्रमात्
एवं बीजजपः कार्यस्तद्द्वित्रिगुणसंख्यया १८२
मालात्मकस्य मन्त्रस्य जपसंख्या विधीयते
अनुक्तसंख्या मन्त्रस्य शतं साष्टसहस्रकम् १८३
जपाद्दशांशतो होमस्त्वभिषेकविधौ मतः
मूलाद्दशांशतोऽङ्गानामर्चाहोमजपादिकम् १८४
भाष्यादुपांशुश्शस्तस्स्यात्तस्माच्छस्तो हि मानसः
प्रागास्यश्चोत्तरास्यो वा मन्त्राणां स्याज्जपादिकम् १८५
मन्त्रास्सर्वे दिवापूर्वग्राह्यास्तत्र हितास्तु वा
इति कामिकाख्ये महातन्त्रे मन्त्रोद्धारपटलो द्वितीयः

ओं व्योमव्यापिने दिव्यान्तरिक्षरूपाय
सर्वव्यापिने प्रधानाय ओं नमश्शिवाय
महादेवाय व्योमाष्टभासायानेकाकृति--

त्रिरूपाय पदपदाय सर्वविघ्नविनाशाय
रौद्ररूपाय विशेषातीत भिलिपिलिकिंशिलि
लीपि वक्त्रदंष्ट्राय भयंकृतनयनाय
उपलेलिहानोग्रजिह्वाय ऋग्यजुस्सामाथर्वेन्द्रियाय
अनन्ताय अनाभाय अनाश्रिताय ध्रुवाय शाश्वताय किल
कैलिप्य लम्ब योग पीठसंस्थिताय नित्यं
योगिने ध्यानाहाराय आधारायधेयाय
ईशानाय जगत्पतये शिवाय तत्पुरुषवक्त्राय
नमो घोरशिवायाष्टहृदयाय शिवकवचेन्द्राय
विद्युत्प्रपन्नाय वामदेवगुह्याय पचपचाय
वरवरेरयाय परिसुवीरानन्दसद्योजात मूर्तये
वामादिशक्त्याधाराय कालघ्नकामापहाय
बालाबाल मनोन्मन वामाज्येष्ठारुद्राय
शक्तिगुह्याय बहुरूपिणे नमः ।
शब्दाय शब्दरूपिणे स्वर्गाय स्वर्गरूपिणे
तेजसे तेजोरूपिणे रसाय रसरूपिणे गन्धाय
गन्धरूपिणे बीजाय बीजरूपिणे मूलाय
मूलरूपिणे अङ्कुराय अङ्कुररूपिणे नालाय
नालरूपिणे पत्राय पत्ररूपिणे गर्भाय
गर्भरूपिणे पुष्पाय पुष्परूपिणे फलाय
फलरूपिणे अनन्ताय अनन्तरूपिणे रेतसे
रेतोरूपिणे मनसे मनोरूपिणे अर्थाय
अर्थरूपिणे अहंकाराय अहंकाररूपिणे
प्रकृतिरूपाय प्रकृतिरूपिणे मायाय
मायारूपिणे शुद्धाय शुद्धरूपिणे विद्याय
विद्यारूपिणे नयाय नयरूपिणे सदाशिवाय

सदाशिवरूपिणे ओं हौं शिवाय नमः ॥
कालाग्निरुद्राय मूर्त्यष्टकविभूषिताय
नित्यानित्याय नमो हिरण्यबाहवे अनिलाय
अनिलवर्चसे हेतुकारणाय त्रिपुर त्रिपुरातीत
शान्तशान्तातीत घोरघोरतरश्शिवतमोऽ-
चताच्छिवतमः । अनन्तादे नादाय नमः ॥
ओं नमो गुह्याद्गुह्याय गोपूगोप्तये तुभ्यं नमः ॥
सविद्याधिपतये ज्योतिरूपाय परमेश्वरपराय
अचेतनाचेतन व्योमिन् व्यापिन् अरूपिन्
प्रथमप्रथम तेजस्तेजज्योतिरूप अग्नि अधूम
अभस्म अनादि अनादेनादे नाना नाना
धूधू धूधू ओं भू ओं भुवः ओं सुवः ओं महः
ओं जनः ओं तपः ओं सत्यं अनेकानेक
वामा वामा विभवे अव्यय अव्ययशान्ते
शासन शमन अतीत धामन् अनिधन निधनोद्भव
शिव सर्व सर्व सदाशिव योगाधिपतये शर्वञ्च
मुञ्च प्रथम तेजः भवः भावनाभूत भव भवोद्भव
शक्त्या शक्ति विद्याविद्य पुरुष अजात देश ओं क्लीं
श्लीं ओं ह्लीं ग्लीं ओं फट् फट् ओं हुं हुं
ओं द्रीं द्रीं हीं हीं हीं ह्रूं ह्रूं ह्रूं त्रि नमः ॥
स्वस्ति स्वाहा स्वधा वषट् वौषत् हुं फट्
अनन्तानन्द स्वजलित स्वाहा । हेमगर्भधराय
स्वाहा सर्वभूत सुखप्रद सर्वसान्निद्ध्यकर
ब्रह्म विष्णु रुद्र पर अनार्चित अस्तुतास्तुत
पूर्वस्थित पूर्वार्द्ध साक्षि साक्षि तुरु तुरु पतङ्ग
पतङ्ग ज्ञान ज्ञान शब्द शब्द सूक्ष्म स्थूल शिव

शर्व सदाशिव नमः ।
ओं ओं ईं ऊं व्योमव्यापिने ओं यां
रां लां वां गां षां सां हां ळां क्षां क्षीं
क्षूं क्षैं क्षौं क्षः प्रशान्तपतये नमः ।
जगत्प्रभवे नमः ।
ओं स्वाहान्तपतये नमः
तत्वात्मने नमः
शर्वात्मने नमः ।
अमृतात्मने नमः
रुद्राणां पतये नमः ।
मन्त्रविद्याविभागेन द्विविधा मन्त्रजातयः
मन्त्राः पुंदेवतामन्त्रा विद्यास्स्त्रीदेवतास्स्मृताः ॥
पुंस्त्रीनपुंसकात्मानो मन्त्रास्सर्वे समीरिताः
पुंमन्त्रा हुंफडन्तास्स्युस्स्वाहान्तास्स्युः स्त्रियो मताः ॥
नपुंसका नमोऽन्तास्स्युरित्युक्ता मनवस्त्रिधा
सर्वात्मने पराय परमेश्वराय योगाय योगसम्भवाय
करकर कुरुकुरु सद्य सद्य भव भव भवोद्भव
सर्वदेव सर्वकार्यप्रमथन सदाशिव प्रसन्न नमोऽस्तु ते स्वाहा
ओं सशिव शिनमः ओं मं शिवस्य हृदया ज्वालानि स्वाहा ।
ओं शिवात्मक महातेजस्सर्वज्ञश्च पराजितम् ।
आवर्तय महाघोर पिङ्गलं कवचप्रभम् ॥
आयाहि पिङ्गलं महाकवचं शिवाज्ञया मम
हृदयं बन्ध बन्ध पूर्वपूर्व भक्तिसूक्ष्म वज्रधर
वज्राशनि वज्रशरीर इदं शरीरमनुप्रविश्य
सर्वदुष्टां स्तम्भय स्तम्भय--हुं फट् स्वाहा ॥
ओं प्रस्फुर प्रस्फुर घोर घोरतर तनुरूप

चट चट प्रचट कह कह वम वम घातय घातय
हुं फट्--ओं जूं सः ॥
ओं तन्महेशाय विद्महे महादेवाय धीमहि
तन्नःशिवः प्रचोदयात् ।
ओं गणाम्बिकायै विद्महे महातपायै धीमहि
तन्नो गौरी प्रचोदयात् ।
ओं निधनपतान्तकाय स्वाहा ।
जलाय नमो जललिङ्गाय ते नमः ।
रुद्राय नमो रुद्रलिङ्गाय ते नमः ।
भवाय नमो भवलिङ्गाय ते नमः ।
ऊर्ध्वाय नमो ऊर्ध्वलिङ्गाय ते नमः ।
शिवाय नमः शिवलिङ्गाय ते नमः ।
पाठभेदः--
सारमिंश्च चकारश्च स्वराद्यो ना नामा मया
अधिकपाठः--
मनमूढा प्रसरयाश्चैव वस्तुराशापकोन्नतः
पाठभेदः--
एहित्रगर्षपश्चैव योव्योमस्वरादिकम्
ष्णुतशब्द शिरारश्च धतस्याश्च वे तथा ।
रश्च पर्वत धानाम्नि पिश्च वश्च तथा च नः ।
अधिकपाठः--
व्यानसंश्च नकारश्च नदौ रेभोति दिक् चत ।
पाठभेदः--
देव स्वर्गश्च भामश्च पकारस्सविभागशः १
ष्ठं विद्यु यगकारश्च आतश्चैव यवौ तथा
जायामस्सविसर्गश्च णेकारो दूपलाश्च रू २

यायौ तस्सविसर्गौस्त मश्च मिश्च तथा चन
दीका शिवोहुं तथा वश्च षष्ठपङ्क्तौ समालिखेत् ३
याले एकादाय रौलिश्च विनेयाः पाठरा रुच
चमून्दाश्शसायौ च यरुणेतु यमूचकाः ४
अयेवेदिश्च नोद्धाहु लिन्ते चैव सप्तमे
माक्तिघाश्च दौ कृश्च त्रश्च बीजादिकश्च यः ५
सन्धेष्टकाश्च पङ्क्तौनौ ययौ सूपविधाद्धव
कृतमानस्तभापेस्तु मिश्च बीजादिकश्च कः ६
तवभूश्च तथातश्च यश्च गोन्तेष्टमस्य तु
दिसरूति लितजीनाश्च इन्धिया पापचाश्च ये ७
नपूवे मश्च रश्चैव लत्रणेत्रापि यष्टणा
स्यपुणानाश्च पर्वाश्च शकारान्तरमेव च ८
स्वज्ञाघातु नवमे क्रमादालिख्य साधकः
रेफपूर्वो मकारश्च पातिनं वा तथैव च ९
नकारपूर्वकं स्ना च श्चतावक्रश्च वेथवा
वाब्तसाश्च तथा रूरू स्वराद्यो यश्चणे तथा १०
रूकायाश्च तथा नन पिंश्चतेव तथा च मा
सत्यामिमं भरतश्चैका नामान्ते दशमस्य तु ११
यश्च लिश्च ययौ यश्च तायईयास्तथैव च
न पूर्वोद्रा ममामाश्च रूरू पीपी नवागू भवा १२
मा पीपीत्रि तथामोमध्यानपादस्तथैव च
नकार पूर्वो ध्रुवश्च पुष्ठशश्च तथा चला १३
ह्लाकारश्च रुकारश्च पङ्क्तावेकादशे क्षिपेत्
शिश्च नाच जकारश्च साख्यानपि शाश्च नः १४
यश्च रश्च तथा जिज्ये पीपीणेणे तथैव च
नकारपूर्वस्वार्थश्च याणेभूपा असाश्चिवित् १५

दशमश्च तथा शक्ति हकारश्च नपूर्वकः
ज्ञश्च सब्दे पभद्राणे विलिखेदर्कपङ्क्तिके १६
नद्ध्यानाकि तथाम्याना मापि वांश्शैशष्व च
णेणेस्वराज्यो बीबन्तो गयरूय सषीरव १७
रेफपूर्वो बकारश्च बीजाद्यानां शिवौ तथा
विकारो दीपको यश्च विसूतान्नादिकश्च कः १८
णाश्च गश्च सकारश्च आलिखेत्तु त्रयोदशे
जुधालिथो ययोद्वाद्य रेत्यकुस्वगरुस्तथा १९
भाकरो रेफपूर्वश्च स्वराद्योपिश्च मा तथा
दातापह्यपि तुनाहयोद्याह्वी विकरं त्वमा २०
षांवापौ सञ्चरेपाद्यो वकारो दीपकोन्ततः
यकैगिराश्चरप्रणय याद्रशा सास्वराधन २१
णेयाश्च शिश्च मान्तद्य विना वेगात् ह्रियं कुरु
सुसाट ततभेदेसु श्वतश्चान्तेति पङ्क्तिके २२
लिनेशगत् शवौ वश्च रायथाथ यगास्तथा
नपूर्वस्त स्वराद्यश्च रूपानिति उस्तथा २३
अनाल अधिश्चैव द्यश्च ह्रींस्वदुलाश्च भाये
येवावाश्शिवौ वश्च पङ्क्तौ षोडशके न्यसेत् २४
ध्यापवान् नचरीश्चैव गयल्विश्च ग एव च
सबिन्दुवत् भवेरूश्च हश्च विधश्च वैत्याश्च २५
तश्च स्वराद्यश्च पश्चरू धूह्यपापुनौ
भाश्च पश्च शिखांश्चैव नमास्थर्गविभाश्च वै २६
विश्वानुभ्य रसंयुक्तो मश्च सप्तदशे लिखेत्
ककारश्च ययौ षष्ठ श्चकावर्तिस्थथैव च २७
शकारो रेफसंयुक्तो नपूश्च धकारकः
आकारो रूपिकाणेसन्यनानाकरश्च विंश्चवै २८

सूधौ ततश्च रूश्चैव सविसर्गो मकारकः
प्रेखद्वां विसर्गान्तो मकारश्च पुनश्च मः २९
कुर्वशिश्चैव तेगच्छ हृज्ज्ञो चाष्टदशे लिखेत्
ऋवासुलगुरूपिश्च णोदंरागुहुदाश्च वै ३०
त्यान्तदेशो प्रधूशाये शकारस्वमवाग्भवम्
शश्च ह्नुश्च तदीपञ्च रकारश्चैवकारजः ३१
लंश्च दंश्च यकारञ्च विस्तथैकोनविंशके
मविस्त्रव्यापिरूपेण येद्धाश्शिवया तथा ३२
नद्योथथूके शश्चैव ग्राकारस्ति नगह्नुम
मत्वासकास्य नासाश्चैवं पश्यरविंशके ३३
राकायेण तथाणेपि पुश्चतश्च स्वरार्वथौ
वनन्नामोमेकरस सविसर्गश्च तारकम् ३४
शावर्वरूश्च स्वाहर्चि सकारो द्दौश्च बिन्दुयुकम्
मर्वारश्च प्रमश्चैव रेफपूर्ववकारकम् ३५
भञ्च बञ्च वसुप्सुश्च चकारश्चैकविंशके
मापतेश्च तथापिश्च णेथपाच षपूर्वकः ३६
सेकारोहं शुरुमेति नारुतेग्रस्सकारकम्
मषभाधश्च रुर्वद्यौ नेकारोत्म कुशश्चमे ३७
ऋृकारपूर्वो जश्चैव ग्रापयश्च नपूर्वकाः
ज्ञाचर्वश्च रदौतश्च द्वाविंशत्पङ्क्तिके न्यसेत् ३८
भूज्ञानाथ नरेकार्द्ध विहिताश्च तथादरा
पाचजस्सविसर्गश्च दीपानञ्च स्वराथवाक् ३९
भवोदद्व नश्च मनचरुमौ वशी
मश्च याच तथा यश्च शश्वदुश्च तथाचयोः ४०
प्रश्च वश्च मकारश्च तयोर्विंशतिके लिखेत्
सेच रश्च तथापौच ग्रश्च ते वाररूपिणे ४१

रश्च मथयाश्च द्योकारे हुश्च शश्च प्रजाच या
यस्तुशिश्च प्रकारश्च मकारस्सविसर्गकः ४२
पञ्चकुश्च रसश्चैव सनिष्ठा रच
भुश्शभाच तथायाच चतुर्विंशतिके चिपेत् ४३
बियौच चष्वश्च रूरू पींताराग्यश्च तथाननः
पश्चतिश्च विसर्गान्तो वर्गवगौ तममौचतः ४४
पश्चञ्च स्वातवागान्तिश्चशास्य तथैव च
रोविंशश्च पूर्वस्क योटषट्वद्देतारयै क्रमात् ४५
पञ्चविंशतिके पङ्क्तौ न्यसेत्तत्र विचच्चणः
नररूश्च वीणेभौ श्शवातौ मस्सविसर्गकः ४६
रश्च आद्यास्विरादीर्घो नाथदोषञ्चभातथा
पुनन्तर्वायसादा हृदिगर्णज्ञास्तथैव च ४७
हरौकदीपौ नापानौ विनिषड्विंशके न्यसेत्
विश्वरणेच विशिवाश्चैव मोच वै ४८
तारं मेरूच स्वश्शैवर्मावाक् भवन्ते च शञ्चचौ
सर्वमध्व विसर्गश्श पद्यार्च शिञ्चद ४९
तयानुवार संयुग्जे लघूशाश्च ययौ तभः
जङ्कारो यश्वणाश्चैव मधश्वारस्सप्तविंशके ५०
मश्चप्रश्च तथाद्याच पावेथेनश्च पार्श्व वै
ओङ्कारश्च तथादिजते वषट्कर रेफयुक् ५१
स्वश्चकारं तथा तश्च नेश्चरश्च सवौविधिः
आकारो मरणश्चैव तंकारश्च सपूर्वकः ५२
तारकौ सविसर्गश्च धीचविश्च हिनस्तथा
नश्शकुश्च क्रमेणैव अष्टाविंशतिके न्यसेत् ५३
कूश्च थश्च यकारश्च स्वराद्ये रश्च मेवयुक्
वाक्भवो मधुभाजैश्च ओङ्कारो भूत एव च ५४

अकारश्च सबिन्दुश्च येनमेद्या प्रयेव च
जरश्च तथा भाच करभाश्च तभौद्ध वै ५५
ओंकारश्श मकारश्च कातपाश्श तथाचमौ
द्राकारश्च तथातेच एकोनत्रिंशके न्यसेत् ५६
पिश्चनश्च ततो चैव शुश्च वश्च तथा च न
हकारसविसर्गश्च यावो चैव प्रदीपकम् ५७
भूश्च तश्च तथावाचं रुनमस्सविसर्गकः
वश्च भश्च सलिश्चैव तिकारो रेफसंयुतः ५८
कश्च भश्च इकारश्च यश्च तुश्च पतौहि वै
नद्वयञ्चौ समेतश्च दकाराश्चन्दथौ तथा ५९
नकारश्च वकारश्च त्रिंशत्पङ्क्तौ तु विन्यसेत्
ककार पूर्वमिश्चैव ऊकारश्च सबिन्दुकः ६०
व्योजश्च ह्रपौ भश्चनस्वाद्याश्च सबिन्दुयुक्
कीशफट् भव भेन्नश्च तपूर्वो मश्च निश्चकः ६१
लिकारो बिन्दुसंयुक्तो मेचभश्च तथाचभाः
भकारश्च तथा गाप द्वात्रिंशत्पङ्क्तिके न्यसेत् ६२
भ्यचे माश्च प्रदीपञ्च भकञ्चैव प्रदीपकाः
नकारपूर्वकस्ताच दश्चवव्यतथैव च ६३
प्रकारश्च तपूर्वश्च मकारश्च कपूर्वकाः
यश्चमश्च प्रदीपौ यौ वाच त्तुश्च रभादघा ६४
यवौ मचौ स्वयद्रयते मो यैवास्तुथा ६५

स्नानविधिप्रारम्भः

अथ स्नानविधिं वक्ष्ये परमेशप्रकाशितम्
सर्वदोषहरं पुण्यं मनःप्रीतिकरं परम् १

वारुणञ्च तथाग्नेयं मान्त्रम्मानसमेव च
वायव्यञ्च महेन्द्राख्यं स्नानं षड्विधमीरितम्  २
ब्राह्मे मुहूर्ते चोत्थाय हृत्पङ्कजगतं शिवम्
निष्कम्पं दीपिकाकारं प्रणवात्मकमव्ययम्  ३
ध्यायन्प्रभाते विमले दण्डपाणिस्सहायवान्
गत्वा निकेतनाद्बाह्ये विजनं सजलाशयम्  ४
स्नानमावश्यकं तत्र कुर्याद्वै साधकोत्तमः
मूत्रकण्टककीटास्थिविष्ठादिप्रावृतं त्यजेत्  ५
मार्गशष्प नदीगर्त तोय गोमय भस्मसु
श्मशानाराम गोष्ठैकद्रुमशृङ्गाटकादिषु  ६
आवश्यकं न कर्तव्यं स्त्रीगोविप्रार्कलिङ्गिनाम्
चन्द्रस्य सम्मुखो भूत्वा भूतानां विकृतेस्तथा  ७
दिवा वा सन्ध्ययोस्सौम्यवक्त्रः कर्णस्थसूत्रकः
शिरोवकुण्ठनं कृत्वा त्यजेत्तदुभयन्नरः  ८
रात्रौ दक्षिणवक्त्रस्तु तृणाद्यन्तरिते भुवि
मौनी गुल्मादिसञ्छन्नो नासाग्राहितलोचनः  ९
विष्ठावियत्प्रजननदिक्षु दृष्टिं न च क्षिपेत्
नासापीडननिष्ठीवहृस्वोद्नारादिकं त्यजेत्  १०
तृणलोष्ठादिमृत्खण्डैर्मलङ्गुदगतं हरेत्
काष्ठगोमयपाषाणकाथ्यादि परिवर्जयेत्  ११
सवासा वामहस्तेन सङ्गृह्य जननन्नरः
शुद्धामशर्करां मृद्वीं मृदं शौचार्थमाहरेत्  १२
वृक्षाम्बुसेतुवल्मीकग्राममध्योत्करस्थिताम्
मृदमन्यावशिष्टाञ्च शौचार्थं परिवर्जयेत्  १३
प्रक्षालिताम्बुतीरे तु विन्यसेत्स्वत्य दक्षिणे
शौचं समाचरेदेकमृदा जननशोधनम्  १४

तथैव वामहस्तन्तु सप्तभिर्गुदशोधनम्
दशभिर्वामहस्तन्तु सप्तभिश्चोभयङ्करम् १५
पादौ पाणीच संशोद्ध्य मृदा चैव सकृत्सकृत्
आमलीफलमात्रन्तु मृत्पिण्डं योजयेत्सकृत् १६
सोपवीतस्समुत्थाय तटेऽन्यत्राचमेद्बुधः
गृहे मैत्रपदे वापि कृत्वा चावश्यकक्रियाम् १७
शौचं समाचरेत्स्नानं मन्दिरे प्राग्विधानतः
संग्राह्य दन्तकाष्ठन्तु हरेद्दन्तगतं मलम् १८
वस्वर्काङ्गुलमानन्तु काष्ठं नैष्ठिकभोगिनोः
सार्द्रं त्वगन्वितमृजुं समच्छेदमृजूद्वहम् १९
कनिष्ठाङ्गुलिनाहं तु कर्तव्यमुभयं नृणाम्
करञ्जञ्चिरिबिल्वञ्च खदिरञ्चार्जुनन्तथा २०
अपामार्गञ्च मुक्त्यर्थं जंब्वाम्रककुभादिकम्
भुक्तये धवधात्री च माकुलीनिम्बसम्भवम् २१
शिग्रश्लेष्मातकैरण्डपिशाचतरुसम्भवम्
वर्जयेद्दन्तकाष्ठं तदन्यल्लोहविनिर्मितम् २२
नद्यस्समुद्रगाश्चैव तटाकाश्च नदास्तथा
पल्वलाः प्लवनाश्चैव संगमाः पुण्यतीर्थकाः २३
श्रेष्ठास्तु दीक्षितस्येह पुष्करिण्यान्तु मध्यमम्
अधमा दीर्घिकाद्यासु कूपे चैवाधमाधमम् २४
वशुद्धमृत्स्नया कुर्याद्वारणन्तु चतुर्विधम्
वस्वङ्गुलप्रमाणन्तु खात्वोद्धृत्यास्त्रमुच्चरन् २५
हृदयेन मृदं ग्राह्य तेन खातं प्रपूरयेत्
निधाय जलतीरे तु संसिच्य शिरसैव तु २६
तृणादीन् शिखया शोध्य कवचेन त्रिधा भजेत्
नाभेरधस्ताद्भागेन चान्येनास्त्रं समुच्चरन् २७

सप्तधा परतस्सर्वाण्यङ्गानि क्षालयेद्बुधः
हस्ताभ्यामास्यदृङ्नासाश्रोत्रादीनि पिधाय च  २८
प्राणानायम्य हृद्यस्त्रन्निमज्यार्कद्युतिं स्मरेत्
जले स्नात्वैवमुत्तीर्य दीक्षायुक्तस्त्रिवर्णकः  २९
अविरक्तः पुरा ब्राह्मीं सन्ध्यां वन्देत साधकः
भजेत्तदन्ते शैवीन्तु संक्षेपविधिमाश्रितः  ३०
सर्वकामप्रसिद्ध्यर्थं मेलामन्त्रं जपेद्बुधः
इतरस्तु विरागात्मा लौकिकार्थपराङ्मुखः  ३१
कुर्याद्ब्राह्मीं नवा कुर्याच्छैवीमेव नियोगतः
दीक्षितो गणजातिश्चेदस्त्रसन्ध्यामुपासयेत्  ३२
अवशिष्टमृदो भागं संग्राह्य जलमध्यतः
स्थित्वा वामकरे कुर्यात् त्रिभागमुदगाननः  ३३
चतुरङ्गैस्सकृद्दक्षं सप्तधा हेतिनेन्दुगम्
मूलेन दशधेन्दुस्थं भागमेवन्तु मन्त्रयेत्  ३४
दिक्ष्वस्त्रजप्तं प्रक्षिप्य मूलजप्तं जले न्यसेत्
कल्पयेच्छिवतीर्थन्तु बाहुभ्रमणमात्रतः  ३५
लिप्त्वाङ्गजप्तभागेन सर्वाण्यङ्गानि मस्तकात्
निमज्य पिहितद्वारो ध्यायेच्छिवमनामयम्  ३६
सूर्यसोमात्मकौ हस्तौ संयोज्य घटमुद्रया
मूलमन्त्रादिकैर्मन्त्रैस्सेकः कार्यस्सकृत्सकृत्  ३७
सुगन्धामलकाद्यैस्तु स्नायाद्राजोपचारतः
राजवद्धेमपीठादिसुस्थितो हेमकुम्भकैः  ३८
स्नात्वा निमज्जनार्थन्तु कुर्याच्छब्दैस्सुमङ्गलैः
तीर्थे विन्यस्तमन्त्रांस्तु संहृत्य स्वहृदि न्यसेत्  ३९
अथवा स्वगृहे शुद्धवारिणा शीतलेन वा
तप्तेन लिप्तभूमिस्थपीठस्थः स्नानमाचरेत्  ४०

नवाष्टपञ्चभिः कुम्भैश्शिवमन्त्रप्रकल्पितैः
वाससा परिशुद्धेन धवलेन शरीरगम् ४१
उद्वर्त्यापनयेत्सम्यक् स्नानवारि शनैश्शनैः
भुक्तिमुक्तिदमग्नेयं कार्यं शुद्धेन भस्मना ४२
स्नानं चतुर्विधं भस्म भवेत्कल्पादिभेदतः
कल्पञ्चैवानुकल्पञ्च उपकल्पमकल्पकम् ४३
तेष्वाद्यं तत उत्कृष्टतममन्यदभावतः
रोगादिरहिता या गौः कृष्णा वा कपिलाथवा ४४
तस्या गोमयमादाय स्वस्थं पद्मदलादिना
सद्येन गोमयं ग्राह्यं पिण्डं वाभेन कारयेत् ४५
विमले शोषयित्वा तु दहेद्घोराच्छिवाग्निता
शुष्कं वनगतं यत्तु गोमयञ्चूर्णितं तथा ४६
निर्दग्धुमनुकल्पाख्यमापगादिगतं तु यत्
वस्त्रेणान्तरितं भस्म गोमूत्रैर्बद्धपिण्डकम् ४७
दग्धं प्रागुक्तविधिना भवेद्भस्मोपकल्पकम्
अन्यैरापादितं भस्म अकल्पकमिति स्मृतम् ४८
जात्यादिदोषनिर्मुक्तं रोगादिरहितञ्च यत्
तेन स्नानं प्रशस्तं स्यान्नान्येन मुनिसत्तमाः ४९
एष्वेकतममादाय पात्रेषु कलशादिषु
त्रिसन्ध्यमाचरेत्स्नानं यथासंभवतोऽथवा ५०
सन्ध्यायाः पूर्वतो ब्राह्मं कृत्वाऽऽकारं शिवद्विजः
सन्ध्यां समाचरेत्पूर्वं शैवीं वाऽवश्यकन्तथा ५१
जलस्नानं पुरा कृत्वा प्रातराग्नेयमभ्यसेत्
सन्ध्यान्तरे तथाग्नेयं केवलं वा सवारुणम् ५२
शक्तानां विधिरेवं स्यादशक्तानां यथेच्छया
आग्नेयं वारुणस्नानादसंख्येयफलावहम् ५३

तस्माद्वारुणमुत्सृज्य स्नानमाग्नेयमभ्यसेत्
शोधयेदनपेक्षस्तु शुद्ध्यै शोद्ध्यस्य वस्तुनः ५४
यथा गङ्गाजलं शुद्धं तथा भस्मापि पावनम्
भासयत्येव यद्भस्म शुभं भासयते च यत् ५५
भक्षणात्सर्वपापानां भस्मेति परिगीयते
श्रीकरञ्च पवित्रञ्च हारमाभरणं तथा ५६
लोकवश्यकरं पुण्यं भस्मस्नानं दिने दिने
ज्वरापस्मारपैशाचब्रह्मराक्षसपीडिताः ५७
भस्मलेपनमात्रेण स्वस्था मर्त्या भवन्ति च
मद्यं पीत्वा गुरुदारांश्च गत्वास्तेयं कृत्वा ब्रह्महत्याञ्च कृत्वा
भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः ५८
भस्मस्नानं जलस्नानात्कोटिपुण्यगुणं भवेत्
यतिरुद्धूलनेनैव स्नायान्नित्यमुदङ्मुखः ५९
गृही यथाङ्गमालभ्य तिलकैर्वा त्रिपुण्ड्रकैः
संगृह्य मुष्टिमात्रं तु दक्षहस्तेन भस्मनः ६०
धारणाध्यानयोगेन विशोद्ध्य परमीकृतम्
विधाय शोधयेन्मूलब्रह्माङ्गमनुभिस्तथा ६१
अग्निरित्यादिना भस्म स्थाप्य वामकरे तु तत्
अस्त्रेण दक्षहस्तेन मलस्नानन्तु मस्तकात् ६२
कृत्वा पुनर्विधिस्नानं साभिषेकं समाचरेत्
ईशानेन कमुद्धूल्य मुखं तत्पुरुषेण तु ६३
हृदयं घोरमन्त्रेण गुह्यं वामेन मन्त्रतः
सद्योजातेन सर्वाङ्गं षडङ्गैर्हृदयादिकम् ६४
सव्यापसव्यहस्ताभ्यां शनैरुद्धूलयेत्तनुम्
नच गुर्वग्निदेवानां सन्निधौ मार्ग एव च ६५
अशुद्धभूतले चैव् भस्मस्नानं नयेत्सुधीः

कचित् शस्तं हि देवस्य सन्निधावग्निसन्निधौ ६६
उद्धूलनविधिः प्रोक्तो विप्रस्य शिवशासने
उद्धूलनेप्यशक्तश्चेत् त्रिपुण्ड्रं वापि कारयेत् ६७
त्रिपुण्ड्रं विधिवत्कुर्याद्विप्राद्यगृहमेधिनः
नृपविट्शूद्रजातीनां पट्टपुण्ड्रं ललाटके ६८
पञ्चकाष्टद्विरष्टाष्टसन्धिषु प्रविधीयते
मूर्धा ललाटकर्णौ च चक्षुषी घ्राणकौ तथा ६९
आस्यं ग्रीवा तु चांसौ च बाहू कूर्परकौ तथा
मणिबन्धौ च हृन्नामिमेढ्रं पायुस्तथैव च ७०
ऊरू च जानुनी चैव जंघे स्फीचौ तथैव च
प्रियञ्चैवाष्टमूर्तीनां विद्येशानां तथैव च ७१
दिक्पालानां वसूनाञ्च मूर्द्धादि परिकल्पयेत्
ललाटकर्णौ चांसौ च बाहू च मणिकूर्परौ ७२
हृदयं जठरञ्चैव नाभिपार्श्वौ तथैव च
पृष्ठं च इति विज्ञेयाः सन्धयः षोडश क्रमात् ७३
शिववह्न्यादिमूर्तीनां वामादीनां तथैव च
अश्विन्योस्तु प्रियं ज्ञेयं मूर्द्धादिपरिकल्पनम् ७४
शिरो ललाटकर्णौ च बाहू च हृदयन्तथा
नाभि पृष्ठ इति ज्ञेयास्त्वष्टौ वै सन्धयः क्रमात् ७५
क्रमेण ब्रह्मणश्चैव मृषीणां तु प्रियं भवेत्
ललाटबाहुहृन्नाभि पञ्च सन्धिषु वा भवेत् ७६
शिवेश रुद्र कृष्णात्म भुवाञ्च प्रीतिसिद्धये
मध्यतर्जन्यनाभाभिस्त्रिपुण्ड्रं विधिवन्नयेत् ७७
षडङ्गुल प्रमाणेन विप्राणान्तु त्रिपुण्ड्रकम्
नृपाणां चतुरङ्गुल्यं वैश्यानां द्व्यङ्गुलं भवेत् ७८
शूद्राणामपि सर्वेषां एकाङ्गुल्यं त्रिपुण्ड्रकम्

स्त्रीणां तथैव कुर्वीत अन्यजातिस्तु वर्जयेत् ७९
स्त्रीणान्तु तिलकं वापि पट्टाकारमथापि वा
अथ दीपसमाकारमर्द्धचन्द्रं ललामकम् ८०
पुंस्त्रीनपुंसकादीनां सर्वेषां प्रविधीयते
पेषितं चन्दनेनैव वारिणा संयुतं तु वा ८१
केवलं वा विधातव्यं भस्मस्नानं दिनेदिने
प्रातर्मध्याह्नसायाह्नमध्यरात्रेषु सर्वदा ८२
त्रिकालं वा द्विकालं वा चैककालमथापि वा
भस्मस्नानं यथायोग्यं यः कुर्यात्सकृदेव वा ८३
सर्वपापविनिर्मुक्तस्साधयेदीप्सितं फलम्
ताम्राब्जनालिकेराश्मवैणवालाबुचर्मभिः ८४
स्वहस्तेनाचमेतैस्तु न तेनाप्रयतो भवेत्
स्वप्रमाणजलैर्युक्तं प्रस्थयुग्मापि संग्रहेत् ८५
तालमुद्रां ततः कृत्वा कौपीनं परिवर्तयेत्
वस्त्रं वातिसितं पीतं कषायं चोपवीतकम् ८६
एकद्विहस्तविस्तारं दीर्घं कौपीनमुच्यते
त्रिगुणं कटिसूत्रं स्यात् द्विश्च ग्रन्थिनियन्त्रितम् ८७
कार्पासनिर्मितं सूत्रं त्रिगुणं त्रिगुणीकृतम्
सूत्रमेकन्तु शूद्राणां वैश्यानां द्विसरं भवेत् ८८
त्रिसरं क्षत्रियाणान्तु विप्राणां सप्तसंख्यकम्
यद्वा पञ्चसरं तेषां नवसूत्रमथापि वा ८९
सोत्तरीयन्तु विप्राणां शूद्राणां केवलं तु तत्
क्षत्रविट्छूद्रजातीनां यदुक्तं चोपवीतकम् ९०
पूजादिमन्त्रकाले तु धार्यन्नो धार्यमेव वा
अनुलोमादिवर्णानां युक्तायुक्तं विचार्य च ९१
जातिभेदोक्तविधिना न धार्यं धार्यमेव च

चतुरङ्गुलमानेन त्रिगुणीकृतसूत्रकम्  ९२
वस्वर्कसंख्यया तेन सूत्रं तु त्रिगुणीकृतम्
वर्तयेत्प्राङ्मुखो भूत्वा तोयसिक्तं समं शुभम्  ९३
ततस्तत्त्रिगुणीकृत्य समं संवर्तिताग्रकम्
वामेतरकरादूर्ध्वं भूगतौ परिवर्जयेत्  ९४
निधाय तद्द्रुमादौ तु यथाग्रौ भूमिमागतौ
तद्भ्रमान्मुनितृप्तिस्स्यात्तृणं दत्वाऽथ शोधनम्  ९५
तत्सर्वं हृदयेनैव मन्त्रेण हृदि कल्पयेत्
आयुष्कामी त्वनेकञ्च द्वन्द्वसूत्रञ्च धारयेत्  ९६
इतरार्थी त्वयुग्मञ्च स्वल्पसूत्रन्तु धारयेत्
पश्चादादाय सूत्रं तद्द्विगुणं कण्ठसंगतम्  ९७
आत्मस्तनान्तमानीय तेनैव त्रिगुणीकृतम्
ग्रन्थौ त्रिवेष्टनं कृत्वा सूत्रमेवं विधीयते  ९८
यवाद्यवार्द्धमानं स्यादुत्तरीयस्य विस्मृतम्
तन्मानमुपवीतस्य सममेव विधीयते  ९९
पुरुषाघोरवामाजमन्त्रा विप्रादितः क्रमात्
स्वस्वजात्युक्तमन्त्रेण धार्यं तदुपवीतकम्  १००
वारुणं वा गृहस्थानां यतीनां भस्मना कृतम्
स्नानान्तरं तयोरेव नैमित्तिकमुदाहृतम्  १०१
ऐन्द्रञ्चातपवृष्ट्या स्यात्प्राङ्मुखेनोर्ध्वपाणिना
स्मरता मूर्धजं मन्त्रं गच्छता पदसप्तकम्  १०२
कुर्यात् गोकुलसञ्चारधूलिभिर्वायुसम्भवैः
पुरुषेणैव मन्त्रेण स्नानानामुत्तमोत्तमम्  १०३
सद्यादि मन्त्रजप्तेन तोयेन परिमार्जनम्
मान्त्रं तद्वारुणस्नानविधावपि विधीयते  १०४
प्रणवस्मरणोपेतं प्राणायामेन मानसम्

सर्वस्नानेषु कर्तव्यं केवलं वा विधीयते १०५
यावच्छरीरसंशुद्धिस्तावच्छुद्धिर्न पश्यताम्
भावशुद्ध्या विशुद्धो यस्स शुद्धो नेतरस्सदा १०६
खरवायसगृध्रान्त्यजनश्वाग्रामसूकरैः
कुक्कुटप्रेतभूसङ्गशावसूतकषातकैः १०७
शाक्यनिर्गन्ध निर्माल्य भोजकैरन्यलिङ्गिभिः
अन्यैश्च निन्दितैस्स्पृष्टो यदि स्नानं समाचरेत् १०८
भागद्वयेप्युपगते नाभितोयोर्ध्वसङ्गते
प्रक्षालनादयः स्नानाद्विशुद्धिः स्यात्करादृते १०९
छर्दितेऽभ्युदिते सूर्ये श्मश्रुकर्मणि मैथुने
दुःस्वप्ने दुर्जनस्पर्शे स्नानं षट्सु विधीयते ११०
आजानु पादौ प्रक्षाल्य हस्तावामणिवन्धनात्
कुक्कटासनसंस्थस्तु जानुमध्यगपाणियुक् १११
सम्यक् बद्धशिखो भूत्वा प्राङ्मुखो वाप्युदङ्मुखः
हस्तं गोकर्णवत्कृत्वा माषमग्नजलं पिबेत् ११२
अप्राणियुगफेनञ्च बुद्बुदादिविवर्जितम्
ब्रह्मतीर्थेन मूलेन त्रिः पीत्वा द्विः प्रमार्जयेत् ११३
ओष्ठाङ्गुष्ठमूलेनानामिकाङ्गुष्ठयोगतः
चक्षुर्नासाश्रुती बाहू वक्षो नाभिशिरः स्पृशेत् ११४
समन्त्राचमनं पश्चादात्मविद्या शिवाणुभिः
स्वधान्तैस्सलिलं पीत्वा हेतिनोष्ठौ प्रमार्जयेत् ११५
हृन्मन्त्रेणाक्षि संस्पृशान् कुर्यात् सव्यापसव्यतः
अथवान्यप्रकारेण कुर्यादाचमनं बुधः ११६
माषमग्नजलं ग्राह्यं निर्दोषं त्रिः पिबेत्पुनः
आस्यं द्विः प्रमृजेदस्त्रात्सकृन्मृज्य मुखं शनैः ११७
पदावभ्युक्ष्य मूर्धानमङ्गुष्ठानामिकेन तु

सव्यात्तु चक्षुषी स्पृष्ट्वा तर्जन्याङ्गुष्ठकेन तु ११८
नासाद्वारावुभौ स्पृष्ट्वा कनिष्ठाङ्गुष्ठयोगतः
श्रोत्रे स्पृष्ट्वा जलोपेतांगुष्ठेन तु बाहुकौ ११९
नाभिमङ्गुष्ठकेनैव सर्वाङ्गुल्यग्रसन्धितः
हृत्प्रदेशे तु संस्पृश्य सर्वाङ्गुल्या स्वमूर्द्धनि १२०
ऋृग्यजुस्सामवेदानां त्रिः पानात्तृप्तिरिष्यते
ओष्ठद्विमार्जनात्तत्र तथाथर्वेतिहासयोः १२१
आस्यसम्मार्जनादत्र गणेशस्य प्रियं भवेत्
हृच्छिरोभ्युक्षणेनैव ऋषीणान्तु प्रियं भवेत् १२२
श्रोत्रयोः स्पर्शनेनैव प्रियं स्यात्सोमसूर्ययोः
नासिकास्पर्शनेनैव अश्विन्योस्तु प्रियं भवेत् १२३
श्रोत्रसंस्पर्शनेनैव दिशां प्रीतिस्तथा भवेत्
इन्द्रविष्णवनलानाञ्च बाह्वोर्नाभेर्हृदस्तथा १२४
क्षुते च कफजाते च सद्य आचमनं नयेत्
स्पर्शयित्वा ततः श्रोत्रमंगुष्ठेनास्यकं मृजेत् १२५
तीर्थं कनिष्ठिकामूले प्राजापत्यं प्रतिष्ठितम्
कराग्रे दैविकं तीर्थं तन्मूले ब्राह्ममुत्तमम् १२६
पैतृकं देशिनीमूले पर्वसन्धिषु चार्षकम्
वामपाणितले सौम्यमाग्नेयन्दक्षिणे तले १२७
सकलिकृतदेहस्तु ततस्सन्ध्यामुपासयेत्
ब्राह्मीं ब्रह्मगुणोपेतां ब्रह्मकाले विचिन्तयेत् १२८
मध्याह्ने वैष्णवीं ध्यायेदशेषाच्युतलक्षणाम्
साये रौद्रीं तु संध्यायेद् रुद्रलक्षणलक्षिताम् १२९
नियामकां त्रिमूर्तीनां साक्षिणीं सर्वकर्मणाम्
या शक्तिः परमेशस्य सा सन्ध्येति निगद्यते १३०
तद्दीप्तिमध्यगो भूत्वा प्रातः कर्माणि साधयेत्

मेलामन्त्रक्रमेणैव शम्भुशक्तिं पुनर्जयेत् १३१
ततस्तद्वन्दनं कार्यं महास्त्रजपपूर्वकम्
अभ्युक्षणात्परं कर्म कर्तव्यं तदनन्तरम् १३२
वामहस्ते जलं स्थाप्य स्रवच्छिरसि योजयेत्
मूलाङ्गब्रह्मभिर्मन्त्रैर्दक्षहस्तेन नित्यशः १३३
भूयोपि दक्षहस्तस्थं शेषवारिरविद्युतिः
आहृत्य पूरकेणैव दक्षनासापुटेन तु १३४
दक्षनासासमीपस्थं दक्षहस्तं तु सोदकम्
तस्मात्तोयाच्च निर्दग्धं पापं देहेऽसितप्रभम् १३५
रेचकाद्दक्षनासान्तान्निर्गच्छत्परिचिन्तयेत्
तद्देहेदक्षहस्तस्थजलक्षेपात् शिवास्त्रतः १३६
कृत्वैवं मार्जनाद्यन्तु ततस्तर्पणमारभेत्
देवादीनां यथायोज्यद्रव्यैर्वारिविसर्जनम् १३७
हस्ताभ्यां तर्पणं प्रोक्तं त्रयाणां तर्पणं स्मृतम्
मन्त्राश्च देवता वाणी दिशस्तत्पतयस्तथा १३८
मुनयोऽथ मनुष्याश्च सिद्धाश्चैव ग्रहास्तथा
भूतानि पितरश्चान्ये ज्ञातयो गुरवस्तथा १३९
तर्पणीया यथान्यायं साधकैस्सिद्धिकांक्षिभिः
स्वाहया मन्त्रदेवानां सरस्वत्यास्तथैव च १४०
दिक्पतीनां मुनीनां तु नमोऽन्तं मनुजे वषट्
सिद्धानां ग्रहसंघानां नमोन्तं परिकल्पयेत् १४१
भूतानां वौषडन्तं स्यात्पित्रादीनां स्वधान्तकम्
सर्वं हृदयपूर्वं स्यात्कुसुमं देवतर्पणम् १४२
कुशो मुनीनां विहितः पित्रादीनां तिलं स्मृतम्
शेषाणामक्षतैः कुर्याद्यथायोग्योपवीतधृक् १४३
असव्यं सव्यकं सव्यमुपवीतं त्रयेण तु

मन्त्रास्तु मूलब्रह्माङ्गहेतयो मुनिसत्तमाः १४४
शिवेशविष्णुरुद्राब्जभुवो देवाः प्रकीर्तिताः
वाग्वादिनी भवेद्वाणी दिशश्चेन्द्रादयस्स्मृताः १४५
इन्द्रादयस्तत्पतयो ब्रह्मानन्तावसानकाः
अत्रिश्च विश्वामित्रश्च पुलस्त्यः पुलहः क्रतुः १४६
वसिष्ठश्च मरीचिश्च मुनयः परिकीर्तिताः
ततो मनुष्यास्सनकस्सनन्दनसनातनौ १४७
सनत्कुमारः कपिलो भृगुः पञ्चशिखस्तथा
शिवो रुद्रो भवानी च ब्रह्मविष्णवग्निवायवः १४८
धर्मः सूर्यश्चन्द्रमाश्च सिद्धाश्चैते प्रकीर्तिताः
आदित्यसोमावङ्गारबुधौ चैव बृहस्पतिः १४९
शुक्रश्शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः
भूतान्यसंख्यसंख्यानि भूतेभ्य इति योजयेत् १५०
सोमश्च पितृमांश्चैव अङ्गिरा अर्यमा तथा
अग्निश्च कव्यवाहाद्याः पितरः परिकीर्तिताः १५१
पितृपत्नयादिकं सर्वं क्रमाद्बुध्वा समाचरेत्
आचम्य दद्यात्सूर्यार्ध्यं त्र्यक्षरेण तु मन्त्रतः १५२
तद्विधिस्सूर्यपूजायां विस्तरेण विधास्यते
ध्यात्वा सूर्यं यथान्यायमुपस्थानं षडङ्गतः १५३
मेलामन्त्रं ततो जप्त्वा शिवशक्तिविभागतः
प्रातः स्थित्वा सायाह्ने तु समासीनो मुनीश्वराः १५४
आसीनो वा स्थितो वापि मध्याह्ने विधिमाचरेत्
उपस्थानं ततो जप्त्वा व्योमव्यापिनमेव च १५५
उदुत्यं चित्रमन्त्रञ्च हंसश्शुचिषदो जपेत्
प्रदक्षिणं ततः कृत्वा कुर्याद्दण्डनमस्कृतिम् १५६
सन्ध्यां नित्यमुपासीत लोपे चोपवसेद्दिनम्

अरोगी रोगयुक्तश्चेत् सद्योजातं शतं जपेत्  १५७
क्षालितं स्नानवस्त्राद्यं दण्डे संवेष्ट्य यत्नतः
गणेशरुद्रवागीशान् पूजयेत् हृदयेन तु  १५८
विघ्नान्विरेच्य मार्गस्थानस्त्ररक्षितविग्रहः
व्रजेद्देवकुलं वापि गृहमात्मीयमुत्तमम्  १५९
ततश्शुद्धिक्रमात् क्ष्मादीन्यधस्तत्त्वानि कल्पयेत्
विद्यातत्वात्मकं गेहं सिद्धिमुक्तिफलप्रदम्  १६०
तन्त्रमन्त्रान् समाधाय नागदन्तादिके शुभे
प्रक्षाल्य पादौ हस्तौ च तथाऽऽचम्य यथाविधि  १६१
मन्त्रसन्नद्धदेहस्तु सामान्यार्ध्यकरश्शुचिः
त्यजञ्छेषाध्वनो भागं प्रासादं प्रविशेद् बुधः  १६२
सर्वमन्त्रकलाधारं सर्वशक्तिप्रवर्तकम्
एवं संक्षेपतः प्रोक्तं स्नानाद्यं मुनिसत्तमाः  १६३
अनुक्तमन्यतन्त्रेभ्यस्समाहृत्याचरेद्बुधः  १६४

इति कामिकाख्ये महातन्त्रे स्नानविधिस्तृतीयपटलः

## अर्चनविधिपटलप्रारम्भः

अथार्चनविधिं वक्ष्ये भुक्तिमुक्तिफलप्रदम्
पराथं स्वार्थमित्येव द्विविधं तत्प्रकीर्तितम्  १
दीक्षान्ते गुरुणा दते लिङ्गे वा स्थण्डिलादिके
यजनं स्वार्थमाख्यातं स्वस्येष्टफलदं यतः  २
ग्रामखेटपुरादौ वा नद्यां पर्वत एव वा
अष्टषष्टिमहाक्षेत्रेष्वन्यत्र च मनोरमे  ३
स्वयम्भुदैवबाणार्षलिङ्गयुक्ते शिवालये
मनुजैः स्थापिते लिङ्गे परार्थयजनं स्मृतम्  ४
नृपतेरायुरारोग्यजयसम्पद्विवृद्धये

ग्रामादीनां विवृद्ध्यर्थं परार्थेज्या प्रयुज्यताम्  ५
परार्थयजनं कार्यं शिवविप्रैस्तु नित्यशः
धार्मिकः कुरुते नित्यमादिशैवो द्विजोत्तमः  ६
अन्ये तु स्वार्थकादन्यं कुर्युश्चेत्कर्तृनाशनम्
शिवसृष्ट विना ये तु जायन्ते ब्रह्मणो मुखात्  ७
ते सामान्या न तेषां तु परार्थेज्याधिकारिता
यदि मोहेन कुर्वीरन् राज्ञो राष्ट्रस्य नाशनम्  ८
मृत्यर्थं ये शिवं विप्रास्सामान्यास्त्वर्वयन्ति चेत्
षण्मासात्पतनं यान्ति तस्मात्तान्परिवर्जयेत्  ९
शिवदीक्षाभिषिक्तस्य शिवविप्रस्य धीमतः
शिवाज्ञावशतस्तस्य परार्थेज्या न दोषभाक्  १०
अग्निहोत्राश्च वेदाश्च यज्ञाश्च बहुदक्षिणाः
शिवलिङ्गार्चनस्यैते कोटयंशेनापि नो समाः  ११
जातेनात्मद्रुहा येन नार्चितो भगवाञ्छिवः
सुचिरं सञ्चरत्यस्मिन्संसारे दुःखसागरे  १२
वरं प्राणपरित्यागश्छेदनं शिरसोऽपि वा
न त्वनभ्यर्च्य भुञ्जीयाद्भगवन्तं त्रिलोचनम्  १३
इति ज्ञात्वा प्रयत्नेन पूजनीयस्सदाशिवः
आजानुपादौ प्रक्षाल्य हस्तावामणिबन्धनात्  १४
कार्यं त्रिविधविघ्नानां प्रासादादपसारणम्
दिव्या नभोगताश्चैव भूगतास्त्रिविधाः स्मृताः  १५
तत्त्वदृष्ट्या तु दिव्यांश्च पुष्पक्षेपान् नभोगतान्
पार्ष्णिघातत्रयाद्भोमान् प्रसादादपसारयेत्  १६
श्रेष्ठं पश्चान्मुखं लिङ्गमभावात्प्राङ्मुखं स्मृतम्
याम्यकौबेरवक्त्रन्तु न सिद्धाविष्यते बुधैः  १७
अथवा शान्तिकर्मादौ सौम्याभिमुखमिष्यते

एकद्वारविमानेऽयं नियमो निष्कलस्य तु १८
चतुर्द्वारे च मेर्वादौ लिङ्गे च चतुरानने
चतुर्द्वारं प्रकर्तव्यं तत्रायं नियमो न हि १९
यस्यां दिशि भवेत् द्वारं तां प्राचीं परिकल्पयेत्
लिङ्गस्याभिमुखं यत्तु द्वारं तत्पूर्वमिष्यते २०
तत्र तत्पुरुषं वक्त्रमूर्ध्वञ्चाभिमुखं भवेत्
बलिपीठं वृषं शूलं तद्वक्त्राभिमुखं भवेत् २१
गणपं भारतीमूर्ध्वे सव्ये गङ्गाञ्च नन्दिनम्
यमुनाञ्च महाकालं वामशाखागतौ यजेत् २२
नन्दिकालौ तथा भृङ्गि विघ्नेशौ वृषषणमुखौ
देवी चण्डौ द्विपार्श्वस्थौ द्वाराणां चतुरानने २३
एते पूज्या नमोन्तैश्च हृदयाद्यैर्यथाक्रमम्
रूपसंस्थानभावैस्तु गन्धपुष्पादिभिः क्रमात् २४
सामान्यार्घ्यं ततो दत्त्वा सव्यशाखां समाश्रितः
प्रविशेद्दक्षपादेन प्रासादाभ्यन्तरं गुरुः २५
निवारणार्थं विघ्नानां न्यस्य खड्गमुदुम्बरे
संपूज्यात्मभुवं वास्तोष्पते ब्रह्मण इत्यपि २६
लिङ्गं प्रदक्षिणीकृत्य भक्त्या स्तुत्वा महेश्वरम्
गन्धपुष्पादिकं सर्वमानीतं परिचारकैः २७
संवीक्ष्य द्रव्यसंघातं स्थापयेत् कलशान्सुधीः
वीक्षितांस्तत्त्वदृष्ट्या चाभ्युक्षितानस्त्रमन्त्रतः २८
ताडितान् प्रोक्षितांश्चैव गृहीत्वा निस्सरेद्बहिः
कलशान्सुशिरोनाहान् सुस्थिरान् छिद्रवर्जितान् २९
भवन्तं पूजयामीति प्रार्थयेत यथा तथा
शिवतीर्थमनुप्राप्य षडङ्गेनाभिमन्त्रयेत् ३०
कलशांस्तोयवस्त्रांश्च क्षालयित्वास्त्रमन्त्रतः

पूरयेद्रुद्रगायत्र्या हृदा तोयैः पटस्रुतैः ३१
सम्पूर्णकलशान् पश्चात्तद्वस्त्रेण प्रमार्जितान्
द्वौ द्वौ योक्तृनियुक्तांस्तानेकैकेन तु पाणिना ३२
गृहीत्वा प्रापयेत् गर्भगृहाग्रे वाऽथ मण्डपे
न स्पृशेदूरुपार्श्वस्थद्वारशाखादिकं यथा ३३
च्योतते न जलं भूमौ तथा कुर्याद्विचक्षणः
प्रलिप्तभूमावास्तीर्य कुशपुष्पादिकं हृदा ३४
स्थापयेत्कलशान् तत्र वर्धन्या वसुसंख्यया
क्ष्मालोकपदपञ्चाशत्पञ्चपञ्चघटांस्तु वा ३५
विकारसंख्यया वाऽथ तेषां द्विगुणसंख्यया
स्नपनोक्त्याऽथ संस्थाप्य कुर्यान्नित्याभिषेचनम् ३६
आत्मशुद्धिक्रिया पूर्वा स्थानशुद्धिर्द्वितीयका
तृतीया द्रव्यशुद्धिस्स्याच्चतुर्थं मन्त्रशोधनम् ३७
पञ्चमो लिङ्गशुद्धिश्च कथ्यन्ते पञ्चशुद्धयः
मार्जिते चोपलिप्ते च धामन्यन्यत्र वा बुधः ३८
कुशक्लृप्तासने वृस्यामथ कृष्णमृगाजिने
यथेष्टमासनं बध्वा ऋजुकायोत्तराननः ३९
चन्दनालिप्तहस्तौ तौ शोधयेदस्त्रमन्त्रतः
परस्परौ च संस्पृश्य तलकौ हस्तपृष्ठकौ ४०
अमृतीकृत्य मूलेन वौषडन्तेन मन्त्रतः
विद्याशरीरतां ध्यात्वा तयोश्शक्त्यन्तमुत्तमम् ४१
मूलेन शिवमावाह्य ब्रह्मण्यङ्गानि विन्यसेत्
गृहस्थः सृष्टिमार्गेण करन्यासं तु कारयेत् ४२
वानप्रस्थयतीनां च संहारन्यासमुच्यते
अङ्गुष्ठादिकनिष्ठान्तमीशात्सद्यावसानकम् ४३
सृष्टिन्यासस्समाख्यातस्सद्यादीशावसानकम्

कनिष्ठाद्यङ्गुष्ठान्तं च संहारन्यासमुच्यते ४४
जगतः सृष्टिसंहारक्रम एवात्र च क्रमः
नेत्रं हस्ततले न्यस्य पश्चादङ्गानि विन्यसेत् ४५
अङ्गुष्ठादिकनिष्ठान्तं कनिष्ठाद्यङ्गुष्ठकावधि
तर्जन्याङ्गुष्ठके न्यासस्सर्वास्वङ्गुष्ठतो भवेत् ४६
तर्जन्यन्तं न्यसेद्धीमान् तर्जन्या मस्तकं न्यसेत्
यद्वास्त्रवर्मचूडाकहृदोऽङ्गुष्ठादितो न्यसेत् ४७
सृष्टौ प्रतीपको न्यासस्संहारो मोक्षकांक्षिणाम्
मूर्धादिस्सृष्टिरित्युक्ता पादादिस्संहृतिर्भवेत् ४८
विद्येश्वराणां बीजानि चाङ्गुष्ठादि पुनर्न्यसेत्
अमृतीकृत्य भावेन कवचेनावकुण्ठयेत् ४९
एवं शिखीकृतौ हस्तौ समर्थौ सर्वकर्मसु
सकलीकरणे सन्ध्याकाले चाचमने तथा ५०
करन्यासो विधातव्यस्तद्विशेषविधावपि
संहारमुद्रया देहव्याप्तं चित्तं निरुध्य च ५१
हृत्पद्मगह्वराधारे शिवे वा व्योम्नि निर्मले
हृत्कण्ठतालुभ्रूशंखरोधिन्यो ब्रह्मरन्ध्रकम् ५२
कुटिला व्यापिनी तन्वी समना उन्मना तथा
तासामुपरि या शक्तिस्तस्यां वा योजयेन्नरः ५३
कृत्वाभिध्यानमादौ तु दहेद्देहमनन्तरम्
योजनं देशिकैः कार्यं रक्षार्थं भोग्यकर्मणाम् ५४
ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते क्षणात्
मुक्तौ कर्माणि देवाज्ञावशतो नास्ति तल्लयः ५५
तिरोभावकरी शक्तिश्शिवस्य परमेष्ठिनः
संसिद्धा जगतस्सृष्टिलयभोगादिहेतुका ५६
यथा मलसमोपेतं कनकं वह्निशोधितम्

प्रध्वस्ताशेषदोषोऽयं निर्मलश्चावशिष्यते  ५७
धारणाभिस्तथा ध्वस्तपापौघो निर्मलः पुमान्
अधिकारवशाद्भूयो देहित्वं प्रतिपद्यते  ५८
दीक्षितो यः पुमान् साक्षाज्जीवन्मुक्तस्य उच्यते
कृत्वैवं योजनं पश्चात्ततस्तत्वानि भावयेत्  ५९
त्रितत्त्वं पञ्चतत्त्वं वा नवतत्त्वमथापि वा
पञ्चविंशति षट्त्रिंशदेकं वाऽध्यात्मिकं तु वा  ६०
दीक्षायामुदितं यत्तु तद्वदत्रापि कारयेत्
पञ्चतत्त्वक्रमाद्वक्ष्ये शोधनं देहशुद्धये  ६१
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च नाभसी
एताः कलास्ताभिरेव व्याप्तं सर्वमिदं जगत्  ६२
मन्त्राः पदानि वर्णैश्च व्याप्तानीह समन्ततः
वर्णास्तु भुवनैर्व्याप्तास्तत्त्वैर्व्याप्तानि तानि तु  ६३
कलाभिस्तानि तत्त्वानि व्याप्तानीह कलाः क्रमात्
शोधनीया विभाव्यैवं पञ्चपञ्चाध्वगर्भिताः  ६४
वर्णचिह्नाकृतिगुणैः मन्त्रमन्त्रेशपूर्वकैः
यद्ध्यानं प्रतिपर्वं तु प्राणायामसमन्वितम्  ६५
तदत्र धारणा प्रोक्ता विषनिर्हरणादिवत्
पार्थिवं चतुरश्रं तु हेमाभं वज्रलाञ्छितम्  ६६
लबीजं ब्रह्मदैवत्यमजातहृदयात्मकम्
निवृत्त्याख्यकलोपेतं ह्लामित्युद्घातपञ्चकम्  ६७
आप्यं इन्दुसिताब्जाङ्कं विष्णुदैवं वबीजकम्
वामशीर्षसमायुक्तं प्रतिष्ठाकलयान्वितम्  ६८
युक्तं चतुर्भिरुद्घातैर्ह्लीमित्युच्चारपूर्वकम्
अग्निस्त्र्यश्रं सप्तशिखं रक्ताभं रुद्रदैवतम्  ६९
राणाघोरशिखायुक्तं विद्याख्यकलयान्वितम्

युक्तं तत्त्रिभिरुद्घातैर्ह्लूमित्युच्चारसंयुतम् ७०
वायव्यं रसकोणं तु बिन्दुषट्कमथाऽसितम्
ईशाधिपत्यं यार्णं तत्पुरुषकवचैर्युतम् ७१
शान्त्या युक्तं द्विरुद्घातैर्ह्यैमित्युच्चारपूर्वकम्
आकाशं वर्तुलं त्यक्तलाञ्छनं धूम्रवर्णकम् ७२
सदेशाधिष्ठितं हार्णमीशास्त्रातीतसंयुतम्
एकोद्घातेन हौमुक्त्वा यथास्थानं प्रयोजयेत् ७३
पार्थिवं हृदयास्थानमाप्यं कण्ठगतं भवेत्
वाह्नेयं तालुमूले तु भ्रूमध्ये वायुसम्भवम् ७४
ब्रह्मग्रन्थियुतं व्योमस्थानं यद्वान्यथा मतम्
आजानु पृथिवी ज्ञेया नाभेराप्यं निगद्यते ७५
अनलं कण्ठदेशात्तु वायुरामुखमण्डलात्
तदूर्ध्वं गगनस्थानं धारणार्थं प्रकीर्तितम् ७६
प्राणायामं समासेन कथयामि विशेषतः
रेचकं पूरकं चैव कुम्भकं च त्रिधाऽभ्यसेत् ७७
अकारोकारमकारास्त्वक्षराः परिकीर्तिताः
ब्रह्मविष्णुहरास्तेषामधिदेवाः प्रकीर्तिताः ७८
आत्मविद्याशिवाख्यानि तत्त्वानि स्युर्यथाक्रमम्
मात्राद्वादशभिर्हीनो द्विगुणैर्मध्यमो मतः ७९
त्रिगुणैरुत्तमः कालः प्रत्येकं रेचकादिषु
रेचयेद्देहगं वायुमशुद्धं व्योमसंस्थितम् ८०
शुद्धं वायुं पूरकेण समाहृत्य शनैश्शनैः
सम्पूर्णकुम्भवत्तिष्ठेद्रेचयेत्तदनन्तरम् ८१
घण्टिकां तालुना बध्वा फट्कारोच्चारयोगतः
पाशुपतेन शस्त्रेण रेचयेद्बन्धमोचनात् ८२
ततो ग्रन्थिविभेदोपि भावनीयस्तदा तदा

स्थानात्स्थानान्तरप्राप्तिर्जीवस्यास्य तदुत्क्रमात् ८३
सूक्ष्मप्राणायामं कृत्वा देहवक्रवदाचरेत्
शिवेन सहितं चान्तं चोद्धातग्रन्थभेदतः ८४
ऊर्ध्वमूलमधःशाखं कल्प्य संसारपादपम्
पूरकार्द्धेन पार्थिव्या हेयोपादेयवित्सुधीः ८५
आप्यायितं तद्वारुण्या पूरकापरभागतः
पत्रपुष्पफलोपेतं स्निग्धं वैराग्यशस्त्रतः ८६
छेदयित्वा तदाग्नेय्या कुम्भकेन विशोष्य च
ज्ञानानलेन निर्दग्धं पादाङ्गुष्ठादिकान्तकम् ८७
रेचकेनाथ वायव्या भस्मीभूतं दिशो दश
प्रलीनमन्त्यया शुद्धं निर्मलं व्योम भावयेत् ८८
महामायाञ्च विक्षोभ्य शाक्तं देहं प्रकल्पयेत्
आप्लाव्य चामृतेनैव विद्याङ्गं विन्यसेत्ततः ८९
इच्छाज्ञानक्रियाशक्तिलोचनं मातृकात्मकम्
आवाह्य तत्र चात्मानं मुद्रया पुष्पमन्त्रयुक् ९०
ईशानं मूर्ध्नि विन्यस्य मुखे तत्पुरुषं न्यसेत्
अघोरं हृदये न्यस्य गुह्ये वामं प्रकल्पयेत् ९१
सद्योजातं न्यसेत्पादे तत्तन्मुद्रासमन्वितम्
मूर्धादिपादपर्यन्तं मालाब्रह्माणि विन्यसेत् ९२
ऊर्ध्वेन्द्रयाम्यसौम्याप्यवक्त्रेष्वीशादितो न्यसेत्
बीजब्रह्मणि वा विद्वानष्टत्रिंशत्कलां न्यसेत् ९३
ईशानस्सर्वविद्यानां नमोन्तं चोर्ध्वमूर्धनि
ईश्वरस्सर्वभूतानां नमोन्तं पूर्वमूर्धनि ९४
ब्रह्मणोधिपतिर्ब्रह्म नमोन्तं याम्यमूर्धनि
शिवो मेऽस्तु नमोऽन्तं च तथा कौबेरमूर्धनि ९५
सदाशिवो नमोन्तञ्च विन्यसेदाप्यमूर्धनि

ईशानस्य कलाः पञ्च प्रणवादि प्रकल्पयेत् ९६
शशिनी चाङ्गदा इष्टा मरीचिर्ज्वालिनी तथा
नामैशानकलानां स्यात्तन्नाम्ना केवलं तु वा ९७
प्रणवेनोर्ध्ववक्त्रे तु कलामादौ तु विन्यसेत्
तत्पुरुषाय विद्महे नत्यन्तं पूर्ववक्त्रके ९८
महादेवाय धीमहि नत्यन्तं दक्षिणानने
तन्नो रुद्र नमोन्तं च कल्पयेदुत्तरानने ९९
प्रचोदयान्नमोन्तं च कल्प्यं पश्चिमवक्त्रके
कलाश्चतस्रो वक्त्रे स्युर्मूर्ध्न्यव्यक्तकला भवेत् १००
शान्तिर्विद्या प्रतिष्ठा च निवृत्तिश्चेति ताः कलाः
अघोरेभ्योपि नत्यन्तं तमां हृदयगोचरे १०१
नत्यन्तमथ घोरेभ्यो मोहां कण्ठे तु विन्यसेत्
रक्षां घोरनमोन्तं च दक्षिणांसे तु विन्यसेत् १०२
निष्ठां घोरतरेभ्यश्च नमो वामांसके न्यसेत्
मृत्युं च सर्वतस्सर्वनमो नाभो तु विन्यसेत् १०३
शर्वेभ्यो नम इत्युक्त्वा मायां च जठरे न्यसेत्
नमस्ते रुद्रनत्यन्तमभयां पृष्ठके न्यसेत् १०४
जरामुरसि रूपेभ्यो नमः प्रणवपूर्वकम्
बहुरूपकलाश्चाष्टौ विद्यादेहे प्रकल्पयेत् १०५
वामदेवाय नत्यन्तं रजां गुह्ये तु विन्यसेत्
रक्षां ज्येष्ठाय नत्यन्तं लिङ्गे प्रणवकं न्यसेत् १०६
रति रुद्राय नत्यन्तं दक्षिणोरुगतं न्यसेत्
पाल्यां कालाय नत्यन्तं वामोरुगतमावहेत् १०७
कामां कलनमोन्ताञ्च दक्षजानुनि विन्यसेत्
विकरणाय नमोन्तं च संयमीं वामजानुनि १०८
क्रियां बलनमोन्तं च जङ्घायां दक्षिणे न्यसेत्

बुद्धिं विकरणायेति नमोन्तं वामजङ्घिके १०९
कार्यां बलनमोन्तं च दक्षिणस्फिचि विन्यसेत्
धात्रीं प्रमथनायेति नमोन्तं वामतस्स्फिचि ११०
नमोन्तं ब्राह्मणीं कट्यां न्यसेदोंकारपूर्वकम्
सर्वभूतदमनाय पदमेकं प्रकल्पयेत् १११
नत्यन्तं मन इत्येवं मोहिनीं दक्षपार्श्वके
उन्मनायेति नत्यन्तं भवां पार्श्वे तु वामके ११२
त्रयोदश कलाश्चैवं वामदेवस्य कीर्तिताः
सद्योजातं प्रपद्यामि सिद्धिं दक्षिणपादके ११३
सद्योजाताय वै नमो ऋद्धिं वामाङ्घ्रिके न्यसेत्
द्युतिं भवे नमोन्तं च न्यसेद्दक्षिणबाहुके ११४
अभवे नम इत्युक्त्वा लक्ष्मीं वामकरे न्यसेत्
न्यसेन्नातिभवे मेधां नत्यन्तं नासिकाग्रतः ११५
भवस्व मां नमोन्तं च कान्तिं शिरसि विन्यसेत्
स्वधां भवतमोन्तं च न्यसेद्दक्षिणबाहुके ११६
उद्भवाय नमोन्तं च धृतिं बाहौ तु वामके
सद्योजातकलाश्चाष्टौ न्यसेत्सर्वास्स्वमुद्रया ११७
अष्टत्रिंशत्कलान्यासात् विद्यादेहं विधाय च
मूलमन्त्रं समावाह्य पश्चादङ्गानि विन्यसेत् ११८
हृदयं हृदये न्यस्य शिरश्शिरसि विन्यसेत्
शिखायां तु शिखां न्यस्य कवचं स्तनमध्यतः ११९
हस्तयोर्हेतिविन्यस्य लिपिन्यासमथाचरेत्
दीपकं वाग्भवं बिन्दुं श्रीकण्ठाय पदं ततः १२०
पूर्णोदर्यै नमश्चेति न्यसेत्केशान्तदेशगम्
न्यसेत् ओं आं अनन्ताय विरजायै नतिः पुनः १२१
न्यसेल्ललाटे दीपाद्यमिं सूक्ष्माय पदं ततः

शाल्मल्यै नम इत्येवं न्यसेद्दक्षिणचक्षुषि १२२
ओं ईं त्रिमूर्तये चेति लोलाक्ष्यै नम इत्यपि
न्यसेद्वामाक्षिमध्ये तु ओमुंकारमनन्तरम् १२३
ततोऽमरेश्वरायेति वर्तुलाक्ष्यै नमः पुनः
दक्षश्रोत्रे न्यसेदेतदोमूंकारमनन्तरम् १२४
अर्घीशाय ततो दीर्घघोणायै नम इत्यपि
वामकर्णे न्यसेदेतदोमृंकारं तु विन्यसेत् १२५
यद्भारभूतये चेति दीर्घमुख्यै नमः पुनः
दक्षनासापुटे न्यसेत् ओमृंकारमनन्तरम् १२६
पदं यन्निधनेशाय गोमुख्यै नम इत्यपि
वामनासापुटे न्यस्येत् ओं लृँकारमनन्तरम् १२७
स्थाणवे दीर्घजिह्वायै नमो गण्डे तु दक्षिणे
ओं लृंकारपदं पूर्वं हरायेति पदं पुनः १२८
कुण्डोदर्यै नमश्चेति वामगण्डे तु विन्यसेत्
ओमेंकारपदं पूर्वं चण्डीशाय पदं पुनः १२९
ऊर्ध्वकेश्यै नमश्चेति विन्यसेदुत्तरोष्ठके
ओमैंकारमथोद्धृत्य भौतिकाय पदं पुनः १३०
पदं विकृतिमुख्यै स्यात् नत्यन्तमधरोष्ठके
ओमोंकारमथोद्धृत्य सद्योजाताय यत्पदम् १३१
ज्वालामुख्यै नमश्चेति विन्यसेदूर्ध्वदन्तके
ओमौमनुग्रहेशाय उल्कामुख्यै नमः पुनः १३२
न्यसेदधोगते दन्तपङ्क्तिके साधकोत्तमः
ओमंकारं समुद्धृत्य क्रूराय च पदं पुनः १३३
श्रीमुयै नम इत्येतन्मूर्ध्नि विन्यस्य भावयेत्
ओमःकारं समुद्धृत्य महासेनाय यत्पदम् १३४
विद्यायै नम इत्येवमास्ये न्यस्येत्स्वरास्त्विमे

ओंकंकारं समुधृत्य क्रोधीशाय पदं पुनः १३५
महाकाल्यै नमश्चेति न्यसेद्दक्षिणबाहुके
ओं खंकारं समुद्धृत्य चण्डेशाय पदं पुनः १३६
सरस्वत्यै नमश्चेति न्यसेद्दक्षिणकूर्परे
ओं गंकारं समुद्धृत्य पदं पञ्चान्तकाय च १३७
यत्सर्वसिद्धिगौर्यै स्यान्नमस्कारमनन्तरम्
दक्षिणे मणिबन्धे स्यादों घंकारमनन्तरम् १३८
पदं शिवोत्तमायेति समुद्धृत्य यथाविधि
नतिस्त्रैलोक्यवन्द्यायै दक्षपाणितले न्यसेत् १३९
ओं ङंकारं समुद्धृत्य चैकरुद्राय यत्पदम्
मन्त्रशक्त्यै नमश्चेति न्यसेद्दक्षकराग्रतः १४०
ओं चंकारं समुद्धृत्य कूर्मायेति पदं पुनः
आत्मशक्त्यै नमश्चेति वामबाहौ तु विन्यसेत् १४१
ओं छंकारं समुद्धृत्य एकनेत्राय यत्पदम्
भूतमात्रे नमश्चेति विन्यसेद्वामकूर्परे १४२
ओं जं चतुर्मुखायेति लम्बोदर्यै नमोन्तकम्
वामे तु मणिबन्धे स्यादों झंकारमनन्तरम् १४३
अजेशाय पदं पश्चाद्द्राविण्यै नम इत्यपि
वामपाणितले न्यस्येदों ञंकारमनन्तरम् १४४
चन्द्राय च नगर्यै स्यान्नतिर्वामकराग्रतः
ओं टंकारं समुद्धृत्य सोमेशाय पदं पुनः १४५
खेचर्यै नम इत्येतन्न्यसेद्दक्षोरुमूलके
ओं ठंकारं समुद्धृत्य पदं लाङ्गलिने नमः १४६
मञ्जर्यै नम इत्येतद्विन्यसेद्दक्षजानुनि
ओं डंकारं समुद्धृत्य दारुकाय पदं पुनः १४७
रूपिण्यै नम इत्येवं दक्षजङ्घाग्रके न्यसेत्

ओं ढंकारपदं यत्तदर्धनारीश्वराय च  १४८
वीरायै च नमश्चेति दक्षपादतले न्यसेत्
ओं णंकारं समुद्धृत्य उमाकान्ताय यत्पदम्  १४९
खादियै नम इत्येवं दक्षपादतलाग्रके
ओं तंकारं समुद्धृत्य षडीशायेति यत्पदम्  १५०
पूतनायै नमश्चेति न्यसेद्वामोरुमूलके
ओं थंकारं समुद्धृत्य डिण्डिने यत्पदं पुनः  १५१
भद्रकाल्यै नमश्चेति विन्यसेद्वामजानुनि
ओं दंकारं समुद्धृत्य अत्रये यतपदं पुनः  १५२
गोमत्यै नम इत्येतद्वामजङ्घाग्रके न्यसेत्
ओं धंकारं समुद्धृत्य चेशानाय पदं पुनः  १५३
शंखिन्यै नम इत्येतद्वामपादतले न्यसेत्
ओं नंकारं समुद्धृत्य मेषाय पदमुद्धरेत्  १५४
गर्जिन्यै नम इत्येतद्वामपादतलाग्रके
ओं पंलोहितायेति कालरात्र्यै नमः पदम्  १५५
दक्षपार्श्वे न्यसेदों फं शिखिन्यै नम इत्यपि
कुब्जिन्यै नम इत्येवं वामपार्श्वे तु विन्यसेत्  १५६
ओं बंकारं समुद्धृत्य छगलण्डाय यत्पदम्
कामिन्यै नम इत्येवं पृष्ठभागे तु विन्यसेत्  १५७
ओं भंकारं समुद्धृत्य द्विरण्डायेति यत्पदम्
वज्रायै नम इत्येवं नाभिदेशे तु विन्यसेत्  १५८
ओं मं महाकालायेति जयायै नम इत्यपि
हृद्देशे विन्यसेदों यं पदं यत्तत्त्वगात्मने  १५९
पालिने सुमुखेश्वर्यै नमश्चेति त्वचि न्यसेत्
ओं रं रक्तात्मने चेति भुजङ्गायेति यत्पदम्  १६०
रेवत्यै नम इत्येतत्पदं रुधिरगोचरे

ओं लं वसात्मने चेति पदं यत्त पिनाकिने १६१
माधव्यै नम इत्येतत्पदं मांसगतं न्यसेत्
ओं वं मेदोमयायेति खड्गीशाय पदं पुनः १६२
वारुण्यै नम इत्येतत्पदं मेदसि विन्यसेत्
ओं शं अस्थ्यात्मने चेति बेकायेति समुद्धरेत् १६३
वायव्यै नम इत्येतत्पदमस्थिनि विन्यसेत्
ओं षं मज्ञात्मने चेति श्वेताय पदमुद्धरेत् १६४
पदं रक्षोपधारिण्यै नमो मज्ञगतं न्यसेत्
ओं सं शुक्लात्मने चेति मृगवे पदमुद्धरेत् १६५
सहजायै नमश्चेति पदं रेतसि विन्यसेत्
ओं हं प्राणात्मने चेति लकुलीशाय यत्पदम् १६६
पदं लक्ष्यै नमश्चेति मन्त्रमेतद्धृदि न्यसेत्
ओं लं लिङ्गात्मने चेति तमोरूपाय यत्पदम् १६७
व्यापिन्यै नम इत्येतल्लिङ्गमूले तु विन्यसेत्
ओं क्षं क्रोधात्मने चेति वर्तकायेति यत्पदम् १६८
मायायै नम इत्येतत्पदं लिङ्गाग्रके न्यसेत्
हृदादिस्थानगैर्वर्णैर्मातृकाङ्गानि कल्पयेत् १६९
दीपलेखां हसौ पूर्वं भान्तकेशान्तिमं तथा
कुचं चक्षुर्द्वयं कूटं हृदाद्यैर्जातिभिर्युतम् १७०
षडङ्गमेतत्कथितं मातृकायास्तपोधनाः
आद्यं मध्यनियोज्यमाद्यमथवा मध्येगतं योजयेत्
ल्लोपं कीलमिति स्मृतं विचरतो यत्स्वस्य रूपं लिखेत् ।
मन्त्रस्योच्चरणेऽखिलस्य च लिपौ संयोगतो युक्तितः
कीलं मन्त्रसुसिद्धये जपतु तत् संयोज्य संलोप्य च १७१
एतत्कीलप्रयोगेण ज्ञात्वा सर्वं समाचरेत्
हृच्छिरश्शूलिकावर्मनेत्रास्त्राणि यथाक्रमम् १७२

नमस्स्वाहा वषट् हुं च वौषट् फट् चेति जातयः
एवं कृत्वा लिपिन्यासं तत्त्वानां नवकं न्यसेत् १७३
चन्द्रबिम्बे च नादे च भ्रूमध्ये तालुरन्ध्रके
कण्ठहृन्नाभिदेशेषु शाश्वतस्थान एव च १७४
मूलस्थाने यथान्यायं न्यसेत्कण्ठोक्तमन्त्रकम्
त्र्यक्षरं मेलनायुक्तं नाभौ हृदि ललाटके १७५
व्योमव्यापि न्यसेत्पश्चात् मूर्धाङ्गुष्ठान्तसीमकम्
एवं मन्त्रत्वमापन्नो दिव्यदेहे यथाक्रमात् १७६
पूजाहोमसमाधीनां स्थानानि परिकल्पयेत्
हृदयेऽर्चाविधानं तु नाभौ होमं प्रकल्पयेत् १७७
ललाटे चेश्वरं ध्यायेद्वरदं सर्वतोमुखम्
हृदये कल्पयेद्धाम ईश्वरावाहनक्रमे १७८
आसनं कल्पयेदत्र वक्ष्यमाणविधानतः
आवाह्य देवं गन्धाद्यैर्मानसैश्शिवमर्चयेत् १७९
नाभिकुण्डे स्वभावोत्थे तर्पयेत्परमामृतैः
उद्दीप्य च निजं वह्निं संरुद्धापानवृत्तितः १८०
स्थाणुस्थाने स्मरेल्लिङ्गं स्फटिकाभं महोज्ज्वलम्
तन्मध्यगं शिवं ध्यात्वा तदेकीभावमाश्रितः १८१
इडयापूर्य पूजा स्याद्धुनेत्पिङ्गलयाऽमृतम्
आधारे प्राणमावेश्य बध्वा ग्रन्थिं समूलकम् १८२
देवनाड्या समापूर्य कोदण्डे ध्यानमभ्यसेत्
यद्वा विस्तरतः कुर्यान्मानसं यागमादरात् १८३
शिवाद्यवनिपर्यन्तं तत्त्वप्राणार्थकं स्वकम्
देवं विचिन्त्य तत्रस्थं त्रिपक्षमुपकल्पयेत् १८४
आसनं मूर्तिपक्षं च शम्भुपक्षं तथैव च
त्रिपक्षक्षयगं ध्यायेत्तत्त्वग्रामं चतुर्विधम् १८५

अस्मिन्देहे प्रवितते कल्प्य शक्त्याख्यमासनम्
मूर्तिविद्यातनुं कल्प्य समावाह्य शिवं ततः १८६
कर्णिकायां यजेद्देवं ब्रह्माङ्गैश्च समावृतम्
गणेशैर्लोकपालैश्च हेतिभिर्वज्रपूर्वकैः १८७
त्रिभिरावरणैर्वापि एकेनावरणेन वा
सप्तविंशत्यावरणैर्यथाशक्ति समर्चयेत् १८८
मनसा कल्पितैर्द्रव्यैर्मनःक्लृप्ते तु मन्दिरे
मनसा भावयन्नित्यं पूजयेत्परमेश्वरम् १८९
ध्यायन्गरुडतां यद्वद्गुरुर्निर्विषताफलम्
प्राप्नोति तद्वदत्रापि फलमिष्टमवाप्नुयात् १९०
प्राणवृत्तिनिरोधेन यजनं कुरुते यथा
प्राधर्मिकानां सर्वेषां प्रत्यावृत्ति विरेचयेत् १९१
शक्तिभिः पञ्चब्रह्माणि शिवाङ्गं मूर्तिमेव च
महेशं सदाशिवं चैव शिवमिष्ट्वा तु रेचयेत् १९२
विद्येश्वरावृतौ चैव गणेशावरणे तथा
लोकपालास्त्रयोश्चैव रुद्रादीनामथावृतौ १९३
रेचयित्वा तु भूयोऽपि यजेदावरणं प्रति
चन्द्रार्कोदयतः पूजा वृथा क्लेशो भविष्यति १९४
चन्द्रार्कनाशने पूजा साधयेदीप्सितं फलम्
सुषुम्नामध्यगे प्राणे पूजयेत्सर्वदेवताः १९५
यद्वा षड्गुणदेहाय शक्तिदेहोऽथ साधकः
पार्थिवाद्यष्टपूजाख्यतत्त्वजातं समर्पयेत् १९६
पार्थिवं सकलं गन्धो भवत्यापोऽभिषेचनम्
ता एव पाननैवेद्यं तैजसं दापमालिका १९७
वायव्यं तालवृन्ताद्यं गानाद्यं व्योमसम्भवम्
एवञ्चेतरतत्त्वानि यथायोग्यं निवेद्य च १९८

शिवेनैवोक्तवद्ध्यात्वा निर्द्वन्द्वोऽमृतमश्नुते
कृत्वैवमात्मशुद्धिं तु स्थानशुद्धिमथाचरेत्  १९९
तालमुद्रात्रयं कृत्वा प्राकारं हेतिना स्मरेत्
तद्बहिःपरिघां ध्यात्वा कवचेनैव मन्त्रतः  २००
अस्त्रजालं तु तद्बाह्ये न्यसेद्विघ्नापनुत्तये
दिव्यं धाम विचिन्त्याऽथ द्रव्यशुद्धिं प्रकल्पयेत्  २०१
ततस्संपूर्य गन्धाम्बु वर्धन्यामस्त्रमन्त्रतः
प्रोक्षयेत्तेन तोयेन शुद्ध्यर्थं हेतिमन्त्रतः  २०२
अर्घ्यपात्रञ्च शङ्खं च पाद्याचमनपात्रकम्
यदन्यदुपयोग्यं तु हेतिना क्षालयेत्ततः  २०३
हृदयेन निरीक्ष्याथ कवचेनावकुण्ठयेत्
सौवर्णं राजतं ताम्रं केलिहारञ्च शङ्खजम्  २०४
पलाशपद्मपत्रोत्थं दारवं मृत्तिकामयम्
अन्यद्वा यन्त्रिकादिस्थं पात्रमुक्तं शिवार्चने  २०५
ततस्संपूर्य गन्धाम्बु वर्धन्यामस्त्रमन्त्रतः
गन्धपुष्पादिकं सर्वमानीतं परिचारकैः  २०६
पुण्याहं वाचयित्वाथ प्रोक्षयेद्धृदयेन तु
प्रक्षाल्य पाद्यपात्रं तु गन्धतोयेन पूरयेत्  २०७
उशीरं चन्दनं चैव पाद्ये तु परिकल्पयेत्
तद्वदाचमनीयार्थं तत्पात्रं परिकल्पयेत्  २०८
पलत्रयं च कर्पूरं त्रुटीपत्रं च कुष्ठकम्
आचमीये प्रयोक्तव्यं हृदयेन तु मन्त्रतः  २०९
अर्घ्यपात्रे न्यसेत्पश्चादपरं गन्धतोयकम्
आपः क्षीरकुशाग्राणि तण्डुलास्समनास्तिलाः  २१०
अर्घ्योऽष्टाङ्ग इति प्रोक्तो यवैस्सिद्धार्थकैस्सह
कल्पयित्वा विशेषार्घ्यं तत्र मन्त्रगणान्न्यसेत्  २११

सुधया परमीकृत्य बर्मणाच्छाद्य पूजयेत्
तत्तोयैः कवचेनैव सकुशं प्रोक्षयेत्तथा २१२
गन्धं पुष्पञ्च धूपञ्च दीपमर्घ्यं निवेद्यकम्
दधिक्षीरघृतादींश्च प्रोक्षयेद्धृदयेन तु २१३
पूजार्थं कल्पितं द्रव्यं प्रत्येकमभिमन्त्रयेत् २१४
एलोशीरपलत्रयेण सहिताः कर्पूरसत्कुङ्कुमैः
श्रीखण्डागरुपत्रकैश्च कुसुमैरामोदिभिस्संयुताः ।
आपो मज्जनकर्मणे प्रणिहिताः शम्भोर्यथालाभतः
प्रोक्तद्रव्यगणेषु लब्धमिह यत्तद्ग्राह्यमाढ्येतरैः २१५
अर्घ्याम्भसो जललवं सपुष्पं हृदयेन तु
स्नानकुम्भेषु सर्वेषु निक्षिपेत्तद्विशुद्धये २१६
हृदयेन पवित्रैर्वा यद्वाङ्गैस्तत्स्वभावकैः
गन्धं वस्त्रं भूषणञ्च नैवेद्यं कुसुमं तथा २१७
सद्यवाममहाघोरनरेशैरभिमन्त्रयेत्
अवशिष्टं तु गायत्र्या मन्त्रयेत् द्रव्यशुद्धये २१८
पयेदधिघृतक्षौद्रशर्करा गन्धवारि च
पवित्रैर्हृदयाद्यैर्वा स्नानार्थमभिमन्त्रयेत् २१९
विशुद्धमन्त्रद्रव्याणि इष्ट्वा गन्धादिभिः क्रमात्
मुद्रया चामृतीवृत्य भावयेदमृताख्यया २२०
आत्मानमर्चयेद्द्रव्यैरेवं भूतैर्यथाक्रमम्
तिलकं चन्दनं कृत्वा पुष्पं शिरसि विन्यसेत् २२१
संग्राह्य वाञ्छितं मोनं ततो मन्त्रान् विशोधयेत्
मालाद्यैश्चर्यजालानि मन्त्राणां कीर्तितानि वै २२२
तेषां प्रबोधिनीशक्तिश्शिवाज्ञा ओं नमस्स्मृताः
ओंकार दिनमोन्ताश्च पठेन्मन्त्रानशेषतः २२३
बद्धपुष्पाञ्जलिर्भूत्वा शिवसद्भावभावितः

त्रिमात्रादिक्रमेणैव यावन्नादान्तिमं व्रजेत्  २२४
मन्त्रशुद्धिर्भवेदेवं शुद्धतत्त्वसमाश्रयात्
योजयेत्पञ्चगव्यं तु तद्विधानमिहोच्यते  २२५
मण्डपस्य शुभे भागे क्षेत्रे नवपदीकृते
पञ्चतत्त्ववृतन्यासे पञ्चपात्राणि विन्यसेत्  २२६
शिवे सादाख्यविद्यायां काले पुंसि च देशिकः
सुप्रतिष्ठं सुशान्तं च तेजोवदमृतात्मकम्  २२७
रत्नोदकं च सङ्कल्प्य क्षीरं दधि घृतं न्यसेत्
गोमयञ्चैव गोमूत्रं ईशानाद्यैस्तु मन्त्रितम्  २२८
एकद्वित्रिचतुःपञ्चवारैः षोढा कुशोदकम्
अमृतीकृत्य संपूज्य शिवेनैकत्वमादिशेत्  २२९
पयोदधिघृतक्षौद्रशर्करा गन्धवारि च
पवित्रैर्हृदयाद्यैर्वा स्नानार्थमभिमन्त्रयेत्  २३०
नित्ये नैमित्तिके वापि काम्ये वा कारयेत्प्रभोः
स्नपनं तु यथान्यायं तच्चानेकविधं भवेत्  २३१
अस्त्रेण शोधयेद्भूमिं वामदेवेन लेपयेत्
सूत्रन्यासमघोरेण तालमात्रान्तरं यथा  २३२
त्रितालं कर्णिकामानं सर्वसामान्यमीरितम्
चतुर्दलं यदा पञ्चकलशस्थापनं दिशि  २३३
विदिक्ष्वपि नवाख्यं स्यात्समन्तादेकमावृतम्
पञ्चविंशतिसंख्यातं तत्समन्तात्समावृतम्  २३४
एकोनपञ्चाशत्ख्यातमष्टोत्तरशतं द्विजाः
पञ्चविंशतिसंख्यातान् कलशान् मध्यमस्थितान्  २३५
परिहृत्य समन्तात्तु द्वाभ्यां वैकेन मार्गतः
अष्टद्वारसमायुक्तं बहिरावरणद्वयम्  २३६
मध्यमे तिथिसंख्यास्स्युर्नवकोणे व्यवस्थिताः

मध्यमे तिथिसंख्यातं मध्यमत्रितयं त्यजेत् २३७
अष्टोत्तरशतं ह्येतत्सहस्रञ्चेन्नवाधिकम्
सूत्रद्वयं न्यसेत्पूर्वापरगं याम्यसौम्यकम् २३८
सार्वहस्तान्तरं हस्तमानान्तरमथापि वा
स्याच्चतुर्दश संख्याता वृतिर्बाह्ये भ्रमेण च २३९
अन्तमार्गं समावाह्य विधिश्शास्त्रे समीरिता
मध्यव्यूहस्य परितश्चतुष्कुण्डं तु वाऽष्टकम् २४०
चत्वारिंशद्व्यूहकस्य पृथक् स्यात्पञ्चविंशतिः
अष्टोत्तरसहस्रात्तु त्यजेद्बाह्यावृति गुरुः २४१
तत्राग्नेयादिकोणस्थचतुर्व्यूहं समाचरेत्
अन्यत्सर्वं समानं स्यादष्टपञ्चशतं भवेत् २४२
अष्टसंख्यासमायुक्ते द्विशते मध्यमेष्टकम्
बाह्ये षोडशसंख्यातान् गृह्णीयाद्दिग्विदिग्गतम् २४३
अष्टव्यूहं तथा त्वेतदुक्तसंख्यान्वितं भवेत्
स्थण्डिलं पुरुषेण स्याच्चतुःप्रस्थमितं परम् २४४
आरभ्य द्विगुणं चैकवृद्ध्या दशगुणावधि
मानं च शिवकुम्भे स्यात्तदर्धं करके मतम् २४५
चतुस्त्रिद्व्येकसंख्याताः प्रस्थमानप्रपूरिते
कलशे वेष्टनं द्वित्रिव्योमसूत्रैः क्रमेण तु २४६
वरालत्रुटिकर्पूरन्यग्रोधोशीरजातयः
एभिर्युक्तं शिवाम्भस्याच्छिवमन्त्राभिमन्त्रितम् २४७
तेनैव पूरयेत्कुम्भं वर्धनीकलशानपि
षट् त्रिंशत्तत्त्वपर्यन्तान् कुशान् त्र्यादीनथ न्यसेत् २४८
कूर्चानैशेन मन्त्रेण द्रव्यमूलेन विन्यसेत्
वस्त्रयुग्मेन संवेष्ट्य शिवकुम्भं च वर्धनीम् २४९
नवपञ्चात्मकं रत्नं शिवे शक्तौ च विन्यसेत्

पाद्यमाचमनञ्चार्घ्यं पञ्चगव्यं चतुर्दिशि २५०
कुशोदकं ततः क्षीरं दधिकोणे घृतं भवेत्
द्वितीयस्थापनं प्रोक्तं तृतीयं च निगद्यते २५१
मधुलाजं सक्तुचूर्णं लाजचूर्णं हरिद्रका
भूतीक्षुसारकदलीतिलसर्षपपानसाः २५२
नारिकेलञ्च नारङ्गद्वयं स्यान्मातुलुङ्गकम्
पञ्चविंशतिमध्ये तु संत्यजेदन्तरावृतम् २५३
एवं कृते भवेदत्र कलशानां तु षोडश
चतुर्दिक्षु च कोणेषु पाद्याद्यष्टकमीरितम् २५४
अन्तराले तु मध्वादिवसुसंख्याकमीरितम्
प्रागुक्तत्रितयञ्चैतद्विशेषान्नित्यकर्मणि २५५
पञ्चविंशतिसंख्यातमपि नित्ये प्रशंसितम्
उत्तमोत्तमपूजायामष्टोत्तरशतावधि २५६
नैमित्तिकं तदूर्ध्वस्थपूर्वोक्तमपि शंसितम्
द्रव्याण्येतानि सर्वाणि मूलमन्त्रेण विन्यसेत् २५७
पिधाय बीजमुख्येन शरावैः पल्लवैस्तु वा
दत्वा हृदयमन्त्रेण वस्त्राणि विविधानि च २५८
आसनं संप्रकल्प्यास्मिन्कुम्भे मूर्तिमनुस्मरेत्
ब्रह्मभिस्सकलीकृत्य तत्कलास्तत्र विन्यसेत् २५९
न्यस्तविद्यातनुं तत्तद्रूपं ध्यात्वा शिवं न्यसेत्
स्थापनादि च पाद्यादि कृत्वा दत्वा हृदा गुरुः २६०
गन्धं पुष्पं च धूपं च दीपमर्घ्यं विधाय च
प्रदर्श्य लिङ्गमुद्रां तु कवचेनावकुण्ठयेत् २६१
इष्ट्वा गौरीं च वर्धन्यां योनिमुद्रां प्रदर्श्य च
पञ्चक्लृप्तौ तु ब्रह्माणि हित्वेशानं द्विजोत्तमाः २६२
विद्येशा नवक्लृप्तौ स्युर्बाह्ये मूर्तीश्वरा दिशि

अन्तरे वामदेवाद्याः पञ्चविंशतिसंख्यके २६३
अष्टौ गणेश्वरा बाह्ये चाङ्गुष्ठप्रमुखास्तथा
क्रोधाद्या वसुसंख्याता शतरुद्रादिकास्तु वा २६४
एकोनेन तु पञ्चाशत्स्नपने देवता मताः
मध्ये विद्येश्वराः पूज्याः शतरुद्रा बहिर्मताः २६५
अष्टोत्तरशताख्ये च स्नपने देवता मताः
विद्येशा मध्यमे देवास्त्वन्यत्र शिव एव हि २६६
स च नाम्नां सहस्रैस्तु पठ्यते तद्विशेषतः
अष्टोत्तरसहस्राख्यस्नपने देवता मताः २६६-२
कूटाक्षरादिसंयुक्तं चतुर्थ्यन्तसमन्वितम्
स्वाहान्तं वा नमस्कारप्रान्तं प्रणवपूर्वकम् २६७
पठित्वा पूजयेदीशं शिवनामाथ केवलम्
लिङ्गशुद्धिक्रमात्प्राप्ता यथावदभिधीयते २६८
लिङ्गं त्रिविधमाख्यातं व्यक्ताव्यक्तोभयात्मकम्
स्वयम्भूदेवबाणार्षपारुषाद्यमनेकधा २६९
स्थिरलिङ्गं चरं वापि त्रिविधं मण्डलं तथा
पटं वा भित्तिचित्रं वा पीठं वा मन्त्रसंस्कृतम् २७०
बह्यम्बुगुरुवृक्षाद्यं विद्यापीठमथापि वा
विशेषतस्स्वयंसिद्धं पाषाणं रत्नमेव वा २७१
अन्यद्वा लिङ्गकल्पोक्तं सैकताद्यं विशेषतः
एतत्सर्वं शिवेज्यार्थं यथायोगं प्रकल्पयेत् २७२
सामान्यार्घ्यञ्च संग्राह्य द्वाराग्रे वृषभं यजेत्
लोहजं संयजेद्द्वारे परिवारे तु शैलजम् २७३
सप्तवर्गाच्चतुर्थं तु सप्तस्वरविभूषितम्
बिन्दुनादसमायुक्तमादौ प्रणवपूर्वकम् २७४
वृषभाय नमश्चान्ते तस्मिन्ब्रह्माङ्गकल्पना

द्वारमस्त्रेण संप्रोक्ष्य द्वारपानर्चयेत्क्रमात् २७५
गणपं भारतीमूर्ध्वे नन्दिनं जाह्नवीयुतम्
महाकालेन यमुनां सव्येऽसव्ये समर्चयेत् २७६
विमलञ्च सुबाहुं च तल्पयोश्च क्रमाद्यजेत्
एते पूज्या नमोन्तैश्च हृदयाद्यैर्यथाक्रमम् २७७
रूपसंस्थानभावैस्तु गन्धपुष्पादिभिः क्रमात्
कार्यं त्रिविधविघ्नानां न्यस्य खड्गमुदुम्बरे २७८
द्वारपूजावसाने तु स्नानान्ते च निवेद्यके
सन्ध्यावसाने निक्षेप्यं प्रच्छन्नपटमुत्तमम् २७९
संपूज्यात्मभुवं वास्तोष्पते ब्रह्मण इत्यपि
लिङ्गमध्यगतां पूजां पूर्वकाले प्रकल्पिताम् २८०
गायत्र्या पूजयित्वा तु सामान्यार्घ्यं तु दापयेत्
उच्चार्य पञ्चब्रह्माणि पूजां लिङ्गाद्विसृज्य च २८१
हृन्मन्त्रेणेशदिग्भागे पीठिकादौ यथाविधि
चण्डेशायेति निक्षिप्य पिण्डिकामस्त्रयोगतः २८२
विशोध्य दक्षहस्तेन शिवलिङ्गं तु शोधयेत्
अस्त्राम्बुनैव संशोध्य शिवलिङ्गं सवेदिकम् २८३
सामान्यार्घ्यजलैः पश्चादभिषेचनमाचरेत्
आवाहनासनं पद्ममनन्तं स्नानकर्मणि २८४
विमलञ्चार्चने विद्यान्नैवेद्ये योगमासनम्
वस्त्रादीन्यन्यकर्माणि सिंहासने प्रकल्पयेत् २८५
इत्यात्मस्थानद्रव्यार्णलिङ्गशुद्धौ कृते सति
अर्चनं शैविकं कार्यमन्यथा न विधीयते २८६
गणेशं पीठवायव्यां गन्धपुष्पादिभिर्यजेत्
ऐशान्यां गुरुपङ्क्तीश्च पूजयेद्धृदयेन तु २८७
आसनासनिसद्भावं ज्ञात्वा यजनमारभेत्

आसनं द्विविधं प्रोक्तं देहजीवविभेदतः २८८
शुद्धविद्यान्ततोऽनन्ताद्यासनं परिकीर्तितम्
महामायावसानं तु दिव्यदेहं विचिन्तयेत् २८९
जीवोऽस्मिन् शिव एव स्यादेवं त्रिविधकल्पनात्
यल्लघु व्यापकं तद्धि व्याप्तं हि तदधिष्ठितम् २९०
तृणवद्वायुना दृश्यं धार्यते जायते यया
साऽधारशक्तिर्न्यस्तव्या पूर्वं कूर्मशिलासने २९१
चन्द्रांशुनिर्मला सौम्या चतुर्वक्त्रा चतुर्भुजा
दुग्धाब्धिसदृशाकारा कल्पिता हृदयार्णगा २९२
अनन्तं नीलसंकाशं अनेकफणमण्डितम्
हृदयेऽञ्जलिसंयुक्तमेकवक्त्रं चतुर्भुजम् २९३
क्षीराब्धितस्समुत्पन्नसरोरुहसमाकृतिम्
तत्राधारे हृदा मन्त्री विन्यसेदासनात्मकम् २९४
तद्वीर्यभूता धर्माद्याः चतुष्कोणस्थपादुकाः
सिंहाकारसितार्कांशुपीतकृष्णनिभाः शुभाः २९५
अन्योन्यवीक्षणैस्सिंहैरनेकैः परिवारिताः
अधर्माज्ञानावैराग्यानैश्वर्याख्यानि तानि तु २९६
चित्रवर्णस्वरूपाणि दिक्षु गात्राणि कल्पयेत्
अधश्छदनमूर्ध्वं च रक्तं शुक्लं विचिन्तयेत् २९७
बन्धमोचनहेत्वादि शक्तिद्वयमयं द्वयम्
नैर्ऋृत्यादीशदिग्भागे मेखलाधोर्ध्वसङ्गतम् २९८
पद्ममष्टदलोपेतं सिद्ध्यष्टकसमन्वितम्
शक्तिकेसरसम्भिन्नं कर्णिकाशक्तिसंयुतम् २९९
बिल्वपत्रैः हृदा कल्प्यं लिङ्गमूले विशेवतः
वामा ज्येष्ठा च रौद्री च काली चैव ततः परम् ३००
कलविकरणी देवी बलविकरणी तथा

बलप्रमथिनी चैव सर्वभूतदमन्यपि  ३०१
पूर्वादीशानपर्यन्तं केसरेषु दलेषु च
मनोन्मनीं कर्णिकायां विन्यसेद्धृदयेन तु  ३०२
वामाद्याश्शक्तयो रक्ताः श्वेताभा स्यान्मनोन्मनी
मण्डलत्रयमर्केन्दुवह्न्याख्यं स्वत्वरूपतः  ३०३
दलान्तं केसरान्तं च कर्णिकान्तं प्रकल्पयेत्
ब्रह्मा विष्णुश्च रुद्रश्च मण्डलत्रयदेवताः  ३०४
ब्रह्माणं सचतुर्वक्त्रं चतुर्बाहुविभूषितम्
कमण्डलुचरं रक्तं दण्डहस्तं प्रजापतिम्  ३०५
अक्षमालाधरं दिव्यं पद्महस्तं सुलोचनम्
ध्यात्वा पत्रेषु विन्यस्य सर्वकिल्बिषनाशनम्  ३०६
अतसीपुष्पसंकाशं शङ्खचक्रगदाधरम्
पीतम्बरधरं दिव्यं वनमालाविभूषितम्  ३०७
स्फुरन्मकुटमाणिक्यकिंकिणीजालमण्डितम्
ध्यात्वा विष्णुं महात्मानं केसरेषु निवेशयेत्  ३०८
शङ्खकुन्देन्दुधवलं शूलहस्तं त्रिलोचनम्
सिंहचर्मपरीधानं शशाङ्ककृतशेखरम्  ३०९
नीलकण्ठं वृषारूढं रुद्रं ध्यात्वा विशेषतः
कर्णिकायां निवेश्यैनं महापातकनाशनम्  ३१०
तत्रैवात्मत्रयं न्यस्य गुणत्रयमतः परम्
वह्नित्रयं च तत्रैव विन्यसेत् प्रविभागशः  ३११
एवं पृथ्व्यादितत्त्वानां शुद्धविद्यावसानकम्
व्याप्तिं सञ्चिन्त्य तन्मध्ये शक्तिं भूयोऽपि विन्यसेत्  ३१२
एवं शक्त्यादिशक्त्यन्तमासनं परमेष्ठिनः
अनन्तः कर्तृरूपेण पीठात्मा त्वत्र तिष्ठति  ३१३
एवं संक्षेपतो विप्राः पीठक्लृप्तिरिहोच्यते

धर्मो ज्ञानं च वैराग्यं त्वैश्वर्यं च चतुष्टयम् ३१४
अनन्तश्शक्तिरित्येवं षडङ्गान्यासनस्य तु
षडध्वमासनं शम्भोः पूजा स्याद्धृदयेन तु ३१५
अथवाऽन्यप्रकारेण कथ्यते पीठकल्पना
सर्वाध्वनिमितं पीठं चतुर्युगमहाङ्घ्रिकम् ३१६
पृथ्वीकन्दं तथा कालान्तस्थतत्त्वोर्ध्वनालकम्
पञ्चाशद्भावसम्भिन्नकण्टकैरुपशोभितम् ३१७
मायातत्त्वं बृहद्ग्रन्थि शुद्धविद्येरुपङ्कजम्
विद्येश्वरदलं शक्तिकेसरैरुपशोभितम् ३१८
शिवशक्तिद्वयारब्धकर्णिकाबीजराजितम्
पीठमेवंविधं ध्यायेन्मातृकाक्षरसम्भवम् ३१९
न पुंसकाक्षरैरेव धर्मादीन् परिकल्पयेत्
अनन्तं सृष्टपूर्वेण तत्पूर्वेण महाम्बुजम् ३२०
कर्णिकान्तं स्वरान्तेन कल्पयेत्कल्पवित्तमः
ओंकाराद्या अकारान्तास्त्यक्तषण्डनवस्वराः ३२१
वामाज्येष्ठादिशक्तीनां क्रमादुत्क्रमतो नव
केसराणि चतुर्विंशत्कादिभान्तगतानि च ३२२
मकारादिहकारान्तैर्नवबीजानि कल्पयेत्
मण्डलत्रयमत्रैव पूर्ववत्परिकल्पयेत् ३२३
मातृकासम्भवं पीठमेवमापद्य पूजयेत्
मण्डलत्रितयेभ्युत्थामनलस्तम्भसन्निभाम् ३२४
मूर्तिमीश्वरतत्त्वान्तां लिङ्गनाहे तु विन्यसेत्
हृत्सम्पुटमजातं वै मूर्तिमन्त्रमुदाहृतम् ३२५
तथैव मूल एवायं सादाख्यं मन्त्रमुच्यते
विन्यसेन्मूर्ध्नि मध्ये तु विद्यादेहं सदाशिवम् ३२६
आरोहे शिवलिङ्गस्य शुद्धस्थानमयं प्रभुम्

अष्टत्रिंशत्कलोपेतं ब्रह्माङ्गकृतविग्रहम्  ३२७
सदाशिवस्य रूपं तु ध्यानार्थमिह कथ्यते
ध्यानं वै सर्वसिद्ध्यर्थं पटादौ वाऽपि निर्मितम्  ३२८
पञ्चास्यं दशदोर्दण्डं स्फटिकाभं त्रिलोचनम्
शान्तं चन्द्रकलाचूडं सर्पसन्नद्धसज्जटम्  ३२९
मन्त्रसिंहासनासीनं श्वेतपद्मोपरि स्थितम्
कुण्डलैः कर्णिकैर्हारैः कटिसूत्रोदरबन्धनैः  ३३०
केयूरैः कटकैश्चैव छन्नवीरैश्च संयुतम्
षोडशाब्दयुतं कान्तं सुप्रसन्नं स्मिताननम्  ३३१
शूलं परशुखड्गं च वज्रं वह्निं च दक्षिणे
अभयं पाशमन्यच्च घण्टां नागाङ्कुशौ तथा  ३३२
वामहस्तगतं ध्यायेदन्यथा च निगद्यते
प्रसादाभयखट्वाङ्गशक्तिशूलास्तु सव्यतः  ३३३
वामे डमरुसर्पाक्षमालेन्दीवरपूरकैः
इच्छाज्ञानक्रियाशक्तित्रयनेत्रयुतं स्मरेत्  ३३४
चन्द्रस्सर्वज्ञतारूपः दशहस्ता दिशो दश
त्रिशूलं त्रिगुणं प्रोक्तं सत्ता परशुरुच्यते  ३३५
खड्गमीशप्रतापः स्याद्वज्रं दुर्भेद्यता भवेत्
वह्निस्संहारिणी शक्तिः पाशानां भस्मसात्करी  ३३६
प्रकाशिका पदार्थानां महामायोर्ध्ववर्तिनाम्
नागोपधृष्टता शक्तिस्सर्वेषां च विधायिका  ३३७
पाशं पाशत्रयं विद्यान्मायाकर्ममलात्मकम्
घण्टा नादात्मकं रूपं मन्त्रविग्रहबोधकम्  ३३८
अभयं सर्वलोकानां शक्तिर्वै परिपालिनी
यद्योग्ये ह्यात्मनः प्राप्तिस्त्वत्रैव नियमोऽङ्कुशम्  ३३९
एवम्भूतस्वरूपाणि स्मर्यन्ते चायुधानि वै

ईशस्स्फटिकवन्मध्ये पूर्वे कुङ्कुमवन्नरः ३४०
दक्षिणेऽञ्जनवद्धोरः सौम्ये वामः कुसुम्भवत्
चन्द्रांशुनिर्मलं सद्यं वक्त्रं पश्चिमदिग्गतम् ३४१
सिंहनादमुखं पूर्वे ललाटे नयनं शुभम्
भ्रूहीनं तुङ्गनासं च सुकपोलस्मिताधरम् ३४२
दक्षिणं भीषणाकारं दंष्ट्रादन्तुरकर्कशम्
विवृतास्यं महाघ्राणं वृत्ताक्षं लेलिहानकम् ३४३
नागाभरणसंयुक्तं कपालकृतशेखरम्
ज्वालाकृतिजटाव्यालभोगिबद्धोर्ध्वचूडकम् ३४४
पीतमाप्यं प्रसन्नं च सुनासं सुललाटकम्
त्र्यक्षं मकुटयुक्तं च कुण्डलालङ्कृतं शुभम् ३४५
भृङ्गाकारकचव्रातं काञ्चनाभरणान्वितम्
ललाटतिलकोपेतं दर्पणासक्ततेजसम् ३४६
अलकावतंससंयुक्तं सौम्यं कान्तवपुर्युतम्
तत्रैशानःस्थितोत्तानो मूर्धस्थस्त्वतिभीषणः ३४७
कुण्डलालङ्कृतस्त्र्यक्षो मौलीन्दुतरुणः स्मृतः
एवं वक्त्राणि संभाव्य रूपं सादाशिवं यजेत् ३४८
यथा देहे तथा देवे मन्त्रन्यासं प्रकल्पयेत्
एवं शाक्तं वपुः कल्प्य तस्मिन् परमकारणम् ३४९
शिवं वै शाश्वतं सत्यं ज्ञानानन्दसुखात्मकम्
व्यापकं सर्वतत्त्वानामप्रमेयमनूपमम् ३५०
वाच्यवाचकरहितं वाङ्मनोऽतीतगोचरम्
व्यक्तं कुर्याद्विशेषेण निष्फलं सकलात्मनि ३५१
इत्यावाहनपूर्वैस्तु मूलमन्त्रैर्नियन्त्रणात्
यथा काष्ठगतो वह्निर्व्यज्यते मथनादिभिः ३५२
तथा मन्त्रप्रभावेन भक्त्याऽभिव्यज्यते शिवः

कृत्वा हृद्गतमञ्जलिं सकुसुमं प्रासादमन्त्रं पठन्
भक्त्या निष्कलगोवरं समरसीभावं गतस्साधकः ।
ध्यायेदुत्क्रमतस्स्वशक्तिभवने नादे तथा बिन्दुके
निष्क्रान्तं क्रमतः स्वशक्तिकिरणैः स्यादेवमावाहनम् ३५३
ऋषय ऊचुः
सर्वगस्य शिवस्येह कथमावाहनं प्रभो
यद्यावाहनमिष्टं स्यात्सर्वगत्वं विहन्यते ३५४
ईश्वर उवाच
आमूलाग्रस्थितस्याग्नेरभिव्यक्तिर्यथा तरौ
तद्वदेकत्र चिद्व्यक्तिर्व्यापकस्य न बाध्यते ३५५
यथात्मनस्तनुद्वारा स्यातामिह गमागमौ
तद्वन्मन्त्रतनुद्वारा शिवस्येष्टौ गमागमौ ३५६
अचिन्त्यशक्तियुक्तत्वाद्व्यापकोऽव्यापकश्च सः
सतनुस्तनुहीनो वा सर्वकृत्सर्वगश्शिवः ३५७
एवं बिन्दुगतं त्वीशं हस्तपुष्पगतं स्मरेत्
तच्च प्राणपथा कार्यं नाड्या ज्योतिस्स्वरूपया ३५८
तस्मादादाय लिङ्गस्थं स्थापिन्या विन्यसेत्तनौ
येन सामर्थ्यतश्शम्भोस्स्वस्य स्वस्वामिता भवेत् ३५९
तच्छक्तिप्रकटीभावः सन्निधानं स्वमुद्रया
सन्निधेरपरित्यागे योऽर्चकालावसानकः ३६०
सन्निरोधो निरोधिन्या विभोरपि विभाव्यते
लोके सुखात्मकं वस्तु गोपनीयं यथा तथा ३६१
तस्यावकुण्ठनं कार्यमवकुण्ठनमुद्रया
यथानलतरण्याद्यास्समर्थाः स्वस्वदीप्तिभिः ३६२
तद्वदङ्गैः स्वभावोत्थैरधृष्योऽखिलकृच्छिवः
अस्तित्वं हृदयं तस्य शिरश्चोर्ध्वं शिखास्थितिः ३६३

शिखा स्वतन्त्रता तस्य कवचं गोप्तृता भवेत्
निरस्यति यया शक्त्या भवमस्त्रं तदस्य हि ३६४
नेत्रं सर्वज्ञताशक्तिः समस्तार्थप्रकाशिका
एवं षाड्गुरायमत्रोक्तं जगत्कर्तुः शिवस्य तु ३६५
एतानि हृदयादीनि षडङ्गानि स्वमन्त्रतः
हृच्छिरश्चूलिकागात्रनेत्रहस्तेषु विन्यसेत् ३६६
अङ्गाङ्गिनोरभिन्नत्वप्रतिपत्तिर्विभिन्नयोः
अमृतीकरणं प्रोक्तं प्रभोरमृतमुद्रया ३६७
प्ररोचनं भवेत्तस्य रुचिराङ्गप्रवर्धनम्
तन्महामुद्रया कुर्यान्मोदनद्रावणार्थया ३६८
षडध्वविग्रहं देवं सम्मुखं शक्तिसंयुतम्
परमानन्दसन्दोहधवलीकृतदिङ्मुखम् ३६९
ध्यात्वा पाद्यं पदे दद्यान्मुखेष्वाचमनं ततः
अर्घ्यं मूर्धसु दातव्यं दूर्वापुष्पाक्षतं तथा ३७०
नत्यन्तेन हृदा पाद्यमाचामं स्यात्स्वधान्ततः
स्वाहान्तेन हृदा चार्घ्यं दूर्वाद्यं वौषडन्ततः ३७१
कृत्वैवं दशसंस्कारानुपचारैश्च पूजयेत्
पूजोपचारैर्विभवानुसारैः
स्नानादिभिः स्वल्पतरैर्महद्भिः ।
विधीयते नित्यविधौ समस्तैः
स्रगादिभिः काम्यविधाववश्यम् ३७२
स्नानं वस्त्रविलेपनञ्च कुसुमं धूपोऽथ दीपो हवि-
स्ताम्बूलं मुखवासगन्धसहितं गीतं च नृत्तं महत् ।
होमो भूतबलिप्रदानसहितो नित्योत्सवो वा बलिः
सङ्गीतञ्च समस्तमेतदुदितं शम्भोर्विभूतौ सति ३७३
गन्धं पुष्पञ्च धूपञ्च दीपं नैवेद्यमेव च

पञ्चोपचारा एते स्युर्दीपान्तं वाऽपि सम्मतम् ३७४
स्नातयोग्याः स्नापदीयाश्चित्राद्यास्तद्विवर्जिताः
कृपाणदर्पणादौ वा मणौ वा प्रतिबिम्बिते ३७५
दीपान्तपर्वनं प्रोक्तं नैवेद्यान्तं तु पूजनम्
बल्यन्तं शान्तिकं प्रोक्तं पूजा हि त्रिविधोच्यते ३७६
सायं प्रातस्तथाभ्यर्च्य मध्याह्ने तु निवेदनम्
प्रस्थद्वयं तु तत्काले पाचयित्वा निवेदयेत् ३७७
एको दीपो द्विकालेऽपि रात्रौ दीपद्वयं त्विह
एवमुक्तप्रकारेण अधमाधममाचरेत् ३७८
प्रातःकाले च मध्याह्ने द्विःप्रस्थं तण्डुलं हविः
सायं प्रातः समभ्यर्च्य दीपाश्चत्वार एव हि ३७९
प्रस्थद्वयं त्रिकाले तु प्रत्येकमथ निर्दिशेत्
दीपाश्चत्वार एव स्युः साये तु द्विगुणास्ततः ३८०
अधमत्रितये धीमान् वाद्यध्वनिसमन्वितम्
मध्यमस्याधमञ्चैव मध्याह्ने चाढकं हविः ३८१
प्रातस्साये च द्विःप्रस्थं दीपैर्द्वादशभिर्युतम्
त्रिकालं पुष्प लङ्गेन बलिदानं नयेद्द्विजः ३८२
मध्यमान्मध्यमं चैव त्रिकाले चाढकं हविः
अर्धयामे तदर्धं च चतुर्विंशतिदीपकम् ३८३
त्रिकालं बलिसंयुक्तं पुष्पेणार्घ्यं बलिक्रमात्
वाद्यध्वनिसमायुक्तं शङ्खकाहलसंयुतम् ३८४
मध्याह्ने नित्यहोमं च शिवमन्त्रेण संयुतम्
मध्यमस्योत्तमे चैव त्रिकालेष्वाढकद्वयम् ३८५
आढकञ्चार्धयामे तु दीपसप्ततिसंयुतम्
त्रिकालं बलिदानं स्यात्त्रिकालं होममाचरेत् ३८६
सर्ववाद्यसमायुक्तं षट्काले च सुघोषयेत्

षड्विधं यत्र कुर्वीत कालसंख्या न विद्यते ३८७
उत्तमस्याधमं यत्र द्रोणेनैव त्रिसन्धिषु
द्रोणार्धमर्धयामे तु दीपास्त्वष्टशतं भवेत् ३८८
त्रिकालं बलिदानं स्यात्त्रिकालं होममाचरेत्
वाद्यकानां चतुर्विंशत्सर्ववाद्यसमन्वितम् ३८९
गणिकास्तु चतुस्त्रिंशत् चतुर्विंशति वा दश
रूपयौवनसंपन्नास्त्रिकालं नृत्तमाचरेत् ३९०
पञ्चाचार्यसमायुक्तं कालं यामसमन्वितम्
उत्तमं मध्यमं यत्र त्रिकालेषु चतुर्हविः ३९१
पायसादीनि विधिना प्रत्येकं द्रोणतण्डुलैः
द्रोणं शुद्धोदनं कुर्यात्पाचयित्वा पृथक्पृथक् ३९२
द्रोणं तु चार्धयामे तु दीपाश्चैव शतद्वयम्
त्रिकालं बलिहोमं च शीतारिदीपमुच्यते ३९३
वाद्यकानां चतुस्त्रिंशत्पञ्चाशद्गणिकान्वितम्
कालं यामद्वयं प्रोक्तं नृत्तं कुर्यात्त्रिसन्धिषु ३९४
उत्तमोत्तममुद्दिश्य हविष्यक्रमुच्यते
पायसादीनि पक्वानि पञ्चद्रोणेन वै पृथक् ३९५
तदर्धमर्धरात्रे तु दीपाः पञ्चशतं भवेत्
त्रिकालं बलिहोमं च पञ्चाशद्वाप्यसंयुतम् ३९६
षोडशद्विशतैश्चैव गणिकाभिस्समन्वितम्
नृत्तं कुर्यात्त्रिसन्ध्यायां कालो यामयुतो भवेत् ३९७
पञ्चवर्णहवींष्यत्र पायासादीनि च क्रमात्
द्रोणतण्डुलसिद्धानि तदर्धेन तदर्धतः ३९८
एषामेकद्वयं वाऽपि त्रयं वा सर्वमेव वा
हविर्दद्याद्विशेषेण एककालेऽथवा पुनः ३९९
शुद्धान्नं द्विगुणं प्रोक्तमेतत्सामान्यमीरितम्

एवं नवविधं प्रोक्तं प्रत्येकं तु विधीयते ४००
स्नानोदभगडं संपूज्य स्नानाम्भोगन्धवासितम्
संहितामन्त्रसंजप्तं सपुष्पं धूपितं शुभम् ४०१
तैलेन हस्तयन्त्राद्यैः साधितेन नवेन च
पक्वेन वासितेनाऽथ शुद्धगव्येन सर्पिषा ४०२
सपीठं लिङ्गमभ्यज्य धूपयेत्तदनन्तरम्
शुभेन शालिपिष्टेन हरिद्रासंयुतेन च ४०३
उद्वर्त्य माषचूर्णेन निमज्जनमथाचरेत्
सुगन्धामलकाद्यैस्तु स्नानं तत्र विधीयते ४०४
वर्णभूतशरावैस्तु वज्राद्यैर्गोमयोद्भवैः
पौष्टिकैर्वा सुरचितै राजिकालवणेन तु ४०५
कोष्णाम्बुभिर्गन्धतोयैः कषायैरभिषेचयेत्
पयोदधिघृतक्षौद्रशर्कराद्यैः स्वशक्तितः ४०६
कुडुपाद्याढकान्तैश्च कुडुपाद्वर्धितैरपि
खगडाभावादिक्षुसारो मध्वभावे घृतं भवेत् ४०७
जलधूपान्तरैः कार्योऽभिषेको विभवे सति
नालिकेरफलाम्भोभिरन्यैर्वा रसवद्रसैः ४०८
पुष्पाद्यैर्हेमतोयैश्च रत्नोदैर्गन्धतोयकैः
अभिषेकं ततः कुर्यान्न कुर्याच्छून्यमस्तकम् ४०९
तर्जन्यङ्गुष्ठयोगेन पुष्पागयादाय हेतिना
तेन मूर्ध्निगतं पुष्पं त्यक्त्वाऽन्यत्तत्र योजयेत् ४१०
अष्टपुष्पं त्रिगन्धं च सप्तवारि नियोजयेत्
आवाहनार्घ्यपाद्येषु स्नाने धूपविलेपने ४११
नैवेद्ये च विसर्गे च पुष्पमष्टसु योजयेत्
अर्घ्ये विलेपने स्नाने त्रिषु गन्धं प्रकल्पयेत् ४१२
पुष्पदानार्घ्यपाद्येषु स्नाने चाचमनं तथा

ज्ञालने प्रोक्षणे चैव वारि सप्तसु योजयेत् ४१३
धूपं सर्वत्र दातव्यं शेषं ज्ञात्वा प्रयोजयेत्
द्वारपूजावसाने तु स्नानान्ते च निवेद्यके ४१४
सन्ध्यावसाने निक्षिप्य प्रच्छन्नपटमुत्तमम्
स्थापितैः कलशैः पश्चादभिषेकं समाचरेत् ४१५
वामहस्ततले कृत्वा गडुकं लिङ्गमस्तकात्
कुसुमं पूर्वविन्यस्तं तदस्त्रेणापनीय च ४१६
धौतपाणिस्समन्त्रेण शङ्खमुद्रापरिप्लुतैः
जलैरनुच्चलद्भिश्च स्नापयदीशमस्तके ४१७
नोपरि भ्रामयेद्धस्तं न मुद्रां बन्धयेदधः
अद्भिरुच्चलिताभिस्तु तद्द्रव्याणि न सेवयेत् ४१८
जयशब्दसमोपेतं शिवकुम्भञ्च वर्धनीम्
उद्धृत्य नीत्वा देवाग्रे यन्त्रिकोपरि विन्यसेत् ४१९
दत्वा घटस्थदेवाय देव्यै पाद्यादिकं त्रयम्
गन्धं पुष्पं च धूपं च दीपमर्घ्यं विधाय च ४२०
अपनीय विधानं तद्दक्षहस्तेन देशिकः
कूर्चं सपुष्पं तोयाभ्यां शिवमन्त्रमनुस्मरन् ४२१
संगृह्य तत्त्वचित्तस्तु लिङ्गमूर्ध्नि मनुं न्यसेत्
देवेशीमपि तद्वामे देवस्य विनिवेशयेत् ४२२
शिवमन्त्रं स्मरन् कुम्भतोयेन स्नापयेच्छिवम्
पिण्डिकारूपिणीं देवीं स्नापयेत्तदनन्तरम् ४२३
सुगन्धामलकाद्यैस्तु स्नानं तत्र विधीयते
गन्धाम्बुनाऽभिषेकं तु कृत्वा लिङ्गं सपीठकम् ४२४
वक्त्रेष्वाचमनं दत्वा मार्जयेच्छुद्धवाससा
गन्धद्रव्यैस्समालिप्य शिवलिङ्गं सवेदिकम् ४२५
वस्त्रैर्नानाविधैर्द्रव्यैर्देवमाच्छाद्य निर्मलैः

दत्वाष्टपुष्पं देवाय दद्यान्मन्त्रहविस्ततः ४२६
मुद्गान्नं वाऽथ शुद्धान्नमुपदंशादिसंयुतम्
शुद्धाभिः पुष्पमालाभिः पत्रच्छेदैरथार्चयेत् ४२७
हेमपट्टैश्च मकुटैः पर्णैर्हेमविनिर्मितैः
हेमदूर्वाङ्कुरैर्हेमलक्ष्मीपुष्पैरनेकशः ४२८
भूषयेच्चन्द्रखण्डेन हेमपुष्पैरनेकशः
त्रिसरेणोत्तरीयेण कटिसूत्रेण साधकः ४२९
हैमेन कृत्तिवासेन हैमवस्त्रेण चैव हि
अन्यैर्मकुटपुष्पाद्यैर्गोलकैर्हेमनिर्मितैः ४३०
भूषयेच्च यथान्यायं रत्नैर्नानाविधैरपि
माणिक्यमर्कवारे स्याच्चन्द्रवारे तु मौक्तिकम् ४३१
कुजवारे प्रबालं स्याद्बुधे मरकतं भवेत्
गुरौ तु पुष्परागं स्याच्छुक्रे वज्रमिति स्मृतम् ४३२
इन्द्रनीलं च सौरे स्यात्सर्वाण्येतानि यानि च
सर्ववारेषु योग्यानि भूषणानां विधिर्मतः ४३३
दत्वाऽजातेन पाद्यं तु पादयोस्तन्मुखेषु च
आचामान्ते च मूर्धादौ शिरस्यर्घ्यं प्रदापयेत् ४३४
पञ्चगव्याभिषेकादौ महाघण्टारवान्वितम्
उपस्नानसमायुक्तं धूपं वा विनिवेदयेत् ४३५
अवश्यमावृतान्ते स्यादुपस्नानं सधूपकम्
गापयेन्मन्त्रगानं वा वीणानादमथापि वा ४३६
वेदाध्ययनमन्यच्च शास्त्रपाठादिकञ्च यत्
तदूर्ध्वं गौडभाषाद्यैर्गानं धूपान्तमाचरेत् ४३७
ऊर्ध्वं द्राविडभाषाङ्गं गानं नृत्तयुतं तु वा
संस्कृतादनपभ्रंशं नानास्वरसमन्वितम् ४३८
यदष्टादशभाषोत्थं गानं वा परिकल्पयेत्

नानादेशप्रसूतं च नर्तनं परिकल्प्य च ४३९
पुष्पप्रतिसराद्यैश्च समन्ताल्लम्बयेदधः
निर्धूमज्वलदङ्गारपूर्णपात्रोदरे भृशम् ४४०
दह्यमानेन धूपेन धूपयेत्तदनन्तरम्
सुरूपां धीरनिर्घोषा घराटां वामेन पाणीना ४४१
वादयन् सर्वदा धूपमुत्क्षिपेदस्त्रचोदितम्
कपिलाघृतसंपूर्णैः कर्पूरागरुवर्तिभिः ४४२
अनिर्वाणप्रदीपैश्च चक्रतोरणदीपकैः
त्रिशूलदीपकाभिश्च दीपमालाभिरेव च ४४३
अन्यैर्नानाविधैर्दीपैर्ज्वालयेत्तु समन्ततः
गोदानं तिलदानं च स्वर्णदानं तथैव च ४४४
गवां तृणादिदानं च कुर्याल्लोकोपचारतः
प्रभूतैस्स्नेहसम्पूर्णैर्ज्वलद्भिर्दीपकैस्स्थिरैः ४४५
कुर्यादारात्रिकं पश्चात्सद्वर्त्या प्रतिबोधितैः
यथाङ्गं भमस्नाऽलभ्य तिलकैर्वा त्रिपुण्ड्रकैः ४४६
धूपे दीपेऽथ नैवेद्ये बलावभ्यन्तरेऽपि च
सकृदाचमनं दत्वा कर्तव्यं कर्म चोत्तरम् ४४७
प्रणम्याध्येष्य लब्धाज्ञो बहिरावरणं यजेत्
ईशानं कर्णिकायां तु पूजयेत्कुसुमादिभिः ४४८
पुरुषं पूर्वपत्रे तु अघोरं दक्षिणे यजेत्
वाममुत्तरपत्रे तु सद्यं पश्चिमपत्रतः ४४९
विन्यसेत्पञ्चपत्राणि पञ्चवक्त्रयुतानि च
बाहुभिर्दशभिश्चैव शशाङ्कमकुटैस्सह ४५०
ध्यातव्यानि स्वरूपाणि वरायुधधराणि च
अग्नीशरक्षोवायव्य चतुर्दिक्षु गतं यजेत् ४५१
हृच्छिरश्शूलिकावर्म नेत्रमस्त्रं यथाक्रमम्

हृदयं चन्द्रवर्णाभं शिरो गोरोचनप्रभम् ४५२
तटिज्ज्वलनसंकाशां शिखां सम्यग्विचिन्तयेत्
आधूम्रं कवचं न्यस्येदस्त्रं कपिलवर्णकम् ४५३
ज्योतीरूपप्रकाशं च नेत्रं मध्यगतं स्मरेत्
पञ्चवक्त्रयुताः सर्वे दशबाह्विन्दुभूषिताः ४५४
नानाभरणसंयुक्ताः नानास्रग्गन्धभूषिताः
द्विरष्टवत्सराकारास्सुरूपाः स्थिरयौवनाः ४५५
प्रसन्नवदनास्सौम्यास्त्रिणेत्राः स्वस्तिकासनाः
मूर्धादिभ्यो हृदादिभ्यस्त्वानेतव्याः प्रभोरिमे ४५६
ईशानं नेत्रमैशान्यामथवा साधको यजेत्
गर्भावरणमेवं तु पूजयेदभितो हरम् ४५७
स्थानेऽस्मिन्नथवा पूज्या वामाद्याश्शक्तयो नव
अङ्कारूढा प्रभोः पूज्या आदिशक्तिर्मनोन्मनी ४५८
आवाहनादिनैतानि स्वमन्त्रैः क्रमशोऽर्चयेत्
नावकुण्ठनमेतेषाममृतीकरणं विना ४५९
संस्काराष्टकमेवैतत्प्रत्येकं विहितं बुधैः
स्नपनं दीपक्लृप्तिश्च न पृथक् चाङ्गभावतः ४६०
विद्येश्वरा द्वितीये तु अनन्ताद्या यथाक्रमम्
अनन्तेशश्च सूक्ष्मश्च शिवोत्तमैकनेत्रकौ ४६१
एकरुद्रस्त्रिमूर्तिश्च श्रीकण्ठश्च शिखण्डिकः
एते देवाश्चतुर्वक्त्रा हरवद्दशबाहवः ४६२
खण्डेन्दुमौलयस्सौम्याः पद्मस्था विविधायुधाः
खड्गखेटधनुर्बाणकमण्डल्वक्षसूत्रिणः ४६३
वराभयकरोपेताः शूलपङ्कजपाणयः
युगान्तादित्यसंकाशास्संसृष्टौ शिवचोदिताः ४६४
अनन्तः पूर्वतः पूज्यस्सूक्ष्मं दक्षिणतो यजेत्

शिवोत्तमं तु वारुरयामेकनेत्रं तथोत्तरे ४६५
एकरुद्रं तथैशान्यां त्रिमूर्तिं चाग्निगोचरे
श्रीकरठं चैव नैर्ऋत्यां वायव्यां तु शिखरिडनम् ४६६
गरोश्वरास्तृतीये तु कुबेराशादितः क्रमात्
सिंहारूढाम्बिका त्र्यक्षा पीताभा दर्परोद्वहा ४६७
ऐशान्यां संस्थितश्चराडः शुद्धवैडूर्यसप्रभः
वैयाघ्रवसनस्त्र्यक्षः शूलदराडकुठारभृत् ४६८
वराभयकरश्चराडः चन्द्रखराडाहिभूषितः
नन्दिनं पूर्वदिग्भागे पद्मरागसमप्रभम् ४६९
त्रिनेत्रं शूलहस्तं च सौम्यं नागोपवीतिनम्
हरिताभं महाकालं शूलहस्तं त्रिलोचनम् ४७०
नागोपवीतिनं रौद्रमाग्नेय्यां दिशि पूजयेत्
गरोशो वामनाकारो गजवक्त्रस्स्वदन्तभृत् ४७१
मौलिकुम्भश्शूर्पकर्णः त्रितालकरपल्लवः
सलड्डुककुठाराक्षमालाहस्तस्त्रिलोचनः ४७२
बिसिनीपत्रसंकाशः पूज्यो वै यमदिक्स्थितः
वृषो वृषाकृतिस्त्र्यक्षः कुन्देन्दुतुहिनद्युतिः ४७३
आधारभूतो धर्मात्मा पूज्यो निर्ऋतिगोचरः
निर्मांसविग्रहो भृङ्गी श्वेतो वारुणदिग्गतः ४७४
षड्वक्त्रो बालवेषश्च द्वादशाक्षस्तथा भुजः
शक्तिखड्गपताकाब्जप्रासकुक्कुटदराडभृत् ४७५
वराभयधनुर्बाणमहापरशुमानपि
चतुर्भुजो द्विबाहुर्वा भवत्येकाननः श्रियै ४७६
शक्तिकुक्कुटहस्तस्तु वराभयसमन्वितः
वायव्यां विद्रुमाभासः पूजनीयः फलार्थिभिः ४७७
अथवाऽन्यप्रकारेण पूजनीया गरोश्वराः

देवी चैव तु चराडेशो महाकालो वृषस्तथा ४७८
नन्दीशश्च गणाध्यक्षो भृङ्गी च स्कन्द एव च
ध्यायेदेताननुद्विग्नः पद्मरागसमप्रभान् ४७९
लोकपालांश्चतुर्थे तु क्रमशः स्वस्वदिग्गतान्
द्विरदेन्द्रसमारूढं पीतवर्णं तु वज्रिणम् ४८०
सहस्राक्षं यजेदिन्द्रं पूर्वभागे व्यवस्थितम्
ज्वालामालावृतं शक्तिधरमग्निमजासनम् ४८१
महिषस्थं यमं कृष्णं दक्षिणे दराडपाणिनम्
नैर्ऋत्यां निर्ऋतिं नीलं गदाहस्तं नरासनम् ४८२
वारुणे वरुणं श्वेतं झषस्थं पाशहस्तकम्
शबलं ध्वजहस्तञ्च मृगस्थमनिलेऽनिलम् ४८३
खड्गहस्तं निधानस्थं कुबेरं पीतमुत्तरे
कपिलं शूलहस्तं च वृषारूढं त्रिलोचनम् ४८४
प्रसन्नवदनं हृष्टमीशानं शाङ्करे यजेत्
विष्णुं त्वधोगतं कृष्णं तार्क्ष्यस्थं चक्रपाणिनम् ४८५
ब्रह्माणमरुणाभं च हंसस्थं पद्महस्तकम्
ऊर्ध्वगं संयजेत्प्राज्ञः स्वस्वनामादिकाक्षरैः ४८६
पञ्चमे त्वस्त्रसंघातं पूजनीयं यथोदितम्
पूर्वभागे यजेद्वज्रं पीतवर्णं षडश्रकम् ४८७
अग्नौ शक्तिं सुरक्ताभां कृष्णं दराडं तु दक्षिणे
निर्ऋतौ नीलखड्गं तु श्वेतं पाशं तु वारुणे ४८८
चित्रध्वजं तु वायव्यां हेमाभामुत्तरे गदाम्
ऐशान्यां ज्वलितं शूलं चक्रमर्कसमप्रभम् ४८९
अधस्त्थं संयजेदब्जं श्वेतमूर्ध्वे विचक्षणः
पञ्चावरणपूजैवं समासात्परिकर्तिता ४९०
एकावरणपूजा स्यादङ्गैर्ब्रह्मभिरेव च

अथवा केवलैरङ्गैः केवलैर्ब्रह्मभिस्तु वा ४९१
ब्रह्माङ्गैर्लोकपैरस्त्रैर्भवेदावरणत्रयम्
हेतिभिस्सहितान् लोकपालानभ्यर्चयेत्तु वा ४९२
अथ ब्रह्माङ्गविद्येशमूर्त्यैकादशरुद्रकान्
यजेद् गदादिभिश्चैवमन्तरावरणक्रमात् ४९३
बाह्यावरणपूजा च परिवारविधौ विदुः
एवमावरणं पूज्य दद्यान्नैवेद्यमुत्तमम् ४९४
पञ्चवक्त्रेषु नैवेद्यमूर्ध्ववक्त्रेऽथवा पुनः
अङ्गानामपि सर्वेषां पृथङ्नैवेद्यमर्धतः ४९५
चरुपाकः प्रकर्तव्यः पृथक्पात्रेषु संभवे
पूतेष्वितरथैकस्मिन् हविष्यं मन्त्रसंस्कृतम् ४९६
बाह्यावरणदेवानां द्वाराध्यक्षपुरस्सरम्
यजनं गन्धपुष्पाद्यैः प्रत्येकं प्रविधीयते ४९७
भूतादिभ्यो बलिं दद्यादथ मन्त्रनिवेद्यके
तदन्ते नित्यहोमो वा प्रविश्याभ्यन्तरं पुनः ४९८
तृप्तावाचमनं दद्याद्धस्तोद्वर्तनपूर्वकम्
मुखवासञ्च ताम्बूलं देवयोग्यं प्रदापयेत् ४९९
श्रीमत्पञ्चमहाशब्ददर्पणच्छत्रचामरैः
गेयनृत्तजपस्तोत्रैस्तदा तमभिनन्दयेत् ५००
हृष्टं देव्या सहासीनं सदेशं शक्तिविग्रहम्
ध्यात्वा तच्छिरसि न्यस्येत् पवित्रं कर्मपूरकम् ५०१
प्रत्यहं वाङ्मनःकायव्यापारजनितादलम्
पतनात्त्रायते यस्मात्तस्मादेव पवित्रकम् ५०२
प्रकृतौ परमीभावं संपूर्त्यर्थमनन्तरम्
परमान्तिकमुच्चार्य प्रासादं पूर्ववन्न्यसेत् ५०३
प्ररोचनं तु कर्तव्यं मुद्रया प्रागुपात्तया

प्रार्थयित्वा जपं कुर्यादक्षसूत्रेण बुद्धिमान्  ५०४
अक्षाणामक्षकल्पानां संयमो यत्प्रसूयते
दृष्टादृष्टफलावाप्तेरक्षसूत्रं तदुच्यते  ५०५
अष्टोत्तरशतेनाऽथ तदर्धेन तदर्धतः
जपमाला प्रकर्तव्या संस्कृता शर्वशम्बरैः  ५०६
मध्यमानामिकाङ्गुष्ठकर्षणात्सिद्धिरुत्तमा
अङ्गुष्ठतर्जनीयोगान्मध्यमा सिद्धिरिष्यते  ५०७
कनिष्ठाङ्गुष्ठसंयोगात् सिद्धिरुक्ता कनीयसी
मूलाद्दशांशो ब्रह्माङ्गजपः कार्योऽत्र धीमता  ५०८
न विलम्बितमस्पष्टं न चास्वीकृतमद्रुतम्
असंख्यातं मनोभ्रान्त्या जपं कुर्याद्विचक्षणः  ५०९
नित्यादिकर्मभेदोक्तं जपं कृत्वा निवेदयेत्
साधकः साध्यसिध्यर्थं विरामायेतरो जनः  ५१०
चुलुकोदत्रयेणैव कुशपुष्पादिभिस्सह
ओं गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्  ५११
सिद्धिर्भवतु मे येन त्वत्प्रसादात्त्वयि स्थिते
यत्किञ्चित्कर्म हे देव सदा सुकृतदुष्कृतम्  ५१२
तन्मे शिवपदस्थस्य भुङ्क्ष्व क्षपय शङ्कर
शिवो दाता शिवो भोक्ता शिवस्सर्वमिदं जगत्  ५१३
शिवो यजति सर्वत्र यश्शिवस्सोऽहमेव तु
निवेद्यैवं स्वमात्मानं जपं पूजां च भक्तितः  ५१४
ध्यायंस्तिष्ठेच्छिवं पश्चाद्यथापूर्वमुदाहृतम्
स्तुत्वाऽनेकविधैः स्तोत्रैः प्रणिपत्य पुनः पुनः  ५१५
नित्याग्निकार्यं कुर्वीत नित्याग्नौ होममन्दिरे
पचनालयवह्न्याशाकुण्डे वह्निविधिक्रमात्  ५१६
नित्योत्सवं च कुर्वीत ताण्डवं तदनन्तरम्

ततो लिङ्गं समभ्यर्च्य गन्धपुष्पादिभिः क्रमात् ५१७
दद्यात्पराङ्मुखार्घ्यं च महामुद्रां प्रदर्शयेत्
संहारमुद्रयास्त्रेण देवानावरणस्थितान् ५१८
उत्थाप्य मूर्तिमन्त्रेण योजयेन्मूर्तिसंगतान्
हृन्मन्त्रानुगतं मूलमुच्चार्य करणोज्झितम् ५१९
सकलोपाधिनिर्मुक्तं यथा निष्कलता गतम्
शिवतत्त्वविभागेन चिन्तयेद् हृत्स्थितेन च ५२०
निरपेक्षो विसर्गोऽयं लिङ्गे साधारणो मतः
परिगृहीतलिङ्गे तु सापेक्षः प्राक् प्रदर्शितः ५२१
चललिङ्गेऽपि सापेक्षो नापेक्षस्थण्डिले सदा
सर्वत्राप्यनपेक्षस्तु प्रत्यहं तु विधीयते ५२२
ऐशान्यां पूजयेच्चण्डं गन्धपुष्पादिभिः क्रमात्
तस्मै समर्पयेत्सर्वं निर्माल्यं तत्प्रकीर्तितम् ५२३
लिङ्गमूर्धस्थमित्येके पिण्डिकायामथापरे
ऐशान्यां पाठकस्थं वा बाह्ये चण्डगृहेऽथवा ५२४
क्रोधांशः परमेशस्य चण्डेश इति कीर्तितः
नैवेद्यं गन्धपुष्पाद्यं द्रव्यं यज्जायते चिरात् ५२५
यन्माल्यमुपभुक्तं तन्निर्माल्यमभिधीयते
रजस्स्थण्डललिङ्गस्थं शिवभुक्तोज्झितं हि यत् ५२६
चण्डभोज्यं दुराधर्षं वर्जनीयं प्रयत्नतः
वितानच्छत्रमाल्यादि वस्त्रभूषणवाहनम् ५२७
गोभूहिपरयवासादि देवद्रव्यं तदुच्यते
तस्मादन्यदपि द्रव्यं शिवाय विनिवेदितम् ५२८
देवस्वं चण्डभोज्यं वा नात्मभोगाय कल्पयेत्
वितानदामसंस्पर्शः धूपामोदो न दूष्यते ५२९
शिवस्य दीपजालोकप्रेक्षादिरचना तथा

निरपेक्षं विसृज्यैशं लिङ्गं संशोध्य पूर्ववत्  ५३०
प्रणवे योगपीठे तु मूर्ति न्यस्य तदात्मिकाम्
पवित्रैस्सकलीकृत्य गायत्र्या पर्युपासयेत्  ५३१
अलङ्कृत्य ततश्शक्त्या भोगार्थं कुसुमादिभिः
वेदिकासहितं लिङ्गं क्षमस्वेति च वै वदेत्  ५३२
प्रक्षाल्यार्घ्यादिपात्राणि विन्यसेत् फलकादिके
प्रासादगर्भमुन्मृज्य त्रिभिर्गोमयगोलकैः  ५३३
चण्डभोज्यं बहिस्तस्मात् क्षिपेदुच्छिष्टभाजने
स्नानपानीयदुग्धाद्यैः यदि सिक्तो भवेत्तदा  ५३४
स्नायात्प्रक्षालयेद्वाथ नाभेरूर्ध्वमधस्तथा
आचम्य प्रयतो भूत्वा देवदेवं प्रणम्य च  ५३५
च्युतस्खलितशुध्यर्थमभ्यसेन्मन्त्रसंहिताम्
चललिङ्गेऽप्ययं न्यायो विहितो यज्ञमन्दिरे  ५३६
स्थण्डिले संहरेत्पूजां त्रिभिर्गोमयगोलकैः
पाणिपादौ च प्रक्षाल्याप्याचम्य विधिना ततः  ५३७
प्रणम्य दण्डवद्भूमौ क्षमस्वेति च वै वदेत्

इति कामिकाख्ये महातन्त्रे अर्चनविधिश्चतुर्थः पटलः

## अर्चनाङ्गविधिः

अर्चनाङ्गविधिं वक्ष्ये सन्ध्यालक्षणपूर्वकम्
भास्करोदयमारभ्य यावद्वै भास्करोदयः  १
सप्तार्धघटिकामानो यामोऽयं सन्धिरुच्यते
षष्ट्युच्छ्वासो भवेत्प्राणष्षट्प्राणो घटिका भवेत्  २
घटिकाषष्ट्यहोरात्रमष्टसन्ध्यं तदुच्यते
अष्टसन्ध्यासु या पूजा सा भवेदुत्तमोत्तमा  ३
सप्तषड्भूतवेदाग्नियुग्मेन्दुप्रहरेषु च

यामार्धकालसंवृत्ता पूजा नवविधा भवेत् ४
पूजारम्भात्तु नृत्तान्तं कुर्यात्सन्ध्यावसानकम्
संध्यातिक्रमणाद्दोषो न्यूनायां तु न दोषभाक् ५
गुरूपचारपूजायां विधिरेषः प्रकीर्तितः
घटिकाद्वितयं स्नाने घटिकैकार्चने भवेत् ६
घटिकार्धं निवेद्यार्थं बलिदानं तु तत्समम्
नित्याग्निकार्यमर्धं च नित्योत्सवे द्विनाडिका ७
घटिकैका तु नृत्तार्थं काल एषः प्रकीर्तितः
एवं कालविधिः प्रोक्तो महासन्ध्यात्रयस्य च ८
लघूपचारे सन्ध्यायां हीनं चेत्तु न दूषकम्
यथासम्भवकाले तु यथासम्भवनाडिका ९
आत्मार्थयजनं कुर्याद्यथाशक्त्यनुरोधतः
अरुणोदयवेलायां प्रागेव प्रहरार्धतः १०
कुर्यात्पञ्चमहाशब्दं सर्वप्राणितमोपहम्
तत्काले पूजयेद्देवं सर्वकामार्थसिद्धये ११
सायंकालेऽर्चनान्ते स्याद्यजनं चार्धयामके
भूरिभिर्गन्धकुसुमैर्गन्धैः परिमलैरपि १२
धूपैरामोदबहुलैर्नैवेद्यैर्लौकिकादिभिः
खट्वारूढामुमां देवीमलङ्कृत्य विशेषतः १३
नृत्तैर्गेयैश्च विविधैर्देवपार्श्वं प्रवेशयेत्
पुत्रपौत्रविवृद्ध्यर्थं पूजयेच्छङ्करं ततः १४
वौषडन्तैश्च मध्याह्ने सन्ध्यन्ते शिवमर्चयेत्
नृपतेरायुरारोग्यसिद्धये विजयाय च १५
एवं प्रतिदिनं पूजा कर्तव्या विभवे सति
पूजकस्सन्धिपूर्वे तु कुर्यात्स्नानादिकं विधिम् १६
स्नानान्ते शुद्धवस्त्राद्यैः पर्यष्टिपरिचारकैः

यजनार्थं तु सम्भाराः सम्भ्रियन्तां जलादयः १७
गङ्गादिसिन्धुसम्भूतं पुष्करिरयादिसम्भवम्
सुस्वादु वासितं पुष्पैः नवमृत्कुम्भपूरितम् १८
शुद्धवस्त्रस्रुतं शुद्धमेलाद्यामोदसंयुतम् १९
एलोशीरफलत्रयेण सहिताः कर्पूरसत्कुङ्कुमैः
श्रीखरडागरुपत्रकैश्च कुसुमैरामोदिभिस्संयुताः ।
आपो मज्जनकर्मणि प्रणिहिताश्शम्भोर्यथालाभतः
प्रोक्तद्रव्यगणेषु लब्धमिह यत्तद्ग्राह्यमाढ्येतरैः २०
कल्पयेदभिषेकार्थं वारि संसारवारि यत्
भारादिनवभारान्तं नवलिङ्गेऽधमाधमे २१
एकभारविवृद्ध्या तु भेदोऽत्र नवसंख्यया
अष्टद्रोणैरथाद्भिर्वा द्विगुणैस्त्रिगुणैस्तु वा २२
स्वायम्भुबाणलिङ्गादौ प्रोक्तेषूक्तं हि वाञ्छितम्
स्नानोदकप्रमाणं स्यादात्मार्थे हि यथेच्छया २३
पञ्चामृतं पञ्चगव्यं कुशाम्बु कलशोदकम्
स्नपनार्थाय कथितप्रमाणेन प्रकल्पयेत् २४
सौवर्णमूर्णसूत्रोत्थं कार्पासोऽथ दुकूलकम्
देवालङ्कारयोग्येन प्रमाणेन समन्वितम् २५
देवांशुमुत्तमं प्रोक्तं मध्यमं क्षौममुच्यते
कार्पासतन्तुजं वस्त्रमधमं परिकीर्तितम् २६
अर्कहस्तायतं वाऽथ विस्तारं स्याद्द्विहस्तकम्
मनोरमं तु सुश्लक्ष्णं विशिष्टं वस्त्रमुच्यते २७
विस्ताराष्टगुणायामं सदशं तु सलक्षणम्
आखुदष्टाग्निदग्धं च केशविद्धं च वर्जयेत् २८
वस्त्रमेवंविधं तच्च गृह्णीयादुपयोगि यत्
कुङ्कुमं चन्दनं दूर्वा सिद्धार्थोशीरकं तथा २९

तिलेनैव समायुक्तं पाद्यं यद्वोत्तमं भवेत्
सिद्धार्थोशीरकं दूर्वायुक्तं मध्यममुच्यते ३०
उशीरं चन्दनोपेतमधमं पाद्यमुच्यते
एलालवङ्गकर्पूरवरालफलसंयुतम् ३१
आप आचमनीयार्थमुशीरमयचन्दनैः
फलत्रयं च कर्पूरं त्रुटी पत्रं द्विजोत्तमाः ३२
आचामे तु प्रयोक्तव्यमेलोशीरयुतं तु वा
आपः क्षीरकुशाग्राणि यवसिद्धार्थतण्डुलैः ३३
तिलैर्व्रीहिसमायुक्तमर्घ्यमष्टाङ्गमुच्यते
आपः क्षीरकुशाग्राणि तण्डुलास्सुमनस्तिलाः ३४
अर्घ्योऽष्टाङ्ग इति प्रोक्तो यवैस्सिद्धार्थकैस्सह
तण्डुलव्रीहिसिद्धार्थतिलोदकमथापि वा ३५
अर्घ्यं पुष्पजलोपेतमथवा समुदाहृतम्
चन्दनं चागरुञ्चैव कुङ्कुमं गन्ध उच्यते ३६
एकं द्वयं त्रयं वापि कर्पूरेण चतुष्टायम्
काश्मीरगन्धकर्पूरचन्दनैर्वा प्रकल्पयेत् ३७
प्रत्येकं निष्कमात्रं वा तदर्धं वा तदर्धकम्
उत्तमोत्तमलिङ्गादावाफलादि फलावधि ३८
अतीव बलहीनानां यथालाभं प्रमाणतः
एवं पाद्यादिवस्तूनां प्रमाणं परिकीर्तितम् ३९
पुष्पाणां लक्षणं वक्ष्ये समासान्मुनिपुङ्गवाः
श्वेतपद्मं च पुन्नागं शङ्खपुष्पं च मल्लिका ४०
नन्द्यावर्तं श्रियावर्तं मन्दारं बहुकर्णिका
द्विकर्णि कुरवं जाती लक्ष्मीश्च वकुलं तथा ४१
श्वेतार्कं मालतीद्रोणमतसीश्वेतलोध्रकम्
विषकासीसकुसुमं भद्रा च महती च सा ४२

व्याघ्री चम्पकपुष्पं च करवीरमशोकजम्
हालिका शतपत्रं च उन्मत्तं कुशपुष्पकम् ४३
एतानि श्वेतपुष्पाणि मुख्यामुख्यत्वभाञ्जि हि
रक्तपद्मं पलाशं च रक्तोत्पलं च पाटली ४४
मौसली चैव धुत्तूरं बृहती करवीरजम्
व्याघ्री च रक्तमन्दारः पट्टिका वैजिका तथा ४५
मुनिपुष्पं च तद्रक्तं रक्तान्येतानि निर्दिशेत्
शोनक्यं कर्णिकारं च चम्पकं हेमधुत्तरम् ४६
आरग्वधं च कोरण्डं शैरीषं गिरिकर्णिका
एतानि पीतपुष्पाणि कृष्णे नीलोत्पलं वरम् ४७
बिल्वपत्रं तपस्वी च महाभद्रा च धातकी
अपामार्गं कुशा दूर्वाः पञ्चबिल्वाः शमी तथा ४८
तुलसी चन्द्रपो दान्तः जम्बुको नागनन्दिका
एकपत्रारविन्दं च विष्णुक्रान्तिस्तथैव च ४९
सहकारस्तथा कृष्णतुलसी गन्धपत्रिका
एवमादीनि पत्राणि पुत्रवृद्धिकराणि च ५०
उशीरह्रीबेरादिकुलानि शुभदानि हि
अर्कपुष्पसहस्रेभ्यो बकपुष्पं विशिष्यते ५१
बकपुष्पसहस्रेभ्यो हेधुमत्तूरकं वरम्
धुत्तूरकसहस्रेभ्यः शमीपुष्पं विशिष्यते ५२
सर्वासां पुष्पजातीनां श्रीमन्नीलोत्पलं वरम्
करवीरसमा ज्ञेया जाती विजयपाटली ५३
श्वेतमन्दारकुसुमं शतपत्रं च तत्समम्
नागचम्पकपुन्नागा धुत्तूरकसमाः स्मृताः ५४
केतकी चातिमुक्तं च यूथी च नवमल्लिका
शिरीषसर्जबन्धूककुसुमानि विसर्जयेत् ५५

अङ्कोलपत्रकुसुमं त्यजेन्नृपतरूद्भवम्
वैभीतकानि पत्राणि कुसुमानि विवर्जयेत् ५६
निर्गन्धान्युग्रगन्धानि कुसुमानि विवर्जयेत्
गन्धवन्त्यपवित्राणि कुसुमानि विवर्जयेत् ५७
गन्धहीनमपि ग्राह्यं पवित्रं यत्कुशादिकम्
कनकानि कदम्बानि रात्रौ देयानि शङ्करे ५८
दिवाशेषाणि पुष्पाणि दिवारात्रौ च मल्लिका
प्रहरार्धे स्मृता जाती करवीरमहर्निशम् ५९
केशकीटापविद्धानि शीर्णपर्युषितानि च
स्वयं पतितपुष्पाणि त्यजेदुपहतानि च ६०
मुकुलैर्नार्चयेद्देवमपक्वं न निवेदयेत्
अलाभेऽपीह पुष्पाणां पत्राण्यपि निवेदयेत् ६१
पत्राणामप्यलाभे तु फलान्यपि निवेदयेत्
फलानामप्यलाभे तु तृणगुल्मौषधीरपि ६२
ओषधीनामलाभे तु भक्त्या भवति पूजितः
प्रत्येकमुक्तपुष्पाणां दशसौवर्णकं फलम् ६३
स्वर्णाद्दशगुणं रत्नं माणिक्यादिनवोद्भवम्
स्रग्ग्रन्थितेषु तेष्वेव द्विगुणं फलमश्नुते ६४
आत्मारामोद्भवैः पुष्पैरथवा वनसंभवैः
द्रव्यक्रीतैः प्रसूनाद्यैरर्चयेदन्यथा न च ६५
कृष्णागरुर्भवेदेको निर्यासो द्विगुणो भवेत्
त्रिगुणं चन्दनं प्रोक्तमीषत्कर्पूरमिश्रितम् ६६
शीतारिर्नाम धूपोऽहं विख्यातो मधुसंप्लुतः
एकद्वित्रिचतुष्पञ्चनखचन्दनपायसैः ६७
तुरुष्कसंहितञ्चैव क्रमेण परिवर्धितम्
शीतारिधूपमेवं स्यान्मधुना च परिप्लुतम् ६८

यद्वा तुरुष्ककर्पूरनागरागरुचन्दनैः
मुरामांसिसितामिश्रं धूपं दद्यान्मधुप्लुतम् ६९
उशीरचन्दनोपेतं लघुयुक्तमधुष्लुतम्
मध्यमं धूपमाख्यातमुशीरादि शिवप्रियम् ७०
गुग्गुलुर्घृतसंयुक्तस्त्वधमो धूप उच्यते
केवलं चागरुर्वापि धूपार्थं महिषाक्षि वा ७१
एकादिदशपर्यन्तं दीपाः स्युरधमाधमाः
शतादिः स्युस्सहस्रान्ता अयुतं लक्षसीमकाः ७२
प्रयुताः कोटिसंख्याताश्चायुताद्यर्बुदान्तकाः
दीपाः स्युरेकसंख्यायां रात्रौ तद्द्विगुणं भवेत् ७३
अनिर्वाणप्रदीपास्स्युस्तदर्धाः स्युस्तदर्धकाः
एवं संख्या प्रदीपादौ संख्यैषा परिकीर्तिता ७४
कपिलागोघृतेनाऽथ दीपः सात्त्विक उच्यते
राजसं तिलतैलेन मिश्रमाजेन सर्पिषा ७५
एकद्वित्र्यङ्गुला ज्वालाः श्रेष्ठमध्याधमाः स्मृताः
तामसस्तु भवेद्दीपो माहिषेण तु सर्पिषा ७६
वृक्षबीजोद्भवैः स्नेहैर्दीपः पैशाच उच्यते
तामसश्चापि पैशाचो दीपो योग्येतरः स्मृतः ७७
हविष्यविधिसंसिद्धनैवेद्यं बहुधा स्मृतम्
होमस्तद्विधिसंसिधिर्द्रव्यैर्भूतबलिस्तथा ७८
नित्योत्सवं तथा नित्यविधिना संप्रकल्पयेत्
ताण्डवं ताण्डवाध्याये नृत्तगेयादिलक्षणैः ७९
वक्ष्यामि तत्प्रभेदं तु तदा त्वेवावधार्यते
इत्थं भूतार्चनाङ्गैश्शिवयजनविधिं देहभृद्यः करोति
श्रद्धायुक्तस्त्रिलोक्यां सुरवरमहितस्स्वामितो द्योतिताशः
यास्यत्यन्ते यथावच्छिवपुरमखिलोत्पत्तिसंसारहेतु-

ज्ञानानन्दस्वभावो दृढतरमलमायादिबन्धैर्विमुक्तः ८०
इति कामिकाख्ये महातन्त्रे क्रियापादे अर्चनाङ्गविधिः पञ्चमः पटलः

## नैवेद्यविधिः

अथातः संप्रवक्ष्यामि नैवेद्यविधिमुत्तमम्
भक्त्या वित्तानुसारेण नैवेद्यं तु प्रकल्पयेत् १
पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम्
अनिवेद्य न भुञ्जीत भगवन्तं सदाशिवम् २
अपूपकाद्यं यद्द्रव्यं भोज्यं दत्वा शिवस्य तु
वर्धते तस्य तद्धान्यं फलपुष्पादयस्तथा ३
अदत्वा तु हरस्याथ भुक्तं तत्क्षीयते धनम्
अल्पे महति वा तुल्यं फलमाढ्यदरिद्रयोः ४
यथाशक्ति प्रकर्तव्यं भक्तिरेवात्र कारणम्
दत्वा शिवस्य नैवेद्यं कल्याणं कारयेद्बुधः ५
अदत्वा तु कृतं यत्तु कल्याणमशुभाय वै
कल्याणं देवकल्याणे कृतं चापि विनश्यति ६
तस्मान्महोत्सवे सूत्रारोपणे स्थापनादिके
कल्याणं वर्जयेद्धीमान् चूडोद्वाहादिकं स्वकम् ७
शालीनां तण्डुलं श्रेष्ठं यववेणवादिमध्यमम्
व्रीहीणामवशिष्टानां तण्डुलन्त्वधमं भवेत् ८
सिततण्डुलका ये च ते सर्वे शालयः स्मृताः
इतरे व्रीहयः प्रोक्ताः फलं तेषां पृथक्पृथक् ९
हेमशाली महाशाली रत्नशाली तथैव च
सितशाल्यतिरक्ता च सौगन्धिश्चोत्तमा मता १०
वैणवश्च तथा शेषशालयश्चैव माधुरी
कुस्तुम्बरश्च नीवारो मध्यमाश्चेति कीर्तिताः ११

बिडालव्रीहि सामान्यं ईषत्कृष्णकषाष्टयः
तथा वै सूकरीव्रीहिर्ह्रस्ववक्त्री च कन्यसा १२
एतेषां तण्डुला श्रेष्ठा नैवेद्याय प्रभोर्मताः
यावन्तस्तण्डुलास्तत्र नैवेद्यपरिकल्पने १३
तावद्वर्षसहस्राणि शिवलोके महीयते
विशोष्य सूर्यकिरणैर्व्रीह्यादींश्छुद्धभूतले १४
संप्रोक्ष्योलूखले व्रीहीन्निक्षिपेदस्त्रमन्त्रतः
मुसलं हृदयेनैव हन्यात्संगृह्य साधकः १५
त्रिधा च कुट्टनं कुर्यात्पञ्चधा नवधाऽथवा
चातुर्वर्णोद्भवस्त्रीभिः पुरुषैर्वाऽथ घातयेत् १६
शूपादिकरणैस्तेषां तुषकम्बादि वर्जयेत्
द्विशतैः पञ्चविंशत्या व्रीहिभिः पूरितं तु यत् १७
शुक्तिमात्रमिति ज्ञेयं मानं तेनैव कल्पयेत्
शुक्तिस्तलं प्रकूर्चञ्च प्रसृतिः कुडुपं तथा १८
तथा स्यादञ्जलिः प्रस्थः पात्रं चाढकशैवकौ
द्रोणं खारी क्रमात्प्रोक्तं मानमेवं प्रकीर्तितम् १९
द्विगुञ्जं माषकं विद्याद्धरणं माषविंशतिः
धरणाष्टौ पलञ्चैव पलं मुष्टिरिहोच्यते २०
तच्चतुर्गुणितं प्रस्थं भवेत्पात्रादि पूर्ववत्
भारं खारित्रयं प्रोक्तं मानमेवं प्रकीर्तितम् २१
नित्यं नैमित्तिकं काम्यं नैवेद्यं त्रिविधं भवेत्
अष्टाङ्गेषु चतुर्वह्निकरेन्दुद्रोणनिर्मितम् २२
शिवाढकप्रमाणं तु नित्ये तु नवधा हविः
तण्डुलैराढकाद्धीनैर्नैवेद्यं न प्रकल्पयेत् २३
चरुः प्रस्थद्वयं प्रोक्तं हविराढकमुच्यते
प्रस्थं कुडुपसंयुक्तं पैशाचाशनमुच्यते २४

सकलानां तु नैवेद्यं भवेत्प्रस्थद्वयाधिकम्
आढकद्वयमारभ्य तद्वृद्ध्या नवसंख्यया २५
नैमित्तिकं हविर्मानं लिङ्गेषु त्रिविधेषु च
यावत्प्रार्थितमानं तु तावत्काम्यहविर्भवेत् २६
स्थाली प्रतिदिनं शुद्धा पक्षमासावसानिका
श्रेष्ठमध्याधमास्तद्वद्विधिनाऽद्य विधीयते २७
सुवर्णतारताम्रादि पात्रं शुद्धलयान्तिकम्
नवमृद्भाण्डकं वाऽपि प्रतिसन्ध्यं प्रकल्पयेत् २८
प्रागुक्तविधिना पूर्वं स्नात्वाऽथ परिचारकाः
शुक्लवस्त्रधराश्चैव शुक्लयज्ञोपवीतिनः २९
पवित्रपाणयः कुर्युश्चरुपाकं यथा तथा
वस्त्रपूतैश्च तोयैश्च जलद्रोणीं प्रपूरयेत् ३०
पात्रशुद्धिं ततः कृत्वा क्षालयेत्तण्डुलान् हृदा
जलेनैव तु षट्कृत्वः निष्पीड्य च मुहुर्मुहुः ३१
षडङ्गैः क्षालनं कृत्वा सद्येन प्रक्षिपेज्जले
ज्ञात्वा तु युक्तितः सम्यक् अध्यर्धं जलमेव वा ३२
स्थालीं मध्यमयीं ध्यात्वा दर्भान् कण्ठे तु बन्धयेत्
प्रलिप्ते गोमयाद्यैस्तु प्रोक्षितेऽत्र महानसे ३३
धर्माधर्मभुजां चुल्लीं तण्डुलेनार्चयेद्धृदा
उद्धृत्य वामदेवेन रोपयेद्धृदयेन तु ३४
विन्यस्याग्निमघोरेण अस्त्रेणाग्निं प्रदीपयेत्
पिपीलिकादिसञ्जुष्टैः कोटरक्रिमिसंयुतैः ३५
विस्फुलिङ्गयुतैश्चापि काष्ठैरग्निं न दीपयेत्
धूमगन्धमतिक्लिन्नमतिपक्वञ्च शीतलम् ३६
केशकीटापविद्धं च त्यजेत्पर्युषितं तथा
एवमुक्तं तु शुद्धान्नं पायसं त्वधुनोच्यते ३७

तण्डुलादि्द्वगुणं क्षीरं मुद्गं स्यात्तण्डुलार्धकम्
अलाभेऽर्धं तदर्धं वा शेषं तोयैः प्रपूरयेत्  ३८
पाचितं पायसं प्रोक्तं गुलान्नमधुनोच्यते
पायसं पूर्ववत्कृत्वा चतुर्भागं गुलं क्षिपेत्  ३९
गुलार्धं प्रक्षिपेदाज्यं तस्यार्धं वा तदर्धकम्
कदलीफलसंयुक्तं गुलान्नमिति कीर्तितम्  ४०
तण्डुलार्धं तिलं ज्ञेयं कृसरान्नं प्रशस्यते
अलामेऽर्धं तदर्धं वा मुद्गान्नमधुनोच्यते  ४१
तण्डुलार्धं तदर्ध्वं वा मुद्गं मुद्गान्नमुच्यते
एतेषामपि सर्वेषां यथालाभमथापि वा  ४२
मरीचं रजनीयुक्तं जीरकं सर्षपं तथा
आलोड्य पाचितं ह्येतत् हरिद्रान्नं प्रकीर्तितम्  ४३
हविषां लक्षणं प्रोक्तं प्रवक्ष्याम्युपदंशकान्
मुद्गमाषकुलुत्थांश्च शिम्बा निष्पावमेव च  ४४
राजमाषाढकीं चैव वितुषं सतुषं तथा
कूश्माण्डं पनसालाबु कालिङ्गं बृहतीद्वयम्  ४५
त्रपुषं कर्करीं चैव सतुषं वितुषं तथा
कदली कारवी व्याघ्री आम्रमुर्वारुकं तथा  ४६
वल्लीमूलं तथा कन्दं मूलमन्यत्र संयुतम्
एकैकमुपदंशानां प्रस्थस्यैकपलं भवेत्  ४७
प्रत्यग्राणि पवित्राणि सर्वदोषोज्झितानि हि
घृष्टं घृतेन संयुक्तं नालिकेरफलादिभिः  ४८
मरीचजीरकाद्यैस्तु संस्कृतं तत्प्रशस्यते
लवणाज्ययुतानि स्युरुपदंशानि तानि हि  ४९
आम्लसंस्कारयुक्तानि मरीचादियुतानि च
विंशत्पलं स्याल्लवणं प्रस्थं प्रस्थं समीरितम्  ५०

त्रिचतुर्थांशमानेन मरीचः परिकीर्तितः
सर्पिषो द्विगुणं मानं मरीचात्तु प्रशस्यते ५१
कलांशो मुद्गभिन्नस्तु तदर्धं वा तु तण्डुलान्
मुद्गभिन्नं समं प्रोक्तमधिकं गुणमेव वा ५२
कल्कसंस्कारयुक्तानि मरीचादियुतानि च
सिद्धार्थकल्कयुक्तानि रसवन्ति च पाचयेत् ५३
तान्येवापूपखण्डैश्च संस्कृतानि च कानिचित्
कुलुत्थधान्यचूर्णं च मरीचं पेषितं क्रमाम् ५४
निक्षिप्य मथिते श्लक्ष्णं पाचयेन्मृदुवह्निना
गुलेन सह संयोज्य रसवन्ति फलानि च ५५
एवं तु पाचयेत् सूपमन्यदेवंविधं तु यत्
विविधानि च पूपानि योग्यद्रव्यैः कृतानि च ५६
शङ्खध्वनिसमायुक्तं छत्रदीपादिसंयुतम्
नैवेद्यमुपदंशाद्यं सुसिद्धमवतारयेत् ५७
प्रलिप्ते भूतले शुद्धे पञ्चचूर्णैरलङ्कृते
तप्ताभिघारमाज्येन पवित्रैः परिकल्पयेत् ५८
शीताभिघारमङ्गैस्तु घृतेनैवाहुतित्रयम्
पात्राणि शोधयेत्तोयैस्त्रिपुण्ड्रं परिकल्पयेत् ५९
त्रिपाद्युपरि विन्यस्य शुद्धवस्त्रावृतानि च
शङ्खध्वनिसमायुक्तं छत्रदीपादिसंयुतम् ६०
निरुद्धावृतकक्ष्यास्थजने मार्गेऽम्भसा क्षिपेत्
पात्राण्युद्धृत्य सर्वाणि विन्यसेन्मुखमण्डपे ६१
पानीयमप्यनेनैव स्थानात् संग्राहयेत् क्रमात्
करणाध्यायसंसिद्धलक्षणैर्लक्षितेषु च ६२
स्थलिकादिषु वा शुद्धकदलीपत्रकादिषु
न्यस्तेषु शुद्धवस्त्रोर्ध्वे दर्व्या लक्षणयुक्तया ६३

न्यसेत् सम्पूर्णचन्द्राभमोमिति त्र्यक्षरं जपेत्
उपदंशानि सर्वाणि नैवेद्योपरि विन्यसेत्  ६४
प्रत्यग्रगोघृतं खण्डशर्करारसवत्फलम्
बालचूतफलञ्चापि दध्यादिकमनिन्दितम्  ६५
शिवाग्रे मण्डपे शुद्धे शुभ्रवस्त्रादिविस्तृते
त्रिपाद्युपरि विन्यस्य स्थलिकादिगतं हविः  ६६
संप्रोक्ष्य हृदयेनैव शोधयित्वा तु हेतिना
अमृतीकृत्य गोस्तन्या नैवेद्ये कुसुमं न्यसेत्  ६८
निवेद्य दक्षिणे हस्ते दद्यात् पानीयमुत्तमम्
अन्तरावृतिसंस्थानां देवानां तु पृथक्पृथक्  ६९
कृत्वा हविश्चतुर्थांशमूर्ध्वांशं तु शिवाय च
तदधस्त्वग्निकार्यार्थमधस्ताद्बलिकर्मणे  ७०
यदंशं पात्रसंश्लिष्टं पूजकाय प्रदापयेत्
अग्निकार्यावशिष्टं च बलिशिष्टं च यद्धविः  ७१
तत्सर्वं पूजकायैव प्रोक्तमत्र यथाऽधुना
नैवेद्यं तु प्रदातव्यं मनसा तदसम्भवे  ७२
बाह्यावरणदेवानां नैवेद्यं स्यात्पृथक्पृथक्
अभावे बलिदानं स्याद्द्वाराध्यक्षपुरस्सरम्  ७३
तद्बाह्ये भूतपीठेषु दिग्विदिक्स्थापितेषु च
रुद्रेभ्यः पूर्वतो दद्यान्मातृभ्यो दक्षिणे तथा  ७४
गणेभ्यः पश्चिमे भागे यक्षेभ्यश्चोत्तरे बलिम्
ग्रहेभ्यश्च तथैशान्यामसुरेभ्योऽग्निगोचरे  ७५
पालाश्यां पलभक्षेभ्यो नागेभ्यो वायुगोचरे
नक्षत्रराशिवर्गेभ्यस्तथा विश्वगणाय च  ७६
ऐशान्यां बलिदानं स्यात्तत्रैव क्षेत्रपालिने
वायुवारुणदिग्भागे क्षेत्रपालबलिं क्षिपेत्  ७७

एतेष्वष्टसु पीठेषु दिक्पालानां बलिं तु वा
प्रथमं द्वारपालानां भूतानां स्याद् द्वितीयकम् ७८
वृषादिबलिपीठान्तं दद्यादावरणक्रमात्
अष्ट द्विषट् द्विरष्टौ हि द्वात्रिंशत्परिचारकाः ७९
अन्तर्हारादिशालस्था दद्यात्तेषां पृथक्पृथक्
गणेशं तत्र संपूज्य सोपचारं विशेषतः ८०
सम्भवे सति सर्वेषां उपचारार्चनं भवेत्
ततः पूर्वस्थिते पीठे बलिं दद्याद्विशेषतः ८१
यक्षराक्षसपैशाचभूतगन्धर्वकिन्नराः
पितृदानवनागाश्च ब्रह्माद्यैशानमन्तकम् ८२
प्रणवादिचतुर्थ्यन्तं स्वनामपदमध्यगम्
स्वाहान्तं बलिनिर्देशं सर्वेभ्य इति योजयेत् ८३
बलिदानसमायुक्तं दद्याद्भूतबलिं ततः
सर्वदिग्द्वारसम्पन्ने त्रिद्व्येकाशावकाशके ८४
इन्द्रादीशानपर्यन्तं बलिं दद्यात्स्वकर्मसु
ततो गर्भगृहं गत्वा दद्यादाचमनीयकम् ८५
निर्माल्यं तु समानीय चण्डेशाय निवेदयेत्
येन निर्मलतां याति निर्माल्यमिति कीर्त्यते ८६
चण्डस्याचमनं दद्यान्निर्माल्यं तु विसर्जयेत्
अगाधेऽम्भसि वाऽग्नौ वा गवां वाऽपि निवेदयेत् ८७
कायस्य मलबन्धत्वान्निर्माल्यं तु न भोजयेत्
अग्निकार्यं ततः कुर्यात्कुण्डसंस्कारपूर्वकम् ८८
इति कामिकाख्ये महातन्त्रे नैवेद्यविधिः षष्ठः पटलः

## कुण्डलक्षणविधिः

अथाऽग्निकार्यसिद्ध्यर्थं कुण्डलक्षणमुच्यते

कुण्डं वा स्थण्डिलं वाऽपि वह्नेरायतनं द्विधा १
सूत्रं पूर्वापरं पूर्वं न्यसेद्दिक्साधनक्रमात्
तेनैव साधयेत्सूत्रं दक्षिणोत्तरगं क्रमात् २
ततः क्षेत्रार्धमानानां दिक्सूत्राद्विदिशां गृहाः
चतुरश्रं भवेत्कुण्डं वृत्तं वा हस्तनिर्मितम् ३
नित्यनैमित्तिके चैव काम्ये कल्पप्रचोदितम्
इष्टकाभिः सुपक्वाभिरपक्वाभिरसम्भवे ४
कुर्यात्कुण्डं तु शास्त्रोक्तं मन्त्रहोमानुरूपतः
मन्त्राणां वारुणानां च कुम्भाकारं विधीयते ५
वायव्यानां पताकेव माहेन्द्राणां तु वज्रकम्
सप्तजिह्वाकृति प्रोक्तमाग्नेयानां गुरूत्तमैः ६
मध्यमोत्तमवीर्याणां चतुरश्रं फलप्रदम्
त्रिकोणमल्पवीर्याणां स्त्रीरूपाणां भगाकृतिः ७
अर्धचन्द्रं तु रौद्राणां सौम्यानां वृत्तमेव हि
पञ्चकोणं तु मूर्तीनां किन्नराणां तथैव च ८
विद्याविद्येश्वराणां तु पद्माकारमिहोच्यते
ऐन्द्र्यां स्तम्भे चतुष्कोणमग्नौ तापे भगाकृतिः ९
चन्द्रार्धं मारणे याम्ये निर्ऋतौ द्व्यष्टकोणकम्
वारुण्यां शान्तिके वृत्तं षडश्रोच्चाटनेऽनिले १०
उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टाश्रमुक्तिदम्
शतार्धशतहोमे तु विस्तारं द्विगुणं क्रमात् ११
सहस्रायुतहोमे तु हस्तं हस्तद्वयं क्रमात्
भवेल्लक्षयुते होमे चतुर्हस्तं च षट्करम् १२
कोटिहोमेऽष्टहस्तं स्यात्तस्मादूर्ध्वमधो न हि
हस्तमात्रं भवेत्कुण्डं लिङ्गे कन्यसके न्यसेत् १३
द्व्यङ्गुलार्धं तयोर्वृद्धिः प्रान्ते द्वित्र्यंशतः क्रमात्

पञ्चमांशं पुरो न्यस्त्वा कोणवेदांशमानतः १४
भ्रमादश्वत्थपत्राभं कुण्डमाग्नेयमुच्यते
चतुरश्रे गृहे भक्ते त्यक्त्वाऽद्यन्ते तदंशके १५
मध्यसप्तांशमानेन कुण्डं खण्डेन्दुवद्भ्रमात्
इष्टदिक्षु न्यसेत्पश्चादुत्तरे सूत्रपातनम् १६
त्रिभागवृद्धितो मत्स्यैस्त्रिभिर्नैशाचरं भवेत्
कण्ठार्धाष्टांशसन्त्यागात् वृत्तकुण्डमिहोदितम् १७
षड्भागवृद्धितोमत्स्यैश्चतुर्भिस्स्यात् षडश्रकम्
चतुरश्रेऽष्टभागे तु कर्णिका स्याद्द्विभागतः १८
तद्बहिस्त्वेकभागेन केसराणि प्रकल्पयेत्
तृतीये दलमध्यानि तुरीये दलकोटयः १९
भ्रमणात्पद्मकुण्डं स्याद्दलाग्रं दर्शयेद्बहिः
वृत्तकुण्डसमं चान्यदथवान्यप्रकारतः २०
वृत्तकुण्डं पुरा कृत्वा चतुर्धा मेखलां भजेत्
उत्सेधं च तथा कृत्वा कर्णिका सार्धतो भवेत् २१
अवशिष्टं दलं वेददलमष्टदलं तु वा
क्षेत्रार्धदशमं भागं चतुर्दिक्षु तदुत्तरे २२
विन्यसेत्तत्प्रमाणेन तुर्याश्रमपरं नयेत्
तस्य कर्णप्रमाणेन तद्भुजांश्चापि लाञ्छयेत् २३
तत्राष्टसूत्रसंयोगादष्टाश्रं कुण्डमुच्यते
विस्तारसदृशः खातो मेखलाशेष एव वा २४
कण्ठोऽङ्गुष्ठमितो हस्तो यववृद्ध्या द्विहस्ततः
कण्ठमानमिदं प्रोक्तं मेखलां शृणुत द्विजाः २५
मुष्टिमात्रस्य कुण्डस्य मेखला ह्यङ्गुलद्वया
मेखला द्वितयं कार्यमङ्गुलार्धाङ्गुलक्रमात् २६
रत्निमात्रस्य कुण्डस्य नेमिस्स्यादङ्गुलैस्त्रिभिः

अन्यनेमिद्वयं तस्य तृतीयार्धाङ्गुला मता २७
हस्तमात्रस्य कुण्डस्य नेमिस्स्याच्चतुरङ्गुला
कर्तव्या मेखला चान्या त्रिद्व्यङ्गुलक्रमात्तथा २८
कुण्डस्य द्विकरस्य स्यात्पूर्वनेमिष्षडङ्गुला
अन्याङ्गुलचतुष्का स्यात्तृतीया त्वङ्गुलैस्त्रिभिः २९
चतुर्हस्तस्य कुण्डस्य नेमिः पूर्वाङ्गुलाष्टका
षड्भिरन्याङ्गुलैः कार्या चतुर्भिरपराङ्गुलैः ३०
कर्तव्या मेखला पूर्वा षड्ढस्तस्य दशाङ्गुलैः
अङ्गुलैरष्टभिश्चान्या तृतीया षड्भिरङ्गुलैः ३१
अष्टहस्तस्य या पूर्वा मेखला द्वादशाङ्गुला
दशाङ्गुला द्वितीया तु तृतीयाष्टाङ्गुला मता ३२
कुण्डस्य यादृशं रूपं मेखलानां तु तादृशम्
अथवान्यप्रकारेण मेखलामानमुच्यते ३३
चतुर्विंशतिभागं तु विभजेत्कुण्डमानकम्
तदेकभागमात्रं स्यात्तेन द्वित्रिचतुर्गुणैः ३४
विस्तारोत्सेधमानाभ्यां भवन्तीह च मेखलाः
षडङ्गुलविशालोच्चा मेखलैका भवेद्यदि ३५
कुण्डबिम्बार्धमानेन नाभिस्त्र्यंशेन वा मता
मेखलामध्यगा योनिद्व्यर्यङ्गुलोच्छ्रायसंयुता ३६
मुष्टिरत्न्येकहस्तेषु योनिमानमुदीरितम्
द्विहस्तादिषु कुण्डेषु विस्तारे द्व्यङ्गुलाधिका ३७
अग्न्यङ्गुलाधिका दैर्घ्यादुत्सेधस्स्वभुजात्ततः
सा योनिस्सर्वकुण्डानां स्वार्धमानेन निर्मिता ३८
अश्वत्थपत्रवद्वाथ गजोष्ठसदृशाऽथवा
प्रणालेन समायुक्ता कुण्डमानयुतेन तु ३९
योनेरारभ्य नाभ्यन्तं गोनन्देन सुशोभिना

नाभिस्स्यात्कुराडमध्ये तु स्वार्धमानेन निर्मिता ४०
तच्चतुर्थांशकोत्तुङ्गपद्माकारा यथा भवेत्
एकाशीतिपदा वेदी मराडपेन बहिर्भवेत् ४१
तद्बाह्ये त्रिषु भागेषु मध्ये कुराडानि कल्पयेत्
चतुर्धा वेदिकां कृत्वा वेदिका कुराडमध्यमे ४२
यथैकांशं भवेत्कुराडजालं वा परिकल्पयेत्
प्रधानवायुसोमेशकुराडेषु प्राङ्मुखो यथा ४३
पूर्वमुत्तरवक्त्रं स्याच्छेषं प्रागुत्तरामुखम् ४४
इति कामिकाख्ये महातन्त्रे कुराडलक्षणविधिः सप्तमः पटलः

अग्निकार्यविधिः

अतः परं प्रवक्ष्यामि वह्निकार्यविधिक्रमम्
वैदिकं मिश्रकं शैवमग्निकार्यं त्रिधा स्मृतम् १
केमलैर्वैदिकैर्मन्त्रैर्विहितो वैदिको भवेत्
मन्त्रैश्च वैदिकैश्शैवैर्विहितो मिश्र उच्यते २
केवलैश्शिवमन्त्रैस्तु विहितश्शैव उच्यते
उतापदने क्रमस्त्वेवं विहितश्शिवशासने ३
त्रिभिः परिधिभिश्चोर्ध्वसमिद्भ्यां संयुतस्तु यः
वैदिकाग्निस्समुद्दिष्टो मिश्राग्निस्तूभयात्मकः ४
चतुष्परिधिभिश्शैवश्शास्त्रेऽस्मिन् संप्रकीर्तितः
प्रणीता ब्रह्मकूर्चेन संयुक्तो वैदिकस्स्मृतः ५
तथैव मिश्रवह्निस्तु शैवाग्निस्तद्युतो हि वा
मिश्रवैदिकयोरग्न्योः स्वरूपं शृणुत द्विजाः ६
एकविग्रहसंयुक्तो द्विवक्त्रश्च द्विनासिकः
षडक्षो मेखलायुक्तः पादत्रयसमान्वितः ७
चतुश्शृङ्गसमायुक्तो द्विशिरा जटिलो मतः

उपवीती च मौञ्जीवान् सप्तहस्तसमायुतः ८
सप्तजिह्वासमायुक्तो वृषवाहनसंयुतः
हिरण्या कनका रक्ता कृष्णा जिह्वा च दक्षिणे ९
सुप्रभा चातिरक्ता च बहुरूपा च वामके
एवं जिह्वास्समुद्दिष्टा मिश्राग्नौ वैदिकानले १०
हिरण्या वारुणी जिह्वा कनका मध्यमे स्थिता
रक्ता चोत्तरजिह्वा स्यात्कृष्णा याम्या दिशि स्थिता ११
सुप्रभा पूर्वजिह्वास्यादतिरिक्ताग्निदिक्स्थिता
बहुरूपैशजिह्वा स्याज्जिह्वास्थानं प्रकीर्तितम् १२
शैवाग्निः कथ्यते विप्राः शृणुताथ समाहिताः
पञ्चवक्त्रयुतं रक्तं सप्तजिह्वाविराजितम् १३
दशहस्तं त्रिणेत्रं च सर्वाभरणभूषितम्
रक्तवस्त्रपरीधानं पङ्कजोपरि संस्थितम् १४
बद्धपद्मासनासीनं दशायुधसमन्वितम्
कनका बहुरूपा चाव्यतिरक्ता ततः परम् १५
सुप्रभा चैव कृष्णा च रक्ता चान्या हिरण्मयी
ऊर्ध्ववक्त्रे स्थितास्तिस्त्रः शेषाः प्रागादितः स्थिताः १६
शैवाग्निध्यानमुद्दिष्टं त्रिविधोऽग्निः प्रकीर्तितः
वैदिकोऽपि त्रिधा गार्हपत्यस्स्याद्दक्षिणोऽनलः १७
ततस्त्वाहवनीयस्तु तेषामत्र प्रयोजनम्
कारयेद्देशिको धीमान् शैवमिश्रानलोद्भवे १८
अनुकल्पं समानीय शैवं सम्पादयेद्गुरुः
मिश्रं वा साधयेत्तत्र नियमोऽपि विधीयते १९
गार्हपत्यो गृहस्थानां पितृणां दक्षिणानलः
दैवस्त्वाहवनीयस्तु चान्येषामपि शंसितः २०
बालो युवा च वद्धश्च क्रमेण परिकीर्तितः

प्रतिष्ठार्थं शिवाग्नेस्तु सम्पदर्थं समाहरेत् २१
बालाग्निमुत्सवार्थं तु यौवनं परिकल्पयेत्
नित्याग्नौ योजयेद् वृद्धमन्यत्रापि च योजयेत् २२
अनुकल्पशिवाग्नेस्तु चोत्पादार्थं क्रमो मतः
शिवाग्नयुत्पादहोमस्तु श्रेष्ठस्संपरिकीर्तितः २३
मिश्राग्नयुत्पादहोमस्तु मध्यमः परिकीर्तितः
वैदिके केवलाग्नौ वा शिवमन्त्रान्न योजयेत् २४
शिवाग्नौ वैदिका मन्त्राश्चान्ये वा संप्रकीर्तिताः
तथैव मिश्रवह्निस्तु वैदिकाग्निस्तु कथ्यते २५
ब्रह्मा विष्णुश्च लोकेशा देवाश्चान्ये च ये स्थिताः
व्यासो बोधायनश्चापस्तम्बश्चैवाश्वलायनः २६
सत्याषाढश्च ये चान्ये मत्तो वेदास्तु सार्थकान्
शास्त्राणयन्यानि श्रोतारः पुराणं च स्मृतिं तथा २७
सूत्रैस्तु नियमार्थं तु व्याससंक्षेपकारिणः
तन्मतन कृतो योऽग्निः वैदिकः परिपठयते २८
अदीक्षिताश्च विप्राद्या वैदिकाग्नौ तु केवलम्
अधिकारिण इत्युक्ता दीक्षितास्सर्वयोग्यकाः २९
उभयाश्रायणो ये तु कृत्वादौ वैदिकं पृथक्
कुणडसंस्कारपूर्वं तु शैवाग्निं साधयेत्ततः ३०
मिश्राग्निरेवमुद्दिष्टस्तूभयाश्रमयोग्यकः
अथवा वैदिके होमे निर्वृत्ते तदनन्तरम् ३१
शैवोक्तकुणडसंस्कारान् कृत्वा चाग्निं च तत्पुरा
नाभिरथेऽग्नावपानेन विश्राम्योदानवृत्तिना ३२
तद्बीजेन क्रमात् सद्यवामाघोरनरेश्वरान्
नित्याग्नि वेशयेद् भूयश्शिवाग्निमपि कुणडके ३३
एवं मिश्रं तु सम्पाद्य जुहुयात्सर्वमन्त्रकैः

विहितेऽन्त्येष्टिकर्मादौ उभयोस्सङ्करार्थकम्  ३४
आदौ वा कुण्डसंस्कारं कुर्याद्वैदिकशैवकम्
वैदिकाग्न्यवसाने तु शैवं सम्पाद्य वानलम्  ३५
कृत्वा शिवाग्निमन्यत्र तेन संयोजनं नयेत्
एवमन्त्येष्टिकर्मादौ साङ्कर्यं सम्मतं त्विह  ३६
अथोऽन्यत्र पृथक्कार्यः श्रद्धावित्तानुसारतः
शैवाग्निं संप्रवक्ष्यामि कुण्डलक्षणपूर्वकम्  ३७
तथा कुण्डं चतुष्कोणं वृत्ताभं वाथ वारिजम्
सर्वकामप्रदं नित्ये हस्तमात्रविनिर्मितम्  ३८
चतुस्त्रिद्व्यङ्गुलास्तिस्त्रो मेखलैका षडङ्गुला
गजोष्ठसदृशा योनिर्मध्ये स्याद्द्वादशाङ्गुला  ३९
कण्ठोङ्गुष्ठप्रमाणेन गर्भश्वभ्रोपरि स्थितः
स्थण्डिले तदभावे वा संस्कृतेऽग्निं निवेशयेत्  ४०
असंस्कृते तु वै कुण्डे शिवाग्निर्नैव सिद्ध्यति
अनिष्पन्ने शिवाग्नौ तु हुतं भवति निष्फलम्  ४१
वीक्षणं शिवमन्त्रेण प्रोक्षणं चास्त्रमन्त्रतः
वर्मणाभ्युक्षणं कार्यं ताडनं चास्त्रमन्त्रतः  ४२
उल्लेखनावकिरणपूरणं सेचनं तथा
कुट्टनं च ततः कुर्यात्सम्मार्जनमतः परम्  ४३
उपलेपः कुण्डक्लृप्तिः कुण्डस्य परिधानकम्
कुण्डार्चनं च परिधिविष्टरन्यास एव च  ४४
रेखाचतुष्टयं वज्रक्लृप्तिः शृङ्गाटकल्पना
एतत्सर्वं तु मतिमान् अस्त्रमन्त्रेण कारयेत्  ४५
आसनं तत्र संकल्प्य देवीं वागीश्वरीं न्यसेत्
तद्वद्वागीश्वरं चापि यद्वाकाशतनुं शिवम्  ४६
ध्यात्वा रिरंसुमैशान्यां सङ्गमय्य यथाविधि

कल्पं मन्थानुसम्पातं समिधश्चैतयोस्ततः ४७
शुद्धात्मतत्ववद्वह्निमरणेर्जनितं क्षिपेत्
सूर्यकान्तात् द्विजावासात्प्रसूतमथवाऽनलम् ४८
अनुकल्पविधानेन मन्त्रपूतं नियोजयेत्
अयस्कान्तादितोऽकल्पमथवानीय कल्पवित् ४९
ताम्रपात्रे शरात्रे वा वीक्षणाद्यैर्विशोधयेत्
क्रव्यादांशं परित्यज्य प्रोक्षयेदस्त्रवारिणा ५०
कवचेनावकुण्ठ्याथ ऐमुनायेति विन्यसेत्
वह्निबीजं षडङ्गैश्च वह्नेस्संयोजनं नयेत् ५१
मूलेन वौषडन्तेन धेनुमुद्रायुतेन च
अमृतीकृत्य संपूज्य कुण्डस्यैव प्रदक्षिणम् ५२
त्रिधा कृत्वाऽथ जानुभ्यां विन्यसेदवनीं गतः
वागीशीगर्भनाड्यां तु स्वात्मनस्सम्मुखं यथा ५३
मूलमन्त्रेण निक्षिप्य स्वात्मानं शिववत्स्मरेत्
तोयबिन्दुं ततो दत्वा छादयेत्तु सदिन्धनैः ५४
दर्भकङ्कणमस्त्रेण जप्तं गर्भस्य रक्षणे
देवीहस्ते हृदा बध्वा गर्भाधाननिमित्तकम् ५५
सद्योजातं समावाह्य हृदयेनाहुतित्रयम्
तिलैर्दत्वा पुंसवननिमित्तं वाममर्चयेत् ५६
शिरसैवाहुतिं तद्वत्सीमन्तोन्नयने पुनः
अघोरेण समभ्यर्च्य शिखयैवाहुतित्रयम् ५७
दत्वा दर्भेण शिखया वक्त्राङ्गानां च कल्पनम्
निष्कृतिं च तदा कृत्वा जातकर्म ततो नयेत् ५८
पुरुषेणार्चनं कृत्वा कवचेनाहुतित्रयम्
तिलेनैव तदा कुर्यात्सूतकस्य निवृत्तये ५९
कुण्डमर्घ्याम्भसा प्रोक्ष्य प्रागग्रानुदगग्रकान्

दर्भानास्तीर्य कुण्डस्य समन्तादस्त्रमन्त्रतः ६०
रक्षार्थं शिववह्नेस्तु वक्त्राण्युद्घाटयेत्तदा
आहुतित्रितयेनाथ वक्त्राणां पुष्टयेपि वा ६१
लालापनोदनार्थं च सदिध्मान् पञ्च होमयेत्
चतुर्विंशतिसंख्याकान् षोडशाङ्गुलदैर्घ्यकान् ६२
ईशानं नामकरणे त्वावाह्यास्त्रेण होमयेत्
शिवाग्निस्त्वमिति ब्रूयात् मूलमन्त्रपुरस्सरम् ६३
पितोर्विसर्जनं कुर्यान्मेखलासु च पूजयेत्
इन्द्रादीन् लोकपालांश्च पूजयेत्परिधिष्वपि ६४
विष्टरे च क्रमेणैव ब्रह्माणं रुद्रमेव च
विष्णुमीश्वरमभ्यर्च्य प्रागादिचतसृष्वपि ६५
गृहीत्वा स्रुक्स्रुवास्त्रेण ह्यभ्युक्ष्य कवचेन तु
अवकुण्ठ्य प्रताप्याग्नौ वा भ्राम्य च तदग्रतः ६६
दर्भाग्रेणैव संस्पृश्य भ्राम्य मध्यं तु मध्यतः
पुनराभ्राम्य मूलेन मूलं संपृश्य तद्द्वयोः ६७
तद्वक्त्रपञ्चकं न्यस्य स्रुचि शक्तिं च विन्यसेत्
स्रुवे शम्भुं सम्भ्यर्च्य स्वात्मनो दक्षिणे न्यसेत् ६८
दर्भाणामुपरिष्टात्तु पूजयेद्धृदयेन तु
आज्यमस्त्रेण संप्रोक्ष्य कवचेनावकुण्ठ्य च ६९
प्रताप्याग्नौ शिवास्त्रेणोद्वास्य तत्कवचेन तु
कुण्डस्यैवोपरिष्टात्तु त्रिः प्रदक्षिणमानयेत् ७०
योन्यां संस्थाप्य संग्राह्य दर्भाग्रद्वयनिर्मितम्
प्रादेशिकपवित्रञ्चाङ्गुष्ठानामिकमध्यमम् ७१
त्रिराज्योत्प्लवनं कृत्वा कवचेनाग्निसम्मुखम्
तद्वत्संप्लवनं कृत्वा हृदयेनात्मसम्मुखम् ७२
वह्नौ पवित्रं निक्षिप्य अस्त्रेणोद्योत्य तद्धृतम्

निरीक्ष्याज्यं ततो धीमान्नीराजनमथाचरेत् ७३
उल्कामग्नौ विनिक्षिप्य प्रोक्ष्याङ्गैरभिमन्त्रयेत्
अमृतीकृत्य मूलेन धेनुमुद्रायुतेन च ७४
संपूज्य मूलमन्त्रेण दर्भं प्रादेशनिर्मितम्
ओंकारेणात्र विन्यस्य नाडीनां कल्पयेत्त्रयम् ७५
मध्यादाज्यं समानीय स्वाहाप्रणवसंयुतम्
अग्नये वामतस्सोमायेति मन्त्रेण होमयेत् ७६
अग्नीषोमसमायुक्तं मध्ये होमं समाचरेत्
चतुर्थीमग्नये स्विष्टकृते स्वाहाऽहुतिञ्चरेत् ७७
तत्सर्पिषो लवक्षेपात्सर्पिषोऽन्यानि शोधयेत्
अयं विभागश्शुक्ले स्यात्कृष्णे सूर्याहुतिं चरेत् ७८
आज्याहुतित्रयेणाग्नेः कुर्याद्वक्त्राभिघारणम्
स्वैस्स्वैर्मन्त्रैस्समोपेतं सद्यं वामेन योजयेत् ७९
वामं घोरेण संयोज्य तं च तत्पुरुषेण तु
तं चेशाने तु संयोज्य तं शिवेनैव योजयेत् ८०
कृत्वैवं वक्त्रसन्धानमेकीकरणमेव च
स्वस्वमन्त्रसमोपेतं सद्योजातादितो नयेत् ८१
यथाभिलषितं वक्त्र कुण्डमानं प्रकल्पयेत्
अन्नप्राशनचूडादिसंस्काराणां प्रसिद्धये ८२
जिह्वायां मध्यमस्थायां पूर्णाहुतिमथाचरेत्
वौषडन्तेन मूलेन स्रुक्स्रुवाभ्यां विशेषतः ८३
चर्वर्थं धूपदीपार्थमोदनार्थं च कुण्डतः
ग्राहयेत्तु पृथग्भागं वह्निमुद्धृत्य यत्नतः ८४
प्राच्यां चरुपुरोडशाः पञ्चसंस्कारसंस्कृते
अनाहुते शिवे वह्नौ होमस्त्वावाहिते शिवे ८५
अग्ने त्वमैश्वरं तेजः पावनं परमं यतः

तस्मात्त्वदीयहृत्पद्मे स्थाप्य सन्तर्पयाम्यहम् ८६
प्रार्थयित्वेत्यतस्तस्य योगपीठं हृदम्बुजे
विन्यस्य कल्पयेन्मूर्तिं भास्वरां सुवरां पराम् ८७
आवाहनादिभिस्तस्यां सन्निधीकृत्य कारणम्
पूजयित्वा बहिस्तस्या भोगाङ्गानि प्रकल्पयेत् ८८
आश्रयोपायतो ध्यात्वा भास्वराणी पृथक्पृथक्
प्ररोच्य परमीकृत्य शिववक्त्राग्निवक्त्रयोः ८९
कृत्वा सन्धानमग्नेस्तु ज्योतिर्नासाविनिर्गतम्
यागस्थाने शिवेनैकीभूतं सम्यग्विचिन्तयेत् ९०
नाडीसन्धानकं कृत्वा प्राथ्याज्ञां तर्पयेच्छिवम्
शिवाद्दशांशतोऽङ्गानि तर्पयेत्तु द्विजोत्तमाः ९१
शतमर्धं तदर्धं वा विंशतिर्वा दशाथवा
आत्मार्थे वा परार्थे वा प्रत्यहं होममाचरेत् ९२
एककालं द्विकालं वा त्रिकालं होममाचरेत्
आज्याभावात्तिलैर्होमः कर्तव्यः कृष्णवर्चसैः ९३
व्रीहिभिर्वा समिद्भिर्वा दध्ना वापि यवैस्तथा
त्रिफलैर्बिल्वपत्रैर्वा पुष्पैर्वा याज्ञिकैश्शुभैः ९४
अन्यैर्होमो विधातव्यः श्रद्धावित्तानुसारतः
मृगीं वाराहमुद्रां वा शङ्खिनीं वा विधाय च ९५
जुहुयाद्वा पृथग्द्रव्यं मात्राख्याभिर्यथा तथा
सुस्नेहमधुदुग्धानामाहुतिस्स्यात्स्रवात्मिका ९६
निकुञ्जेनाहुतिर्दध्ना भक्ष्यपायसयोः पलात्
पर्यायात्सर्वभक्ष्याणि पञ्चाग्राङ्गुलिभिस्तिलान् ९७
मुष्टिभिर्होमयेल्लाजान् स्वरूपेण फलानि तु
हस्तपिण्डमितं शाकं स्वाष्टांशं कन्दजातयः ९८
तिक्तपिण्याकजातीनामभिचारविधिं विना

त्रिखराडानि तु मूलानि द्व्यङ्गुला वल्लिजातयः ९९
लाजावमिश्रितं धान्यं सर्वान्नं ग्राससम्मितम्
हविष्यान्नं ततश्चान्ते ताम्बूलं विनिवेदयेत् १००
प्रदक्षिणं नमस्कृत्वा स्तुत्वा वा भक्तितस्ततः
पूजयित्वार्पयित्वा च प्ररोच्य च विसर्जयेत् १०१
शिवं व्याहृतिभिः पश्चात्सन्तर्प्य शिवपावकम्
रोधयित्वा तु तत्रैव रक्षयेत्प्रतिवासरम् १०२
कुराडे तु भावयेदग्निं त्रिविधं विधिना त्रिधा
संपूज्य तत्र देवेशमविसृज्याङ्गमालभेत् १०३
चराडभस्म भवेत्पश्चाद्यदा देवो विसर्जितः
यद्वा विसर्जयेत्कुराडे वह्निमन्यत्र रक्षयेत् १०४
रक्षितेऽग्नौ तु निर्वाणे जपेद्धोरमुपोषितः
जपेद्वा जुहुयाद्वाथ बहुरूपं प्रशान्तये १०५
तत्रैवान्तर्बलिं दद्यात्कृत्वा मराडलकं भुवि
संस्कृते फलके वाथ गन्धपुष्पादिसंस्कृते १०६
रुद्रेभ्यः पूर्वतो दद्यान्मातृभ्यो दक्षिणे तथा
गणेभ्यः पश्चिमे भागे यक्षेभ्यश्चोत्तरे बलिम् १०७
ग्रहेभ्यश्च तथैशान्यामसुरेभ्योऽग्निगोचरे
पालाश्यां पलभक्षेभ्यो नागेभ्यो वायुगोचरे १०८
नक्षत्रराशिवर्गेभ्यस्तथा विश्वगणाय च
मराडलाभ्यन्तरे देया बलिस्तेभ्यः प्रकामतः १०९
वायुवारुणदिग्भागे क्षेत्रपालबलिं क्षिपेत्
आत्मार्थेऽप्येवमादिष्टं गृहादौ देवसद्मनि ११०
नन्द्यादिपरिवाराणां बलिं दद्यात्पृथक्पृथक्
अग्निकार्यबलिश्चान्ते एवमेव समाचरेत् १११
समाचम्य शुचिर्भूतो सकलीकृतविग्रहः

अतो लिङ्गान्तिकं गत्वा प्रतर्प्यानन्तरक्रियाम्  ११२
गीताद्यैरुपचारैश्च भूयस्सन्तोषयेच्छिवम्
नित्योत्सवं ततः कुर्याच्छुद्धाख्यं नृत्तमन्तिमे  ११३
कारयेद्देशिको धीमान् परार्थे देवसद्मनि
उत्सवं शुद्धनृत्तं च गृहाग्रे न समाचरेत्  ११४
गानं च कारयेदन्ते यथा तुष्टो महेश्वरः
गन्धैः पुष्पैश्च संपूज्य दत्वार्घ्यं च पराङ्मुखम्  ११५
दर्शयित्वा परां मुद्रामुत्थाप्याङ्गानि हेतिना
संहारिणं शिवं ध्यात्वा मूर्तौ मूर्त्या नियोजयेत्  ११६
अर्चयित्वा शिवं भूय उच्चार्य हृदयानुगम्
प्रासादं कारणत्यागाद्यावन्निष्कलतां गतम्  ११७
परतत्वाविभागेन भावयेदथवात्मना
हृत्सरोजे स्थितेनैक्यं कल्पयेन्मुद्रया तया  ११८
एवं विसर्जयेद्देवं सापेक्षनिरपेक्षकम्
बिन्द्वाद्यं नादपर्यन्तमन्ते चण्डेश्वरं यजेत्  ११९
बाणे लोहे चले सिद्धे न चण्डेशस्स्वयंभुवि
प्रतिमानां च सर्वासामन्ते च स्थण्डिले नहि  १२०
प्रासादबाह्यतश्चण्डमैशान्यां दिशि मन्दिरे
देवाय दत्तं यद्द्रव्यं चण्डेशायेति कल्पितम्  १२१
चण्डभोज्यं दुराधर्षं नात्मभोगाय कल्पयेत्
निर्माल्यलङ्घनं दानं भक्षणं च विवर्जयेत्  १२२
गुरुपुस्तकनागानां वह्नेर्योगिगणस्य च
पार्वतीयक्षमातॄणां न निर्माल्यं शिवे यथा  १२३
रत्नहेमादिलिङ्गेषु चले लिङ्गे प्रतिक्षणे
गुरुष्वपि न निर्माल्यं व्याख्यासु प्रतिमासु च  १२४
स्वेष्टलिङ्गे च यद्दत्तं चरुवत्तन्न संशयः

नैवेद्यं भ्रातृपुत्राणां भगिनीनां च दापयेत् १२५
स्नानपानीयदुग्धाद्यैर्यदि सिक्तो भवेत्तदा
स्नायात्प्रक्षालयेद्वाथ नाभेरूर्ध्वमधस्तथा १२६
आचम्य प्रयतो भूत्वा देवदेवं प्रणम्य च
च्युतस्खलितशुद्ध्यर्थमभ्यसेन्मन्त्रसंहिताम् १२७
निर्गच्छेदालयाद्वामपादेनास्पृष्टदेहली १२८

इति कामिकाख्ये महातन्त्रे अग्निकार्यविधिः अष्टमः पटलः

## कालविधिः

अथ कालं प्रवक्ष्यामि सर्वेषां तु सुखावहम्
माघमासं विना शास्तं भानोरयनमुत्तरम् १
दक्षिणे त्वरिते मासौ कार्तिकाश्वयुजावपि
श्रावणश्च विधीयन्ते तदन्ये निन्दिता मताः २
शुक्लपक्षश्शुभोऽन्यश्च सप्तम्यन्तोऽसितो मतः
शुक्ले वाद्यतृतीयांशं कृष्णे चान्त्यं तु वा त्यजेत् ३
मध्यमौ मध्यगौ भागौ श्रेष्ठावन्यौ प्रकीर्तितौ
नवमीं पञ्चदश्यौ च हित्वा युग्मेतरं तिथिम् ४
आद्यामपि च युग्मासु द्वितीयं दशमीं तथा
कृष्णे षष्टिं च याश्शिष्टास्तास्सर्वानिन्दितास्त्विह ५
रोहिणी चोत्तरास्तिस्रो हस्तं स्वाती पूनर्वसू
अनूराधाश्वयुक् सौम्यं वैष्णवं वारुणं मघा ६
चित्राश्रविष्ठापौष्णाश्च मनुजेषु प्रशंसिताः
पूज्याश्शतभिषक् चैव विशाखा पूर्वजैस्सह ७
देवेषु कथितं रौद्रं सर्वमेतच्छिवे मतम्
मानुषे पौष्यपौष्णाश्च तदन्ये निन्दितास्त्विह ८
वारौ कुजार्कौ हित्वा च देववारः प्रशंसितः

मनुष्यैरपि वारं च वर्जयेत्त सितापरम्  ९
तललक्षगते भानौ वेश्मारम्भं विवर्जयेत्
शुभकर्म न कर्तव्यं जीवे चास्तं गते बुधैः  १०
शुक्रस्यास्तमये वाऽपि प्रतिष्ठाद्यं न कारयेत्
दिवा गर्भप्रतिष्ठा च शर्वर्यां वास्तुकर्म च  ११
सर्वदोषकरं प्रोक्तं रात्रावावेशनं भवेत्
रात्रौ वास्तुबलिं ग्रामे नाग्नौ कुर्यात्कथञ्चन  १२
उत्तमः स्थिरराशिस्स्यान्मध्यमस्तूभयात्मकः
विवर्ज्यश्चरराशिस्तु सजीवश्चेच्छुभप्रदः  १३
गुरुभार्गवचान्द्रीणामुदयस्संप्रशस्यते
गुरूदयस्तु विप्राणां भूपतीनां भृगूदयः  १४
विशां बुधोदयश्श्रेष्ठश्शूद्रे चैवं विधीयते
त्रिषडेकादशस्थाने पापास्तु निशि शोभनाः  १५
व्ययं हित्वा शुभास्सर्वे सर्वत्र शुभदा मताः
चतुरश्रे शुभाः पापा वर्जनीया विशेषतः  १६
उभयस्थं हिमांशुं च षट्सप्तमगतं शुभम्
वर्जयेद्देशिको धीमान् पञ्चगोचरसंस्थितः  १७
कण्टकं ब्रह्मदण्डं च स्थूणामुक्तं ग्रहेण च
युक्तं च काङ्क्षितञ्चोडुं सन्त्यजेद्देशिकोत्तमः  १८
वेधितर्क्षं व्यतीपातं वज्रं शूलं तथैव च
विष्कम्भं परिघं चैव गण्डं वैधृतिहर्षणे  १९
तथाऽतिगण्डमन्दर्क्षं षडशीतिमुखं तथा
मासशून्यं ग्रहैर्भिन्नं दग्धवारं तथैव च  २०
ग्रहदोषसमाविष्टज्वालानक्षत्रकादि यत्
तिथिनक्षत्रमासाब्दायनान्तं च वर्जयेत्  २१
अधिमासं त्यजेद्धीमान् देशिकस्तु विशेषतः

यजमानानुकूलर्क्षे स्वल्पदोषे गुणाधिके २२
पूर्वाह्णे वाथ मध्याह्ने लग्ने ग्रहबलान्विते
कारयेद्वास्तुकर्मैतत्सर्वसम्पत्समृद्धये २३

इति कामिकाख्ये महातन्त्रे कालविधिः नवमः पटलः

निमित्तपरीक्षाविधिः

आदौ कालं परीक्ष्यान्ते शुभकर्म समाचरेत्
निमित्तशकुनानादौ ज्ञात्वा कर्म समाचरेत् १
वास्तुविद्देशिकश्शिल्पी दैवज्ञो यजमानकः
शुचिश्शुक्लाम्बरो भूत्वा भूषणैस्समलङ्कृतः २
प्रस्थाने निर्गमे चैव वास्तुदेशप्रवेशने
निमित्तान् शकुनानेतान् पश्येद्ध्यात्वा सदाशिवम् ३
विद्वांसो ब्राह्मणो वापि पत्नीपुत्रयुतो बली
भूषिता वा सुपुत्रा वा हर्षिता च विशेषतः ४
रूपिणी गर्भिणी कन्या क्रीडन्तश्च विशेषतः
भक्ष्यं भोज्यं च पानं च मांसं दीपं तथैव च ५
अनुलेपनमालादि गन्धद्रव्यं घृतं दधि
श्रीवत्सं पूर्णकुम्भं च शङ्खं गोरोचनं तथा ६
आदर्शनं ध्वजं चैव सिद्धार्थं च पयः पुनः
यान्यन्यानि प्रशस्तानि शुभं तेषां तु दर्शनम् ७
चुचुन्दरी शिवा गौली सूकरश्चापि पिङ्गलः
कोकिलं वामतश्शस्तं प्रस्थाने सर्वकर्मणि ८
आसन्ननिम्नगाश्शीघ्रं दूरादुन्नतदूरगाः
हर्म्यप्रासादमाङ्गल्यमनोज्ञस्थानसंश्रिताः ९
श्रेष्ठा मधुरसक्षीरफलपुष्पद्रुमेषु च
न ग्रामेऽरण्यगौर्ग्राह्यो नारण्ये ग्रामसंस्थितः १०

दिवाचरो न शर्वर्यां न च नक्तञ्चरो दिवा
द्वन्द्वगौ चार्थितौ ग्राह्यौ काकोलस्त्विष्टकाङ्क्षिणः  ११
आपगान्तरिता मत्ता न ग्राह्याश्शकुनाः क्वचित्
क्षुतं सर्वत्र नेष्टं स्याद्गोक्षुतं मरणं दिशेत्  १२
गुलास्थिकृष्णधान्यानि कार्पासाङ्गारगोचरः
नियतेरिन्धनानां च दर्शनं शोकदं भृशम्  १३
चर्मकृन्मुक्तकेशादिरणक्षुत्क्षाममुण्डिनाम्
मलिनाभक्तनग्नादेर्दर्शनं दुःखदं भवेत्  १४
आक्रोशं रोदनं चैव कलहश्शोकदः पुनः
वराहमहिषोष्ट्रादेर्दर्शनं च तथा भवेत्  १५
प्रतिकूले निमित्ते च सर्वकर्म विवर्जयेत्
एकधा द्वित्रिधा कृत्वा निमित्तत्रयदोषकृत्  १६
वर्जयेद्देशिको धीमान् पञ्चगोचरसंयुतः  १७
इति कामिकाख्ये महातन्त्रे निमित्तपरीक्षाविधिः दशमः पटलः

भूपरीक्षाविधिः

शुभे निमित्ते लब्धे च भूपरीक्षां समाचरेत्
शैवं ब्राह्मं तथा वास्तु वैष्णवञ्चैन्द्रमेव च  १
औक्षञ्च भौतिकञ्चैव आसुरञ्च पिशाचकम्
राक्षसं चैव वायव्यं वारुणाग्नेयकौ तथा  २
जानीयाल्लक्षणैरेतैर्भूगुणं देशिकोत्तमः
कर्णिकारार्जुनाश्वत्थकपित्थाशोकधातकी  ३
स्थलारविन्दतुलसीदूर्वाभिर्वा तता मही
विष्णुक्रान्ताखुकर्णाभ्यां शाल्मली गिरिशारिबा  ४
कपोतशुकहंसैश्च शैवी सा शुभदा मही
बिल्वैः पलाशैर्दर्भैश्च कुशैश्च हरिणैस्तथा  ५

होमद्रव्यैस्सुगन्धैश्च भूर्ब्राह्मी शुभदा मता
तिन्दुकैस्तिन्त्रिणीभिश्च करजैर्वेणुभिस्तथा ६
कार्पासार्कजपाभिश्च हंसैः पक्षिमृगैस्तथा
निष्कण्टकैस्तथा वृक्षैर्या भूमिस्सहिता भवेत् ७
वैष्णवी भूस्समाख्याता शौर्यवीर्यप्रदा नृणाम्
कदलीपनसाम्रैश्च पुन्नागैर्वकुलैस्तथा ८
पाटलैस्सिन्धुवारैश्च तथा चामलकैः पुनः
इन्दीवरैश्च वैश्यैश्च शूद्रैरैन्द्री मही मता ९
पाटल्यगरुगन्धाढ्या धनधान्यसमृद्धिदा
अङ्कोलैश्च तथा वृक्षैर्गार्जालैर्नकुलैस्तथा १०
शशगोधाचकोरैश्च वृकैरौक्षमही मता
शौर्यवीर्यकरी सा स्यात्प्रजासम्पत्समृद्धिदा ११
निर्गुण्डी माधवी दूर्वा त्वङ्कोलैः किंशुकैस्तथा
मल्लिकाकरवीरैश्च मधूकैर्भौतिकी मता १२
अन्नदा पुष्टिदा नृणां भस्मगन्धसमन्विता
भल्लातकैर्महावृक्षैर्दुष्टसत्त्वैः पलाण्डुभिः १३
किरातैः ककुभैर्गृध्रैर्धूर्तैस्सर्वैस्समन्विता
आसुरी युद्धदा भूमिः पूतिगन्धसमन्विता १४
शाल्मलीभिस्तथा भूमिर्वकुलैश्च विभीतकैः
श्लेष्मातकैः खरैरुष्ट्रैस्सृगालैस्सूकरैः पुनः १५
चण्डालैश्च पुलिन्दैश्च पूतिगन्धोषरा च सा
पैशाची च स्मृता शास्त्रैस्सर्वनाशसमन्विता १६
चण्डालविषचोरैश्च शिरोरोगादिभिस्तथा
मरीचगुलगन्धाढ्या राक्षसी सा क्षयप्रदा १७
गोमायुगणसङ्कीर्णा झिल्लिका शर्करान्विता
या वायव्येति सा प्रोक्ता दुःखनैर्धन्यदायिका १८

या पूगैरावृता भूमिर्वारुणी सर्वसिद्धिदा
स्नुहिश्लेष्मातकाद्यैश्च संयुक्ता क्षुद्रशर्करैः १९
ऊषरा तोयहीना च आग्नेयी सर्वनाशिनी
शैवे शैवी समाख्याता वैष्णवी विष्णुदेशके २०
ब्राह्मी स्याद् ब्रह्मदेशे तु शैवी विप्रादियोग्यका
शैवी विप्रविशिष्टा च ब्राह्मी स्याद्वैष्णवी च भूः २१
भूभृतां स्याद्विशामौक्षी शूद्राणां भौतिकी स्मृता
पैशाची त्वासुरी भूमी राक्षसी या च भूर्मता २२
अन्त्यजानामिह प्रोक्ता शतशः कर्षिता च या
सा च गोभिश्चिरं भित्त्वा भूर्ग्राह्या वत्सरोर्ध्वतः २३
क्षेत्रस्थितिवशादुर्वी कथिता त्वनुलोमिनाम्
अनूपा जाङ्गला चेति वास्तुयोग्या द्विधा धरा २४
स्थिरं गुरुतरं भूरिशर्करं क्षारवारिणा
युक्तमल्पीयसात्यन्तं खातेऽगाधेऽपि जाङ्गलम् २५
कशेरुकैरवाकीर्णं रूढसौगन्धिकोत्पलम्
सूक्ष्मवालुकमानूपं कृषिकृत्युच्चलज्जलम् २६
जाङ्गलानूपसम्मिश्रगुणं साधारणं स्मृतम्
जाङ्गलं कदलीतालपनसादितरूद्भवम् २७
सर्वसस्योचितं पुष्पफलवृक्षसुखोदयम्
सर्वर्तुसुखदं सर्वहितमानूपमिष्यते २८
तयोस्सम्पर्कसंयुक्तं साधारणमुदाहृतम्
पद्मकं भद्रकं धूम्रं पूर्णञ्चेति चतुर्विधम् २९
समसंस्पर्शनं स्निग्धं सुगन्धं सुस्वरं स्थिरम्
करोदाञ्जलिमात्रोद्यदुदकं वास्तु पद्मकम् ३०
प्राच्युदीच्युदकं सस्यं दक्षिणेशं पुरोवनम्
सौम्यं सारतरं तत्तु प्रागुदग्वीरणान्वितम् ३१

सुद्रव्यं रमणीयं सज्जनस्थानं तु भद्रकम्
पूर्णकं धूम्रकं नित्यमनिलानलदिक्प्लवम्  ३२
उत्तमं मध्यमं नीचं नित्यं चेति चतुर्विधम्
दशदण्डप्रमाणं तु षण्मात्रावनतं तु यत्  ३३
उत्तमं स्याद्वितस्त्या तु मध्यं हस्तेन चाधमम्
तन्मन्दमध्यत्वरितजलावहसमन्वितम्  ३४
हस्तादधिकनिम्नं तु निन्दितं वास्तु कीर्तितम्
चतुरश्रं समं यत्तु देवानाञ्च द्विजन्मनाम्  ३५
अष्टषट्चतुरश्रं यद्युक्तं तु नृपवैश्ययोः
शूद्रस्यापि यथासंख्यं कल्पयेद्देशिकोत्तमः  ३६
श्रेष्ठं पूर्वायतं वास्तु मध्यमं दक्षिणोत्तरम्
श्वेतं रक्तं च पीतञ्च कृष्णं विप्रादितः क्रमात्  ३७
मृदङ्गवेणुवीणादि दुन्दुभिध्वनिसंयुतम्
पुन्नागजातिपुष्पाब्जधान्यपाटलगन्धकैः  ३८
पशुगन्धसमं श्रेष्ठं सर्वबीजप्ररोहणम्
एकवर्णं घनं स्निग्धं सुखसंस्पर्शनान्वितम्  ३९
कुब्जाङ्गमुक्तमाकाशं नीचच्छन्नं परं सुखम्
तिक्तं च कटुकं चैव कषायमधुराम्लकम्  ४०
लवणं षड्रसैर्युक्तं युक्तं सर्वसुखावहम्
प्रदक्षिणोदकोपेतं करमात्रोच्चलज्जलम्  ४१
निष्कपालं निरुपलं क्रिमिवल्मीकवर्जितम्
सुषिरास्थिविहीनं तु तनुवालुकसंयुतम्  ४२
अङ्गारतुषहीनं तु वृक्षमूलविवर्जितम्
पङ्कशेषोत्थितं श्वभ्रदरीलोष्टविवर्जितम्  ४३
शर्कराभस्महीनं तु सभाचैत्यसमीपगम्
दुष्टप्राणिसमीपस्थं नृपमन्दिरसंश्रितम्  ४४

देवालयसमीपस्थं कराटकद्रुमसंयुतम्
चराडालवास्तुकं चैव कर्मकारालयाश्रितम् ४५
एकद्वित्रिचतुर्मार्गावृतमव्यक्तमार्गकम्
शङ्करारामसंयुक्तं तस्य न्नेत्रं तु वर्जयेत् ४६
अन्यदेवंविधं वास्तु सर्वदोषकरं भवेत्
यत्कर्म विहितं मोहादेवंभूते तु वास्तुनि ४७
तन्महादोषदं यस्मात्सर्वथा तद्विवर्जयेत्
हीनजातेस्समुद्दिष्टमुत्कृष्टानां विधीयते ४८
उत्कृष्टोक्तं न हीनस्य सर्वदेवेषु योग्यकम्
मिश्रवर्णयुतं वास्तु श्रेष्ठं तद्वर्णजन्मनाम् ४९
पूर्यमाणे महीं खात्वा गर्ते स्वैरेव पांसुभिः
अधिकन्यूनतुल्येषु पांसुष्वेतादृशं फलम् ५०
तत्पांसुधारणे षष्टिशतं फलविवेकतः
सपुष्पकुम्भतोयेन पूर्यमाणेऽवटे यदि ५१
शस्तं प्रदन्निणावर्तमुदकं शान्तबुद्बुदम्
उत्तानपुष्पकं श्रेष्ठं न त्वधोमुखपुष्पकम् ५२
सर्षपाणां तिलानां वा चोप्तानामङ्कुरा भुवि
त्रिरात्रेण प्रजायन्ते यस्यां सा स्याच्छुभा मही ५३
पूर्वोत्तरप्लवा श्रेष्ठा मध्यमा सर्वतः प्लवा
सापि ग्राह्या गृहादौ तु सा चोल्बणगुणान्विता ५४
कुमारराजधानी वा न्यायाप्ता सा मही मता
एवं परीन्त्य गृह्णीयान्महीं बहुगुणान्विताम् ५५
वेतालादेः पुनस्सम्यक् प्रवेशबलिमाहरेत् ५६
इति कामिकाख्ये महातन्त्रे भूपरीन्नाविधिः एकादशः पटलः

## प्रवेशबलिविधिः

ग्रामादीनां च सर्वेषां प्रासादानां च सद्मनाम्
अन्येषामपि सर्वेषां प्रवेशबलिरुच्यते १
शुभे मुहूर्ते नक्षत्रे रात्रौ दोषविवर्जिते
आदिशैवकुलोद्भूतः पञ्चगोचरसंस्थितः २
पञ्चाङ्गभूषणोपेतस्सोष्णीषस्सोत्तरीयकः
सितानुलेपनाढ्यश्च प्रवेशबलिमारभेत् ३
ब्राह्मणान् भोजयेत्पूर्वं पुण्याहं वाचयेत्ततः
नवभागां धरां कृत्वा ब्रह्मस्थानादितः क्रमात् ४
नवदिक्षु बलिं दद्यान्मन्त्रेणानेन वास्तुवित्
इमे भूमौ वसन्तोऽत्र भूतपैशाचराक्षसाः ५
स्वेच्छं गच्छन्त्विमां भूमिमाशु गृह्णामि वास्तुने
दध्याज्यापूपसंयुक्तैरन्नैस्तेषां बलिं क्षिपेत् ६
गीतवाद्यादिनिर्घोषैर्वेदघोषैश्च घोषयेत्
आचार्यं पूजयेत्पूर्वं सर्वान् सम्पूजयेत्ततः ७
इति कामिकाख्ये महातन्त्रे प्रवेशबलिविधिः द्वादशः पटलः

## भूरिपरिग्रहविधिः

ततः प्रभाते स्वीकारं कुर्यात्स्नातो विभूषितः
वसानो नूतनं वस्त्रमुत्तरीयसमन्वितः १
सूपलिप्तमहीमध्ये सर्वधान्योपरि स्थितम्
सितचन्दनलिप्ताङ्गं चूताश्वत्थदलान्वितम् २
सर्वरत्नौषधीगर्भनिम्नगाम्भः प्रपूरितम्
सद्वस्त्रवसनं कुम्भं सितसूत्रविभूषितम् ३
सासनेन सदेहेन शिवेन समधिष्ठितम्
पूजयित्वा विधानेन गन्धपुष्पाक्षतैर्गुरुः ४
ततः कुम्भं समुत्क्षिप्य विप्रमूर्ध्न्यधिरोपयेत्

वेदातोद्यकुलस्त्रीणां प्रशस्तध्वनिभिस्तथा ५
ततः करकनिर्गच्छदच्छिन्नजलधारया
ध्यायन् प्रजाहितं क्षिप्रं परिषिञ्चेत्प्रदक्षिणम् ६
नयेत्त पूर्वसीमान्तं किञ्चित्तत्र विलम्ब्य च
तस्मादग्नेः पलाशस्य पवनेशानयोस्तथा ७
दिक्षु नीत्वा ततः प्राचीं नयेद्भूमिपरिग्रहे
आचार्यादीनथाभ्यर्च्य कर्ता दद्याच्च दक्षिणम् ८
प्रवेशार्थं बलिं चैव भूपरीक्षापरिग्रहौ
ग्रामाङ्गभूतदेवादौ पृथङ्नेष्टो विचक्षणः ९
तत्रादौ कर्षणं कुर्यात्स्वतन्त्रैस्सर्वमाचरेत्
सर्वं स्वतन्त्रतः कुर्याच्छ्रद्धावित्तानुसारतः १०
तत्र दुर्गानिवेशे तु विशेषः किञ्चिदिष्यते
हस्तमानावटं खात्वा भूमिमध्ये शुभे दिने ११
चन्दनोषिततोयेन सायं गर्तं प्रपूरयेत्
दर्भास्तरान्तिके तस्य पयः पीत्वा गुरुः स्वपेत् १२
अस्मिन् वास्तुनि वर्धस्व धनधान्येन मेदिनि
उत्तमं वीर्यमास्थाय नमस्तेऽस्तु शिवा भव १३
इत्युक्त्वोपोष्य शुद्धाङ्गः श्वभ्रं प्रातः परीक्षयेत्
सावशेषं जलं दृष्ट्वा तद्ग्राह्यं सर्वसंपदे १४
क्लिन्ने वास्तुविनाशाय शुष्के धान्यधनक्षयः
अह्नि वा पूरणं कृत्वा परीक्षां तु समाचरेत् १५
गत्वा शतपदं चान्तः प्रत्यावृत्य निरीक्षयेत्
अन्यूनं चेज्जलं तत्स्थमुत्तमा भूः प्रशस्यते १६
अङ्गुलेन तु हीनं चेन्मध्यमेति प्रकीर्तिता
ततो हीनं तु हीना स्यादतिहीना विपत्करी १७
इयं परीक्षा कर्तव्या प्रवेशार्थबलेः पुरा

सर्वेषामपि वास्तूनां सा तु साधरणी मता १८
एवं परिग्रहं कृत्वा ततः कर्षणमारभेत् १९
इति कामिकाख्ये महातन्त्रे भूपरिग्रहविधिः त्रयोदशः पटलः

भूकर्षणविधिः

अतः परं प्रवक्ष्यामि ग्रामादीनां च कर्षणम्
सुश्वेतौ वृषभौ दान्तौ युवानौ बलसंयुतौ १
अप्रोतनासिकौ साराडौ शुभलक्षणसंयुतौ
ककुदं च तथा वालखुरशृङ्गाणि भूषयेत् २
तदाकृतिकृतैर्हेमभूषणैर्गन्धपुष्पकैः
उक्तलक्षणवर्णाढ्यं गृहीत्वा गोवृषद्वयम् ३
तर्पयित्वा गुलैः क्षीरैस्ततः कर्षणमारभेत्
तस्योपकरणं द्रव्यं खादिरं देवविप्रयोः ४
नृपाणां खादिरो राजतरुस्स्याद्वैश्यशूद्रयोः
निम्बश्च वकुलश्चापि गवाक्षी कट्फलस्तथा ५
तिन्दुकः करवर्णश्च सर्वेषां तु महीरुहाम्
हलश्च लाङ्गलो मुष्टिर्युगमस्य प्रकीर्तितः ६
चतुर्वितस्तिदीर्घं स्याद्धलं तन्मूलनाहकम्
द्विवितस्तिषडङ्गुल्यं लाङ्गलेषु प्रपठ्यते ७
त्रिगुणो हलदैर्घ्येण मूलोऽष्टाङ्गुलनाहकः
अग्रे तु चतुरङ्गुल्यं लाङ्गलेषु प्रशस्यते ८
हलदीर्घस्समुद्दिष्टस्त्रिद्व्यङ्गुलघनान्वितः
घनद्विगुणविस्तारा पताका ध्वजयष्टिवत् ९
चतुर्हस्तायतश्चाग्रे वितस्तिपरिणाहकः
मध्ये त्रिसप्तमात्रेण नाभेर्वृत्तनिभो युगः १०
चतुर्वितस्तिदीर्घस्स्यादेकाङ्गुलविशालकः

शम्यश्शम्यान्तरस्सम्यक् वितस्तिरिह कथ्यते ११
मध्ये कीलो द्विमात्रः स्यान्मध्यवामे तु षडयवः
शम्यान्तरस्समं शम्यालम्बनं स्याद्युगादयः १२
पांसुगर्भं च तत्तल्यमयोमयमिहेष्यते
हिरगमयं पांसुगर्भं देवानां प्रविधीयते १३
राजतं द्विजभूपानां लोहितं वैश्यशूद्रयोः
यद्वा हलादिकं यत्तु तदर्धे वसुभाजिते १४
एकभागं समारभ्य चतुर्भागावसानकम्
न्यूनं वाप्यधिकं वापि कारयेत्कर्तुरिच्छया १५
रज्जुर्गोचर्मजा वापि मौञ्जीतालजवल्कलाः
नलिकेरकृता वापि रज्जुस्सर्वत्र शंसिता १६
पलाशोदुम्बराश्वत्थवटप्लक्षोद्भवास्तथा
हलादयस्सुरादीनां सर्वे सर्वत्र वा मताः १७
एवं सर्वं च सम्पाद्य देशिकश्शिवविप्रजः
कृतमन्त्रतनुर्भूत्वा सोष्णीषश्चोत्तरीयकः १८
प्राप्तपञ्चाङ्गभूषस्तु वृषभौ संप्रपूजयेत्
वृषं त्र्यम्बकमन्त्रेण हलं चास्त्रेण पूजयेत् १९
कर्षकं तु समाहूय वस्त्रं दत्वा द्विजोत्तमः
आत्मानमिव तं ध्यात्वा प्रेषयेत्कृषिकर्मणि २०
स्वयं चादौ तु संपृश्य कर्षयेद्देशिकोत्तमः
द्वात्रिंशद्वारमित्युक्तं देवाग्रजमहीभृताम् २१
दशपञ्चाधिकं ख्यातं वैश्ये शूद्रे तु सप्तकम्
सर्वेषां सप्तवारं वा पञ्चवारमथापि वा २२
प्राङ्मुखोदङ्मुखो वापि कृषिकर्म समारभेत्
एवं कृष्ट्वा समीकृत्य षगमात्रावर्तितं क्रमात् २३
तिलसर्षपमुद्गांश्च माषव्रीहिमनुक्रमात्

पयसा क्षालयित्वा तु वपेन्नेत्रमनुस्मरन् २४
आचार्यदक्षिणां दद्यात्काञ्चनं पञ्चनिष्ककम्
सर्वोपकरणोपेतं दद्यात्तस्मै च गोवृषौ २५
वृषौ पृष्ठावनीतौ च तयोश्चैवातिधावनम्
शयनं दुष्कृतञ्चान्यत् प्रजानां सर्वदोषदम् २६
हलादिभङ्गे तद्वत्स्याद्रज्जुच्छेदे तथैव हि
प्रायश्चित्तं तदा कुर्याच्छान्तिहोमं शिवद्विजः २७
तथात्र कर्षकस्यापि पतने चैवमेव हि
तत्रस्थानां च सस्यानां वर्धितानां च कर्षणात् २८
भक्षणं गोकुलैर्धीमान् कारयेद्देशिकोत्तमः
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रं तु वासयेत् २९
गवां सवृषवत्सानां पुरीषप्रस्रवोक्षणैः
खुरसंघट्टनाघ्राणपरिभ्रमणगोष्पदैः ३०
रोमन्थोद्गारपातैश्च फेनैर्वत्साननच्युतैः
पवित्रीकृतभूमध्ये ग्रामाद्यं परिगृह्यताम् ३१

इति कामिकाख्ये महातन्त्रे भूकर्षणविधिः चतुर्दशः पटलः

## शङ्कुस्थापनविधिः

देवानां ब्राह्मणादीनां वर्णानामनुलोमिनाम्
गृहग्रामादिकर्तॄणां शिवदीक्षान्वितात्मनाम् १
अदीक्षितानामन्येषां शिवभक्त्यन्वितात्मनाम्
शङ्कुसंस्थापनं वक्ष्ये ग्रामादीनां शुभावहम् २
ब्रह्मस्थानस्य नैर्ऋत्यां शङ्कुस्थानं प्रकल्पयेत्
अन्यत्र स्थापितश्शङ्कुर्ग्रामाद्यं नाशयिष्यति ३
दण्डप्रमाणविस्तारं षडङ्गुलसमुन्नतम्
शङ्क्वर्थं मण्डलं कुर्याद्देवानां च सनातनम् ४

युक्ताष्टषट्चतुर्मात्रं द्विमात्रोच्चं मनोहरम्
निर्दरं निर्जरं स्निग्धं सुस्पृश्यं सुसमं शुभम् ५
त्रिहस्तार्धं त्रिहस्तं च द्विहस्तार्धं द्विहस्तकम्
द्विजादीनां यथासंख्यं योजनीयं विचक्षणैः ६
आपूर्य सलिलं तत्र वैशकीलान् समोदयान्
खातयेत्तान् बहून् सम्यक् समान् समतरान्तरान् ७
तत्र फुल्लमृदा सूक्ष्मवालुकेन सगोमयम्
दध्याज्यक्षीरसम्मिश्रं सवल्मीकमृदा दृढम् ८
समं सम्पातयेत्सूत्रपातयन्त्रेण मण्डलम्
अजर्जरमनीचोच्चं सुस्निग्धं दर्पणोपमम् ९
दन्तश्च चन्दनो देवमहीदेवसमीरिताः
खादिरस्तिनिशो राज्ञां वणिजां शाकखादिरौ १०
शाकश्च तिन्दुकः कृष्णसारस्स्याच्छूद्रजन्मनाम्
क्षीरवृक्षशमीसालास्सर्वे योग्यास्समीरिताः ११
शङ्कुष्षडङ्गुलो नाहस्त्वायामो द्वादशाङ्गुलः
अग्रे त्वेकाङ्गुलो वास्तु सर्ववर्णेषु योग्यकः १२
चतुर्दशाङ्गुलायामस्तावान् स्यान्मूलनाहकः
अग्रे त्र्यङ्गुलविस्तारश्शङ्कुर्वा सर्ववास्तुषु १३
हस्तार्धायामनाहोऽग्रनाहस्तत्पादपादयुक्
एकाङ्गुलक्षयादायो मूलनाहो विधीयते १४
ब्राह्मणादिचतुर्वर्णक्रमेण परिकल्पयेत्
देवादीनां शिरोऽग्रं स्याद्द्विजानां छत्रसन्निभम् १५
कुशकीचकपत्राभं भूपानां वैश्यजन्मनाम्
कदलीमुकुलाग्रं स्याच्छूद्राणां मण्डलाग्रकम् १६
बैल्वं कीलं सुराणां स्यात्खादिरं सालमाग्रजम्
आसनं वाकुलं राज्ञां तैन्दुकं चापि खादिरम् १७

कीलं विशां च शूद्राणां सर्वसामान्यमेव वा
योजयेद्देशिको धीमान् ख्यातशङ्कौ पुरातने १८
द्रुमैरेभिः प्रकर्तव्यो ग्रामादिर्भ्रमवर्जितः
मध्याद्यन्तस्थितैः कीलैर्मण्डलैर्नवभिर्युतैः १९
वितस्त्यन्तरितैस्तावत्कीलं सूचिसमन्वितम्
ग्रामकेदारशैलं स्यात्सूचिरेकाङ्गुलायता २०
यवोदनमुखां हेमरूप्यताम्रमयीं तथा
पञ्चगव्येन संशोध्य भूयश्शुद्धोदकेन वा २१
हृदयेन तु मन्त्रेण अस्त्राद्भिः प्रोक्षयेत्तदा
गन्धादिभिस्समभ्यर्च्य वास्तुवृद्धिमनुस्मरन् २२
मण्टपे वेदिकामध्ये पञ्चहस्तविनिर्मिते
शङ्कुस्थानोत्तरगते क्रियामेनां समाचरेत् २३
अहताभ्यां सुवासोभ्यां सर्वतः परिवेष्टितम्
कृतकौतुकबन्धस्तु स्थण्डिलस्थं समर्चयेत् २४
पूर्वस्थवास्तुहोमं च स्थण्डिले सम्यगाचरेत्
ततः प्रभाते विमले सुवारे तु शुभे दिने २५
शङ्कुं प्रक्षाल्य तोयेन गन्धाद्यैः पूजयेद्धृदा
दिग्देवताश्च संपूज्य गन्धाद्यैश्च स्वनामभिः २६
भूषणोपेतपञ्चाङ्गस्सोष्णीषस्सोत्तरीयकः
संप्राप्तदक्षिणैर्विप्रैश्शिल्पिना च समन्वितः २७
शङ्कुस्थानं तु संप्राप्य पुण्याहं वाचयेत्ततः
इन्द्रादीन् परितश्चेष्ट्वा शङ्कुस्थापनमारभेत् २८
शङ्कुप्रमाणया रज्ज्वा शङ्कुव्यासार्धयुक्तया
वृत्तं संभ्राम्य तन्मध्ये स्थापयेत्तमिनोदये २९
पूर्वापराह्णयोश्शङ्कोश्छायारेखागता यथा
तद्बिन्दुद्वयगं सूत्रं पूर्वापरदिगिष्यते ३०

यवस्य तु तुरीयांशं पूर्वापराह्णयोर्गता
बिन्दुद्वयान्तरं भ्रान्तश्शम्बराननपुच्छकम्  ३१
दक्षिणोत्तरमित्युक्तमन्यथा वापि कथ्यते
ध्रुववेधेन वोदीचीं प्राचीं वा ध्रुवतारया  ३२
पुष्येण श्रवणेनाथ साधयेद्विषुवोदयात्
मितक्षेत्रार्धमानेन चतुरश्रं तु साधयेत्  ३३
कर्णाभ्यां भुजसाम्यं तु कम्पनेनार्जवे स्थिते
जलेन तलसाम्यं स्यान्मध्यमे वाथ कर्णिके  ३४
धाम्नि प्राच्यथवा साध्यनिश्चितान् पूर्ववास्तुनः
प्राचीतरं तु यत्स्थानं सर्वदोषकरं भवेत्  ३५

इति कामिकाख्ये महातन्त्रे शङ्कुस्थापनविधिः पञ्चदशः पटलः

## मानोपकरणविधिः

मानोपकरणं वक्ष्ये सर्वेषां च विशेषतः
परमाणुक्रमाद्वृद्ध्या मानाङ्गुलमिति स्मृतम्  १
परमाणुरिति ख्यातो योगिनां दृष्टिगोचरः
रथरेणुश्च वालाग्रं लीक्षा यूको यवस्तथा  २
क्रमशोऽष्टगुणाः प्रोक्ता यवैष्षड्भिश्च सप्तभिः
अष्टाभिश्च क्रमेणैव कन्यसादिविभेदतः  ३
अङ्गुल्यस्त्रिविधाः प्रोक्ता यावत्यश्शिवशासने
शालिभिश्च त्रिभिस्सार्धैश्चतुर्भिश्च तथायतैः  ४
शाल्युद्भवास्समाख्यातास्त्वङ्गुलास्त्रिविधास्त्विह
सार्धैष्षड्भिर्यवैर्वाथ सार्धैस्सप्तभिरेव वा  ५
अङ्गुलास्त्रिविधाः प्रोक्तास्सार्धैरष्टभिरेव वा
मध्यमाङ्गुलिमध्यस्थपर्वदीर्घं तु यद्भवेत्  ६
श्रेष्ठं मात्राङ्गुलं प्रोक्तं पादहीनं तु मध्यमम्

अर्धोनमधमं प्रोक्तं मात्राङ्गुलविभेदतः ७
नवधा मानमुद्दिष्टं नराद्यङ्गुष्ठतोऽपि वा
एवं मात्राङ्गुलं प्रोक्तं यागादीनां प्रशस्यते ८
अङ्गुलैस्सूर्यसंख्यातैर्वितस्तिरिह कथ्यते
तद्द्वयं हस्तमुद्दिष्टं स किष्कुरिह सम्मतः ९
पञ्चविंशतिमात्रं तु प्राजापत्य इति स्मृतः
मात्रैस्तु षड्विंशतिभिर्धनुर्मुष्टिः प्रकीर्तितः १०
सप्तविंशतिभिर्मात्रैर्धनुर्ग्रह उदाहृतः
मानाङ्गुलोत्थहस्तास्तु शास्त्रेऽस्मिन् संप्रकीर्तिताः ११
पौरुषः पुरुषाज्जातस्त्वङ्गुष्ठाद्दक्षिणादिह
तलं प्रसार्य चाङ्गुष्ठसहितैश्चतुरङ्गुलैः १२
कनिष्ठाद्यैः क्रमेणैव यवगोकर्णसंज्ञकैः
वितस्तिः कथितश्चैवं प्रादेशस्तदनन्तरम् १३
एवं विविध उद्दिष्टो हस्तस्सर्वेषु वास्तुषु
प्राजापत्यस्य मानेन मण्डपे विग्रहेऽपि च १४
मालिकायां सभायां च विशालायां च योजयेत्
राजधान्यादिकं राजभवनं च तटाककम् १५
दुर्गं चैव धनुर्मुष्टिकरणैश्चैव कारयेत्
धनुर्ग्रहेण कुर्यात्तु रथ्याध्वानं विशेषतः १६
प्राकारं किष्कुमानेन यानं च शयनं नयेत्
किष्कुमानेन वै सर्वमापन्नस्तु समाचरेत् १७
वितस्तिना विधातव्यं यानं च शयनं तथा
लिङ्गं च प्रतिमां चैव द्वारस्तम्भं च चूलिकम् १८
यदस्य चोपकरणं तत्सर्वं चाङ्गुलेन तु
अत्यल्पं तु यवेनैवमाप्नुयान्मानवित्तमैः १९
आयादिलक्षणं चैवमेभिरेव तु सम्मतम्

हस्तैश्चतुर्भिरुद्दिष्टो दण्डो रज्जुस्तदष्टभिः २०
दण्डेन मापयेद्ग्रामं नगरं पत्तनादिकम्
अध्वानं रज्जुना बध्वा क्षेत्रं चैव तु मानयेत् २१
रज्जुं कुर्यात्तु कार्पासपट्टसूत्रादिभिर्बुधः
न्यग्रोधवल्कलेनाथ तालकेतकवल्कलैः २२
कनिष्ठाङ्गुलिनाहा च त्रिवृता ग्रन्थिवर्जिता
देवविप्रमहीपानां वैश्यशूद्रैर्विवर्जिता २३
तालश्च केतकी चैव न्यग्रोधो धातकी तथा
शणकं च क्रमेणैव देवादीनां प्रशंसिताः २४
नालिकेरोत्थरज्जुश्च सर्वेषामपि शंसितः
नालिकेरस्य पत्रस्य मापनं सर्वसिद्धिदम् २५
दलनं द्विविधं प्रोक्तमोजयुग्मक्रमेण तु
पूर्वोत्तरमुखेनाथ प्रारम्भे दलनं भवेत् २६
तेनैव मापनं कुर्यात्प्रतिमादौ विशेषतः
तत्पत्रसिरया वापि क्षुद्रस्कन्धेन मापयेत् २७
सारदारूद्भवो हस्तदण्डो ग्रन्थ्या विवर्जितः
स्वायतो दीर्घसंयुक्तस्त्वर्धमात्रप्रविस्तरः २८
त्रिपादविस्तरो वा स्यादेकाङ्गुलसुविस्तरः
तत्तदर्धघनोपेतो विस्तारेण समोऽथवा २९
चतुरश्रो भवेद्यस्तु दण्डो मानुष ईरितः
मूले स्वायम्भुवं रूपं मध्ये लक्ष्मीस्वरूपकम् ३०
विश्वकर्मस्वरूपं तदग्रे तु परिकल्पयेत्
अयं देवेषु योग्यस्स्याद्दण्डो द्व्यङ्गुलविस्तरः ३१
सपादो वाथ सार्धो वा सुवृत्तश्चित्रितो नु वा
हेम्ना वा राजतेनाथ ताम्रेणैवायसाथवा ३२
मूलाग्रवलयोपेतो दण्डो मानविनिर्णये ३३

इति कामिकाख्ये महातन्त्रे मानोपकरणविधिः षोडशः पटलः

## पदविन्यासविधिः

अथ वक्ष्ये विशेषेण पदविन्यासलक्षणम्
सकलं पदमेकं स्यात्पेचकं तु द्वितीयकम् १
पदं पीठं तृतीयं स्यान्महापीठमतः परम्
उपपीठं ततः पश्चादुग्रपीठमतः परम् २
स्थण्डिलं सप्तमं विद्यान्मण्डूकाख्यं तथाष्टमम्
परमीशपदं चापि नवमं परिकीर्तितम् ३
दशमं चासनं चैकादशं स्थानीयमुच्यते
देशीयं द्वादशं प्रोक्तं पदं तूभयचण्डकम् ४
चतुर्दशपदं भद्रं महासनमिति स्मृतम्
पद्मगर्भपदं पञ्चदशमं तु प्रकीर्तितम् ५
षोडशं त्रियुतं सप्तदशमं वृत्तभोगकम्
अष्टादशपदं चात्र कर्णाष्टकमिति स्मृतम् ६
एकोनविंशतिपदं ज्ञेयं गणितपादकम्
स्याद्विंशतिपदं सूर्यविशालं नामतः पदम् ७
स्यादेकविंशतिपदं सुसंहितसमाह्वयम्
द्वाविंशतिपदं चात्र पदं सुप्रतिकान्तकम् ८
स्यात्त्रयोविंशति प्रोक्तं विशालं नामतः पदम्
स्याच्चतुर्विंशतिपदं विप्रगर्भमिति स्मृतम् ९
पञ्चविंशमिह प्रोक्तं विश्वेशाख्यं पदं बुधैः
यत्तु षड्विंशतितमं तत्स्याद्विपुलभोगकम् १०
स्यात्सप्तविंशतितमं पदं विप्रतिकान्तकम्
यत्त्वष्टाविंशतिपदं विशालाक्षपदं स्मृतम् ११
विप्रभुक्तिकसंज्ञेयमेकोनत्रिंशकं पदम्

पदं त्रिंशत्तमं प्रोक्तं विश्वसारं पुरातनम्  १२
एकत्रिंशत्पदं यत्तु भवेदीश्वरकान्तकम्
इन्द्रकान्तपदं यत्तु द्वात्रिंशत्कथितं त्विह  १३
सकले मध्यमे ब्रह्मा पूज्यः प्रागादिसूत्रके
इन्द्रं यमं च चरुणं सोमं गन्धादिनार्चयेत्  १४
अस्मिन् देवादयः पूज्याश्चाग्निकार्यं च भोजनम्
कुर्यात्त पेचकपदे कर्णसूत्रद्वयान्विते  १५
अष्टसूत्रगता लोकपाला मध्ये प्रजापतिः
तन्मध्ये निष्कलं बेरं स्थापयेद्देशिकोत्तमः  १६
सर्वमङ्गलकार्यं च क्षुद्रग्रामगृहादिकम्
कर्णसूत्रद्वयेनैव संयुक्तं पीठमिष्यते  १७
पूर्वोक्तास्तु सुरा ये तु पदस्थास्ते प्रकीर्तिताः
एतत्पदं मठादीनां तच्च ग्रामादियोग्यकम्  १८
क्षुद्रग्रामादिके चेष्टं पेचकं तु तथैव हि
कर्णसूत्रद्वयोपेतं महापीठं तु कारयेत्  १९
मध्ये चतुष्पदं ब्रह्मा भुङ्क्तेऽत्र मुनिसत्तमाः
ईशो जयन्त आदित्यो भृशोऽग्निर्वितथो यमः  २०
भृगुश्च पितृसुग्रीवौ वरुणः शेषमारुतौ
मुख्यस्सोमोऽदितिश्चेति सूत्रस्था बाह्यदेवताः  २१
महापीठपदं प्रोक्तं क्षुद्रग्रामादियोम्यकम्
उपपीठपदे चैकं भुङ्क्ते मध्ये पितामहः  २२
अर्यमा च विवस्वांश्च मित्रश्च पृथिवीधरः
चतुर्दिक्षु गता देवा एकैकपदभोगिनः  २३
सावित्रश्चेन्द्रजश्चैव रुद्रजस्त्वापजस्तथा
आग्नेयादिचतुर्दिक्षु भुञ्जते देवताः पदम्  २४
ईशश्च सत्यकश्चैव महेन्द्रादित्यवह्नयः

गन्धर्वश्च तथा देवो गृहक्षतयमौ तथा २५
पितरश्चासुराश्चैव पुष्पदन्तजलेश्वरौ
वायुश्चापि गजश्चैव भल्लाटस्सोम एव च २६
भुञ्जते पदमेकैकं कर्णसूत्रद्वयान्वितम्
उपपीठपदं नाम्ना ग्रामादीनां शुभावहम् २७
उग्रपीठमिदं मध्ये कर्णसूत्रद्वयान्वितम्
मध्ये चतुष्पदं ब्राह्ममन्तरावरणे ततः २८
अर्यमा च विवस्वांश्च मित्रश्च पृथिवीधरः
प्रागादि भुञ्जते देवा द्विपदं कोणवर्जितम् २९
सविता च तथेन्द्रश्च रुद्रश्चापस्तथैव च
आग्नेयकोणमारभ्य भुञ्जते देवताः पदम् ३०
बहिरावरणं वक्ष्ये पावकादिचतुर्ष्वपि
कोणेषु भुञ्जते देवाः पदानामर्धकं क्रमात् ३१
आग्नेयस्य तु पूर्वार्धे भृशो वह्निस्तु पश्चिमे
नैर्ऋतस्य तु पूर्वार्धे गृहस्स्यात्पश्चिमे स्वयम् ३२
पश्चिमार्धे तु वायव्यां शेषो वायुस्तु पूर्वगः
ईशानपश्चिमार्धे तु दितिरीशस्तु पूर्वगः ३३
प्राच्यामुत्तरमारभ्य प्रादक्षिण्यक्रमेण तु
जयन्तेशो महेन्द्रश्च आदित्यस्सत्यकस्तथा ३४
दक्षिणे वितथश्चैव गृहक्षतयमौ तथा
गन्धर्वश्च तथा देवाश्चत्वारः पदभोगिनः ३५
पश्चिमे चैव सुग्रीवः पुष्पदन्तो जलेश्वरः
असुरश्च तथा देवाश्चत्वारश्चोत्तरे मताः ३६
मुख्यो भल्लाटकस्सोमो भृगुरित्यधिदेवताः
उग्रपीठमिदं नाम ग्रामादीनां सुपूजितम् ३७
स्थण्डिलं सप्तसप्तांशं कर्णसूत्रद्वयान्वितम्

मध्ये नवपदं ब्राह्ममन्तरावरणे ततः ३८
अर्यमा च विवस्वांश्च मित्रश्च पृथिवीधरः
पूर्वादिक्रमयोगेन त्रिपदं भुञ्जते सुराः ३९
आग्नेयादिषु कोणेषु सावित्राद्याश्च देवताः
सावित्रश्चेन्द्रजश्चैव रुद्रजस्त्वापजस्तथा ४०
ईशानपदमारभ्य बहिरावरणे सुराः
ईशानश्च जयन्तश्च महेन्द्रादित्यसत्यकाः ४१
भृशो वह्निरिति प्रोक्ताः पूर्वस्यां दिशि देवताः
वितथो गृहक्षतश्चैव यमो गन्धर्व एव च ४२
भृङ्गराजोऽथ निर्ऋतिर्दक्षिणस्यां तु देवताः
सुग्रीवपुष्पदन्तौ च वरुणासुरशेषकाः ४३
वायुरित्युच्यते तस्मिन् पश्चिमे देवता मताः
मुख्यो भल्लाटकस्सोमो ऋभुर्ह्यदितिरेव च ४४
उत्तरस्यां दिशि प्रोक्ता देवता बलियोग्यकाः
स्थण्डिलाख्यपदं चैतद्गृहारामादिपूजितम् ४५
मण्डूकाख्यं चतुष्षष्टिपदं कर्णद्वयान्वितम्
मध्ये चतुष्पदं ब्रह्मा तन्मुखस्थाश्चतुस्सुराः ४६
त्रिपदाश्चापवत्साद्याष्षोडशार्धांशभोगिनः
चतुर्दिशि स्थिता बाह्ये षोडश द्विपदेश्वराः ४७
तत्पार्श्वयोर्द्वयोश्चाष्टावेकैकपदभोगिनः
अग्रहारादियोग्यं तन्मण्डूकाख्यपदं त्विह ४८
परमेशपदं त्वेतदेकाशीतिपदान्वितम्
कर्णसूत्रद्वयोपेतं कल्पनीयं विचक्षणैः ४९
मध्ये नवपदं ब्रह्मा भुङ्क्ते तस्य चतुर्मुखः
चतस्रो देवताष्षट् षट् पदभोगपरास्स्मृताः ५०
द्विपदाः कोणगाश्चाष्टौ बाह्ये त्वेकपरायणाः

मराडूकेऽत्र समा देवाः कथ्यन्ते च यथाक्रमात् ५१
ईशानश्चैव पर्जन्यो जयन्तश्च महेन्द्रकः
आदित्यस्सत्यकभ्रंशावन्तरिक्षश्च पूर्वगाः ५२
वह्निः पूषा च वितथो गृहक्षतयमौ तथा
गन्धर्वो भृङ्गराजश्च मृगश्चैव तु दक्षिणे ५३
निर्ऋतिर्दौवारिकश्चैव सुग्रीवः पुष्पदन्तकः
वरुणश्चासुरश्चैव शेषो रोगस्तु पश्चिमे ५४
वायुर्नागस्तथा मुख्यो भल्लाटस्सोम एव च
गजश्चाप्यदितिश्चैव दितिश्चैव तथोत्तरे ५५
बाह्यदेवा इमे प्रोक्तास्त्वन्तरावरणे पुनः
अर्यमा च विवस्वांश्च मित्रश्च पृथिवीधरः ५६
चतुर्दिक्षु गता देवा ईशानादौ च कोणके
आपश्चैवापवत्सश्च सवितापि सावित्रकः ५७
इन्द्रश्चेन्द्रजयश्चैव रुद्रो रुद्रजयस्तथा
मध्ये ब्रह्मा स्थितः प्रोक्तो मराडूके चापि तत्परे ५८
चरकी च विदारी च पूतना पापराक्षसी
ईशानादिषु कोणेषु शूलस्थाः पदवर्जिताः ५९
स्कन्दोऽर्यमा च जम्भश्च पिलिपिञ्छो द्विजोत्तमाः
पूर्वादितस्समारभ्य चतुर्दिक्षु व्यवस्थिताः ६०
ग्रामाग्रहारवेश्मादियोग्यं परमशायिकम्
आसनं कर्णसूत्राभ्यां युक्तं तु परिकल्पयेत् ६१
ब्रह्मा षोडशभागस्थो तन्मुखस्थाष्टभागिनः
आदित्यश्च यमश्चैव वरुणस्सोम एव च ६२
द्विपदाश्चापवत्साद्या द्विपदा एव कीर्तिताः
क्षेत्रं शतपदं दुर्गपुराट्टालकभूमिषु ६३
नगरी खेटकग्रामवेश्मादिषु च कथ्यते

स्थानीयं कर्णसूत्राभ्यां युक्तं तु परिकल्पयेत् ६४
मध्ये बह्मा पदानां तु भजते पञ्चविंशतिम्
कोणेशादिपदे बाह्ये त्वीशाग्निपितृवायवः ६५
अन्ये त्वेकपदे ज्ञेयाः पर्जन्याद्या यथाक्रमात्
चत्वारस्त्वर्यमाद्यास्तु पूर्वादिदशभागिनः ६६
आपवत्सादयः कोणेष्वष्टौ द्विपदभागिनः
यथास्थानाश्चरक्याद्याश्चाष्टौ बाह्ये प्रकीर्तिताः ६७
ग्रामादियोग्यं विज्ञेयं स्थानीयाख्यमिदं पदम्
देशीयाख्यं पदं कर्णसूत्राभ्यां परिकल्पयेत् ६८
षट्त्रिंशद्भागभुक् ब्रह्मा मुखस्था द्वादशांशिनः
आदित्यश्च यमश्चैव वरुणस्सोम एव च ६९
द्विपदा बाह्यवीथिस्थाश्चरक्याद्यास्तु पूर्ववत्
देशीयाख्यपदं चैदमग्रहारादिपूजितम् ७०
चण्डितं तूभयाख्यं तु कर्णसूत्रद्वयान्वितम्
पदान्येकोनपञ्चाशन्मध्ये ब्रह्माधितिष्ठति ७१
बहिरावणे प्राच्यामादित्याद्यास्त्रिभागिनः
कोणस्थास्त्रिपदा ज्ञेया ईशाग्निपितृवायवः ७२
चत्वारस्त्वर्यमाद्यास्तु चतुर्दशपदे स्थिताः
पूर्ववच्चापवत्साद्या बाह्यस्थाः परिकीर्तिताः ७३
अग्रहारादियोग्यं तत्पदं तूभयचण्डितम्
प्राक् च पञ्चदशोदक् च सूत्राणि परिकल्पयेत् ७४
कर्णसूत्रद्वयोपेतं प्राग्वद्भुक्तिं प्रकल्पयेत्
अग्रहारादियोग्यं स्याद्भद्रासनमिदं पदम् ७५
पद्मगर्भमिदं चान्यत् कर्णसूत्रद्वयान्वितम्
एकाशीतिपदं मध्ये भुङ्क्ते लोकपितामहः ७६
आदित्याद्यास्त्रिभागास्स्युः कोणेशाः पञ्चनायकाः

अष्टादशांशभागस्थाश्चार्यमाद्याः प्रकीर्तिताः ७७
शेषं पूर्ववदुद्दिष्टमग्रहारादिपूजितम्
प्राञ्चि सप्तदशोदञ्चि सूत्राणि परिकल्पयेत् ७८
कर्णसूत्रद्वयोपेतं पदभुक्तिं च पूर्ववत्
अग्रहारादियोग्यं स्यात्त्रियुतं परिकीर्तितम् ७९
वृत्तभोगपदञ्चान्यत्कर्णसूत्रद्वयान्वितम्
एकविंशच्छतपदं ब्रह्मा भुङ्क्ते तु मध्यमे ८०
इन्द्रादिलोकपालाश्च त्वष्टौ पञ्चपदेश्वराः
द्वाविंशद्भोगिनो देवा मुखस्थाः परिकीर्तिताः ८१
आपवत्सादयोऽष्टौ हि द्विपदास्तु प्रकीर्तिताः
वृत्तभोगमिदं प्रोक्तं ग्रामादौ संप्रयोजयेत् ८२
एकोनविंशति प्राञ्चि तावन्ति स्युरुदञ्चयपि
कर्णाष्टकमिदं विद्यादग्रहारादिपूजितम् ८३
गणिताख्यपदं कर्णसूत्राभ्यां संयुतं भवेत्
एकोनसप्ततिपदं तन्मध्ये ब्राह्मकं भवेत् ८४
षट्त्रिंशतिपदे देवा मुखस्थाः परिकीर्तिताः
त्रिपदा लोकपालास्स्युरन्तरस्था द्विभागिनः ८५
आपवत्सादयश्चाष्टौ पार्श्वदेवाः प्रकीर्तिताः
प्रोक्तं गणितपादं तु ग्रामादौ परिकल्पयेत् ८६
ततस्सूर्यविशालं स्यात्पूर्ववत्परिकल्पयेत्
सुसंहितपदं कर्णसूत्रयुक्तं प्रकल्पयेत् ८७
मध्ये पदानि धातुश्च द्विशतं पञ्चविंशति
अर्यमादिचतुष्कस्य त्रिंशत्त्रिंशत्पदानि च ८८
ईशादिकोणसंस्थानां चतुर्णां पदपञ्चकम्
आदित्यादिचतुर्णां तु त्रिपदं परिकीर्तितम् ८९
द्वे द्वे पदे च प्रत्येकं पर्जन्यादौ प्रकल्पयेत्

पूर्ववच्चापवत्सादेरष्टकस्य द्वयं द्वयम् ९०
चरक्याद्यष्टकं तद्वद्बाह्ये तु परिकीर्तितम्
एतत्सुसंहितं नाम पदं ग्रामादिपूजितम् ९१
पदं सुप्रतिकान्ताख्यं कर्णसूत्रद्वयान्वितम्
पूर्वोक्तेन प्रकारेण पदं ग्रामादिपूजितम् ९२
विशालं कर्णसंयुक्तं पण्डितेशैः प्रकल्प्यताम्
द्विशतं च नवाशीति मध्ये ब्रह्मपदानि च ९३
अर्यमादिचतुष्कस्य चतुस्त्रिंशत् पृथक्पृथक्
पञ्चाशल्लोकपालास्स्युरन्यत्सर्वं समानकम् ९४
विशालाख्यमिदं प्रोक्तमग्रहारादिपूजितम्
विप्रगर्भं यथापूर्वमग्रहारादिपूजितम् ९५
विश्वेशाख्यं पदं कर्णयुक्तं तु परिकल्पयेत्
त्रिशतञ्चैकषष्टिञ्च मध्ये ब्रह्मपदानि च ९६
अर्यमाद्या यथापूर्वं बाह्ये देवास्त्रिभागिनः
अग्रहारादियोग्यं स्याद्विश्वेशाख्यमिदं पदम् ९७
भोगं विपुलपूर्वं यदग्रहारादिपूजितम्
पदं विप्रतिकान्तं च कर्णसूत्रद्वयान्वितम् ९८
चत्वारिंशत्तथैकं च पदान्यत्र चतुश्शतम्
ब्रह्मा भुङ्क्तेऽर्यमाद्यास्तु पूर्ववत्परिकल्पयेत् ९९
कोणस्थाः पञ्चभागास्स्युरन्ये त्रिपदभागिनः
इदं विप्रतिकान्ताख्यमग्रहारादिपूजितम् १००
विशालाद्यं कर्णयुक्तं पूर्ववत्परिकल्पयेत्
त्रिंशत्प्राञ्चि तथोदञ्चि सूत्राणि परिकल्पयेत् १०१
मध्ये पञ्चशतं ब्रह्मा भुङ्क्ते नव च विंशतिम्
चतुर्णामर्यमादीनां षट्चत्वारिंशदंशकम् १०२
पञ्चाशल्लोकपालास्स्युः पर्जन्याद्यास्त्रिभागिनः

विप्रभुक्तिरिति ज्ञेयं पदं ग्रामादियोग्यकम् १०३
विश्वसारं यथापूर्वमेतद्ग्रामादिपूजितम्
पदमीश्वरकान्तं तु कर्णसूत्रद्वयान्वितम् १०४
ब्रह्मणाष्टशतं मध्ये पञ्चविंशतिसंयुतम्
अर्यमादिचतुष्कस्य पञ्चाशत्प्रतिवेदितम् १०५
अष्टानां लोकपालानां त्रयो भागाः पृथक्पृथक्
पर्जन्यादेस्तु चत्वारो भागाः प्रत्येकमीरिताः १०६
एतदीश्वरकान्ताख्यमग्रहारादिपूजितम्
इन्द्रकान्तं यथापूर्वमग्रहारादिपूजितम् १०७
एवमूर्ध्वं च विज्ञेयं यावत्स्यात्तु परार्धकम्
चतुष्षष्टिपदं दैवं मानुषं पारमेश्वरम् १०८
परमेशपदं योज्यं चतुर्णामपि वर्णिनाम्
त्रैवर्णिकानां वा कुर्यादग्रहारादिवास्तुषु १०९
चतुष्षष्टिपदं विप्रभूपयोश्च विशेषतः
विट्छूद्रयोस्तथैकोनपञ्चाशत्पदमीरितम् ११०
सर्वं सर्वत्र चेष्टं वा शास्त्रेऽस्मिन् संप्रकीर्तितम्
चतुष्षष्ट्येकाशीत्याख्यमासनं च त्रिधा मतम् १११
सकलादिषु सर्वेषु पदेष्वेव पदत्रयम्
वास्तुकर्मणि शस्तं स्याद्ग्रामादौ च गृहादिषु ११२
अथवान्यप्रकारेण सकलादि विधीयते
कर्णसूत्रविहीनं वा मध्ये कर्णद्वयान्वितम् ११३
अथवानेककर्णस्थसूत्रैरन्वितमेव वा
पदं सर्वं विधेयं स्यादेवं बुद्ध्या प्रकल्पयेत् ११४
अथ वृत्तपदन्यासं प्रवक्ष्यामि यथाविधि
चक्रवत् पञ्चसूत्राणि सान्तराणि समानि च ११५
द्वात्रिंशच्च चतुर्विंशद्द्विरष्टाष्टैकभागिनः

एकाशीतिपदं ह्येतज्ज्ञेयं विषमसंस्थितिः ११६
अष्टाविंशत्तथा विंशद्द्वादशाष्टार्धभागतः
चतुष्षष्टिपदं चैतच्चतुर्वृत्ते प्रकल्पयेत् ११७
कुम्भकस्य तु विन्यासं सम्मिश्रमुभयोर्न्यसेत्
चतुष्षष्टिपदं वास्तु परमैशन्तु वास्तुकम् ११८
ग्रामादि चोपवास्तु स्याद्वास्तव्यं स्याद्गृहादिकम्
स्त्रीपुंसोरिव संयोगस्तथा योज्यं विचक्षणैः ११९
जयन्ते मेषसंस्थानमर्यम्णि वृषभस्थितिः
भृशांशे मिथुनं विद्यात्कुलीरो वितथे भवेत् १२०
व्यञ्जके केसरी भृङ्गे कन्या सुग्रीवके तुला
मित्रे तु वृश्चिकश्शेषे धनुर्मुख्ये झषस्थितिः १२१
पृथिवीधरके कुम्भस्त्वदितौ मीन उच्यते
चराचरोभया ज्ञेयास्तत्तद्देवांशके न्यसेत् १२२
अश्विन्यादीनि सर्वाणि नक्षत्राणि यथाक्रमम्
प्रदक्षिणगतान्येव मेषादिषु विभागतः १२३
आदित्ये सूर्यवारस्स्यादग्नावङ्गारको मतः
यमे तु गुरुवारस्स्यान्नैर्ऋतौ बुधवारकम् १२४
वरुणे तु भवेच्छुक्रो वायव्ये चार्कजस्तथा
सोमे तु सोमवारस्स्यादीशाने राहुसंस्थितिः १२५
मध्ये केतुर्भवेद्वास्तुशास्त्रेऽस्मिन् कामकाह्वये
तद्वशाद्विहितं सर्वं सर्वसिद्धिफलप्रदम् १२६
स्त्रीलिङ्गं विषमं ज्ञेयं समं पुल्लिङ्गकं भवेत् १२७
इति कामिकाख्ये महातन्त्रे पदविन्यासविधिः सप्तदशः पटलः

## सूत्रनिर्माणविधिः

अतः परं प्रवक्ष्यामि सूत्रनिर्माणकं द्विजाः

प्रथमं ब्रह्मणस्स्थानात्प्राक्सूत्रं सबलिं न्यसेत् १
द्वितीयं स्यादुदक्सूत्रं तस्मिन्नपि बलिं क्षिपेत्
चतुरश्रायताश्रस्थपर्यन्तं स्यात्तृतीयकम् २
कर्णसूत्रं चतुर्थं स्यात्पञ्चमं चार्धपञ्चकम्
षष्ठं स्यात्तदनन्तर्यं सप्तमं मध्यकर्णिकम् ३
अष्टमं चार्धकर्णं स्यान्नवमं कर्णिकान्तरम्
एवमन्यत्तु विज्ञेयं यावद्द्वात्रिंशकं पदम् ४
पर्यन्तसूत्रमाद्यं स्यात्ततो विन्याससूत्रकम्
प्रमाणसूत्रमन्यत्स्यादेवं सूत्रद्वयं भवेत् ५
यदुपानादिमानं तत्कूटकोष्ठावसानकम्
पर्यन्तसूत्रमानं तत्सूत्रं प्रामाणिकं परम् ६
गर्भभित्यादिमानार्थं सूत्रं देवपदोचितम्
तद्धि विन्याससूत्रं स्याज्ज्ञातव्या सूत्रकल्पना ७
अथ क्षेत्रं तु विभजेत् षष्ट्युत्तरशतत्रयम्
तेष्वेकभागं सूत्रस्य मानं तत्प्राण उच्यते ८
सूत्राणि प्राञ्चि कार्याणि अनुकार्याण्युदञ्चि हि
प्राणवायुप्रमाणेन शास्त्रेऽस्मिन् कीर्तितानि हि ९
तानि पुंस्त्रीस्वरूपाणि कीर्तितानि क्रमेण तु
प्राणवायुप्रमाणेन द्विगुणाश्चानुवंशकाः १०
वास्तुमध्ये महावंशपार्श्वगास्तु प्रकीर्तिताः
त्रिगुणश्च महावंशो वास्तुमध्ये प्रकीर्तितः ११
प्राणे त्रिगुणकाश्चानुसिराः कर्णगता मताः
महासिराश्च तत्रस्था मध्ये कर्णगता मताः १२
प्राणवायुप्रमाणेन त्रिगुणास्ताः प्रकीर्तिताः
महासिराश्चानुसिरास्संज्ञेयास्तु नपुंसकाः १३
वास्तुमध्ये तु केतुस्स्यान्महामर्म तदुच्यते

महासिरामहामर्मपर्यन्ते सन्धिरिष्यते  १४
वंशसूत्रसिरासङ्गाच्छूलमित्यभिधीयते
महाशूलं चतुष्प्राणं त्रिगुणं चानुशूलकम्  १५
शुद्धं पदं तु मर्म स्याल्लाङ्गलं कोणसंगतम्
चतुष्कं तु चतुस्सूत्रैष्षट्कं षट्सूत्रयोगतः  १६
अष्टकं चाष्टसूत्राणां योगेन परिकीर्तितम्
पदस्य चाष्टमांशेन मर्ममानं प्रकीर्तितम्  १७
पदाष्टनवदिग्भागे भगवान्सूत्रवित्स्मृतिः
त्रिहस्तनिर्मिते क्षेत्रे यवमानं तु सूत्रकम्  १८
अन्येषां रोममात्रेण प्रतिहस्तं प्रबन्धयेत्
हृदये वंशके शूले सूत्रसन्धौ च मर्मके  १९
सिरायामष्टके षट्के चतुष्के लाङ्गलेऽपि च
देवालयादिकं नोक्तं कृतञ्चेत्कुलनाशनम्  २०
एषां स्वरूपकाष्टांशं नवांशं परिहृत्य च
भित्तिस्तम्भगृहादीनि कारयेद्देशिकोत्तमः  २१
गृहपीडा न कर्तव्या पदसूत्रेण धीमता
यदङ्गं वास्तु मर्त्यस्य बाध्यते सर्वकर्मणि  २२
तदङ्गे तु तदीयस्य बाधाः परिहरेत्ततः  २३

इति कामिकाख्ये महातन्त्रे सूत्रनिर्माणविधिः अष्टादशः पटलः

## वास्तुदेवबलिविधिः

अथ वक्ष्ये विशेषेण वास्तुदेवबलिक्रियाम्
रात्रौ कुर्याद्बलिं विद्वानह्नि ग्रामादिवास्तुषु  १
रात्रौ वाथ दिवावाथ गृहदेवालयादिषु
सुस्नातो नववस्त्रस्तु सोष्णीषस्सोत्तरीयकः  २
पञ्चाङ्गभूषणोपेतश्चन्दनाद्यनुलेपकः

तादृशेन च तत्कर्त्रा युक्तः कर्मेदमाचरेत् ३
ब्राह्मणान् भोजयित्वा तु पुण्याहं वाचयेत्ततः
तद्देशे मण्डलं कृत्वा गोमयेन च बुद्धिमान् ४
तत्र कूर्चं विनिक्षिप्य सम्बुद्ध्यन्तं स्वनाम च
उक्त्वा त्वावाहयामीति चावाह्यार्चनमाचरेत् ५
चतुर्थ्यन्तं स्वनामोक्त्वा नमस्कारान्तसंयुतम्
पाद्यादिनिखिलान् दत्वा स्वस्वोक्तं तु बलिं क्षिपेत् ६
ब्रह्माणं पूजयेत्पूर्वं सघृतं पायसं क्षिपेत्
फलान्यर्यमणे दद्यात्तिलमाषोदनं तथा ७
दद्याद्विवस्वतेऽपूपं दधि मित्राय दापयेत्
पृथ्वीधराय सद्गन्धान् दापयेत्सुसमाहितः ८
नवनीतमथो दद्यात्पर्जन्याय विशेषतः
जयन्ताय घृतं दद्यात् महेन्द्रः कुष्ठभाग्भवेत् ९
मधुपर्कं तथा दद्यादादित्याय विशेषतः
सत्यकाय वदर्यास्तु फलं मधुसमन्वितम् १०
भ्रंशाय चूर्णं माषस्य रजनीभक्तसंयुतम्
दापयेदन्तरिक्षाय तपनं दुग्धसर्प्पिषा ११
अग्नये दुग्धसंयुक्तं ओदनं शिवसंयुतम्
पूष्णे च वितथे दद्यात्पक्वान्नं सुसमाहितः १२
गृहक्षताय शिम्बान्नं दद्यान्मधुसन्वितम्
यमाय पायसं दद्याद्गन्धर्वे गन्धमुच्यते १३
सामुद्रं भृङ्गराजाय मस्त्यं मस्त्योदनं मृगे
दद्यान्निर्ऋतये तैलं पिण्याकान्नं च बुद्धिमान् १४
दौवारिके दधि प्रोक्तं सुग्रीवे तु यवान्नकम्
पिष्टानि पुष्पदन्ताय पुष्पाणि सजलानि च १५
जलेश्वराय दातव्यं पायसं घृतमिश्रितम्

वाराहं तु बलौ मांसमसुराय प्रदापयेत्  १६
दद्यात्समाहितस्सम्यक् शेषाय तिलतराडुलौ
रोगाय शुष्कमस्त्यान् वै ध्वजं पीतं च वायवे  १७
नागाय मधुमुख्याय लाजान् सम्यक् प्रदापयेत्
भल्लाटाय गुलान्नं वै सम्यग्दद्याद्बलिप्रदः  १८
सोमाय पायसं धूपं दीपं दद्याद्विशेषतः
गजाय शर्करापूपमदित्यै मोदकं विदुः  १९
दितये तु बलिं दद्याद्वाह्यदेवबलिक्रमे
पायसं घृतसम्मिश्रमीशानाय निवेदयेत्  २०
दद्यात्सवित्रे लाजांस्तु सवित्रे गन्धवारि वै
इन्द्राय माषमन्नं वै मुद्गान्नं चेन्द्रसूनवे  २१
रुद्राय मांसमन्नं स्यात्फेनं रुद्रात्मजाय वै
आपाय मस्त्यं मासं च चापवत्साय दापयेत्  २२
घृतं मांसं चरक्यै च शूलस्थायै शिवाश्रिताः
विदारिकायै दातव्यं लवणं धीमता भृशम्  २३
तिलपिराडमथो दद्यात्पूतनायै विशेषतः
कुल्माषं पापराक्षस्यै मांसान्नं स्याद्ग्रहेषु च  २४
विशेषबलिरेवं स्यात्सामान्यं तु घृतोदनम्
सर्वेषामपि दातव्यो बलिर्दध्ना समन्वितः  २५
उत्कृष्टबलिरेवं स्याद्ग्रामादौ च विशेषतः
गृहदेवालयादौ च मध्यमः कथ्यतेऽधुना  २६
दध्याज्यगुलसम्मिश्रं शुद्धान्नं ब्रह्मणे बलिः
अर्यमादिचतुर्णां तु पायसं बलिरुच्यते  २७
विदिद्द्वापादिदेवानामष्टानां कृसरं बलिः
ईशानाद्यष्टदेवानां मुद्गान्नं बलिरुच्यते  २८
हुताशनादि देवानां गुलान्नं बलिरिष्यते

पश्चिमाशास्थितानां तु घृतान्नं बलिरुच्यते २९
वायव्याद्युक्तदेवानां दध्यन्नं बलिरुच्यते
अष्टानां बाह्यदेवानां मांसान्नं बलिरुच्यते ३०
अलाभे प्रोक्तवस्तूनां दध्याज्यफलसंयुतम्
शुद्धमन्नं प्रदातव्यं गन्धपुष्पपुरस्सरम् ३१
हविष्यं देवभवने मांसान्नं राजमन्दिरे
मद्यं शूद्रगृहे प्रोक्तमन्यत्र मधु कल्पयेत् ३२
मस्त्यार्थं चैव मांसार्थं पिष्टं वापि प्रकल्पयेत्
ग्रामादौ वा बलिस्सोपि शुद्धद्रव्यैर्विधीयताम् ३३
त्वरिते त्वक्षतं वा स्याद्गन्धपुष्पसमन्वितम्
महावास्तुनि विप्रेन्द्रा देशिका बहवो मताः ३४
पञ्चगोचरसंभूताश्शिवविप्राः प्रकीर्तिताः
अभावादादिशैवे वा तत्र ब्राह्माश्शिवद्विजाः ३५
देवालये च ग्रामादौ शिवविप्रो विशिष्यते
स्वगृहे त्वनुशैवास्तु महावान्तरशैवकाः ३६
वास्तुहोमं चतुर्दिक्षु देशिको मूर्तिपैस्सह
एकत्र वाथ कर्तव्यो देशिकेन च धीमता ३७
समिदाज्यचरूपेतं तिलतण्डुलसंयुतम्
मण्डपे वा प्रपायां वा वास्तुहोमं समाचरेत् ३८
पञ्चादिदशहस्तान्तं मण्डपं परिकल्पयेत्
हस्तमात्रमिदं कुण्डं रत्निमात्रमथापि वा ३९
वास्तुसीमनि वा ब्रह्मस्थाने वा मण्डपं नयेत्
पलाशोदुम्बराश्वत्थवटाः पूर्वादितः क्रमात् ४०
समिधः कथिताश्शास्त्रे चैकत्रेष्टं प्रगृह्यताम्
कुम्भे वोदुम्बरे वापि वास्तुदेवान् प्रपूजयेत् ४१
हेमवस्त्रसमायुक्ते सकूर्चे सापिधानके

कृतस्थरिडलकाधारस्सोष्णीषस्सोत्तरीयकः ४२
कृतपञ्चाङ्गभूषस्तु मूर्तिपैश्च तथाविधैः
उष्णीषरहितैस्साधं वेदध्वनिसमन्वितम् ४३
स्तोत्रध्वनिसमायुक्तं तथा मन्त्रजपान्वितम्
संप्राप्तदक्षिणश्शान्तो मनस्तुष्टिसमन्वितः ४४
सर्वमङ्गलकार्ये च मण्डलादिविशोधने
पर्यग्निकरणोपेतं वास्तुहोमं नियामकम् ४५
बलिं चैव विशेषेण शिवविप्रस्समाचरेत्
वास्तुपूजाविहीनं तु वास्तुवास्तु विनश्यति ४६
प्रतिसंवत्सरं कुर्यात्सर्वदोषापनुत्तये
ग्रामादिगृहशालासु देववेश्मनि देशिकः ४७

इति कामिकाख्ये महातन्त्रे वास्तुदेवबलिविधिर्नाम
एकोनविंशतितमः पटलः

## ग्रामादिलक्षणविधिः

वक्ष्यामि लक्षणं ग्रामनगर्यादेस्समाहितः
यथावद्विहितं वास्तु न त्यजन्ति हि देवताः १
पिशाचप्रेतरक्षांसि पीडां कर्तुं न शक्नुयुः
तत्र कालपरीक्षादि प्रागुक्तविधिनाचरेत् २
विप्रैर्विद्वद्भिराभोग्यं मङ्गलं चेति कीर्तितम्
अग्रहारस्तदेवोक्तं विप्रेन्द्राः कामिकाह्वये ३
विप्रैरथान्यैर्वर्णैर्वा भोग्यो ग्राम उदाहृतः
एको ग्रामणिको यत्र सभृत्यपरिचारकः ४
कुटिकं तद्विजानीयादेकभोगस्स एव तु
जनैः परिवृतं द्रव्यक्रयविक्रयकादिभिः ५
अनेकजातिसंयुक्तं कर्मकारैस्समन्वितम्

सर्वदैवतसंयुक्तं नगरं चाभिधीयते ६
वणिजामपि भोग्यं तु तद्वदेव समीरितम्
यत्स्थानं ब्राह्मणानां तु खर्वटं पुरवासिनाम् ७
तेषामेव वनस्थानं तद्वदेव समीरितम्
क्रयविक्रयसंयुक्तमब्धितीरसमाश्रितम् ८
देशान्तरागतजनैर्नानाजातिभिरन्वितम्
पट्टणं तत्समाख्यातं वैश्यैरध्युषितं तु यत् ९
नगर्यावर्तनं यत्तत्खर्वटं तदुदाहृतम्
वने जनपदे चैव केवले शूद्रसेवितः १०
कर्णकः खेटको ग्रामः क्रमात्त्रिविध ईरितः
सामन्तानां समृद्धानां यत्स्थानं शिबिरं स्मृतम् ११
गजवाजिसमायुक्तं सेनास्थानं तदेवहि
राजवेश्मसमायुक्तं सर्वजातिसमन्वितम् १२
गुह्यप्रदेशसंयुक्तं सेनामुखमिहोच्यते
आगन्तुकानां सर्वेषां नैष्ठिकानां निवासभूः १३
अन्नपानीयसंयुक्तः केवलो वा मठो मतः
विद्यास्थानं तु तद्वत्स्याद्बहुसेनासमन्वितम् १४
राजवेश्मसमायुक्ता राजधानीति कथ्यते
ग्रामादीनां समीपं यत्स्थानं कुब्जमिति स्मृतम् १५
तदेव चेरिका प्रोक्ता नगरीतन्तुवायभूः
सर्वेषामपि चैतेषां ग्रामादीनां समीरितम् १६
विस्तारायाममानं तु सर्वेषां तु सनातनम्
शास्त्रेऽस्मिन् प्रोच्यते तच्च क्रमेण परिपठ्यते १७

इति कामिकाख्ये महातन्त्रे ग्रामादिलक्षणविधिः विंशतितमः पटलः

## विस्तारायामलक्षणविधिः

विस्तारायाममानं तु ग्रामादीनामिहोच्यते
पञ्चदण्डं समारभ्य दण्डाभ्यां वर्धयेत्क्रमात् १
एकोनत्रिसहस्रान्तं तदूर्ध्वं नेष्यते बुधैः
अधमे तु तदूर्ध्वं तु तत्समं चोत्तमं भवेत् २
एवं विस्तारमाख्यातं ग्रामादीनां समासतः
कुटुम्बभूमिमानं तु वाटक्षेत्रविवर्जितम् ३
प्रमाणं कथितं शास्त्रे तद्बाह्ये वाटभूर्मता
चतुरश्रार्धभागं वा चतुर्भागमथापि वा ४
त्रिपादं वा द्विपादं वा त्रिद्व्यंशा वा विशालतः
पञ्चषट्सप्तमूर्त्यंशपङ्क्तिभागमथापि वा ५
चतुर्दण्डात्समारभ्य दण्डाभ्यां वर्धयेत्क्रमात्
त्रिगुणान्तप्रमाणेन चायामं परिकल्पयेत् ६
ब्राह्मणानां समं शस्तमन्येषामायताश्रकम्
सर्वं देवे च विप्रे च सामान्यमिह कीर्तितम् ७

इति कामिकाख्ये महातन्त्रे विस्तारायामलक्षणविधिः एकविंशः पटलः

## आयादिलक्षणविधिः

अतः परं प्रवक्ष्यामि आयादीनां तु लक्षणम्
विस्तारेणाभ्यसेद्दैर्घ्यं त्रिगुणं चाष्टभिर्हृतम् १
शेषं ध्वजादिकं शास्त्रे योन्यष्टकमुदाहृतम्
ध्वजो धूमश्श्वसिंहौ च वृषः खरगजोत्तमौ २
ध्वाङ्क्षेण योनयश्चाष्टौ ध्वजसिंहवृषो गजः
शस्तास्स्युर्निन्दिताश्चान्ये धूमाद्या योनयस्त्विह ३
तमेवाष्टगुणं कृत्वा सप्तविंशतिभिर्भजेत्

शिष्टमश्वयुजाद्यं तु नक्षत्रमिह कीर्तितम् ४
कर्तुर्जन्मर्क्षमारभ्य त्रिदिनं पञ्चसप्तकम्
त्रयोदशदिनं त्याज्यं तथा पञ्चदशोडुकम् ५
दिनं सप्तदशं चाष्टादश द्वाविंशकं दिनम्
सप्तविंशतिनक्षत्रं त्याज्यमन्यच्छुभं स्मृतम् ६
राज्ञां ग्रामस्य कर्तुश्च जन्मर्क्षेणाविरोधि यत्
तदेव चात्र संग्राह्यं विपरीतं परित्यजेत् ७
जन्मर्क्षेण युतं वापि कारयेद्वास्तुशास्त्रवित्
नामजन्मर्क्षयोरानुकूल्यश्चोत्तम उच्यते ८
एकोनं मध्यमं प्रोक्तं विपरीतं परित्यजेत्
नक्षत्रस्य फलं यत्तु वयस्तस्य प्रकीर्तितम् ९
ध्वजादीनां वशेनाथ वयस्तत्र प्रकल्पयेत्
सकलञ्चाष्टभिर्हन्यादायस्सोऽप्यन्यथोच्यते १०
सकलं चाष्टभिर्भक्त्वा भजेद्द्वादशभिर्गुरुः
शिष्टस्त्वायस्समाख्यातो व्ययस्तत्र प्रकीर्त्यते ११
संस्थाप्य लब्धनक्षत्रमष्टभिर्विभजेद्बुधः
व्ययश्शिष्ट इह प्रोक्तस्त्वन्यथापि च कथ्यते १२
सकलं त्रिगुणीकृत्य मानसूत्रैर्भजेद्व्ययम्
आयाधिक्यं तु शुभदं समं हीनं च वर्जयेत् १३
विस्तारायामराशिं तु वसुभिर्गणयेद्बुधः
त्रिंशद्भिर्विभजेच्छिष्टं तिथिनागावटैस्तु वा १४
त्रिगुणं सकलं कृत्वा मुनिना वार उच्यते
पर्यन्तावटकेनाथ वारं संकल्पयेद्बुधः १५
राशयश्चांशका ये तु नक्षत्रवशगा मताः
अष्टद्वादशकौ वर्ज्यौ शेषाश्श्रेष्ठाश्च राशयः १६
शुभग्रहांशकाश्शस्तास्त्वितरास्त्विह निन्दिताः

विस्तारेणाभ्यसेद्दैर्घ्यं तादृशीमथवा पुनः १७
विस्तारायामसंयुक्तं राशिं वाथ निरीक्षयेत्
चतुरश्रायताश्राणां सकलेनैव योजयेत् १८
अन्यासामाकृतीनां तु नाहायामविशालकैः
कुम्भकस्य विशालार्धं नाहार्धेन न्यसेद्बुधः १९
सकलं कुम्भकं प्रोक्तं तेन चायादिकं न्यसेत् २०
इति कामिकाख्ये महातन्त्रे आयादिलक्षणविधिः द्वाविंशः पटलः

## नक्षत्रचक्रविधिः

नक्षत्रचक्रं वक्ष्यामि नामनक्षत्रसिद्धये
आदौ शतपदं कृत्वा पर्यन्तेशानकोष्ठकात् १
आरभ्य दक्षमार्गेण न्यसेद्वर्णाननुक्रमात्
पञ्चतत्त्वं तथाग्नेयकोणात्पश्चिममार्गतः २
पितुरुत्तरमार्गेण वायोः पूर्वमुखेन च
वर्णान् विंशतिसंख्याकान् क्रमेणैवं तु विन्यसेत् ३
अपहकट इत्येवमवटपर एव च
नयभजखवर्णाश्च गजदचल एव च ४
ईशानमण्डले कुर्यात्पञ्चविंशतिकोष्ठके
पश्चिमाभिमुखं पूर्वं लिखितानां तृतीयकम् ५
पञ्चमं नाम नक्षत्रं स्वेन युक्तान् स्वरान्न्यसेत्
एकादश न्यसेत्पश्चात्प्रान्ते न्यसेत्त्रयोदश ६
अकारश्च इकारश्च उश्च एकार एव च
कृत्तिका कथिता तावदो वा वी वू चतुष्टयम् ७
रोहिणी कथिता शास्त्रे वे वो का की तथैव च
चन्द्रभं कुश्च आर्द्रा स्यात्पञ्चविंशतिमध्यमे ८
के च को च तथा हा च हीकारश्च पुनर्वसुः

हुश्च हेश्च तथा होश्च डश्च पुष्यः प्रकीर्तितः ९
अवशिष्टैरथाश्लेषान्नामधेयं प्रकल्पयेत्
अनेन क्रमयोगेन सर्वमत्र समाचरेत् १०
आर्द्रायुक्ते कुकोष्ठे च घङच्छाननुयोजयेत्
हस्तयुक्ते च कोष्ठे च पूषणाठान् परिकल्पयेत् ११
पूर्वाषाढां बुकोष्ठे च ध फा ढान् विन्यसेद्गुरुः
भेचोत्तराभाद्रपदे दूथाझाञान् तथा नयेत् १२
नकारग्रहणेनैव ञकारः स्वीकृतस्त्विह
अकारग्रहणेनैव आकारः स्वीकृतस्त्विह १३
इकारग्रहणेनैव ईकारः स्वीकृतस्त्विह
उकारग्रहणेनैव ऊकारः स्वीकृतस्त्विह १४
एकारग्रहणेनैकाराद्याः पञ्च समाहृताः
एवमन्यत्र चोन्नेयं नामनक्षत्रकल्पनात् १५
ग्रामे क्षत्रियसेवायां युद्धे च व्यवहारके
नामर्क्षं योजयेद्विद्वान्नामान्तरपरिग्रहात् १६
अन्यस्मिन् जन्मऋक्षं वा वास्तुकर्मण्युभावपि
एवं नक्षत्रचक्रञ्च युष्माकं कथितं मया १७
अनेनैवानुकूल्यं च विज्ञेयं स्याद्विचक्षणैः
विपदि प्रत्यरे चैव वधे चैव यथाक्रमात् १८
प्रथमांशतृतीयांशादृते शेषास्तु शोभनाः
तृतीये चापि पर्याये चोत्तमं परिपठ्यते १९
द्वितीये मध्यमे चैव प्रथमं कन्यसं स्मृतम्
गणञ्चासुरमानुष्यं वर्जयेच्छुभमन्यथा २०
एवं जन्मर्क्षके नामनक्षत्रे च प्रकल्पयेत् २१

इति कामिकाख्ये महातन्त्रे नामनक्षत्रविधिः त्रयोविंशः पटलः

## दरिडकादिविधिः

दरिडकादिविधिं वद्त्ये शृणुत ज्ञानकाङ्क्षिणः
दरिडकं स्वस्तिकञ्चान्यत्प्रस्तरं च प्रकीर्णकम् १
सम्पत्करं पराकं च पद्मकं श्रीप्रतिष्ठितम्
श्रीवत्सं वैदिकं चैव नन्द्यावर्तं च कुम्भकम् २
एवं द्वादशधा प्रोक्ता ग्रामादेराकृतिस्त्विह
कुम्भकं वैदिकं चैव दरिडकं च विशेषतः ३
जानीयात्पत्तनादौ तु शुभमेतन्न संशयः
पूर्वाग्रमुत्तराग्रं वा वीथिं कृत्वोभयोर्बुधः ४
गृहाणि पार्श्वयोः कुर्यादेकस्मिन् पार्श्वकेऽपि वा
एकवीथिसमायुक्तं वीथिद्वयसमायुतम् ५
वीथित्रयसमायुक्तं पूर्वाग्रञ्चोत्तराग्रकम्
कर्तरीकृतदराडाभं वाथ कुर्यात्त दरिडकम् ६
पूर्वाग्रमुत्तराग्रं च कृत्वा वीथिद्वयं द्वयम्
उदगग्रैर्नवान्यैश्च मार्गैर्युक्तं तु तद्भवेत् ७
दत्तिणाभिमुखो भूत्वा पूर्ववीथ्यास्तु निर्गमः
पश्चिमाभिमुखश्चैव दत्तिणस्यां तु निर्गमः ८
उत्तराभिमुखो भूत्वा पश्चिमायां विनिर्गमः
प्राङ्मुखस्तु ततो भूत्वा सौम्यवीथ्यास्तु निर्गमः ९
एवं हि यत्कृतं वास्तु स्वस्तिकं त्वभिधीयते
एवमेव तु सर्वेषां ग्रामादीनां विनिर्गमः १०
त्र्यादिपञ्चदशान्ताभिरुदीचीनाभिरन्वितम्
तिसृभिः प्राङ्मुखाभिस्तु प्रस्तरं त्विह कथ्यते ११
चतुर्वीथिं समारभ्य सप्तदशसमावधि
उदीचीभिस्समायुक्तं प्राङ्मुखाभिश्चतसृभिः १२
एतत्प्रकीर्णकं प्रोक्तमुदीचीनैस्तु पञ्चभिः

एकविंशतिसंख्यातैः प्राङ्मुखाभिश्च पञ्चभिः १३
सम्पत्करमिहोद्दिष्टं पराकञ्च वदाम्यहम्
षड्वीथिकां समारभ्य त्रयोविंशतिकावधि १४
एकैकवीथिवृद्ध्या तु उदीचीनाभिरन्वितम्
षड्भिश्च प्राङ्मुखाभिश्च पराकं त्विह कीर्त्यते १५
सप्तवीथि समारभ्य चैकोनत्र्यंशकावधि
उदङ्मुखाभिर्वीथीभिर्युक्तं प्राङ्मुखमार्गकैः १६
सप्तभिः पद्मकं प्रोक्तं एष्विष्टं परिगृह्यताम्
अष्टभिः प्राङ्मुखैर्मार्गैरुदीचीनैस्तदादितः १७
षट्त्रिंशदंशसंख्यातैः प्राङ्मुखैरष्टभिर्युतम्
श्रीप्रतिष्ठितमित्युक्तं तस्मिन्निष्टं प्रगृह्यताम् १८
प्रागग्रैरुदगग्रैश्च मार्गैरिष्टैस्समन्वितम्
श्रीवत्समिति निर्दिष्टं सर्ववास्तुषु योग्यकम् १९
चतुरश्रायताश्रं वा कृत्वा कोणेषु मध्यमे
पुष्पदन्तादिके वापि यथेष्टं द्वारसम्मितम् २०
उभयोः पार्श्वयोर्वापि एकपार्श्वेऽथवा पुनः
गृहवीथिसमायुक्तं चैतद्वैदिकमुच्यते २१
तदेव विप्रभूपालवैश्यशूद्रगृहावृतम्
प्रधानं वाप्रधानं वा सर्वत्र विहितं त्विह २२
क्षेत्रावृतं तु वा कार्यमारामाद्यावृतं तु वा
एतच्च वैदिकं प्रोक्तमन्तर्बाह्यविभागतः २३
अनेकावलिसंयुक्तं चापि वैदिकमुच्यते
परितोऽपि समं कृत्वा मार्गैः पूर्वोत्तराननैः २४
एकानेकैर्यथेष्टैस्तु प्रागुक्तैस्तच्च वैदिकम्
विधाय वीथिं नाभ्याख्यां निर्गमैश्च समन्विताम् २५
स्वस्त्याकारैर्बहिस्तस्या महावीथिसमन्विताम्

नाभौ विनिर्मितास्तिस्त्रः पञ्च सप्त नवाथवा २६
युग्माभिरेव कर्तव्यं नन्द्यावर्तमिति स्मृतम्
वृत्ताकारैस्तु मार्गैश्च एकानेकैस्समन्वितम् २७
प्रागुत्तरमुखैर्मार्गैरनेकैर्मध्यमैर्युतम्
कुम्भकञ्चेति निर्दिष्टमनेकैः कोणकैर्युतम् २८
अष्टाग्रैर्वा बहिर्मार्गैर्युक्तं कुम्भकमुच्यते
नगरीपत्तनादौ तु विहितं त्विह कामिके २९
इति कामिकाख्ये महातन्त्रे दण्डकादिविधिः चतुर्विंशः पटलः

## वीथिद्वारादिमानम्

वीथिद्वारादिमानं तु प्रवक्ष्याम्यनुपूर्वशः
ब्रह्मभागावृतावीथिर्नाभिवीथीति कथ्यते १
राजवीथीति विख्याता ग्रामादेर्बहिरावृता
सैव मङ्गलवीथीति रथवीति चोच्यते २
प्राङ्मुखा वीथयस्सर्वा नाराचाख्या इति स्मृताः
ता एव जनवीथ्यस्स्युः क्षुद्रास्तिर्यग्गता मताः ३
पाददण्डं समारभ्य पादपादविवर्धितम्
स्यादेकादशदण्डान्तं वीथिमानमिहागमे ४
मार्गमानं च तावत्स्यान्न द्वारं वीथिकाग्रके
हित्वा मङ्गलवीथ्यग्रं नाभिं न प्रोतयेत्क्वचित् ५
भल्लाटे पुष्पदन्ते च महेन्द्रे च गृहक्षते
चतुर्द्वारं प्रकर्तव्यं सर्वेषामपि वास्तुनाम् ६
महेन्द्रे सत्यके चैव पदे प्राग्द्वारमुत्तमम्
गृहक्षतपदे चैव गन्धर्वे दक्षिणं शुभम् ७
असुरे पुष्पदन्ते च पश्चिमद्वार उच्यते
मुख्यभल्लाटयोस्स्थाने चोत्तरद्वार उच्यते ८

पर्जन्ये च भृशे पूष्णि भृङ्गराजे जलेशके
शेषे नागेऽदितौ स्थानमुदग्द्वारेषु कीर्तितम् ९
दण्डत्रयं समारभ्य चैकदण्डविवर्धनात्
तिथिदण्डावसानं तु गृहक्षेत्रविशालता १०
तत्रैव हस्तमानेन गेहं कुर्याद्विचक्षणः
अथवा हस्तमानेन गृहविस्तार उच्यते ११
पञ्चहस्तं समारभ्य द्विद्विहस्तविवर्धनात्
एकषष्टिविशालं तु गृहक्षेत्रविशालता १२
आयामं ग्रामदण्डेन हस्तच्छेदविवर्जितम्
चतुश्शालागृहं श्रेष्ठं त्रिशालं मध्यमं भवेत् १३
द्विशालमधमं प्रोक्तं हीनं स्यादेकशालकम्

इति कामिकाख्ये महातन्त्रे वीथिद्वारादिमानविधिः पञ्चविंशः पटलः

## ग्रामादिदेवतास्थानविधिः

ग्रामादौ देवतास्थानं वक्ष्ये सर्वं सनातनम्
ब्रह्मस्थानस्य वायव्यां विष्णुस्थानं प्रकीर्तितम् १
वारुण्यां वास्तुनो ब्रह्मा सूत्रस्योत्तरदेशके
ग्राममध्ये तदीशान्यामष्टदिक्षु शिवो मतः २
हरिहरयुतं वास्तु केवलेन हरेण वा
अन्यत्सर्वं यथेष्टं स्यात्तेषां स्थानमिहोच्यते ३
वारुण्यामिन्द्रकाष्ठायामिन्द्रेशानान्तरेऽथवा
रविस्थानं भवेत्तत्र स्थानं वापि शचीपतेः ४
वायव्यामिन्द्रकाष्ठायां याम्यकाग्नेयनैर्ऋते
सुग्रीवे वारुणे वापि षण्मुखस्थानमीरितम् ५
वारुण्यां नैर्ऋताविन्द्रे शास्तुस्स्थानं प्रकीर्तितम्

वारुरयां वाथ नैर्ऋत्यां वायुसोमान्तरेऽथवा ६
अन्यत्र च गरोशस्य स्थानमुक्तमिहागमे
यमे वा नैर्ऋते भागे वायव्यामिन्द्रमध्यमे ७
नैर्ऋत्यन्तकयोर्वापि दुर्गास्थानं प्रकीर्तितम्
वारुरयां श्रीसरस्वत्योः स्थानमुक्तं शिवाश्रिताः ८
ऐशान्यां सोमभागे वा तयोर्मध्ये तु मातरः
आग्नेय्यां मोटिकास्थानं कामदेवस्य तत्र वै ९
ज्येष्ठा पुष्करणीतीरे स्थाप्यान्यत्र बहिस्तु वा
कामभास्करयोर्वास्तु षरमुखस्थानमुच्यते १०
षरमुखस्य तु मातॄणां स्थानमन्यद्यथेप्सितम्
सहस्रादधिके विप्रे मध्ये विष्णुग्रह तु वा ११
शिवपूजायुतं वास्तु नान्यच्छास्त्रस्य निश्चयः
श्रीपतेः पूजया नित्यं प्रजावृद्धिर्भविष्यति १२
सूर्यस्य पूजया नित्यं गृहपीडा विनश्यति
इन्द्रपूजा मनुष्याणां प्रभावं संप्रयच्छति १३
सुब्रह्मरयार्चनं नित्यं बालानां हितकृद्भवेत्
शास्तृपूजा स्वकृत्येषु नियुङ्क्ते वास्तुवासिनः १४
कामस्य पूजा कुरुते सैन्दर्यं वास्तुवासिनाम्
उमा पूजा विशेषेण विजयं संप्रयच्छति १५
पूजिता चेन्महामोटी बालरोगविनाशिनी
सर्वसिद्धिरविघ्नेन विघ्नेशस्य सपर्यया १६
ज्येष्ठापूजा विशेषेण रोगघ्नी वास्तुवासिनाम्
लक्ष्मीपूजा श्रियं दद्यादलक्ष्मीं च व्यपोहति १७
वाग्विभूतिं सरस्वत्याः पूजा नित्यं प्रयच्छति
मातृपूजा सदा सर्वसम्पदं कुरुते द्विजाः १८
सर्वेषां पूजया यत्तत्फलं दद्यान्महेश्वरः

तस्मान्महेश्वरो नित्यं पूजनीयः फलार्थिभिः १९
ऐशान्यां स्थापितं लिङ्गमुत्तमं त्विति कीर्तितम्
अन्यत्र मध्यमं प्रोक्तं लिङ्गं संस्थापितं द्विजाः २०
ग्राममध्ये हरेः स्थानमुत्तमं परिकीर्तितम्
पश्चिमे मध्यमं विद्यादधमं चान्यदेशके २१
ईशविष्णवोस्तु मूर्तिस्स्याद्द्विविधा परिकीर्तिता
उग्रा शान्ता च तत्राद्या उग्रकर्मरता मता २२
शान्तकर्मरताशान्ता मूर्ती रौद्री तु बाह्यगा
शान्ता तु मध्यगा प्रोक्ता ग्रामादौ सर्ववास्तुनि २३
करिकामपुरारिस्तु कालारिस्त्वेवमादयः
उग्रास्तु मूर्तयः प्रोक्ताश्शेषाश्शान्ता उदाहृताः २४
विश्वरूपं नृसिंहं च वटशायिनमेव च
जामदग्न्यं च जानीयादुग्रं वैष्णवविग्रहम् २५
ग्रामादेर्बाह्यदेशे तु काननादौ प्रकीर्तिताः
रौद्राणामिह देवानां स्थापने फलमुच्यते २६
पूर्वे चेद्ग्रामनाशं स्याद्वह्नौ दुश्शीलगास्स्त्रियः
नाशस्तु याम्यदेशे तु प्रेतदैत्यादिभिर्भृशम् २७
रोगैस्तु नैरृते नाशं शोकस्स्याद्वरुणांशके
दुस्स्थितिं पावने विद्याद्राष्ट्रसंस्थां तु सौम्यके २८
सर्वसम्पत्तिरैशान्यां पुत्रपौत्रविवर्धनम्
ग्रामे त्वेवं समाख्यातं सर्वत्रान्येषु वा मता २९
ग्रामे कुड्यान्तरस्थानेष्वष्टदिक्ष्वपि शस्यते
न मध्ये स्थापयेद्रुद्रमूर्तिं ग्रामे विशेषतः ३०
रुद्रमूर्तिस्थिता चेत्तु ग्रामादौ तु तदग्रके
शान्तमूर्तिप्रतिष्ठां तु कारयेद्देशिकोत्तमः ३१
तटाकं कारयेद्वापि तेन शान्तिर्विधीयते

अग्रहाराद्भिनान्येषु स्थानीयादिषु वास्तुषु  ३२
प्रागादिषु चतुर्दिक्षु वायावीशे शिवालयः
तथैव शेषदेशे च पर्जन्यांशे जयन्तके  ३३
वामनेत्रेक्षणं तत्र सर्वसम्पत्समृद्धिदम्
ईक्षणं सकलानां तु ऐहिकामुष्मिकावहम्  ३४
पादपादं तदर्धं वा त्रिपादं पादमेव वा
एकदण्डं समारभ्य पञ्चदण्डावसानकम्  ३५
नीत्वा तु स्थापयेद्बाह्ये रुद्रमूर्तिनिकेतने
एवं तु कथितं रुद्रमूर्तीनां स्थापनं फलम्  ३६
शान्तमूर्तिप्रतिष्ठायां फलमद्य निगद्यते
ब्रह्मस्थाने स्थितं लिङ्गं विप्रक्षत्रियशोभनम्  ३७
ऐन्द्रं सर्वप्रदं लिङ्गं याम्ये वृद्धिस्तथायुषः
आरोग्यं वारुणं लिङ्गं सौम्यं वित्तप्रदं भवेत्  ३८
वह्निदेशे सुखं दद्याद्विजयं निर्ऋतौ शिवः
वायव्ये सम्पदो दद्यात्सर्वमीशानगोचरे  ३९
अन्तरालेषु सर्वेषु फलमेवं विनिर्दिशेत्
सोमे चैशानके वापि सोमेशानान्तरालके  ४०
इन्द्रेशानान्तराले च शिवलिङ्गं स्थितं यदि
ग्रामादेरभिवृद्धिस्स्याद्राज्ञो राष्ट्रस्य चैव हि  ४१
सौभाग्यमायुरारोग्यं भवत्येव न संशयः

इति कामिकाख्ये महातन्त्रे ग्रामादिदेवतास्थानविधिः षड्विंशः पटलः

## द्विजसंख्याविधिः

द्विजादीनां च संख्येह वक्ष्यते शृणुत द्विजाः
ज्येष्ठमध्यकनिष्ठाश्च क्षुद्राश्चेति चतुर्विधाः  १

प्रत्येकं नवधा प्रोक्ता वक्ष्यमाणप्रमाणतः
चतुर्दशसहस्रात्तु षट्सहस्रद्विजान्तकम् २
सहस्रहीनं नवकं चतुष्केषूत्तमं द्विजाः
ततः पञ्चसहस्रात्तु सहस्रान्तं यथाक्रमम् ३
हीनं पञ्चदशेनैव मध्यमं नवकं बुधाः
शतहीनसहस्रात्तु यावत्पञ्चदशान्तकम् ४
शतार्द्धेन क्रमेणैव कनीयत्तुद्रयोर्मतम्
अथवान्यप्रकारेण वक्ष्यते शृणुत द्विाः ५
अष्टोत्तरशतं चान्यद्वर्धयेद्दशसंख्यया
लक्षान्तं संगृहीतव्यं तेषु शक्त्यैकमाचरेत् ६
अशक्तश्चेद्दशाद्यष्टशतान्तं पञ्चसंख्यया
वर्धयेदतिहीनं चेदेकस्मादेव वर्धनात् ७
दशान्तं वाथ कर्तव्यं तेषु चेष्टं समाचरेत्
द्वात्रिंशद्वा चतुर्विंशत् षोडश द्वादशैव वा ८
चतुरुत्तरपञ्चाशत्संख्याका वा प्रकीर्तिताः ९

इति कामिकाख्ये महातन्त्रे द्विजसंख्याविधिः सप्तविंशः पटलः

## ग्रामादिविन्यासविधिः

विन्यासस्य विशेषोऽयं ग्रामादीनामिहोच्यते
ग्रामश्शरीरमङ्गं स्याद्देवमर्त्यपरिग्रहः १
उपाङ्गमिति बोद्धव्यं विमानभवनादिकम्
पदप्रस्तरसूत्रे वा मध्यसूत्रद्वयेऽपि च २
कर्णसूत्रद्वये चापि उपाङ्गं नैव कारयेत्
वीथ्यन्तरे गृहश्रेण्यां सीम्नि वा सूत्रवर्धनम् ३
यथाभवेत्तथा कार्यं न कार्यं सूत्रपीडनम्

दण्डच्छेदो न कर्तव्यो ग्रामे वापि गृहायतौ ४
उपाङ्गायामविस्तारे दण्डच्छेदोऽपि योज्यते
अन्यत्र दण्डं न छिद्याच्छरीरे तु विशेषतः ५
बाह्यश्रेणीषु वृद्धिश्च दण्डच्छेदश्च वीथिषु
पदशेषयुतं वेश्म छिन्नदण्डं गृहादिकम् ६
इष्टमानं च वीथीनां वास्तुकर्मणि शस्यते
श्रेण्यन्तरेषु तत्रैव पदशेषं समापयेत् ७
चण्डालानां प्रवेशाय निर्गमाय मलस्य च
जलस्य निर्गमार्थं तु क्षुद्रमार्गाः प्रशंसिताः ८
ग्रामेषु यः कृतो दोषो राज्ञो ग्रामस्य सर्वतः
अङ्गेषु यत्कृतो दोषो ग्रामस्य हि जनस्य तु ९
प्रत्यङ्गे यः कृतो दोषस्तत्रस्थानां विशेषतः
वास्तुनस्सर्वमर्मादि त्यक्त्वान्यत्र वसेन्नरः १०
त्रिशूले गर्भनाशं स्याच्चतुष्के प्रेष्यनाशनम्
मरणं मर्मणि ज्ञेयं सन्धौ मित्रार्थनाशनम् ११
चतुष्के नित्यरोगस्स्याल्लाङ्गले मित्रनाशनम्
मरणं ब्रह्मसूत्रे तु कर्णसूत्रेऽर्थनाशनम् १२
पदप्रस्तरसूत्रे च पुरनाशो भवेद्ध्रुवम्
युग्मायुग्मविभागेन विन्यासो विविधो मतः १३
युग्ममार्गास्तु सूत्रस्था अयुग्मे पदमध्यगाः
अन्योन्यसङ्करो यस्मादशुभं स्याज्जनेषु च १४
अयं विभागः कथितो वास्तौ दण्डकसंज्ञके
ब्रह्मस्थाने सभादीनि कल्पयेद्विधिना बुधः १५
सोमेशानान्तरे सूत्रं याम्यनैर्ऋतमध्यमे
तन्मुक्त्वा पार्श्वयोः कार्यं सभास्थानसमृद्धये १६
व्यपोह्य मध्यमं भागं वापीकूपञ्च मण्टपम्

वायव्ये नैर्ऋते चैशे कुर्याद्वै देवतालयम् १७
ऐशं चेदीशभागे तु चान्यस्मिन् वैष्णवं भवेत्
ब्राह्मं वा मध्यमे भागे पीठं वा परिकल्पयेत् १८
ग्रामादेर्ब्रह्मसूत्रस्य पश्चिमायां विशेषतः
उत्तरे मानुषे भागे विष्णुं संस्थापयेद्बुधः १८
यमस्य पूर्वसूत्रे स्यान्मानुषे स्कन्द एव च
इन्द्रसूत्रादुदीच्यां तु सूर्यं संस्थापयेत्सुधीः २०
सोमसूत्रं ततः पूर्वे मानुषे च विनायकम्
दुर्गा वा तत्र कर्तव्या स्कन्दपार्श्वेऽथवा भवेत् २१
बहिर्मङ्गलवीथ्यास्तु पैशाचे वा प्रकल्पयेत् २२
इति कामिकाख्ये महातन्त्रे ग्रामादिविन्यासविधिः अष्टाविंशतितमः पटलः

## ब्रह्मदेवपदादिविधिः

अतः परं प्रवक्ष्यामि ब्रह्मदेवपदादिकम्
ग्रामाद्दशनवांशं वा अष्टसप्तांशमेव वा १
कृत्वा बहिश्च पैशाचमन्तर्मानुषमुच्यते
तदन्तर्दैविकं प्रोक्तं शिष्टं ब्राह्ममिति स्मृतम् २
ग्रामभूतं तुरीयांशं वस्वग्निमुनिभागिकम्
कृत्वा तेष्वेकभागं तु परितो वर्धयेद्गुरुः ३
बहिर्मार्गमिति ज्ञेयं बाह्यं पैशाचमेव हि
दैवमानुषभागे तु वर्णानां वास इष्यते ४
ब्रह्मपैशाचभागे तु देवतागारमिष्यते
पैशाचे न च कर्तव्यो वासः कर्मोपजीविनाम् ५
अथवान्यप्रकारेण कथ्यते पण्डितोत्तमाः
वर्णानां वास इत्युक्ते ब्रह्मपैशाचिकांशके ६

पदे पैशाचिके कुर्याद्दैवज्ञभिषजां गृहम्
अन्येषां कर्मिणां गेहं वास्तुपैशाचिके मतम् ७
चिकित्सकानां वेश्म स्याद्ग्राममध्ये बहिस्तु वा
देवालयस्य पार्श्वे तु पूजकानां गृहं भवेत् ८
बाह्ये पैशाचिके शास्ता रुद्रो मोटी च मातरः
अन्येषां वास्तुदेवानां पदपैशाचिके पदम् ९
बाह्ये वाऽभ्यन्तरे वापि गणेशस्कन्दयोर्गृहम्

इति कामिकाख्ये महातन्त्रे ब्रह्मदेवपदादिविधिः एकोनत्रिंशः पटलः

ग्रामाद्यङ्गस्थाननिर्णयविधिः

इदानीं संप्रवक्ष्यामि स्थानान्यङ्गोपजीविनाम्
दैवज्ञो गणको वैद्यस्त्वम्बष्ठो भेषजप्रदः १
विषापहः कर्मकारो दैवो ग्रामाङ्गमष्टधा
वणिजश्च कुलालाश्च नापिताः पुष्पजीविनः २
वादित्रजीविनः प्राणिजीविनश्चक्रजीविनः
वैदेहकास्तन्तुवायाः कर्मका रजका अपि ३
चण्डाला अपि चेत्येते द्वादशाङ्गोपजीविनः
वारुण्यां वणिजां स्थानमिन्द्रदिश्यथवा भवेत् ४
कुलालस्थानमैशान्यां सौम्ये चेन्द्रस्य वा दिशि
नापितानां द्वयेपि स्यादग्नेरिन्द्रस्य वा दिशि ५
ऐशान्यामिष्यते पुष्पजीविनां स्थानमत्र तु
वादित्रजीविनां स्थानं सोमदेशे च कल्पितम् ६
वारुण्यामथ वायव्यां नैर्ऋत्यां प्राणिजीविनाम्
याम्यायां दिशि सौम्यायां चक्रिणां स्थानमिष्यते ७
वैदेहकानां वायव्यां स्थानं प्रोक्तं शिवागमे

प्रोक्तं तु तन्तुवायानां स्थानं याम्यदिशि स्थितम् ८
जात्युत्कर्षवशेनैव स्थानं युक्त्या प्रकल्पयेत्
उत्कृष्टानां समीपे स्यान्निकृष्टानां तु दूरतः ९
आग्नेय्यामथ वायव्यां शतदण्डं व्यपोह्य तु
कर्मकाणां निवासस्स्याद्रजकानां ततो बहिः १०
चण्डालानां तु कर्तव्यं पूर्वस्यां विदिशासु च
चण्डालानां कुटीराणि क्रोशबाह्ये प्रकल्पयेत् ११
ऐशान्यामथ वायव्यां श्मशानं प्राचि वोत्तरे
नद्यादौ विद्यमाने तु श्मशानं तीरदेशके १२
प्राच्यां प्रतीच्यां वायव्यां ऐशान्यां सोमदिश्यथ
तटाकं कारयेत्कूपमन्यदिक्षु विवर्जयेत् १३
गोशाला दक्षिणे देशे पुष्पवाटी तथोत्तरे
अथवा सर्वकाष्ठासु वापीकूपतटाककाः १४
वैश्यानां परितो वासश्शूद्राणां पितृके भवेत्
चण्डालकर्मकाराणां श्मशानोदक्प्रदेशयोः १५
हीनत्वपरिवृत्तिश्च ग्रामाङ्गानां विशेषतः
देववेश्मगृहादीनां मार्गस्य च विशेषतः १६
शोध्यानां संशये मार्गे निक्षिपेच्छून्यदेशके
श्लेष्मातकं वटञ्चापि कटकञ्चाप्युदुम्बरम् १७
आरग्वधं तथाश्वत्थं निम्बं प्लक्षञ्च वर्धयेत्
प्रदक्षिणक्रमादेतानीशानाद्यष्टदिक्ष्वपि १८
वृक्षा स्थाप्या बहिर्वास्तौ चैत्यवृक्षा भवन्त्यमी
एते दोषहराः प्रोक्ता ग्रामादीनां विशेषतः १९
सहस्रादधिके विप्रे विप्रशक्त्या न दोषयुक्
बहिर्मङ्गलवीथ्यां तु पादपादार्धवर्धनात् २०
वर्णान्तरगृहारामान्तरितामरमन्दिरम्

चतुरादिचतुष्पञ्चदराडार्धार्धपदं पुनः २१
नीत्वा गृहवशात्कार्यं सप्रकारं सुरालयम्
एवं तु रौद्रदेवानां विमानं परिकल्पयेत् २२
इति कामिकारव्ये महातन्त्रे ग्रामाद्यङ्गस्थाननिर्णयविधिस्त्रिंशः पटलः

## गर्भन्यासविधिः

गर्भन्यासविधिं वन्त्ये ग्रामादीनां च सद्मनाम्
सगर्भं सर्वसम्पत्यै विगर्भं नाशनं भवेत् १
तस्मात्सर्वप्रयत्नेन गर्भं संस्थापयेत्सुधीः
देवतास्थापनात्पूर्वं स्थापनं चोत्तमं भवेत् २
देवतास्थापनस्यान्ते स्थापनं मध्यमं भवेत्
ग्रामविन्यासमारभ्य चैकाब्दादूर्ध्वकालके ३
स्थापनं कन्यसं प्रोक्तं ग्रामादीनामिति स्मृतम्
पूर्वोक्ते तु शिवे काले सितपन्ने विशेषतः ४
ग्रामादीनां तु रात्रौ स्यात्सद्मनस्तु दिवापि वा
नागयोगे दिवा वापि ग्रामगर्भं तु विन्यसेत् ५
नक्तं न्यसेन्नराणां तु देवानां तु दिवापि वा
गृहिणीं गर्भिणीं कर्तुं यदि गर्भं न निन्तिपेत् ६
हेमाकारेण ताम्रेण फेलां वा कारयेद्बुधः
चतुरङ्गुलमारभ्य चैकाङ्गुलविवर्धनात् ७
चतुर्विंशतिकायामविस्तारः परिकीर्तितः
तदर्धं स्यात्समुत्सेधं त्रिपादं वाथ तत्समम् ८
फेलोत्सेधस्त्रिपादं स्यात्पिधानस्य समुच्छ्रयः
सभागं वा द्विभागं वा वाणभागे द्विभागकम् ९
यवमेकं समारभ्य यवार्धेन तु वर्धयेत्

घनं पञ्चयवार्धं तु भित्तीनां परिकल्पयेत् १०
कोष्ठवृद्धिस्तदर्धं स्यात्त्र्यंशकं सर्वमेव वा
पादा अष्टांशका वापि चोच्छ्रायेण घनेन च ११
फेला पञ्चाङ्गुला प्रोक्ता गृहाणां नाधिका भवेत्
सपञ्चपञ्चकोष्ठं वा नवकोष्ठयुतं तु वा १२
वृत्तं वा चतुरश्रं वा कल्पयेद्देशिकोत्तमः
शिलामयं तु वा पात्रं यवार्धेनाङ्गुलानि च १३
घनार्धं कल्पयेद्धीमान् शङ्खे वाथ करण्डके
रत्नानि धातुकादीनि स्वल्पविस्तारभाजने १४
तद्देवस्थानभावज्ञस्तानि तानि निवेशयेत्
एवं ज्ञात्वा तु मतिमान् गर्भास्थापनमारभेत् १५
घृष्ट्वा बहिर्मलं शोध्य प्रक्षाल्याम्लेन वारिणा
पञ्चगव्येन संप्रोक्ष्य पुण्याहं वाचयेत्ततः १६
मङ्गलाङ्कुरकार्यं तु विधिना कारयेद्बुधः
गर्भस्थाने गृहे वापि ग्रामे गर्भाधिवासनम् १७
विमानस्योत्तरे चैन्द्रे चान्येषामधिवासनम्
दशरन्ध्राब्धिहस्तैर्वा विस्तृतं मण्टपं नयेत् १८
तन्मध्ये वेदिकां कुर्यात्तत्रिभागैकभागतः
तालमात्रसमुत्सेधं तस्यां दिक्षु चतसृषु १९
चतुरश्राणि कुण्डानि प्रत्येकं हास्तिकानि तु
सयोन्यश्राणि कुण्डानि चैकं वा पूर्वतः स्थितम् २०
वितानध्वजसंयुक्तं दर्भमालाभिरावृतम्
पुष्पमालासमायुक्तं द्वारतोरणसंयुतम् २१
मङ्गलाङ्कुरसंयुक्तं पद्मेन महतावृतम्
मण्डपं भूषयित्वैवं पुनः पुण्याहमाचरेत् २२
ब्राह्मणान् भोजयेत्तत्र तद्दिनात्प्राग्दिनत्रयम्

शालिभिश्च दशद्रोणैस्थण्डिलं तण्डुलैस्तिलैः २३
कृत्वालिख्याष्टदिक्पत्रं कर्णिकाकेसरैर्युतम्
दर्भैरपि परिस्तीर्य स्थण्डिलं पूजयेद्गुरुः २४
वेद्याः पश्चिमभागे तु गोमयालेपिते शुभे
चित्रिते शालिपिष्टैश्च चतुरश्रां समन्ततः २५
सप्तद्वीपसमायुक्तां सप्ताम्भोधिसमन्विताम्
भूधरैर्दिग्गजैर्युक्तां धात्रीं नागफणस्थिताम् २६
आलिख्य सितफेनैश्च भुवनाध्वक्रमान्विताम्
फेलां प्रक्षाल्य गव्यैश्च स्थाप्य चित्रे तु मण्डले २७
देशिकस्समलङ्कृत्य वस्त्रैः पञ्चाङ्गभूषणैः
सकलीकृतदेहस्तु गन्धैः पुष्पैर्विभूषितः २८
प्राङ्मुखः प्रयतो भूत्वा विन्यसेदक्षराणि तु
मध्यकोष्ठे न्यसेत्कूटं बिन्दुनादसमन्वितम् २९
पूर्वाद्यष्टसु कोणेषु यादिहान्ताश्च विन्यसेत्
अकारादि विसर्गान्तान् बाह्यकोणेषु विन्यसेत् ३०
त्रिलोचनं चतुर्बाहुं वरदाभयपाणिनम्
शूलटङ्कधरं सौम्यं जटाचन्द्रविभूषितम् ३१
एवं तु भाजनं ध्यात्वा पश्चाद् द्रव्याणि विन्यसेत्
प्राङ्मुखोदङ्मुखो भूत्वा मृदादीनि तु विन्यसेत् ३२
अन्तरावरणे प्राच्यां सामुद्रीं विन्यसेन्मृदम्
नादेयीमथ ताटाकीं दर्भमूलगतामपि ३३
कुलीरावृतकां चापि वल्मीकवृषशृङ्गजाम्
गजदन्तगतां चापि क्रमादेता मृदो न्यसेत् ३४
पूर्वादिक्रमयोगेन चाष्टौ चाष्टदिशासु च
संयोज्य ता मृदश्चाष्टौ सर्वा ब्राह्मपदे न्यसेत् ३५
अथ पञ्चमृदो वापि विन्यसेदनुपूर्वशः

वृषशृङ्गे हस्तिदन्ते दर्भमूले जलान्तरे ३६
नद्यास्तीरे च पञ्चैता मध्ये दिक्षु मृदो न्यसेत्
पङ्कजोत्पलकल्हारकन्दाश्च कुमुदस्य वै ३७
रक्तोत्पलस्य श्वेतस्य पद्मस्य च कशेरुणः
तथा कुवलयस्यापि तत्रैवावरणे पुनः ३८
सर्वांश्च मध्यमे कन्दान् सर्वलोकेशमण्डले
विन्यसेदानुपूर्व्येण तद्बाह्ये चाष्टमङ्गलम् ३९
श्रीवत्सं पूर्णकुम्भं च भेरीं दर्पणमेव च
मत्स्ययुग्माङ्कुशौ चैव शङ्खकेसरिणौ तथा ४०
इन्द्रादिषु क्रमेणैव न्यसेदिन्द्रादिमन्त्रकैः
वज्रप्रवालनीलेन्द्रनीलमौक्तिकपुष्यकान् ४१
प्रोक्ताब्जरागवैडूर्यं दीप्तशक्तिं स्मरन्नयसेत्
अथवा पञ्चरत्नानि विन्यसेदानुपूर्वशः ४२
माणिक्यं चेन्द्रनीलं च वैडूर्यं च प्रवालकम्
मुक्तां मध्ये चतुर्दिक्षु पञ्चब्रह्माण्यनुस्मरन् ४३
हरितालशिलाकांङ्क्षितालसूतानि गैरिकान्
धातून् सुगन्धशृङ्गाख्यान् धृतिवीर्यात्मकान्नयसेत् ४४
हेमारुणानमेयांकाह्लादतारध्वनि पन्नगान्
प्रोक्ते मध्येऽखिलान्येव देहशक्तिं स्मरन् न्यसेत् ४५
बाह्ये त्वावरणे दिक्षु चान्तराले तु षोडश
बीजानि व्रीहिगोधूमतिलमाषान् प्रदक्षिणम् ४६
मुद्गं च यवनीवारश्यामाकानन्तरेऽखिलान्
न्यसेत्तृप्त्यात्मकानेतान् मन्त्रैर्लोकेशवाचकैः ४७
सौवर्णशालिकं रौप्यव्रीहिं चापि सकोद्रवम्
त्रपुणा कङ्कसीसेन मांसपुष्पायसांस्तिलान् ४८
मुद्गं चायोमयं ताम्रं निमित्तं च कुलुत्थकम्

विष्णुक्रान्तिं त्रिशूलीश्रीः सहापूर्वा च भृङ्गकम् ४९
अपामार्गैकपत्राब्जमोषधीः प्राक्क्रमान्नयसेत्
चन्दनागरुकर्पूरलवङ्गैलालताफलम् ५०
तक्वोलेनाष्टगन्धांस्तु न्यसेत्पूर्वादिषु क्रमात्
सर्वेषामपि सामान्यं तत्तच्चिह्नैस्तु वक्ष्यते ५१
कपालशूलखट्वाङ्गान् परशुं वृषभं तथा
पिनाकं हरिणं पाशं हैमं शैवे तु विन्यसेत् ५२
यस्य देवस्य यच्चास्त्रं तदस्त्रं मध्यमे न्यसेत्
भूसुराणां हितार्थाय यज्ञसूत्रं कमण्डलुम् ५३
स्रुवं च प्रणवाकारं सौवर्णं मध्यमे न्यसेत्
रथं गजं हयं चैव शार्दूलं चापमेव च ५४
क्षुरिकां च सुवर्णेन विन्यसेन्नृपदेशके
तुलां च मानपात्रं च महिषं गोवृषद्वयम् ५५
सौवर्णं मध्यमे कोष्ठे विन्यसेद्वैश्यभागके
वृषं हलयुगं चैव युग्ममत्स्यं तु शालिकम् ५६
सौवर्णं मध्यमे देशे शूद्रस्थाने प्रकल्पयेत्
स्थालीं तदुपधानं च दर्वीकं तण्डुलं घटम् ५७
गलाख्यं दण्डकाष्ठं च कृष्णलोहे महानसे
दक्षिणे भवने कुम्भं सुशाल्युदकपूरितम् ५८
धनसद्मनि गर्भस्तु सागला कुञ्चिका भवेत्
पर्यङ्कदीपशयने गर्भं विद्यात्सुखालये ५९
माषमानं समारभ्य पलान्तं द्रव्यमानकम्
चतुष्पदाश्च देवाश्च संस्थाप्याभ्यन्तराननाः ६०
पादाङ्गुलं समारभ्य पादाङ्गुलविवर्धनात्
अष्टाङ्गुलप्रमाणेन बिम्बोत्सेधाः प्रकीर्तिताः ६१
तदर्धा वाहनोत्सेधास्त्वासीना वा स्थितास्तु वा

एवं द्रव्याणि विन्यस्य पिधायैशानमन्त्रतः ६२
वस्त्रयुग्मेन संवेष्ट्य कुशैश्चावेष्ट्य पूजयेत्
गन्धपुष्पाक्षतैर्धूपैर्दीपनैवेद्यकादिभिः ६३
फेलामुद्धृत्य हस्ताभ्यां विन्यसेत्स्थण्डिलोपरि
आचार्यो मूर्तिपैस्सार्धं होमकर्म समाचरेत् ६४
वस्त्रहेमाङ्गुलीयादिभूषितैस्सोत्तरीयकैः
विधिनाग्निमुखं कृत्वा ततो द्रव्याणि होमयेत् ६५
पलाशोदुम्बराश्वत्थन्यग्रोधाः प्राग्दिगादिभिः
समिदाज्यचरून् लाजान् सर्षपांश्च यवांस्तिलान् ६६
प्रत्येकं शिवमन्त्रेण शतमर्धं तदर्धकम्
शिवाद्दशांशतोऽङ्गानि तर्पयित्वा यथाविधि ६७
पूर्णाहुतिं ततो हुत्वा वौषडन्तं शिवाणुना
सेश्वराणि त्रितत्वानि मूर्तिमूर्तीश्वरान्न्यसेत् ६८
फेलायां पुष्पगन्धाद्यैः पूजयेत्तर्पयेत्ततः
संपदा संस्कृतं कृत्वा दशधा मूलमन्त्रतः ६९
द्रव्यन्यासं समारभ्य गर्भसंस्थापनान्तकम्
ऋृगाद्यध्ययनं कार्यं कोणेष्वस्त्रजपो भवेत् ७०
ग्रामादिसर्ववास्तूनां गर्भस्थानान्यमूनि हि
ब्रह्मण्यर्यमभागे तु विवस्वति यमे तथा ७१
इन्द्रे च वरुणे चैव सोमे च पृथिवीधरे
पुष्पदन्ते च भल्लाटे महेन्द्रे च गृहक्षते ७२
सौम्यदेवग्रहे चापि ग्रामादौ स्थापयेत्सुधीः
कृत्वावटं तु तत्रैव नयेदञ्जलिमात्रतः ७३
शिरोन्तं वाथ कर्णान्तं हृदयान्तं प्रकल्पयेत्
षडङ्गुलप्रमाणं तु चतुर्विंशाङ्गुलान्तकम् ७४
भाजनस्य समन्तात्तु सावकाशसमन्वितम्

तथाश्मना चेष्टकया फेलाकारं तु गर्तकम् ७५
गोमयालेपनं कृत्वा पुरायाहं वाचयेत्ततः
पञ्चगव्येन संप्रोन्द्य तन्मध्येऽष्टमृदो न्यसेत् ७६
शेषनागोर्ध्वभूमीषु सप्तद्वीपार्णवां भुवम्
दिग्गजैर्भूधरैर्युक्तां गन्धपुष्पादिभिर्यजेत् ७७
ऋाचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
ऋधमा पञ्चनिष्कं तु द्विगुणा मध्यमा भवेत् ७८
त्रिगुणा चोत्तमा प्रोक्ता देशिकस्य तु दक्षिणा
गोभूमिदासधान्यादिगृहोपकरणानि च ७९
दापयित्वा विशेषेण देशिकं तोषयेत्ततः
ऋध्येतृमूर्तिपांश्चैव दैवज्ञं पूजयेत्ततः ८०
संपूज्य स्थपतिं तत्र वस्त्राभरणकैरपि
ध्यात्वा सदाशिवं रूपं मूलमन्त्रं समुच्चरेत् ८१
फेलायाः प्राङ्मुखो भूत्वा स्थापयेदादिशैवकः
पांसुना पूरयेद्गर्तं सुस्निग्धं सुदृढं नयेत् ८२
सभां वा कल्पयेदूर्ध्वं बिम्बं वोपरि कल्पयेत्
शिवादीनां च देवानां देवीनां द्वारदक्षिणे ८३
स्तम्भमूले तथा योगे गर्ते गर्भं निधापयेत्
होमस्तम्भवति स्तम्भे पादकूर्चावृतेरधः ८४
तस्मादत्युन्नतो निम्नो गर्भस्सम्पद्विनाशकृत्
ऋथवा ब्रह्मगर्भं तु ब्रह्मस्थाने निधापयेत् ८५
सभाप्रपाराडपानां कर्णपादे प्रदक्षिणे
द्वितीयस्तम्भके द्वारदक्षिणाङ्घ्रौ तु विन्यसेत् ८६
गर्भं नाट्यसभायां चेत् प्रक्षिपेत्कुटिकामुखे
मराडतस्तम्भमूले तु गर्भं संस्थापयेत्सुधीः ८७
गेहगर्भे सभाभागे द्वारस्तम्भो विधीयते

चूलिकाकारपादे वा तस्या गर्भो विधीयते ८८
तुलाभाराभिषेकार्थं मराडपोऽपि तथा भवेत्
सर्वेषां मराडपानां च गर्भस्थानं प्रकथ्यते ८९
द्वारदक्षिणपादे वा वामस्तम्भेऽथवाङ्कणे
पूर्वोक्तकर्णपादे वा द्वारदक्षिणयोगके ९०
मराडपस्तम्भमूले तु प्रथमावरणे न्यसेत्
पादबन्धविमाने तु गेहगर्भोपरि न्यसेत् ९१
प्रतिबन्धविमाने तु वृतेरुपरि विन्यसेत्
वृतेरुपरि विप्राणां कुमुदोपरि भूभृताम् ९२
जगत्युपरि वैश्यानां शूद्राणां पादुकोपरि
सर्वेषां भूगतं कार्यं सर्वसिद्धिकराय च ९३
पुष्पदन्ते च भल्लाटे महेन्द्रे च गृहक्षते
दक्षिणे नेत्रभित्तौ तु सौम्यादौ तु चतुर्गृहे ९४
द्वारप्रदक्षिणस्तम्भयोगे वापि विधीयते
परिवारालयानां तु मूलवत्कर्म चाचरेत् ९५
शालानां तु चतुष्कोणेष्विष्टदेशे प्रगृह्यताम्
मालिकायुक्तशालं चेत्कोणस्तम्भे द्वितीयके ९६
प्रथमावरणे वापि द्वितीयावरणे न्यसेत्
स्थित्वा बहिर्बहिः प्रेक्ष्य वामावामे विकल्प्य च ९७
अन्तर्बहिर्मुखं गर्भं वास्तुमध्ये प्रयोजयेत्
आलये मराडपे चैव निर्गमस्य प्रदक्षिणे ९८
गोपुराणां च सर्वेषां प्रवेशस्य प्रदक्षिणे
स्वात्याख्यरङ्गहीनानां शालानां नेत्रभित्तिके ९९
तद्युक्तानां च सर्वेषां पादमूले निवेशयेत्
अथवा मध्यभित्तौ स्याद्द्वारसव्येऽथ मध्यमे १००
वासस्य पञ्चस्थानानि शालासु च गृहेषु च

वापीकूपतटाकादौ दीर्घिकासेतुबन्धने १०१
गर्भं चेत्तदुदग्भागे पूर्वस्यां वाथ विन्यसेत्
वास्तुपूजा च होमञ्च गर्भन्यासे विधीयते १०२
गोपुरं परिवारं च मूलवास्तुनिरीक्षणम्
मण्डपानां मुखं शास्त्रे सर्वस्मिन् परिकीर्तितम् १०३
भित्तिव्यासेन चाष्टांशे बहिरंशचतुष्टयम्
अन्तस्त्रीनन्तरे नीत्वा गर्भं सम्यग्विनिक्षेपेत् १०४
इति कामिकाख्ये महातन्त्रे गर्भन्यासविधिः एकत्रिंशत्तमः पटलः

## बालस्थानविधिः

अथ वक्ष्ये विशेषेण बालगेहस्य लक्षणम्
बालस्थानं विना विद्वान् मूलस्थानं न कारयेत् १
बाललिङ्गादिहीनं तु मूललिङ्गादिकं नहि
अयं विभागो ग्रामस्य प्रारम्भेऽन्यत्र चान्यथा २
बाललिङ्गादिहीनं वा तद्युक्तं वा समाचरेत्
मूलस्थानस्य चैशान्यामुत्तरे पूर्वयाम्ययोः ३
आग्नेय्यामिष्टदेशे वा कुर्याद्बालगृहं गुरुः
नवदण्डं व्यपोह्यैव कुर्याद्धाम महान्तरम् ४
त्रियुगेन्द्रियषढ्ढस्तैस्सप्तहस्तेन वा गृहम्
यद्वा करद्वयेनैव मूलस्थानं प्रकल्पयेत् ५
बालस्थानमथार्धेन गर्भगेहात्तथा भवेत्
मूलभागविशालेन भित्तिर्द्वित्रिगुणा मता ६
शेषं तु गर्भगेहस्य मण्डपं वा सभाकृति
तस्य गर्भगृहार्धं तु हीनमध्यार्धकं तु यत् ७
उत्कृष्टमध्यमाष्टांशे नन्दमानं प्रकीर्तितम्
लिङ्गायामं सुवृत्तं स्यान्नाहायामौ समौ मतौ ८

चित्राहिशिरसोपेतं सूत्रहीनं तु कारयेत्
नवाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् ९
त्रयस्त्रिशाङ्गुलं यावद्बाललिङ्गं तु वा भवेत्
तल्लिङ्गं त्रिचतुर्भागमानेन तु निवेशयेत् १०
मूलोदयसमं श्रेष्ठं मध्यहीनमधोन्तरम्
वसुधा भाजिते तत्र नवलिङ्गोच्छ्रया मताः ११
सप्ताङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्
तरुणप्रतिमानां तु नवधा मानमीरितम् १२
सकले सकलं कुर्यान्निष्कले चैव निष्कलम्
मूलबिम्बार्धमानं तु श्रेष्ठं वेदांशमानतः १३
हीनमष्टांशके मध्ये नवमानं तु बेरकम्
निष्कलस्य विशालेन चासनं चोत्तमं भवेत् १४
हीनं स्याच्चतुरंशेन मध्यमे नवमानकम्
लिङ्गमानवशेनापि पीठं तु परिकल्पयेत् १५
लोहोपलकुजैर्बाललिङ्गबेरं विधीयते
क्षीरवृक्षैः पलाशैर्वा वटोदुम्बरपिप्पलैः १६
मधूकपनसप्लक्षैस्सालचन्दनखादिरैः
सरलामरवृक्षाभ्यां लिङ्गबेरं समाचरेत् १७
हर्म्यारम्भे च जीर्णे च भिन्ने च विकलाङ्गके
स्फोटनादिषु दोषेषु बालस्थानं तु कारयेत् १८
प्रागेव द्वादशाब्दात्तु चालनं लिङ्गबेरयोः
तदूर्ध्वं नेष्टमन्यत्र तत्रैव स्थापयेत्सुधीः १९
बालालयाग्रे कर्तव्यं मण्डपं चतुरश्रकम्
तत्समं वा तदर्धं वा त्रिपादं वाग्रमण्डपम् २०
पक्वेष्टकाशिलाद्याभिर्दृढं कुर्याद्यथाविधि
विस्तारसमतुङ्गाढ्यं दण्डिकाचूलिकान्वितम् २१

मूलहर्म्यं यथाद्वारं तथैव तरुणालये
तुर्याश्रमष्टवृत्तं वा त्रिधा पीठाकृतिर्मता २२
लिङ्गनाहं तु विस्तारं पीठं वार्धोन्नतिर्मता
इष्टकाभिस्सुपक्वाभिः लिङ्गं स्यात्सुधया मृदा २३
रत्नन्यासो न कर्तव्यः पादशैलादिकं नहि
प्रागेव कुर्यात्तद्धीमान् विधिना चाङ्कुरार्पणम् २४
बालालयाग्रे कर्तव्यं मण्डपं चतुरश्रकम्
दशरन्ध्राष्टहस्तैर्वा मण्डपस्सप्तहस्ततः २५
विस्तारस्तम्भसंयुक्तं भानुस्तम्भयुतं तु वा
पङ्क्तित्रयसमायुक्तं चतुरश्रं सतोरणम् २६
दर्भमालासमायुक्तं वितानाद्यैस्समन्वितम्
मध्यांशे वेदिकां कुर्यात्तच्चतुर्थांशकोन्नतम् २७
वस्वङ्गुलं तु विस्तारमुत्सेधश्चतुरङ्गुलः
तस्याश्च परितश्चाष्टदिक्षु कुण्डानि कल्पयेत् २८
दिशासु चतुरश्राणि कोणेष्वब्जानि कल्पयेत्
ईशानशक्रयोर्मध्ये प्रधानं वृत्तकुण्डकम् २९
अथवा पञ्चकुण्डानि चैकं वा पूर्वतस्थितः
मण्डपस्योत्तरे पार्श्वे स्नानश्वभ्रं प्रकल्पयेत् ३०
पश्चाच्छिल्पिनमुद्वास्य पुण्याहं वाचयेत्ततः
जलमध्ये प्रपां कुर्यात्सर्वलक्षणसंयुताम् ३१
प्रक्षाल्य पञ्चगव्येन लिङ्गं चास्त्रेण देशिकः
शुद्धतोयेन गन्धाद्यैस्संस्नाप्य च हृदार्चयेत् ३२
वस्त्रयुग्मेन संवेष्ट्य लम्बकूर्चसमन्वितम्
जले तु शाययेल्लिङ्गं सद्येनैव कुशोपरि ३३
त्रिरात्रं द्व्येकरात्रं वा वेदयामावसानकम्
प्रभूतपञ्चगव्येन स्नपनं वा समाचरेत् ३४

परितः कलशानष्टौ लोकपालाधिदैवतान्
सवस्त्रां च हिरगयां च ससूत्रान् सापिधानकान् ३५
ब्राह्मणान् भोजयेत्तत्र मगडपे समलङ्कृते
वास्तुहोमं ततः कुर्यात्प्रासादे मगडपेऽपि वा ३६
पर्यग्निकरणं कृत्वा वास्तुहोमस्थवह्निना
जलादानीय लिङ्गं तु स्नानश्वभ्रोपरि न्यसेत् ३७
वस्त्रं विसृज्य लिङ्गे तु पूर्ववच्छुद्धिमाचरेत्
कौतुकं बन्धयेद्धीमान् हृदयेन तु मन्त्रतः ३८
वस्त्रेण वेष्टयेल्लिङ्गं वामदेवेन देशिकः
शालिभिर्वेदिकामध्ये अष्टद्रोणार्धनिर्मितैः ३९
तगडुलैश्च तिलैर्दर्भैः पुष्पैश्च सुपरिस्तरेत्
शयनं कल्पयेन्मध्ये चर्मजाद्यैरनुक्रमात् ४०
सर्वातोद्यसमायुक्तं स्तोत्रमङ्गलवाचकैः
सर्वलक्षणसंयुक्तस्त्वादिशैवस्सशिष्यकः ४१
दिव्यगन्धानुलिप्ताङ्गः पुष्पमालाविभूषितः
शुक्लवस्त्रश्च सोष्णीषश्शुक्लवस्त्रोत्तरीयकः ४२
पञ्चाङ्गभूषणोपेतस्सकलीकृतविग्रहः
ईदृशैर्लक्षणैर्युक्तस्त्वाचार्यश्चोत्तराननः ४३
वेद्यूर्ध्वे शाययेल्लिङ्गं प्राक्शिरस्कमधोमुखम्
अभ्यर्च्य हृदयेनैव गन्धाद्यैरुपचारकैः ४४
द्रोणाम्बुपूरितं सूत्रवेष्टितं कूर्चसंयुतम्
पञ्चरत्नसमायुक्तं सापिधानं सवस्त्रकम् ४५
शिवकुम्भं न्यसेत्तस्य मूर्ध्नि देशे तु वर्मणा
वर्धनीं वामतः स्थाप्य सूत्रकादिभिरन्विताम् ४६
शिवमन्त्रं न्यसेद्ध्यात्वा देवदेवं सदाशिवम्
अष्टत्रिंशत्कलोपेतं पूजयेन्मूलमन्त्रतः ४७

पूजयेत्तु स्वमन्त्रेण वर्धनीं तु मनोन्मनीम्
मुकुलीं पद्ममुद्रां च लिङ्गमुद्रां प्रदर्शयेत् ४८
अभितस्तु घटानष्टौ द्रौणार्धोदकपूरितान्
सूत्रादिभिस्समोपेतान् हेमटङ्कसमायुतान् ४९
इन्द्रादिषु क्रमेणैव स्थापयेद्देशिकोत्तमः
अनन्तादिशिखण्डयन्तान् स्वस्वमन्त्रैर्घटेषु च ५०
विन्यस्य गन्धपुष्पाद्यैर्नैवेद्यान्तं हृदार्चयेत्
परिवारघटानष्टौ चोपवेद्युपरि न्यसेत् ५१
ऋगाद्यध्ययनं कुर्युस्संस्कृता वेदवित्तमाः
एकं वा सर्ववेदांश्च पठेत्स्वस्वदिशि स्थितः ५२
तदभावे त्वजाताद्या जप्तव्या मूर्तिपैस्सह
सद्योजातस्तु ऋग्वेदो वामदेवो यजुस्स्मृतः ५३
अघोरस्सामवेदस्तु अथर्वः पुरुषस्स्मृतः
अष्टोत्तरसहस्रं वा तदर्धं वा तदर्धकम् ५४
अष्टोत्तरशतं वापि जपेद्वैदिकसिद्धये
मूत्रिधाराद्यलाभे तु देशिकस्सर्वमाचरेत् ५५
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
खादिराश्वत्थबिल्वाश्च उदुम्बरवटौ तथा ५६
मधूकार्कपलाशाश्च समिधः संप्रकीर्तिताः
पलाशस्तु प्रधानं च सर्वेषामिध्ममुच्यते ५७
समिदाज्यान्नलाजैश्च तिलैर्होमं समाचरेत्
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ५८
पूर्णाहुतिं ततः कुर्याद्वौषडन्तेन मूलतः
शिवाद्दशांशतोऽन्येषां दिक्षु ब्रह्माणि कल्पयेत् ५९
विदिक्षु हृदयादीनि मूलार्धं सममेव वा
पूर्णाहुतिं ततः कुर्याद्वौषडन्तेन मूलतः ६०

आत्मतत्त्वादिकान् न्यस्य मूर्तिमूर्तीश्वरानपि
सर्वान् लिङ्गे तु विन्यस्य वह्नावावाह्य होमयेत् ६१
पूर्णाहुतिं ततो दद्यान्नयेद्रात्रिं च मङ्गलैः
अपरे दिवसे धीमान् सुस्नातो मूर्त्तिपैस्सह ६२
सकलीकृतदेहस्तु द्वारद्वाराधिपान् यजेत्
संपूज्य देवकुम्भाग्नीन् कुण्डमस्त्रेण चार्चयेत् ६३
संस्कृत्य स्रुक्स्रुवाभ्यां तु ब्रह्मादीन् परिधौ यजेत्
पूर्णाहुतिं ततो दत्वा मन्त्रानावाह्य तर्पयेत् ६४
प्रायश्चित्तास्त्रमन्त्रैस्तु होमं सम्यक् समाचरेत्
अघोरेण शतं हुत्वा जयाद्यैर्दुरितघ्नये ६५
पूर्णाहुतिं ततः कुर्याद्देशिको मूर्तिपैस्सह
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ६६
अथवा पञ्चनिष्कं वा द्विगुणा मध्यमा भवेत्
त्रिगुणा चोत्तमा प्रोक्ता त्वधमत्रयकल्पने ६७
द्विगुणा मध्यमे कल्पे त्रिगुणा चोत्तमे भवेत्
दशभागैकभागं तु मूर्तिधारकदक्षिणा ६८
तदर्धं मन्त्रजप्तॄणां वैदिकानां तु तत्समम्
दैवज्ञे तत्समं विद्याद्द्विगुणं वास्तुहोमिनः ६९
आचार्यस्य चतुर्थांशाच्छिल्पिने दक्षिणा मता
मुहूर्तनाडिकापूर्वं लिङ्गस्थापनमारभेत् ७०
उत्थाप्य शयनाल्लिङ्गं बालस्थानं प्रवेशयेत्
स्थापयेत्पीठमध्ये तु शिवमन्त्रमुदीरयन् ७१
मन्त्रयित्वा त्रिबन्धेन हृदयं मन्त्रमुच्चरन्ह
मुहूर्ते समनुप्राप्ते गुरवे सन्निवेदयेत् ७२
शङ्खदुन्दुभिनिर्घोषैर्गीतनृत्तसमायुतम्
ब्रह्मघोषसमायुक्तं नानाभक्तजनैर्युतम् ७३

छत्रध्वजवितानैश्च धूपदीपैस्समाकुलम्
वर्धन्यास्स्रावसहितं मङ्गलाङ्कुरशोभितम् ७४
कुम्भानुद्धृत्य शिरसा धृत्वा धामप्रदक्षिणम्
कृत्वा गर्भगृहे चैव स्थापयेत्स्थण्डिलोपरि ७५
आसनं कल्पयेत्तत्र पूर्वोक्तविधिना सह
मूर्ध्नि न्यस्य पवित्राणि नेत्रमन्त्रं च विन्यसेत् ७६
अष्टत्रिंशत्कलान्यासं लिङ्गे तु परिकल्पयेत्
ध्यात्वा सदाशिवं तत्र विद्यादेहेन पूजयेत् ७७
कुम्भाद्बीजं समादाय लिङ्गमूर्ध्नि शिवं स्मरन्
पिण्डिकायां न्यसेद्बीजं शक्तेर्लिङ्गस्य सौम्यके ७८
संस्नाप्य कुम्भवर्धन्यास्तोयैर्लिङ्गं च पीठिकाम्
अष्टविद्येश्वरांस्तत्र पीठे पूर्वादिषु न्यसेत् ७९
अर्चनोक्तं समभ्यर्च्य शेषं युक्त्या समाचरेत्
परिवारस्य बीजानि स्वस्वस्थानेषु विन्यसेत् ८०
स्नपनं कारयेत्तोयैः प्रभूतं तु हविर्ददेत्
नित्योत्सवादिकान् सर्वान् बालस्थानेऽपि कारयेत् ८१
अन्येषामपि देवानां बालस्थानस्य निर्णयम्
बेरमानं च हर्म्याद्यं कुर्याद्द्वारेण वर्त्मना ८२
नयनोन्मीलनं गव्याभिषेकं शयनं तथा
कुम्भसंस्थापनं पूजा होमं च स्थापनादिकम् ८३
ध्यानमात्रं च नित्यार्चा निर्मलैः कुसुमादिभिः
तत्तद्देवप्रतिष्ठोक्तमार्गेणैव समाचरेत् ८४
एतत्सामान्यमुद्दिष्टं विशेषः किञ्चिदस्ति हि
द्वितीये स्थापनार्हस्तु पूर्वरात्रौ मुनीश्वराः ८५
मूलगेहाग्रके तत्र पूर्ववत्स्थण्डिलोपरि
कुम्भं तु स्थाप्य पूर्वोक्तविधिना देशिकाधिपः ८६

मूललिङ्गं तु संपूज्य गन्धाद्यैर्हविषा सह
प्रणम्य देवदेवेशं कर्ता कर्मविचक्षणः ८७
एकवत्सरमारभ्य यावत्स्याद्द्वादशाब्दकम्
तेष्वन्तरे नवीकृत्य पुनस्संस्थापयाम्यहम् ८८
इति विज्ञाप्य तत्कर्ता देशिकेन सहैव तु
लिङ्गाद्देवं समावाह्य कुम्भमध्ये न्यसेद्गुरुः ८९
पीठाद्देवीं समावाह्य वर्धन्या मध्यमे न्यसेत्
तदग्रे स्थण्डिलं कृत्वा प्राग्वदग्निमुखं नयेत् ९०
समिदाज्यान्नलाजैश्च तिलैरष्टोत्तरं शतम्
मूलेन होमयेद्विद्वानङ्गानां च दशांशतः ९१
त्रिर्मधुप्लुतदूर्वाभिर्मृत्युजिन्मन्त्रमुच्चरन्
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ९२
एवं हुत्वा तदन्ते तु क्षणहोमं समाचरेत्
वारैश्च रविपूर्वैश्च नक्षत्रैस्तुरगादिभिः ९३
मेषादिमासकैश्चैव तिथिभिः प्रथमादिभिः
जुहुयादेकयाहुत्या प्रतिवत्सरमाचरेत् ९४
वत्सरे वत्सरे कार्यमथवान्ते समाचरेत्
पूर्णाहुतिं ततो दत्वा देवे सर्वं समर्पयेत् ९५
कुम्भानुद्धृत्य वेद्यां तु स्थापयेत्सर्वमङ्गलैः
सकलानां तु सर्वेषां कर्तव्यं बालबिम्बकम् ९६
प्रतिमायां तु कुम्भे वा पीठे वा चेष्टकामये
परिवारेऽपि चैवं स्याद्बालबिम्बं प्रकल्पयेत् ९७
अन्यत्सर्वं समानं स्यात्पूर्वेणैव समाहितः ९८
इति कामिकाख्ये महातन्त्रे बालस्थापनविधिः द्वात्रिंशत्तमः पटलः

## ग्रामगृहविन्यासविधिः

ग्रामादीनां तु विन्यासः निवेशाद्यं च कथ्यते
आदौ कालपरीक्षा स्याद्द्वितीयं देशनिर्णयम् १
तृतीयं भूपरीक्षा स्यात्प्रवेशार्थबलिस्ततः
स्वीकारः पञ्चमो भूमेष्षष्ठः कर्षणमुच्यते २
शङ्कुसंस्थापनं पश्चादष्टमः पदनिर्णयः
नवमस्सूत्रविन्यासो दशमो देवताबलिः ३
गृहवीथ्यादिभेदस्स्यादेकादश उदाहृतः
द्वादशो गर्भविन्यासस्ततो देवनिवेशनम् ४
द्वादशान्ते द्विजातीनां प्रवेशस्तदनन्तरम्
तदन्ते भूसुराणां तु निरीक्षणमुदाहृतम् ५
ततो भूमिविभागस्स्यादेवं बुध्वा समाचरेत्
गृहारम्भात्पुरैवं स्यादमरावासनिर्णयः ६
पूर्वं देवान् प्रतिष्ठाप्य पश्चाद्विप्रान्निवेशयेत्
मूलबालालयोक्तेन विधिनालयनिर्णयः ७
देवानां स्यान्मनुष्याणां कुर्याच्छालाविधानतः
उत्कृष्टे मध्यमे हीने देववेश्म तथा मतम् ८
उत्कृष्टे देववेश्म स्याद्धीनं यदि तदा नरः
हीनभावं तु यत्नेन समं वोत्कृष्टमाचरेत् ९
एतत्सर्वं तु पूर्वोक्तक्रमेणैव समाचरेत्
ग्रामादीनां गृहादीनां मालिकानां विशेषतः १०
मण्टपादेः प्रवक्ष्यामि प्रवेशं तु महानसे
अन्येषामपि वस्तूनां यजमानप्रेवशनम् ११
सदा सुमनसो दान्तान् दयायुक्तान् दृढव्रतान्
पत्नीपुत्रसमायुक्तान् सर्वोपस्करसंयुतान् १२
ग्रामानुकूलनक्षत्रान् देवाग्निगुरुपूजकान्
वेदवेदाङ्गतत्त्वज्ञान् श्रोत्रियान् प्रियदर्शनान् १३

अधीतशिवशास्त्रांश्चादरिद्रान् दोषवर्जितान्
उत्कृष्टकर्मनिरताननुष्ठानपरायणान् १४
विप्रानाहूय निश्चित्य दशाङ्गं लेखयेत्तदा
राष्ट्रग्रामौ गोत्रसूत्रे सव्यदक्षिणलाञ्छने १५
विद्या कुलं पितुर्नाम स्वच्छाङ्गं दश वा मता
मूलकोशे लिखित्वैवं ताम्रपात्रे विनिर्मिते १६
शिलादौ वा तदा वस्तु श्रद्धयोदकपूर्वकम्
प्रदद्याद्भूमिपूर्वाणि गृहोपकरणानि तु १७
स्त्रीणामाभरणं धान्यं वस्त्रं गां च पयस्विनीम्
दासीदासं च विप्रेभ्यो दद्याच्छ्रद्धान्वितो नृपः १८
ब्राह्मणेभ्यो महीं दद्यात्पुण्यकाले तु सोदकम्
अन्येषामिष्टकाले तु दद्यात्केवलया गिरा १९
शेषं सर्वं तु सामान्यं सर्ववास्तुनिवेशने
नास्तिकान् पिशुनान् क्रूरान् देवाग्निगुरुनिन्दकान् २०
बलापहृतब्रह्मस्वान्नृपद्रोहादिसंयुतान्
वर्जयेदीदृशान् विप्रान् नृपस्तद्दानकर्मणि २१
पूर्णकुम्भं प्रदीपांश्च पुरस्कृत्य शुभे दिने
स्वस्तिवाचनसंयुक्तं वेशयेद्ब्राह्मणान् वरान् २२
चतुर्विंशतिकान् मध्यान् षट्त्रिंशत्संख्यकान् वरान्
अल्पे चैकं द्वयं वापि त्रयं वा सन्निवेशयेत् २३
स्थापयेच्च यथापूर्वं विप्रान् पूर्वोद्धतानपि
पत्नीपुत्रसमायुक्तान् देवाग्निसहितांस्तथा २४
एतेषां च प्रवेशेऽपि वास्तुं संपूज्य होमयेत्
अकवाटमनाच्छाद्यमदत्तबलिभोजनम् २५
गृहं विशेद्व्रजन्नैव विपदां पदमादरात्
स्वशक्तितोऽपि विप्रांस्तु स्वे स्वे गेहे निवेशयेत् २६

दैविके मानुषे भागे गेहे पूर्वं निवेशयेत्
यजमानानुकूलर्क्षे राशौ वा तन्निवेशयेत् २७
गृहमण्टपकूटादौ शालासु च महानसे
अनेनैव प्रकारेण तत्कर्तारं निवेशयेत् २८
देवालयादौ देवेशं देवीं स्कन्दसमन्विताम्
अथवा केवलां देवीं देवेशं चाथ मण्डपम् २९
देवाङ्गभूतकूटादौ वेशयेत्पूर्वमार्गतः
राजानं मालिकादौ तु प्रधानमहिषीयुतम् ३०
प्रधानमन्त्रिसंयुक्तममात्यादिभिरावृतम्
अङ्कुरार्पणपूर्वं वा रहितं वा निवेशयेत् ३१
गृहमण्डपकूटादौ शालासु च महानसे
ब्राह्मणादिचतुर्वर्णान् मार्गेणानेन वेशयेत् ३२

इति कामिकाख्ये महातन्त्रे ग्रामगृहविन्यासविधिस्त्रयस्त्रिंशत्तमः पटलः

## वास्तुशान्तिविधिः

वास्तुशान्तिविधिं वक्ष्ये ग्रामादीनां शुभावहम्
वास्तूपशमनं नाम सर्वदोषविनाशनम् १
जीर्णोद्धारे नवीकारे छेदे भेदे तथैव च
वाय्वग्निजलसंबाधे नृपचोरादिबाधके २
दक्षिणापरवृद्धौ च प्रागुदक्छेदनेऽपि च
न्यूनातिरेके मानस्य द्वारनिर्गमभेदने ३
प्राकारपरिघाभेदे देवतालयकल्पने
यजमानान्तरे चैव हीनलक्षणवास्तुके ४
त्यक्ते शून्ये तथा नष्टे प्रातिलोम्ये तथैव च
आभिचारकृते दोषे व्याधिमारीभयेऽपि च ५

उत्पाते दुर्निमित्ते च सर्वदोषापनुत्तये
वास्तूपशमनं कुर्यात्सद्य एव विचक्षणः ६
वक्ररथ्यान्विते वापि विन्यासाद्यविवर्जिते
अन्येष्वशुभयुक्तेषु गृहदेवालयेषु च ७
महाद्भुते च संप्राप्ते त्रिविधे चोत्तमादिके
प्रायश्चित्तं विशेषेण वक्ष्यमाणमिदं नयेत् ८
ततो गुरुः कृतस्नानश्शिवविप्रः प्रसन्नधीः
अहताभ्यां सुवासोभ्यां संयुक्तस्सोत्तरीयकः ९
वास्त्वङ्गदेवतास्सर्वास्तत्तच्छास्त्रोक्तमार्गतः
पूजयित्वा विधानेन देवानन्यान् तथैव च १०
वास्तुमध्ये प्रपां कुर्याच्चान्यस्मिन् वा मनोरमे
दर्भमालादिभिर्युक्तां सर्वालङ्कारसंयुताम् ११
वारुण्यामिन्द्रकाष्ठायां दक्षिणे चोत्तरेऽपि वा
तन्मध्ये दण्डमात्रेण वेदीं पञ्चाङ्गुलोच्छ्रिताम् १२
तस्यां पिष्टाक्तसूत्रेण पदानि परिकल्पयेत्
चतुर्णवविकारांश्च पञ्चविंशत्पदं तु वा १३
षट्त्रिंशदंशकैश्चापि चत्वारिंशन्नवाधिकम्
अष्टाष्टकपदं वापि सूत्रवर्गपदं तु वा १४
एतेष्वन्यतमं योग्यं विन्यसेद्वास्तुवित्तमः
शालिभिस्स्थण्डिलं कृत्वा तण्डुलैस्तिलमिश्रकैः १५
लाजदर्भसमायुक्तं पुष्पैश्चैव समन्वितम्
चरुं च तत्र संस्थाप्य घृतेनैवाभिघार्य च १६
संप्रोक्ष्य हृदयेनैव वस्त्रेणाच्छाद्य सत्कुशैः
वेद्यास्तु पश्चिमे देशे कुण्डं कृत्वा त्रिमेखलम् १७
चतुरश्रं हस्तमानं नवाङ्गुलसमुच्छ्रयम्
तत्र वह्निं समाधाय वह्निकार्योक्तमार्गतः १८

समिदाज्यहविर्भिश्च यवकृष्णतिलैरपि
मध्वाज्यक्षीरसंयुक्तदूर्वया होममाचरेत् १९
पञ्चब्रह्मशिवाङ्गैश्च विद्याङ्गैश्शिवपूर्वकैः
अघोरेण शतं वार्धं द्रव्यैः पूर्वैस्तु पञ्चभिः २०
अष्टोत्तरशतं दूर्वाहोमो मृत्युजितो भवेत्
पूर्णाहुतिं ततो हुत्वा वास्तुदेवान् समर्चयेत् २१
पदेषु कूर्चं निक्षिप्य कुर्यादावाहनादिकम्
ब्रह्माणं प्रथमं चेष्ट्वा ततस्सर्वांश्च पूजयेत् २२
द्वादशाब्दसुसंपूर्णां विप्रजातिसमुद्भवाम्
सर्वलक्षणसंपूर्णां नानाभरणभूषिताम् २३
शुक्लाम्बरधरां कन्यां शुक्लपुष्पैरलङ्कृताम्
शुक्लवस्त्रोत्तरीयां तां संपूज्यान्नादिभिस्सुखम् २४
तस्याश्च दत्वा ताम्बूलं बलिद्रव्यसमन्वितम्
दद्यात्तस्याश्च हस्ते तु बलिपात्रं गुरुस्तदा २५
पञ्चाङ्गभूषणोपेतस्सोष्णीषस्सोत्तरीयकः
नववस्त्रधरश्शैवविप्रो दद्याद्बलिं स्मरेत् २६
मध्वाज्यदधिसंयुक्तं शुद्धमन्नं तु वा ददेत्
सर्वद्रव्यसमायुक्तमथवैनं समाचरेत् २७
रात्रौ ग्रामबलिं दद्यात्प्रासादादौ यथेष्टतः
चतुष्कुण्डे तु वा वास्तुदेवानां तर्पणं भवेत् २८
दक्षिणां दापयेत्पश्चादाचार्यादिष्वनुक्रमात्
अधमा पञ्चनिष्कं स्याद्द्विगुणा मध्यमा भवेत् २९
त्रिगुणा चोत्तमा प्रोक्ता देशिकस्य तु दक्षिणा
अग्रहारादिके देवागारे राज्ञां द्विजन्मनाम् ३०
वैश्यानां शूद्रजातीनामावासे मण्डपादिषु
चण्डालाद्युषिते चैव तज्जन्ममरणेऽपि च ३१

दूषितेष्वसुराद्यैश्च विधिमेनं समाचरेत्
कूपे वा पुष्करिरायादौ जलं सर्वं बहिः न्तिपेत् ३२
सहस्रकुम्भतोयं वा शतकुम्भोदकं तु वा
पञ्चगव्यं तु निन्तिप्य शान्तिहोमं तु कारयेत् ३३

इति कामिकारव्ये महातन्त्रे वास्तुशान्तिविधिः चतुस्त्रिंशत्तमः पटलः

शालालन्तरणविधिः

अथातस्संप्रवन्त्यामि शालानां लन्तरणं परम्
देवानां ब्राह्मरणानां च न्तत्रियारणां विशेषतः १
वैश्यानां शूद्रजातीनां वासयोग्यास्तु तास्स्मृताः
एकद्वित्रिचतुस्सप्तदशशालाः प्रकीर्तिताः २
तदूर्ध्वं त्रित्रिवृद्ध्या तु यावदिष्टं प्रगृह्यताम्
ता एव मालिकाः प्रोक्ता मालावत्क्रियते यतः ३
मानं तावद्द्विधा रव्यातं हस्तभक्तिवशेन तु
सार्धहस्तं समारभ्य त्र्यङ्गुलविवर्धनात् ४
अष्टोत्तरशतं यावद्धस्तानां विस्तरो मतः
विस्तारादर्धहस्तं स्यात्त्रिगुणान्तं समायतिः ५
एवं हस्तप्रमारणं स्याद्भक्तिमानवशात्ततः
एकहस्तं समारभ्य त्र्यङ्गुलविवर्धनात् ६
नवहस्तान्तविस्तारा भक्तयः परिकीर्तिताः
विस्तारादद्व्यङ्गुलार्धा स्याद्द्विगुणान्ता समायतिः
एकभक्तिविशालात्तु चार्धभक्तिविवर्धनात् ७
त्रिगुणान्तप्रमारोन विस्तारादायतिर्मता
विस्तारे चायते चैव विन्यस्ता भक्तयश्च ताः ८
प्रमारोन समस्ताश्चेद्विषमा वा यथेष्टतः

विस्तारे चायते चैव युग्मा ओजाश्च भक्तयः ९
भक्त्यभ्यन्तरमानं वा भक्तिबाह्यमथापि वा
भक्तिमध्यप्रमाणं वा तत्स्थपादात्तथापि वा १०
चतुरश्रं तु देवानां द्विजानामपि सत्तमाः
क्षत्रियाणां तथा प्रोक्तमन्ययोरायताश्रकम् ११
हीनोक्तं श्रेष्ठजातीनां हितं नोक्तं विपर्ययात्
विस्तारसम उत्सेधस्सपादो वाथ सार्धकः १२
पादोनद्विगुणो वापि द्विगुणो वायतिस्समा
पादायामैस्तु वा कुर्याद्व्द्द्यमाणैर्यथाक्रमम् १३
आयादिसंपदर्थं तु विस्तारे चायतौ तथा
उत्सेधे चैव हस्तानां सम्यक्सम्पूर्णतां नयेत् १४
विस्तारात्केवलं वाथवायामादुन्नते तथा
विस्तारायामसंसर्गादायाद्यं परिगृह्यताम् १५
अष्टत्रित्र्यष्टभिर्हित्वा अष्टमन्वर्कभैर्भजेत्
आयो व्ययश्च योनिश्च नक्षत्रं शेषतो भवेत् १६
त्रिंशदाप्नोतु पर्यन्तं तिथिर्वारं तु सप्तभिः
अथवान्यप्रकारेण चायाद्यं परिगृह्यताम् १७
दैर्घ्यं दैर्घ्यस्य विस्तारं दैर्घ्यनाहञ्च नाहकम्
अष्टनन्दाग्निवसुभिर्गणयेन्नन्दनन्दनाः १८
अर्कदिग्वसुभैस्सप्तनवभिश्च क्रमाद्भजेत्
आयाद्यं पूर्ववत्प्रोक्तमायाधिक्यं शुभप्रदम् १९
यजमानस्य जन्मर्क्षेणानुकूलं यथा भवेत्
तथा परीक्ष्य कर्तव्यं नामनक्षत्रकं तु वा २०
परीक्ष्य बहुधा कुर्यादुभयं वा परीक्षयेत्
सर्वानुकूल्यं सर्वत्र वास्तु यस्मान्न लभ्यते २१
तस्माद्गुणाधिकं ग्राह्यमल्पदोषं यथा भवेत्

अधिष्ठानं च पादं च प्रस्तरं कर्ण एव च २२
शिखरं स्थूपिका चैव शालाङ्गमिति कथ्यते
यजमानस्य जान्वन्तं नाभ्यन्तं हृदयावधि २३
गलावधि शिरोऽन्तं च पादार्धं वा त्रिभागिकम्
त्र्यादिषोडशभागानामधिकं वोक्तमानतः २४
अधिष्ठानस्य मानं स्यात्तत्पादस्याथ कथ्यते
सार्धहस्तं समारभ्य त्रित्र्यङ्गुलविवर्धनात् २५
नवहस्तप्रमाणान्तास्तम्भोत्सेधाः प्रकीर्तिताः
अङ्गुलत्रयमारभ्य चार्धाङ्गुलविवर्धनात् २६
त्रिंशन्मात्रावसानास्तु विस्ताराः परिकीर्तिताः
चतुरंशं समारभ्य षोडशांशं यथाविधि २७
भागान्कृत्वैकभागेन न्यूनं स्यादग्रविस्तरः
एवमूर्ध्वोर्ध्वपादानां तारायामौ प्रकल्पयेत् २८
प्रस्तरं पाददैर्घ्यस्य चार्धमानेन कारयेत्
तन्मानं नवधा कृत्वा चैकाद्याचतुरंशकैः २९
न्यूनं वाप्यधिकं वापि प्रस्तरं कारयेद्बुधः
प्रस्तरोक्तप्रमाणं तु सर्वं कण्ठे विधीयते ३०
पादोक्तं सर्वमानं तु शिखरेऽपि विधीयते
ध्रुवाविधानरीत्या वा शिखरं परिकल्पयेत् ३१
कण्ठोक्तं सर्वमानं तु स्थूप्युत्सेधः प्रकीर्तितः
पादविष्कम्भमानेन द्विगुणादिनवान्तकम् ३२
भित्तिविष्कम्भ उद्दिष्टो द्व्यङ्गुलेनाथवा नयेत्
अष्टाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् ३३
त्रिहस्तान्तं तु विस्तारो भित्तीनां परिकीर्तितः
मूलभित्तेरिदं मानमूर्ध्वे पादार्धहीनकम् ३४
अन्योन्यमधिका वापि न्यूना वा भित्तयस्समाः

शालैका दण्डखण्डाभा द्विशाला तद्द्वयेन तु  ३५
तत्त्रयेण त्रिशाला स्याच्चतुश्शाला चतुष्टयी
सप्तभिस्सप्तशाला स्यादेवमन्यास्तु कीर्तिताः  ३६
विस्तारे चैकभक्त्यादिपञ्चाशद्भक्तिकावधि
आयामेऽपि तथा वृद्ध्या शतान्तं परिकल्पयेत्  ३७
आसामग्रे त्वलिन्दास्स्युः प्रधाने वा विशेषतः
एकद्वित्रिचतुष्पञ्चषट्सप्तालिन्दसंयुताः  ३८
पृष्ठे पार्श्वे तथैव स्युरिष्टदेशेऽथवा पुनः
पृथुद्वारं च द्वारांश्च एवमेव प्रकल्पयेत्  ३९
मध्ये तु प्राङ्कणं कार्यं विशालेनैकपङ्क्तिकम्
अर्धपङ्क्तिविवृद्ध्या तु त्रिंशत्पङ्क्त्यन्तमिष्यते  ४०
आयामे चैकपङ्क्त्यादित्रिगुणान्तं विशालता
एवं ब्रह्माङ्कणं कार्यं जलपातयुतं न वा  ४१
मिश्रं वापि प्रकर्तव्यं भ्रमणस्रववारियुक्
बाह्यवारियुतं वापि विवरं वा प्रकल्पयेत्  ४२
एकपङ्क्तिविशालादिपादपादविवृद्धितः
पञ्चभागावसानान्तं शालाविस्तार इष्यते  ४३
पृथुद्वारविशालं तु चैवमेव प्रकल्पयेत्
अलिन्दः पृथुद्वारेण समो वा चार्धमानतः  ४४
द्वारमानं तथैवं स्याद्दण्डकाद्वारमर्धतः
गर्भाधानक्रमणकं कभित्तिर्मुख्यधामनि  ४५
दक्षिणे नेत्रभित्तौ वा गर्भाधानं प्रकीर्तितम्
अथवा ब्रह्मभित्तौ वा गर्भाधानं विधीयते  ४६
कभित्तेर्दक्षिणे भागे स्वाम्यावासः प्रशस्यते
उत्तरे रङ्गमित्युक्तं तद्बहिरण्या गृहं भवेत्  ४७
कभित्त्यग्रभृते द्वारद्वयं कुर्याद्विशिष्यते

नवभागे गृहे तत्र दक्षिणे पञ्चभागकम् ४८
वामभागे त्रयं त्यक्त्वा मध्ये द्वारं विधीयते
अलिन्दे द्वारमेवं स्यादन्यत्राप्येवमेव तु ४९
कम्पद्वारं तु वा कुर्यान्मध्यपार्श्वद्वयोस्तथा
भित्तिव्यासेऽर्कभागं तु बाह्ये बाह्यशरांशकम् ५०
योगस्य मध्यमः पादमध्यमश्च विधीयते
भित्तिमध्यं तयोर्मध्यं पादमध्यं तु वा समम् ५१
कोणं च मध्यमं स्थानं त्यक्त्वा वारिवहो भवेत्
कोणात्तृतीयभागे तु जलनिर्गम इष्यते ५२
गृहक्षते महेन्द्रे च पुष्पदन्ते विधीयते
भल्लाटे चैव मध्ये च द्वारमासु विधीयते ५३
हस्तस्तम्भतुलादीनि नराणां युग्मसंख्यया
देवानामुभयं ग्राह्यं मध्यद्वारं तु वै तले ५४
अन्नागारादिमध्यं तु वास्तुमध्यात्प्रदक्षिणे
आदित्यान् नन्दपादान्ते पञ्चाङ्गुलगतिक्रमात् ५५
वास्तुमध्यादुदक्पूर्वं दक्षिणापरतः क्रमात्
धर्मनन्दाष्टधात्वंशाः पूर्वभागादिपादकाः ५६
एकैकांशगतास्तत्र स्तम्भस्थापनकर्मणि
गृहाङ्घ्रिमध्ययोर्मध्यं भित्तिमध्यमिति स्मृतम् ५७
एवं चतुर्गृहं प्रोक्तं शालायां कल्पयेन्नव
एतत्सर्वं तु शालानां सामान्यमिति कीर्त्यते ५८
तैतिलानां द्विजातीनां पाषण्डाश्रमिणामपि
हस्त्यश्वरथयोधानां यागहोमादिकर्मसु ५९
देवानां भूपतीनां च नृत्तगीतादिकर्मसु
एकशाला प्रशस्ता स्यात्स्त्रीणां रङ्गोपजीविनाम् ६०
लाङ्गलं गणिकादीनां शूर्पमुग्रोपजीविनाम्

शालाविरहितस्थाने कुड्ये द्वारं प्रयोजयेत्  ६१
ऊर्ध्वभूमिं समारभ्य रचना कथ्यतेऽधुना
प्रधानशाला यत्रैव रङ्गस्थानं विधीयते  ६२
स्वाम्यावासस्य विन्यासं मण्डपाकारसंयुतम्
चूलीहर्म्ययुतं चोर्ध्वे चाग्रद्वारसमन्वितम्  ६३
वास्तुद्वारयुतं चैव कभित्तेश्च विशेषतः
सर्वतः कुण्डसंयुक्तं गृहद्वारसमन्वितम्  ६४
रङ्गभित्तिसमायुक्तं धामसोपानसंयुतम्
सोर्ध्ववास्तव्यसंयुक्तं चूलीहर्म्ययुतं तु वा  ६५
अग्रकर्मसमायुक्तं कर्णकूटद्वयान्वितम्
कर्णकूटविहीनं वा चान्यत्सर्वं तु वास्तुषु  ६६
मध्यमं चाङ्कणस्थानं मण्डपेन युतं तु वा
सभाकारयुतं वापि केवलं वा जलस्थलम्  ६७
ऊर्ध्वभूमिरिति ख्याता सान्यथा च निगद्यते
प्रधानमण्डपागारं चूलीहर्म्यविवर्जितम्  ६८
स्वामिवासं विधायैवं रङ्गं कुर्यात्तु तत्समम्
लूपारोहक्रियायुक्तमन्यत्पूर्वोक्तवर्त्मना  ६९
अथवा सर्वशालायां लूपारोहणमेव वा
ऊर्ध्वभूमिरिति ख्याता द्वितीया शृणुत द्विजाः  ७०
चतुश्शालाप्रदेशे तु तदधोभूमिरुच्यते
सा भूमिर्मण्डपागारचूलीहर्म्यविभूषिता  ७१
तदधस्तात्समन्तात्तु पृथुद्वारयुता तथा
भागद्वयेन तस्यैव विन्यासः परिपठ्यते  ७२
चतुष्कोणे चतुष्कूटं तद्विस्तारेण निर्मितम्
चतुर्भागद्विभागेन पृष्ठावाससभां नयेत्  ७३
अग्रकूटद्वयोर्मध्ये शालाः पृष्ठसभा यथा

पार्श्वयोरुभयोश्चैव चतुर्भागान्तविस्तरम् ७४
पञ्जरद्वितयं कार्यं कर्णकूटसमोदयम्
प्रधानावासनेत्रस्थनेत्रकूटद्वयं नयेत् ७५
तयोरूर्ध्वं च पर्याप्तिरूर्ध्वतो द्वितलान्तिका
पृष्ठावाससभा तद्वदन्यत्सर्वमधस्स्थले ७६
अवसानसमायुक्तं त्रितलञ्चैतदीरितम्
अलिन्दस्य समन्तात्तु भागेनैकेन वारकम् ७७
पार्श्वयोरुभयोश्चैव चाग्रशालानुसारतः
तथा प्रधानशालायास्त्वनुसारेण पार्श्वयोः ७८
अलिन्दस्यानुसारेण पूर्वभागे विशेषतः
भागद्वयविनिष्क्रामो भागद्वयविशालतः ७९
सद्वारनेत्रशालानां षट्कं चालिन्दतो बहिः
चतुश्शालावसानान्तामूर्ध्वाधः परिकल्पयेत् ८०
तदधो भूप्रवेशे तु तद्द्वारस्यावसानकम्
षण्णां वै नेत्रशालानां अन्तराले च वा स्थलम् ८१
चतुर्भागायतं भागद्वयविस्तारसंयुतम्
दक्षिणे चोत्तरे चैव पूर्वे चैव विशेषतः ८२
अग्रकोणे द्वयोश्चैव पञ्चस्थाने प्रकल्पयेत्
अथवा नैर्ऋते वायौ देवभागसमन्वितम् ८३
वास्स्थलं वा विधातव्यमूर्ध्वतष्षट्तलोपरि
तदधो भूद्वयं यत्तु रज्जुसूत्रकपोतयुक् ८४
एतत्सप्ततलं प्रोक्तं राज्ञामावासयोग्यकम्
तदधस्तात्समन्तात्तु भागेनैकेन वारकम् ८५
एतद्दशतलं प्रोक्तं रज्जुसूत्रमधस्तलम्
तदधस्तात्तलं चैकादशद्वादशभूमिकम् ८६
एवमेव प्रकारेण कुर्यादाषोडशक्ष्मकम्

आद्यं तु सर्वतोभद्रं द्वितीयं वर्धमानकम् ८७
तृतीयं स्वस्तिकं प्रोक्तं नन्द्यावर्तं चतुर्थकम्
चरुकं पञ्चमं विद्याच्छालानामपिधानकम् ८८
सर्वतोभद्रमष्टास्यं वेदास्यं वर्धमानकम्
दक्षिणे चोत्तरे चैव षण्णेत्रं स्वस्तिकं मतम् ८९
पार्श्वयोः पुरतश्चैव चतुर्नेत्रसमायुतम्
नन्द्यावर्तं स्मृतं पूर्वे दक्षिणे पश्चिमे तथा ९०
उत्तरे सौम्यशालादिशालानामास्यमीरितम्
निष्पटं चरुकं विद्यात्सर्वत्रैव विशेषतः ९१
आद्यं चतुष्टयं यत्तु सर्वेषामपि शंसितम्
विशेषाद्भूभृतां शस्तं चरुकं देवयोग्यकम् ९२
द्विजानां विहितं चैव पाषण्डाश्रमिणामपि
शालाभागे त्वलिन्दे वा पृथुवारांशके अपि ९३
विन्यासस्त्विष्ट आख्यातो मण्डपे उक्तभूमिके
एतासां मालिकानां तु कुर्यादग्रे तु मण्डपम् ९४
एवभागं समारभ्य वासव्याससमावधि
आयामस्त्वंशवृद्ध्या तु विस्तारो वासतस्समः ९५
एकैकभक्तिहान्या तु त्रिभक्त्यन्तस्तु विस्तरः
एकद्वित्रितलोपेतं चतुष्पञ्चतलं तु वा ९६
मण्डपं तु विधातव्यं शालानामग्रदेशके
एवंभूतस्य वासस्य समन्तान्मण्डपं नयेत् ९७
एकभागं समारभ्य पादभागविवृद्धितः
पञ्चभागावसानान्तं कुर्यादावृतमण्डपम् ९८
हस्तमानेन वा कुर्यात्त्रिहस्तादर्धवृद्धितः
पञ्चदशकरान्तं तु कुर्यादावृतमण्डपम् ९९
मण्डपेन विना वापि तेन मानेन पीठिका

विभद्रा वा सभद्रा वा कर्तव्या मालिका बुधैः १००
शालानां तु चतुर्दिक्षु चैकभागादितःक्रमात्
पादभागविवृद्ध्या तु चाष्टभागावसानकम् १०१
विनिर्गमस्य चायामो तद्वृद्ध्या तस्य विस्तरः
द्विगुणान्तो विधेयस्स्यादेवं स्यान्मध्यवारणम् १०२
मध्यवारणयुक्तं वा तद्विहीनं तु वा द्विजाः
एवंभूतस्य वासस्य समन्तात्स्यात्खलूरिका १०३
वासव्यासं चतुर्भागं कृत्वा चैकादिभागतः
वृध्यां वासस्य बाह्ये तु षोडशावधिभागकान् १०४
व्यपोह्य परितः कुर्यात्प्रथमावरणादितः
खलूरिकां तु चैकादिसप्तभागावसानकाः १०५
मुखे च पार्श्वयोः पृष्ठे पत्तयस्स्युर्यथेष्टतः
ओजोयुग्मप्रमाणेन न्यूना वाप्यधिका तु वा १०६
सभद्रा वा विभद्रा वा खलूरी स्याद्यथेष्टतः
एतासामन्तरालं तु समं वा विषमं तु वा १०७
खलूरीधाममध्यं तु तद्वदेव विधीयते
अन्तराले बहिर्वापि अधिकं न्यूनमेव वा १०८
एकपार्श्वेऽधिकं वापि पृष्ठे वाप्यधिकं यथा
मुखायाममुखे वापि पार्श्वयोः पृष्ठतस्तथा १०९
शालायामुक्तमानेन भक्तिहस्तवशेन वा
तत्सर्वमत्र संग्राह्यं शालामात्रं तु वा भवेत् ११०
एकभक्त्यादिभक्त्यर्धवृद्ध्या दिग्भक्तिकान्तिकम्
खलूरिकाविधौ प्रोक्तं सालं तत्रोभयत्र तु १११
खलूरिकाविशालांस्तु त्रिचतुष्पञ्चभागकान्
षट्सप्तभागं वा कृत्वा बहिरेकं व्यपोह्य च ११२
अन्तरे शेषभागांस्तु हित्वा मध्ये तु सालकम्

एकानेकतलोपेतमूलायामेन भूमिकाम् ११३
सभाकारशिरोयुक्तां शालाकारामथापि वा
अथवा मराटपोर्ध्वे तु चूलीहर्म्यविभूषिताम् ११४
तलाधिष्ठानपादेभ्यः किञ्चिदूनप्रमाणकाम्
तद्वर्धितोपपीठां वा तद्वर्धितमसूरकाम् ११५
पादायामसमोत्तुङ्गमसूरकयुतां तु वा
मूलधामतलोतुङ्गाधिष्ठानतलसंयुताम् ११६
तद्विहीनतलां वापि समस्थलयुतां तु वा
एतां खलूरिकां कुर्यात्प्रासादादिषु बुद्धिमान् ११७
देवानां मनुजानां च विशेषाद्राजधामनि
पुष्पदन्ते च भल्लाटे महेन्द्रे च गृहक्षते ११८
उपमध्येऽथवा द्वारमुपद्वारं तु वा नयेत्
खलूरिकायुतं चैव गोपुरं विधिनाचरेत् ११९
एवं शालां यथाशालाप्रमाणेन समाचरेत्
गर्भागारयुतं वापि मध्ये भक्तियुतं तु वा १२०
खलूरिकाविधानोक्तं बाह्यान्तर्मार्गसंयुतम्
चतुरंशादिभान्वन्तभागान् कृत्वैकभागकम् १२१
हित्वा मूलतलाद्यं तु कुर्याच्छेषेण बुद्धिमान्
अधिष्ठानादिषड्वर्गं तन्मानमुपपीठके १२२
द्वारोत्सेधाय दातव्यं समं वाप्यधिकं तु वा
खलूरिकातलं यद्वत्तद्वदत्र विधीयते १२३
मूलधामतलात्किञ्चिदूनं वापि समाचरेत्
सालगोपुरयोस्तुङ्गस्त्वधिकश्चापि मूलतः १२४
गोपुरस्याप्यलङ्कारं शालालङ्कारवन्नयेत्
सभाकारशिरोयुक्तं शालाकारशिरःक्रियम् १२५
मराडपाकारसंयुक्तं चूलीहर्म्यविभूषितम्

अग्रतोऽलिन्दकोपेतमट्टालं सालकान्तरे १२६
गोपुरस्य तु विस्तारत्रिभागादेकभागिकम्
चतुर्भागैकभागस्तु पञ्चभागैकभागिकः १२७
निर्गमो गोपुराणां तु प्राकाराद्बाह्यतो भवेत्
गोपुरं च खलूरी च मूलवास्तुनिरीक्षितम् १२८
अन्तरे राजदेवीनां गृहाण्यन्तर्मुखानि च
प्रधानमहिषीगेहं वामभागे समाचरेत् १२९
अन्यासामपि तद्बाह्ये गृहस्यावृत्य कारयेत्
अन्येषामपि तद्बाह्ये कर्तुरिच्छावशेन तु १३०
प्रागङ्कणं प्रधानं स्यात्प्रागवागङ्कणे ज्वरः
दक्षिणे जयदं राज्ञां नैर्ऋते रिपुवर्धनम् १३१
प्रतीच्यां पुत्रमित्रर्द्धिः पश्चिमोत्तरतो मृतिः
उदीच्यां कोशवृद्धिस्स्यादीशाने मरणं ध्रुवम् १३२
समन्तात्परिधां कुर्याद्राजधाम्नीदमीरितम्
देवानामन्यजातीनामपि योग्यं सनातनम् १३३
आरम्भकाले त्वेतेषां पृथक्पृथगिहोच्यते
कुम्भस्थे मकरस्थेऽर्के पूर्वगेहमथारभेत् १३४
मेषस्थे वृषगे दाक्षयमाप्यं सिंहकुलीरके
तुलायां वृश्चिके सौम्यं नेष्टमन्यच्चतुष्टयम् १३५
भास्करस्य दिशि वेश्म नेष्टञ्चान्तर्मुखं सदा
यदि कुर्याद्गृहं तत्तु वत्सरे तु विनश्यति १३६
सूर्यस्थाने कृतं वेश्म तद्गृहं पीडयते ध्रुवम्
भौमस्थे तु गृहक्षेत्रं स्थापितं नाशितं भवेत् १३७
शनैश्चरे तु संप्राप्ते क्षुद्भयं तत्र वासिनाम्
जीवस्थाने गृहक्षेत्रं सर्वसम्पत्करं भवेत् १३८
शुक्रक्षेत्रे कृतं वेश्म नित्यं कल्याणमादिशेत्

बुधस्य परमं सौख्यं चन्द्रः पुरुषदैन्यकृत् १३९
कुर्यात्स्त्रीभ्यस्सुखं वापि चैवं राशौ फलं भवेत्
ग्रंशकादिषु विज्ञेयमेवं ज्ञात्वा समाचरेत् १४०
एवमेव प्रकारेण स्थापयेत्प्रथमेष्टकाम्
छायायां विहितं वेश्म गिरेर्देवालयस्य वा १४१
बाधितं च नदीस्त्रोतसा च शोकापहं भवेत्
छिन्ने भिन्ने तथा नष्टे नमितेऽभिमते गृहे १४२
ग्रगः स्यः करवीरश्च नन्द्यावर्तश्च किंशुकः
ग्रर्कः कार्पासकश्चैव षडेते गृहनाशनाः १४३
पलाशः खादिरश्चैव प्लत्तश्चिन्तावटस्तथा
गृहे न वर्धनीयास्स्युर्ग्रामादौ शुभदा मताः १४४
सभायाममितं वास्तु पददैर्घ्यसमं यदि
युक्तव्ययाधिकं तस्मात्तदा गृहमशोभनम् १४५
प्रत्यङ्मुखं तु शयनं दोषदं दत्तिणामुखम्
द्वारे पादं तु नेष्टं स्यात् नोदक् प्रत्यक् छिरो भवेत् १४६
भोजनं नानुवंशं स्याच्छयनं च तथैव च
ग्रनुवंशगृहद्वारं नैव कार्यं शुभार्थिभिः १४७
एकशालागृहं कुर्वन् याम्ये कुर्यात्प्रयत्नतः
द्वे द्वे वारुणयाम्ये ते शाले कार्ये त्वतन्द्रितः १४८
कोणशालां तु कृत्वा तु वसन्नाशु विनश्यति
द्विजगेहस्य वंशं तु पूर्वाग्रं परिकल्पयेत् १४९
याम्याग्रं त्तत्रियाणां तु पश्चिमाग्रं विशां भवेत्
शूद्राणामुत्तरस्यां स्यादेष वंशाग्रको विधिः १५०
द्विजत्तत्रियवैश्यानां युग्मपादाः प्रकीर्तिताः
शूद्राणामन्यजातीनामयुग्मस्तम्भ इष्यते १५१
खदिरं खादिरं चैव शमी स्याद्द्विजराजयोः

सिलिन्ध्रः पिशितं चैव मधूको वैश्यपादपः १५२
राजादनं च निम्बश्च सिलिन्ध्रः पिशितं तु वा
शूद्राणां स्तम्भयोग्यं स्यात् त्वक्सारास्सर्वयोग्यकाः १५३
गेहाकारं चतुर्भागं पञ्चभागान्तरं तु वा
पादव्यास इति प्रोक्तो गेहव्यासकरात्तु वा १५४
यावन्तो विपुला हस्तास्तावदङ्गुलिसंख्यया
सर्वेषामपि गेहानां स्तम्भविस्तार इष्यते १५५
उत्तरे विप्रगेहं स्यात्पूर्वे नृपगृहं मतम्
दक्षिणे वैश्यगेहं स्यात्पश्चिमे शूद्रजातये १५६
गृहमध्यमभित्तिश्च पदमध्यविवर्जिता
तामाश्रित्य तु मूलाभं द्वारद्वयमिहेष्यते १५७
सर्वथा भिन्नशालासु सन्धिकर्म न कारयेत्
देवतास्थापनं पिण्डं शालासु न विधीयते १५८
एकैकान्तरिताः पादा नीरन्ध्रा वा निवेशिताः
अन्यागारादिषु द्वौ द्वौ पञ्च वा स्युर्यथेच्छया १५९
धनक्षयो मन्दवेधे तीव्रस्स्यादृणबन्धनम्
त्रिचूली वैश्यशूद्राणां पञ्च सप्त महीभृताम् १६०
ब्राह्मणानां तथैव स्युरेकादश तु वेदिकाः
पाषण्डाश्रमिणां युग्मसंख्या चूली विधीयते १६१
शिलास्तम्भं शिलाकुड्यं नरावासे न कारयेत्
तृणाद्यैर्मृण्मयाच्छाद्यं लोष्टाच्छाद्यं च मृण्मयम् १६२
कुर्यादाननहृन्नाभीरुत्सेधः क्रमणेन तु
अधिष्ठानं च याम्यादिचतुर्गृहविधौ भवेत् १६३
द्वारस्यान्तस्तु निम्नश्चेद्वृद्धिर्वेश्माधिपस्य तु
उन्नतिश्च बहिर्ज्ञेया द्वारस्य रिपुवर्धनी १६४
भल्लाटे द्वारमिष्टं स्याद्ब्राह्मणानां विशेषतः

माहेन्द्रं भूभुजां विद्याद्वणिजामपि राक्षसम्  १६५
पुष्पदन्तपदद्वारं शूद्राणामेव भाषितम्
तद्दिगीशान् समाश्रित्य द्वारं विधिवदाचरेत्  १६६
मध्यसूत्रस्य वामे वा द्वारं विधिवदाचरेत्
जलद्वारं पुनस्तेषां प्रवक्ष्यामि निवेशनम्  १६७
जयन्ते तु महेन्द्रे च राक्षसे वितथे भृशे
पुष्पदन्ते च सुग्रीवे भल्लाटे गृहमुख्यके  १६८
ब्रह्मणोऽभिमुखं ब्रह्म परावृद्धिर्निषिध्यते
एकत्रिपञ्चसप्तांशे ध्वजसिंहवृषद्विपाः  १६९
पूर्वाद्यासु शुभा ह्येते आयाद्यास्त्वनुलोमतः
द्विचतुष्षड्वसुस्थानां धूमश्वखरवायसाः  १७०
आग्नेयादिविदिक्ष्वेते वर्जनीया बुभुक्षुभिः
ध्वजस्सिंहो वृषो हस्ती यस्य तद्वेश्मनो मुखम्  १७१
तस्य प्रत्यगुदक्प्राचीं दक्षिणं स्वामिनो गृहम्
ध्वजो याति हरिस्थानं गजस्थानं च केसरी  १७२
सर्वेप्युक्षपदं यान्ति न चोक्षा यान्ति कुत्रचित्
उक्षे द्वारं न कर्तव्यमुपमध्येऽथवा भवेत्  १७३
ब्राह्मणानामुदग्द्वारं प्राग्द्वारं क्षत्रियस्य तु
वैश्यस्य दक्षिणद्वारं श्रेष्ठं शूद्रस्य पश्चिमम्  १७४
शालाद्वारमिदं प्रोक्तं चतुर्गृहविधावपि
याम्यालयबहिर्द्वारं भल्लाटे परिकल्पयेत्  १७५
माहेन्द्रं पश्चिमे भागे गान्धर्वं सौम्यगेहके
पुष्पदन्तपदद्वारं पूर्वगेहे विधीयते  १७६
ऐशान्यां पचनस्थानं ब्राह्मणानां विधीयते
आग्नेय्यां पचनस्थानं क्षत्रियाणां प्रशस्यते  १७७
नैर्ऋत्यां पचनस्थानं वैश्यानां तु प्रशस्यते

वायव्यां पचनस्थानं शूद्राणां संप्रशस्यते १७८
पूर्वस्यां भोजनस्थानमाग्नेय्यां तु महानसम्
याम्यायां शयनस्थानं नैर्ऋृत्यामायुधालयः १७९
मैत्रस्थानं तु वा तत्र वारुण्यामुदकालयः
गोष्ठागारं च वायव्यामुत्तरस्यां धनालयः १८०
नित्यनैमित्तिकार्थं स्यादैशान्यां यागमण्डपम्
काञ्जीलवणयोः पात्रं प्रागुदग्दिशि विन्यसेत् १८१
अन्तरिक्षेऽपि वा चुल्ली लूखली सवितर्यपि
अन्नप्राशनमार्यांशे चेन्द्राण्यां च सवित्रके १८२
विवस्वदंशे श्रपणं विवाहो मैत्रदेशके
क्षौद्रमिन्द्रजये विद्याद्वायौ सोमे च वा भवेत् १८३
वितथोपनयश्चैव पितृदौवारिके पदे
सुग्रीवे पुष्पदन्ते च प्रसूतिगृहमिष्यते १८४
आपवत्से तु कोशस्स्यात्कुण्डमापे विधीयते
अङ्कणं तु महेन्द्रांशे पेषणी च महीधरे १८५
भृङ्गराजनि सुग्रीवे पितृदौवारिके पदे
अरिष्टागारमिष्टं स्यात्तत्रोपस्कारभूमिकम् १८६
वाहनं द्वारयाम्ये स्यात्स्नानशाला च वारुणे
असुरे धान्यवासस्स्यादायुधादीन्द्रराजके १८७
मित्रवासस्तथा मित्रे रोगे वोलूखलं मतम्
भूधरे कोशगेहं स्यान्नागांशे घृतमौषधम् १८८
जयन्ते चापवत्से च पर्जन्ये च शिवे क्रमात्
विषप्रत्यौषधं चैव कूपे देवगृहं भवेत् १८९
सवित्राद्यन्तरिक्षान्तं सव्यञ्जनमहानसम्
वितथे पूष्णि सावित्रे भोजनागार एव वा १९०
भृक्षभल्लाटसोमेषु भवेदास्थानमण्डपम्

मुख्ये वोलूखलं कुर्याद्दणिकाश्च प्रशंसिताः  १९१
वाहनात्पुरतो वामे कीर्तिदा वा विशेषतः
मध्यमण्डपसंयुक्तं चतुर्गृहमुदाहृतम्  १९२
पर्यन्तभित्तिशिरसि जलपातः कुलक्षयः
तीव्रसङ्क्रमणं तस्मिन् गृहस्यास्य न शोभनम्  १९३
एतत्सर्वं तु सामन्यं शालासु च गृहेषु च  १९४

इति कामिकाख्ये महातन्त्रे शालालाक्षणविधिः पञ्चत्रिंशत्तमः पटलः

विशेषशालालक्षणविधिः

विशेषलक्षणं वक्ष्ये शालानां शृणुत द्विजाः
त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात्  १
चतुर्विंशत्यरत्न्यन्ता रुद्रसंख्या समीरिता
एकशाला द्विशाला स्यात्कथ्यते द्वित्रिशालके  २
सप्ताष्टारत्निमारभ्य द्विद्विहस्तेन वर्धयेत्
एकोनविंशद्रत्न्यन्तास्ससप्तधा द्वित्रिशालके  ३
एवं विस्तार आख्यात आयामस्त्विह कथ्यते
पादाधिकमथाध्यर्धं पादोनद्विगुणं तथा  ४
द्विगुणं वा तदर्धं च त्रिपादद्विगुणोपरि
त्रिगुणान्तप्रमाणेन आयामस्त्वष्टधा मतः  ५
सर्वदैर्घ्यं सुराणां स्याद्द्विगुणान्तं नृणां मतम्
द्विगुणाद्यायतास्सर्वे विहाराश्रमवासिनाम्  ६
सर्वस्मिन् सङ्गमोपेते द्विगुणास्यायतिर्मता
विस्तारसम उत्सेधस्साङ्घ्रिस्सार्धस्त्रिपादयुक्  ७
द्विगुणः पञ्चधोत्सेधश्शालानां परिकीर्तितः
शान्तिदः पुष्टिदः पश्चाज्जयदो धनदो भवेत्  ८

अद्भुतप्रदमित्येवमुत्सेधफलमीरितम्
दक्षिणे पश्चिमे चैव शाला वैशेषिकी नृणाम् ९
याम्यपश्चिमहीने तु लाङ्गले मरणं भवेत्
तद्युक्ते लाङ्गले गेहे श्रीः पुष्टिश्च प्रकीर्तिता १०
याम्यपश्चिमहीनायां शालायां सर्वदोषदा
एका वा सद्विशाला वा त्रिशाला वा द्विसन्धिका ११
पाषण्डकानां मर्त्यानां विप्राणां धरणीभृताम्
वैश्यानामपि शूद्राणामन्यद्द्व्यन्तरजन्मनाम् १२
शालैका दण्डखण्डाभा द्विनेत्रा मुखधारिणी
तथैव द्वित्रिशाले च सर्वग्रामादिके मते १३
त्रिचतुर्दशहस्तात्तु द्विद्विहस्तेन वर्धयेत्
षट्सप्तषष्टिहस्ताश्च चतुश्शालाविशालता १४
हीनं निकृष्टं मध्यञ्चोत्कृष्टं सा च पृथक्पृथक्
अष्टाविंशतिमानानि चतुश्शालाविशालके १५
तस्मात्रिंशत्करैर्वृद्धिच्छत्रशालाविशालके
तस्मात्तस्माद्द्विहस्ताभ्यां षट्सप्तकरपूर्वका १६
नवत्यरत्निरुद्दिष्टा त्रिपञ्चाष्टसमाहृता
तत आरभ्य हस्ताभ्यां बन्धयेच्छतरत्निकम् १७
षट्सप्तरत्निसंयुक्तं दशशालं तु मानतः
सर्वत्र चित्रमित्युक्तं संख्यया त्वष्टषड् भवेत् १८
हीनजातिरिति प्रोक्ता निकृष्टं छन्द उच्यते
मध्यमं स्याद्विकल्पं तु श्रेष्ठमाभासनामभाक् १९
एतन्नाम्ना चतुस्सप्तदशशालं क्रमेण तु
तुरङ्गावधिमेधाख्या लभते दीर्घहीनकम् २०
अत्राप्युत्सेधदीर्घे च पूर्ववत्परिकल्पयेत्
समं तु चतुरश्रं तु दैवमानुषमीरितम् २१

पाषण्डदेवविप्रादियागयोग्यमिति स्मृतम्
दण्डकं मौलिकं स्वस्तिभद्रं चैव चतुर्मुखम्  २२
देवादीनां तु सामान्यं चतुर्विधमुदाहृतम्
विन्यासं दण्डकादीनां प्रवक्ष्यामि यथाक्रमम्  २३
भागत्रयं तु विस्तारे त्वायामे चतुरंशकम्
द्विभागो गेहविस्तार अग्रे वारस्त्वथैकतः  २४
द्विनेत्रं खण्डदण्डाभं सर्वेषां वासयोग्यकम्
एतद्दण्डकमुद्दिष्टं शालानां स्युः षडंशकाः  २५
विस्तारे चतुरंशास्स्युरायामे स्यात् षडंशकम्
गेहतारो द्विभागस्स्याद्द्व्यंशं च क्रमणं भवेत्  २६
शेषं पूर्ववदुद्दिष्टं द्वितीयं दण्डकं मतम्
त्रिभागो गेहविस्तारो द्विगुणं दैर्घ्यमिष्यते  २७
भागं च क्रमणं कुर्याद्ब्रह्मभित्तिसमन्वितम्
कुल्याभद्वारसंयुक्तं शेषं सर्वं तु पूर्ववत्  २८
वंशमूले तु वासस्स्याद्वंशाग्रे रङ्गमिष्यते
सर्वत्र परितः कुड्यं रङ्गं पादसमन्वितम्  २९
पुरतः पृष्ठतो वापि पार्श्वतो वाप्यलिन्दकम्
प्रासादवदलङ्कुर्यात्तृतीयं दण्डकं मतम्  ३०
तदेव मध्यमं रङ्गं वासो वंशाग्रमूलयोः
शेषं पूर्ववदुद्दिष्टं चतुर्थं दण्डकं मतम्  ३१
षडंशो गेहविस्तारस्त्वायामो द्वादशांशकः
भागेन परितोऽलिन्दशालाव्यासो द्विभागतः  ३२
तत्समं पुरतोऽलिन्दयुक्तान्तस्स्तम्भसंयुतम्
पार्श्वयोर्द्वित्रिभागेन तारायामौ विवासकौ  ३३
द्विचतुर्भागविस्तारं धाममध्ये तु रङ्गकम्
पञ्चमं दण्डकं प्रोक्तं पूर्ववच्छेषमाचरेत्  ३४

व्यासे निभृतपातालनन्दांशैकद्विकत्रिकैः
चतुर्भिः पुरतोऽलिन्दं स्यादेकद्वित्रिशालके ३५
एतदेव समाकारं शिखरं मौलिकं मतम्
तदेव पुरतो भद्रं चतुर्द्व्यंशे तु सम्मतम् ३६
ग्रायामेन विशालेन पुरतः पर्श्वयोर्द्वयोः
ग्रशंकेऽलिन्दकं कुर्याद्व्यासे नेत्रत्रयान्वितम् ३७
एतत्स्वस्तिकमित्युक्तं चतुर्मुखमथोच्यते
तदेव पृष्ठतो भद्रयुक्तं यद्वत्पुरो भवेत् ३८
कर्करीवंशशालाग्रे चतुर्नेत्रसमन्वितम्
ग्रधिष्ठानादिवार्गाढ्यं प्रासादवदलङ्कृतम् ३९
नासिकातोरणाद्यङ्गैर्युक्तं वातायनादिभिः
चतुर्मुखमिदं नाम्ना क्रमाज्ञात्यादिनामभाक् ४०
एकादिपञ्चभूम्यन्तं दण्डकादिचतुष्टयम्
स्वामिचित्तवशान्न्यस्तं स्थानविन्याससंयुतम् ४१
हस्त्यश्ववृषभादीनां प्रत्येकं वा सपत्तिकम्
सद्विचूलीत्रिचूल्यङ्गं सुग्रीवं सवितल्पकम् ४२
सपादस्सार्ध उत्सेधस्तत्समो वापि नीयते
दण्डकं मालिकं वापि यथेष्टदिशि वारणम् ४३
एकशालमिदं प्रोक्तमधिष्ठानादिशोभितम् ४४

इति कामिकाख्ये महातन्त्रे एकशालाविशेषलक्षणविधिः
षट्त्रिंशत्तमः पटलः

## द्विशालालक्षणविधिः

द्विशाले चतुरश्रे तु दशभागविभाजिते
बहिर्भागेन वारस्स्याद्द्व्यंशशालाविशालतः १
प्राङ्मुखे वारमेकांशं मण्डपो नवभागभाक्

तदावृत्यैककालिन्दं शेषं च क्रमणं भवेत्  २
मुख्यगेहं बहिर्द्वारं लाङ्गलाभं यथातथा
चतुर्मुखसमायुक्तं द्विशालमिह कीर्तितम्  ३
पौरमण्डलहीनं वा मण्डपेन विनापि वा
अलिन्देनान्वितं वापि द्विशालं परिकल्पयेत्  ४
तदेव पञ्चभागान्तमेकशालामुखायतम्
द्वारं पूर्ववदुद्दिष्टं सर्वालङ्कारशोभितम्  ५
मण्डपाद्बाह्यतोऽलिन्दं सायतं प्रविधीयते
नेत्रत्रयसमायुक्तं स्वस्तिकं त्वभिधीयते  ६
तदेव द्विमुखोपेतं दण्डवक्त्रमिति स्मृतम्
सावकाशान्तरोपेतं मण्डपेन विनापि वा  ७
अलिन्देनान्वितं वापि द्विशालं परिकल्पयेत्
सवारं वा विवारं वा एकानेकतालान्वितम्   ८
द्विभागे त्वेकभागं वा त्रिभागे तु द्वयं तु वा
चतुरंशे त्रिभागं वा द्व्यंशं पञ्चत्रिभागकम्  ९
द्विभागं वैकभागं वा षड्भागे पञ्चभागकम्
सप्तांशे पञ्चभागादिद्विभागान्तमथापि वा  १०
नवांशे सप्तभागादिद्विभागान्तमथापि वा
रुद्रभागादिद्विभागान्तं भागान् कृत्वा त्रिभागतः  ११
नवभागावसानान्तं शालाव्यासं प्रकल्पयेत्
एकद्वित्रिचतुश्शालासामान्यमिदमीरितम्  १२
यथा समीक्ष्य तत्रैव युक्तं कुर्यात्तु देशिकः
मौलिकस्य तु विस्तारं वसुभागैर्विभाजयेत्  १३
अङ्कणं तु द्विभागस्स्यात्त्रिपार्श्वेऽलिन्दमेकतः
शालाव्यासो द्विभागेन प्रासादवदलङ्कृतम्  १४
षडाननसमोपेतं प्रच्छन्नमपि जाङ्कणम्

एकानेकतलोपेतमधिष्ठानादिशोभितम् १५
अङ्कणेन विहीनं वा वारहीनं तु वा नयेत्
मेरुकान्तमिदं प्रोक्तं सर्वेषामपि योग्यकम् १६
व्यासे पङ्क्तयर्कभागे तु पार्श्वयोः पश्चिमे मतम्
वारमेकांशतः कुर्याद्द्वयंशस्तु गृहविस्तरः १७
प्राङ्मुखो वारमेकांशं परितो मार्ग एकतः
द्वयङ्कणं वारमेकांशमर्कांशे परिकल्पयेत् १८
पार्श्वयोर्वा परे मुख्यव्यासस्स्याद्द्विललाटकम्
मौलिभद्रमिदं नाम्ना शेषं पूर्ववदीरितम् १९
सावकाशान्तरोपेतमङ्कणं स्यात्त्रिशालके
सालिन्दमनलिन्दं वा त्रिशालं परिकल्पयेत् २०
शालाविरहितस्थाने कुड्यद्वारं प्रयोजयेत् २१
इति कामिकाख्ये महातन्त्रे द्वित्रिशालालक्षणविधिः सप्तत्रिंशत्तमः पटलः

## चतुश्शालालक्षणविधिः

चतुश्शालादिशालानामलङ्कारोऽथ उच्यते
अष्टादिद्वादशान्तं तु नीचे तु परिकल्पयेत् १
दशार्कमनुभागांस्तु निकृष्टे संप्रकल्पयेत्
आदित्यमन्वोरेकांशं भागं मध्ये तु कल्पयेत् २
चतुर्दशद्विरष्टाष्टादशांशाश्श्रेष्ठवर्त्मनि
बीजभागस्समाख्यातो जातिद्व्यंशाधिका यतः ३
चतुरंशाधिकाश्चात्र प्रकल्प्यं स्याद्रसाधिकम्
अष्टांशाधिकमाभासं सर्वतोभद्रसंज्ञके ४
बीजं तु चतुरश्रं स्याज्जात्या द्वन्द्वादिवृद्धितः
बीजजात्यादिसंभूता संख्या षष्टिरिति स्मृता ५

निकृष्टे सर्वतोभद्रे द्विभागं मध्यमाङ्कणम्
समन्तान्मार्ग एकांशो द्विभागो गेहविस्तरः ६
अष्टनेत्रसमायुक्तं चतुर्दिग्भद्रसंयुतम्
भद्रमध्ये सभास्यं स्याच्चतुष्कं कर्णकूटकम् ७
मध्यमे वारसंयुक्तं कूटे शङ्खं युगान्वितम्
पूर्वस्मिन्नपरस्मिन् वा स्वाम्यावासः प्रशस्यते ८
सर्वतः कुड्यसंयुक्तं कुड्याभद्वारसंयुतम्
बहिर्जालककुड्याड्यमन्तरं लूतपादकम् ९
पञ्चशालांशके द्वारं पूर्वस्मिन् वा प्रशस्यते
समस्तम्भं समद्वारं समवंशं तु कारयेत् १०
दण्डिकाद्वारसंयुक्तं शिखरं दिक्प्रदीपकम्
कर्करीवंशजालाग्रं कूटहीनं तु वा नयेत् ११
अन्तर्द्वारं परित्यज्य बहिर्द्वारयुतं तु वा
सालिन्दं वाऽनलिन्दं वा सावकाशान्तरं तु वा १२
अङ्कणं तु प्रकर्तव्यं सर्वालङ्कारसंयुतम्
जात्याख्यं सर्वतोभद्रं भूपतीनामिहोदितम् १३
तदेव परितो द्व्यंशं महावारसमन्वितम्
कर्करीवंशजालाख्यं कूटहीनं तु वा नयेत् १४
अष्टास्योर्ध्वतलग्रीवसस्थूपिसमवंशकम्
अष्टास्यमुखपट्यङ्गनीव्राङ्गकसमावृतम् १५
भद्रोर्ध्वं मुख्यकूटाङ्गं सर्वालङ्कारसंयुतम्
चित्रं तु सर्वतोभद्रं भूपतीनां प्रशस्यते १६
तदेव पुरतो द्व्यंशं महावारसमन्वितम्
चतसृणां तु शालानां शिखरं तु सभाकृति १७
विकल्पं सर्वतोभद्रं गृहप्रासादसंयुतम्
एकद्वित्रितलोपेतं सर्वालङ्कारशोभितम् १८

विहीनकर्णशिखरं हर्म्याङ्गं स्वामिवासकम्
शिखरस्थूपिकानासावेदिकाजालकान्वितम् १९
उच्चशालासमायुक्तं नीव्रकूटमथापि वा
उभयं विपरीतं वा हर्म्यं स्यान्मध्यमण्डपम् २०
जात्यादीनां तु संयोगादाभासं गृहमालिकम्
निकृष्टं सर्वतोभद्रं चतुर्विधमुदाहृतम् २१
नीचे तु सर्वतोभद्रे द्विभागं मध्यमेऽङ्कणम्
समन्तादंशतः पन्था द्व्यंशश्शाला द्विशालके २२
परितोंऽशेन बाह्ये तु द्वारं स्याद्विश्वभक्तिकम्
मसूरिकाङ्घ्रिकोच्चे तु प्रस्तरोर्ध्वगणान्वितम् २३
शिखरस्तूपिकानासावेदिकाजालकान्वितम्
तदेव चाङ्कणं कुर्यादन्तर्वारसमन्वितम् २४
भद्रादिकं तु पूर्वोक्तं त्विदं भूपतियोग्यकम्
तदेव च बहिर्द्व्यंशवारद्वयसमन्वितम् २५
कर्तव्यं वा महावारं कूटकोष्ठाद्यलिन्दयुक्
विकल्पमिति निर्दिष्टं निष्क्रान्तादि पुरोक्तवत् २६
देवद्विजनरेन्द्राणामेतद्भवनमीरितम्
यथेष्टदिशि वारस्स्याद्यथेष्टदिशि भद्रकम् २७
वारमार्गमलिन्दं च स्वामिवाञ्छावशान्नयेत्
विकल्पमिति निर्दिष्टमाभासं सर्वयोगतः २८
मुण्डप्रासादसंज्ञं तु हर्म्यप्रासादसंज्ञिकम्
आभासं सर्वतोभद्रं देवद्विजमहीभृताम् २९
नीचं तु सर्वतोभद्रं चतुर्विधमुदाहृतम्
मध्यमं सर्वतोभद्रं चतुरंशाङ्कणान्वितम् ३०
एकांशावृतमार्गस्स्याच्छालांशो द्विगुणो भवेत्
बहिस्त्वलिन्दमेकांशं प्राग्वदेव प्रकल्पयेत् ३१

सर्वतोभद्रजातिस्स्यात्तदेवांशेन बाह्यके
वारयुक्तं द्विभागेन पृथुवारयुतं तु वा  ३२
प्राग्वद्भद्रसमोपेतं देवद्विजमहीभृताम्
द्विभागमङ्गणञ्चान्तर्वारहीनं तु वा नयेत्  ३३
तदंशतो बहिर्द्वारं महावारं तु वा नयेत्
षोडशांशविशालं तु विकल्पमिति निर्दिशेत्  ३४
तत्राङ्गणं षडंशस्स्यात्परितो मार्ग एकतः
द्व्यंशश्शालाविभागः स्यादन्तर्वारं तु चैकतः  ३५
भागैकेन बहिर्वारं प्राग्वच्छेषं प्रकल्पयेत्
विकल्पमिति निर्दिष्टमाभासं तत्र मिश्रितम्  ३६
मुण्डप्रासादहर्म्याङ्गं मालिकाभासमिष्यते
उत्कृष्टं सर्वतोभद्रं चतुरंशाङ्गणान्वितम्  ३७
भागेन परितो मार्गश्चान्तर्वारमथैकतः
शालाव्यासो द्विभागः स्याद्बाह्यालिन्दमथैकतः  ३८
नासिकाजालसंयुक्तं तोरणाद्यैस्तु संयुतम्
अन्तर्वारं परित्यज्य बाह्ये वा तत्र कल्पयेत्  ३९
अङ्गणं तु द्विभागं वा मुख्यवारस्त्वलिन्दभाक्
सभद्रं वा विभद्रं वाप्यङ्गणांशेन वारणम्  ४०
एष जातिक्रमः प्रोक्तो राज्ञामावासयोग्यकः
तमेव परितो मार्गयुक्तो वा पृथुवारकः  ४१
छन्दं हि सर्वतोभद्रमनुक्तं चात्र पूर्ववत्
तदेव परितोंऽशेन बहिर्वारं तु कल्पयेत्  ४२
विकल्पं सर्वतोभद्रं भूमीन्द्राणामिहोदितम्
जातिच्छन्दविकल्पानां मिश्रमाभासनामभाक्  ४३
हर्म्याङ्गं मालिकाङ्गं च मुण्डप्रासादसंज्ञिकम्
एतदाभासमाख्यातं राज्ञामावासयोग्यकम्  ४४

स्वामिपञ्चाङ्गविन्यासमनुक्तं चात्र पूर्ववत्
उत्कृष्टं सर्वतोभद्रं चतुर्विधमुदाहृतम्  ४५
एवं विकारभेदं तु सर्वतोभद्रमिष्यते  ४६

इति कामिकाख्ये महातन्त्रे चतुश्शालासर्वतोभद्रलक्षणविधिः
अष्टत्रिंशत्तमः पटलः

## वर्धमानशालालक्षणविधिः

शाला तु वर्धमानाख्या षडष्टदशभागिका
निकृष्टभागिनी चाष्टदशद्वादशभागिका  १
दशद्वादशमन्वंशा मध्यमाः परिकीर्तिताः
द्विषट्सप्ताष्टभागे तु श्रेष्ठा तु परिकीर्तिता  २
मूलमेवं समाख्यातं जातिद्व्यंशाधिका तथा
छन्दादयस्तथाद्व्यंशवर्धितायामसंयुताः  ३
नीचादयस्त्रयोऽप्यत्र नवभेदसमन्विताः
जात्याद्याभासकान्ता वा उक्ता मूलसमन्विता  ४
संख्यया पञ्चचत्वारिंशदन्तावधि भवादिभिः
उत्कृष्टा चात्र या जातिर्विकल्पाद्यन्तदीर्घिका  ५
द्वादशात्र मिलित्वा तु सप्तपञ्चाशदीरिता
निकृष्टे वर्धमाने तु द्विभागं मध्यमाङ्कणम्  ६
शालाव्यासो द्विभागेन मध्यभागो ह्यलिन्दभाक्
मध्यभित्तिसमाश्लिष्टकुल्याभद्वारसंयुतम्  ७
अपरे दीर्घशाला स्याद्द्विनेत्रा तुङ्गसंयुता
अल्पनिम्ना भवेत्प्राची शालादीर्घा द्विनेत्रका  ८
पक्षगे द्वे तु शाले तु वंशनिम्ने द्विवक्त्रके
बाह्ये भित्तिसमायुक्तमन्तः पादैस्समन्वितम्  ९
सर्वतः कुड्यसंयुक्तं मध्यगेहं विधीयते

द्विभागकृतनिष्क्रान्तं चतुर्दिङ्मध्यवारणम्  १०
कर्णे द्व्यंशविशालं तु सोपानं वंशसङ्गमे
मुख्यगेहस्य मूले तु स्नानगेहं द्विभागतः  ११
तस्यापरे तु संश्लिष्टं प्रच्छन्नं मैत्रगेहकम्
वास्तूनां तु चतुर्मध्ये चतुस्सूत्रं प्रयोजयेत्  १२
प्रादक्षिण्यं तु तद्वारं तदन्ते जलनिस्स्रवः
नासिकातोरणस्तम्भजालकादिविचित्रितम्  १३
प्रासादवदलङ्कुर्याद्विभद्रं वा सभद्रकम्
निकृष्टं वर्धमानं स्याद्राज्ञामावासयोग्यकम्  १४
तदेव परितोंऽशेन द्वारं तु परिकल्पयेत्
यथेष्टदिशि भद्राङ्गं यथेष्टदिशि वासकम्  १५
यथेष्टद्वारसंयुक्तं छन्दमित्यभिधीयते
तदेव पृथुवारं तु दण्डिकावारसंयुतम्  १६
सभद्रं वा विभद्रं वा विकल्पमिति कीर्तितम्
जात्यादित्रयसंयुक्तमाभासमिति कीर्तितम्  १७
नीचमानांशके द्व्यंशे नाङ्कणं परिकल्पयेत्
त्र्यंशेन परितोऽलिन्दं शालाव्यासो द्विभागतः  १८
उच्छ्रितं मुख्यगेहं स्याच्छालाश्शेषास्समा मताः
प्रागुक्तवदलङ्कुर्यान्नीचे जातिः प्रकीर्तिता  १९
तदेव परितोऽलिन्दमेकांशेन प्रकल्पयेत्
छन्दनाम्ना समुद्दिष्टं विश्वमन्यत्पुरोक्तवत्  २०
तदेव परितोंऽशेन वारं वा पृथुवारकम्
कर्करीमुखवंशाग्रं मुखपट्टिसमायुतम्  २१
उत्तुङ्गं स्वामिवासाङ्गमितरद्विवृताङ्घ्रिकम्
विकल्पमिति निर्दिष्टमाभासं तत्र मिश्रितम्  २२
मध्यमं वर्धमानं तु भागं द्विमध्यमाङ्कणम्

समन्तान्मार्गएकांशश्शालाव्यासो द्विभागतः २३
एकांशावृतवारं स्यादष्टनेत्रसमन्वितम्
दण्डिकावारसंयुक्तं सर्वालङ्कारसंयुतम् २४
चतुष्षडंशदीर्घं तु मध्ये शालाचतुष्टयम्
मुखपटचङ्गनेत्राङ्गं विस्तारे चायतौ क्रमात् २५
जात्याख्यं वर्धमानं स्याच्छन्दं स्यात्पृथुवारयुक्
विकल्पं पृथुवारेण बाह्यवारेण संयुतम् २६
दण्डिकाचारसंयुक्तमाभासं सर्वमिश्रितम्
उत्तमव्यासभागे तु द्विभागं मध्यमाङ्कणम् २७
अंशेन परितो वारं मण्टपाकारमूर्ध्वतः
शालाव्यासो द्विभागेन परितोऽलिन्दवारके २८
अन्तर्वारं परित्यज्य बहिर्वारं यथेष्टतः
पूर्ववद्भद्रसंयुक्तं पूर्ववत्कर्करीकृतम् २९
मध्यशालोच्चयुक्तं च सर्वालङ्कारसंयुतम्
जात्याख्यं वर्धमानं स्याद्विप्रभूमीन्द्रयोग्यकम् ३०
तदेवैकांशतो वारविशेषं परिकल्पयेत्
छन्दं स्यात्परितो मार्गयुक्तं वैकल्पसंज्ञितम् ३१
जात्यादीनां तु संयोगादाभासमिति कीर्तितम्
विशिष्टं वर्धमानाख्यं सालङ्कारमथोच्यते ३२
विस्तारे षोडशांशास्स्युरायामे द्वादशांशकाः
ब्रह्माङ्कणं द्विभागं स्यादायामे चतुरंशकम् ३३
शालाव्यासो द्विभागेन मुख्यगेहमलिन्दभाक्
भागद्वयेन तद्बाह्ये अलिन्दं परिकल्पयेत् ३४
तद्बहिर्वारमेकांशं पृथुवारं द्विभागतः
विहाय पृष्ठदेशे तु रचना मिश्रदेशके ३५
तृतीये वाःस्थलं पञ्चप्रदेशे तु प्रकल्पयेत्

मध्यसूत्रानुसारेण पूर्वस्मिन् पार्श्वयोर्द्वयोः ३६
आग्नेयैशानयोश्चैव क्षेत्रप्रान्ते प्रकल्पयेत्
त्रितले वास्थलं चान्तर्नेत्रशाला चतुस्स्थले ३७
षण्णिर्गमसमायुक्ता सचारा प्रान्तमागता
स्वामिवासाग्रशालानुसारेणोभयपार्श्वयोः ३८
चतस्रः पूर्वदेशे तु द्वे चालिन्दानुसारतः
अलिन्दस्य चतुष्कोणे कर्णकूटचतुष्टयम् ३९
कुर्यात्पञ्चतलप्रान्ते तन्मध्ये पूर्वभागतः
चतुर्भागसमायामद्विभागं विस्तृतान्विता ४०
कर्णकूटसमोपेतसवारमुखपट्टिका
अलिन्दपार्श्वयोः कर्णकूटानां मध्यदेशतः ४१
पञ्जरद्वितयं कुर्यात्कूटद्वयसमोदयम्
पार्श्वं वास्थलसंयुक्तं वारयुक्तद्विभागिकम् ४२
कर्णकूटद्वयोर्मध्ये परवेदद्विभागतः
पृष्ठवारसभां कुर्यात् षट्तले तु द्विजोत्तमाः ४३
पार्श्वयोर्नेत्रकूटे द्वे मुखायामस्तु षट्तले
अङ्कणं मण्टपाकारं सभाकारमथापि वा ४४
वासदक्षिणसंस्थं यच्चूलीहर्म्यविभूषितम्
वामसोपानसंयुक्तं नेत्रयुग्द्वारसंयुतम् ४५
मुखं चङ्क्रमणोपेतं गुह्यसोपानसंयुतम्
वास्थलं च विशिष्टं स्यात्सप्तभौममिदं स्मृतम् ४६
वर्धमानमिदं राज्ञां सर्वकामफलप्रदम्
अथवा त्वष्टभागेन पृष्ठभद्रयुतं भवेत् ४७
नैर्ऋते वायुदेशे तु वास्थालं वा विधीयताम्
मध्यशालासमायुक्तं कोटिहीनं तु वा भवेत् ४८
नेत्रशालासमायुक्तं वाथ कुर्याद्यथाविधि

एवं षोडशधा प्रोक्तं वर्धमानमिहागमे ४९
इति कामिकाख्ये महातन्त्रे वर्धमानशालालक्षणविधिः
एकोनचत्वारिंशत्तमः पटलः

नन्द्यावर्तविधिः

नन्द्यावर्तं प्रवक्ष्यामि षडष्टदशभागिकम्
निकृष्टं वसुदिग्भानुभागं नीचमिति स्मृतम् १
दशद्वादशमन्वंशं मध्यमं चेति कीर्तितम्
आदित्यमन्वोरेकांशं भागं ज्येष्ठमिति स्मृतम् २
मूलमेवं विनिर्दिष्टं जातयो द्व्यंशवर्धिताः
छन्दास्स्युर्वेदभागाढ्या विकल्पाष्षड्विवर्धिताः ३
अष्टांशवृद्ध्या त्वाभासा हीनाद्या मिलिता यदा
चत्वारिंशद्भवन्त्यत्र संख्या पञ्चसमन्विता ४
निकृष्टास्स्युस्त्रयो दीर्घास्तृतीयेन समन्विताः
मिलिते सप्तपञ्चाशत्सङ्ख्यात्र परिकीर्तिता ५
निकृष्टे षट्कृते द्व्यंशमङ्कणं मध्यमं भवेत्
द्व्यंशशालाविशाला स्यात्सर्वालङ्कारसंयुता ६
नन्द्यावर्तं चतुष्पट्टं मूलेनात्र विहीनकम्
द्वारं चतुष्टयं वापि यथेष्टदिशि वा भवेत् ७
जालकश्च कवाटश्च बाह्ये बाह्ये प्रकल्पयेत्
सर्वतः कुड्यसंयुक्तं मुख्यधामात्र कीर्तितम् ८
अन्तर्विवृतपादं च बाह्ये कुड्यं प्रकीर्तितम्
चतुर्दिक्षु विनिष्क्रान्तमर्धकूटं प्रयोजयेत् ९
दण्डिकावारसंयुक्तं जातिरूपमिदं मतम्
तदेवांशावृतालिन्दं चतुर्णां छन्दमिष्यते १०
तदेव स्याद्विवारं वा पृथुवारयुतं तु वा

विकल्पं बहुभौमं स्यादाभासं तत्र मिश्रितम्  ११
हर्म्याङ्गं मालिकाङ्गञ्च नैकैकतलसंयुतम्
नीचैस्स्यादङ्कणं द्व्यंशं वारमेकांशमिष्यते  १२
शालाव्यासो द्विभागेन दण्डिकावारसंयुतम्
सर्वालङ्कारसंयुक्तं भद्रकर्म यथेष्टतः  १३
यथेष्टदिशि संयुक्तद्वारजालविभूषितम्
बहिरभ्यन्तरे कुडयं मुख्यगेहं विधीयते  १४
शेषांशं परितः कुडयमंशं तदपि पादकम्
जातिरूपमिदं विप्रा भूभुजामेव भावितम्  १५
विहीनपश्चिमद्वारं छन्दमत्र विधीयते
द्विभागमङ्कणं मध्ये मार्गमंशेन कल्पयेत्  १६
शालाव्यासो द्विभागेन द्वारमंशेन बाह्यके
चतुष्टयानां शालानां मध्यमध्योर्ध्वमस्तकम्  १७
पुरे पुरे भवेत्कूटं पञ्चशालाननान्वितम्
चतुर्नेत्रसमायुक्तं छन्दमानं प्रकीर्तितम्  १८
तदेव व्रतवारं वा पृथुवारयुतं तु वा
सालिन्दचूलीहर्म्यं वा यथाशक्ति यथारुचि  १९
सवारमुखभद्रं च साधिष्ठानाङ्घ्रिभूषितम्
ऊर्ध्वोर्ध्वमङ्कणं कार्यं पञ्चशालासमोपरि  २०
सभा वा मण्टपो वाथ मालिका वाङ्कणक्रिया
चतुर्णामुदितं धाम विशेषाद्राजयोग्यकम्  २१
विकल्पं तत्त्रयाणां तु यदा सम्मिश्रितं भवेत्
मुण्डप्रासादसंयुक्तं हर्म्याङ्गं मालिकं भवेत्  २२
चतुर्णामुदितं नन्द्यावर्ताख्यं मध्यमेंऽशके
अङ्कणं तु द्विभागं स्यान्मार्गमेकेन कारयेत्  २३
अन्तर्वारं तु चांशेन शालाव्यासो द्विभागतः

दरिडकावारसंयुक्तं चतुराननसंयुतम् २४
ऊर्ध्वे शालास्तथाष्टौ स्युरधस्ताच्चतुराननम्
द्वादशास्यसमायुक्तमूर्ध्वाधस्तादिद्वतीयतः २५
चतुर्दिग्भद्रसंयुक्तं द्वारजालकशोभितम्
जातिरूमिदं नन्द्यावर्तं न्होणिभृतां गृहम् २६
तदेव परितोंऽशेन वारयुक्छन्दमिष्यते
तद्बाह्ये वारमेकं वा पृथुवारयुतं तु वा २७
नन्द्यावर्ताननाश्शालाश्चतस्त्रस्तास्स्ववंशकाः
तस्योपरि गताश्शालाश्चतुष्कशिखरान्विताः २८
नन्द्यावर्तं तु वैकल्पं नृपादीनां निवेशनम्
तत्तद्विनिश्चितं कुर्यान्मुरडप्रासादसंज्ञिकम् २९
मालिकाङ्गञ्च हर्म्याङ्गमेकानेकतलान्वितम्
आभासं नन्दिकावर्तं चतुर्णामपि कीर्तितम् ३०
उत्कृष्टे मध्यमे द्व्यंशमङ्करणं चैकमार्गकम्
अन्तर्वारमथैकांशं शालाव्यासो द्विभागतः ३१
अंशेनावृतवारं तु सर्वालङ्कारशोभितम्
मध्यशालाशिरस्तम्भाश्चैव निम्नास्तथापरे ३२
द्वादशाननसंयुक्ता जातिर्भूपतियोग्यकम्
जातिस्तु परितो द्व्यंशं महावारसमन्वितम् ३३
वारद्वयसमायुक्तं छन्दमेतत्प्रकीर्तितम्
सालिन्दं खरडहर्म्यं वा कूटकोष्ठकभारकम् ३४
चतुश्शालाश्शिरश्चैव सभामुखशिरोन्वितम्
नन्द्यावर्तं विकल्पं स्यात्प्रासादवदलङ्कृतम् ३५
तेषां तेषां तु सम्मिश्रं प्रासादाङ्गसमन्वितम्
हर्म्याङ्गं मालिकाङ्गं वा एकानेकतलान्वितम् ३६
ऊहप्रत्यूहसंयुक्तं यथायुक्ति यथारुचि

आभासं नन्दिकावर्तं चतुर्णामपि कीर्तितम्  ३७
एवं षोडशधा प्रोक्तं नन्द्यावर्तं द्विजोत्तमाः  ३८
इति कामिकाख्ये महातन्त्रे नन्द्यावर्तविधिरेकचत्वारिंशत्तमः पटलः

स्वस्तिकविधिः

निकृष्टं स्वस्तिकं तत्र षडष्टदशभागिकम्
वसुदिग्द्वादशांशं तु नीचं वै स्वस्तिकं भवेत्  १
दशद्वादशमन्वशा मध्यमं स्वस्तिकं मतम्
आदित्यमन्वोरेकांशमुत्तमं भागमिष्यते  २
मूलं तु चतुरश्रं स्यात्तद्द्विभागाधिकायतम्
जातिरूपं भवेच्छन्दं चतुरंशाधिकायतम्  ३
षड्भागाधिकदैर्घ्यं तु विकल्पमिति कीर्तितम्
आभासमष्टवृत्तं यच्चत्वारिंशत्तु पञ्चयुक्  ४
हीनाद्यैस्त्रित्रिभागे तु संख्यैषां परिकीर्तिता
त्रित्रिदीर्घानि नीचास्स्युः पञ्चाशत्सप्तसंख्यया  ५
निकृष्टाद्यैष्षडंशे तु द्व्यंशमङ्कणमिष्यते
शालाव्यासो द्विभागेन सर्वालङ्कारसंयुतः  ६
पृष्ठे तु दीर्घकोष्ठं स्यात्पूर्वकोष्ठं तथा भवेत्
बाह्यशालाद्वयं नेत्रं युक्तं तु कर्करीयुतम्  ७
एवं जातिस्वरूपं तु प्रोक्तं भूमीन्द्रवैश्ययोः
तदेवांशावृतालिन्दं छन्दं शास्त्रे प्रकीर्तितम्  ८
पृष्ठे नेत्रविहीनं स्यात्संयुक्तं पृष्ठशालया
दण्डकावारसंयुक्तं भद्राङ्गं परिकीर्तितम्  ९
तदेवावृतवारं वा पृथुवारयुतं तु वा
विकल्पं स्वस्तिकं ज्ञेयमाभासं तत्र मिश्रितम्  १०
मुण्डप्रासादशोभाङ्गं हर्म्याङ्गं मालिकाङ्गकम्

अनेकभूमिसंयुक्तं प्रासादवदलङ्कृतम् ११
आभासं स्वस्तिकं प्रोक्तं नृपाणां वणिजामपि
हीने द्व्यंशाङ्कणं मध्ये मार्गस्तु परितोंऽशतः १२
शालाव्यासो द्विभागेन षण्णेत्रसमवंशकम्
तत्र मध्ये चतुश्शालाश्चोर्ध्वगानेकसंयुताः १३
मनुसंख्यातनेत्रं तु सर्वत्र परिकीर्तितम्
स्थूपिकादिसमायुक्ता सभा भद्राननान्विता १४
अङ्कणं मण्टपाकारमूर्ध्वोर्ध्वोपरि कल्पयेत्
दण्डिकावारसंयुक्तं स्वस्तिकं जातिरूपकम् १५
तदेवांशावृतालिन्दं छन्दं स्वस्तिकमिष्यते
अंशेनावृतवारं वा पृथुवारयुतं तु वा १६
चूलीहर्म्ययुतं वापि विकल्पं स्वस्तिकं मतम्
जात्यादीनां तु संयोगादाभासमिति कीर्तितम् १७
मुण्डप्रासादहर्म्याङ्गं मालिकाभासमीरितम्
मध्यमे त्वङ्गणं प्राग्वन्मार्गमेकांशतो भवेत् १८
अन्तर्वारमथैकांशं शालाव्यासो द्विभागतः
दण्डिकावारसंयुक्तं षण्णेत्रसमवंशकम् १९
वंशोपरिगताश्शालाश्चतस्रोऽष्टाननान्विताः
ऊर्ध्वोर्ध्वमण्टपाकारहर्म्यस्थलमथाङ्कणम् २०
चतुर्दिग्भद्रसंयुक्तं सभाङ्गं स्वस्तिकं भवेत्
तदेवांशाभितो द्वारं छन्दमित्यभिधीयते २१
तद्द्व्यंशं पृथुवारं यद्विकल्पमिति कीर्तितम्
आभासं तत्र मिश्रं यन्मुण्डप्रासादशोभितम् २२
हर्म्याङ्गं मालिकाङ्गं च मध्यमं चेति कीर्तितम्
उत्कृष्टे त्वङ्कणं द्व्यंशं मार्गस्तु परितोंऽशतः २३
अन्तर्वारमथैकेन शालाव्यासो द्विभागतः

अंशेन परितोऽलिन्दं नीव्रवारः शिरःक्रिया २४
अर्कनेत्रसमायुक्तं चतुर्दिग्भद्रसंयुतम्
जालकस्तम्भकुड्याङ्गनासिकातोरणान्वितम् २५
प्रस्तरक्षुद्रसोपानं सोपानादिसमन्वितम्
पादोत्तरं तुलाद्यङ्गं भित्तिसंश्लिष्टविष्टरम् २६
प्रासादवदलङ्कुर्याज्जातिरूपमिदं मतम्
तदेव परितो मार्गं वारभद्रसमामुखम् २७
पार्श्वशाले सभाकारे पूर्वे पृष्ठे सकोष्ठकम्
एकच्छन्दमिति प्रोक्तं पृथुवारं विकल्पकम् २८
महावारान्वितं वापि मुण्डहर्म्यमथापि वा
आभासं तत्र मिश्रं स्यान्मुण्डप्रासादशोभितम् २९
हर्म्याङ्गं मालिकाङ्गं वा स्वस्तिकं चैतदीरितम्
भूमीन्द्रवैश्ययोरेव भाषितं स्यादिहागमे ३०

इति कामिकाख्ये महातन्त्रे स्वस्तिकविधिः द्विचत्वारिंशत्तमः पटलः

## चतुश्शालाविधिः

सर्वतोभद्रकाख्या च पूर्वोक्तायामसंयुता
निकृष्टा रुचका ज्ञेया देवपाषण्डयोग्यका १
सर्वतोभद्रकाख्याश्च प्रागत्र कथिताश्च याः
अन्तर्वारं च मार्गं च परित्यज्य बहिस्तु वा २
बाह्ये बाह्यान्तरं योज्यं यजमानेच्छया क्रमात्
तथैव पृथुवारं तु योजनीयं विचक्षणैः ३
दीर्घहीना तु या शाला दैवे पाषण्डके द्विजे
दानादौ योजनीया सा पञ्चांशादिनवांशकम् ४
कृत्वा गेहं द्विभागेन चैकभागेन कारयेत्

शालाव्यासं तु शेषेण वारमङ्कणमिष्यते ५
चतुश्शालमिदं प्रोक्तं सर्वसामान्यमिष्यते
भित्तिमध्यं तु वा मानं पादं मध्यमथापि वा ६
ग्रामादिवास्तुमानं तु त्यक्तभक्तिकमिष्यते
प्रासादमालिकायानप्रभृतीनां तु मानकम् ७
पादं मध्यं तु वार्बाह्यव्यासायामप्रमाणकम्
पिण्डहीनं चतुश्शालं सर्ववर्णेषु योग्यकम् ८
मुक्ताङ्कणं च सामान्याङ्गणं कोणाङ्गणं च यत्
गेहं तु सर्ववर्णानामनिष्टमिति च स्मृतम् ९

इति कामिकाख्ये महातन्त्रे चतुश्शालाविधानं नाम
द्विचत्वारिंशत्तमः पटलः

पञ्चशालादिविधिः

अथ वक्ष्ये विशेषेण पञ्चशालादिलक्षणम्
पञ्चशालां प्रवक्ष्यामि यथावदनुपूर्वशः १
रविभागं गृहं कृत्वा चतुश्शालासमन्ततः
द्विभागेन तथा मध्ये चाङ्कणद्वयसंयुतम् २
प्रस्तराग्रे तथा ग्रीवविभक्तिशिखराङ्गिनि
मध्यमे द्व्यंशविस्तारष्षडंशायामसंयुतः ३
सर्वतोभद्रशालादि नेत्रयुक्तं समन्ततः
मूलशालादिसंयुक्ता पञ्चशाला दिवौकसाम् ४
षट्शाले मध्यमे द्व्यंशमङ्कणं परिकल्पयेत्
तत्पार्श्वयोस्तु शाले द्वे द्विद्विभागे विशालके ५
जात्याद्यायामसंयुक्तां षट्शालां परिकल्पयेत्
सप्तशालासमश्रं तु नवधा परिकल्पयेत् ६
एकेन मध्यशाला स्यादङ्कणं पार्श्वयोस्समम्

तत्पार्श्वयोस्तथा शाला पार्श्वयोरङ्कणं भवेत्  ७
समन्तादेकभागेन शालानां स्याच्चतुष्टयम्
एवं तु सप्तशालं स्याद्देवद्विजमहीभृताम्  ८
जात्याद्यायामसंयुक्तं सप्तशालं तथा भवेत्
विस्तारे पञ्चभागास्स्युरायामे रुद्रसंख्यया  ९
अङ्कणं गृहविस्तारं पूर्ववत्परिकल्पयेत्
किन्त्वङ्कणं तु भागेन वर्धितायामसंयुतम्  १०
विस्तारे सप्तभागास्स्युरायामे द्वादशांशकाः
द्विभागेन समन्ताच्च मध्ये शालां प्रकल्पयेत्  ११
अङ्कणं तु त्रिभागं स्याद्विस्तारे चायतावपि
विस्तारे त्वष्टभागस्स्युरायामे स्युश्चतुर्दश  १२
समन्तान्मध्यमे चैव शालाव्यासो द्विभागतः
अङ्कणं द्वितयं कार्यं पञ्चभिस्सप्तभिः पदैः  १३
षण्णेत्रमष्टनेत्रं वा दशास्यं वाथ कल्पयेत्
सप्तशालमिदं प्रोक्तमष्टशालमथोच्यते  १४
विस्तारे रुद्रभागास्स्युरायामे च तथैव च
समन्तादेकभागेन चतुश्शालां प्रकल्पयेत्  १५
एकभागाङ्कणं कुर्यान्मध्ये शालाचतुष्टयम्
अष्टनेत्रयुतं वापि षोडशास्ययुतं तु वा  १६
विशिष्टप्रस्तरार्धांशामष्टशालां प्रकल्पयेत्
देवानां भूसुराणां स्यादष्टशाला द्विजोत्तमाः  १७
विस्तारे रुद्रभागास्स्युरायामे स्युस्त्रयोदश
समन्तादेकभागेन चतुश्शालां प्रकल्पयेत्  १८
मध्यमे पञ्चशालास्स्युरेकभागविनिर्मिताः
अङ्कणानां चतुष्कं तु मध्यभागद्वयेन तु  १९
एकभागकृतं शेषं द्व्यङ्कणं परिकल्पयेत्

भवन्ति विपुले सप्तदशदैर्घ्यद्वयाधिकम् २०
एकभागमिता दिक्षु चतुश्शालाः प्रकीर्तिताः
शालानां पञ्चकं मध्ये चतुश्शालाः प्रकीर्तिताः २१
भागद्वयमिदं तासां षडङ्गणमुदाहृतम्
एकोनविंशदंशास्स्युर्विस्तारे दैर्घ्यके पुनः २२
एकविंशतिभागास्स्युर्द्विभागेन समन्ततः
मध्यमे पञ्चशालास्स्युर्भागद्वयविनिर्मिताः २३
एकभागेन मध्ये तु अङ्कणानां तु षट्ककम्
नवशालमिदं प्रोक्तं दशशालमिहोच्यते २४
पञ्चादिनवभागान्तं विस्तारेऽशं प्रकल्पयेत्
आयामे द्विगुणं कुर्यादथवायाम उच्यते २५
अष्टदिग्भागमन्वंशं विकारांशाः क्रमेण तु
अथवायामक्लृप्तिस्तु पञ्चादीनां क्रमेण तु २६
आदित्यमन्वोरेकांशादष्टादशांशाश्च विंशतिः
यथायुक्ति गृहाणां च अङ्कणं तत्र कल्पयेत् २७
दशशालमिदं प्रोक्तं सर्वेषामपि योग्यकम्
विहारशाला कर्तव्या चैकशाला विशालका २८
एकविंशद्गुणानां तु शालाव्यासेन वर्धयेत्
द्विगुणाद्यायसंयुक्तं मानं विंशतिसंख्यकम् २९
कूटकोष्ठादिसंयुक्तं पुरतो भद्रसंयुतम्
पुरतः पृष्ठतो वापि वारालिन्दयुतं न वा ३०
नेत्रद्वयसमायुक्तमग्रनासाविभूषितम्
एकद्वित्रितलोपेतं कूटकोष्ठयुतं न वा ३१
विहारशाला चैवोक्तं सर्वालङ्कारसंयुतम्
बौद्धार्हतादिपाषण्डयोग्यमेतदुदीरितम् ३२
सकलक्षितिपेन्द्राणामेकादशतलं मतम्

नवभूमिर्द्विजानां स्यान्नृपाणां सप्तभूर्मता ३३
षट्तलं मण्डलीकस्य पञ्चकं युवराजके
वैश्यानां च चतुर्भूमिर्योधसेनेशयोरपि ३४
एकस्मादात्रितलान्तं तु शूद्राणां प्रविधीयते
सामन्तप्रमुखानां तु पञ्चभूमिर्विधीयते ३५
युग्मं वायुग्मसंख्यं वा सर्वभूमीन्द्रमन्दिरम्
राज्ञां स्त्रीणां च देवीनां युग्मं वायुग्मसंख्यकम् ३६
सदण्डकं लुपारोहं द्विनेत्रं प्रस्तरान्वितम्
मृण्मयं तु तृणाच्छाद्यमेकद्वित्रितलान्वितम् ३७
स्थूपिवर्णलुपासीनं प्रशस्तं सर्वजातिषु ३८

इति कामिकाख्ये महातन्त्रे पञ्चशालादिविधिः त्रिचत्वारिंशत्तमः पटलः

## हस्तशालाविधिः

अथ वक्ष्ये विशेषेण हस्तिशालाविधिक्रमम्
त्रिकरं तु समारभ्य करार्धेन तु वर्धयेत् १
यावत्पञ्चकरं भित्तिमानं पञ्चविधं भवेत्
हस्तिशाला विधेया तु भित्तिमानेन धीमता २
विस्तारे भक्तयष्षट् चायामे नव भक्तयः
चतुर्भक्तिविशाला वा सप्तभित्त्या अथापि वा ३
त्रिपञ्चभित्तयो वास्युर्विस्तारे चायतावपि
मुखशालैकभित्तिस्स्यात्सार्धा वा द्विगुणापि वा ४
विस्तारे चायते वापि निर्गमागमयोग्यकाः
दक्षिणे शयनस्थानं चेष्टभक्त्या विधीयते ५
राजादनो मधूकश्च कदरः खदिरः पुनः
तिन्त्रिणी चार्जुनः प्रोक्ताः स्तबकः पिहितः शमी ६

क्षीरिणी पद्मकाद्यास्ते शालास्तम्भा गजस्य च
नवाष्टसप्तहस्तोच्चाः काकमानं विहाय च ७
विस्तारे स्यात्षडङ्गुल्यमेकाङ्गुलविवर्धनात्
द्वादशाङ्गुलमानं तदवगाहो यथा बलम् ८
शालास्तम्भा इमे प्रोक्ता विटपाङ्गशिखान्विताः
आलानस्य विशालस्स्याद्द्वादशाङ्गुलमानतः ९
एकाङ्गुलविवृद्ध्या तु पञ्चविंशाङ्गुलान्तकम्
छत्राभाग्रं सुविस्तारमष्टांशं पीनसंयुतम् १०
पञ्चधा तु कृते शालाव्यासे पृष्टे त्रिभागिकम्
नीत्वारेष्षोडशांशं तु वामेऽष्टांशं व्यपोह्य तु ११
स्थापयेत्कूटमालानं पूर्वोक्तोच्चसमन्वितम्
अनुवातास्समन्तात्स्युस्तत्र भित्तिं प्रकल्पयेत् १२
तदर्धं पादहीनं वाष्टांशोनमथापि वा
तदूर्ध्वे छादनं कुर्यात्कूटाद्यैस्तु समन्ततः १३
गोस्तनं स्याद्वितस्त्या तु बहिराननसंयुतम्
फलकाप्रस्तरं कार्यं दृढदारुभिरेव तु १४
शिलाभिश्चेष्टकाभिश्च प्रस्तरं नैव योजयेत्
मूत्रद्वारसमोपेतं स्थूलद्वारं प्रकल्पयेत् १५
गजराशिं समारभ्य चाष्टमं द्वादशं तथा
परिहृत्य विधेया स्याद्गजशाला विचक्षणैः १६
एवं तु गजशाला स्यादश्वशाला विधीयते
नगरे राजवेश्मादौ कुर्याद्देवालयादिषु १७
अश्वानामपि पूर्वोक्तभक्त्या शालां प्रकल्पयेत्
द्विहस्तं समारभ्य विस्तरेणापि वर्धयेत् १८
नवहस्तप्रमाणान्तं भित्तिमानमथापि वा
एतद्विस्तारमाख्यातं त्वायामस्त्वधुनोच्यते १९

पादाधिकमथाध्यर्धं पादोनद्विगुणं तु वा
द्विगुणं वाथ विस्तारादायामं परिकल्प्यते  २०
एकभित्त्या द्विभित्त्या वा त्रिभित्त्या वाथ वाजिनः
स्थानं प्रकल्पयेच्छ्रेण्याः पृथु वा कर्तृवाञ्छया  २१
समन्तात्कुड्ययुक्तं वा यथेष्टदिशिवारणम्
अत्रानुक्तं तु सामान्यशालामानोक्तमाचरेत्  २२
पञ्चाङ्गुलं सामारभ्य वृद्ध्या चैकांङ्गुलेन तु
द्वादशाङ्गुलपर्यन्तं स्तम्भमानमिहोदितम्  २३
आजानुद्वयविस्तीर्णं फलकाप्रस्तरान्वितम्
मूत्रद्वारसमायुक्तं सारदारुमयं दृढम्  २४
सारदारुमयं कीलं द्विसप्ताङ्गुलदैर्घ्यकम्
विस्तारं त्र्यङ्गुलं प्रोक्तं सूचिकाग्रसमन्वितम्  २५
पश्चाद्बन्धेऽग्रबन्धे च योजयेद्दृढघातवत्
अष्टमं द्वादशं राशिं परिहृत्यानुकूलतः  २६
अश्वानामधिपस्यापि स्थानं सम्यक्समाचरेत्
उष्ट्रादीनामनेनैव प्रमाणेन समाचरेत्  २७
अश्वशाला समाख्याता गोशाला प्रविधीयते
अश्वशालोक्तभक्त्या तु गोशालां परिकल्पयेत्  २८
एकशाला द्विशाला वा त्रिशाला वाथ कल्पयेत्
चतुश्शालासमा वापि आयामेन युतापि वा  २९
ब्रह्माङ्कणं वृषोपेतं वियुक्तं वा प्रकल्पयेत्
गोराशेरविरोधेन स्थानं तासां प्रकल्पयेत्  ३०
गवां रक्षा प्रकर्तव्या धान्येन तृणराशिभिः
पलालैरोदनाद्यैश्च निर्माल्यैर्वापि पोषयेत्  ३१
निर्माल्यभक्षणं तासां न दोषाय प्रकल्पितम्
आयादिसम्पत्संयुक्तं गजादिस्थानमीरितम्  ३२

इति कामिकाख्ये महातन्त्रे हस्तिशालादिविधिः चतुश्चत्वारिंशत्तमः पटलः

## मालिकालक्षणविधिः

अथ वक्ष्ये विशेषेण मालिकालक्षणं द्विजाः
चतुर्धा मालिका शाला सभा मुण्डजसौधजे १
शालायामपि शालाङ्गा निष्क्रान्ताननशोभिता
सा शाला मालिका ज्ञेया शास्त्रेऽस्मिन् कामिकाह्वये २
सभावद्विहिता बाह्ये प्रासादवदलङ्कृता
ऊहप्रत्यूहसंयुक्ता या सभा सा च मालिका ३
यथेष्टदिशि संयुक्ता भोगभूमिसमन्विता
प्रासादव्यासदीर्घोच्चा प्रोक्ता प्रासादमालिका ४
मण्डपस्योक्तविस्तारायामतुङ्गविभूषिणी
सर्वत्र मुण्डाकारत्वात्कथिता मुण्डमालिका ५
प्रत्येकं त्रिविधं प्रोक्तं सञ्चितं चाप्यसञ्चितम्
उपसञ्चितमित्येवं नागरं द्रामिडं तथा ६
वेसरं च तथा जातिच्छन्दो वैकल्पमेव च
शुद्धं मिश्रं च सङ्कीर्णं बीजमूलं तथाङ्कुरम् ७
अलिन्दसहितं वापि षड्वर्गसहितं च यत्
अर्पितं संचितं प्रोक्तं पुंलिङ्गं तद्घनीकृतम् ८
देवानामसुराणां च सिद्धविद्याधरेष्वपि
रक्षोगन्धर्वयक्षाणां प्रशस्तानां च जन्मिनाम् ९
सर्वत्र भोगभूम्यङ्गमलिन्दपरिशोभितम्
सर्ववर्गसमायुक्तं मनःप्रीतिसमन्वितम् १०
चतुर्णामनुलोमानां योग्यं स्त्रीलिङ्गमिष्यते
पञ्चवर्गयुतं मिश्रमर्पितानर्पिताङ्गकम् ११

पाषण्डानामिदं शस्तं नपुंसकसमन्वितम्
स्वविस्तारवाशाच्छन्नहस्तपूर्णायतान्वितम्  १२
युग्मायुग्मविभागेन नागरं स्यात्समीकृतम्
अन्तरप्रस्तरोपेतमूहप्रत्यूहसंयुतम्  १३
नीव्रसन्धारसंस्तम्भव्रातैः परिदृढैश्शुभैः
द्रामिडं वक्ष्यतेऽथातस्तथा विस्तारदैर्घ्यकम्  १४
रक्तच्छन्नप्रतिक्षेपाद्युग्मायुग्मविशेषतः
हित्वा तत्र समीभूतं भद्रालङ्कारसंयुतम्  १५
अनेकवारसंयुक्तं षड्वर्गं द्रामिडं स्मृतम्
लब्धव्यासायतं यत्तु नातिरिक्तं न हीनकम्  १६
बहुवर्गयुतं वापि दण्डिकावारशोभितम्
महावारं विमानोर्ध्वे निर्व्यूहाननसंयुतम्  १७
स्वक्षेत्रोपेतमध्याङ्घ्रियुक्तं तद्वेसरं मतम्
यतीनां गणिकानां च जीविनां क्रूरकर्मणाम्  १८
प्रशस्तं वेसरं तेषामन्येषामितरे शुभे
कर्णमध्येऽन्तरे कूटकोष्ठे पञ्जरसंयुतम्  १९
षड्वर्गकसमायुक्तं जातिर्येषां ह्यनर्पितम्
कर्णे शालासभामध्ये छन्दं स्याच्छन्दमेव तत्  २०
त्यक्तमध्यांशके कोष्ठे यस्य स्यात्तद्विकल्पकम्
द्रुमेणेष्टकया वापि दृषदाद्यैरथापि वा  २१
एतेन सहितं गेहं शुद्धमित्यभिधीयते
द्रव्यद्वययुतं मिश्रं सङ्कीर्णं बहुभिर्युतम्  २२
देवानामेव संकीर्णमन्येषामन्यदिष्यते
विस्तारे चतुरंशं स्यादायामे तु षडंशकाः  २३
परितो वारमेकांशं शालाव्यासो द्विभागतः
आयामं चतुरश्रं स्याच्छालानां च विशेषतः  २४

मध्यागारविनिष्क्रान्तनिर्गमेन समन्विता
निर्गमस्तु द्विभागेन विस्तारो द्व्यंशमानतः २५
कोष्ठाननसमायुक्तं तदग्रे मण्डपं नयेत्
विस्तारे निर्गमे चैव द्विभागो मण्डपस्य तु २६
बहिर्वारसमायुक्तं व्यासः पार्श्वद्वयोरपि
पृष्ठे च मण्डपस्यापि पार्श्वयोरग्रदेशके २७
एकभागं विनिष्क्रान्तं द्व्यंशविस्तारसंयुतम्
संश्लिष्टवारसंयुक्तं षट्सु चार्धसभामुखम् २८
शालाशिखरसंयुक्तं नाम्ना सिन्धुकमिष्यते
एतदेव सभाकारशिखरं मन्त्रपूर्वकम् २९
संत्यक्तशिखरग्रीवचूलीहर्म्यसमायुतम्
संपूर्णमिति विख्यातमन्यत्सर्वं तु पूर्ववत् ३०
पूर्वोक्तसिन्धुकं वारवृक्षस्थलसमन्वितम्
मुखवत्पृष्ठशोभाढ्यं सर्वालङ्कारसंयुतम् ३१
मेरुकूटमिदं नाम्ना चान्यत्पूर्वोक्तवद्भवेत्
एतदेव सभाकारशिखरं क्षेममुच्यते ३२
क्षेममेव च पूर्वोक्तं पूर्वभद्रविहीनकम्
अग्रभक्तिसमायुक्तं शालापृष्ठे च पार्श्वयोः ३३
भद्रपार्श्वद्वयोरग्रे षड्भागान् परिवर्जयेत्
तत्रैव शालापृष्ठे च नेत्रयोरुभयोरपि ३४
शालाननं प्रकर्तव्यमेकद्व्यंशविनिर्मितम्
तत्तदग्रे प्रकर्तव्यं वारे भद्रस्य पश्चिमे ३५
द्विभागं चतुरश्रस्य भद्रस्यैव च पार्श्वयोः
अग्रे च वारस्थलं कुर्याद्द्वित्र्यंशायामविस्तरम् ३६
पार्श्वयोस्स्थलपूर्वे च द्वारमण्डपपार्श्वयोः
कर्णकूटद्वयं कुर्याच्चतुर्भागविनिर्मितम् ३७

अग्रे च पार्श्वयोश्चैव कुर्यादेकांशवारकम्
चतुर्मध्ये चतुष्कोणे सभाकारं प्रकल्पयेत् ३८
शिवमेतत्समाख्यातमन्यत्सर्वं तु पूर्ववत्
एतदेव च कर्णे तु कर्करीकृतकूटकम् ३९
मध्ये शाला सुदृष्टाख्या अन्यत्सर्वं तु पूर्ववत्
एतदेव सभाकारशिखरं हर्म्यमिष्यते ४०
अन्ते तु प्रस्तरोपेतमेतत्सौम्यं तु कथ्यते
सर्वमङ्गं सभाकारं कर्णकूटविवर्जितम् ४१
सभाव्यावृतवाराङ्गं विशालमिति कथ्यते
विशाले षट् तु भागं स्यादायामे दशभागकम् ४२
षड्द्व्यंशायामविस्तारा मध्यशाला विधीयते
तद्बहिर्वारमेकांशं तद्बाह्ये तु वृषस्थलम् ४३
तद्बहिश्च चतुर्दिक्षु द्व्यंशांशं वारनिष्क्रमः
चतस्रस्तु सभाः कार्याः कोणकूटचतुष्टयम् ४४
लाङ्गलाकारसंयुक्तं वास्थलस्य बहिर्गतम्
नेत्रयोरुभयोश्चैव वास्थलांशे सभे मते ४५
द्व्यंशं वाससमायुक्तं वारस्यैव बहिस्स्थितः
चतुष्षडंशविस्तारदैर्घ्यभद्रं मुखे मुखे ४६
तन्मध्ये चतुरंशेन सभां कुर्यात्समन्ततः
वास्थलं चैकभागेन पार्श्वयोरुभयोरपि ४७
चतुष्कोणे चतुष्कूटमेकभागविनिर्गमम्
शालामध्ये च कर्तव्या द्विभागेनैकभागतः ४८
अन्तरे वास्थलं कुर्याद्विजयं नामतो भवेत्
एतदेव च पृष्ठे तु भद्रयुक्तं भवेद्यदि ४९
सर्वकल्याणमित्युक्तमन्यत्सर्वं तु पूर्ववत्
पूर्वोक्तमेव विजयं भद्रयोरग्रपृष्ठयोः ५०

परित्यक्तसभाकारं मराडपाकारसंयुतम्
सभाकारशिरोयुक्तं प्रधानागारमीरितम् ५१
भद्रनाम्ना समाख्यातमन्यत्पूर्वोक्तवद्भवेत्
एतदेवमुखं भद्रं सभाकारशिरोयुतम् ५२
एतद्रङ्गमुखं प्रोक्तमन्यत्सर्वं तु पूर्ववत्
पूर्वोक्तमेव विजयं भद्रयोरग्रकूटयोः ५३
एतदेव तु शाला स्यान्मध्ये भद्रं भवेद्यदि
नाम्ना चाल्पमिति प्रोक्तमन्यत्पूर्वोक्तवन्नयेत् ५४
आयामे दशभागास्स्युर्विस्तारे रसभागकाः
चासोमध्ये तु षड्द्व्यंशे वारं बाह्ये तु कारयेत् ५५
तद्बाह्ये वार्स्थलं चैकभागेनैव प्रकल्पयेत्
वार्स्थले तु चतुष्कर्णे कूटमेकेन कारयेत् ५६
तत्रैव मध्यभागे तु चैकद्व्यंशेन मराडपम्
वासाद्यंशविनिष्क्रान्तशालामुखसमन्वितम् ५७
हर्म्यस्थलस्य बाह्ये तु द्व्यंशैकांशसभामुखम्
पृष्ठे तु तद्वदिष्टं स्यान्नाम्नेदं कोणसंज्ञकम् ५८
एतदेव सभाकारशिरोनाहमिति स्मृतम्
अग्रतः पृष्ठतः शालामुखागतमिति स्मृतम् ५९
नेत्रयोः पृष्ठकास्यं चेद्द्वयं नाम्ना समीरितम्
शालामुखं तु कर्णे स्यात्सारं नाम्ना प्रकीर्तितम् ६०
तदग्रे चैव पृष्ठे च द्विचतुर्भागसंयुतम्
पारावृतस्य शालास्यं पुष्करं त्विति कथ्यते ६१
उभयं च दशास्यं चेदद्भुतं चेति कीर्तितम्
मध्ये शालाननोपेतं बाहुकोष्ठाननान्वितम् ६२
अन्यत्र संज्ञया चैतत्सङ्कीर्णं परिपठ्यते
भद्रद्वयं च संत्यक्तं शिखरं मराटपं तु चेत् ६३

नाम्ना पुष्करमित्युक्तमन्यत्पूर्वोक्तवर्त्मना
एतदेव च सर्वत्र सभागं दराडमुच्यते ६४
इति कामिकाख्ये महातन्त्रे मालिकालक्षणविधिः
पञ्चचत्वारिंशत्तमः पटलः

लाङ्गलमालिकाविधिः
मालिकां लाङ्गलाख्यां तु प्रवक्ष्यामि विशेषतः
विस्तारेऽष्टांशकं कुर्यादायामे द्वादशांशकः १
परितो वारमेकांशं शालाव्यासो द्विभागतः
शेषं हर्म्यस्थलं कुर्यान्मध्ये वारणसंयुतम् २
चतुर्द्व्यंशेन विस्तारं युक्तमेतदिहोदितम्
कर्णे स्याल्लाङ्गलाकारकूटनिर्गमसंयुतम् ३
नेत्रद्वयसमायुक्तं गोमेचमिति कथ्यते
तदेव वेदनेत्रं चेद्विश्वमित्यभिधीयते ४
हर्म्यद्वयस्य मध्ये तु कर्णकूटद्वयान्वितम्
आदेयमिति विख्यातं लाङ्गलं त्रिविधं भवेत् ५
इति कामिकाख्ये महातन्त्रे लाङ्गलमालिकाविधिः
षट्चत्वारिंशत्तमः पटलः

मौलिकामालिकाविधिः
अथ वक्ष्ये विशेषेण मालिकामौलिकाह्वयम्
विस्तारे दशभागास्स्युरायामे द्वादशांशकम् १
समन्ताद्द्वारमेकांशं शालाव्यासो द्विभागतः
वेदनेत्रसमायुक्तमन्यत्स्यात्सलिलस्थलम् २
कर्णकूटद्विभागेन मराटपं मध्यमं भवेत्
कूटं च मराटपं चैव निष्क्रमेण समन्वितम् ३

युग्मनाभमिति प्रोक्तं मध्यमराटपमध्यमे
चतुरश्रसमायुक्तं धनमित्यभिधीयते ४
तदेव कूटकं चेत्तु सुखमित्यभिधीयते
बहिश्शालाननोपेतं यदि स्याद्रौद्रमुच्यते ५
षड्भिर्नेत्रैस्समायुक्तं षराणेत्रमिति कथ्यते
एवं पञ्चविधं प्रोक्तं त्रिशालामौलिकं तु तत् ६

इति कामिकाख्ये महातन्त्रे मौलिकामालिकाविधिः
सप्तचत्वारिंशत्तमः पटलः

पद्ममालिकाविधिः

अथ वद्त्ये विशेषेण मालिकां पद्मकाह्वयम्
अष्टांशव्याससंयुक्तं दशांशायामसंयुतम् १
समन्तात्परितोंऽशेन वारं तु परिकल्पयेत्
अन्तश्शालाद्विभागेन मध्याङ्कणसमन्विता २
द्विभागविस्तृतं वेदभागायामसमन्वितम्
शालाकारं सभाकारं मराटपं वाङ्करणं भवेत् ३
एकभागविनिष्क्रामं भागद्वयविशालतः
पार्श्वयोर्भद्रसंयुक्तमङ्कणस्योक्तरूपवत् ४
मुख्यवारसमाश्लिष्टं कुर्याच्चङ्क्रमणत्रयम्
नेत्राणि चार्धकूटानि कर्णाश्लिष्टानि चाष्ट च ५
शालाभशिखरं मुख्यधाम कुर्यात्तदुद्धृतम्
मराटपाग्रजशाला स्यात्पद्मशाला तु वार्स्थले ६
बाह्ये वारे चतुष्कोणे सभा स्याद्द्वयंशनिर्गमा
मध्ये शाला सभा वा स्यान्मध्ये वारणमिष्यते ७
कूटशालान्तरे कुर्याद्धस्तिपृष्ठाभनासिकाम्
शालाग्रपृष्ठपार्श्वेषु द्विभागेनैकभागतः ८

शालास्स्युर्वा सभा वा स्युरन्तरान्तरदेशके
हाराङ्कालंकृतं कुर्याच्छ्रीवर्धनमिदं मतम्  ९
एतत्सौभद्रमित्युक्तं त्यक्तमस्तकमेव च
शिखरं तु सभाकारं मुखे शालास्यमेव च  १०
पूर्वोक्तमन्यत्सर्वं स्यात् श्रीभद्रं नामतो भवेत्
विस्तारे दशभागास्स्युरायामे द्वादशांशकाः  ११
ब्रह्माङ्कणं द्विभागं स्याद्विस्तारे द्विगुणायतम्
अन्तर्वारं बहिर्वारं शालायास्त्वेकभागतः  १२
शालाव्यासो द्विभागेन पार्श्वयोरुभयोरपि
चतस्रोऽर्धसभायास्तास्सक्तावारविशेषतः  १३
पूर्वे च पश्चिमे भागे द्व्यंशांशव्यासनिर्गमे
शालास्ये वा सभास्ये वा भद्रे वारान्तरे स्थिरे  १४
पार्श्वयोरुभयोर्द्व्यंशव्यासे वेदांशदैर्घ्यके
मध्यं वारणके कल्प्यं सवारे वासबाह्यतः  १५
मुखशाला विशाला स्यान्मुखवासात्तु मण्टपः
शेषं हर्म्यस्थलं कार्यमङ्कणं तु विशेषतः  १६
भद्रसुन्दरमेतत्स्यात्कल्पयेत्कल्पवित्तमः
एतदेव सभाकारं शिरश्चेन्मुख्यवासकम्  १७
मेरुकान्तमिति प्रोक्तं सर्वालङ्कारशोभितम्
विस्तारे द्वादशांशस्स्यादायामे नवभागकम्  १८
वेदभागसमायामभागद्वयसुविस्तरम्
अङ्कणं बाह्यतो वारमेकशालाद्विभागतः  १९
अङ्कणं मण्टपं मुख्यवारं तत्तद्भवेदिह
अग्रशाला च तद्वत्स्याच्छेषं सर्वं तु वास्र्थलम्  २०
स्वायामार्धप्रमाणेन चोद्धृतं मुख्यवासकम्
हाराङ्गशोभितं तच्च मण्टपं प्रविधीयते  २१

वासबाह्येंऽशतो वारं तत्राष्टौ स्युस्सभामुखे
कर्करीबन्धयुक्तास्तु वासाश्लिष्टास्त्विमे मताः २२
प्रधाने चाग्रशालायामन्तः पार्श्वद्वयोरपि
बहुशालानुसारेण सभाशालानने मते २३
तद्बाह्ये चावृतं वारमेकभागेन कल्पयेत्
तद्बाह्ये च चतुर्दिक्षु पञ्चभागविनिर्गमात् २४
दशभागविशालेन कुर्याद्भद्रचतुष्टयम्
तत्रैव च चतुर्दिक्षु वेदभागविशालतः २५
भागद्वयविदिङ्मार्गं मध्यवारणमिष्यते
तत्पार्श्वयोर्द्वयोश्चैवान्तराला द्व्यंशविस्तराः २६
एकभागविनिष्क्रान्ताश्चाष्टौ स्युस्ते सभामुखाः
मध्यवारणबाह्ये तु पार्श्वयोर्द्व्यंशविस्तरे २७
चतुरंशाययुक्ते चैकान्तरालसमन्विते
द्वे शाले च प्रकर्तव्ये दक्षिणे चोत्तरेऽपि च २८
तत्पार्वयोर्द्वयोर्द्व्यंशं त्र्यंशे च विपुलास्तथा
विपरीतायसंयुक्ताश्चैकभागान्तरालकाः २९
शालाश्चतस्त्रः कर्तव्याः पार्श्वयोरुभयोरपि
पुरतः पृष्ठतो वापि मध्यवारणपूर्वकम् ३०
चतुरंशेन कूटं स्यादेकभागान्तरालकम्
अथवा चतुरंशेन शाला पूर्ववदीरिता ३१
तत्पार्श्वयोर्द्वयोश्चैव कर्णकूटद्वयं भवेत्
भागद्वयान्तरालं तु दक्षिणोत्तरकूटयोः ३२
कूटार्धसभयोरेवं पश्चिमेऽप्येवमेव तु
अन्यत्सर्वं समानोक्तं नाम्ना चैतत्सुमङ्गलम् ३३
पञ्चषट्सप्तभौमान्तं भूपालानां प्रकीर्तितम्
तदेव चाङ्कणं मुख्यं वासशालाख्यमीरितम् ३४

कर्णकूटद्वयं चाग्रशालांशे वेदभागतः
अहन्यमेतदुद्दिष्टमन्यत्सर्वं तु पूर्ववत्  ३५
सभाग्रमङ्कणं मुख्यागारं चेत्कान्तिवर्धनम्
विस्तारायामतोर्कांशं मन्वंशेन समायुतम्  ३६
अङ्कणं स्याच्चतुर्भागं विस्तारे चायतेऽपि च
शालाव्यासो द्विभागेन सर्वत्र परिकीर्तितः  ३७
मुख्यधाम्नस्समन्तात्तु वारमेकांशतो भवेत्
मुख्यधाम्नो मुखे पृष्ठे शाला स्यान्नासिकाद्वयम्  ३८
शालाख्यमुख्यधाम स्यात्कभित्त्या च समन्वितम्
अग्रशालांशके कोणे कूटे द्व्यंशेन निर्मिते  ३९
शेषं हर्म्यस्थलं चान्तश्शिष्टं कुड्यसमन्वितम्
बहिरावृतवारं स्यात्पताकाकुड्यसंयुतम्  ४०
बहिर्वारि द्विभागैकभागविस्तारनिर्गमे
शालासभामुखे पूर्वे पूर्वकार्याग्रशालके  ४१
तद्बहिः कारयेद्वर्षस्थलं भागद्वयेन तु
खण्डहर्म्यसमायुक्तं समन्तात्परिकल्पयेत्  ४२
स्वव्यासार्धं तदर्धं वा कर्णकूटस्य निर्गमः
शालायामविशालेन पञ्चभागविनिष्क्रमात्  ४३
बाह्ये तु खण्डहर्म्यं स्याच्चतुर्भद्रं प्रयोजयेत्
दक्षिणे चोत्तरे वापि भद्रयोश्च द्वयोरपि  ४४
खण्डहर्म्यस्य पार्श्वे तु वार्स्थलं चैकभागतः
तदग्रे मण्टपे मध्ये वेदभागेन निर्मितम्  ४५
तत्कर्णयोर्द्वयोश्चैव कर्णकूटद्वयं भवेत्
पार्श्वयोर्मण्टपं वेदभागेनैव तु वार्स्थलम्  ४६
पार्श्वयोर्द्व्येकभागेन तद्वदेव च वार्स्थलम्
तत्पार्श्वयोर्द्वयोर्वेदद्व्यंशेनैव तु निर्मिते  ४७

प्रतिलोमायते शाले कार्यें मध्ये तु वास्थलम्
उभयोः पार्श्वयोर्वारि कार्या चार्धसभामुखा ४८
भागद्वयविशालास्तु चैकभागविनिर्गमाः
पृष्ठतः पुरतो भद्रद्वये त्वेवं समाचरेत् ४९
खराडहर्म्यस्य बाह्ये तु वास्थले चैकभागतः
तदग्रे मराटपं वेदभागेनैव तु निर्मितम् ५०
तत्कर्णकूटयोश्चैव कर्णकूटद्वयं भवेत्
पार्श्वयोर्मराटपस्यैव वेदभागेन वास्थलम् ५१
तदग्रे वास्थलं चैकभागेनैव तु निर्मितम्
तदग्रे वारमेकांशं कुड्यं चापि प्रयोजयेत् ५२
तदग्रे द्व्यंशविस्ताराच्चैकभागविनिष्क्रमात्
मुखशाला प्रकर्तव्या विशेषेण विमानवत् ५३
पूर्वपश्चिमभद्रं तु सवारं वाह्निपद्मवत्
एतत्तद्वर्धमानं स्याद्भूपालानां प्रशंसितम् ५४
तदेव च शिरोहीनं शुकपञ्जरसंयुतम्
मनोरम्यमिति ख्यातं द्विजातीनां प्रशंसितम् ५५
तदेव मुख्यधामैवं सभाशिखरसंयुतम्
अङ्गणं तु सभारं स्यात् श्रीकरं चैतदीरितम् ५६
विस्तारे द्वादशांशास्स्युरायामे मनुभागतः
अङ्गणं वेदभागं स्याच्छालाव्यासो द्विभागतः ५७
मुखागारेऽग्रशालायां स्याच्चङ्क्रमणमेकतः
अङ्गणं तु सभारं स्यान्मुख्यागारं तु कोष्ठकम् ५८
तत्संश्लिष्टद्विभागैकभागविस्तारनिर्गमम्
शालावक्त्रसमायुक्तं तद्भद्रं च क्रमोज्झितम् ५९
तस्य पश्चिमभागे तु तद्वदेव विधीयताम्
वास्थले बाहुशाले द्वे मुख्यागारस्य पार्श्वयोः ६०

मराटपद्वितयं कुर्याद्वासकं वापि मराटपम्
परितो वारमेकांशं सभारं स्याज्जलस्थलम्  ६१
पार्श्वयोर्मुखशालायाः कुर्यादर्धसभामुखे
पार्श्वयोरुभयोश्चैव शाले कार्ये विचक्षणैः  ६२
बहिर्भागद्वयेनेष्टं वार्स्थलं खराडहर्म्ययुक्
कर्णकूटचतुष्कं तु तत्र कोरोषु कारयेत्  ६३
सद्वारं स्याच्चतुर्दिक्षु विभागेन तु निर्मितम्
चतुर्भागसमायामं सवारं मुखपार्श्वके  ६४
शालाचतुष्टयं कुर्यादुत्तरे कूटकोष्ठयोः
नीडाष्टकं प्रकर्तव्यं दिशामुखमिदं मतम्  ६५
एतदेव शिरोहीनं मुखागारं सभारकम्
अङ्करां मराटपाकारं नाम्ना विपुलमुच्यते  ६६
मुख्यागारं सभाकारं शाला स्याच्चाङ्करणक्रिया
मराटपं चाग्रशालास्थद्वयं हित्वा तु कूटकम्  ६७
द्वयं तत्र प्रकर्तव्यं सूर्यकान्तमिदं मतम्
विस्तारे दशभागास्स्युरायामे द्वादशांशकम्  ६८
द्वयंशेनायतदीर्घे तु विभागो विस्तरः पुनः
अङ्करास्य पुरः पृष्ठवारमेकांशतो भवेत्  ६९
शालाव्यासो द्विभागेन सर्वत्र परिकीर्तितः
बहिर्वर्षस्थलं चैकभागं भागेन वारकम्  ७०
व्यासायामविशालेन तदर्धेन च निर्गमम्
बहिर्वर्षस्थलाद्भद्रद्वयं भद्रान्वितं भवेत्  ७१
प्रतिलोमायते शाले द्विचतुर्व्यासदैर्घ्यके
तयोर्मध्येऽनुलोमेन शालायाममिहेष्यते  ७२
बहिष्ठद्व्येकभागेन पार्श्वाभ्यां निर्गमं भवेत्
एकभागान्तरालेन सर्वाश्शाला निवेशिताः  ७३

पूर्वस्मिन् पृष्ठदेशे तु विभागेनैव निर्गमम्
मध्ये वाराणमिष्टं स्यादुच्छ्रितं स्वामिवासकम् ७४
अग्रहारं तु तद्वत्स्यात्तत्संश्लिष्टे तु बाहुके
जालकैस्तोरणैश्चैव नासिकाद्यैरलङ्कृतम् ७५
श्रीकान्तमेतदाख्यातं योग्यमैश्वर्यभोगिनाम्
तदेव मुख्यागारस्य शिखरं तु सभाकृति ७६
वारणैश्चावृतं ब्रह्माङ्कणस्थानं सभाकृति
पूर्वशालाग्रमूलस्थं कर्णकूटद्वयं भवेत् ७७
शेषं तु वार्स्थलोपेतं रुद्रकान्तमिदं मतम्
मुख्यागारं तु गोष्ठाभं कोष्ठाग्रं त्वङ्कणं भवेत् ७८
अग्रशालाङ्गके पार्श्वे कर्तव्ये कोष्ठकानने
तत्रैव पूर्वभागे तु कोष्ठकस्य द्विभागतः ७९
विस्तारान्निर्गमादेकभागं षरामुखमीरितम्
षराणेत्रं स्यादिति ब्रह्माङ्कणं कोष्ठाननेऽपि च ८०
संत्यक्तशिखरं सर्वमराटपाकारमिष्यते
जयन्तं नामतः प्रोक्तं सर्वालङ्कारसंयुतम् ८१
विस्तारे मनुभागास्स्युरायमे षोडशांशकाः
अङ्कणं तु चतुर्भागं शालाद्व्यंशेन बाह्यतः ८२
तद्बहिर्वारमेकांशं खराडहर्म्यं तु बाह्यतः
खराडहर्म्याङ्गके बाह्ये वेदभागेन निर्मितम् ८३
चतुष्कूटं चतुष्कोणे चतुर्नासिसमन्वितम्
तयोर्मध्ये चतुर्द्व्यंशे चतुश्शालाः प्रकीर्तिताः ८४
कर्करीशिखरोपेता अग्रवारान्विता नव
हारबन्धं यथास्थानं कामाङ्कणमुदीरितम् ८५
एतदेवाङ्कणं भागत्रयेणायामसंयुतम्
तेन वारं प्रकर्तव्यं मुख्यागारस्य चाग्रतः ८६

उत्तुङ्गशिखरग्रीवं मुख्यागारं प्रकीर्तितम्
शालास्यमङ्कणं च स्यात्कर्करीकृतवक्त्रकम्  ८७
शेषं तु वार्स्थलं कुर्याद्वारबन्धान्तमौलिकम्
भद्रेण भद्रसंयुक्तं सुखदं स्वस्तिकं मतम्  ८८
विस्तारे चायते चैव पूर्ववद्भागसंयुतम्
द्विचतुर्भागसंयुक्तमङ्कणं तस्य बाह्यतः  ८९
वारमेकेन कर्तव्यं शालाव्यासो द्विभागतः
बहिर्वारमलिन्दं च खण्डहर्म्यं च भागशः  ९०
शालाभागे चतुष्कोणे चतुष्कूटं तु कारयेत्
चतुर्णामपि मध्ये तु कुर्याच्छालाचतुष्टयम्  ९१
अङ्कणं मण्टपाकारं शालातुङ्गाधिकोन्नतम्
अन्तर्विन्यासवत्खण्डहर्म्यं तु परिकल्पयेत्  ९२
शालामध्याननोपेतं चतुर्दिक्षु प्रकल्पयेत्
अन्तरे पञ्जरान्कुर्यात्खण्डहर्म्ये विशेषतः  ९३
गुह्ये गुह्ये क्रियोपेतं विश्वभद्रं भवेदिदम्
द्विचतुर्भागविस्तारदैर्घ्यमङ्कणमिष्यते
अङ्कणावृतवारं तु नन्दिच्छन्दं प्रदक्षिणम्  ९४
नन्द्यावर्ताननोपेतं कुर्याच्छालाचतुष्टयम्
समवंशं यथाकार्यं खण्डहर्म्ये तु कोणके  ९५
एकाङ्गनिर्गतच्छन्दं छन्दाकाराननान्वितम्
शालाचतुष्टयं कुर्याच्छालाव्यासार्धनिर्गमम्  ९६
द्विगुणायामसंयुक्तं मध्यवारणमिष्यते
प्रासादवदलंकुर्यान्नन्द्यावर्तं द्विजोत्तमाः  ९७
शालाचतुष्टयं कुर्यात्सभाकारशिरो यथा
अङ्कणं मण्टपं कुर्यादुच्छ्रितं ततमीरितम्  ९८
सौमुख्यमिदमाख्यातं सर्वेषां तु सुखावहम्

सर्वं तु मराटपाकारं शालानां परिकीर्तितम् ९९
शुकपञ्जरसंयुक्तं बाह्ये वारादि पूर्ववत्
रुचकं चेदमाख्यातमन्यत्सर्वं तु पूर्ववत् १००
विस्तारायाममानेन समं स्याद्वारमङ्कराम्
शालाव्यासोऽपि तद्वत्स्याद्वारादित्रितयं ततः १०१
मराटपं तु चतुर्दिक्षु कोणे वेदसभान्वितम्
शेषं तु वार्स्थलं कुर्यात्सुप्रतिष्ठितमीरितम् १०२
मुख्यागारं तु शालास्यमङ्करां च यथा भवेत्
अन्यद्वर्षस्थलं सर्वं नामतो जयमङ्गलम् १०३
अङ्करां तु सभाकारं मुख्यागारं तु हर्म्यवत्
कूटाकारं चतुर्दिक्षु मराटपं परिकल्पयेत् १०४
अन्यत्सर्वं तु पूर्वोक्तमेतदद्भुतमिष्यते
विस्तारे षोडशांशास्स्युरायामेऽष्टादशांशकाः १०५
मध्यमे द्विचतुर्भागैरङ्करां परिकल्पयेत्
तद्बाह्ये द्वारमेकांशं शालाव्यासो द्विभागतः १०६
समन्ताद्वारमेकांशं बाह्ये वारं तथैव च
अलिन्दं चैकभागेन खराडहर्म्यं तु चैकतः १०७
मुख्यशालाग्रशाले च नेत्रहीने प्रकल्पयेत्
बाहुशालाद्वयं कार्यं तत्संश्लिष्टं तथा भवेत् १०८
मुख्यागारापरस्थाने स्थाने मूले तु वर्चसा
मध्यवारं च भद्रैश्च खराडहर्म्यैश्च मरिडतम् १०९
कर्णद्व्यंशेन सोपानमग्रशालांशके नयेत्
अग्रे शालासमायुक्तं त्रिशिरोमराटपं तु वा ११०
वासस्थानं च भोगं च स्वामिवाञ्छावशान्नयेत्
एतत्पद्मकमित्युक्तमन्यत्सर्वं तु पूर्ववत् १११
इति कामिकाख्ये महातन्त्रे पद्ममालिकाविधिः अष्टचत्वारिंशत्तमः

पटलः

## नागरादिविभेदविधिः

नागारादिविभेदं तु प्रवक्ष्यामि विशेषतः
विन्ध्यान्तं चैव कृष्णान्तं कन्यान्तं तु हिमाचलात् १
तस्मात्तस्मात्त्रिधा धात्री युक्तसत्वतमोरजाः
नागरं द्रामिडं चैव वेसरं सार्वदेशिकम् २
कालिङ्गं च वराटं च षड्विधं त्विह कीर्तितम्
नागरं सात्विके क्षेत्रे वेसरं स्यात्तमोऽधिके ३
राजसे द्रामिडं सार्वदेश्यं सर्वत्र सम्मतम्
कालिङ्गं च वराटं च ग्राह्यं सत्वरजोधिऽके ४
मूलं मसूरकं जङ्घा कपोतं शिखरं गलम्
ऊर्ध्वे चामलसारेणाष्टवर्गः कुम्भशूलयुक् ५
अन्यैरुपरि निक्षिप्तं प्रोक्तं वर्गाष्टकं तु यत्
रथैः प्रतिरथैः कोणैरन्योन्याधिकभद्रकैः ६
त्रिभिर्वा पञ्चभिर्भागैर्नवभिर्वाथ सप्तभिः
सोष्ट्रभावादिभिर्नीडयुक्तोपान्तैश्चखण्डकैः ७
सर्वाकृतिविचित्राङ्गैस्सन्तारप्रस्तरक्रियम्
ऊहप्रत्यूहसंयुक्तमोजानोजांशमुण्डयुक् ८
सकर्माकर्मजं यत्तु मण्डलामलसारकम्
शुकनासिकयोपेतं पार्श्वयोः प्रमुखे मुखे ९
मुण्डमण्डपसंयुक्तमङ्गप्रत्यङ्गकल्पितम्
यथायुक्ति यथाशोभं विधातव्यं हि नागरम् १०
बहिरभ्यन्तरस्तम्भभित्तितुल्यक्रियान्वितम्
प्रकृत्युपरि जन्मोर्ध्वे सोपपीठमसूरकम् ११
समस्तम्भान्तरं यत्तु सभारमविभागभाक्

जन्मोपपीठाधिष्ठानस्तम्भप्रस्तरकन्धरैः १२
शिखरस्थूपिकाभ्यां च षड्वर्गसहितं नयेत्
मानसूत्राद्बहिस्तिर्यक्समसूत्राङ्गभद्रकम् १३
समस्तम्भान्तरस्योर्ध्वं प्रस्तरान्तरबन्धनम्
नालिकां धारिकाधारहारोरस्याभिमराडनम् १४
कपोतशालया ब्रह्मद्वारयुक्तं पताकया
शुकनासिकयोपेतं युक्तं प्रमुखमराटपम् १५
श्रेष्ठं त्रयोदशांशं तु द्वादशांशमिति स्मृतम्
तथा षट्सप्तभौमं त्रिःपञ्चत्रिस्सप्तभागभाक् १६
तथा चाष्टतलं प्रोक्तं नवभौमं निकेतनम्
सप्तदशद्विरष्टांशनवाष्टदशकांशकम् १७
षड्विधाकृतिविन्यासं सर्वाङ्गपरिमराडनम्
मध्यकर्णविनिर्गच्छत्प्रमाणभवनान्वितम् १८
एवमादिविशिष्टाङ्गं विमानं द्रामिडं मतम्
युक्तं द्रामिडविन्यासं नागरक्रिययान्वितम् १९
नागरं द्रामिडोद्दिष्टविशेषेण विभूषितम्
सखराडाखराडहर्म्यं तु खराडहर्म्योभयात्मकम् २०
उत्तरोत्तरनिर्यूहयुक्तान्तरतलक्रियम्
एवमादिविचित्राङ्गं विमानं नाम वेसरम् २१
मूलादूर्ध्वोर्ध्वसन्धेया धारिकोपरि मराडनम्
तदुपर्युचितग्रीवशिखरस्थूपिकान्वितम् २२
भद्रोपभद्रचित्राङ्गमाप्तान्तरतलक्रियम्
साधारणतलासक्तकायस्तम्भनिवेशनम् २३
श्रेरायाकारक्रियोपेतच्छायाप्रस्तरबन्धनम्
एवमाद्यङ्गवैचित्र्यं वराटं धाम सम्मतम् २४
विनान्धारिकयोरस्य पताकाबाह्यमराडनम्

उत्तराध उपारोहक्रियान्धारिकयान्वितम् २५
उन्नतावनतस्याङ्गैस्सर्वाङ्गैः परिमण्डनम्
चतुरश्राष्टवृत्ताभं ग्रीवाशिखरसौरभम् २६
ईदृग्भूताङ्गसङ्कल्पं कालिङ्गं सद्म सम्मतम्
नालिकान्धारिकाधारहारोरस्थाभिमण्डनम् २७
कपोतशालया युक्तं ब्रह्मद्वारपताकया
षड्विधाकृतियुक्सद्म सम्मतं सार्वदेशिकम् २८
प्रत्येकं त्रिविधं प्रोक्तं द्रामिडं त्वधुनोच्यते
हस्तच्छेदपरीहारन्यूनाधिकसमीकृतम् २९
स्वायसम्पत्समुत्पन्नैर्नागरं तत्समाङ्गकम्
हस्तच्छेदपरीहृत्यैर्हत्वा धामविधानवित् ३०
भद्रालङ्कारसंयुक्तं द्रामिडं चेति कीर्तितम्
लब्धमात्राविहीनं तु नातिरिक्तं सवक्त्रकम् ३१
उत्तरोत्तरनिर्यूहसङ्गतं वेसरं मतम्
त्रिपञ्चसप्तद्विचतुष्षड्भक्त्यैकतलक्रमात् ३२
नागरादिषु षड्भेदहीनमुक्तं च मध्यमम्
साद्यादिद्वित्रिचतुष्पञ्चतलमष्टनवांशकम् ३३
कनिष्ठं मध्यमं ज्ञेयं दशांशैकदशांशकम्
श्रेष्ठं त्रयोदशांशं तु द्वादशांशमिति स्मृतम् ३४
तथा षट्सप्तभौमं त्रिःपञ्चद्विस्सप्तभागभाक्
तथा चाष्टतलं प्रोक्तं नवभौमं निकेतनम् ३५
सप्तदशद्विरष्टांशं नवाष्टादिदशांशकम्
विमानं दशभौमं तु द्वात्रिंशत्सप्तभागयुक् ३६
एकादशतलं द्वित्रिभागयुग्विंशदंशकम्
तथा द्वादशभौमं तु चतुष्षट्पञ्चभागभाक् ३७
शुद्धयुक्तिरियं प्रोक्ता त्वन्यथा च निगद्यते

सप्तत्रिद्व्यंशकादंशाद्दशाष्टदशभागिकम् ३८
युग्मायुग्मत्रिभूम्यादिव्यासादिद्वद्व्यंशवर्धनात्
दशद्वादशभूम्यन्ता संख्या ख्याता क्रमागता ३९
कनिष्ठा मध्यमा श्रेष्ठा नागरादिषु पञ्चसु
अविरोधेन विन्यासभूषणं सार्वदेशिकम् ४०
असमा नागरे भागा द्रामिडे वै समासमाः
द्विविधा भक्तयो ग्राह्या वेसरे सार्वदेशिके ४१
अनन्योन्याधिकक्षीणं क्षीणं नागरधामनि
द्रामिडे स्वाङ्गविश्लेषे क्षेत्रभागोचितं क्षणात् ४२
ईषदूनाधिका वा स्युर्वेसरादिषु भक्तयः
त्रिचतुःपञ्चमात्राभिः कपोतैस्स्थलनिश्चयः ४३
एवं भक्तिविभागस्स्याद्गर्भगेहमथोच्यते
सैकत्रिपञ्चभक्त्यंशषण्णवैकादशांशभाक् ४४
नागरस्यैकभौमस्य प्रासादस्यैकनालिका
श्रेष्ठमध्यमहीनस्य बहिश्शेषेण भित्तिका ४५
गर्भष्षडष्टदशसु त्रिचतुःपञ्चभागभाक्
द्वितले नागरस्योक्ता नालीगेहविशालता ४६
षोडशांशे तु षड्भागो गर्भसप्तदशांशके
अष्टादशांशे सप्तांशस्त्रितले नागरस्य तु ४७
द्रामिडे त्रिचतुःपञ्चभागैर्नालिविशालता
पञ्चसप्तनवांशैश्च बहिश्शेषास्तु भित्तयः ४८
एवमेकतले प्रोक्तमुत्तमादिविभेदतः
सप्तत्र्येकादशांशे च चतुष्पञ्चषडंशकम् ४९
द्वितले द्रामिडस्योक्ता नालीगृहविशालता
गर्भे नवदशांशे तु बहिश्शेषास्तु भित्तयः ५०
एवमेव नवांशस्तु त्रितले द्रामिडे मतः

त्रिपञ्चसप्तभिर्नाली षडष्टादशभाजिते ५१
वेसरस्यैकभौमस्य श्रेष्ठमध्याधमक्रमात्
नवैकादशविश्वेषु चतुष्पञ्चषडंशकः
वेसरे द्वितलस्योक्ता नालीगृहविशालता ५२
द्वित्रिवेदांशके विंशत्यंशे नवदिगंशकः
वेसरे गर्भगेहस्स्यात्त्रितले तु द्विजोत्तमाः ५३
एकद्वित्रितलानां तु गर्भस्त्वेवमुदाहृतः
नागरोक्तं वराटे स्यात्कालिङ्गे द्रामिडोचितम् ५४
वेसरोक्तं तु यत्सर्वं तद्योग्यं सार्वदेशिके
यथाक्रमं वा तद्ग्राह्यं सर्वं वा सार्वदेशिके ५५
अष्टत्रित्रिदशत्र्यंशगर्भस्स्यात्त्रितलादिषु
नागरादिषु सामान्यविशेषालङ्कृतिस्थितिः ५६
श्रेयसी श्रेयसी नार्धश्रेयसी श्रेयसी मता
एवं गर्भगृहं प्रोक्तं भद्रस्य विधिरुच्यते ५७
सैकत्रिपञ्चपङ्क्त्यंशपञ्चषट्सप्तविस्तराः
तत्तारैकांशनिष्क्रान्ता मध्ये मूषा कनीयसी ५८
कनिष्ठे नवपञ्चांशा सप्तत्र्यंशा च मध्यमे
मूले द्विपञ्चषट्सप्तचतुष्पंञ्चषडंशिका ५९
मध्यमे मध्यमा मूषा सर्वव्यासार्धनिष्क्रमा
षोडशांशे षडंशाष्टादशसप्तांशविस्तराः ६०
पञ्चादशषडंशस्स्यान्मध्ये मूषा कनीयसौ
कनिष्ठे नवपञ्चांशास्सप्तत्र्यंशाश्च मध्यमे ६१
त्र्यंशकैकांशके षट्सु नागरादिष्वनुक्रमात्
निष्क्रान्तिरासां पूर्वोक्तरीत्यैवं परिकल्प्यताम् ६२
शान्तिकाद्याः कामदान्ताः पञ्चाशद्द्रामिडोचिताः
व्यासद्विगुणउत्सेधाः कामदाद्यास्तु नागरे ६३

एकद्वित्रिचतुःपञ्चभागैस्तु द्विगुणाधिकाः
अष्टांशेषु विशालेषु उत्सेधाश्शान्तिकादिकाः ६४
वराटे चापि कालिङ्गे वेसरे नागराक्तवत्
नागरे समहस्तास्स्युर्द्रामिडादिषु पूर्ववत् ६५
स्वायम्भुवादिलिङ्गानां पूजांशपरिणाहके
पञ्चादशांशके पञ्चभागोत्सेधं तु शान्तिकम् ६६
नागरं समलिङ्गं तन्नाहे सप्तदशांशके
नागरं पौष्टिकं नाम सप्तांशोच्चं शिवाधिकम् ६७
एकोनविंशदंशात्तु नवांशं वर्धमानकम्
जयदं नागरं तस्माद्दशांशाधिकतुङ्गकम् ६८
अद्भुतं चाभिचारं च तदर्धं सार्वदेशिकम्
एवं नागरलिङ्गे तु सौधमोजःपदेन तु ६९
परिणाहे विकारांशे भूतकौशिकधातुभिः
उदयं द्रामिडं प्रोक्तं शान्तिपुष्टिजयावहम् ७०
तत्तदर्धांशकाधिक्यं हीनद्व्यन्तरमानकम्
अद्भुतं चाभिवारं च सार्वकामिकमुच्यते ७१
नाहे तु भास्करे भागे त्रिचतुःपञ्चभागिकम्
पौष्टिकं तुङ्गजयदं जयदं वेसरं मतम् ७२
पूर्वोक्तविधिना ज्ञेया अद्भुताद्यास्त्रयस्त्रयः
द्रामिडे वेसरे लिङ्गे समभागप्रमाणतः ७३
प्रासादं योजयेद्विद्वान् यथाशास्त्रं द्विजोत्तमाः
मानवे लब्धदैर्घ्यं यत् तद्विरष्टांशके कृते ७४
भूतवेदगुणव्यासं नागरं शान्तिकादिकम्
अर्धार्धाधिकहीनं तु द्व्यन्तरं तु विशालकम् ७५
अद्भुतं चाभिचारं च नागरं सार्वकामिकम्
अष्टादशांशके तुङ्गे कौशिकेन्द्रियवेदिकम् ७६

द्रामिडं शान्तिकादि स्यादङ्कुताद्यथ पूर्ववत्
वेसरे विंशदंशे तु वसुभानुरसांशकम् ७७
शान्तिकादिक्रमेणैवमङ्कुताद्यथ पूर्ववत्
लिङ्गायामसमो व्यासः पूजांशोच्चद्वयेन वा ७८
तदन्तरेऽष्टभागे तु नवैते पीठविस्तराः
व्यासार्धमुच्छ्रयं कुर्याद्द्वात्रिंशद्द्व्यंशमेव वा ७९
तदन्तरेऽष्टभागे तु नवैते पीठिकोच्छ्रयाः
लिङ्गायामे नवांशैस्तु सप्तभागैस्तु कन्यसः
उत्तमो नवभिर्भागैर्द्रामिडे पीठविस्तरः ८०
तदन्तरेऽष्टभागे तु नवधा पीठविस्तराः
तस्य चोच्चेऽष्टभागे तु त्यक्त्वैकं द्वित्रिभागिकम् ८१
शेषं पूर्वोच्छ्रयं पूजाभागमर्वाक्स्थलोपरि
द्रामिडे विहितं ह्येवं वेसरं तु निगद्यते ८२
वेसरे परिणाहे तु विकारांशे तु विस्तरः
पीठस्य सप्तनन्दांशैरधमोत्तममिष्यते ८३
तदन्तरेऽष्टभागे तु पूर्ववत्परिकल्पयेत्
विष्णुभागसमुत्सेधश्शेषं भूगतमिष्यते ८४
विष्णुभागे तुरीयांशेनाधिका वाथ पीठिका
विष्कम्भत्रिगुणो व्यासोऽधस्ताद्ब्रह्मशिलां न्यसेत् ८५
व्यासत्रिभाग उत्सेधश्चतुरंशैक एव वा
यस्य लिङ्गस्य विष्कम्भश्चाष्टभागैकमेव वा ८६
नवभागैकभागं वा गाम्भीर्यमवटस्य तु
एषा नागरलिङ्गे तु ब्रह्माख्या कथिता शिला ८७
गर्भकर्णतुरीयांशा व्यासात्तत्त्र्यंशकोदया
लिङ्गव्यासाष्टभागैकखाता द्रामिडभूशिला ८८
गर्भादर्धचतुर्भागहीनविस्तारसंयुता

तत्पादांशकयोपेता शिला वा वेसरे स्थिता ८९
लिङ्गपीठशिलायामसजातीया सुसंपदे
विपरीते विपत्यै स्यात्कर्तुः कारयितुस्तथा ९०
अयं विभागो लिङ्गे तु नेष्यते सार्वदेशिके
प्रासादेऽपि तथा लिङ्गे नियमो नेष्यते द्विजाः ९१
एवं पीठशिलायां च नियमो नेष्यतेऽत्र तु
मुख्यत्वात्सर्वलिङ्गेभ्यस्सर्वत्रापि च सम्मतम् ९२
तथा प्रासाद एव स्यात्पीठश्चापि तथैव च
शान्तिकं पौष्टिजयदमद्भुतं सार्वकामिकम् ९३
शान्तिकश्चोच्छ्रयेऽष्टांशो भागोच्छ्रायविनिर्मितम्
द्विभागश्चरणोत्सेधः प्रस्तरोऽष्टांशहीनकः ९४
त्रिभागं गलमित्युक्तमर्धांशं शिखरोदयम्
स्थूपिकाष्टांशहीना स्याद्द्रामिडं चैकभूमिकम् ९५
नवांऽशेष्टांशयुग्भागं मसूरं द्विगुणं भवेत्
तारोच्चप्रस्तरो भागो गलं भागविनिर्मितम् ९६
त्रिभागशिखरोत्सेधं शेषेण स्थूपिका भवेत्
द्रामिडं पौष्टिकं प्रोक्तं दशांशे तु सपादकम् ९७
मसूरद्विगुणः पादो भागः प्रस्तर उच्यते
पादमानं गलं प्रोक्तं सर्वात्म्यांशं शिरो भवेत् ९८
भागेन स्थूपिकाजय्यं द्रामिडं परिकीर्तितम्
द्वादशांशे सपादांशं मसूरश्च त्रिभागभाक् ९९
द्विपादः पाद इत्युक्तस्सपादप्रस्तरोदयः
एकांशं गलमित्युक्तं चतुरर्धं शिरो भवेत् १००
सपादभागं स्थूप्युच्चमुद्भूतं द्रामिडं भवेत्
त्रयोदशांशे सार्धांशं मसूरं वा त्रिभागतः
सपादः प्रस्तरः प्रोक्तस्त्वेकेन गलमिष्यते १०१

पञ्चांशं शिखरं ज्ञेयं सपादः स्थूपिका भवेत्
सार्वकामिकसंज्ञं तु द्रामिडं परिकीर्तितम्  १०२
सभद्रं वा विभद्रं वा कर्णकूटयुतं तु वा
निष्कर्णकूटं वा कार्यं सनीडं वा सतोरणम्  १०३
एवं लक्षणसंयुक्तं विधेयं चैकभूमिकम्
गर्भान्तर्गलवेशस्तु यदि स्यान्मरणं भवेत्  १०४
नागरे सार्वदेश्ये च कालिङ्गे द्रामिडेऽपि वा
वराटे न प्रवेशं तु वेसरे परिकल्पयेत्  १०५
विष्णुर्ब्रह्मा हरश्चेति विप्रराजन्यवैश्यकाः
नागरे द्रामिडे धाम्नि वेसरे त्वधिपा मताः  १०६
उपाननात्स्थूपिपर्यन्तं युगाश्रं नागरं भवेत्
कण्ठात्प्रभृति वृत्तं यद्वेसरं परिकीर्तितम्  १०७
कण्ठात्प्रभृति वस्वश्रं द्रामिडं परिकीर्तितम्
सार्वदेशिकधाम्नश्चेतन्नागराद्यं प्रकीर्तितम्  १०८
चतुरश्रायताश्रं तन्नागरं परिकीर्तितम्
अष्टाश्रं च षडश्रं च तत्तदायाममेव च  १०९
सौधं द्रामिडमित्युक्तं वेसरं तु प्रकथ्यते
वृत्तं वृत्तायतं चाश्रं वृत्तं चान्यत्प्रकीर्तितम्  ११०
द्रामिडाख्यविमानेऽपि नागरादिप्रभेदितम्
लिङ्गाद्यं कथितं पूर्वं वपुस्तत्रापि कथ्यते  १११
नागरे लक्षणं पूजाभागे षोडशभाजिते
ऊर्ध्वे षड्भूतवेदांशं त्यक्त्वाधो लक्ष्म कारयेत्  ११२
विष्णवंशाभिमुखे सूत्रे पार्श्वयोर्द्वेऽवलम्बयेत्
पृष्ठे तयोर्यूतिहीने वेदाग्निनयनान्यथ  ११३
विहाय मध्यमे भूतवेदाग्निनयनानि च
ज्येष्ठे षट्पञ्चवेदाग्निपादभागानधस्त्यजेत्  ११४

त्रिभागं त्वेकभागं तु द्व्यंशं सूत्रान्तरं मतम्
तदर्धं पार्श्वसूत्राग्रं तारं प्रोक्तं मुनीश्वराः  ११५
यवमानं भवेत्सूत्रगाम्भीर्यं विस्तरेण च
हीने हीने भवेदष्टयवैः श्रेष्ठोत्तमे द्विजाः  ११६
एवं नागरलिङ्गेषु लक्षणं द्विजसत्तमाः
द्रामिडे शिवभागे तु त्रिपञ्चांशे कृते क्रमात्  ११७
नवभागैर्दशांशेन ह्येकादशविभागकैः  ११८
हीनमध्योत्तमाख्यं तु लक्षणोद्धारकं भवेत्
सप्ताष्टनवभागेभ्यस्सूत्रे संलम्बयेत्क्रमात्  ११९
त्रिचतुर्द्व्यंशके हीने यूतिस्स्यात्पक्षसूत्रयोः
मध्यमे भूतवेदाग्नियूकैश्चापि युतिर्भवेत्  १२०
षड्भूतवेदवह्न्यंशैश्श्रेष्ठे पृष्ठे तयोर्युतिः
स्वभागात्सूत्रविस्तारः पक्षसूत्रं पुरोक्तवत्  १२१
षोडशांशे शिवायामे सूत्रायामो दशांशकः
चतुर्भागं तदूर्ध्वेऽथ पृष्ठे द्व्यंशं विहाय च  १२२
मुकुलाकारमारभ्य संयुतः पार्श्वसूत्रयोः
अथवाथ त्रयांशं तु त्यक्त्वोर्ध्वे रुद्रभागतः  १२३
नालायामस्समुद्दिष्टश्शेषं पूर्ववदेव हि
एवं द्रामिडलिङ्गस्य ब्रह्मसूत्रं प्रकल्पितम्  १२४
वेसरस्यार्चनांशोच्चे त्रिपञ्चांशे दशांशतः
नालायामस्समुद्दिष्टस्त्वष्टभागात्प्रभृत्यधः  १२५
भूतवेदगुणांशेषु सङ्गमः पक्षसूत्रयोः
द्वादशांशार्चनाभागे षोडशद्व्यंशमूर्ध्वतः  १२६
नालायामो नवांशस्स्यात्सङ्गमः पूर्ववद्भवेत्
व्यासे द्विरष्टभागे तु भागस्स्यात्सूत्रविस्तरः  १२७
तदर्धं पक्षसूत्रं स्यादन्तरं शेषपूर्ववत्

एवं वेसरलिङ्गस्य ब्रह्मसूत्रमुदाहृतम्  १२८
सार्वदेशिकलिङ्गे तु विभागोऽयं न कीर्तितः
तथा पीठे तु पीठस्य नागराद्यं विधीयते  १२९
अभद्रं द्रामिडे पीठं भद्रं भद्रोपभद्रकम्
नागरे वेसरे योग्यं कालिङ्गेऽपि वराटके  १३०
सामान्यं पीठमुद्दिष्टं प्रतिमाप्यधुनोच्यते
गर्भे धिष्ण्ये मसूरे च द्वारे स्तम्भे च मस्तके  १३१
स्थूपिकोच्चे दशांशोच्चे सप्तांशा प्रतिमा वरा
चतुर्थ्यंशोदया हीना षड्विंशत्यन्तरेऽन्तरम्  १३२
नक्षत्रसंख्यातुङ्गानि प्रतिमायां भवन्ति हि
नागरे त्रित्रिसंख्यानि द्रामिडे नवसंख्यया  १३३
वेसराणि तथान्यानि श्रेष्ठमध्याधमक्रमात्
सात्त्विकं राजसं चैव तामसं च क्रमात्त्रिधा  १३४
सात्त्विकं स्थानके योग्यं राजसं नृत्तरूपके
तामसं चान्यरूपे तु योजनीयं विचक्षणैः  १३५
सार्वदेशिकलिङ्गे तु विधानं नेष्यते बुधैः
धामवास्त्वमराणां तु नागराद्यं परं मतम्  १३६
ग्रामे वा नगरे वापि पत्तने राजधानिके
खेटादौ परमेशस्य ब्रह्मस्थानेऽष्टदिक्षु वा  १३७
बहिर्वाष्टासु काष्ठासु कुड्यान्तर्वा बहिष्कृतम्
एतेषामन्तराले वा प्रासादं कर्तुमारभेत्  १३८
उत्तरे नागरं कुर्याद्वायौ वैशानदेशके
दक्षिणे द्रामिडं कुर्याद्वह्नौ वा नैरृतेऽपि वा  १३९
पूर्वस्मिन् पश्चिमे वापि वेसरं हर्म्यमाचरेत्
सोमपार्श्वद्वये तद्वद्यमपार्श्वे यमोक्तिवत्  १४०
इन्द्रस्य पार्श्वयोस्तद्वद्वारुणोभयतस्तथा

धामान्येतानि सर्वाणि द्रामिडानि भवन्ति हि १४१
सार्वदेशिकहर्म्यं चेत्सर्वत्रापि समाचरेत्
एतेषामिष्टकामाद्यामिष्टदेशे समाचरेत् १४२
ब्राह्मे चेदग्निकोणस्थकोष्ठस्स्याद्वापणस्य च
नैर्ऋत्येकदेशस्थं सभाया वाविरोधतः १४३
धामान्येतानि कार्याणि वंशसूत्राविरोधतः
पार्वतीभवनं सार्वदेशे शर्वोक्तवन्नयेत् १४४
वलभ्याकारकोपेतं द्रामिडाकारमेव वा
विघ्नेश्वरस्य मध्ये वा पूर्वोक्ते वा यथा शिवे १४५
हस्तिपृष्ठशिरः कार्यं साधारणशिरस्तु वा
सेनानीभवनं कार्यं यथा शर्वस्य सम्मतम् १४६
पूर्वोक्तदेशे कर्तव्यं नागरं विष्णुमन्दिरम्
मध्यमे च चतुर्दिक्षु नैर्ऋतेऽन्यत्र ब्रह्मणः १४७
वेसरं धाम कर्तव्यं चतुर्भद्रसमन्वितम्
वारुणयां वाथ याम्याग्निमध्ये वा ग्राममध्यमे १४८
श्रीधाम वैष्णवं कुर्याद्याम्ये नैर्ऋतमध्यमे
ग्रामादिमध्यमेऽन्यत्र यथा वा ब्रह्ममन्दिरम् १४९
तथाविधे वा चाग्नेय्यां सूर्यस्य शिववन्मतम्
अष्टदिक्ष्विष्टदेशेषु क्षेत्रेशे द्रामिडं ततः १५०
पार्वतीभवनं यद्वत्पूर्वोक्तस्थानकं द्विजाः
जेष्ठाधाम यथा वाचस्त्विन्द्रपावकमध्यमे १५१
पूर्वोक्तदेशे वा कार्यं वह्नौ सोमेशमध्यमे
शास्तुर्धाम विधातव्यं यथा विघ्नेशमन्दिरम् १५२
सोमस्य सोमदिग्भागे नैर्ऋते वाथ तद्गृहम्
नागरं सोमवायव्ये वास्तुवैश्रवणं गृहम् १५३
सोममन्दिरवत्कार्यं वह्नौ सोमेशमध्यमे

कामधाम यथा विष्णोरथवान्यत्र देशतः १५४
अनुक्तानां च सर्वेषां देवानां योषितामपि
प्रागुक्तानां च देवानां देवीनां सार्वदेशिकम् १५५
अथवा कारयेद्धाम तत्तद्वाहनसंयुतम्
सार्वदेशिकसंज्ञस्य प्रासादस्य च लक्षणम् १५६
लिङ्गस्य लक्षणं विप्रास्तद्वत्पीठस्य लक्षणम्
लक्षणं ब्रह्मशैलस्य तद्वद्बेरादिलक्षणम् १५७
तत्तदध्यायसंसिद्धं संग्राह्यं देशिकोत्तमैः १५८

इति कामिकाख्ये महातन्त्रे नागरादिविभेदविधिः
नवचत्वारिंशत्तमः पटलः

## भूमिलम्बविधिपटलः

अथ वक्ष्ये विशेषेण भूमिलम्बविधिक्रमम्
चतुरंशादिसंस्थानं भूमिलम्बमिति स्मृतम् १
अथवा क्षयवृद्धिर्वा हस्तानां परिकीर्तितम्
हस्तानां सप्ततिस्तारे शतं तुङ्गे प्रकीर्तितम् २
एकोनं वा प्रकर्तव्यं तलं द्वादशसंज्ञिकम्
त्रिषष्टि विस्तृतं तत्र नवत्युन्नतमीरितम् ३
एकादशतलं सप्तपञ्चाशद्विस्तृतं भवेत्
चतुर्हस्तमशीत्युच्चं दशभौमं द्विजोत्तमाः ४
एकयुक्तं तु पञ्चाशत्करं तारे तु तुङ्गके
पञ्चसप्ततिसंख्यातं नवभौमं प्रकीर्तितम् ५
पञ्चहस्तसमायुक्तं चत्वारिंशत्करान्वितम्
षष्ट्युन्नतसमायुक्तमष्टभौमं प्रकीर्तितम् ६
नवत्रिंशत्करोपेतं सप्तपञ्चाशदुन्नतम्
एतत्सप्त इति प्रोक्तं एकविंशतिसंयुतम् ७

त्रिंशद्धस्तसमुत्सेधं चतुस्तलमुदाहृतम्
तिथिहस्तविशालं यदेकविंशतितुङ्गकम् ८
एकत्रितलमाख्यातं शास्त्रेऽस्मिन् कामिकाह्वये
सप्तत्यन्तं द्विरष्टादि विस्तारे वा प्रकल्प्यताम् ९
एतदुत्तममानं स्याज्जात्याख्यस्य द्विजोत्तमाः
विस्तारे चापि चोत्सेधे द्वित्रिहस्तक्षयेण तु १०
मध्यमं चाधमं ज्ञेयं सप्तविंशतिभेदकम्
महतस्त्रितलस्येष्टत्रिभेदो नैव विद्यते ११
अष्टाविंशतिहस्तं तु जात्याख्यमिह कीर्तितम्
एकाद्येकादशान्तानां हस्तानामन्तरक्षयात् १२
द्व्यादिद्वादशसीम्नां तु षण्णामप्यन्तरक्षयात्
सप्तविंशतिमाने तु षट्त्रिंशत्संख्यकं मतम् १३
छन्दं विकल्पमाभासमेकैके तु द्विसंख्यकम्
नवादिरुद्रभागान्तधाम्नामुक्तं प्रमाणतः १४
यत्तु षोडशभूम्यन्तं विमानं मानवं द्विजाः
एतदन्तरमानं स्यात्क्षुद्रमानमथोच्यते १५
त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात्
एकभूमिप्रमाणं तु चतुर्विधमुदाहृतम् १६
पञ्चषड्ढस्तमारभ्य द्विद्विहस्तविवर्धनात्
द्वितले तु चतुर्मानं रुद्रभानुकरान्तकम् १७
सप्ताष्टहस्तमारभ्य द्विद्विहस्तविवर्धनात्
त्रितले तु चतुर्मानं मनुविश्वकरान्तकम् १८
नवदिक्करमारभ्य द्विद्विहस्तविवर्धनात्
पक्षषोडशहस्तान्तं चतुष्पञ्चतलं भवेत् १९
एकहस्तं द्विहस्तं वा क्षुद्रमेकतलं मतम्
युग्मायुग्मकरं मानं पादार्धकरसंयुतम् २०

व्योमहस्तं समारभ्य व्योमहस्तविवर्धतः
विमानं योजितव्यं स्यात्सर्वेषामपि शंसितम्  २१
आयामे द्विगुणान्तं स्याद्वेदान्ता मराटपे मताः
तथा भक्त्या विधेयास्स्युरायामे द्विजसत्तमाः  २२
देवभूसुरभूमीन्द्र विट्छूद्राणां समानकम्
विस्तारे सप्तषट्पञ्चचतुस्त्र्यंशेऽधिकं त्रिभिः  २३
शान्तिकं पुष्टिजयदमद्भुतं सार्वकामिकम्
उत्सेधे द्विगुणो व्यासः पादाधिक्यं च सम्मतम्  २४
विस्तारद्विगुणादष्टांशाधिकं वाधियोजयेत्
क्षुद्राणामेवमुद्दिष्टं कनिष्ठानामथोच्यते  २५
सप्तांशे तु कृते व्यासे सप्तांशं वा षडंशकम्
विस्तारादधिकस्तुङ्गो मध्यमानमथोच्यते  २६
विस्तारं पूर्ववत्कृत्वा चतुःपञ्चाधिकं तु यत्
मध्यमानमिदं प्रोक्तमुत्तमानां त्रयांशकम्  २७
पूर्वमुद्देशमानं स्यादेतन्निर्देशमानकम्
एकद्वित्रिकरैर्युक्तं मानहीनं तु वाधिकम्  २८
उत्सेधं कल्पयेद्धीमान् सर्वेषामपि सद्मनाम्
देवानां सार्वभौमानामाद्वादशतलं विदुः  २९
रक्षोगन्धर्वयक्षाणामेकादशतलं मतम्
द्विजानां नवभौमं स्याद्दशभौमं तु धाम वा  ३०
युवराजस्य राज्ञांश्च च पञ्चमस्यैव पञ्चभूः
नन्दाद्येकादशतलं षराणां वै चक्रवर्तिनाम्  ३१
त्रिभौमं च चतुर्भौमं वैश्यानां शूद्रजन्मनाम्
राज्ञां पञ्चतलं वापि मतं पट्टभृतां तु तत्  ३२
सप्तहस्तसमुत्सेधादूर्ध्वं सप्ततिविस्तरात्
नेष्यतेऽधिकमानं तु सर्वथा तद्विचक्षणैः  ३३

शिवस्य षोडशद्दमादिसर्वभूमिर्विधीयते
प्रासादवशतो लिङ्गं लिङ्गात्प्रासाद एव वा ३४
परीद्त्य मतिमान् कुर्याद्यथाशास्त्रं तदुच्यते
स्वायंभुवं बाणलिङ्गं दैविकं चार्षकं त्विति ३५
गाणवं मानुषं लिङ्गं षट्प्रकारं प्रकीर्तितम्
स्वेनैवोद्भूतलिङ्गं तु स्वायम्भुवमुदाहृतम् ३६
शिवेन संस्कृतं यत्तु बाणलिङ्गमिति स्मृतम्
देवैस्संस्थापितं दैवमार्षं ऋृषिहितं स्मृतम् ३७
गणैस्संस्थापितं लिङ्गं गाणवं तदुदाहृतम्
मानुषं मनुजैश्शिष्टैः शिष्टं षष्ठमिहोदितम् ३८
मानुषे लिङ्गमानं तु प्रासादवशतो भवेत्
अन्येषां चैव सर्वेषां लिङ्गात्प्रसाद इष्यते ३९
प्रासादगर्भमानेन लिङ्गं ज्येष्ठादिभेदतः
मुख्यतस्सिद्धये प्रोक्तं मुक्त्यर्थमनुषङ्गतः ४०
हस्तादिलिङ्गमानानि यानि तानि विमुक्तये
भुक्तये चानुषङ्गेण भवन्ति विधियोगतः ४१
स्वायंभुवादिलिङ्गानां दृश्यभागादधस्तनम्
दर्शयेद्यदि मोहेन सर्वदोषकरं नृणाम् ४२
नाहतारौ तथा स्थूलदेशे संगृह्य कल्पयेत्
मानवे लिङ्गमानं तु शिरोमानं विनोदयम् ४३
स्वायंभुवादिलिङ्गानां शिरसा सह मानकम्
कल्पयेदर्चनाभागं तेन पीठं प्रकल्पयेत् ४४
लिङ्गविष्कम्भमानेन भवेद्द्वित्रिचतुर्गुणः
तथा पञ्चगुणो वापि पीठविस्तर इष्यते ४५
एतेषामपि सर्वेषां कर्णमानेन वा भवेत्
कृत्वाष्टधा वा नवकं एकद्व्यंशत्रयांशकम् ४६

चतुरंशं तु वा हीनमधिकं वा प्रकल्पयेत्
पीठद्विगुणमानो वा त्रिगुणो वा चतुर्गुणः ४७
पञ्चषड्गुणतो वापि गर्भगेहस्य विस्तरः
गर्भगेहत्रयांशं तु भित्तिविष्कम्भ इष्यते ४८
अर्धो वा सदृशः पीठाद्द्विगुणस्त्रिगुणोऽपि वा
एतेषां कर्णमानो वा भित्तिविष्कम्भ इष्यते ४९
अनेनैव प्रकारेण सन्धानेऽपि प्रकल्प्यताम्
पीठव्यासेन हर्म्यस्थनालीगेहमयुग्मकम् ५०
यदि तद्बाह्यभागं च युग्ममेव समाचरेत्
युग्मं चेद्युग्मभागं स्यात्सम्मिश्रं नैव कारयेत् ५१
यत्र लिङ्गेन यन्मानं युग्मं वायुग्महस्तकम्
यदि तत्र करच्छेदो हीनो वाप्यधिको भवेत् ५२
मानसंपूर्णकं कुर्यात्तत्र दोषो न विद्यते
अङ्गुलैर्गर्भमाने तु विभक्ते लिङ्गदैर्घ्यके ५३
लिङ्गं चेदङ्गुलं छिन्नं तत्र सम्पूर्णतां नयेत्
आयादिसम्पदर्थं च एकद्वित्रिभिरङ्गुलैः ५४
क्षीणं वाप्यधिकं वापि कर्तव्यं सम्पदिच्छता
त्रिस्सप्तभागतारे तु भागं कृत्वा षडंशकम् ५५
लिङ्गमध्यात्तदेकांशं दक्षिणेन व्यपोहति
प्रासादमध्यमिष्टं स्यात्पश्चिमेऽपि तथैव च ५६
पूर्वद्वारं प्रशस्तं स्यात्पश्चिमास्ये विपर्ययः
एवमादौ परीक्ष्यैव प्रासादं परिकल्पयेत् ५७
एतेषामपि सर्वेषामायादिविधिरुच्यते
विस्तारं द्विगुणं कृत्वा वसुभिर्भाजिते सति ५८
शिष्टं योनिरिह प्रोक्ता तदभावे तु शोधकः
उदये वसुभिस्सप्तविंशद्भिर्भमिहोदितम् ५९

परिधौ नन्दगुणिते सप्तभूर्द्वारमुच्यते
सकलं त्रिगुणं कृत्वा त्रिंशद्भिर्भाजिता तिथिः ६०
उदयं वसुभिर्भक्त्वा सूर्यैरायस्तु शेषतः
पुनरप्युदयं नन्दवसुभिर्व्यय उच्यते ६१
पूर्वोक्तेन प्रकारेणाप्यनेन विधिनापि वा
परिक्ष्यायादिषट्कं तु प्रासादं परिकल्पयेत् ६२
पादादिकं तु यच्छिष्टं तत्सर्वं सकलं भवेत्
पूर्ववद्गुणितं कृत्वा भागं तारं च तत्समम् ६३
कृत्वा तेनैव विभजेत् यल्लाभादधिकं भवेत्
युग्महस्तैः स्वरोद्धृतैश्शिखिभिर्योनिरुच्यते ६४
अथवान्यप्रकारेण आयादिविधिरुच्यते ।
नागैस्सूत्राग्निरन्ध्रैर्हतदिनदशवस्वब्धिशिष्टं तु तत् स्यादायोनौ
योनिवारं वसुहतमुडुभिर्भक्तशिष्टं तु ऋक्षम् ।
हत्वा भक्त्वाथ सूत्रैर्भुवनमथ फलं शिष्टमंशं वसुघ्नं
त्रिंशभक्तं तिथिस्स्याद्गृहदिनतिथियोगादयो योनिभेदाः ६५
अथवान्यप्रकारेण चायादीन् परिकल्पयेत्
नागनन्दगुणनागनन्ददृक् भानुनाडिवसुभं मुनिर्नव ६६
आयमन्यतरयोनिऋक्षकं वारमंशकगुणक्षयक्रमात्
इदं लिङ्गे च सकले द्वारे स्तम्भादिके मतम् ६७
इदमायादिकं चार्धमण्टपे शिष्टमण्टपे
परिवारालये तुङ्गहर्म्येऽन्यस्मिन् प्रकल्पयेत् ६८
एवं परीक्ष्य बहुधा प्रासादं परिकल्पयेत्
त्र्यंशैकांशो भवेद्गर्भः पञ्चांशात्त्र्यंशमेव वा ६९
सप्तांशे चतुरंशो वा नवांशे पञ्चभागतः
रुद्रभागे षडंशस्स्याद्विश्वांशे सप्तभागकः ७०
तिथ्यंशे वसुभिस्सप्तदशांशे तु नवांशकः

विस्तारार्धप्रमाणं तु गर्भविस्तार इष्यते  ७१
एकद्वित्रितलानां स्याद्गर्भगेहे प्रमाणकम्
प्रासादस्य नवाष्टांशः दशांशः कूटविस्तरः  ७२
शालाव्यासो मतो द्वित्रिगुणायामसमन्वितः
पञ्जरश्चार्धभागो वा त्रिपादो वाथ भागिकः  ७३
अलिन्दान्धारिकान्धारहारा भागेन कल्पिताः
भागार्धद्वित्रिभागं वा पञ्चत्रिंशमथापि वा  ७४
अलिन्दं कल्पयेच्छेषं गृहविन्यासके मतम्
महतां च विमानानां रचनात्र विधीयते  ७५
नवभागत्रिभागो वा व्यासनालीगृहान्वितः
बहिरान्धारिकान्धारहारभागेन विस्तृताः  ७६
हारप्रमाणं बाह्ये तु रचनार्थं प्रकल्पयेत्
भित्त्यन्तस्थं प्रमाणं स्याद्भित्तिबाह्ये त्वबाह्यतः  ७७
रचनाक्षेत्रमानं तु हित्वा मानं प्रकल्पयेत्
एवमन्तस्थविन्यासो बाह्यविन्यास उच्यते  ७८
सप्तविंशतिभागे तु प्रासादस्य तु विस्तरे
एकैकभागवेशात्तु कूटशालादिकं नयेत्  ७९
आदौ भागद्वयेनाथ कूटमेकेन वा भवेत्
तलमेकं भवेद्ग्रासं खण्डहर्म्यं त्रिभूमिके  ८०
अथवान्यप्रकारेण चान्तर्विन्यास उच्यते
सप्तविंशतिभागे तु प्रासादस्याय उच्यते  ८१
त्रिभागेन भवेद्गर्भं समन्ताद्भित्तिरिष्यते
पञ्चालिन्दं सषट्कुडयं बहिरान्धारिकावृतम्  ८२
त्रिनवांशमिदं जातिविमानं द्वादश क्ष्मकम्
एतन्मणिमये लिङ्गे बाणादौ वा प्रकल्पयेत्  ८३
दशादिपञ्चहस्त्यर्थं यदा प्रासाद इष्यते

पञ्चाशत्करपर्यन्तं नवलिङ्गेष्वनुक्रमात् ८४
तदायामायविस्तारे हस्तराशौ कराहते
लिङ्गवत्पीठमन्येन सैकेन त्रयमन्तरम् ८५
द्व्यधिकेन बहिर्भित्तिश्शेषं प्राग्वत्प्रकीर्तितम्
लिङ्गे शिलासु च क्रोधे भित्तिपञ्चांशवर्जिताः ८६
क्रिञ्चिन्नयूनमलिन्दं वा शेषं कुडयेषु योजयेत्
तलस्तम्भोत्तरास्सर्वसामान्याः परिकीर्तिताः ८७
प्राग्वंशैरन्यवंशैश्च नालिकेरदलादिभिः
ग्राच्छादिता प्रपा नाम प्रस्तरं चात्र मगडपः ८८
प्रभूतशिखरोपेतं हर्म्यं नाम्ना प्रकीर्तितम्
ग्रनेकभूमियुक्ता तु मालाकारा तु मालिका ८९
वंशादिवंशसहिता शिखरस्तूपिकान्विता
नासिकामुख्यपटयंशा शालेति परिकीर्तिता ९०
षड्वर्गसहितं यत्तु गर्भगेहसमन्वितम्
ग्रन्धार्यान्धारिहारोक्तखगडहर्म्यविशेषितम् ९१
कूटशालान्वितं यत्तु पञ्जरैश्च समन्वितम्
हस्तिपृष्ठयुतं चेन्द्रशालाभिश्च समन्वितम् ९२
तिलकत्तुद्रनास्योक्ततोरगैश्च समन्वितम्
ब्रह्मद्वारपताकाद्यैरङ्गैर्युक्तं विमानकम् ९३
मगटपे मगटपं यत्तु रङ्गमित्यभिधीयते
मूलकूटसमायुक्ता बालकूटसमन्विता ९४
कचग्रहसमायुक्ता सभेति परिकीर्तिता
विविधं वस्तुमुख्यं स्याद्गौगमन्यत्प्रकीर्तितम् ९५
यथोक्तं मुख्यमेवं स्यात्तदभावे तु गौगकम् ९६
इति कामिकाख्ये महातन्त्रे भूमिलम्बविधिः पञ्चाशत्तमः पटलः

## आद्येष्टकाविधिः

आद्यष्टकाविधानं तु वक्ष्ये हर्म्यादिके क्रमात्
ऐन्द्रे वा चोत्तरे चैशे कूटं वा मण्टपं प्रपा  १
भूतादिविश्वहस्तान्तं वितानाद्यैरलङ्कृतम्
दर्भमालासमायुक्तं दिग्गजैश्च समन्वितम्  २
तन्मध्ये वेदिकां कुर्यात्तत्त्रिभागैकभागतः
एकहस्तं द्विहस्तं वा मुष्टिमात्रसमन्वितम्  ३
कुण्डानि कारयेद्दिक्षु विदिक्ष्वष्टौ प्रधानकम्
पञ्चवाचैककुण्डं वा वृत्तं वा चतुरश्रकम्  ४
विसृज्य शिल्पिनं पश्चाद्गोमयेन तु लेपयेत्
पञ्चगव्येन संप्रोक्ष्य हृदयेनानुमन्त्रतः  ५
त्र्यङ्गुलं तु समारभ्य चैकैकाङ्गुलवर्धनात्
अष्टत्रिंशाङ्गुलान्तास्तु चेष्टका विस्तरा मता  ६
एकादिद्वादशान्तानां तलानां स्यात्त्रयं त्रयम्
अथवा विस्तरस्तासां पादव्यासं महालये  ७
सपादार्धत्रिपादा वा द्विगुणा वा सपादकाः
इष्टकाया इह प्रोक्तं विस्तारार्धं त्रिपादकम्  ८
पादं वा पञ्चभागे तु त्रिद्व्यंशं वा घनं भवेत्
आचार्य आदिशैवस्तु शिवदीक्षासमन्वितः  ९
सुस्नातस्तु शुचिर्भूत्वा सकलीकृतविग्रहः
सुशुक्लवस्त्रस्सोष्णीषस्सोत्तरीयस्सुभूषितः  १०
पञ्चाङ्गभूषणोपेतस्सशिष्यपरिवारकः
इष्टकाः पञ्चगव्यैश्च क्षालयेद्धर्मणा गुरुः  ११
हेमकौतुकसूत्रेण कार्पासोत्थेन बन्धयेत्
स्थण्डिलं कारयेद्विद्वानष्टद्रोणैश्च शालिभिः  १२
तदर्धं तण्डुलोपेतं तण्डुलार्धतिलान्वितम्

तिलार्धं लाजसंयुक्तं दर्भैश्चैव समन्वितम् १३
इदमुत्तमकल्पं स्यात्तदर्धं मध्यमिष्यते
तदर्धमधमं ज्ञेयं सर्वत्रैव विनिर्मितम् १४
लिखित्वाष्टदलं पद्मं कर्णिकाकेसरान्वितम्
स्थण्डिलं पञ्चगव्येन संप्रोक्ष्य हृदयेन तु १५
स्वस्वदिक्स्थापनार्थं च लेखयेदिष्टकान्तरे
पूर्वभागे त्वकारं तु याम्ये त्वाकारमेव च १६
इकारं पश्चिमे देशे त्वीकारं चोत्तरे न्यसेत्
उकारमूर्ध्वभागे तु वस्त्रैराच्छाद्य पूजयेत् १७
ऋग्यजुस्सामाथर्वाणि शिवशास्त्रं यथाक्रमात्
अधिदेवा इह प्रोक्ताः पूर्वादीनां यथाक्रमम् १८
तन्तुनावेष्टितान् कुम्भान् गन्धाम्बुपरिपूरितान्
पिधानान् सितवस्त्राढ्यान् हेमयुक्तान् सकूर्चकान् १९
पुष्पाम्रपल्लवोपेतानिन्द्राद्यष्टदिशासु वै
लोकपालाधिपानष्टशिवकुम्भसमायुतान् २०
इन्द्रेशानान्तराले तु संस्थात्याभ्यर्चयेद्बुधः
ततो होमः प्रकर्तव्यस्त्वग्निकार्योक्तमार्गतः २१
पलाशोदुम्बराश्वत्थन्यग्रोधाः प्राग्दिगादितः
वह्न्यपामार्गखदिरवटास्त्वग्न्यादिकोणतः २२
प्रधानस्य पलाशस्स्यात्समिदाज्यचरुं तिलम्
तण्डुलेन समायुक्तं मूलब्रह्माङ्गसंयुतम् २३
प्रत्येकं होमयेद्धीमान् मध्ये दिक्षु विदिक्ष्वपि
सहस्रं वा तदर्धं वा शतं तस्यार्धमेव वा २४
विन्यसेन्मूर्तिपान् तत्त्वतत्त्वेश्वरसमन्वितान्
तेषां होमं विधातव्यं पूर्णाहुतिमथाचरेत् २५
प्रभाते विधिना स्नात्वा देशिको मूर्तिपस्सह

संपूज्य चेष्टकान्कुम्भान्पूर्णाहुतिमथाचरेत् २६
प्रायाश्चित्तं ततो हुत्वा पुनः पूर्णाहुतिं चरेत्
गर्भविन्यासमार्गोक्तस्थाने तान् विन्यसेत्क्रमात् २७
हृदयं च शिखा चैव कवचं च शिरस्तथा
मूलं चैव क्रमेणैव पठन्नेतांश्च विन्यसेत् २८
अग्रमग्रं तथैशान्यां पृष्ठं पृष्ठं च नैर्ऋते
पृष्ठाग्रे त्वनले वायौ ज्ञात्वा कर्म समाचरेत् २९
मानुषे प्रागुदग्दीर्घा दिव्ये प्राक्प्रत्यगायता
इष्टका प्रागवागेका प्रक्षेप्यादौ क्रमेण तु ३०
नन्द्यावर्ताकृति स्थाप्यमिष्टकानां चतुष्टयम्
पञ्चमीत्वीशवदना शैवी प्राग्वदना सुरे ३१
कौबेरवदनं नृणामेवं ज्ञात्वा तु विन्यसेत्
आचार्यं प्राक्प्रपूज्याथ तेनैतत्कारयेत्सुधीः ३२
निष्कादिनवनिष्कान्तं काञ्चनं देशिकस्य तु
रत्नादीन्विन्यसेन्मध्ये त्ववटेषु च विन्यसेत् ३३
एकवर्गं द्विवर्गं वा त्रिवर्गं सर्वमेव वा
गर्भन्यासोक्तमार्गेण विन्यसेद्देशिकोत्तमः ३४
आदौ जलेन संपूर्य शिवकुम्भस्थितेन तु
पुष्पं निक्षिप्य तत्रैव पश्चाद्रत्नानि विन्यसेत् ३५
शुभं प्रदक्षिणावर्तो वामावर्तस्त्वशोभनम्
वामावर्ते तु संजाते शान्तिहोमं समाचरेत् ३६
मन्दिरे मण्टपे चैव प्राकारे गोपुरे गृहे
परिवारालये पीठे शालायां च सभाविधौ ३७
पुष्करिण्यां च कुल्यायां कूपे सेतोश्च बन्धने
अनेनैव प्रकारेण कर्म चैतत्समाचरेत् ३८
अत्रानुक्तं तु यत्सर्वं गर्भन्यासोक्तमाचरेत् ३९

इति कामिकाख्ये महातन्त्रे आद्येष्टकाविधिः एकपञ्चाशत्तमः पटलः

## उपपीठविधिः

उपपीठविधिं वक्ष्ये अधिष्ठानसमन्वितम्
एकहस्तं द्विहस्तं वा त्रिहस्तं परितोऽधिकम् १
विमानादिविशालात्तु खातयेत्परितोऽधिकम्
तत्र चिक्वणपाषाणमुष्टिमृद्वालुकादिभिः २
अधिष्ठानषडष्टांशहीनं तु परिपूरयेत्
पञ्चांशद्व्यंशत्र्यंशं वा हीनं वा परिकल्पयेत् ३
मुद्गरैर्गजपादैश्च काष्ठतुण्डैर्घनीकृते
जलेन पूरिते तत्स्थं निरूनमुदकं यदि ४
तद्व्यपोह्य समुद्धृत्य दण्डमानं तु शैलके
पतिते भारमात्रे तु न निम्नं च भवेद्यदि ५
तत आरभ्य शैलैर्वा त्विष्टकाभिश्च बन्धयेत्
आदौ प्रकृतिभूमिस्स्यात् त्रिप्रकारा तु सा स्मृता ६
प्रकृतिर्हस्तमात्रेण चोत्तमे तु प्रशस्यते
अष्टादशाङ्गुला मध्ये हीने स्याद्द्वादशाङ्गुला ७
जलस्य निस्रवार्थं तु प्रतिशालं प्रकल्पयेत्
षडङ्गुलक्षयेणादौ चतुरर्धं द्वितीयके ८
पक्षयोस्त्र्यङ्गुलं हीनं प्रकृत्युपरि जन्मभूः
तदुपानमिति प्रोक्ता सैव भौमा प्रकीर्तिता ९
तदूर्ध्वस्थमधिष्ठानं केवलं तु विधीयते
पादविस्तारमानेन साध्यर्धद्वित्रिदण्डकम् १०
निर्गतं बाह्यदेशे तु तदर्धबहुलान्वितम्
उपानोपरि पद्मं वा सोपानं तु तदूर्ध्वतः ११
यथा शोभांशमानेन भूतवेदाग्निभाजिते

उन्नतार्थं च शोभार्थं रक्षार्थं च बलार्थकम्  १२
सभद्रं वा विभद्रं वा जन्मप्रभृति मध्यमे
उपपीठं विधातव्यमधिष्ठानोदयार्धतः  १३
पादेन च त्रिपादेन समेन त्रिगुणेन वा
पञ्चांशे तु त्रयांशेन वह्न्यंशे त्वैकभागतः  १४
तदुच्चार्धत्रिपादं वा पादं वाष्टांशहीनकम्
द्विदण्डं वा त्रिदण्डं वा निर्गमं पादबाह्यतः  १५
पादुकाच्च बहिर्वाधो उपानस्तम्भबाह्यकम्
नवपङ्क्त्यंशकं कृत्वा त्र्यंशोच्चोपानमिष्यते  १६
द्व्यंशं पद्मं तदूर्ध्वे तु कम्पमेकांशमिष्यते
षडंशः कर्णमिष्टस्स्याच्छेषं प्राग्वत्प्रकीर्तितम्  १७
कम्पसत्वंशेन कर्तव्यमष्टांशमुपपीठकम्
तदेवोर्ध्वमधस्ताच्चेदम्बुजेन विहीनकम्  १८
षडंशमुपपीठं स्याच्चतुर्विंशतिभाजिते
तदर्धं करणं प्राग्वदंशेनोत्तरमिष्यते  १९
रुद्रांशेन त्रिभागेन कपोतमिह सम्मतम्
अलिन्दान्तरितं द्व्यंशं प्रत्युसेधं तु तत्समम्  २०
वाजनं चैकभागं स्यात्कर्णस्त्वष्टांश इष्यते
उत्तरे चैकभागं स्याद्रुद्रभागेन कीर्तिता  २१
कपोतकं त्रिभागेन भागेनालिन्दमिष्यते
अन्तरीतं तु भागेन भागाभ्यां प्रति इष्यते  २२
प्रतिवाजनमेकांशं सर्वालङ्कारसंयुतम्
त्रिस्सप्तांशत उत्सेधो द्वाभ्यां जन्म तथाम्बुजम्  २३
जलमर्धेन चार्धेन पद्मं द्व्यंशेन वाजनम्
अर्धेनाब्जं तथा कम्पमष्टांशं कर्णमीरितम्  २४
अंशेनोत्तरमर्धेन पद्मं चोपानकं त्रिभिः

भागार्धमूर्ध्वकम्पस्स्यात्त्रिस्सप्तांशे तदुन्नते २५
जन्म द्व्यंशेन त्र्यंशेन पद्ममंशेन कन्धरम्
बाह्यवाजनमेकेन कम्पमष्टांशकैर्गलम् २६
अंशेनोत्तरमंशाभ्यां वाजनं कम्पमंशकम्
सिंहेभमकरैर्व्यालैर्भूतैः पत्रैरलङ्कृतम् २७
प्रतिवक्त्रं चषालं स्याद्बालेनारूढमस्तकम्
अर्पिते नार्पिते मत्स्यैस्सर्वत्र परिकल्पयेत् २८
अङ्गमङ्गं विशेषेण वृद्धिं हानिं च कारयेत्
चतुःपञ्चषडंशं वा सप्ताष्टांशमथापि वा २९
अंशद्वयं त्रयांशं वा परिगृह्यावशेषतः
परिलोप्य विधातव्यमाद्यङ्गत्वोपपीठकम् ३०
अनेनैव प्रकारेण ह्यधिष्ठानं च कारयेत्
द्विविधं तदिह प्रोक्तं प्रत्यङ्गं पट्टिकाङ्गकम् ३१
चतुर्विंशतिभागं तु कृत्वाधिष्ठानतुङ्गकम्
जगत्यष्टांशकेनोक्ता कुमुदं तत्समानकम् ३२
अष्टपादं तदुद्दिष्टं कम्पमंशस्त्रिभागभाक्
कर्णस्त्वंशेन कम्पं स्यात्त्र्यंशं वाजनमिष्यते ३३
जगती प्राग्वदुद्दिष्टा सप्तांशं कुमुदं भवेत्
पद्ममंशेन कर्तव्यं शेषं पूर्ववदाचरेत् ३४
सप्तांशा जगती प्रोक्ता षडंशं कुमुदं भवेत्
पद्ममंशेन कर्तव्यं कम्पमेकांशतो भवेत् ३५
त्र्यंशं तु गलमित्युक्तमेकांशं चोर्ध्वकम्पकम्
पद्ममेकांशतो ज्ञेयं वाजनं द्व्यंशमिष्यते ३६
ऊर्ध्वपद्मं तदेकांशमुपकम्पं तथैव च
पञ्चांशा जगती प्रोक्ता पद्ममेकांशतो भवेत् ३७
दृगंशेनांशतः पद्मं कुमुदं चतुरंशकम्

शेषं प्राग्वत्समुद्दिष्टं कम्पस्तम्भोदयाश्रितम्  ३८
भागेनैकेन जन्म स्यात्त्रिभागं गलमुच्यते
कम्पमेकांशतो ज्ञेयं षडंशं जगतिर्भवेत्  ३९
एकेन पद्ममंशेन गलमेकेन पद्मकम्
त्रिभागं कुमुदं पद्ममेकांशं परिकीर्तितम्  ४०
एकेन कम्पं द्व्यंशेन गलमंशेन कम्पकम्
दलमंशेन कर्तव्यं वाजनं द्व्यंशमीरितम्  ४१
एकांशं जलजं प्रोक्तं कम्पमंशेन कीर्तितम्
एकभागेन जन्म स्यात्पञ्चांशा जगतिर्भवेत्  ४२
प्रकर्तव्ये तथान्येषां सर्वमेतत्प्रकल्पयेत्
आर्ताधिष्ठानतुङ्गेन द्विगुणापाततुङ्गता  ४३
अथवार्तांशमानेन तं भेदैः परिकल्पयेत्
एकांशं जलजं प्रोक्तं गलमर्धांशतो भवेत्  ४४
ऊर्ध्वपद्मं तथार्धांशं चतुर्भिः कुमुदं भवेत्
अर्धेन पद्ममर्धेन कम्पं द्व्यर्धांशकैर्गलम्  ४५
अंशेन कम्पमर्धेन पद्मं द्व्यंशेन वाजनम्
अर्धेन पद्ममेकेन कम्पमर्धेन पद्मकम्  ४६
एकेन जन्म द्वाभ्यां तु पद्ममेकेन कम्पकम्
षडंशा जगती वेदभागं च कुमुदं भवेत्  ४७
एकांशं कम्पकर्णौ हृद्भागं भागेन निर्मितम्
कम्पमेकेन कर्तव्यं वाजनं द्व्यंशमिष्यते  ४८
एकांशं कम्पकं पद्मं सार्धेनार्धेन कम्पकम्
षड्विंशत्यंशकं प्रोक्तं सर्वस्मिन् धाम्नि योजयेत्  ४९
द्विभागं जन्म संप्रोक्तमेकांशं पद्ममिष्यते
एकेन कम्पकं पञ्चभागेन जगती भवेत्  ५०
कुमुदं चतुरश्रं स्यादेकं पद्मं तु भागतः

कम्पकर्णौ द्विभागेन एकं कम्पं तथाब्जकम् ५१
वाजनं तु द्विभागं स्यात्कम्पमंशेन कीर्तितम्
एवं स्यात्पादबन्धं तु छेदनीयं यथाचितम् ५२
देवानां च द्विजातीनां चतुर्णामपि योग्यकम्
प्रतिबन्धं प्रवक्ष्यामि त्रयोविंशतिभाजिते ५३
अष्टांशा जगती प्रोक्ता कुमुदं तत्समानकम्
आलिङ्गमर्धभागं स्यात् द्वाविंशत्यंशके कृते ५४
एवं स्यात्पादबन्धं तु छेदनीयं यथोचितम्
तदेवं कुमुदं प्रोक्तं वाजनं स्यात्कपोतकम् ५५
प्रत्युत्सेधं त्रिभागेन साब्जकं पञ्चभागतः
देवद्विजनरेन्द्राणां प्रशस्तं नान्यजातिषु ५६
अष्टांशमम्बुजं प्रोक्तं कण्ठभागे च भागतः
अम्बुजं कुमुदं भूतैरेकांशं पद्ममिष्यते ५७
आलिङ्गस्य द्विभागं स्यात्तथैवान्तरितं मतम्
प्रत्युत्सेधं त्रिभागेन साब्जक्षेपणमंशुकम् ५८
तृतीयं विंशतिभागैः कल्पयेत्कल्पवित्तमः
अष्टभागं महापद्ममन्ध्रकेनांशतोऽम्बुजम् ५९
वृत्तं तु पञ्चभागेन भागेनोर्ध्वाम्बुजं भवेत्
कम्पमेकेन कर्णस्तु त्रिभिरंशेन वाजनम् ६०
निद्रांशेन कपोतस्तु सार्धद्व्यंशेन कल्पितम्
आलिङ्गान्तरिते द्वाभ्यां प्रतिभागद्वयेन तु ६१
अर्धांशेनोर्ध्वकम्पं तु भागेन त्रिंशदंशके
एकविंशतिभागे तु जन्मभागेन कीर्तितम् ६२
सार्धेन पद्ममर्धेन कम्पं स्यात्सप्तभागतः
जगती कुमुदं षड्भिरेकेनालिङ्गमंशुके ६३
प्रोक्तमन्तरितं द्वाभ्यां प्रतिसाब्जं तु वाजनम्

एकभागेन कर्तव्यं लतापत्रादिशोभितम्  ६४
द्वात्रिंशद्भाजिते तुङ्गे जन्म द्वाभ्यामथैकतः
वाजनं स्यान्महापद्मं सप्तभागेन कीर्तितम्  ६५
कर्णास्त्वंशेन पद्मं स्यादेकं वेदेन वृत्तकम्
अब्जमेकेन कम्पं स्यादंशमग्न्यंशकैर्गलम्  ६६
कम्पमेकेन तद्वत्स्यात्पद्मं वेदैः कपोतकम्
आलिङ्गान्तरिते द्वाभ्यां प्रतिभागद्वयेन तु  ६७
सपद्मकम्पमेकेन सर्वालङ्कारशोभितम्
एकेन जन्मषड्भागैर्जगती शरभागिकम्  ६८
कुमुदं भागवेत्रं स्यात्त्रिभिः कराठः प्रकीर्तितः
एकेन कम्पमंशेन गलं त्र्यंशैः कपोतकम्  ६९
एकं कम्पं भवेदुच्चैः कृते द्वाविंशकांशके
तत्तदेव भवेदूर्ध्वं भागेनान्तरितं भवेत्  ७०
द्वाभ्यां प्रतिरथांशेन गलत्र्यंशैः कपोतकम्
सार्धजं वार्धजं कम्पं महापद्मं शरांशकम्  ७१
गलमंशेन भागेन गलवृत्तं त्रिभागिकम्
पद्ममंशं भवेत्कम्पमंशेन परिकीर्तितम्  ७२
अंशेनान्तरितं द्वाभ्यां प्रतिरंशेन वाजनम्
द्वाभ्यां जन्मांशतः पद्मं कम्पमेकेन कीर्तितम्  ७३
जगती पञ्चभागेन वेदांशैः कुमुदं भवेत्
एकांशं पद्ममेकेन पद्मं कराठो द्विभागतः  ७४
कम्पमंशेन भागेन पद्मं द्वाभ्यां कपोतकम्
एकेन कम्पमंशेन त्र्यंशं द्वाभ्यां प्रतिर्भवेत्  ७५
अंशेन वाजनं तुङ्गे कृते षड्विंशकांशके
त्र्यंशं प्रतिश्च कम्पं च त्यक्त्वान्यैरन्यदिष्यते  ७६
एकेन जन्म भागाभ्यां पद्ममंशेन कम्पकम्

जगती चतुरंशेन कम्पं पद्मं द्विभागकम्  ७७
कम्पमंशेन भागेन पद्मं वृत्तं त्रिभिर्भवेत्
एकांशं पद्ममालिङ्गमंशमन्तरितं तथा  ७८
द्वाभ्यां प्रतिश्च भागेन वाजनं पञ्चविंशके
यवमेकं समारभ्य चैकैकयववर्धनात्  ७९
पञ्चमात्रान्तकं वृद्धिमाधिक्यं वा प्रकल्पयेत्
मसूरकमधिष्ठानं वस्त्वाधारं धरातलम्  ८०
तलं कुट्टिममाद्यङ्गं पर्यायवचनानि हि
जगत्या निष्क्रमो यावत्तावदेव च कैरवे  ८१
अम्बुजानां च सर्वेषां स्वे स्वे यो निष्क्रमो मतः
वेत्राणामपि सर्वेषां चतुर्भागैकनिर्गमः  ८२
स्वसमो वा त्रिभागो वा महावाजननिर्गमः
एवं निवृत्तमेवं स्यात् शोभाबलवशेन वा  ८३
प्रवेशनिर्गमौ कार्यौ सर्वाङ्गानां मसूरके
प्रतिच्छन्दो न कर्तव्यो सर्वत्रैव विचक्षणैः  ८४
द्वारार्थं यः परिच्छेदस्सम्पद्द्वारं च नेत्यलम्
स्वायम्भुवादिलिङ्गेषु प्रतिच्छन्दो न दोषकृत्  ८५
पादबन्धमधिष्ठानं छेदनीयं यथोचितम्
जन्मादिपञ्चवर्गेषु तत्तदंशेऽवसानके  ८६
पट्टिकाङ्गे त्वधिष्ठानैरन्यस्मिन्नेवमूह्यताम्
तदधिष्ठानमानं च श्रूयतां मुनिपुङ्गवाः  ८७
देवानां स्याच्चतुर्हस्तं द्विजानां तत्समो भवेत्
नृपाणां त्रिकरं सार्धं द्विहस्तं यौवराजकम्  ८८
द्विहस्तं वणिजामेकहस्तं शूद्रस्य कीर्तितम्
एतज्जातिवशाद्भूमिवशादत्रैव कथ्यते  ८९
दण्डात् षण्मात्रहत्यात्तु द्वादशाद्यात्त्रिभूमिकात्

त्रितलस्योत्तमस्येष्टं पादेनोनं द्विहस्तकम् ९०
महत्तराणां क्षुद्राणां मानमेवात्र चानयेत्
मसूरकोन्नतं पञ्चहस्तैर्द्वात्रिंशदङ्गुलम् ९१
त्रिंशदङ्गुलमूलं वा द्विद्व्यङ्गुलविवर्धनात्
अष्टत्रिंशाङ्गुलं चान्ते त्रयोदशविशालतः ९२
षडादीनां तु पञ्चानामेकत्रिंशाङ्गुलादितः
नवत्रिंशाङ्गुलं तत्स्याच्चतुर्दशकरस्य तु ९३
त्रिचतुर्हस्तयोर्धाम्नोस्तन्नीत्यैव विनिश्चयः
आर्तोत्सेधांशमानं वाधिष्ठानस्य विधीयते ९४
तत्तत्पादोदयार्धेन षडष्टांशोनमानतः
अधिष्ठानोच्छ्रयो वा स्यात्पादतुङ्गोनमेव वा ९५
त्रिभागाद्रविभागान्तं त्यक्त्वाधिष्ठानतुङ्गकम्
भागेन वा प्रकर्तव्यमङ्गुलैर्वा यवैस्तु वा ९६
न्यूनं वाप्यधिकं वापि कारयेत्कर्तुरिच्छया
अधिष्ठानादिषड्वर्गेष्येवमेव समाचरेत् ९७

इति कामिकाख्ये महातन्त्रे उपपीठाधिष्ठानविधिः द्विपञ्चाशत्तमः पटलः

## पादमानविधिपटलः

अतः परं प्रवक्ष्यामि पादमानं विचक्षणाः
पादश्च द्विविधो होमस्तम्भस्स्यात्प्रतिपादकः १
अधिष्ठानोपगूढस्तु निर्घातस्तम्भ इष्यते
प्रतिस्तम्भवृतेरूर्ध्वे चोत्तरान्तसमायतिः २
सवितस्त्यष्टहस्तोच्चः प्रतिस्तम्भोदयो मतः
अयं द्वादशभूमेस्स्यात्तलं प्रति तलं प्रति ३
वितस्त्याः क्षपयेदेकभूमौ त्रिकर इष्यते

अनेनैव क्रमान्नेयं षोडशद्दमान्तमेव हि ४
द्व्यन्तराणां च षड्वेदाङ्गुलेन ह्नय इष्यते
जातीतराणां ह्नपणं द्वाभ्यां वा त्र्यङ्गुलेन वा ५
रविभौमस्य विसृतिरष्टाविंशतिमात्रकम्
द्व्यङ्गुलेन ह्नयो भूमौ भूमावेव षडङ्गुला ६
एकभूस्तम्भविस्तारस्तलोपरितले मतम्
द्व्यन्तराणां च सर्वेषां द्वाभ्यां वा त्रिभिरङ्गुलैः ७
ऊनाधिक्ये प्रकर्तव्ये तथान्येषां प्रकल्पयेत्
आर्ताधिष्ठानतुङ्गेन द्विगुणः पादतुङ्गकः ८
अथवार्तांशमानेन स्तम्भदैर्घ्यं प्रकल्प्यताम्
आर्तोत्सेधांशमानं तु षट्सप्ताष्टनवांशकम् ९
हीनं वाप्यधिकं वापि स्तम्भोत्सेधं प्रकल्पयेत्
अथवा स्तम्भतुङ्गे तु वसुनन्ददशांशके १०
विस्तारस्त्वेकभागस्स्यात्सर्वे यद्दारुपादके
तद्व्यासार्धं च पादेन त्रिद्व्यंशं वा प्रकल्पयेत् ११
भित्तिस्तम्भविशालं यत्तेन द्वित्रिगुणं मतम्
शिलास्तम्भविशालं स्याद्यथेष्टं वा प्रकल्पयेत् १२
षडंशं तु समारभ्य द्वादशांश समावधि
भागं कृत्वैकभागेन वोर्ध्वोर्ध्वं स्तम्भतुङ्गता १३
मूलादग्रं यथा प्रोक्तं कुड्यं चापि तथा मतम्
द्वित्रिवेदचतुर्दण्डः कुड्यविस्तार इष्यते १४
पञ्चषड्गुणितो वापि स्तम्भालङ्कार इष्यते
उच्यते चतुरश्रं च वृत्तं वा तत्प्रकीर्तितम् १५
सर्वं तच्चतुरश्रं तु कुम्भमण्डीसमन्वितम्
ब्रह्मकान्तं विजानीयाद्व्यासत्रिगुणमानतः १६
मध्येऽष्टाश्रं पोतिकान्तं मध्याष्टाश्रं प्रकल्पयेत्

सर्वत्राष्टाश्रसंयुक्तं कुम्भमरडद्यादिसंयुतम्  १७
विष्णुक्रान्तं स्वयं नाम्ना कौमारं स्यात्षडश्रकम्
भानुकान्तं तदग्रं स्यात्कलाश्रं चन्द्रकान्तकम्  १८
मूले कर्णप्रमाणेन चतुरश्रस्तदूर्ध्वतः
पूर्वोक्ताकृतिसंयुक्ताः पूर्वाश्रा ननु कीर्तिताः  १९
सर्वत्र वृत्तसंयुक्तमीशकान्तमिति स्मृतम्
समत्रिभागमानेन चतुरष्टाश्रवृत्तकम्  २०
कुम्भमरडद्यादिसहितो रुद्रकान्तस्तु कीर्तितः
शुक्लभेदसमायुक्त ईशकान्तः प्रकीर्तितः  २१
पिरडपाद इति प्रोक्तो मूले विपुलमानतः
चतुरश्रस्तदूर्ध्वे तु षोडशाश्रादिसंयुतः  २२
स्यान्मूलचतुरश्रोऽसौ स्तम्भव्यासोद्वयेन च
विस्तृतं तु तदूर्ध्वोच्चं मूले पद्मासनं भवेत्  २३
यथेष्टाकृतिशेषं तु मूलपद्मासनं भवेत्
द्वित्रिदरडविशालोच्चो लूखलो यदि मूलतः  २४
तदूर्ध्वेऽष्टाश्रसंयुक्तस्स्यादुलूखलपादपः
उदयं तु चतुर्भागस्सिंहव्यालेभभूतकैः  २५
नरनारीयुतो मूले यथेष्टाकारसंयुतः
उपरिष्टाच्च तन्नाम्ना पादाश्च बहवो मताः  २६
स्तम्भार्धनिष्क्रमः कुडद्यादष्टाश्राणां विधीयते
त्रिभागैकं च वृत्तानां वेदाश्राणां तु पादतः  २७
कुम्भश्चतुर्विधः प्रोक्तः सपादस्सार्ध एव च
पादोनद्विगुणश्चैव द्विगुणस्तून्नतिक्रमात्  २८
श्रीकान्तब्रह्मकान्तादिचन्द्रकान्ताः प्रकीर्तिताः
भानुकान्त इति प्रोक्तस्तदुच्चे तु नवांशके  २९
त्र्यंशेन दृक् चतुर्भागः कलशः करठ एकतः

आस्यमंशमथांशेन पद्मम‍र्धेन वृत्तकम्  ३०
अर्धेन हीनकौ कार्यौ स्तम्भद्विगुणमानतः
कुम्भविस्तार उद्दिष्टश्चाध्यर्धं चास्यमीरितम्  ३१
मूलपादविशालं तु हीनकौ पादविस्तरौ
दृक्कण्ठौ च विधातव्यौ पादविस्तारमानतः  ३२
तद्विस्तारसमायुक्तं ततो द्विगुणमूलतः
किञ्चिदग्रं विहीनं स्यात्कमलं तदधो भवेत्  ३३
अष्टांशाधिकपद्व्यासमर्धपादेन तुङ्गकम्
मूलस्थानमधस्तत्स्याद्दण्डमानमथोच्यते  ३४
त्रिगुणार्धयुता सा च चतुरश्रा समायता
मण्डिता पञ्चधा कृत्वा सार्धेन फलकासनम्  ३५
तत्समं वेत्रमित्युक्तं मण्डी शेषेण कल्प्यताम्
दण्डाकारस्तु वेत्रान्तं पादाकारसमो भवेत्  ३६
पालिकाभा च पद्माग्रा तथा नागतलाकृतिः
त्रिधा मण्डी समाख्याता पादोर्ध्वे पोतिका भवेत्  ३७
नागवृत्ता पत्रचित्रा समुद्रोर्मिरिति त्रिधा
स्तम्भत्रिगुणमाना सा दण्डोदयसमायुता  ३८
छायाक्षेपणसंयुक्ता नागवृत्तेति कीर्तिता
चतुर्दण्डसमायामा त्रिपादोदयसंयुता  ३९
छायाक्षेपणपत्रैश्च युक्ता पत्रविचित्रिता
पञ्चदण्डसमायामा दण्डमानसमोदया  ४०
चतुर्भागैकमानेन युक्ता युग्मैस्तरङ्गकैः
यथेष्टैः पार्श्वयोश्चैव समुद्रोर्मिरिति स्मृता  ४१
पोतिकानां च सर्वासां विस्तारः पादतस्समः
तदुच्चस्त्रित्रिभागेन तस्यास्त्वग्रे तु पट्टिका  ४२
तदर्धार्धेन कर्तव्यं तदधः क्षेपणं द्विजाः

छायायामं तदुच्चार्धं त्रिद्व्यंशं वाथ कल्पयेत्  ४३
स्वव्यासार्धं त्रिभागं वा त्वग्रमण्डनमिष्यते
सनालिकं समतलं सिंहव्यालादिमण्डितम्  ४४
मुष्टिबन्धोपरि क्षिप्तं व्यालाद्यैर्भूषितं तु वा
पूर्वाश्रचतुरश्राणां नागवृत्ता प्रकीर्तिता  ४५
सर्वेषु चातिहारेषु पत्रचित्रा प्रकीर्तिता
समुद्रोर्मिस्तथान्येषां पादानां फलका मता  ४६
विस्तारे त्रिचतुर्भागे चैकांशेन शिखा भवेत्
हस्तादिपञ्चहस्तान्तं षट्षडङ्गुलवर्धनात्  ४७
स्तम्भान्तरं प्रयोक्तव्यमोजं वा युग्ममेव वा
समास्स्तम्भान्तरास्सर्वे प्रासादे सार्वदेशिके  ४८
विषमस्तम्भभागं तु वास्तु चाशु विनश्यति
सायं चापि च तत्सर्वं तत्प्रकारेण कारयेत्  ४९
शिलामयास्तु देवानामन्येषां नैव कीर्तिताः
इष्टकाभिर्द्रुमैस्सर्वे स्तम्भाः कार्याः विचक्षणैः  ५०
युग्मायुग्मास्तु देवानामयुग्मास्तु नृणां मताः
अन्तस्तम्भा बहिस्तम्भा ऋजुस्तम्भास्समा मताः  ५१
अधिष्ठानं च पादं च भित्तिरुत्तरसंज्ञकम्
तुला जयन्ती चाख्याता छायाख्यमिति कीर्तितम्  ५२
एभ्यो विशिष्टं यद्वस्तु तनुकायमिति स्मृतम्  ५३
इति कामिकाख्ये महातन्त्रे पादमानविधिः त्रिपञ्चाशत्तमः पटलः

## प्रस्तरविधिपटलः

अथ वक्ष्ये विशेषेण प्रस्तरस्य विधिक्रमम्
उत्तरं वाजनं चैव मुष्टिबन्धं मृणालिकम्  १
दण्डकावलयक्षुद्रगोपनाच्छादनानि च

आलिङ्गान्तरिता चैव प्रत्यङ्गं वाजनं क्रमात्  २
त्र्यंशैकांशांशपञ्चैकद्वित्रिभागैकभागकैः
त्रिभागेनैकभागेन उपर्युपरि योजयेत्  ३
एतानि प्रस्तराङ्गानि त्रिविधं चोत्तरं भवेत्
खण्डोत्तरं पत्रबन्धं रूपोत्तरमिह द्विजाः  ४
पादविस्तारविस्तारं समोदयसमन्वितम्
खण्डोत्तरमिति ज्ञेयं पादेनोत्सेधसंयुतम्  ५
पादविस्तारसंयुक्तं पत्रबन्धमिति स्मृतम्
अर्धोच्चं पादविस्तारं रूपोत्तरमिहोदितम्  ६
त्रिपादं वा त्रिभागोनमर्धं वा कर्णनिर्गमम्
स्वस्तिकं चार्धमानं च नन्द्यावर्तसमाकृति  ७
सर्वतोभद्रवृत्तं वा प्रत्युत्तरनिवेशनम्
प्रागुक्तोत्सेधसंयुक्तं तत्पादादथ विस्तरम्  ८
छन्दःपादाग्रसंयुक्तमथवा परिकल्पयेत्
तदुच्चत्रिचतुर्भागनिर्गमोद्गमसंयुतम्  ९
वाजनं चतुरश्रं वा पद्माश्रं चोत्तरोपरि
आयतं त्रिचतुःपञ्चदण्डैरर्धं त्रिपादिकम्  १०
विस्तारं तत्समोत्सेधं पोतिकालङ्कृतिक्रियाम्
सनालीकविधीकं स्यान्मृणालिकमथोपरि  ११
तुलावलीकयोर्मध्ये चोणीवाजनमेव वा
स्तम्भव्यासी त्रिपादोच्चा त्वर्धपादोनविस्तरा  १२
महाभारतुला कार्या वलीकोर्ध्वे विशेषतः
तुलाविस्तारतारोच्चा जयन्ती स्यात्तुलोपरि  १३
अर्धदण्डघनोपेतमध्यर्धोच्चं समोदरम्
स्थानमार्गं जयन्त्यूर्ध्वे पार्श्वगं तूत्तरं भवेत्  १४
वाजनाश्च तुलाद्वारानुगास्सर्वत्र कीर्तिताः

जयन्ती वंशका ज्ञेया तुलावदनुमार्गकम् १५
प्रस्तरः पादविष्कम्भस्त्रिदराडं चार्धदराडकम्
तुलावलीकयोर्मध्ये द्विदराडमथवा पुनः १६
एकदराडान्तरं वापि जयन्त्युत्तरमेव च
पादात्पादविवृद्ध्या तु त्रिदराडान्तं प्रकल्पयेत् १७
तथैव चानुमार्गाणामन्तरं प्रविधीयते
अनुमार्गयुतं वापि रहितं वापि कारयेत् १८
यथाबलं यथाशोभमाच्छाद्यं तदुपर्यथ
दारुभिर्वेष्टकाभिर्वा यथाबलघनान्वितम् १९
हंसभूतबलिर्वाथ निद्रा वा दराडमानतः
त्रिपादोदययुक्ता वा विधेया वाजनोपरि २०
बहिः कपोतकरणं वाजनोपरि कल्पयेत्
अध्यर्धद्वित्रिदराडो वा निर्गमश्चोद्गमो भवेत् २१
अर्धत्रिपाददराडं वा कपोतालम्बनं भवेत्
उत्तरोपरि संस्थाप्य वाजनस्य तदूर्ध्वकम् २२
पोतिकान्तावलम्बं वा तुलान्तरितमन्तरम्
दराडार्धात्पादवृद्ध्या तु त्रिदराडान्तं तदुच्यते २३
तदर्धार्धत्रिभागैकं सोपानघनमिष्यते
पादाष्टांशषडंशैकफलकैश्छादयेत् परि २४
कम्पास्तदुपरि न्क्षेप्या यथेष्टाकृतिविस्तरैः
छादयेल्लोहलोष्टैर्वा मृल्लोष्टैर्वा द्विजोत्तमाः २५
सोपाननिर्गमाद्येन दरिडकानिर्गमो भवेत्
दरिडका पादतारार्धं तदर्धं हि घनं भवेत् २६
दरिडकाविपुलोपेतं तदर्धं च गलान्वितम्
सनालीकं तु मराडयङ्गं दराडनिष्क्रमसंयुतम् २७
मुष्टिबन्धं पृथक्कुर्याद्वाजनोपरि बुद्धिमान्

तुलाच्छेदेन वा कुर्यात्स्तम्भाग्रविपुलान्वितम् २८
तदर्धं निष्क्रमोपेतं स्वाग्रपट्टिकयान्वितम्
कायपादं नयेद्धीमान् दण्डिकावाजनान्तरे २९
कायपादान्तरं छाद्यं फलकैस्सारदारुजैः
दण्डिकामुष्टिबन्धान्तस्समाद्यायसमन्वितम् ३०
दण्डत्रिपादविसृतं तदर्धार्धघनान्वितम्
हस्तिमुण्डकसंस्थानं कुम्भमण्डीसमायुतम् ३१
ऊर्ध्वाधस्ताच्छिरोपेतं नानाकम्पसमायुतम्
मण्डनं त्वन्तरे कार्यं दण्डिकामुष्टिबन्धयोः ३२
व्यालनालकसिंहाद्यं मध्ये वा परिकल्पयेत्
मुष्टिबन्धसमाकारं चतुरश्रसमाकृति ३३
यथेष्टविपुलोत्तुङ्गं तुङ्गार्धसमवेशनम्
दण्डिकोर्ध्वे तु वलयं गोपनं स्यात्तदूर्ध्वतः ३४
हित्वावशिष्टमानं तु गोपनं चार्पयेद्बुधः
वसन्तकं वालिन्दं वा विधेयं वाजनोपरि ३५
त्रिपादोच्चं तदूर्ध्वे स्यात्कपोतोच्चं तु पूर्ववत्
एवं स्याद्दृढकल्पं तु शिलयेष्टकया द्रुमैः ३६
यथा प्रयोगस्थैर्यं तु तथा योज्यं विचक्षणैः
कपोतोच्चत्रिभागं वा पादं वा क्षुद्रनिद्रकम् ३७
कपोतनासिका क्षुद्रनीव्रोर्ध्वे स्थितकर्णिका
सपाददण्डा वाध्यर्धद्विदण्डा विस्तृतान्विता ३८
सिंहश्रोत्रशिखालिङ्गपट्टिकान्तस्य पट्टिका
विधेया स्वस्तिकाकृत्या नासिकोर्ध्वेन नासिका ३९
कुक्षिकादिशिखामानं यथाशोभनमेव वा
वाताहतचलच्चारुलतावत्कर्णिकाक्रिया ४०
प्रतिवाजनकस्योर्ध्वे नेष्यते नासिकोच्छ्रयः

पादपादघनोपेतं पादात्पादविनिर्गमः ४१
आलिङ्गं स्यात्तदूर्ध्वस्थं तदूर्ध्वान्तरितं मतम्
पादार्धविपुलं त्वर्धनिवृत्याश्चाग्रपट्टिका ४२
पादे पादान्तरे त्वन्तःप्रविष्टं पादबाह्यकम्
पादाकारं त्रिपादार्धसदृशोदयसंयुता ४३
प्रतिं निवेशयेत्तस्य त्रित्रिभागैकभागतः
पादेन वाजनं कुर्यात्तदनन्तरमुच्यते ४४
तच्चेन्निम्नोन्नतं सर्वं देवानां कुलनाशनम्
विकारस्स्यात्तु देवानां द्विजानां भूभृतामपि ४५
अन्ययोश्चार्धचन्द्राभा प्रतिः कार्या द्विजोत्तमाः
दण्डं सपादं सार्धं वा प्रतिनिर्गमनं नयेत् ४६
एकद्वित्रिचतुर्मात्रैर्यवैर्वा परिकल्पयेत्
हीनाधिक्यं तु चाङ्गानां प्रस्तरस्य द्विजोत्तमाः ४७
पादाङ्गानां तथा कुर्याद्गलाङ्गे च मसूरके ४८
इति कामिकाख्ये महातन्त्रे प्रस्तरविधिः चतुःपञ्चाशत्तमः पटलः

## प्रासादभूषणविधिः

प्रासादभूषणं वक्ष्ये श्रूयतां द्विजसत्तमाः
स्यात्पादप्रस्तरं ग्रीवावर्गे मूले तु वेदिका १
अध्यर्धाद्यं त्रिदण्डेन भित्तिमात्रविसारिणी
षट्सप्ताष्टदशोत्सेधा तत्समं दीर्घिका भवेत् २
प्रत्युच्चद्विगुणोत्सेधा वेदिका प्रस्तरोत्तरे
ग्रीवोत्सेधत्रिभागाच्च ग्रीवाधस्तात्स्थिरा भवेत् ३
पञ्चसप्तांशके द्वित्रिभागोच्चं वाग्रबन्धनं
शेषोऽधस्स्तम्भखण्डस्स्याद्भित्तिः पादविशालभाक् ४
तत्पादः पादनिर्वेशष्षट्सप्ताष्टांश एव वा

चतुर्धा बन्धनं कृत्वा कम्पमेकेन कारयेत् ५
तदूर्ध्वे तु द्विभागेन निद्रा त्वेकेन वाजनम्
पादं वा पञ्चभागे तु त्रिद्व्यंशं वाजनं भवेत् ६
कम्पमर्धेन निद्रा स्यादध्यर्धेनार्धतः कजम्
अर्धेन कम्पमंशेन वाजनं परिकल्पयेत् ७
द्वाविंशत्यंशके तुङ्गे कर्णो द्वादशभागिकः
नेत्रांशेन तथा निद्रा कपोतं चतुरंशकम् ८
तदूर्ध्वे वाजनं चैकं तद्वत्कर्णो द्विभागतः
निद्रा कार्या तदूर्ध्वस्था पट्टषट्कसमन्विता ९
द्वाविंशत्यंशके तुङ्गे कर्णो द्वादशभिर्भवेत्
वाजनं चैकभागेन निद्रैका वाजनं त्रिभिः १०
पद्मकम्पगलाब्जानि तद्वत्कर्णो द्विभागतः
षोडशांशे तदुत्सेधे नवांशं गलमिष्यते ११
वाजनं चैकभागेन तथा निद्रा त्रिभागतः
पट्टपद्ममथैकांशं पद्ममेकेन कीर्तितम् १२
वेदिकाजालाकार्थं तु नैवं छेद्यादिद्विजोत्तमाः
द्वारार्थं देववेश्मार्थं छेदनीयं यथोचितम् १३
वेदिकानियमो धाम्नि नेष्यते सार्वदेशिके
एवं वेदिस्समाख्याता द्वारं तु श्रूयतां द्विजाः १४
स्तम्भदेशे नवाष्टांशे सप्तांशे त्वैकभागभाक्
द्वारतुङ्गं तदर्धं स्याद्विस्तारो देवसद्मनि १५
नालीगेहं त्रिभागैकमर्धं वा नवपञ्चभाक्
पञ्चत्रिंशद्भवेत्तुङ्गमिदं वैशेषिकं भवेत् १६
विस्तारः प्राग्वदुद्दिष्टस्त्वथवा तत्प्रकीर्त्यते
त्रिवितस्ति विशालं स्याद्दैर्घ्यं सप्तवितस्तिकम् १७
विस्तारायामतस्तस्मात्षड्द्वादशकराग्रकैः

वृद्ध्या त्रिपञ्चमानादिषड्विवतस्त्यन्तकानि हि  १८
पञ्चविंशतिमानानि द्वारतारोदयानि हि
तदाद्यं शयनीयस्य गृहस्य द्वादशैव हि  १९
समावृतखलूरीणां तान्येवोक्तानि पण्डिताः
नगरग्रामदुर्गाणां शेषाण्युक्तानि वेश्मनाम्  २०
विस्तारो द्विगुणोत्सेधष्षण्मात्रमधिकं भवेत्
नवमात्राधिकं वापि सर्वेषां समुदीरितम्  २१
सषण्मात्रं द्वितालं च सत्रिमात्रं द्वितालकम्
द्वितालं क्षुद्रमानं तु सार्धतालं तु योजयेत्  २२
स्वव्यासादि्द्वगुणोत्सेधात्षण्मात्रं वा त्रिमात्रकम्
न्यूनं तु शुभदं वारं विप्रादीनां गृहं मतम्  २३
स्तम्भायामेऽष्टभागे तु षडर्धं द्वारदैर्घ्यकम्
तदर्धे नवभागे तु सार्धाष्टांशात्समुन्नतिः  २४
त्रिव्यासद्विगुणोत्तुङ्गं नेष्टं द्वारं नृणां गृहे
पादोत्तुङ्गवशाद्भूमौ भूमावेवं विधीयताम्  २५
उक्तोत्सेधत्रिपञ्चैकमङ्गुलेनाधिकं तु वा
विपुलेऽपि तथैवं स्यात्षट्सप्ताष्टांशकैस्तु वा  २६
द्वारस्योभयपार्श्वे तु मण्डितस्तम्भयुग्मकम्
भूषणं तु बहिः कार्यं सर्वेषामपि सद्मनाम्  २७
मानं लब्धोदयं यत्स्याद्भक्त्वा मात्रैर्विशेषतः
परिहृत्याङ्गुलिच्छेदमायाद्यं परिकल्पयेत्  २८
अष्टनन्दाग्निभिश्चैव वसुनन्दचतुष्टयैः
गुणत्वरविदिङ्मूर्तिऋृक्षसप्तनवांशकैः  २९
हृतमायं व्ययं चैव यो विस्तारस्तु वारकः
अंशकाश्चावशिष्टास्तु कल्पनीयास्तु देशिकैः  ३०
वास्तुनः पार्श्वयोर्मध्ये स्तम्भं सम्यङ्निधापयेत्

कभित्तिविसृतार्थं तु त्यक्त्वा तत्पार्श्वयोर्द्वयोः ३१
मुख्यद्वारं तु तद्वामे कम्पद्वारं तदन्यके
कम्पद्वारं च मध्ये तु योगार्थं बहुलान्वितम् ३२
कम्पं समान्तरं कुर्याद्यथाशोभमथापि वा
मूलवास्तुत्रिपार्श्वेषु कम्पद्वारं यथोचितम् ३३
कम्पद्वारं समुद्दिश्य भित्त्यन्तस्स्तम्भसंयुतम्
न त्यजेद्यदि तत्स्वामी मरणाय भविष्यति ३४
सपादपादविस्तारस्सार्धो वा योगविस्तरः
स्तम्भव्याससमो वापि तदर्धं बहुलं मतम् ३५
त्रिपादं वोत्तराधस्तात्प्रतीकं तत्स्ववाजनम्
द्वारोदयाय शेषं तु त्रिधा वा पञ्चधा कृते ३६
एकांशं वा द्व्यंशकं स्यादधोभूषणमूर्ध्वतः
शेषेण भूषणं कुर्याच्छुद्धद्वारं तु मध्यमम् ३७
अष्टमङ्गलकस्योर्ध्वे लताद्याः परितो मताः
त्रिचतुःपञ्चषड्भागभागेन स्तम्भवैपुले ३८
कवाटबहुलं प्रोक्तं दण्डार्धं वा घनं भवेत्
अयुग्मफलका ग्राह्या मध्यसन्धिविवर्जिता ३९
तल्पस्य भूषणोर्ध्वे वा बाह्ये वा परिकीर्तिता
मध्यं त्यक्त्वा प्रयोक्तव्या यथाबलसमन्विता ४०
अस्य तल्पघनस्यार्धघनद्विगुणविस्तरा
दण्डास्त्रिपंचसप्तैव नवैकादशसंख्यया ४१
अश्वस्कन्धखुराभा वाश्वत्थपत्रसमा अपि
युग्मे महति तल्पे च दक्षिणस्थे कवाटके ४२
विस्तारे त्वायतौ चैव त्र्यंशपञ्चांशके कृते
उपरिष्टात्त्रयांशं तु त्यक्त्वाधोंऽशं द्विपार्श्वयोः ४३
तेषां मध्ये तु यद्द्वारं मणिद्वारमिहोच्यते

यथाबलं यथाशोभमयःपट्टैर्दृढीकृते ४४
श्रीमुख्यैर्वामदण्डैश्च क्षेपणैस्सन्धिपत्रकैः
अर्धचन्द्रैस्तथा शृङ्गैः पुष्पैर्नानाविधैरपि ४५
योगसम्बन्धकीलैश्च दैवताद्यैरलङ्कतम्
ऊर्ध्वाधश्शिखराश्लिष्टमूलबन्धाग्रबन्धनम् ४६
गुल्फे ललाटसन्धौ च पट्टैर्हेमादिनिर्मितैः
बध्नीयात्सर्वदेशे वा यथाशोभं यथाबलम् ४७
तल्पतीव्रघना तस्य तद्वद्द्विगुणविस्तरा
पद्मपत्रविचित्राङ्गा पट्टाङ्गा स्कन्धपट्टिका ४८
प्रवेशदक्षिणे तल्पे विधातव्या मनोहरा
अर्गलं दक्षिणे भागे वामभागे तु तल्पकम् ४९
कवाटं त्वेकवृक्षोत्थं भेदो बाह्यं तु बाह्यकम्
अन्तरं च विनिर्दिष्टं ज्ञात्वा कर्म समाचरेत् ५०
देवद्विजनरेन्द्राणां कवाटयुगलं मतम्
अन्ययोरेकमुद्दिष्टं महाद्वारे चतुर्युगम् ५१
अनेकशृङ्खलोपेतं बहुकुण्डलभूषितम्
कवाटयुग्मं कर्तव्यं कोकिलार्गलसंयुतम् ५२
प्रस्तरे भित्तिके वापि प्रविष्टो निर्गतोऽथवा
तथा कवाटो वा कार्यो यन्त्रैर्बहुविधैरपि ५३
कूजन् कवाटो नेष्टव्यो विशिष्टोऽपि तथा भवेत्
द्वारेण सिद्धं द्वारं तु रथ्यारूपादिवोदितम् ५४
लिङ्गं प्रासादसिद्धं चेन्नेष्टं द्वारं शिवद्विजाः
भित्तिं कृत्वा तु पंचाशदन्तस्त्रिंशद्बहिर्द्वयम् ५५
सप्तांशैर्वा चतुस्त्र्यंशैर्नीत्वान्तर्योग उच्यते
अथवा योगविस्तारस्त्वङ्गुलैस्त्रिभिरेव वा ५६
अङ्गुलाङ्गुलिवृद्ध्या तु द्वात्रिंशत्करजान्तरम्

बहुलं प्राग्वदुद्दिष्टं पादं वा तदुदीरितम् ५७
पञ्चाद्येकादशान्तं तु द्वारतुङ्गं विधाय च
एकांशहीनं तन्मानं द्वारं शुद्धमिहोदितम् ५८
तत्र द्व्याधिकं ग्राह्यं तन्मानं देवतोचितम्
एवं द्वारं समाख्यातं तोरणं श्रूयतां द्विजाः ५९
त्रिदण्डो वा चतुःपञ्चदण्डस्तोरणविस्तरः
तत्पादः पादपादोनद्व्यंशस्त्र्यंशोऽथवा मतः ६०
पादार्धविस्तरो वापि तोरणस्तम्भविस्तरः
उत्तरान्तसमुत्सेधे नवाष्टदशभागिके ६१
त्रिभागो मौलिकोत्सेधो वीरकाण्डादुपर्यधः
उत्तरं च त्रिदण्डं स्यात्तदर्धं वाजनं भवेत् ६२
उत्तरेण समानं तु पट्टिका त्विह कथ्यते
तदर्धं वाजनं चोर्ध्वे तत्सर्वं स्यात्सनातनम् ६३
तोरणं त्रिविधं पत्रतोरणं मकरान्वितम्
चित्रतोरणमित्येषां मण्डनं चाधुनोच्यते ६४
बालचन्द्रनिभैःपत्रैश्चित्रितं पत्रतोरणम्
द्वयोर्मकरयोर्वक्त्रैस्सक्तं मध्यमपूरितम् ६५
नानाविधलतायुक्तमेतन्मकरतोरणम्
तदेव पार्श्वयोर्मध्यं पूरितं च द्वयोरपि ६६
नक्रतुण्डप्रग्रहैश्च तयोरास्यविनिर्गतैः
विद्याधरैश्च भूतैश्च सिंहेभव्यालहंसकैः ६७
वाले स्रग्दण्डकैरन्यैर्मणिबन्धैर्विचित्रकम्
चित्रतोरणमेतत्स्याद्देवानां भूभृतां वरम् ६८
गुहासु प्रतिमाद्यास्स्युः पादास्सर्वाङ्गशोभिताः
चतुरश्राष्टवृत्ताभाः कुम्भमण्ड्यादिसंयुताः ६९
पोतिकासहिता वा स्युर्वियुक्ता वा प्रकीर्तिताः

उत्सन्ध्यादवलम्बं तु कुर्यान्मकरपृष्ठकम्  ७०
एकदराडं समारभ्य सार्धदराडविवर्धनात्
चतुर्दराडान्तमानं तु गुहावेशनमिष्यते  ७१
गुहासु देवतास्स्थाप्याः प्रासादस्य समन्ततः
दक्षिणे दक्षिणामूर्तिं लिङ्गोत्थं तस्य पश्चिमे  ७२
ब्रह्माणमुत्तरे देशे स्थापयेद्देशिकोत्तमः
अर्धमराडपदक्षांशे विघ्नेशं नृत्तरूपिणम्  ७३
दुर्गाञ्चोत्तरभागे स्याद्रुद्रं वा सार्वदेशिके
नानाकारयुतं वापि सर्वत्रैकं तु वा न्यसेत्  ७४
प्रतिमालक्षणोक्तेन मार्गेणैव समाचरेत्
तले तले तु देवांश्च गले चाप्येवमाचरेत्  ७५
क्वचिदस्मिन्विशेषोऽस्ति सुब्रह्मरायं तु पूवतः
इन्द्रवाहनयुक्तं वा रुद्ररूपं तु वा न्यसेत्  ७६
द्वारस्योभयपार्श्वे तु द्वारपालौ तु विन्यसेत्
गुहाद्वयं प्रकर्तव्यं द्वारस्योभयपार्श्वतः  ७७
उत्तरान्तं गुहोच्चं स्यान्मध्यमं वा विधीयते
विहाय च गुहाबाह्ये द्वारपान् विनिवेशयेत्  ७८
देवता वाथ संस्थाप्या कल्पिते बाह्यभित्तिके
दक्षिणे नन्दिसंज्ञं तु महाकालं तु वामतः  ७९
व्यत्यासो वा तयोः पूर्वद्वारे वा पश्चिमानने
दक्षिणाननयुक्ते च उत्तरास्य एवमेव वा  ८०
चतुर्द्वारसमोपेतद्वारपानष्ट विन्यसेत्
यस्यां दिशि भवेद्द्वारं तां प्राचीं परिकल्पयेत्  ८१
अथवोदयदेशं तु रवेः प्राचीं प्रकल्पयेत्
सर्वत्र चोत्तरे नालस्सोमस्याभिमुखो भवेत्  ८२
ऐशान्यां वा प्रणालं स्यात्पूर्वस्यां वा प्रकीर्तितम्

एवं प्रणालमाख्यातं पद्ममध्ये विशेषतः ८३
गले वा द्वारदेशे वा द्वारतोरणमिष्यते
द्वारतुल्यो नतिर्व्यासान्तरस्स्तम्भद्वयोरपि ८४
उत्तरोत्तरयुक्ताष्टमङ्गलैस्तु नव क्रमात्
फलकं पञ्चवक्त्रं तु तदूर्ध्वे शूलसंयुतम् ८५
चित्रकेतुपताकाश्रीभेरीकुम्भाश्च दीपिका
नन्द्यावर्तं च देवानां सर्वेषामष्टमङ्गलम् ८६
भेरी वृषो गजश्चैव चामरौ केसरी झषः
पताका च प्रदीपश्च देवानामष्टमङ्गलम् ८७
दर्पणं पूर्णकुम्भं च वृषभो युग्मचामरम्
श्रीवत्सं स्वस्तिकं शङ्खं दीपश्चैवाष्टमङ्गलम् ८८
पताकास्स्वस्तिकाश्शङ्खाः पूर्णकुम्भं सपद्मकम्
छत्रलक्ष्मीप्रदीपश्च द्विजानामष्टमङ्गलम् ८९
पताका पूर्णकुम्भं च शङ्खं चक्रं च श्र्यङ्कुशौ
छत्रं चैव प्रदीपश्च भूभुजामष्टमङ्गलम् ९०
पूर्णकुम्भं प्रदीपश्च पादुकं छत्रभेरिके
श्रीनन्दिकौ महाशंखो वैश्यानामष्टमङ्गलम् ९१
दर्पणं पूर्णकुम्भं च हलं शफरयुग्मकम्
श्रीदीपछत्रभेर्यश्च शूद्राणामष्टमङ्गलम् ९२
देवद्विजनरेन्द्राणां तोरणं मकराख्यकम्
तोरणं चित्रसंज्ञं तु वैश्यानां प्रविधीयते ९३
पद्माख्यतोरणं शूद्रे सर्वं सर्वत्र वा मतम्
जालकं फालकं शैलमैष्टचं कुडचं च इष्यते ९४
जालकैर्बहुभिर्युक्तं जालकं कुडचमिष्यते
स्तम्भानामन्तरे चेत्स्तम्भान् संस्थाप्य चान्तरे ९५
फलकैस्सारदारूत्थैश्छादितं फलकामयम्

ऊर्ध्वाधः पद्मकम्पैश्च भित्तिबन्धनमेव वा ९६
यथार्हविपुलोपेतमुत्तरान्तसमुच्छ्रितम्
निष्पादं वा सपादं वा कुड्यं शैलमथैष्टकम् ९७
अथवा मृण्मयं वापि कुड्यमिष्टं द्विजोत्तमाः
कुड्ये स्तम्भलता कार्या वस्त्वाधारस्य चोपरि ९८
वेदिकोर्ध्वाधरे कूटकोष्ठादीनां त्रिधा स्मृता
चित्रकुम्भलता पूर्वा स्तम्भकुम्भलता परा ९९
कुम्भकुम्भलता चान्या तासां लक्षणमुच्यते
कुम्भकुम्भलतामूले दण्डद्विगुणविस्तरः १००
सपादा वाथ सार्धा वा पादोनद्विगुणा तु वा
पादोनत्रिगुणा वापि तदर्धेनोच्छ्रयो भवेत् १०१
पादपद्मावसानोर्ध्वस्थानतिर्यग्लताम्बुजम्
नन्द्यावर्तावलम्बस्स्यात्कुम्भतः पादनिर्गतिः १०२
आस्यभागत्रिभागैका तदा स्यात्पत्रनिर्गतिः
पद्मादीनां च कम्पानां मानं शोभाबलानुगम् १०३
स्तम्भार्धं कलशाद्बाह्ये लतावर्तनमिष्यते
कुम्भोर्ध्वे स्तम्भताराधं नक्रपत्रावली क्रिया १०४
पादस्य पार्श्वयोःकार्या पादसर्वाङ्गमण्डिता
यथा शोभान्तरव्यासा मुक्ता शङ्खान्तरे स्थिता १०५
स्तम्भशाला विशाला स्यात्स्तम्भविस्तार एव च
तस्यास्त्वलङ्कृतिः प्राप्तवल्लीमण्डनमण्डितम् १०६
कुड्याद्विनिर्गता रूपपद्ममालाग्रभागिनी
एषां निष्क्रान्तिवेशौ तु यथाशोभं समाचरेत् १०७
अग्रपत्रावधेर्मध्ये मुष्टिबन्धं सनालकम्
पादपादविनिष्क्रान्तपद्मपट्टविचित्रितम् १०८
मध्ये द्विपार्श्वयोर्ग्राह्यं तत्समास्योदयावधि

मुष्टिबन्धोपरि क्षिप्तं व्यालान्तं कलशावधि १०९
व्यालमृत्पट्टिकापादपादोच्चा पत्रचित्रिता
पद्महृत्पद्मसंयुक्तं तदूर्ध्वे नरबन्धनम् ११०
तत्सर्वं फलकोत्सन्धिपर्यन्तं परिपठ्यते
वीरकाण्डावधि क्षेप्या तदूर्ध्वे नक्रपट्टिका १११
लसन्मकरकाण्डस्स्यान्निर्गच्छद्व्यालपट्टिका
ऊर्ध्वे मकरतुण्डस्य पूरितं मौलिबन्धवत् ११२
तस्यावतंसकोर्ध्वं तु वाजनाय समुल्लिखेत्
ध्मातशंखं तु धूतं वा कारयेदुत्तरादधः ११३
यथाशोभनसर्वाङ्गा मता कुम्भलतेदृशी
चित्रकुम्भलतैवं स्यात्स्तम्भकुम्भलतान्यथा ११४
स्तम्भद्विगुणविस्तारं स्तम्भोर्ध्वे पद्मविष्टरम्
पट्टिका पद्मधृग्वेत्रधृग्पद्मोपरि पट्टिका ११५
त्रिपञ्चसप्तशाखाभिर्युक्तार्याम्बुरुहासना
ऊर्ध्वस्थपूर्णकुम्भाङ्का कुम्भकुम्भलता मता ११६
अथ पद्मासनोर्ध्वस्थस्तम्भक्षेपणपट्टिका
खड्गादिफलकान्ताङ्गा तदूर्ध्वे पूर्णकुम्भवत् ११७
कुम्भस्य तिर्यक्पत्रा च पत्रालङ्कारसंयुता
स्तम्भकुम्भलतैदृक् स्यादन्यदप्येवमूह्यताम् ११८
एवं कुम्भलता प्रोक्ता वृत्तस्फटिकमुच्यते
षडष्टदशभिर्भानुमनुवैकारमात्रकैः ११९
व्यासतारार्धनिष्क्रान्ता द्वित्र्यंशं वा द्विभागिकम्
वृत्ताकारं समं चेत्तु तोरणाङ्घ्रिवदायतम् १२०
सकन्धरं तदूर्ध्वे तु शुकनास्या विभूषितम्
वृत्तस्फटिकमत्रोक्तं द्युस्थसद्मविभूषितम् १२१
ऊर्ध्वद्मपादसप्तांशे वेदिका च गलद्वयम्

त्रिभागैश्शिखरञ्चैकभागस्स्थूप्युदयो भवेत् १२२
कूटकोष्ठकनीडानां प्रमाणमिह कीर्तितम्
कूटकोष्ठादिसर्वाङ्गं मानसूत्राद्बहिर्नयेत् १२३
अन्तः प्रमाणसूत्रात्तु वेशनं सर्वदोषदम्
चतुरश्रं तु वस्वश्रं षोडशाश्रं तु वर्तुलम् १२४
मस्तकस्थूपिकोपेतं कर्णकूटमिदं मतम्
मध्ये नासासमायुक्तमर्धकोटीसमन्वितम् १२५
मुखपट्टिकयोपेतं शक्तिद्वयसमन्वितम्
अनेकस्थूपिकोपेतं कोष्ठकं मध्यशो भवेत् १२६
हंसतुण्डनिभं पृष्ठे शालाकारं मुखे मुखे
पञ्जरं विहितं कूटकोष्ठयोरन्तरं द्विजाः १२७
पार्श्ववक्त्रं तदेवेष्टं हस्तितुण्डं समण्डलम्
एष जातिक्रमः प्रोक्तः कर्णकोष्ठसमन्वितम् १२८
मध्ये कूटं तयोर्मध्ये क्षुद्रकोष्ठादिशोभितम्
छन्दमेतत्समुद्दिष्टं कूटं वा कोष्ठकं तु वा १२९
अन्तरप्रस्तरोपेतं निम्नं वोन्नतमेव वा
विकल्पमिति निर्दिष्टमाभासं तद्विमिश्रितम् १३०
जात्यादिभेदकैर्युक्तं विमानं सम्पदां पदम्
विपरीते विनाशाय भवेदेव विनिश्चयः १३१
नासिका त्वष्टधा ज्ञेया तस्यादौ सिंहसंज्ञकम्
सार्धपञ्जरमन्यत्स्यात्तृतीयं पञ्जरं मतम् १३२
निर्यूहपञ्जरं पश्चात्पञ्चमं लम्बनासिकम्
सिंहश्रोत्रं तु षष्ठं स्यात्खण्डनिर्यूहकं ततः १३३
झषपञ्जरमन्यत्स्यात्तासां लक्षणमुच्यते
श्लिष्टप्रासादनीव्राङ्गविपुलं समनिर्गमम् १३४
षड्वर्गसहितं शक्तिध्वजयुङ्मुखपट्टिकम्

वेदिकाजालकस्तम्भराजितं सिंहपञ्जरम्  १३५
त्रिदण्डादिचतुर्दण्डपर्यन्तं विपुलान्वितम्
यथार्हायामसंयुक्तं सूचिपादद्वयं द्विजाः  १३६
सर्वेषां पञ्जराणां तु मध्यमे संप्रयोजयेत्
धाम्नि प्रासादमाश्लिष्टं सतीव्रं चार्धनिर्गतम्  १३७
अधिष्ठानादिपञ्चाङ्गशक्तिध्वजसमन्वितम्
मुखपट्टिकयोपेतं वेदिकाजालकान्वितम्  १३८
कर्णपादयुतं सार्धपञ्जरं तु विधीयते
प्राग्वद्विपुलसंयुक्तं पादनिर्गमनान्वितम्  १३९
त्रिभागनिर्गतं वापि वृत्तस्फटिकसन्निभम्
पञ्जरं स्यादिदं शेषं प्राग्वदत्र समीरितम्  १४०
स्वानुरूपशिखास्वाग्रं श्लिष्टनीव्राङ्गकर्णकम्
कपोताद्यङ्गसंयुक्तमेतन्निर्यूहपञ्जरम्  १४१
संश्लिष्टनीव्रकर्णाङ्घ्रिकृतनागतलं शिरः
निर्यूहरहितं युक्तं सर्वाङ्गं लम्बनासिकम्  १४२
तदेव सिंहश्रोत्राभशिखं यद्वदनीव्रकम्
संश्रितं कर्णपादेन सिंहश्रोत्रं तदुच्यते  १४३
विस्तारे पञ्चमांशे तु द्व्यंशनिर्गमनान्वितम्
नीव्राधस्तात्कपोताद्यैरशैर्मण्डितरूपकम्  १४४
नाम्ना तु खण्डनिर्यूहं ज्ञात्वा सम्यक् प्रयोजयेत्
दण्डदण्डान्तनिष्क्रान्तनीव्राधस्ताद्युपर्यधः  १४५
अङ्गैर्युक्तकपोताद्यैः कन्धरं तोरणान्वितम्
झषपञ्जरमेतत्स्यादष्टमं नामतो द्विजाः  १४६
अधिष्ठानान्तरान्तस्थतुङ्गे पञ्चविभागके
साङ्घ्रिद्व्यंशेन पादस्स्यादर्धेन प्रस्तरोदयः  १४७
तत्समं गलमित्युक्तं मध्ये कोटिस्तु शेषतः

ऊर्ध्वे तु भागमारोप्य शिरस्तेन समाचरेत् १४८
स्तम्भाधस्तादधिष्ठानं कुर्यात्स्तम्भार्धमानतः
तदष्टांशाधिकं वाथ शेषं स्यादुपपीठकम् १४९
सर्वेषां पञ्जराणां तु मानमेवमुदाहृतम्
पादुकोत्तरयोर्मध्ये नवांशेनोपपीठकम् १५०
मसूरकं द्विभागं स्याद्द्विगुणं स्तम्भदैर्घ्यकम्
सार्धांशं प्रस्तरोत्सेधं मध्यांशं वेदिकोदयम् १५१
उत्तरादिकपोतान्तं नालोदयमितीरितम्
पञ्जाराकृतिसंयुक्तं कपोतात्तु विनिर्गतम् १५२
यथाशोभं यथायुक्ति तथा शक्तिध्वजान्वितम्
कपोतपञ्जरं ह्येतत्प्रासादे सार्वदेशिके १५३
मध्ये द्वित्रिचतुर्भित्तिविस्तारं समनिर्गमम्
शालाकारं सभाकारं प्रासादशिखरावृति १५४
महावारावृतं वापि हारस्थशिखरक्रियम्
ब्रह्मद्वारमिति प्रोक्तं विमानानां सनातनम् १५५
एकभित्तिविशालेन तोरणं स्यात्तु भारकाः
सपताका बहिर्ग्राह्यास्तद्विस्तारलुपान्विताः १५६
महावारक्रियायुक्ता शालोद्युक्तकपोतयुक्
गर्भद्वित्रिकरव्यासा शुकनासा मुखे मुखे १५७
न कर्तव्या विमानेषु नासिकोर्ध्वे न नासिका
ऋजुजालकमाद्यं स्याद्गवाक्षं कुञ्जराक्षकम् १५८
गोमूत्रं गणिकापत्रनन्द्यावर्तं च सप्तधा
ऋजुकम्पयुतं यत्तु ऋजुजालकमुच्यते १५९
कर्णगत्या यदा श्रोत्रं गवाक्षमिति कीर्तितम्
तदेव चतुरश्रोत्थं कुञ्जराक्षमिति स्मृतम् १६०
विदिग्वक्त्रगता दृष्टिर्गोमूत्रमिति कीर्तितम्

मूलमप्यग्रगुलिकमृदुभित्त्यन्तरार्चितम्  १६१
नानाछिद्रसमायुक्तं गणिकाजालकं भवेत्
पत्रैर्विचित्रितं रन्ध्रं पत्रजालकमिष्यते  १६२
पञ्चसूत्रगतं रन्ध्रं प्रादक्षिण्यक्रमेण तु
नन्द्यावर्तमिति प्रोक्तं वेद्यध्र्वे जालकं नयेत्  १६३
स्वायंभुवादिलिङ्गे तु यथाकामं प्रयोजयेत्
त्यक्त्वा भित्याङ्घ्रिमध्यं तु सप्तदण्डान्तविस्तृतम्  १६४
एकदण्डं समारभ्य व्यासद्विगुणसंयुतम्
अर्धपादेन कम्पोच्चमष्टांशाधिकमेव वा  १६५
त्यक्त्वा मध्याङ्घ्रिरन्ध्रं तु युग्मायुग्माङ्घ्रिकम्पयुक्
भित्तिमध्याद्बहिस्तस्यास्स्तम्भयोगकवाटयुक्  १६६
कवाटयुगलं वैकं घटनोद्घाटनक्षमम्
पादवर्गे भवेद्ग्रीवावर्गे वातायनस्थितिः  १६७
तले तले तु सोपानमारोहार्थं प्रकल्पयेत्
मूलं त्रिविधमुद्दिष्टं चतुरं वृत्तमायतम्  १६८
चतुर्विधं प्रकर्तव्यं त्रिखण्डं शङ्खमण्डलम्
वल्लीमण्डलमित्यूर्ध्वे गोमूत्रेण समन्वितम्  १६९
सत्रिखण्डं त्रिखण्डं स्याद्द्विखण्डं चार्धमूलकम्
मूलादग्राग्रमाक्षीणं शंखसोपानमिष्यते  १७०
स्याद्वल्लीमण्डलं वृक्षारोहिवल्लीसमक्रियम्
अश्वपादस्य विस्तारं द्विगुणं च चतुर्गुणम्  १७१
तस्मादङ्गुलवृद्ध्या तु द्वात्रिंशतिसमावधि
शयितफलकव्यासषडङ्गुलमुदाहृतम्  १७२
द्विगुणं तु समारभ्य चैकैकाङ्गुलवर्धनात्
दैर्घ्यं तिथिगुणान्तं स्याद्यथाकामं तु वा भवेत्  १७३
शयितव्यासपादार्धं त्रिपादसदृशोदयैः

हस्तिसोपानकं लाजसोपानं वृद्धिसंज्ञकम्  १७४
समखराडं समं प्रोक्तं खराडशस्स्यात्समागमः
हस्तव्यासं तु दराडादित्रिदराडान्तं प्रयोजयेत्  १७५
तत्पादं तद्धनं प्रोक्तं यथाबलमथापि वा
अयुग्ममेव सोपानं प्रादक्षिरायक्रमान्नयेत्  १७६
सोपानं पार्श्वयोरग्रे तन्मूलस्य प्रयोजयेत्
तन्मूलं स्यादधिष्ठानं पादप्रस्तारवर्गयुक्  १७७
अश्वपादोपरि स्थित्वा रोहणं दक्षिणाङ्घ्रिणा
ईदृग्लक्षणसंयुक्तं सोपानं सम्पदां पदम्  १७८
उत्तरे वाथ पूर्वे वा प्रणालं कल्पयेद्बुधः
जन्मादिपञ्चवर्गे तु बाह्ये नालं प्रयोजयेत्  १७९
पट्टिकान्ततले नालमथ छिद्रं तु वा भवेत्
पञ्चाङ्गुलं समारभ्य चैकैकाङ्गुलवर्धनात्  १८०
षट्त्रिंशदङ्गुलान्तं तु नालायामं प्रकल्पयेत्
अङ्गुलत्रयमारभ्य चार्धांगुलविवर्धनात्  १८१
चतुर्विंशतिमात्रान्तं नालान्नालं प्रकल्पयेत्
समं त्रिपादमध्यं वा घनच्छिद्रं तु मध्यमे  १८२
द्वित्रिभागे तु भागं वा वेदभूतांशके द्वयम्
षट्सप्तांशत्रयं वाथ वेदांशं वा प्रकल्पयेत्  १८३
गाम्भीर्यमपि तद्वत्स्यादग्रं किञ्चिन्नतं भवेत्
मूलात्पञ्चत्रिभागं वा द्विभागं वा प्रकल्पयेत्  १८४
अथवा बन्धभागे तु भागेनाग्रं प्रकल्पयेत्
पतितं सिंहवक्त्राद्यैः केवलं वा प्रकल्पयेत्  १८५
भागोच्चं द्वित्रिभागोच्चभागं सर्वाङ्गसंयुतम्
पोतिकारहितं वीरकाराडोपरि समन्वितम्  १८६
उत्तरं वाजनं साब्जक्षेपणं निम्नवाजनम्

तदूर्ध्वे झषकाराडं स्यान्नानाचित्रविचित्रितम् १८७
तोरणाकृतिसंयुक्तं मृणालान्वितकन्धरम्
सर्वालङ्कारसंयुक्तं स्तम्भतोरणमीरितम् १८८
पादान्तरे वा पादे वा कर्णप्रासादमध्यमे
शालामध्यान्तराले तु कुर्यात्सर्वेषु धामसु १८९
मूलपादोच्चमानं तु कृत्वाष्टांशं यथाक्रमम्
अधिष्ठानादिषड्वर्गसहितं मूलधामवत्
कुर्यात्क्षुद्रविमानं तु स्तम्भानामन्तरालके
सकलं निष्कलं मिश्रं यद्यद्रूपं शिवस्य तु १९१
अन्येषां देवतादीनां रूपमार्षानुरूपकम्
मद्भक्तानां स्वरूपं यन्मानुषं वा गजादिकम् १९२
पिपीलिकावसानान्तास्तथा तेषां तु वा भवेत्
सर्वं धामनि कर्तव्यं धाम्नः षड्वर्गमेव वा १९३
यानं वा शयनं वापि गोपुराकृतिमेव वा
पीठाकृतिं वा मेर्वादिपर्वताकृतिमेव वा १९४
नन्द्याद्याकृति वा धाम्नि विधेयं चेष्टदेशके
मराडपे गोपुरे वप्रे परिवारालयादिषु १९५
एवमेवं विधेयं स्यात्तथा भुवि विशिष्यते
पञ्जरादिषु पर्यायवचनं त्विह कथ्यते १९६
प्रमाणभवनं कर्ण प्रासादस्याष्टकं तथा
सभेति कूटनाम स्याच्छाया वलभिरेव च १९७
ब्रह्मद्वारं ततो मध्ये मराडपं कोष्ठके मतम्
ऋजुवक्त्रं द्विजावासं क्रीडं स्यात्सिंहवक्त्रकम् १९८
पञ्जरस्याभिधानं स्यात् हस्तिपृष्ठमथोच्यते
गजपृष्ठं च तत्तुराडं गजवक्त्रं गजापरम् १९९
हस्तिपृष्ठाभिधानं स्याद्द्वारि कुडयं च कुट्टिमम्

भित्तेराख्येयमाख्यातं गृहपिण्डिरथोच्यते २००
मध्ये वासावृतं वासा पिण्डिरन्धारिकेति च
संज्ञैवं गृहपिण्डेः स्यादन्धारं गृहमाद्यकम् २०१
परिमण्डनसालिन्दावलिन्दस्याभिधानकम्
मसूरकमधिष्ठानं वस्त्वाधारं धरातलम् २०२
तलं कुट्टिममाद्यङ्गमधिष्ठानस्य कीर्तितम्
स्थाणुः स्थूणश्च पादश्च जङ्घा च चरणाङ्घ्रिकम् २०३
स्तम्भस्तु तलिपं कम्पः पादानामभिधानकम्
प्रस्तरं चैव गोपानं कपोतं मञ्चमेव च २०४
नीव्रमित्येवमाख्यातं प्रस्तरस्य द्विजोत्तमाः
कन्धरं गलसंज्ञं च कण्ठं ग्रीवा शिरोधरम् २०५
एवं कण्ठस्य मानं स्याच्छिखरं पुनरुच्यते
शिखरं शिरमूर्धा च शिखा मौलिश्च मस्तकम् २०६
शीर्षं कमिति विज्ञेयं शिरोवर्गस्य पण्डिताः
स्थूपिका च घटः कीलो चुलुकः स्थूपिरित्यपि २०७
शिखा स्थूपिरिति ख्याता चूलिका च द्विजोत्तमाः
विमानं भवनं हर्म्यं सौधं धाम निकेतनम् २०८
प्रासादं सदनं सद्म गेहमावसकं गृहम्
आलयं निलयं वासोऽप्यास्पदं वास्तु वास्तुकम् २०९
क्षेत्रमायतनं वेश्म मन्दिरं धिष्ण्यकं पदम्
लयं क्षयमगारं च तथोपवसितं पुनः २१०
स्थानमित्येवमुक्तानि पर्यायवचनानि हि
धाम्नस्सम्यक् समाख्याता एवमन्यत्समूह्यताम् २११

इति कामिकाख्ये महातन्त्रे प्रासादभूषणविधिः पञ्चपञ्चाशत्तमः पटलः

## कराठलक्षणविधिपटलः

कराठस्य लक्षणं वक्ष्ये समासाच्छृणुत द्विजाः
तन्मूले वेदिका कार्या कराठोत्सेधात्त्रिभागतः १
गर्भभित्तित्रिभागैकमङ्घ्रेर्वेद्यङ्घ्रिवेशनम्
चतुष्पञ्चषडंशे तु समावेशाधिवेदिका २
ग्रीवावेशस्ततस्तावत्सप्ताष्टांशे तथैव च
समं वाध्यर्धकं वापि द्विगुणं त्रिगुणं तु वा ३
वेदिकोत्सेधमानेन ग्रीवोच्चं परिकल्पयेत्
उत्तरं वाजनं चैव मुष्टिबन्धं मृणालिकम् ४
दराडका वलयं चैव गलभूषणमिष्यते
दराडकान्तं गलं प्रोक्तं तदूर्ध्वे शिखरं भवेत् ५
प्रस्तरोर्ध्वे वृषं स्थाप्य शिवधाम्नि विशेषतः
ऊर्ध्वेन स्थापितास्ते च धाम्नोऽधस्तात्समन्ततः ६
अन्तर्मराडलदेशे तु स्थापनीयास्सपीठिकाः
अन्येषामपि देवानां धाम्नि तद्वाहनान् न्यसेत् ७
देवीनां च तथा प्रोक्तं गलदेवांस्तु विन्यसेत्
एकपादयुतं ब्रह्मविष्णुसंयुक्तमेव वा ८
ईदृग्रूपसमायुक्तं महेशं वापि विन्यसेत्
पूर्वोक्तविधिना वापि पादवर्गेऽथवा नयेत् ९
ग्रीवायां तु चतुर्दिक्षु नासि पादांश्च विन्यसेत्
तत्रैव कारयेद्वृत्तं स्फुटितं च समन्ततः १०
एवं कराठस्समाख्यातस्तदूर्ध्वे शिखरं भवेत् ११

इति कामिकाख्ये महातन्त्रे कराठलक्षणविधिः षट्पञ्चाशत्तमः पटलः

## शिखरलक्षणविधिः

अथ वक्ष्ये विशेषेण शिखरस्य तु लक्षणम्
शिखरोत्सेधमानांशभागमानवशेन वा १
दण्डिकावधि तारेण पञ्चांशं द्व्यंशकं तु वा
सप्तनन्दशिवांशेषु त्रयोदशतिथौ तथा २
सप्तदशांशके बन्धवेदपञ्चषडंशकम्
सप्ताष्टांशं तु ताराधमित्यष्टौ शिखरोदयाः ३
पाञ्चालं चापि वैदेहं मागधं चापि कौरवम्
कोसलं शौरसेनं च गान्धारं पत्रिकं तथा ४
यथाक्रमेण नामानि ज्ञातव्यानि विचक्षणैः
जघनादूर्ध्वमेवैते भागास्सर्वे समीरिताः ५
सर्वे तु तैतिलानां स्युरर्धाधस्तात्तु मानतः
एकादशात्सप्तदशभागादेकांशवधनात् ६
अवन्तिकाप्रभृत्यूर्ध्वमर्धाविष्टलुपोदयः
व्यामिश्रश्च कलिङ्गश्च तथा कौशिकमेव च ७
वराटं द्रामिडं चैव बर्बरं कोल्लकं पुनः
तथा शौण्डिकमित्येवं व्यामिश्रादिलुपोदयः ८
देवानां प्रथिता ह्येते तापसाश्रमिणामपि
चतुरश्रं च वृत्तं च षडश्राष्टाश्रमेव च ९
द्वादशं च द्विरष्टाश्रं पद्मकुड्मलसन्निभम्
तथामलकपत्राभं दीर्घवृत्तं च कोमलम् १०
अष्टाद्यष्टाष्टधाराणि हर्म्यादीनां शिरांसि च
षडाद्यषष्टिकर्णान्तास्सम्मतं शिखराकृतेः ११
पद्माद्येकादशान्ताश्च चतुराद्या दशान्तकाः
चतुर्विधा लुपासंख्या देवे देव्या निकेतने १२
पूर्वोक्तद्व्यन्तरोच्चं तु व्यामिश्रं नाम पुष्करम्
ऊर्ध्वस्थान्यप्यधस्थानि पुष्कराण्यर्धमानतः १३

अर्धमारभ्य संवर्ध्य पश्चादुच्चार्धभाजि हि
आरोहाण्यवरोहाणि गुह्यमेतदुदाहृतम्  १४
दण्डकावधि तारार्धं चतुरश्रीकृतं समम्
कोष्णीषासितसीमाख्यं सूत्रं युक्तं घनं नयेत्  १५
दण्डकोत्तरबाहुल्यं सूत्रवेदासनानधः
आसने चतुरंशादि न्यसेद्बिन्दुदशान्तकान्  १६
कोष्णीषसन्धेस्तद्बिन्दुसीमन्तोच्चं समाहरेत्
अवाक्वाथोच्चमानानि कं मूलादासनं न्यसेत्  १७
तान्येव दण्डकादीनां पर्यन्तानि भवन्ति हि
कोष्णीषसङ्घात्पर्यन्तबिन्द्वन्तं तल्लुपायनम्  १८
तत्तत्पर्यन्तविस्तारं ससूत्रं विन्यसेत्पुनः
विन्यसेदासने वापि तन्मानं स्याल्लुपावधि  १९
एतन्मध्यलुपासीम्ना वर्धते वर्णसंख्यया
एवमावर्त्य तत्पश्चादारोहे वावरुह्य च  २०
तत्तत्कोष्टेषु संजातं तत्तन्मल्लयुतं भवेत्
समध्यं वा विमध्यं वा लुपान्यासो द्विधा मतः  २१
मध्यं च मध्यकर्णं च व्याकर्णमनुकोटिकम्
कोटिरित्येवमुच्येत पञ्चवर्णलुपाः क्रमात्  २२
तत्तत्सूत्रादधः पृष्ठवंशनिद्राणि सूत्रयेत्
शयितस्थितिसूत्रान्तं कीलं तत्कूटमूर्धनि  २३
निधायार्धेन्दुवत्सर्वाश्चूलिका विलिखेत्समाः
लुपाविलुपमध्यान्तर्गता सा चूलिकाकृतिः  २४
एवं स्यादृजुकायं तु चान्यदप्येवमूह्यताम्
बालकूटस्य विस्तारस्थितिसूत्रस्तनान्तरः  २५
लुपातारस्तु दण्डो वा सपादस्सार्ध एव वा
यथाभिमतमानो वा विस्ताराद्बहुलादपि  २६

विस्तारस्त्रिचतुःपञ्चभागैकांशं तु तद्घनम्
जानुव्यासस्तूत्तरार्धचूलिका वार्ध एव वा  २७
दण्डिकाविपुलं तावत्त्रिपादार्धं तु तद्घनम्
वलयं जानु नीव्रं च दण्डिकाविपुलार्धतः  २८
मल्लमध्यादथालीनतालमानं च यद्घनम्
पर्यन्ताज्जानुकान्तं च चूलिकाभाग एव वा  २९
शयनात्तावदेव स्यान्नीव्रालम्बनसूत्रकम्
कुठारिका ललाटं च जघनं चैव सम्मतम्  ३०
पादविष्कम्भकण्ठे वा विष्कम्भद्विगुणे तथा
कूटव्यासो लुपामध्यं द्विकर्णो द्विगुणो यथा  ३१
तदर्धं नालिकालम्बमूर्ध्वे मल्लाग्रसङ्गतिः
छिद्रं तन्नीव्रमात्रं वा मल्लानां तु प्रवेशनम्  ३२
जानुकान्तं लुपामध्ये ऊर्वाधः पृष्ठवंशकम्
समं स्यान्नीव्रताराभ्यश्चून्यंशो वा लुपांशकम्  ३३
लुपा वा सुघनं वापि वलयो वंशविस्तरः
तदर्धवेशनान्नीव्रं वलयस्य विधीयते  ३४
लुपोर्ध्वे च फलन्यासे पादबन्धसमार्धतः
आलिप्य च धनुर्वंशं निक्षिप्य च तदूर्ध्वतः  ३५
छादयेल्लोहलोष्टैश्च बन्धयेदष्टबन्धनैः
लुपामध्यादथ छिद्रं वलयस्य विधीयते  ३६
क्रियायाः पञ्चरेखास्तु कल्याष्षोडशसंख्यया
कुक्षिव्यासाष्टभागैकं मानमात्रमिति स्मृतम्  ३७
तेन मात्रेण सप्तार्धान्यर्धभागविवर्धनात्
आपञ्चदशसंख्याताः परिलेख्यास्तु षोडश  ३८
लुपान्तोर्ध्वान्तबिन्द्वादिमथो विन्यस्य तद्विधम्
तद्बिन्द्वादि विलेख्याथ रूपलेखाविचक्षणैः  ३९

प्रासादानामिमाः प्रोक्ता गृहादीनां तो षोडश
लुपागमाद्यदि्द्वगुणं यन्मानं तेन बुद्धिमान् ४०
कोष्णीषासनसीमाभ्यामधश्शफरमालिखेत्
तस्मादुपरि मल्लस्य लेखयेत्तद्विचक्षणः ४१
मल्लायतादर्धभागे त्रिपञ्चाशीकृते क्रमात्
तत्तदंशावसानं तु तत्तन्मध्ये समालिखेत् ४२
सर्वासां परिलेखानां क्रमोऽयं परिकीर्तितः
पाञ्चालादिलुपानां तु प्रत्येकं प्रोच्यते द्विजाः ४३
ऋजुकाययुता मल्लाद्या रेखासनकाग्रयोः
मध्ये कृता क्रियारेखा परिलेखा तु सा स्मृता ४४
लुपाघनप्रमाणेन घटिकां चतुरश्रिकाम्
वितस्त्यायामिनीमृज्वीं कृतमध्यमसूत्रकाम् ४५
चूलिकान्तर्वर्णलुपातिर्यक्सूत्रस्य मध्यमाम्
विन्यस्य घटिकां पश्चाच्छिन्नां शयनसूत्रवत् ४६
प्रतिवर्णे तु घटिकां तद्वर्णे तां निधापयेत्
क्षिप्तसूत्रस्य शेषांशच्छिन्ने वर्णलुपोदरे ४७
दण्डकोत्तरवलयस्थिरसूत्रसमं खिेत्
उदरायाममध्ये तु लिखिते करकं भवेत् ४८
घटिकाललाटमध्यस्थं करकं च समं यथा
तथा निधानघटिकां लुपोदरवशायताम् ४९
तल्ललाटाकृतिश्छेद्या वलयाद्या लुपोदयाः
इष्टपार्श्वे क्षिपेच्छायां छिद्रे च वलयस्य तु ५०
तत्तद्धटिकया तत्तन्मध्यसंहितमध्यया
तल्ललाटगतच्छाया तासां तासां तु वा भवेत् ५१
दण्डकावलयछिद्रस्तनजानूत्तरादिषु
घटिकामध्यमायामछिद्राणि वलयस्य तु ५२

शिरोमध्येऽर्धमध्ये च न्यसेन्मुण्डं तुलोपरि
सुवर्णा मध्यबन्धाश्च खर्जूरदलसन्निभाः ५३
सवलर्क्षा विधातव्या लुपा शिखरकान्तरे
शिखरोच्चचतुष्पञ्चभागस्स्यात्पद्मतुङ्गकम् ५४
वेदीविस्तारतुल्यं स्याच्छिखरस्य तु नीव्रकम्
शिखरस्य त्रिभागे तु नासिकाविस्तरो भवेत् ५५
समत्रिपादो ह्यर्धो वा महानासीविनिर्गमः
तद्वत्सत्रिचतुर्भागहीनं स्कन्धाङ्गतुङ्गकम् ५६
शक्तिध्वजस्तदर्धो वा त्रिपादो वाथ तुङ्गकम्
सार्धदण्डो द्विदण्डो वा क्षुद्रनासाविशालता ५७
विस्तारे मुखपट्यश्च दण्डो वाध्यर्ध एव वा
सपादो वा त्रिपादो वा तद्धनं स्याद्यथेष्टतः ५८
शक्तिध्वजस्य मूले तु विपुलं दण्डमानतः
मुखपटयुक्तमानो वा तावत्तत्कन्धरादयः ५९
ग्रीवान्तराग्रपत्रं तु स्तम्भव्यासार्धमानकम्
ग्रीवोपरि कपोलं तद्द्विगुणं सार्धमेव वा ६०
त्रिदण्डं वा प्रकर्तव्यं गलस्त्वर्धेन वा भवेत्
तावच्छक्तिध्वजान्तं स्यात्सपत्रं वा सशूलकम् ६१
नेत्रसंश्लिष्टमल्लं तु चूलिकास्तनमण्डितम्
शयितस्थितिपट्टाभ्यामङ्गुलाद्यैर्विभूषितम् ६२
श्लिष्टकर्णोर्ध्वपट्टोर्ध्वप्रत्यूर्ध्वे मुष्टिबन्धनम्
यथाशोभननिष्क्रान्तं त्रिमुखं स्यात्तदूर्ध्वतः ६३
यत्र यत्र विचित्रं तु प्रासादे परिकल्पयेत् ६४

इति कामिकाख्ये महातन्त्रे शिखरलक्षणविधिर्नाम सप्तपञ्चाशत्तमः पटलः

## स्थूपिकालक्षणविधिः

स्थूपिकालक्षणं वक्ष्ये प्रासादादेस्सनातनम्
पद्मोच्चं वार्धभागो वा तदूर्ध्वे स्थूपिकायति १
अल्पीयसी शिरोर्धा वा भागोच्चं वा त्रिभागिके
लोहजं दारुजं वापि स्थूपिकाकीलमिष्यते २
ऊर्ध्वभूमेस्तु पादोच्चं विस्तारं पादतस्समम्
अग्रमङ्गुलविस्तारमानुपूर्वात्कृशं नयेत् ३
चतुरश्रं समं कुर्यात् त्रिभागैकमधस्ततः
वृत्तमूर्ध्वमधःकुर्याच्छिखिपादान्न्यसेदधः ४
विस्तारं त्रिगुणायामं व्यासोच्चं पादतस्समम्
आयामं तु यथाशोभं तथा कुर्याद्विचक्षणः ५
अथवा तच्छिखायामद्विगुणं कीलदैर्घ्यकम्
स्तम्भव्यासार्धविस्तारं त्रिचतुर्भाग एव वा ६
अग्रमर्धाङ्गुलं व्यासो शिखिपादं यथासुखम्
शिखराकृतिवत्कीलं लिङ्गच्छन्दमथापि वा ७
द्वाविंशत्यंशके दैर्घ्ये पद्मं सार्धांशमीरितम्
सप्तांशविस्तरस्तस्यास्तदूर्ध्वे च तु वाजनम् ८
विस्तारं द्वित्रिभागेन वेत्रमर्धोच्चमीरितम्
त्रिभागो विस्तरं चोर्ध्वे वाजनं चोर्ध्वमुच्यते ९
त्रिभागं विस्तरं चोर्ध्वे पद्ममंशविनिर्मितम्
पञ्चांशो विस्तरस्तम्भः कुम्भं पञ्चांशनिर्मितम् १०
विस्तारो नवभागस्स्यादूर्ध्वे पद्ममथांशतः
पञ्चांशो विस्तरस्तस्य वेत्रमर्धविनिर्मितम् ११
त्रिभागो विस्तरस्तस्य कर्णस्त्वंशविनिर्मितः
विस्तारेण द्विभागस्स्यादूर्ध्वं वाजनमर्धतः १२
विस्तारेण त्रिभागस्स्याद्वेत्रमंशविनिर्मितम्

विस्तारं चतुरंशं स्यात्कम्पकर्णन्तु कम्पकम् १३
पूर्ववत्पद्ममर्धं स्याद्विस्तारं पञ्चभागिकम्
वाजनं चैकभागेन षडंशो विस्तरो भवेत् १४
ऊर्ध्वपद्ममधो यद्वत्तदूर्ध्वे वेत्रमंशतः
विस्तारस्स्यात्त्रिभागेन तदूर्ध्वे पद्मकुड्मलम् १५
वेदांशे त्र्यंशविस्तारो मूलतः परिकल्पयेत्
चतुरश्रद्विरष्टाश्रं साधारं वर्तुलं तु वा १६
अथवान्यप्रकारेण स्थूपिकाभूषणं नयेत्
पद्मकं पञ्चकर्णं तु पञ्चकं पद्मतुङ्गकम् १७
पद्मकुम्भं च पूर्वोक्तमानेनैव समाचरेत्
वेदांशैः कर्णमित्युक्तस्तदूर्ध्वं पूर्ववन्नयेत् १८
द्वाविंशत्यंशकास्तत्र पूर्ववत्परिकल्पितम्
ईदृग्लक्षणसंयुक्तं विमानं सम्पदां पदम् १९
विपरीते विपत्यै स्यात्कर्तुः कारयितुस्तथा
एवमादौ तु शास्त्रार्थमालोच्यालेख्य बुद्धिमान् २०
स्थापिते सम्यगुद्दिश्य सामान्यं तेन कारयेत्
प्रारम्भकाले सञ्चित्य सर्ववस्तु समाचरेत् २१
कृतस्य विपरीतत्वमनर्थाय भवेदिह
प्रमाणसहितं चैवमथवानादिकं तु वा २२
उक्तस्थाने विधातव्यं सप्रमाणं यथा भवेत्
कामिकाद्यागमोक्तेन प्रमाणेन समाचरेत् २३
तत्राप्येकेन कर्तव्यं नोक्तं चेदन्यशास्त्रतः
सिद्धान्ते नोदितं चेत्तु गारुडाद्यं प्रगृह्यताम् २४
तत्रापि नोदितं चेत्तु वास्तुशास्त्रं समाश्रयेत्
वक्त्रैक्यमुत्तमं प्रोक्तं तन्त्रैक्यं मध्यमं भवेत् २५
अधमं स्त्रोतसामैक्यं स्त्रोतोमिश्रं तु नीचकम्

तदभावान्निकृष्टं स्यादेवं बुध्वा समाचरेत् २६
कामिकाख्यं शिवज्ञानं सर्वसामान्यमीरितम्
मुख्यत्वात्सर्वशास्त्रेभ्यस्सर्वत्र परिकीर्तितम् २७
इति कामिकाख्ये महातन्त्रे स्थूपिकालक्षणविधिर्नाम
अष्टपञ्चाशत्तमः पटलः

नालादिस्थापनविधिपटलः
स्थापनं नालयोगाङ्घ्रेस्स्त्रवदूर्ध्वोपलस्य च
स्थूपिकास्थापनं चैव वक्ष्ये तच्छृणुत द्विजाः १
अयने चोत्तरे वापि दक्षिणे प्राप्तदेशके
अविलम्बेन कर्तव्यं सुमुहूर्ते शुभे दिने २
प्रासादस्याग्रतः कुर्यादुत्तरे वेशदेशके
मण्टपं नवहस्तादिपञ्चहस्तान्तमेव च ३
मध्यमे वेदिकां कुर्यान्नवभागैकभागतः
कुण्डानि परितः कुर्याद्भूतवेदैकसंख्यया ४
वृत्ताभं चतुरश्रं वा सर्वकुण्डं समाचरेत्
मङ्गलाङ्कुरकार्पं पूर्वमेव समाचरेत् ५
अथवा तद्विहीनं तु स्थापनञ्चैतदाचरेत्
मण्डपं समलंकृत्य पुण्याहं वाचयेत्ततः ६
अस्त्राम्बुनाथवा प्रोक्ष्य नालाद्यं स्थापये ततः
पञ्चमृत्पञ्चगव्यैश्च शुद्धोदकसमन्वितम् ७
आलिप्य चन्दनाद्यैस्तु पुष्पमालभिरावृतम्
कृतकौतुकबन्धस्तु वस्त्रैरावेष्टय देशिकः ८
स्थण्डिलं वेदिकोर्ध्वे वा भूतले वा समाचरेत्
अष्टद्रोणेन शालीनामर्धेनार्धेन वा भवेत् ९
तदर्धं तण्डुलोपेतं तदर्धं तिललाजकम्

वस्त्रैर्दर्भैस्समाच्छाद्य हृदयेन तु मन्त्रतः १०
पूजयेत्परितस्सर्वान् वस्त्रेणाच्छादये पुनः
स्थापयेत्परितः कुम्भानष्टौ वस्त्रादिसंयुतान् ११
ससूत्रानुदसम्पूर्णानिन्द्राद्यधिप संयुतान्
गन्धाद्यैरर्चनां कुर्याद्धृदयेन विचक्षणः १२
मूर्धेष्टकाप्रतिष्ठा चेदाकारं पूर्वशैलके
इकारं दक्षिणे न्यस्त्वा उकारं पश्चिमे न्यसेत् १३
एकारं सौम्यदेशे तु पृथग्वस्त्रेण वेष्टयेत्
नन्दां भद्रां जयां पूर्णां क्रमेणाभ्यर्चयेत्सुधीः १४
ततो होमः प्रकर्तव्यः वह्निकार्योक्तमार्गतः
समिदाज्यचरूंश्चैव तिलं वै होमयेत्सुधीः १५
पलाशोदुम्बराश्वत्थवटाः पूर्वादिदेशके
प्रधानस्य पलाशस्स्यादेकं वा सर्वकुण्डके १६
शतसंख्यं तदर्धं वा शिवमन्त्रेण होमयेत्
शिवाद्दशांशतोऽङ्गानि तर्पयित्वा समाहितः १७
आत्मादितत्वं विन्यस्य ब्रह्माद्यधिपतीन्न्यसेत्
मूर्तिमूर्तीश्वरान्न्यस्त्वा तत्त्वतत्त्वेश्वरान् न्यसेत् १८
पूर्णाहुतिं ततो हुत्वा वौषडन्तेन मूलतः
नालाद्यं स्थापयेत्पश्चादधिवासयुतं तु वा १९
मूले तु नवरत्नं वा पञ्चरत्नमथापि वा
तदलाभे हिरण्यं वा न्यस्त्वा संस्थापयेद्धृदा २०
मूर्धेष्टकाविधानं चेदाद्योपलविधानतः
स्थापयित्वा तदूर्ध्वे तु स्थूपिकीलं तु विन्यसेत् २१
अनेकस्थूपिकाकीलेष्वेवमेव समाचरेत्
दारुनिर्मितहर्म्यं चेद्वंशे वा मूलकूटके २२
स्थूपिकीले न्यसेद्धीमानिष्टकास्थापनं विना

स्तम्भसंस्थापनं चेत्तु गर्भस्थानं तु विन्यसेत् २३
नालानां स्थापनं चेत्तु किञ्चिदीशाश्रितं न्यसेत्
लुपानां रोहणं चेत्तु मूलधाम्नस्तु दक्षिणे २४
पश्चिमे विन्यसेत्पादान् पश्चात्सर्वं च विन्यसेत्
द्वारे तु गर्भगेहस्य स्थापयेद्योग्यमादितः २५
आचार्यमूर्तिपांश्चैव दैवज्ञं स्थपतिं पुनः
पूजयेद्वस्त्रहेमाद्यैर्दद्यात्तेभ्यश्च दक्षिणाम् २६
एवं तु विहितं धाम सर्वसम्पत्सुखावहम् २७

इति कामिकाख्ये महातन्त्रे नालादिस्थापनविधिर्नाम
एकोनषष्टितमः पटलः

## एकभूम्यादिविधिः

लक्षणं चैकभूम्यादेर्विशेषेण निगद्यते
हर्म्यतारत्रिभागैकभूतांशेषु गुणांशकम् १
धातुभागे युगांशं तु बाणांशं नवभागके
रुद्रांशे रसभागं तु विश्वांशे सप्तभागकम् २
तिथ्यंशे वसुभागं तु सप्तादशनवांशकम्
विस्तारार्धं तु तत्सर्वं नालीगृहमिति स्मृतम् ३
एकद्वित्रिचतुष्पञ्चषडंशस्त्वेकभूमिकम्
त्रिचतुष्पञ्चमात्रं तु पादविष्कम्भ इष्यते ४
एकभागमधिष्ठानं पाददैर्घ्यं द्विभागतः
प्रस्तरश्चैकभागस्स्यात्कण्ठस्त्वेकेन कीर्तितः ५
शिखरस्य द्विभागेन स्थूपिरेकेन कीर्तितः
वृत्तकण्ठशिरोयुक्तं विजयं नामतो भवेत् ६
कर्णकूटयुतं तत्तु श्रीभोगमिति कीर्तितम्
मध्ये भद्रयुतं चेत्तु श्रीविशालं प्रकीर्तितम् ७

वस्वश्रशिखरग्रीवं स्वस्तिबन्धनमिष्यते
वेदाश्रशिखरग्रीवं श्रीकरं स्याद्द्विजोत्तमाः ८
द्व्यश्रवृत्तशिरोग्रीवं हस्तिपृष्ठमिति स्मृतम्
षडश्रशिखरग्रीवं स्कन्दकान्तमिति स्मृतम्
मध्ये भद्रयुतं कर्णकूटयुक्तं तु मस्तके ९
कोष्ठकं भद्रनास्यङ्गं वृत्तं वा गलमस्तकम्
केसरं नामतः प्रोक्तं युगाश्रं वा गलं शिरः १०
पञ्चसप्तर्तुभागे तु त्रिद्व्यंशे मध्यभद्रकम्
एकभौममिदं प्रोक्तं द्वितलं तु विधीयते ११
तारे सप्त त्रिभागे तु सौष्ठिकं विस्तरं स्मृतम्
द्विभागं कोष्ठकायामं शेषं हारं सपञ्जरम् १२
विमानोच्चं तु विभजेदष्टाविंशतिसंख्यया
अधिष्ठानं त्रिभागस्स्यात्पादष्षड्भाग ईरितः १३
त्रिभागः प्रस्तरः पञ्चभागस्स्यादूर्ध्वभागतः
द्विभागः प्रस्तरः कर्णस्त्रिभागः परिकीर्तितः १४
सार्धवेदैश्शिरस्थूपिरध्यर्धेन विनिर्मितः
चतुरश्रमधिष्ठानं तद्वत्कन्धरमस्तकम् १५
चतुष्कूटसमायुक्तं चतुष्कोष्ठसमन्वितम्
क्षुद्रनीडमुपर्यष्टौ नाम्नैतत्स्वस्तिकं भवेत् १६
तदेव सौष्ठिकं निम्नमुन्नतं कोष्ठकं यदि
अन्तरप्रस्तरोपेतमेतद्विपुलसुन्दरम् १७
अंशमंशत्रयं सत्रिपादांशं साङ्घ्रिभागिकम्
भागत्रयवितस्त्यंघ्रिप्रस्तरं ग्रीवमस्तकम् १८
पादोदये दशांशे तु द्वितलादिविमानके
अन्तरप्रस्तरोपेतं कूटशालान्तमीरितम् १९
तदेव कोष्ठकं निम्नमुन्नतं सौष्ठिकं यदि

अन्तरप्रस्तरोपेतमेतत्कैलासमुच्यते २०
तदेव वर्तुलं वेदिकन्धरं शिखरं घनम्
वसुकूटं चतुश्शालोपेतं पञ्जरभूषितम् २१
कोष्ठकं निर्गमं मध्ये द्वित्रिदण्डेन सौष्ठिकम्
समग्रीवशिरोयुक्तं कूटकोष्ठकसंयुतम् २२
नानाधिष्ठानसंयुक्तं नाम्नैतत्पर्वतो भवेत्
तदेव शिखरं दिक्षु चार्धकोष्ठकसंयुतम् २३
चतुरश्रशिरोयुक्तं चतुष्कूटसमन्वितम्
नानाधिष्ठानसंयुक्तं नाम्नैतत्स्वस्तिकं भवेत् २४
तदेव सौष्ठिकं कोष्ठमन्तरप्रस्तरान्वितम्
हारपञ्जरसंयुक्तं नाम्ना कल्याणमिष्यते २५
तदेव शिखरं चार्धकोष्ठकं रहितं यदि
चतुर्णासिसमायुक्तमेतत्पाञ्चालमिष्यते २६
तदेवाष्टाश्रकं वेदिकन्धरं शिखरं घटम्
शिखराष्टमहानासियुक्तं स्याद्विष्णुकान्तकम् २७
तदेव कूटशालानामन्तरप्रस्तरं विना
तच्चतुर्भागमानेन चायतं चतुरश्रकम् २८
आयतं च तथा वेदिकन्धरं शिखरं भवेत्
स्थूपित्रयसमायुक्तं तन्नाम्नैतत्सुमङ्गलम् २९
तदेवायतवृत्तं चेद्वेदिकाकन्धरं शिरः
सर्वावयवसंयुक्तमेतद्गान्धारमिष्यते ३०
तारादर्धाधिकायामसंयुक्तं चतुरश्रकम्
द्व्यश्रवृत्तशिरोयुक्तं नेत्रशालामुखान्वितम् ३१
हस्तिपृष्ठमिदं द्व्यश्रं वृत्तं वापि मसूरकम्
चतुरश्रमधिष्ठानं वृत्तं स्याद्गर्भगेहकम् ३२
सर्वालङ्कारसंयुक्तं नाम्नैतत्स्यान्मनोहरम्

तदेव जन्माद्याकुम्भाद्वृत्तं चेत्तु बहिर्बहिः ३३
शेषं पूर्ववदुद्दिष्टं प्रोक्तमीश्वरकान्तकम्
द्विभूमिरेवमाख्याता त्रिभूमिरधुनोच्यते ३४
प्रासादस्य तु विस्तारे सप्ताष्टांशैर्विभाजिते
भागेन कूटविस्तारं कोष्ठादिद्विगुणायतम् ३५
लम्बपञ्जरमर्धांशं हारभागं तु तत्समम्
ऊर्ध्वद्मतारे षड्भागे भागः कूटस्य विस्तरः ३६
कोष्ठकं द्विगुणायामं हारं भागेन कल्पयेत्
ऊर्ध्वभूमेर्द्विभागेन मध्यभद्रं विधीयते ३७
दण्डस्सार्धद्विदण्डो वा हर्म्यनिर्गम इष्यते
विमानोच्चं तु विभजेच्चतुर्विंशतिसंख्यया ३८
धरातलं द्विभागेन चतुर्भिःपाद ईरितः
द्विभागः प्रस्तरः पादस्सत्रिपादगुणांशकैः ३९
प्रस्तरस्सार्धभागस्स्याद्भागस्सार्धत्रिभागकः
सपादभागो मञ्चस्स्यात्सार्धकं कण्ठमीरितम् ४०
शिखरं सार्धबन्धं स्यादेकेन स्थूपिका भवेत्
कूटं कोष्ठं च नीडं च वसुसंख्यासमीरितम् ४१
जन्मादिस्थूपिकान्तं तु वेदाश्रकमिति स्मृतम्
द्वितीये च तृतीये च चक्रनीडास्तु षोडश ४२
यथाशोभं तथा नास्यस्सर्वत्र परिकीर्तिताः
शिखरे तु महानास्यश्चतस्त्रः परिकीर्तिताः ४३
कोष्ठकं चोन्नतं कूटं निम्नमन्तरपञ्चकम्
विमानाकृतिकं नाम्ना सर्वालङ्कारसंयुतम् ४४
चतुर्भागाधिकायामं विस्तारं परिकल्पयेत्
विस्तारे वसुभागास्स्युरायामे द्वादशांशकम् ४५
तद्विस्तारोर्ध्वमानेन वर्तुलं वर्तनीयकम्

मसूरकाच्छिरोऽन्तं तु द्व्यंशवृत्तं तु कारयेत्  ४६
अथवा शिखरं खण्डं द्व्यश्रवृत्तं नयेद्द्विजाः
तदधश्चतुरश्रं स्यान्मूलतो द्व्यश्रवृत्तके  ४७
अग्रात्पार्श्वद्वयोः पृष्ठे कुर्याद्वृत्तद्वयांशकम्
कूटकोष्ठकनीडानां विस्तारो भाग इष्यते  ४८
कोष्ठकं द्विगुणायामं हारा भागेन कीर्तिताः
शिखरे तु महानास्यश्चतस्त्रः परिकीर्तिताः  ४९
कोष्ठतश्चोन्नतं कूटं निम्नमन्तरमञ्चकम्
स्वस्तिकं तत्त्रिभौमं स्याच्छिवप्रीतिकरं भवेत्  ५०
तारे सप्तनवांशे तु भागस्सौष्ठिकविस्तरः
शालायामस्तथा द्व्यंशो हारं भागेन कल्पयेत्  ५१
अष्टकूटं तु तत्कोष्ठं द्वादशैव विधीयते
अष्टनीडानि नाडयस्स्युर्नीडं शोभावेशेन तु  ५२
अष्टाश्रमस्तकं वेदिकन्धरं चाष्टनासिकम्
विमलाकृतिकं नाम्ना सर्वालङ्कारसंयुतम्  ५३
चतुर्भागाधिकायामं विस्तारात्परिकल्पयेत्
विस्तारे वसुभागास्स्युरायामे द्वादशांशकः  ५४
तद्विस्तारार्धमानेन वर्तुलं वर्तनीयकम्
मसूरकाच्छिरोऽन्तं तु द्व्यश्रं वृत्तं तु कारयेत्  ५५
अथवा शिखरं कण्ठं द्व्यश्रवृत्तं नयेद्द्विजाः
तदधश्चतुरश्रं स्यान्मूलतो द्व्यश्रवृत्तके  ५६
अग्रात्पार्श्वद्वयोः पृष्ठे कुर्यादर्कद्वयांशकम्
कूटकोष्ठकनीडांशविस्तारो भाग इष्यते  ५७
कोष्ठकं द्विगुणायामं हारं भागेन कीर्तितम्
षड्भागास्स्युस्तदूर्ध्वे तु पृष्ठतस्तस्य पार्श्वयोः  ५८
कृत्वार्कद्विगुणांशं तु कूटकोष्ठादि पूर्ववत्

ऊर्ध्वभौमं चतुर्भागं यथायुक्तिवशान्नयेत् ५९
मस्तके पुरतो नेत्रं शालावक्त्रसमन्वितम्
गर्भकूटोपसंयुक्तं क्षुद्रनासीविभूषितम् ६०
कूटकोष्ठयुतं वाथ तद्विहीनं तु वा नयेत्
शिखरे दभ्रनास्यस्स्युस्तिस्रः पादस्मन्विताः ६१
अष्टकूटं तु तत्कोष्ठं नीडं द्वादश एव हि
हारायां क्षुद्रनीडं स्यादर्कद्विगुणसंख्यया ६२
एकादिरविभूम्यन्तं वर्तनायुक्तमेव वा
हस्तिपृष्ठमिदं नाम्ना सर्वालङ्कारसंयुतम्
विस्तारास्त्वष्टभागास्स्युरायामो दशभागिकः ६३
कूटं कोष्ठं च नीडं च भागेन परिकल्पयेत्
हारभागं तु भागेन षडंशश्चोर्ध्वभूमिके ६४
तदूर्ध्वे तु चतुर्भाग आयामोऽष्टांश आधिकः
सायतं द्व्यश्रवृत्तं स्याद्वेदिकागलमस्तकम् ६५
कूटकोष्ठादिसर्वाङ्गं पूर्ववत्परिकल्पयेत्
एतद्धस्त्यादिकं सौधं गजपृष्ठं पुरातनम् ६६
नवधा भाजिते तारे गर्भगेहं त्रिभागतः
भागतो गृहपिण्डी स्यात्कन्धरं वांशतो भवेत् ६७
अंशेनान्धरिका ज्ञेया सौष्ठिकं चांशतो भवेत्
त्रिभागः कोष्ठकायामस्सार्धतो नीडविस्तरः ६८
कोष्ठमध्ये त्रिदण्डेन नाडीनिर्गमनान्वितः
ऊर्ध्वक्ष्मेऽपि षडंशांशं कूटं तद्द्विगुणायतम् ६९
कोष्ठभागगतो हारः पञ्जरैरञ्जितो भवेत्
ऊर्ध्वभूमौ त्रिभागेन मध्ये दण्डेन निर्गतः ७०
आदौ तलं चतुष्कर्णे कूटं वेदाश्रमस्तके
अष्टाश्र ऊर्ध्वभूमौ तु सौष्ठिकानां तु मस्तकम् ७१

चतुरश्रमधिष्ठानं वस्वश्रगलमस्तकम्
अष्टकूटं तथा कोष्ठं नीडकं च तथा भवेत् ७२
क्षुद्रनीडं तथाप्यष्टौ चाष्टौ स्युर्गलनासिकः
भद्रकोष्ठमिदं नाम्ना सर्वालङ्कारसंयुतम् ७३
तदेव वर्तुलं कर्णकूटमूर्ध्वोर्ध्वभूमिके
मस्तकं तस्य वृत्तं स्याच्चतुर्णासिसमन्वितम् ७४
वृत्तकूटमिदं नाम्ना सर्वावयवसंयुतम्
तदेवाष्टांशदैर्घ्येण सायतं चतुरश्रकम् ७५
कर्णकूटं च वेदाश्रं सायतं वृत्तमस्तकम्
कोष्ठभद्रविहीनं वा शेषं पूर्ववदाचरेत् ७६
स्थूपित्रयसमायुक्तं नाम्नैतत्स्यात्सुमङ्गलम्
पञ्चादशकरं व्यासं दशभागेन योजयेत् ७७
गर्भगेहं चतुर्भागं गान्धार्यंशेन कीर्तिताः
अलीन्द्रमंशमंशेन खण्डहर्म्यं बहिष्क्रमात् ७८
कर्णमध्येऽन्तरं कुर्यात्कूटकोष्ठकपञ्जरान्
भागेन कोष्ठकायामं द्विगुणं सम्मतं बुधाः ७९
ऊर्ध्वभूमौ रसांशे तु भागस्सौष्ठिकविस्तरः
कोष्ठकं द्विगुणायामं हारं भागेन योजयेत् ८०
तदूर्ध्व च चतुर्भागे भागो मध्येन निर्गमः
दण्डेनाध्यर्धदण्डेन द्विदण्डेनाथवा भवेत् ८१
चतुरश्रमधिष्ठानं तद्वत्कन्धरमस्तकम्
वसुकूटं तथा नीडं कोष्ठकं च तथैव हि ८२
ऊर्ध्वेऽष्टौ लम्बनीडास्स्युर्जलस्थलसमन्वितम्
नासिकाद्यङ्गसंयुक्तं सर्वावयवसंयुतम् ८३
उन्नतौ कूटकोष्ठौ चेदन्तरप्रस्तरान्वितौ
एवं गान्धारमत्रोक्तं अष्टाश्रं वा गलं शिरः ८४

तदेव वर्तुलं वेदिकन्धरं शिखरं यदि
शेषं पुर्ववदुद्दिष्टं नाम्ना श्रीभोगमिष्यते ८५
वृत्तं वृत्तायतं द्व्यश्रं वृत्तमष्टषडश्रकम्
वृत्तं वृत्तायतं द्व्यश्रं वृत्तमष्टषडश्रकम् ८६
कूटकोष्ठकनीडैश्च मण्डितं हर्म्यखण्डके
ऋजुभागविशालात्तु द्व्यश्रवृत्तेऽथ वर्तुले ८७
भागः कश्चिद्भवेन्नयूनो भागस्सर्वसमस्तु वा
अष्टांशेन दशांशेन चोर्ध्वांशस्योदयांशकान् ८८
यथाशोभंबलव्याप्तिस्तथा युञ्जीत बुद्धिमान्
वक्ष्येऽथ मुनयश्श्रेष्ठाश्चतुर्भौमनिकेतनम् ८९
त्रिचतुष्पञ्चहस्तादिर्द्विद्व्यङ्गुलविवर्धनात्
एकविंशतिहस्तान्तो व्यासतुङ्गस्तु पूर्ववत् ९०
त्रयोदशकरव्यासमष्टधा विभजेत्ततः
एकांशः कूटविस्तारः शालायामो द्विभागतः ९१
भागः पञ्जरविस्तारो भवेदूर्ध्वमथोऽष्टधा
प्राग्वदेव सभाशालापञ्जराणां तु कल्पनम् ९२
ऊर्ध्वे षडंशभागेन कूटविस्तार ईरितः
द्विभागः कोष्ठकायामो नीडं भागोर्ध्वमिष्यते ९३
ऊर्ध्वे गुणांशभागेन भद्रो दण्डेन मध्यमे
उच्चं यद्विभजेद्धाम्नो नवत्रिंशतिसंख्यया ९४
सार्धं द्व्यंशमधिष्ठानं पञ्चांशः पाददैर्घ्यतः
तस्यार्धप्रस्तरोत्सेधस्सत्रिपादयुगांशकैः ९५
ऊर्ध्वभूम्यङ्घ्रिकोत्सेधस्सपादद्व्यंशमंशकम्
जङ्घा च द्विगुणं चोर्ध्वे द्व्यंशेन प्रस्तरोदयः ९६
भागाधिकचतुर्भाग उपरिष्टात्स्वतुङ्गता
स्यात्सत्रिपादभागेन प्रस्तरो वेदिकांशतः ९७

गलोच्चमश्विनीभागं सार्धवेदैश्शिरो भवेत्
शेषभागैश्शिखामानं हर्म्यान्तं चतुरश्रकम् ९८
रविसंख्या भवेत्सौष्ठिकोष्ठं तद्वत्सपञ्जरम्
शिखरे वेदनासास्स्युरल्पनास्यस्तथैव च ९९
सर्वालङ्कारसंयुक्तमेतद्धर्म्यं सुभद्रकम्
तदेव कूटकोष्ठादि मध्येमध्ये द्विजोत्तमाः १००
मस्तकं मण्डलाभं स्याद्वृत्ताभं स्यात्तथा शिरः
विस्तारार्धप्रमाणेन गर्भगेहसमन्वितम् १०१
शेषं द्व्यंशावृता पिण्डी तद्वदन्धारहारकौ
नानामसूरकाद्यङ्गं नाम्नेदं श्रीविशालकम् १०२
पञ्चादशकरव्यासे नवधा भाजिते सति
गर्भगेहं त्रिभिर्भागैर्गृहपिण्डस्तदंशतः १०३
अलिन्दं परितोंऽशेन खण्डहर्म्यमथांशतः
कूटकोष्ठकनीडानां भागेनैकेन विस्तरः १०४
विस्तारत्रिगुणायामः स्वव्याससमनिर्गमः
शालामध्ये महानासी भागमध्यविनिर्गमः १०५
भद्रकोष्ठकनीडानामन्तरार्धेन भारकम्
तदूर्ध्वे वसुभागे तु भागमट्टस्य विस्तरम् १०६
कोष्ठकस्य तु विस्तारस्तथैव परिकीर्तितः
आयामस्तु द्विभागेन तन्मध्ये नीडमंशतः १०७
तदूर्ध्वे रसभागे तु कूटमंशेन कोष्ठकम्
विस्तारद्विगुणायामस्तन्मध्येऽर्धेन पञ्जरम् १०८
ऊर्ध्वभूमिश्चतुर्भागो मध्ये दण्डेन निर्गतः
अष्टाश्रं कर्णकूटं स्यात्कोष्ठकं कर्करीकृतम् १०९
महाशिखरमष्टाश्रमष्टनास्या विभूषितम्
कूटकोष्ठकनीडानां संख्या पूर्ववदीरिता ११०

अस्याप्युत्सेधभागं तु पूर्ववत्परिकल्पयेत्
भद्रकोष्ठमिदं नाम्ना वेदभौमं दिवौकसाम् १११
सप्तादशकरव्यासं दशभागैर्विभाजयेत्
नालिभेदं चतुर्भागं भागेनान्धारिकां नयेत् ११२
परितोऽलिन्द्रमंशेन परितः खण्डहर्म्यकम्
कूटकोष्ठकनीडञ्च भागेन परिकल्पयेत् ११३
शालायामो द्विभागस्स्याद्धारः शेषेण कीर्तिता
जलं विहाय चोर्ध्वे च वसुभागैर्विभाजिते ११४
भागेन सौष्ठि भागाभ्यां शाला भागेन पञ्जरम्
तदूर्ध्वे रसभागे तु भोगस्सौष्ठिकविस्तरः ११५
द्विगुणः कोष्ठकायामो हारायां क्षुद्रपञ्जरम्
तदूर्ध्वं तु त्रिभागे तु मध्याद्दण्डेन निर्गमः ११६
चतुरश्रमधिष्ठानमष्टाश्रं मस्तकं गलम्
रविकोष्ठं तथा शालापञ्जराणामथाष्टकम् ११७
लम्बपञ्जरमष्टौ हि क्षुद्रनीडं द्विरष्टकम्
गलनासाष्टसंयुक्तं कोष्ठकं किञ्चिदुन्नतम् ११८
नानामसूरकस्तम्भवेदिजालादिमण्डितम्
सोपपीठमधिष्ठानं केवलं वा मसूरकम् ११९
स्वस्तिकाकारसंयुक्तं नासिकाभिश्च संयुतम्
पूर्ववत्तुङ्गभागं स्यादेतन्नाम्ना जलावहम् १२०
नवपङ्क्तिकरव्यासे दशभागविभाजिते
गर्भवासश्चतुर्भागो भागेन गृहपिण्डका १२१
कन्धरं परितोंऽशेन परितः खण्डहर्म्यकम्
कूटकोष्ठकनीडानां विस्तारो भाग एव हि १२२
द्व्यंशेन कोष्ठकायामो हारा भागेन सम्मतम्
कूटकोष्ठं च नीडं चावान्तरप्रस्तरान्वितम् १२३

जलस्थलं विहायोर्ध्वे चाष्टांशं सौष्ठिकं भवेत्
तथा द्विगुणशाला स्यात्तयोर्मध्ये तु पञ्जरम् १२४
तदूर्ध्वे रसभागे तु कूटकोष्ठादि पूर्ववत्
विजयस्य तथा प्रोक्तं शेषमूर्ध्वे तु योजयेत् १२५
कूटकोष्ठादि सर्वाङ्गं पूर्ववत्संख्यया विदुः
महानीडं द्विरष्ट स्युर्नाम्नैतद्भद्रकूटकम् १२६
तदेवान्यदलङ्कारं कोष्ठमध्ये तु भद्रकम्
प्रतिग्रीवशिरोयुक्तमेतन्नाम्ना मनोहरम् १२७
तदेवान्यदलङ्कारं वेदाश्रं कन्धरं शिरः
नाम्नावन्तिकमित्युक्तं शम्भोर्मन्दिरमुत्तमम् १२८
त्रिसप्तहस्तविस्तारे दशभागविभाजिते
वेदांशो गर्भगेहं स्यादंशेन गृहपिण्डिका १२९
अन्धारांशेन भागेन मङ्गलाङ्गं प्रकल्पयेत्
कूटकोष्ठकनीडं च पूर्ववत्परिकल्पयेत् १३०
मण्डितं वेदिकाशालतोरणप्रमुखैरपि
जलस्थलं विहायोर्ध्वे वसुभागैर्विभाजिते १३१
शालासौष्ठिकनीडाद्यं पूर्ववत्परिकल्पयेत्
ऊर्ध्वभूमिष्षडंशा स्याद्भागस्सौष्ठिकविस्तरः १३२
शालायामो द्विभागेन नीडतारोर्ध्वभागतः
ऊर्ध्वभूमिद्विभागेन मध्यभद्रो विधीयते १३३
दण्डेन निर्गमस्तस्य सार्धदण्डद्वयेन तु
ग्रीवानाडी विशाला स्याद्वृत्तवेदिसमन्वितम् १३४
वृत्ताभशिखरग्रीवमहानासीचतुष्टयम्
अल्पाष्टनालिकोपेतमस्य मूलतले द्विजाः १३५
समं चोत्तुङ्गशिखरं कूटकोष्ठकनीडकम्
उत्तङ्गशालाद्वितलं मूले त्वधिककूटकम् १३६

चतुरश्राष्टवृत्ताभाः कर्णकूटास्तु मूलतः
नानामसूरकस्तम्भवेदिकाजालतोरणम्  १३७
नानासुखावहं प्रोक्तं देवानामास्पदं मतम्
पञ्चभौममहं वक्ष्ये श्रूयतां मुनिपुङ्गवाः  १३८
तुङ्गे षष्ठाष्टभागे तु सत्रिभागं द्विभागिकः
मसूरकोच्चमाख्यातं पादस्सार्धशरैर्भवेत्  १३९
सार्धद्विभागैर्बिम्बस्स्यात्साङ्घ्रिभूतैश्च पादकः
भागद्वयेन सार्धेन प्रस्तरः परिकीर्तितः  १४०
पञ्चभागेन पादस्स्यान्मञ्चस्याङ्घ्रिद्विपादभाक्
त्रिपादवेदैस्तलिपो द्विभागः प्रस्तरो भवेत्  १४१
सार्धवेदैः पुनः पादस्सत्रिपादांशकेन च
प्रस्तरोदय इष्टस्स्याद्वितर्दिश्चैकभागतः  १४२
द्विभागः कन्धरः प्रोक्तस्साङ्घ्रिवेदैश्शिरो भवेत्
विभागः कुम्भ इत्युक्तो भागाश्चैवं प्रकीर्तिताः  १४३
रसादिरुद्रभागेन पञ्चभौमं प्रकल्पयेत्
षट्तलाद्यं क्रमाद्वक्ष्ये पञ्चभूम्यंशकैस्सह  १४४
पञ्चभौमस्य धाम्नः स्यान्मूलधामोर्ध्वतः क्रमात्
प्रस्तरस्तदधिष्ठानं मानेनैव प्रकीर्तितम्  १४५
रसभागेन पादस्स्यादधिष्ठानत्रिभागतः
षड्भौममेवमाख्यातं प्रायो विस्तारभागयुक्  १४६
तदधस्सार्धसप्तांशैस्सपादगुणभागकैः
स्तम्भं मसूरकं कुर्यात्तारे रुद्रार्कभाजिते  १४७
सप्तभौममिदं ख्यातं विमानं सार्वदेशिकम्
तदधो मुनिभिस्सार्धं गुणांशैः पादकुट्टिमौ  १४८
धर्मरुद्रार्कभागैस्तु त्रयोदशविभागकैः
अष्टभौममिदं प्रोक्तमेवं प्राज्ञैर्मुनीश्वराः  १४९

तदधस्सार्धसप्तांशैस्सत्रिभागाग्निभागिके
स्तम्भं च तलिपं कुर्यात्तारेंऽशाः प्रागुदीरिताः १५०
एवं नवतलं प्रोक्तं दशभौममिहोच्यते
तदधोऽष्टयुगांशैस्तु पादोऽधिष्ठानमिष्यते १५१
तारे पूर्वोक्तभागास्स्युर्मनुभागं तु वा मतम्
तदघस्सार्धवस्वंशैस्सपादयुगभागिके १५२
पादं मसूरकं कुर्याद्भागानष्टादशान्तकान्
पूर्वोक्तं कल्पयेदेवमेकादशतलं मतम् १५३
तदधो गृहनन्दांशैः पादांशतलकं भवेत्
तारे षोडशभागादि यावदर्कद्वयांशकम् १५४
सङ्कल्प्य तत्र कूटादीन् योजयेद्देशिकोत्तमः
द्वित्रिवेदेषु षड्भागैः प्रागुक्तांशैस्तु वा गृहम् १५५
गृहपिराडचलिन्द्रतारांश्च गर्भभागाद्बहिर्नयेत्
प्रासादस्य तु विस्तारं कृत्वा षोडशभागिकम् १५६
वेदभागैर्गृहं प्रोक्तं पिराडीभागेन निर्मितम्
पञ्चालिन्द्रं च षट्कुडचं प्रत्येकं चार्धभागतः १५७
अथवायामविस्तारे चतुर्विंशतिभाजिते
गर्भगेहो द्विभागेन गृहपिराडस्तु भागतः १५८
पञ्चालिन्द्रं तथा कुडचं योजयेद्भागतो बहिः
कूटकोष्ठादिसर्वाङ्गं पूर्ववत्परिकल्पयेत् १५९
प्रासादस्य तु विस्तारं कृत्वा त्रिनवभागिकम्
पञ्चभिर्गर्भगेहं स्याच्छेषं पूर्ववदीरितम् १६०
अन्येष्वपि च भागेषु समूह्यैवं प्रकल्पयेत्
एवं द्वादशभौमं स्यात्तदूर्ध्वमधुनोच्यते १६१
पूवमानादधिष्ठाने पादमानमथार्धकम्
स्तम्भमाने तु युक्त्यैव योजयेदधिकं गुरुः १६२

अाषोडशतलं सम्यगारभ्य द्वादशन्दमकम्
अंशाद्विंशति भागादीनेकत्रिंशांशकावधि १६३
कल्पयेद्यजमानेच्छावशेनैव विशेषतः
भागार्धेनाथवालिन्दं शेषं कुडयेषु योजयेत् १६४
युग्मायुग्मकरैर्वाथ कारयेदेवमेव तु
युग्मांशे तु विभागे वा कूटव्यासा द्विरायता १६५
शाला तु चतुरंशैर्वा युग्मायुग्मांशकैस्तथा
तलमेकं भवेद्ग्रासं खण्डहर्म्यञ्चतुस्तले १६६
द्विचतुःपञ्चषट्सप्तभूमौ ग्रासं भवेद्द्विजाः
त्रितलं चाष्टभौमे तु नवपङ्क्तितले तथा १६७
चतुष्पञ्चतलव्यासो रुद्रादित्यतले भवेत्
षट्तलं वसुभौमे च चतुर्दशतले तथा १६८
सप्तभौमं समाख्यातं षोडशाष्टैकभूमिकम्
मूलतः कूटकोष्ठादि कर्तुं सम्यङ्गहीतले १६९
तले गृहे तु कूटादीन् यथायुक्त्या प्रयोजयेत्
कूटशालादिभिर्भेदैः पूर्वमाख्या यथोदिता १७०
धामस्थैर्भेदकैर्युक्ता व्याख्या पूर्ववदीरिता १७१
इति कामिकाख्ये महातन्त्रे एकभूम्यादिलक्षणविधिर्नाम षष्टिः पटलः

## मूर्धेष्टकास्थापनविधिपटलः

विमानानामथो वक्ष्ये ऊर्ध्वाश्मस्थापनं परम्
यद्द्रव्येणावसानं स्यात्तन्मया चेष्टका मता १
अाद्येष्टकोक्तमानास्स्युरष्टांशोनास्तु वा मता
स्थापनं वक्ष्यमाणेन मार्गेणैव समाचरेत् २
अङ्कुरार्पणकार्यं तु प्रागेव विधिना चरेत्

मराडपस्य विमानस्य सौम्यायां पूर्वतो दिशि ३
पञ्चैककुराडयुक्तो वा तत्संख्यस्थरिडलान्वितः
मध्यमे वेदिकायुक्तो दर्भमालादिशोभितः ४
पश्चाच्छिल्पिनमुद्वास्य गोमयेनोपलेपयेत्
भोजनं भूसुराणां च पुरयाहं प्रोन्नणं तथा ५
वास्तुहोमं पुरा कृत्वा स्थरिडलं कारयेत्ततः
अष्टद्रोणैस्तदर्धैर्वा शालिभिश्च तदर्धकैः ६
तराडुलैश्च तिलैर्लाजैर्दर्भैः पुष्पैर्हृदा गुरुः
शय्यां च कल्पयित्वाथ पञ्चमृत्पञ्चगव्यकैः ७
प्रन्नाल्य चेष्टकां स्थूपिं यजेद्गन्धादिभिर्हृदा
स्वराद्यं वेदवर्णं तु पूर्वादिक्रमशो लिखेत् ८
इष्टकासु हृदा मन्त्री श्वेतचन्दनचर्चितः
शय्यायां स्थापयित्वा तु तद्वामे स्थूपिकां न्यसेत् ९
कौतुकं बन्धयित्वा तु वस्त्रेणाच्छाद्य देशिकः
परितोऽष्टौ घटान् न्यस्त्वा लोकेशाशासु तान्हृदा १०
संपूज्य गन्धपुष्पाद्यैर्मूर्त्तिमूर्त्यधिपान् न्यसेत्
नन्दां भद्रां जयां रिक्तां पूर्णां चैवेष्टकासु च ११
न्यसेत्स्थूप्येकदेशं च होमकर्म समाचरेत्
कृत्वा कुराडादिसंस्कारमग्निकार्योक्तमार्गतः १२
समिदाज्यान्नलाजैश्च तिलाद्यैश्च क्रमाद्धुनेत्
पलाशोदुम्बराश्वत्थवटाः पूर्वादिदिन्नु च १३
प्रधानेऽपि पलाशस्स्यात्स च सर्वत्र वा मतः
शिवब्रह्माङ्गमन्त्रैश्च शतसंख्यां तु होमयेत् १४
प्रभाते तु गुरुस्स्नातः कृतमन्त्रादिविग्रहः
इष्ट्वेष्टकाभिः स्थूपिं च कुम्भान्कुराडं च पालकान् १५
कृत्वा च निष्कृतिं पूर्णां पूजां सन्तुष्टमानसः

पञ्चनिष्कादिसम्प्राप्तदक्षिणैर्मूर्तिधारकैः १६
दैवज्ञाद्यैस्त्रिभिस्सार्धं शिल्पिना च गुरूत्तमः
गृहीत्वा चेष्टकां स्थूपिं कृतधामप्रदक्षिणः १७
आरुह्य शिखरं मूर्ध्नि विन्यसेदिष्टकाः क्रमात्
आद्येष्टकोक्तरीत्यैव मध्ये रत्नादि विन्यसेत् १८
तदूर्ध्वे स्थापयेत्स्थूपिं मूलमन्त्रेण देशिकः
तन्मूलं कुम्भतोयैश्च प्रोक्षयेत्स्वस्वमन्त्रतः १९
स्थूपिकांशं विहायाधो बन्धयेदिष्टकादिभिः
एवं यः कारयेन्मर्त्यस्स पुण्यां गतिमाप्नुयात् २०
इति कामिकाख्ये महातन्त्रे मूर्धेष्टकास्थापनविधिर्नाम एकषष्टितमः पटलः

## लिङ्गलक्षणविधिः

लिङ्गस्य लक्षणं वक्ष्ये श्रूयतां द्विजसत्तमाः
मृद्द्रुमोपललोहोत्थं रत्नबाणादिसम्भवम् १
द्विविधं मृण्मयं लिङ्गं पक्वं चापक्वमेव च
आभिचाराय पक्वं तु द्विहस्तादुपरि स्थितम् २
श्वेताद्यां मृदमादाय पयस्तैलादिभिर्वृताम्
यवगोधूमचूर्णं तु पयोवृक्षत्वचान्वितम् ३
पिच्छिलेन सुगन्धेन चूर्णेनालोड्य सन्मृदम्
श्रीवेष्टकं सर्जरसं तथा गुग्गुलुशर्करा ४
पञ्चनिर्यासस्संयुक्तामथ लोकप्रसिद्धितः
एतेषां संख्यया तुल्यां मृदं गृह्णीत देशिकः ५
गिरौ गिरिसमीपे वा वनेषूपवनेषु च
नदीतीरे द्रुमे शैले लिङ्गार्थं द्रव्यमाहरेत् ६
यास्सुवर्णा घनास्स्निग्धा निमग्ना नगसन्धिषु

सरित्सलिलनिर्धूतपवित्रान्तर्जलोषिताः ७
वृक्षच्छायोपगूढाश्च तीर्थाश्रमसमाश्रयाः
आयामव्यासनाहाढ्या रक्ताः पीतास्सितासिताः ८
मनोरमाश्शिला ग्राह्या यौवनाश्श्रेयसे मताः
वातातपानलालीढा मृद्वीक्षारोदकाश्रिताः ९
कर्मान्तरगृहीता या अत्यन्तोपहताश्च याः
अन्त्यजानीतसेव्या या नदीशैलतटे स्थिताः १०
रूक्षा वृद्धातिबालाश्च वर्जनीयाश्शिला द्रुमाः
खादिरश्चन्दनस्सालो मधूकस्सरलोऽसनः ११
बिल्वः कदम्बः खदिरो देवदारुश्च शिंशुपा
पनसार्जुनावशोकश्च क्षीरिणो रक्तचन्दनः १२
स्निग्धवर्णा महाकायाश्शुभदाश्शुभदेशजाः
द्रव्यसंग्रहणं कुर्याद्वक्ष्यमाणं विशेषतः १३
तच्छैलं नवहस्तान्तं पार्थिवं च तथा मतम्
त्र्यंशेन दारुजं लोहमस्यार्धेनोत्तमं मतम् १४
षट्षडङ्गुलहान्यन्तं मध्यमं मानमुच्यते
तदलाभे तु तन्मध्ये त्वेकैकाङ्गुलहानितः १५
मानं शतं च नवतिहस्तयुक्तप्रमाणतः
धामगर्भप्रमाणेनाधमं लिङ्गमुच्यते १६
गर्भार्धं मध्यमं ज्ञेयं पञ्चत्र्यंशं परं भवेत्
मध्यमेऽष्टविभागेन नवलिङ्गोदयानि च १७
ज्येष्ठे ज्येष्ठात्समारभ्य पादह्रासाद्द्विजोत्तमाः
मानानि च त्रयस्त्रिंशल्लिङ्गानां कीर्तितानि तु १८
अथवान्यप्रकारेण गर्भमानं विधीयते
अधमं गर्भपादं स्यात्त्रिपादं ज्येष्टमानकम् १९
पूर्ववन्मध्यमं कृत्वा त्रयस्त्रिंशत्प्रमाणकम्

आयादिशुद्धिसिद्ध्यर्थं भजेन्मानाङ्गुलेन तु २०
भागं वा विभजेत्तेषां शुध्यर्थं तदिहोच्यते
षोडशांशं समारभ्य चतुर्विंशतिसंयुतम् २१
शतांशं विभजेत्तत्र चैकांशं योजयेद्गुरुः
आयादिशुभसंयुक्तं षडंशं वा पुरा मया २२
भूमिलम्बे समादिष्टं नोक्तं विस्तरभीरुणा
लिङ्गायामे विकारांशे चतुर्भूतं रसैः क्रमात् २३
सत्रिभागैस्त्रिरंशैस्तु सुरेड्यानाढ्यके द्विजाः
आढ्यं सर्वसमं लिङ्गं विशिष्टं परिकीर्तितम् २४
तेषां तन्मध्यमेऽष्टांशे प्रत्येकं नवधा भजेत्
लिङ्गायामे दिनांशे तु सप्ताष्टनवभागतः २५
ब्रह्मविष्णवीशभागानां उत्सेधासंप्रकीर्तिताः
सर्वेषामपि सामान्यं लिङ्गमेतदुदाहृतम् २६
समखण्डं वर्धमानं शैवाधिक्यं त्रिभागिकम्
वर्णानां ब्राह्मणादीनां क्रमेण परिकल्पयेत् २७
वर्धमानशिवाधिक्ये सर्वजात्यर्हके मते
लिङ्गायामं त्रिधा कृत्वा ब्रह्मांशस्त्वेकभागतः २८
विष्णवंशस्तद्वदेवं स्याद्रुद्रांशो भाग एव वा
एकांशसदृशस्तारस्समखण्डोऽयमीरितः २९
चतुष्पञ्चषडंशं तु पञ्चषट्सप्तभागिकम्
षट्सप्ताष्टांशकं सप्तभागाष्टनवभागिकम् ३०
वर्धमानामिदं प्रोक्तं विप्रादीनामनुक्रमात्
सप्तसप्ताष्टभागं तु पञ्चपञ्चषडंशकम् ३१
वेदवेदशरांशं तु गुणानलयुगांशकम्
एवं शिवाधिकं प्रोक्तं द्विजातीनामनुक्रमात् ३२
कृत्वा नवांशं लिङ्गोच्चं बन्धबन्धगुणांशकम्

षट्सप्ताष्टकनाहं तु वृत्तेऽष्टाश्रे युगाश्रके ३३
त्रैराशिकमिदं शास्त्रे स्वस्तिकं त्वधुनोच्यते
नवधा लिङ्गमानेन द्व्यंशं मध्ये गुणांशकम् ३४
वृत्ते युगांशकं दैर्घ्यं शूद्रेऽप्येतच्च शस्यते
त्रैराशिकं तु सर्वेषां सर्वकामप्रदं मतम् ३५
आढ्यानाढ्यसुरेड्यं च धारालिङ्गं सहस्रकम्
सर्वेषां ब्राह्मणादीनामपि सामान्यमीरितम् ३६
एकादिधारया वृद्धं शतधारावसानकम्
धारालिङ्गं प्रशस्तं स्यात्सहस्रमधुनोच्यते ३७
समखण्डे शिवायामे रुद्रभागविनिर्मिते
एकाधिकं नवत्यंशे विषमांशनिवेशितम् ३८
सैकसाहस्रलिङ्गानां नवभागोच्चमेव वा
मुखलिङ्गमथो वक्ष्ये भुक्तिमुक्तिफलप्रदम् ३९
चतुर्मुखं तत्त्रिमुखमेकवक्त्रयुतं भवेत्
योच्चतारा द्विभक्ता सा गुणत्यागादधो शिरः ४०
ललाटं नासिका वक्त्रञ्चिबुकोष्ठं च वर्तयेत्
ग्रीवाभुजोपनिष्क्रान्तिरिदानीं प्रोच्यते बुधाः ४१
लिङ्गायामे विकारांशे लिङ्गविष्कम्भतो बहिः
चतुर्दिक्षु चतुर्वक्त्रं निर्गमाय प्रकल्पयेत् ४२
शेषं लिङ्गाकृतिः कार्या विष्णुभागानुसारतः
जानौ प्रविष्टा ग्रीवा स्याच्चतुरङ्गुलमानतः ४३
तद्वद्दीर्घसमायुक्तं शेषं यत्प्रतिमोक्तवत्
नन्दमात्रादिकं भक्त्वा षट्तालं तु चतुर्विधम् ४४
निर्गमार्थं चतुर्दिक्षु वेष्टनं परिकल्पयेत्
पादोनसप्तमात्रं तु विस्तारेण प्रकल्पयेत् ४५
त्रिमुखं वा तदुच्चांशं ऋतुवद्भाजयेत्समम्

भागार्धेन भुजस्कन्धौ षडङ्गुलविनिस्सृतौ ४६
त्रिभागेन भवेद्ग्रीवा मकुटं स्याद्द्विभागतः
चतुर्धा विभजेच्छेषं भागमात्रप्रमाणतः ४७
शिरोललाटनासाश्च वक्त्रं चिबुकसंयुतम्
विष्णवंशतारसदृशं मकुटं च विवर्तयेत् ४८
निर्गमांशमुखानां स्युः प्रत्येकं वसुमात्रकैः
एकवक्त्रं त्रयोच्चांशे सार्धोनमुखदैर्घ्यकम् ४९
मकुटञ्चैकभागं स्यादवशिष्टे द्विधा कृते
ग्रीवास्कन्धौ क्रमेणैव वर्धयेद्देशिकोत्तमः ५०
मुखस्य निर्गमं कुर्यान्नवमात्रप्रमाणतः
अष्टाधिकशते लिङ्गदैर्घ्ये दैर्घ्यांश इष्यते ५१
शिरोवर्तनमेतेषां वक्ष्ये तद्बहुधा मतम्
पुण्डरीकविशालाख्यं श्रीवत्सं शत्रुमर्दनम् ५२
काष्ठांशके चतुर्भक्ते भागभागविवर्धनात्
भवन्ति पुण्डरीकादिभेदा भिन्नफलाप्तये ५३
पुण्डरीकाद्यशःप्राप्तिर्विशालाद्विपुलां श्रियम्
प्राप्नोति सर्वान् श्रीवत्साद्विजयं शत्रुमर्दनात् ५४
कुक्कुटाण्डशिरो मूर्तिचतुर्थांशविवर्धनात्
प्रजावृद्धिकरं यस्मात्प्रजालाभः प्रजापतिः ५५
त्रिभागवर्धनादर्धचन्द्रं चन्द्रसमो यतः
प्राप्तमायुः परं प्राप्तलोकं सौभाग्यमुत्तमम् ५६
षड्भागवर्धनाद्भूतिनिमित्तं त्रपुषाकृतिः
साध्यास्सिद्धाश्च मरुतो यस्माद्भूतिं परां गताः ५७
अथवान्यप्रकारेण शिरोवर्तनमुच्यते
अष्टधा विभजेत्तारमध्यर्धेन विवर्तनात् ५८
छत्रशीर्षमिति प्रोक्तं त्रपुषाभं निगद्यते

षडंशैस्त्रपुषं वा स्यात्सार्धद्व्यंशेन वर्तनम्  ५९
कुक्कुटाराडशिरः प्रोक्त विस्तारार्धप्रवर्तितम्
चन्द्रखराडनिभं प्रोक्तं विस्तारात्त्र्यंशवर्तितम्  ६०
बुद्बुदाभं शिरस्सार्धत्र्यंशेनाष्टविभाजिते
एतानि सर्वलिङ्गानां सनातनशिरांसि हि  ६१
आयादिशुभसंयुक्तं लिङ्गं सर्वार्थसाधकम्
अशुभे त्वशुभं विद्यात्तदर्थमुपरि न्यसेत्  ६२
एकहस्तेऽङ्गुलं स्याच्च द्वित्रिहस्ते त्रिमात्रकम्
चतुष्पञ्चकरे पञ्च षट्सप्तसु च सप्तकम्  ६३
वसुनन्दकरे नन्दमात्रमानाधिकं मतम्
शिरोवर्तनभागे तु चतुर्थे वा षडंशके  ६४
एकं द्वयं त्रयं दद्याद्ब्रह्मभागात्क्रमेण तु
शिरोवर्तनभागस्य त्र्यंशं पूजांशकोपरि  ६५
लिङ्गायामेऽथवारोप्य षड्भागे तु तदुच्छ्रये
एकांशं योजयेद्धीमांल्लिङ्गे द्व्यंशं तु मध्यमे  ६६
त्रिभागमुत्तमे लिङ्गे योजयेद्वा द्विजोत्तमाः
केवलं वा शिरोमानमधिरोप्य विवर्तयेत्  ६७
शिरसा मिश्रितं भागं पार्श्वयोरवलम्ब्य च
वृत्तद्वयं तु तन्मानादुभयोः पार्श्वयोर्नयेत्  ६८
ऊर्ध्वदेशे शिरोमध्ये तृतीयं मराडलं न्यसेत्
मराडलैश्च त्रिभिर्मत्स्यद्वयमत्रोपजायते  ६९
तन्मत्स्याननपुच्छस्थसूत्रयोर्यत्र सङ्गतिः
तत्र स्थित्वा त्रिभिर्वास्य वर्तनीयं शिरश्शुभम्  ७०
जातिलिङ्गविभेदेन शिरश्च द्विविधं मतम्
छत्राकारं तु विप्राणां कुक्कुटाराडनिभं नृपे  ७१
वैश्यानामर्धचन्द्राभं शूद्राणां त्रपुषं भवेत्

अपरं चन्द्रमप्यन्यलिङ्गभेदेन कथ्यते ७२
लिङ्गव्यासे विकारांशे व्योमद्वित्र्यब्धिभिः क्रमात्
चतुर्विधं स्याच्छत्राभं तत्राद्ये समलिङ्गके ७३
शैवाधिक्ये तृतीयं स्याच्चतुर्थं वर्धमानके
अन्योऽन्यसङ्करस्त्वेषामशुभाय प्रकल्पितः ७४
स्वायंभुवादिलिङ्गानां लक्षणं नेष्यते द्विजाः
किन्तु तेषां विभागं तु प्रसिद्धोक्त्या समाचरेत् ७५
सर्वलक्षणसंयुक्तं लिङ्गं सर्वार्थसाधकम्

इति कामिकाख्ये महातन्त्रे लिङ्गलक्षणविधिर्नाम द्विषष्टितमः पटलः

## अङ्कुरार्पणलक्षणविधिः

अथातस्संप्रवक्ष्यामि अङ्कुरार्पणलक्षणम्
सर्वमङ्गलकार्यादौ कर्तव्यं मङ्गलाङ्कुरम् १
उत्तमो मध्यमो नीचस्त्रिविधः परिकीर्तितः
नवाहे वाथ सप्ताहे पञ्चाहे त्रिदिनेऽपि वा २
सद्योऽङ्कुरार्पणं वापि शिवं संपूज्य चारभेत्
सायादिदिनमारभ्य देवानामङ्कुरार्पणम् ३
तद्दिने तु मनुष्याणां देवानामपि संमतम्
बीजानामधिपस्सोमो तस्माद्रात्रौ तु निर्वपेत् ४
दिवाकाले न कर्तव्यं कृतं चेत्कर्तृनाशनम्
सदनस्याग्रगे देशे वामे वाप्यग्रदक्षिणे ५
त्रिहस्तं तु समारभ्य कुर्याद्रुद्रकरान्तकम्
मण्डपं तत्र कर्तव्यं पूर्वसङ्कल्पितेऽथवा ६
ऐशे वा यागशालायां कुर्यात्तीर्थाङ्कुरार्पणम्
वितानध्वजसंयुक्तद्वारतोरणसंयुते ७

दर्भमालासमायुक्ते मुक्तादामसमन्विते
पुण्याहप्रोक्षणं कुर्यादथवास्त्रेण शोधयेत् ८
शरावः पालिकाश्चैव घटिकाश्च त्रिधा स्मृताः
सर्वैः कृतं यदुत्कृष्टं वर्गाभ्यां मध्यमं भवेत् ९
कनिष्ठिकं चैकवर्गैस्तेषां लक्षणमुच्यते
सौवर्णं राजतं ताम्रं निर्मितं मृण्मयं स्मृतम् १०
पालिकाननविस्तारो मन्वङ्गुलमुदाहृतम्
एकैकाङ्गुलहीनं स्यान्मध्यमे कन्यसेक्रमात् ११
विस्तारे सममुत्सेधः पादतारस्तदर्धतः
विस्तारे कौशिकांशेन परितश्शेष उच्यते १२
विस्तारस्य त्रिभागैकवर्तितं बिलमुच्यते
विस्तारयुगभागैको दण्डविस्तार इष्यते १३
घटिका कलशाकारा दण्डपादौ तु पूर्ववत्
विद्येश्वराङ्गुलः कुम्भविस्तारः पञ्चवक्त्रयुक् १४
पालिकार्धप्रमाणेन त्रिपादो वा शरावकम्
यथासम्भवमानं वा पालिकादि प्रकीर्तितम् १५
भिन्नं कृष्णञ्च सुषिरं दुर्गन्धं च पुराणकम्
छिन्नलिङ्गादिसंयुक्तं वर्जयेदङ्कुरार्पणे १६
शरावं ब्रह्मदैवत्यं पालिका विष्णुदेवता
घटिकैशानसंयुक्ता तेषु तानर्चयेद्गुरुः १७
पृथक्षोडशसंख्यातमुत्तमं परिकीर्तितम्
मध्यमं मनुसंख्यातं दशतः कन्यसं भवेत् १८
उत्तमक्रममेवं स्यादष्टषड्वेदसंख्यया
मध्यमक्रममुद्दिष्टं त्रिद्व्येकैः कन्यसं भवेत् १९
सर्वेषां स्थापनं वक्ष्ये श्रूयतां द्विजसत्तमाः
गोमयालेपनं कृत्वा पिष्टचूर्णैर्विचित्रयेत् २०

पञ्चगव्येन संप्रोक्ष्य सूत्रपातमथाचरेत्
सूत्रव्याप्तिर्दश प्राच्यां दशोदीच्यां तथैव च  २१
नव मध्ये च संगृह्य परितष्षोडशं त्यजेत्
चतुर्दिक्षु च चत्वारिद्वाराणि द्विपदानि च  २२
कोणे द्वादशसंख्यानि तेषु स्युः पालिकादयः
मध्ये नवपदे पद्मं पालिकां कोणदेशके  २३
घटिका द्वारवामे स्युः शरावा द्वारदक्षिणे
एवं द्वारेषु चान्येषु कल्पयेद्देशिकोत्तमः  २४
प्राक्सूत्रं वसुसंख्यातमुदक्सूत्रं तथैव च
मध्ये व्योमपदं हित्वा परितोऽष्टपदं त्यजेत्  २५
मध्यमे सोमकुम्भस्स्यात्पूर्वपङ्क्तिद्वये पुनः
पालिका मनुसंख्याता पश्चिमे घटिका मताः  २६
तदन्तरालषट्के च दक्षे दक्षशरावकाः
कुम्भपार्श्वे द्वयं प्रोक्तं पूर्वस्मिन् पश्चिमे द्विजाः  २७
श्रेष्ठमध्यममेवं स्यादुत्तमाधममुच्यते
प्राक्सूत्रं मुनिसंख्यातमुदक्सूत्रं तथैव च  २८
मध्ये वेदपदं मुक्त्वा तत्र कुम्भं निवेशयेत्
ईशानकोणादारभ्य पालिका बाह्यपङ्क्तिके  २९
राक्षस्यां दिशि कोणान्तं शरावाः परिकीर्तिताः
अन्तर्दिशासु द्वौ द्वौ वा वायावीशे परा मताः  ३०
उत्कृष्टकन्यसं प्रोक्तं मध्यमोत्तममुच्यते
पञ्चपञ्चपदं कृत्वा मध्यमे स्थापयेद्घटम्  ३१
चतुर्दिक्षु च कोणेषु स्थापयेत्पालिका बहिः
कुम्भबाह्ये च घटिकाः स्वान्तरेऽष्टौ प्रकीर्तिताः  ३२
शरावं स्थापयेद्बाह्ये पालिकानामथान्तरे
मध्यमे ज्येष्ठमाख्यातं मध्यमध्यमथोच्यते  ३३

षोढा प्रागग्रसूत्राणि तथैवोत्तरगानि च
मध्ये नवपदं कृत्वा ईशानं नैर्ऋतं विना ३४
पालिकाः पञ्च पूर्वस्थाः पश्चिमस्थाश्शरावकाः
दक्षिणे त्रितये वामे घटिकाः षड्व्यवस्थिताः ३५
अन्तरीशानदेशे तु पालिकैका व्यवस्थिता
तथैव नैर्ऋते देशे शरावस्सुव्यवस्थितः ३६
षोडशांशं ततः कृत्वा मध्ये वेदैर्व्यवस्थिताः
पालिका घटिका चैव शरावश्च यथाक्रमात् ३७
ईशानकोणादारभ्य वह्न्यन्तास्समुदीरिताः
अनेनैव क्रमेणैव वह्न्याद्रिषु च विन्यसेत् ३८
कृत्वा नवपदं मध्ये सोमकुम्भो व्यवस्थितः
पूर्ववत्पालिकाद्यं तु सर्वमारभ्य विन्यसेत् ३९
अवशिष्टं बहिस्सोमे कन्यसाद्यं प्रकीर्तितम्
प्राग्वन्नवपदं कृत्वा द्वारे पूर्वत्र पश्चिमे ४०
ईशानकोणादारभ्य पालिकाद्यं तु विन्यसेत्
एतत्कन्यसमध्यं स्यात्ततः कन्यसकन्यसः ४१
कृत्वा नवपदं चापि त्वजेत्कोणचतुष्टयम्
मध्ये कुम्भं च पूर्वादिपालिकादींश्च विन्यसेत् ४२
एवं न्यासक्रमं प्रोक्तं तत्क्रिया कथ्यतेऽधुना
स्थण्डिलं कारयेद्विद्वानष्टद्रोणेन शालिका ४३
तदर्धं मध्यमं प्रोक्तं तदर्धमधमं भवेत्
शिवकुम्भोक्तवत्कुम्भे प्रस्थं वा प्रतिपालिका ४४
तन्मध्ये विलिखेत्पद्मं साष्टपत्रं सकर्णिकम्
तदर्धं तण्डुलोपेतं तिललाजसमन्वितम् ४५
दर्भैः पुष्पैः परिस्तीर्य तन्मध्ये स्थापयेद्घटम्
द्रोणेनार्धेन वा पूर्णं कुम्भसंख्यासमन्वितम् ४६

ससूत्रं सपिधानं च सकूर्चं वारिसंयुतम्
सौवर्णं चन्द्रबिम्बं स्यात्सद्वस्त्रवदनान्वितम्  ४७
तन्मध्ये विन्यसेदिन्दुं तन्मन्त्रेण शिवद्विजाः
पायसं दापयेद्विद्वान् ताम्बूलं दापयेत्ततः  ४८
ईशानेन तु मन्त्रेण पालिकादीनि विन्यसेत्
दर्भैः कुशैः पलाशैर्वा निश्छिद्रं सुषिरं नयेत्  ४९
शुद्धदेशोत्थमृद्भिस्तु पालिकादीनि पूरयेत्
द्रव्याणि वापयेत्पश्चात्पयसा भावितानि वै  ५०
तिलसर्षपमुद्गांश्च माषशिम्बाढकानि च
कुलुत्थं सप्तबीजानि वापयेदुत्तमस्य तु  ५१
मुद्गमाषकुलुत्थं च तिलं च सर्षपं तथा
एवं तु मध्यमं प्रोक्तं कन्यसं तिलसर्षपम्  ५२
अधमं त्वेवमाख्यातमथवान्यमिहोच्यते
तिलसर्षपमुद्गांश्च माषशिम्बकुलुत्थकान्  ५३
शालिप्रियंग्वपामार्गयवश्याममिहोच्यते
अथवान्यप्रकारेण द्रव्यलक्षणमुच्यते  ५४
तिलसर्षपमुद्गांश्च ततो माषकुलुत्थकम्
निष्पावशाल्यपामार्गशिम्बाव्रीह्याढकास्स्मृताः  ५५
श्यामगोधूमसस्येन्द्रवैणवाः परिकीर्तिताः
पयसा भावितान्यत्र निर्वपेद्धृदयेन तु  ५६
अङ्कुरा वर्धनीयास्स्युर्यथा शोभावहा द्विजाः
वापयेद्बीजमुख्येन प्राङ्मुखो वाप्युदङ्मुखः  ५७
तत्कुम्भस्थजलेनैव पालिकादीनि विन्यसेत्
कुम्भाम्भश्शोषणात्पूर्वं गन्धतोयेन पूरयेत्  ५८
नित्यं संपूज्य हविषा दापयेत्तद्दिनान्तकम्
निर्दिष्टदिवसे प्राप्ते सोममुद्वासयेत्सुधीः  ५९

निर्वापान्ते पिधायैव स्मृत्या गुप्तं निधापयेत्
अङ्कुरास्तु सिताश्शस्ताः कोमला ऊर्ध्वगामिनः ६०
कृष्णं च धूम्रवर्णं च पिङ्गलं श्यामलं तथा
तिर्यग्गतं च कुब्जं च वर्जयेच्छुद्धकर्मणि ६१
शान्तिहोमं ततः कुर्यात्तन्निवृत्यर्थमेव च
तीर्थाङ्कुरस्य कर्तव्यं ग्रामादीनां प्रदक्षिणम् ६२
गृहीतमृत्समोपेतं पालिकादिसमन्वितम्
त्रिशूलेन समोपेतं कुन्दाल्या च समन्वितम् ६३
चण्डेश्वरसमोपेतं सर्वालंकारसंयुतम्
अन्येषामपि सर्वेषां वर्जयेद्वा प्रदक्षिणम् ६४
मृत्संग्रहादौ कुर्याद्वा न कुर्याद्भ्रमणक्रियाम्
नदीतीरे तटाके वा वने पुष्पवनेऽपि वा ६५
दीर्धिकासेतुबन्धादौ विधिना मृदमाहरेत्
प्रोक्षयेद्भूतलं सम्यक् शिवतोयेन बुद्धिमान् ६६
आवाहयेत्ततो भूमिं गन्धाद्यैरर्चयेद्धृदा
परितो लोकपानिष्ट्वा शस्त्रमन्त्रेण पूजयेत् ६७
शस्त्रेण निखनेद्भूमिं त्रिः खात्वा चोत्तरामुखः
मृदं संगृह्य वामेन पूरयेत्स्थलिकान्तरम् ६८
गन्धादिभिस्समभ्यर्च्य परिवारजनैस्तु वा
वाह्वयित्वा मृदं पश्चात्प्रासादाद्यं प्रवेशयेत् ६९
पालिकाद्यैस्त्रिभिश्श्रेष्ठं द्वाभ्यां मध्यममुच्यते
अधमं चैकवर्गेण कर्तव्या चाङ्कुरक्रिया ७०
उक्तालाभे तदासन्ने काले सद्योऽङ्कुरार्पणम्
प्रसूनं नालिकेरस्य दूर्वापुष्पाक्षतान्वितम् ७१
प्रक्षिपेत्पालिकामध्ये बीजमन्त्रमनुस्मरन्
घटिकासु शरावेषु त्रिषु वा चाङ्कुरार्पणम् ७२

इति कामिकाख्ये महातन्त्रे अङ्कुरार्पणविधिर्नाम त्रिषष्टितमः पटलः

## लिङ्गप्रतिष्ठाविधिपटलः

अथेदानीं प्रतिष्ठां तु लिङ्गस्य शृणुत द्विजाः
पूर्वोक्तविधिना कालं कल्पयेत्स्थापनादिके १
यमाश्लेषाग्निशूर्पाणि श्रविष्ठां चैव वारुणम्
ज्येष्ठां च त्रीणि पूर्वाणि वर्जयेत्स्थापनादिके २
चतुर्थी चाष्टमी भूतपञ्चदश्यशुभा मता
नेष्टौ कुजशनी ज्ञेयौ शुभयुक्तौ शुभप्रदौ ३
राशयश्चरवर्ज्यास्स्युश्शेषं पूर्ववदीरितम्
अङ्कुरार्पणकार्यं तु प्रागेव विधिना चरेत् ४
हर्म्यादौ मण्टपं कुर्याद्यागार्थं वाग्रपार्श्वयोः
उत्तरे चैव हस्तादित्रयस्याष्टाङ्गदिक्करैः ५
यववृद्ध्या तदन्येषां तस्मादर्कादितोऽपि वा
त्रिभागेन तथैव स्यादुत्तरे स्नानमण्डपम् ६
वेदिकासममानं वा स्नानयोग्यं यथा भवेत्
तथा मेखलया युक्तं श्वभ्रयुक्शोभितं भवेत् ७
अष्टाङ्गुलोच्छ्रिता वेदी मध्यभागे चतुष्करा
हस्तादिके हस्तवृद्ध्या तदन्येषां प्रकल्पयेत् ८
हस्तद्वयविशाला वा वेदिका हस्तनिर्मिता
वेदिमानेन कूटं स्यात्प्रपा वा तस्य बाह्यतः ९
अथवा सर्वदेशे तु प्रपा स्यादतिविस्तरा
सर्वतो वाथ कूटं स्यादल्पे शोभाबलं यथा १०
योग्या हस्तमिता वेदी लिङ्गे स्यात्कन्यसत्रये
द्वादशस्तम्भसंयुक्ता स्याल्लिङ्गे मध्यमत्रये ११
गात्रैर्विंशतिभिर्युक्ता वेदी स्यादुत्तमत्रये

तत्तद्भक्तिप्रमाणेन बाह्यपङ्क्तीः प्रकल्पयेत् १२
एवं पङ्क्तियुता चाद्ये ततः कुण्डाष्टकं भवेत्
द्विभक्तिर्मध्यमे ज्ञेया चतुर्विंशतिकुण्डके १३
त्रिभक्तिसंयुताप्यष्टचत्वारिंशच्च कुण्डकम्
ज्येष्ठलिङ्गत्रयं वा स्यात् द्वात्रिंशत्कुण्डसंयुतम् १४
भ्रमन्ति बाह्यतः कुर्याद्यथाशोभांशमानतः
प्राधानिकं तदन्यत्स्याच्चक्रे चानन्तरे मतम् १५
सर्वत्र नवकुण्डं वा लिङ्गे कन्यसकन्यसे
पञ्चकुण्डमथैकं वा चललिङ्गेऽपि कथ्यते १६
वेदिभागशशाङ्कार्धत्र्यश्रवृत्तानि पञ्चसु
षडश्राष्टाब्जकोणानि दिक्ष्वन्यासु निवेशयेत् १७
वृत्तं प्रधानमेवं स्याच्चतुरश्रं तु वा भवेत्
अन्तरावरणे त्वेवं बाह्ये तु चतुरश्रकम् १८
वृत्तं वापि प्रकर्तव्यं सर्वत्रैकमथापि वा
प्रागुक्तविधिना सर्वमत्रानुक्तं समाचरेत् १९
चतुर्द्वारसमायुक्तश्चतुस्तोरणभूषितः
मङ्गलाष्टकसंयुक्तो मङ्गलाङ्कुरशोभितः २०
नवध्वजसमायुक्तो दर्भमालादिभूषितः
अयं तु मण्टपो लिङ्गे प्रतिमायां विशेषतः २१
सर्वकर्मसु शस्तं स्यादुत्सवादौ विशेषतः
अस्य प्रागुक्तदेशे तु लक्षणोद्धारमण्टपम् २२
कृत्वा तत्र नयेल्लक्ष्म शुद्धदेशेऽथवा भवेत्
शिलावालुकतोयाद्यैर्घर्षयेल्लिङ्गपिण्डके २३
तथा चाकारशुद्धिं च कुर्याल्लिङ्गस्य देशिकः
मृद्भिः कषायवर्गेण गोमूत्रेणोदकैस्तथा २४
गोमयेन ततोऽम्भोभिर्गन्धवद्भिस्सुपावनैः

प्रणवेनास्त्रमन्त्रेण हुंफट्प्रणतियोगिना २५
ततस्सामान्यमन्त्रेण पूजयेत्स्थाणुनापि वा
लिङ्गपिण्डं समावेष्ट्य कुशवस्त्रस्रगादिभिः २६
मण्टपे स्थण्डिलं कुर्यादष्टद्रोणेन शालिना
तिलतण्डुललाजैश्च दर्भैः पुष्पैः परिस्तरेत् २७
स्थण्डिले शाययेल्लिङ्गं सपीठं पूर्वमस्तकम्
रक्तवस्त्रेण संछाद्य यजेद्गन्धादिभिर्हृदा २८
रुद्रभागसमायामं चतुष्षष्ट्यंशकं भजेत्
एकांशसूत्रविस्तारस्तथा गम्भीर इष्यते २९
तदर्धेनाधमो ज्ञेयस्तत्तारेऽष्टांशके कृते
नवधा सूत्रविस्तारस्सर्वलिङ्गेषु कीर्तितः ३०
कुङ्कुमात्तेन सूत्रेण नवधा च विभज्य च
षड्भिस्तु लक्षणोद्धारस्त्वधोभागे यथा भवेत् ३१
मुखनासाललाटानां भेदे ग्रीवोर्ध्वतो भवेत्
तत्र नेष्टस्तु यस्तस्मादधो लक्ष्म विलक्षयेत् ३२
लिङ्गायामे दिनांशे तु लक्ष्मविस्तृतिरंशतः
पृथ्वी निम्ना च तद्रेखा विस्तृतेर्नवमांशतः ३३
लक्ष्मसूत्रार्धमानं तु पक्षसूत्रावतारणम्
तत्खातसमवैपुल्यं कर्तव्यं शोभनं यथा ३४
पक्षक्षेत्रे वसुच्छिन्ने षड्भागपरिवर्तनात्
नवभागान्मुनीनां हि दत्वा भागद्वयं त्वधः ३५
भागद्वयेन सार्धेन वह्निभक्तेर्विवर्धनम्
विकारभक्तेऽधस्ताद्वा त्यक्त्वा भागद्वयं तथा ३६
नवभिर्भानुभिर्भक्ते पक्षं वाग्निक्रमेण वा
अथवान्यल्लक्ष्म तस्यां नवभागान्कृतं समम् ३७
भागं षष्ठं गुणीकृत्य भागत्यागे त्रिधा त्वयम्

यवार्धकं द्विभागे तु वर्तयेल्लक्ष्म शोभनम् ३८
कर्णकूटादधश्चैकां ब्रह्मरेखां नयेत्क्रमात्
यावत्तु वैष्णवो भागस्सूत्रमूले गजाक्षके ३९
अधो द्वितीयभागो वा यवार्धाकारलक्षणम्
पक्षसूत्रविनिर्मुक्तमुभयं त्विह कीर्तितम् ४०
रेखात्रयं तु कर्तव्यं सर्वासामनुकूलतः
षोडशांशे चतुर्भागं त्यक्त्वोर्ध्वे द्वादशांशकम् ४१
सपद्मकुड्मलं नालमधोभागद्वयं विना
रुद्रांशोच्चं त्रिधा कृत्वा चोर्ध्वभागं त्यजेत् क्रमात् ४२
पक्षांशं दशधा कृत्वा व्योमांशं मुकुलं भवेत्
विस्तारस्तत्समो ज्ञेयो नालं तु वसुभागिकम् ४३
मुकुलात्तु समारभ्य पक्षरेखे विवर्तयेत्
मणिरेखे तु विज्ञेये तयोःपृष्ठे तु सङ्गतिः ४४
रुद्रांशे रुद्रभागे तु गुणांशमुपरि न्यसेत्
एकेन मुकुलीनालं सप्तांशमितिकीर्तितम् ४५
रुद्रांशं नवधा कृत्वा चोर्ध्वे भागत्रयं त्यजेत्
मुकुलं चैकभागेन नालं पञ्चांशतो भवेत् ४६
षोडशांशे पुनस्तस्मिन्स्त्यजेदूर्ध्वं चतुष्टयम्
मुकुलं चैकभागेन दशांशं नालमिष्यते ४७
द्वादशांशे तु पूजांशं त्यक्त्वोर्ध्वेऽशद्वयं ततः
एकांशं मुकुलं ज्ञेयं वस्वंशं नालमिष्यते ४८
नालायाममधस्तिर्यक्कृत्वा मुकुलमूलतः
पार्श्वयोरुभयोस्सूत्रं यथा ऋजु भवेद्द्विजाः ४९
अधश्चोर्ध्वद्वयोः पार्श्वे चतुरश्रद्वयं तथा
निष्पाद्य बहिरूर्ध्वस्थं कोणे हस्तं विधाय च ५०
पद्मकुड्मलमारभ्य नालान्तं भ्रामयेद्बहिः

नालायामं तु नवधा कृत्वा चैकैकवर्धनम्  ५१
तस्मान्नवप्रमाणेन नवधा वर्धनं भवेत्
नालान्तरेऽष्टधा भक्ते भागार्धादर्धवर्धितम्  ५२
चतुर्मानं भवेल्लक्ष्म पद्मसूत्रान्तरे द्विजाः
पद्मसूत्रं च कर्तव्यं सूत्रं मुकुलमूलतः  ५३
कुड्मलं वा गजाक्षं वा लिङ्गाग्रं पद्मसन्निभम्
कदलीमुकुलाकारं शूलाग्राश्वत्थपत्रकम्  ५४
लोकपालायुधास्त्राग्रं शिवास्त्राग्रं तु वा भवेत्
सार्वदेशिकलिङ्गस्य लक्ष्मेत्थं कीर्तितं द्विजाः  ५५
नैतद्रत्नमये लिङ्गे न लोहेऽपि च लोहितम्
न बाणलिङ्गे लौहे वा नदीप्रस्रवणोद्भवे  ५६
स्वाकारलक्ष्मातीतेषु तेजोरत्नेषु भास्वरम्
रत्नजे लोहजे लक्ष्म विधेयं वा न वा भवेत्  ५७
रन्ध्रमध्ये भगाकारमूर्ध्वाग्रं लक्ष्मपीठकम्
एवं लक्ष्म लिखेद्विद्वान्गुरुर्हेमशलाकया  ५८
अक्षिलोहसमोपेतमस्त्रमन्त्रमनुस्मरम्
शिल्पशास्त्रान्तराभ्यां तु ताभ्यां वा लक्ष्म वा लिखेत्  ५९
तत्तस्मादेव शास्त्रेण सममेव विवर्तयेत्
रेखा हीनाधिका हन्याद्यजमानं सशिल्पिनम्  ६०
राजानं राष्ट्रसहितं समं तस्माद्विवर्तयेत्
आचार्यो मन्त्रयोग्यस्तु स्थपतिः कर्म कारयेत्  ६१
शिल्पिनं तु विसृज्याथ नयेत्तत्स्थण्डिलान्तरम्
ताम्रके कांस्यपात्रे वा मध्वाज्याभ्यां समन्विते  ६२
सहेमं स्पर्शयेद्विद्वान्नेत्रमन्त्रमनुस्मरन्
धान्यराशिं ततो गां च सवत्सां ब्राह्मणांस्तथा  ६३
कन्या दानक्रमेणैव ब्रह्मभिर्दर्शयेद्गुरुः

प्रच्छन्नपटमानीय स्थाने स्थाने नयेच्छिवम् ६४
दारुपीठे कुशोर्ध्वे वा पूर्ववत्स्थापनं भवेत्
तस्योत्तरे भवान्यास्तु स्थापनं तत्र वा पुनः ६५
संपूज्य गन्धपुष्पाद्यैरलङ्कृत्य विशेषतः
देवं देवीं समारोप्य रथादावप्रमादतः ६६
नानाविधैरलङ्कारैर्नयेद्वास्तुप्रदक्षिणम्
प्रासादं वा महाभागा विशेषः कश्चिदुच्यते ६७
अर्वाक् सप्तदिनाल्लिङ्गे पिण्डिकां च विधाय च
प्रतिष्ठादिवसाल्लिङ्गं सन्धाप्य च शिलान्वितम् ६८
पीठं संयोज्य कृत्वाष्टबन्धं सर्वां क्रियां ततः
कुर्यात्स्नपनमादौ तु सहस्रादिषु सम्भवैः ६९
संपूज्य गन्धपुष्पाद्यैः कृत्वा ग्रामप्रदक्षिणम्
जलाधिवासनार्थं तु स्नापयेत्पञ्चगव्यतः ७०
परीक्ष्य लिङ्गं पीठं च वस्त्राद्यैः पूजयेत्ततः
कौतुकं बन्धयित्वा तु लिङ्गपीठे क्रमेण तु ७१
लम्बकूर्चसमायुक्तं वस्त्रैराच्छाद्य सर्वतः
स्थण्डिलं मण्डले कृत्वा शयनं तत्र कल्पयेत् ७२
तन्मध्ये विन्यसेत्कुम्भं शिवाख्यं वर्धनीयुतम्
अन्यत्सर्वं समानं स्याद्गर्भाग्रे स्थण्डिलं मतम् ७३
अतः प्रसङ्गमुत्सृज्य प्रकृतं वच्मि साम्प्रतम्
जलेऽधिवासयेद्देवं द्वित्रिरात्रं सपीठकम् ७४
एकरात्रं दिवारात्रं याममात्रमथापि वा
नाभिमात्रोदके कृत्वा प्रपामण्डपमण्डिताम् ७५
जलतीरे विधायैवं स्थण्डिलद्वितयं क्रमात्
भद्रपीठे समारोप्य देवं देवीं क्रमेण तु ७६
आच्छाद्य नववस्त्रेण लम्बकूर्चसमन्वितम्

अभितोऽष्ट घटान् न्यस्त्वा शम्भोर्देव्यास्समाहितः ७७
प्रधानकूर्चवस्त्राढ्यान् हेमयुक्तान् सलोकपान्
जलमध्ये न्यसेत्पश्चाद्देवं देवीं घटांश्च तान् ७८
शाययेत्फलकादौ तु प्राक्शिरस्कोर्ध्ववक्त्रकम्
विसृज्य शिल्पिनं पश्चात्प्रोक्षिते यागमण्टपे ७९
ब्राह्मणान् भोजयित्वा तु गोमयेनोपलेपयेत्
पुण्याहं वाचयित्वा तु वास्तुहोमं समाचरेत् ८०
मण्टपालंकृतिं कुर्यात्प्रागुक्तविधिना सह
कृतस्नानश्शिवाचार्यश्शुद्धवस्त्रोत्तरीयकः ८१
सोष्णीषो धृतपञ्चाङ्गभूषणस्समलंकृतः
मूर्तिपा भूषितास्तद्वत्किन्तूष्णीषविवर्जिताः ८२
संप्राप्य यागस्थानं तु सामान्यार्घ्यकरो गुरुः
द्वाराण्यभ्यर्च्य पूर्वादिद्वारपालयुतानि च ८३
पूर्वे नन्दिमहाकालौ याम्ये भृङ्गिविनायकौ
वारुणे वृषभस्कन्दौ देवीचण्डौ तु सौम्यके ८४
भद्रो विजयसंज्ञस्तु विजृम्भो लोहितः क्रमात्
तोरणे पूर्वमारभ्य द्वारे शान्त्यादिकाः कलाः ८५
अभ्यर्च्य गन्धपुष्पाद्यैस्सद्यद्वारेण संविशेत्
विशुद्धकायो मन्त्रात्मा कृतान्तर्यजनो गुरुः ८६
कृतार्घ्यद्रव्यसंशुद्धिकर्महस्तात्मपूजनः
कृतपञ्चाङ्गभूषस्तु वास्तुपूजासमन्वितः ८७
कुम्भसंस्कारयुक् क्षिप्तविकिरश्रीसपर्ययः
शिवकुम्भास्त्रयजनो लोकपालार्चनान्वितः ८८
स्वाज्ञापनसमायुक्तः कुम्भास्त्रभ्रमणान्वितः
कृतकुम्भास्त्रसंपूज्यस्तदध्येषणसंयुतः ८९
कुण्डसंस्कारसंयुक्तः शिवाग्निजननान्वितः

जलाधिवासनस्थानादानीय परमेश्वरम्  ९०
मराटपे स्नपनाख्ये तु प्राग्वत्स्नपनमारभेत्
मृद्भिः कषायवर्गेण पञ्चगव्यफलोदकैः  ९१
पुष्पोदैः पत्रतोयैश्च गन्धोदैर्धातुतोयकैः
पञ्चामृतैः कुशोदैर्वा स्नापयेद्वृषभध्वजम्  ९२
एवमेव भवान्याश्च कुर्यात्स्नपनमुत्तमम्
आच्छाद्य वस्त्रयुग्मेन गन्धाद्यैरर्चयेत्क्रमात्  ९३
कृत्वा कौतुकसूत्रं तु शम्भोर्देव्याः क्रमेण तु
शय्यां च कल्पयेद्विद्वान् शालितराडुलकादिभिः  ९४
अष्टद्रोणैस्सशालीभिस्तदर्धैस्तराडुलैरपि
तिलैस्तदर्धैर्लाजैश्च दर्भैः पुष्पैः परिस्तरेत्  ९५
चर्मजं रोमजं तूर्ध्वं मुराडजं चाराडजं तथा
कार्पासजं क्रमेणैव कल्पयेदुपधानकम्  ९६
अलाभे पञ्चवस्त्रैस्तु मिश्रैश्शय्यां प्रकल्पयेत्
सम्पूज्यासनमन्त्रैश्च शक्तिं शय्याधिपां न्यसेत्  ९७
शिबिकादौ समारोप्य भवान्यानुगतं नयेत्
द्वारदेशे तु संप्राप्ते दद्यादर्घ्यं क्रमेण तु  ९८
आरोप्य शयने देवं प्राङ्मस्तकसमन्विताम्
लिङ्गस्योत्तरतो देवीं क्रियाख्यां पीठविग्रहाम्  ९९
लिङ्गमूले न्यसेद्देवीं नवगर्तसमन्वितम्
मूर्तिमूर्तीश्वरन्यासं तत्वतत्वेश्वरान्वितम्  १००
ब्रह्मविष्णुहरा एव लिङ्गे तत्वत्रयाधिपाः
आत्मविद्याशिवाख्यं तु तत्वत्रयमितीरितम्  १०१
क्ष्मावह्नियजमानार्कजलवायुनिशाकराः
व्योमान्ता मूर्तयश्चाष्टौ न्यस्तव्याः प्रतिखराडकम्  १०२
शर्वः पशुपतिश्चोग्रो रुद्रश्चैव भवस्तथा

ईशानश्च महादेवो भीमश्चेत्यष्टमूर्तिपाः १०३
पञ्चमूर्त्यात्मके न्यासे द्दमावारिदहनानिलाः
खञ्चेति मूर्तयो लिङ्गे ब्रह्माद्या मूर्तिपा मताः १०४
लिङ्गपीठे शिलानां च व्याप्तिस्तु आदितः क्रमात्
शिवशक्तिमनीषान्तं त्रिखराडकल्पनं पुनः १०५
विद्याशक्तिशिवप्रान्तं मायासादेशशक्तिगम्
शब्दचित्तमनीषान्तं लिङ्गे पीठेऽश्मनि क्रमात् १०६
क्रिया ज्ञानं तथेच्छा च त्रितत्वाधीश्वरा मताः
धारिका दीप्तिमत्युग्रा ज्योत्स्ना चेता बलोत्कटा १०७
धात्री बिभ्यतिदेव्यश्च मूर्तिपाः परिकीर्तिताः
पञ्चमूर्त्यात्मके न्यासे वामाद्या मूर्तिपा मताः १०८
वामा ज्येष्ठा क्रिया ज्ञानी चेच्छा चेति प्रकीर्तिताः
संपूज्य गन्धपुष्पाद्यैर्देवानध्वपतीन्क्रमात् १०९
अव्यक्तमूर्तिं ब्रह्माणि विद्यादेहं शिवं ततः
शिवाङ्गानि च सम्पूज्य गन्धपुष्पादिभिः क्रमात् ११०
आच्छाद्य नववस्त्रेण प्रतिभागं च पूजयेत्
वेद्यूर्ध्वे परितः कुम्भान्नयसेद्विश्वेश्वरात्मकान् १११
निद्राकुम्भं शिरोदेशे वर्धनीमुत्तरे न्यसेत्
कुम्भान् वस्त्रैस्समावेष्ट्य हेमपद्मसमन्वितान् ११२
पिधानकूर्चसंयुक्तान् पल्लवैरुपशोभितान्
निवेद्य भूरिनैवेद्यं ताम्बूलाद्यं च मन्त्रवत् ११३
गुरुमूर्तिधरैस्सार्धं होमकर्म समारभेत्
मूर्तिपाश्शिवशास्त्रज्ञाः पञ्चगोचरसम्भवाः ११४
आचार्यारब्धतन्त्रोक्तकर्मक्रमविशारदाः
प्रतिष्ठामन्त्रतन्त्रज्ञाः पुत्रपौत्रादयो गुरोः ११५
स्वमूर्तिरूपसामर्थ्यव्याप्तिसन्धानयोगिनः

चतुर्वेदविदो विप्राश्चतुर्दिक्षु व्यवस्थिताः ११६
पठन्तो देवतालिङ्गमन्त्रान् सन्निधिहेतवे
भवन्ति मूर्तिपा नाम संस्कृताश्शिवशम्बरैः ११७
विदिक्षु चान्नलाजांश्च तिलान् मधुलवांस्तथा
यागान्तरायविध्वंसं कुर्वन्त्यमिततेजसः ११८
गुरुणा चोदिता मूर्तिधारकाश्शिवसंस्कृताः
प्रधानाग्नेस्समानीय स्वानंशान् स्वायते न्यसेत् ११९
समिदाज्यान्नलाजांश्च तिलान् मधुलवांस्तथा
पालाशोदुम्बराश्वत्थवटाः पूर्वादिदिक्षु च १२०
शमीखदिरपालाशश्रीवृक्षास्त्वग्निकोणतः
प्रधानस्य पलाशस्तु सर्वं पालाशमेव वा १२१
समिदाज्यं च कुण्डानां स्वस्वदिक्षु यथाक्रमम्
सहस्रं वा तदर्धं वा तदर्धार्धमथापि वा १२२
शतमष्टोत्तरं वापि मूलेन जुहुयात्ततः
मूलाद्दशांशतोऽङ्गानां समं वाथ तदर्धकम् १२३
मूर्तिपाहुतिरुद्दिष्टा ब्रह्माङ्गैरष्टदिक्षु च
आग्नेयैशाननैर्ऋत्यां वायुदिक्षु यथाक्रमम् १२४
ईशानं तु प्रधाने वा नेत्रास्त्रे मध्यकुण्डके
सन्तर्प्य मन्त्रान् कुम्भान्ते साधयेयुरथो परम् १२५
शान्तिकुम्भस्य स्रग्वारि शान्तिसान्निध्यकारणम्
प्रतिभागमधस्तेन प्रोक्षणं वै हि सत्तमाः १२६
संशोध्य सर्वे संहृत्य जपेयुर्निजशम्बरान्
दर्भस्पर्शस्ततो भागं शुद्धं संजायतेश्वरम् १२७
परतत्वमुपस्थाप्यं शोधयेयुस्ततः परम्
मूलाणुसंहितामन्त्रैराचार्यस्य जपादिकम् १२८
शतमर्धं तदर्धं वा दशसंख्यमथापि वा

मूर्तिमूर्तीशहोमं च तत्वतत्वेश्वरैस्सह  १२९
केवलेन घृतेनाथ सर्वद्रव्यैस्तिलैरथ
स्वमूर्तिरूपसामर्थ्याद्व्याप्तिसन्धानयोगिनः  १३०
मूर्तिपास्सर्वसन्धानयोगकृद्देशिकोत्तमाः
एवं संशोध्य ब्रह्मांशं विष्णवंशादिविशुद्धये  १३१
विधाय पूर्ववत्सर्वं होमसंख्याजपादिकम्
कुशमूलान्तराग्रैस्तु ब्रह्मभागादिकान् क्रमात्  १३२
स्पृशेयुर्मूर्तिपाः स्वीयदिक्स्थिता निजशम्बरैः
एवं पीठे शिलायां च होमाद्यं परिकल्पयेत्  १३३
क्रियाधाराख्यशक्तिभ्यां मूर्तिमूर्त्यधिपादिभिः
मनोन्मनीमनन्तं च क्रमेण परिकल्पयेत्  १३४
पीठोक्तमूलमूर्तीशशिलायां परिकल्पयेत्
प्रायश्चित्तमघोरेण कृत्वा चाष्टोत्तरं शतम्  १३५
भूमिदर्भतिलैः कृत्वा रक्षामस्त्रेण मन्त्रतः
बहिरन्तर्बलिं क्षिप्त्वा क्षेत्रपालबलिं क्षिपेत्  १३६
अदीक्षितस्तु यः कर्ता दीक्षयेत्तमिहान्तरे
ततः प्रभाते विमले देशिको मूर्तिपैस्सह  १३७
स्नानादिनित्यं निर्वृत्य सामान्यार्घ्यकरो गुरुः
संपूज्य द्वारपालादीन् समुत्थाप्य महेश्वरम्  १३८
देवीमुत्थाप्य मन्त्रज्ञः यजेद्गन्धादिभिस्सह
दत्वा पूर्णाहुतिं पश्चात्प्रविशेद्भवनं प्रभोः  १३९
पञ्चगव्येन संप्रोक्ष्य शिलां मध्ये तु विन्यसेत्
एकविंशतिभागे तु द्वारतारे तु मध्यमे  १४०
भागे षोढाकृते ब्रह्मसूत्रमध्यमसूत्रकम्
ब्रह्मवामैकभागार्धं शिवसूत्रमिति स्मृतम्  १४१
शिवस्य ब्रह्मणो मध्ये हरेरिन्द्रस्य मध्यमम्

शिवसूत्रप्रमाणं तु सौम्यसूत्रस्य पूर्वतः १४२
न्यस्त्वा तत्सन्धिमध्ये तु विन्यसेत्कशिलां गुरुः
प्रणवं प्रणतिं चोक्त्वा व्यापिनीति स्थिरेति च १४३
अचलेति ध्रुवेत्युच्चैर्मायागर्भं धराक्षरम्
स्वाहेत्यन्तं पदं चोक्त्वा स्थैर्यं सर्वगतं स्मरन् १४४
पद्मासनं तदारूढं सावष्टम्भं निरुध्य च
न्यसेद्रत्नौषधी लोहधातुबीजानि पूर्ववत् १४५
कूर्मं वा वृषभं वाथ हैमन्तेऽत्र विनिक्षिपेत्
विलिख्य चायसेनाथ श्वभ्रं कृत्वा पटावृतम् १४६
वर्मणास्त्रेण संरक्ष्य दिगीशेभ्यो बलिं क्षिपेत्
समाचम्य कृतन्यासो जुहुयादसिना शतम् १४७
देवं देवीं च सम्पूज्य समारोप्य रथादिके
द्वारप्रदेशे दत्वार्घ्यं स्पृष्ट्वा चाथोर्ध्वशाखकम् १४८
द्वारश्वभ्रान्तरावस्थे भद्रपीठे निवेशयेत्
स्थिरं भवेद्यथोत्पाद्यं श्वभ्रमस्त्रेण शोधयेत् १४९
यन्त्रेण विधृतं सम्यक् लम्बेन प्रगुणीकृतम्
समूर्तिभृद्गुरुश्वभ्रे ततस्तदवतारयेत् १५०
शक्तिशक्तिमतोर्ध्यायेन्न भेदो धर्मधर्मिणोः
लयान्तं मन्त्रमुच्चार्य सृष्टिमार्गेण विन्यसेत् १५१
नन्द्यावर्तशिलाः पश्चाच्चतस्रो वह्निन्कोणतः
धर्मादिमन्त्रैस्संयोज्य देवीमुत्सेधयेत्क्रियाम् १५२
आदौ प्रणवमुच्चार्य ह्रीङ्कारस्तदनन्तरम्
क्रियाशक्तिपदं पश्चाच्चतुर्थ्यन्तं मनोन्मनी १५३
पिण्डिकां च समायोज्य बन्धयेदष्टबन्धनैः
लाक्षागुलमधूच्छिष्टगुग्गुलूनां समांशतः १५४
एतेषामपि सर्वेषां संग्राह्यं सर्जरं समम्

इष्टकाचूर्णभागे वा पूर्वभागसमन्विते १५५
सर्वेषां पादतस्तैलं पादश्चिक्कणवद्भवेत्
सिकताभिः समापूर्य चान्तरं लिङ्गपीठयोः १५६
तदूर्ध्वे विन्यसेद्बन्धं विष्णुभागावसानकम्
शर्करा सर्जरांशं तु समं कृत्वा तु चूर्णयेत् १५७
माहिषं नवनीतं च मर्दयेद्देशिकोत्तमः
वजबन्धमिति श्लाघ्यं विवरे तं प्रयोजयेत् १५८
अष्टबन्धं ततः कृत्वा जतुगुग्गुलुसर्जयुक्
सद्मं च स्फटिकं चैव शर्करा गुरुविन्दकम् १५९
तैलं वा चाष्टमिश्रं वा दधि वा चिक्कणं बुधः
एवं पीठे समायोज्य तत्र न्यासं समारभेत् १६०
पुण्याहं वाचयित्वा तु लिङ्गपीठे तु शोधयेत्
शान्तिकुम्भस्थतोयैश्च देवेशमभिषेचयेत् १६१
शिल्प्यादिस्पर्शशान्त्यर्थं भवेदेतद्द्विजोत्तमाः
ईश्वरान्तानि तत्वानि तुर्यश्रे विन्यसेद्गुरुः १६२
शक्त्यन्तानि च विष्णवंशे शिवतत्त्वं शिवात्मके
त्रिषष्टिपदविन्यासं ब्राह्मे नव नव द्वयोः १६३
ज्ञादिकान्तानधोभागे सृष्ट्याद्यन्तांश्च मध्यमे
वृत्तभागे सदाकारमेवं वर्णप्रकल्पना १६४
कालाग्न्यादीश्वरान्तानि भुवनानि न्यसेद्गुरुः
सूक्ष्मादीन्यथ मध्ये तु विन्यसेदष्टसंख्यया १६५
निवृत्यादीनि वृत्ते स्युरेवं भुवनकल्पना
शक्त्यादिपुरुषान्ताश्च हृदादिकवचानिमान् १६६
मन्त्रान्ब्राह्मे हरावीशशस्त्रे वृत्ते शिवं न्यसेत्
लोकेशास्त्रगणेशानान् ब्राह्मे विद्येश्वरान् हरौ १६७
गर्भाण्युद्वृत्तभागे तु न्यसेन्मन्त्रान्नयसेत्क्रमात्

शान्त्यन्तं ब्रह्मणो भागे शान्त्यतीतं तु मध्यमे १६८
परमं निष्कलं बिन्दुं विन्यसेद्वृत्तभागके
आसनाणून्न्यसेत्पीठे लिङ्गमूर्तिगतान्न्यसेत् १६९
ज्ञानशक्तिं न्यसेल्लिङ्गे क्रियाख्यं पीठविग्रहे
मन्त्रानेतांस्तु पूर्वेद्युरधिवासे तु विन्यसेत् १७०
एवं मन्त्रांस्तु विन्यस्य कुम्भन्यासं समाचरेत्
कुम्भान् सर्वान् समानीय वेदिकोपरि संस्थितान् १७१
सर्वमंगलसंयुक्तं कृत्वा ग्रामप्रदक्षिणम्
स्थण्डिले त्वग्रक्लृप्ते तु पूर्ववद्विनिवेशयेत् १७२
कुम्भाद्बीजं समादाय लिङ्गमूर्धनि विन्यसेत्
गुरूपदिष्टकन्दादेर्मन्त्रमुच्चारयेच्छनैः १७३
नादिशक्तिमयं सूक्ष्मं घण्टानादविसर्पिणम्
कारणत्यागयोगेन ब्रह्मरन्ध्राद्विनिर्गतम् १७४
दिवाकरसहस्राभं विद्युत्सङ्घसमप्रभम्
स्फुरद्रत्नवितानेन प्रदीपितदिगम्बरम् १७५
मन्त्रेण मनसा भिन्नं प्राप्तानन्दरसोदयम्
सृष्टिमार्गप्रवृत्यन्तमिन्दुसन्ततिसन्निभम् १७६
तेजोबिम्बं ललाटस्थं घण्टिकाद्वारमानयेत्
सुषुम्नानिर्गतं ध्यात्वा स्फुरत्तारकसर्पिणम् १७७
विशन्तं ब्रह्मरन्ध्रेण सकलौ व्यापकौ न्यसेत्
एवं सर्वत्र सान्निध्यं जीवन्यासेन कारयेत् १७८
अनेनैव प्रकारेण पीठे शक्तिं च विन्यसेत्
जलेन कुम्भवर्धन्योः स्नापयेल्लिङ्गपिण्डके १७९
विद्येश्वरघटस्थाणून् पीठे पूर्वादितो न्यसेत्
तत्तत्कुम्भस्थतोयेन स्नापयेत्परमेश्वरम् १८०
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी

तावदत्र त्वया देव स्थातव्यमिह सन्निधौ  १८१
संप्राप्तप्रार्थनोऽत्रैव देव्याश्चैवं समाचरेत्
प्रतिष्ठादिवसे ब्रह्मशिलासंस्थापनं तु वा  १८२
तां पूर्वं स्थापयित्वा तु धाम्नि कृत्वा स्थलान्वितम्
लिङ्गस्थानं च कल्पोक्तं सर्वं वापि समाचरेत्  १८३
धाम्नस्संस्थापनात्पूर्वं लिङ्गस्य स्थापनं नयेत्
विधानमेतत्सामान्यं बाणादौ तु शिलामये  १८४
आचार्यो मूर्तिपैस्सार्धं निस्सृत्य भवनात्प्रभोः
यजमानेन संक्लृप्तां गृह्णीयाद्दक्षिणां गुरुः  १८५
सा स्याच्चतुर्विधा शास्त्रे श्रेष्ठा मध्याधमापरा
षष्टिनिष्कं समारभ्य पञ्चनिष्काः क्रमेण तु  १८६
काञ्चनस्य गुरोः पञ्चनिष्कान्ता दक्षिणा मताः
गोभूहिरण्यसद्वेश्मवाहनाच्छादनादिकम्  १८७
दासीदासादिकं सर्वं गुरवे सन्निवेदयेत्
लम्बस्थानोक्तमार्गेण चान्येषां दक्षिणा भवेत्  १८८
गृहीतदक्षिणस्तुष्टः प्रतिष्ठापुण्यमर्थिने
यजमानाय सन्दद्यात्सोदकं पुष्पसंयुतम्  १८९
चन्दनाक्षतसंयुक्तं सकुशं दक्षिणे करे
तेजोबिम्बनिभं ध्यात्वा कर्तुर्दक्षकरे गुरुः  १९०
एककालं द्विकालं वा त्रिकालं त्रिदिनं गुरुः
दिनद्वयमथैकं वा जुहुयान्मूर्तिपैस्सह  १९१
केवलो वा गुरुः कुर्याच्छिवब्रह्माङ्गशम्बरैः
शतं सहस्रमर्धं वा तथा स्याच्छक्तिमन्त्रतः  १९२
संसाध्य स्नापयेत्तेन चतुर्थे दिवसे पुनः
संस्थाप्य देवं देवीं च स्थापनोक्तक्रमेण तु  १९३
प्रभूतहविषं दत्वा नानासूपादिसंयुतम्

समिदाज्यान्नसंयुक्तं पूर्ववद्धोममाचरेत् १९४
शिवलिङ्गप्रतिष्ठैषा प्रोक्ता सामान्यरूपिणी
अस्या विकृतिरूपा तु प्रतिष्ठान्ता समीरिता १९५
एवं यः कारयेन्मर्त्यः कुरुते वा नरोत्तमः
भुक्त्वा तु विपुलान् भोगान् देहान्ते मोक्षमाप्नुयात् १९६

इति कामिकाख्ये महातन्त्रे लिङ्गस्थापनविधिर्नाम चतुष्षष्टितमः पटलः

## प्रतिमालक्षणविधिपटलः

प्रतिमालक्षणं वक्ष्ये श्रूयतां मुनिसत्तमाः
लिङ्गतारोच्चनाहैर्वा तैश्च द्वित्रिगुणैस्तु वा १
अङ्गुलैस्त्रिविधैर्वापि मानमात्रतनूद्भवैः
प्रासादगर्भद्वाराभ्यां पादाधिष्ठानमानतः २
यवेन हस्तमानेन प्रतिमोच्चं विधीयते
अङ्गुलत्रितयं हस्तं यवमानं विहाय च ३
शेषमानसमानं वा षोडशांशे कृतेऽथवा
तन्मध्ये च विकारांशे त्रिभागादेकवृद्धितः ४
रुद्रान्तं वाधिकं हीनं पूर्वमानात्प्रकल्पयेत्
पूजांशो लिङ्गशब्देन कथितो द्विजसत्तमाः ५
अङ्गुलत्रयमारभ्य मात्राद्वयविवर्धनात्
पञ्चविंशतिसंयुक्तशतमात्रान्तमीरितम् ६
यवसप्तकमारभ्य यवद्वयविवर्धनात्
सहस्रयवपर्यन्तं यवमानं प्रकीर्तितम् ७
मत्रांगुलैर्गृहाद्वा स्युर्यवैः क्षुद्रं विधीयते
अष्टषष्ट्यर्कपङ्क्त्यूर्ध्वे वेदद्वियुगषड्विधम् ८
भागं कृत्वैकभागेन युक्तं जात्यङ्गकान्वितम्

वसुभिर्गुणिते तस्मिन् सप्तविंशतिभिर्हृते ९
ब्राह्मणादिदिनं प्रोक्तं तेषामेतच्छुभावहम्
त्रिष्वङ्गुलप्रमाणेषु जात्यंशकं न रोपयेत् १०
शुभमानं न युक्तं चेद्राजग्रामादिवास्तुषु
उत्सेधं पङ्क्तिपङ्क्त्यादि भजेत्पञ्चषडंशकम् ११
व्योमभागस्सदा योज्यो यावानस्य शुभोदयः
आयांशश्चैव नेष्टस्स्यात्त्रिविधेष्वङ्गुलेषु च १२
यवमानेऽपि जात्यंशमायांशं नैव रोपयेत्
वसुभिर्गुणितेष्वर्कहृते वायं विनिर्दिशेत् १३
अष्टपञ्चदिनं प्रोक्तं पञ्चविंशतिभिर्हृतम्
नवभिर्गुणिते सप्तहृते वारं तु निर्दिशेत् १४
नन्दसंगुणिते दिग्भिर्भाजिते व्ययमादिशेत्
गुणघ्ने वसुभिन्ने तु योनिरित्यभिधीयते १५
वेदसंगुणिते नन्दहृते त्वंशक इष्यते
द्वयोर्ऋक्षफलं प्रोक्तं राशिरंशश्च ऋक्षतः १६
त्रिंशद्भिन्ने तिथिः प्रोक्ता योगो वारक्षयो भवेत्
जात्यंशयोजिते वैभिर्युक्तं चेत्तत्प्रगृह्यताम् १७
नो चेदायांशयुक्ते तु सशुभं तु समारभेत्
गृहीतप्रतिमोत्तुङ्गमानमात्रेण वा भवेत् १८
शैलं वार्क्षं च लोहं च मृण्मयं रत्नजं भवेत्
धातुजं दन्तजं बेरमेवं सप्तविधं भवेत् १९
मुहूर्ते समनुप्राप्ते गृहीतायाममानतः
प्रतिमां कारयेद्विद्वाञ्छिल्पिना हृदयं जपेत् २०
बिम्बं संपूजयेत्पश्चाद्गन्धपुष्पादिभिर्हृदा
आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुलीयकैः २१
तथैव पूजयेत्पश्चाच्छास्त्रज्ञं शिल्पिवित्तमम्

सदाशिवाद्यं बेरं तु दशतालोत्तमेन तु २२
आदौ सदाशिवः प्रोक्तः नृत्तमूर्तिरतः परम्
उमोमास्कन्दसहितस्स्थितस्स्यादिन्दुशेखरः २३
त्रिपुरघ्नस्ततः प्रोक्तो लिङ्गोद्भूतस्त्वनन्तरम्
ततस्स्याद्दक्षिणामूर्तिर्गेयमूर्तिरतः परम् २४
चण्डेशाधिपतिः पश्चात्कालकामादिनाशकः
सुखासनस्ततःप्रोक्तस्ततः कल्याणसुन्दरः २५
उमाविष्णवर्धरूपं च ब्रह्मविष्णुसमन्वितः
वृषारूढस्ततः प्रोक्तः गंगायुगपरस्तथा २६
ततः कङ्कालमूर्तिस्स्याद्बलिभर्ता त्वनन्तरम्
नन्दीश्वरप्रसादश्च ऊर्ध्वपादसमन्वितः २७
एवमादीनि चान्यानि प्रोक्ततालेन कारयेत्
मनोन्मनीं च गौरीं च विघ्नेशस्कन्दनन्दिनः २८
चण्डेश्वरं तथा मध्ये दशतालेन कारयेत्
ब्रह्माणं च हरिं लक्ष्मीं मोटीं वागीश्वरीमपि २९
दुर्गार्कसप्तमातृश्च दशतालाधमेन तु
ज्येष्ठासवितृऋक्षेन्द्रानश्विनीं च महीं ऋषीन् ३०
ज्येष्ठेन नवतालेन कुर्यात्क्षेत्रेश्वरं त्विति
लोकपालान् वसूनष्टौ मूर्तीर्मध्येन कारयेत् ३१
यक्षानप्सरसो मध्याञ्छस्त्रमूर्तिमरुद्गणान्
विद्याधरान् कनिष्ठेन नवतालेन कारयेत् ३२
राक्षसान् यातुधानांश्च गन्धर्वान् सिद्धचारणान्
असुरांश्च पितृंश्चैव तथैव हि समाचरेत् ३३
अष्टतालेन मनुजान्पिशाचान्सप्ततालतः
कुब्जकान् रसतालेन दशतालोत्तमेन तु ३४
विघ्नेशं कारयेत्तस्य मध्यमेनाधमेन वा

भूतान्तराणि कार्याणि चतुस्तालेन सालकान् ३५
किन्नरान् पुरुषानन्यान् त्रितालेन द्वितालतः
कबन्धानेकतालेन द्विभागेनैवमाचरेत् ३६
सर्वानेतांश्च वा कुर्याच्चतुर्भागाष्टतालतः
मानं प्रोक्तोपचाराद्यं लम्बाद्यं केवलं तु तत् ३७
स्रायान्तरप्रदेशाच्च द्व्यन्तनानान्तलम्बनैः
भिन्नानि तानि मानानि तेषां लक्षणमुच्यते ३८
तेष्वेकांशस्तु मात्रस्स्यात्पूर्ववद्भाजितेष्वथ
कलाकोलकभागाख्यं स्याद्द्वित्रिचतुरङ्गुलम् ३९
मानहीने महाव्याधिरधिके शत्रुवर्धनम्
नाहहीने विनाशस्स्यादधिके च क्षयाय च ४०
प्रमाणहीने दारिद्र्यमधिके दारनाशनम्
लम्बमानविहीने तु राजराष्ट्रस्य नाशकृत् ४१
उपमानविहीने तु शिल्पिनं हन्ति देशिकम्
सर्वलक्षणसंयुक्तमेतत्सर्वप्रदायकम् ४२
उष्णीषमङ्गुलं ज्ञेयं केशान्तं त्र्यङ्गुलं भवेत्
सार्धत्रयोदशं मात्रं मुखमात्रं विधीयते ४३
केशान्तादक्षिसूत्रान्तो भागो वेदयवाधिकः
अक्षिसूत्रात्पुटान्तं च तत्समं परिकीर्तितम् ४४
तत्पुटार्धात्तु पर्यन्तो भागो वेदयवाधिकः
गलमर्धाङ्गुलं ज्ञेयं कर्णो भागसमुच्छ्रयः ४५
हिक्कादिहृदयान्तं च सार्धविश्वाङ्गुलं मतम्
हृदयान्नाभिपर्यन्तं तत्समं चेति कीर्तितम् ४६
नाभ्यादिमेढ्रपर्यन्तं विश्वामित्रमिति स्मृतम्
मेढ्रमूलात्तु जान्वन्तं सप्तविंशतिमात्रकम् ४७
वेदमात्रं तु जानुस्स्याज्जङ्घे चोरुसमे मते

तालोत्सेधस्तु भागस्स्यात्कायमानमिति स्मृतम् ४८
दशतालोत्तमं ह्येतत्तस्या मध्यममुच्यते
उष्णीषात्केशपर्यन्तं चतुर्मात्रमिति स्मृतम् ४९
केशान्ताद्धनुपर्यन्तं विश्वामित्रमिति स्मृतम्
ग्रीवा वेदाङ्गुलाः प्रोक्ता ग्रीवायास्तु स्तनान्तरम् ५०
विश्वामित्रमिति ज्ञेयं नाभ्यन्तं तत्समं भवेत्
नाभेस्तु मेढपर्यन्तं विश्वामित्रमिति स्मृतम् ५१
तद्द्वयं चोरुमानं स्याज्जानुपर्यन्तमेव हि
भागेन जानुमानं स्याज्जङ्घे ऊरुसमे मते ५२
तालोत्सेधस्तु भागस्स्यान्मध्यमे दशतालके
उष्णीषमङ्गुलं प्रोक्तं केशान्तं त्र्यङ्गुलं भवेत् ५३
केशान्ताद्धनुपर्यन्तं सार्धद्वादशकं मतम्
गलमर्धाङ्गुलं ज्ञेयं भागः कण्ठे समुच्छ्रयः ५४
हिक्कासूत्रात्स्तनान्तं तु सार्धद्वादशमात्रकम्
स्तनान्तान्नाभिपर्यन्तं तत्समं चेति कीर्तितम् ५५
नाभेस्तु मूलमेढ्रान्तमर्धेनद्वादशाङ्गुलम्
पञ्चविंशतिमात्रस्तु तस्मात्पूर्वाग्रकावधि ५६
जानुमानं तु भागेन जङ्घे चोरुसमे मते
भागेन तलदैर्घ्यं स्यान्मानमेवं प्रकीर्तितम् ५७
दशतालाधमं प्रोक्तं दशतालं त्रिधोदितम्
ज्येष्ठस्य नवतालस्य तालं द्वादशमात्रकम् ५८
वेदाङ्गुलेन भागस्स्यादन्यत्सर्वं समानकम्
वेदभागाष्टतालैश्च कुर्याल्लक्षणमुच्यते ५९
मुखाष्टकं चतुर्भागं सर्वतालं प्रयोजयेत्
अष्टाविंशतिभागं तु बेरमानं विभाजयेत् ६०
भाग एकांश इत्युक्तस्त्रिभागस्ताल उच्यते

उष्णीषकर्णजान्वङ्घ्रिगृहीतवदनायतम्  ६१
द्वादशांशं विभज्यैव तेन मानेन कारयेत्
सर्वेषामपि देवानां सनातनमिति स्मृतम्  ६२
दशतालादितालानां मानमद्योच्यते द्विजाः
स्यात्त्रयाङ्गुलमुष्णीषं केशान्तं त्रयङ्गुलं तथा  ६३
भागस्स्यान्नेत्रसूत्रान्तं सांशवेदांशकं पदम्
अर्धेन त्रिचतुर्भागं हनुभूतं प्रकीर्तितम्  ६४
गलमर्धांशकं सार्धं त्रिमात्रं कर्णमीरितम्
हृन्नाभिमेढ्रपर्यन्तं द्वादशांगुलमुच्यते  ६५
मुखजानुक्रमान्तं च जानुमानं च भागभाक्
जङ्घे द्विगुणितायामे तालोच्चं भागतो भवेत्  ६६
शिरोव्यासे दशांशस्स्यान्मुखव्यासस्तथैव च
पुरोगमस्स्यादष्टांशः अष्टांशः कन्धरो भवेत्  ६७
भ्रुवौ विधेये वेदांशैः स्निग्धश्लक्ष्णाञ्जनप्रमे
धात्वाकारे तु तन्मध्ये भ्रूमध्याद्द्व्यंशकं मतम्  ६८
श्रोत्रचूल्यन्तमानं तच्छ्रोत्रस्याष्टान्तरामुखे
मध्यांशमपि चूल्येका भाग अर्धांशतो भवेत्  ६९
अर्धपादांशविस्तारघनो नालमुखेषु च
चतुर्भागान्वितावेकांशाधिकौ कुण्डलान्वितौ  ७०
श्रोत्रचूल्यर्धभागैकव्यासनिर्गमनानती
तावपि श्रोत्रावन्तं च निम्नगं बहिरुन्नतम्  ७१
द्विभागविस्तृतौ कर्णावर्तिश्शुक्त्याकृतिः पुटम्
द्विभागायतमेकांशं व्यासमध्यं तु लोचनम्  ७२
सायामं त्र्यंशकं मध्ये भागैकं कृष्णमण्डलम्
तन्मध्ये तस्य पञ्चांशं ज्योतिर्दृष्टिस्तदर्धतः  ७३
तेन तुल्ये विधातव्ये पक्ष्मयोश्शुक्लमण्डले

मानाधिकेऽष्टभागार्धव्यासायामे कनीनिके ७४
नेत्रयोर्लोहितश्वेतमराडलं शफराकृति
ऊर्ध्वान्तः पद्मविस्तारः पादाङ्गुष्ठार्ध एव हि ७५
शतानि पद्मरोमाणि षट्पदांजनभानि च
सुलोचनमनिद्रं स्यात्कर्मणे सर्वदेहिनाम् ७६
प्रशान्तमृदुनेत्रस्य व्यासादष्टार्धहीनके
रूक्षेक्षणे विधातव्ये अष्टांशार्धाधिके मते ७७
नेत्रान्ताच्छ्रोत्रबन्धान्तं पञ्चांशमिति कीर्तितम्
नेत्रयोरन्तरं द्व्यंशं किञ्चिन्नयूनं तु वा भवेत् ७८
भ्रूरष्टांशोन्नता पादविस्तारं मध्यमं मतम्
पादेन प्रान्तसंयुक्ता विधेया स्याद्द्विजोत्तमाः ७९
अर्धैकविंशविस्तीर्णा मूलमध्याग्रनासिका
तावदुच्चस्तदाकारस्तिलपुष्पसमो भवेत् ८०
भागं पुटद्वयायामं व्यासे वंशस्य विस्तरम्
पुटवत्पादभागार्धमधिकोन्नतिसंयुता ८१
पुटौ निष्पावतुल्यौ स्याच्छ्रोत्रसार्धार्ध एव हि
ऋजुतिर्यक्त्रिपादोनमिष्टांशेन विशालयुक् ८२
पुष्करं चोर्ध्वनासांशव्यासोऽष्टांशोऽपि च त्रिधा
नासान्तांशं नताग्रं स्यात्पुटे तु विपुले तथा ८३
पादार्धांशविशालोच्चा गोजिराच्च नतोन्नता
चतुरंशायततया नीव्रमंशं समालिकम् ८४
त्रिभागोत्तरवाली स्यात्पादाष्टांशेन चोष्ठयोः
अधरोष्ठाय तद्द्व्यंशमायामात्तु विशालकम् ८५
विशालाच्चतुरंशेन तुङ्गमध्ये नतान्तिकम्
हनुचक्रं द्विभागं स्याद्धन्वग्रं किञ्चिदुन्नतम् ८६
अधरोष्ठादधो निम्नं तन्मिथाप्रेक्ष्य योजयेत्

अष्टांशं कर्णविस्तारं पञ्चपञ्चांशनासियुक् ८७
गलं हनुश्च ग्रीवांशस्तथा द्व्यंशः प्रवेशभाक्
पृष्ठकेशावधिर्मूर्ध्नो मुखं स्याच्चतुरङ्गुलम् ८८
ग्रीवा द्विभागा यत्रैव कर्णवृत्तिस्तथाधिका
अष्टांशविस्तरः पृष्ठे कर्णवृत्यन्तरे शिरः ८९
केशसीमपुरोगान्तात्कर्णचूल्यन्तमानकम्
केशान्तं नाहषट्पञ्चभागोऽष्टांशेन नाहकम् ९०
कपोलशंखपर्यन्तं सोत्क्षेपं सम्मतं बुधाः
स्कन्धो गलसमोच्चस्स्यान्मूलं दोर्मूलसंज्ञयम् ९१
अष्टांशो मूलदोस्तारः पक्षः कक्षान्तरं ततः
विंशत्यंशत्रिभागोना स्तनपार्श्वावधेस्स्थितिः ९२
मध्यं तस्माद्विभागोनस्तस्माद्द्व्यंशाधिकानतिः
श्रोणी कटी तथा तस्मादेकैकं चतुरंशकम् ९३
नाभिरर्धांशविस्तीर्णा गम्भीरोदरतोन्नता
सम्पूर्णगोमुखाकारं पादाग्रान्तं मुखे मुखे ९४
चतुरंशस्ततो ग्रीवा सीम्नोऽथोन्नतिरागलात्
हिक्कास्तनाग्रकस्तथोनान्ताल्पस्समखण्डनः ९५
द्विभागं स्यात्स्तनान्तं स्यात् चूचुकः पादभागभाक्
तिर्यक्कर्णधरः पृष्ठे द्वादशद्विगुणांशकः ९६
पुरस्तनोरस्तुल्यं स्यात्सूत्रं तत्क्षयितं नवेत्
विंशतिः कटिसंधौ स्यात्ककुद्दोषोस्त्रिरष्ट च ९७
कण्ठो द्वादशभागस्तु पृष्ठस्तु चतुरंशतः
श्रोणिः कटिश्च मध्यं च मुखे तिर्यङ्मुखेऽपि च ९८
पञ्चद्व्यंशायतव्यासो मेढ्रमुष्के विशालता
आनतिश्चतुरंशा तु लिङ्गं वृत्तमृजु स्थिरम् ९९
स्फिक्पिण्डं चोरुमूलेऽष्टभागो वृत्तस्त्रिभागकः

उत्तुङ्गमूरुमूलं तु मूलमध्याग्रविस्तरः १००
स्याद्द्वादशांशश्चाष्टांशस्तावाञ्जान्वग्रविस्तरः
चतुष्षट्तारदैर्घ्यं तु जानु स्याद्दैर्घ्यवर्तुलम् १०१
जङ्घा षडंशा नलका चतुरंशविशालभाक्
पार्ष्णिर्मध्यग्रतलगा चतुष्पञ्चषडंशकैः १०२
तिथिर्मध्यतलोत्सेधः पञ्चांशः पार्ष्णिरुच्छ्रयः
चतुरंशाद्यगुल्फे च द्व्यंशसार्धांशमण्डले १०३
नलकापार्श्वमध्यं तु मध्यं स्याद्द्यगुल्फयोः
पार्ष्णिपृष्ठे सुवृत्तान्तं पाष्ण्यर्ङ्गुष्ठाग्रमायतम् १०४
तस्य षोडशकांशं तु द्विसप्तांशमिति स्मृतम्
पार्ष्णिसीमात्कनिष्ठान्तं चतुरंशेन विस्तरः १०५
पार्ष्णिरद्यादधस्तुङ्गं चतुरंशान्तरं भवेत्
चतुरंशायतोऽङ्गुष्ठस्तत्तारे चेद्द्विभागके १०६
पादाधिकचतुर्भागदीर्घो नाहस्तु त्र्यंशकः
द्वितीयस्य तृतीयं स्याद् द्वयवेदोननाहयुक् १०७
पादोनचतुरंशान्तायामा वा स्यादनामिका
त्र्यंशायामाष्टभागेन भागोच्चविपुलान्विता १०८
द्व्यंशायामा त्रिपादोच्चव्यासोपेता कनीयसी
एतासामङ्गुलीनां तु नखः स्वाग्रत्रिपादभाक् १०९
आरक्तस्निग्धतुङ्गास्तु अङ्गुल्यस्तास्सुवर्तुलाः
अष्टभागाधिकायामस्त्वङ्गुष्ठस्तु द्वितीयकः ११०
भुजायामो द्विवदनो मुखार्धं मुखमिष्यते
प्रकोष्ठमणिबन्धान्ततलायामष्षडंशतः १११
मध्याङ्गुलायतं तावत्षट्पञ्चत्र्यंशविस्तरः
भागः स्यात्कूर्परस्तस्मान्मणिबन्धावसानकम् ११२
तलमूलस्य बाहुल्यं द्विभागं भागमग्रतः

चतुस्त्रिंशायतव्यासस्त्वन्तं निम्नं समीरितम् ११३
अङ्गुष्ठाङ्गुलमूलं तु तन्नाम्नोक्तः शुकोदरः
पञ्चांशस्तलविस्तारस्तलमानिम्नमध्यगम् ११४
सन्तोच्चं सममेवं हि विधातव्यं बहिस्तलम्
सपादांशश्चतुर्भागस्त्वङ्गुष्ठविपुलायतिः ११५
अग्रे दशांशहीनं तु पर्वायामो द्विभागभाक्
तर्जन्यष्टांशहीनांशव्यासाष्टांशाग्रहीनकाः ११६
पञ्चाशार्धायतान्योन्यहीनाः पर्वत्रयान्विताः
षडंशैकांशकायामव्यासा मध्याङ्गुली मता ११७
तर्जन्यानामिका तुल्या तदेकोना कनिष्ठिका
तद्दशांशोनविस्तारा पर्वत्रयसमन्विता ११८
अग्रव्यासो दशांशोनस्त्वङ्गुलीमूलविस्तरात्
त्रित्रिपादद्विभागैस्तु चतुर्भागविभागिका ११९
अङ्गुलीनखविस्तारो दैर्घ्यं चैव प्रकीर्तितम्
अग्रपर्वाङ्गुलीनां तु द्विगुणं स्यान्नखायतम् १२०
बहिरन्तःस्थलं तुङ्गं निम्नं तु बहिरङ्गुली
अभ्यन्तरगताङ्गुल्या भागाधिक्यायता मता १२१
रक्तपाणितलं व्यक्ताविच्छिन्नारक्तरेखकम्
शङ्खचक्रगदाशूलपद्मवज्रसमन्वितम् १२२
सुवृत्तासीररोमाङ्गौ भुजावाजानुलम्बिनौ
आलम्बितभुजच्छायमूरुपाणितलान्तरम् १२३
स्याद्द्वादशदशाष्टांशो बाह्यस्स्यात्पार्श्वमध्यतः
उष्णीषतपनीगोजीग्रीवोरुनाभिमध्यगम् १२४
लिङ्गपादतलान्तस्थं ब्रह्मसूत्रं पुरोगतम्
यदुष्णीषककुद्वंशखण्डस्फिक्पार्ष्णिमध्यगम् १२५
ऋजु स्थिरं परावृत्तं ब्रह्मसूत्रं विनिर्दिशेत्

मूर्ध्नः श्रवणपाल्यन्तं गुल्फग्रीवांसमध्यगम् १२६
पार्श्वस्फिक्यजसूत्रं स्यादन्तर्देहगतं द्विजाः
पार्श्वाजसूत्रादधिका चतुष्पञ्चांशका ककुद् १२७
सूत्रात्त्रिभागः पञ्चाशात्स्याद्बाहुश्च बहिर्बहिः
दशभागं कटीसूत्रं मुखे पृष्ठषडङ्गकम् १२८
सूत्रात्पूर्वोरुमूलान्ताद्दशान्ताद्द्व्यंशकं बहिः
जानुत्रिचतुरंशं तु पार्श्वसूत्रं मुखे मुखे १२९
सूत्रात्तु नलकागुल्फं स्वमित्योभयथा समम्
सूत्रात्पञ्चांशकात्पर्ष्णिरेवं पार्श्वं प्रकीर्तितम् १३०
मूलोरुजानुजङ्घान्तरेकद्विचतुरंशकम्
मुखं स्यान्नलकाबाह्यादन्तरं चतुरंशकम् १३१
एवमृज्वागतं विश्वदृश्यं चित्रमिति स्मृतम्
भित्त्यश्लिष्टं ह्यर्धचित्रं दृष्टचित्रमिति स्मृतम् १३२
आभासं भित्तिलेख्यं स्यादेतत्सामान्यमीरितम्
स्त्रीमानमधुना वक्ष्ये षण्णवत्यङ्गुलं तु तत् १३३
उष्णीषात्केशपर्यन्तं कोलकं सचतुर्यवम्
त्रिमात्राष्टयवं व्यासोत्सेधमुष्णीषमानकम् १३४
तस्माद्दृक्पुटहन्वन्तं चतुस्त्रिद्व्यर्धमात्रकम्
ग्रीवा त्रिमात्रा स्याद्वक्षस्सार्धषट्पञ्चमात्रकम् १३५
सार्धैर्दशाङ्गुलैर्मध्यं नाभेर्योनिर्दशाङ्गुला
स्यादूरुजानुजङ्घाङ्घ्रितलानुच्चैरनुक्रमात् १३६
द्वाविंशतित्रयोविंशमात्राभिः स्थितिरीरिता
मूर्ध्नो नवदशाङ्गुल्यं केशसीमा मुखे मुखे १३७
नवविंशतिमात्रेण नाहं केशावसानकम्
ललाटं शरमात्रं तु मध्ये ख्यातं पुरोगतम् १३८
दृक्सूत्राच्छ्रोत्रतुङ्गं तु भ्रूमध्ये द्व्यङ्गुलं भवेत्

भ्रूमध्यं यवतारोच्चं दैर्घ्यं स्यात् तत्त्रिमात्रकम् १३९
अन्तयोः क्रमशो हीनं भ्रुवोरानतिरन्तरम्
अङ्गुलेन समं स्निग्धश्लक्ष्णरोमधनुस्समम् १४०
यवहीनकलायामे मध्ये षोडशविस्तरे
नेत्रे पञ्चयवव्यासं तन्मध्ये कृष्णमण्डलम् १४१
चतुरर्धयवव्यासे तद्द्वयोः श्वेतमण्डले
कनीनिके द्वयान्तस्थे यवतारान्वितायते १४२
यवं चार्धयवं ज्योतिर्दृष्टिः कृष्णांशमध्यगा
ऊर्ध्वाधःपक्ष्मविस्तारो द्वियवार्धयवोन्नतः १४३
श्रोत्रे नेत्रसमव्यासात्कला पञ्चयवाधिका
कर्णबन्धात्तु कर्णाग्रं ततस्सप्तयवं स्मृतम् १४४
त्रियवं श्रोत्ररन्ध्रं स्यान्नालौ त्र्यर्धाङ्गुलायतौ
कुण्डलेन युतौ तौ हि भवेतां कोलकाधिकौ १४५
नासीनालसमौ नीव्रव्यासार्धद्विचतुर्यवौ
अर्धमात्राधिकावष्टमात्रौ वा श्रवणौ स्मृतौ १४६
लकारावर्तवज्ज्ञेया पिञ्चसी सार्धमात्रिका
श्रोत्रे कलान्तरं निम्नं नतवृत्ताङ्गवद्बहिः १४७
श्रोत्रचूलिर्यवव्यासा निर्गतावनतक्रिया
श्रोत्रपृष्ठं तथा श्रोत्रसममूर्ध्वे दशार्धकम् १४८
ललाटान्ताद्दृगन्तं तु द्विमात्रं षड्यवाधिकम्
तस्मात्सप्तयवोऽपाङ्गस्तस्मात्त्र्यर्धाङ्गुलं मुखम् १४९
आलेख्यलेखने त्वर्धयवोनं श्रोत्रमङ्गुलम्
नेत्रयोरन्तरं नेत्रतारं नासापुटावधि १५०
शेषं तु मुखतारं स्यान्नेत्रश्रोत्रान्तरं मतम्
नासामूलोन्नतिर्नेत्रमध्ये स्यादर्धमात्रिका १५१
द्व्यर्धसप्तयवं सप्तयवयुक्तं कलार्धकम्

मूलमध्याग्रं नास्यास्तु विस्तारे कीर्तितं क्रमात् १५२
पुटौ सप्तयवव्यासायामौ वंशस्य विस्तृतिः
मात्रा श्रोत्राङ्गपञ्चार्धाङ्गुलायामा तु मस्तके १५३
पुष्करः षडयवोःसेधस्तन्मध्ये यवविस्तरः
पुटौ निष्पाववत्प्रोक्तौ नात्युन्नतिसमन्वितौ १५४
पुटत्वग्यवनीव्रा स्यान्नासिकार्धाङ्गुलोन्नतिः
गोजीमूलात्पुटान्तं तु तद्व्यासस्य समुच्छ्रयः १५५
नासाग्रं तिलपुष्पाभं यवेनालम्बितं पुटात्
नेत्रं वा दिनपद्मोत्थमारक्तं श्वेतमण्डलम् १५६
द्विचतुर्यवतारोच्चा गोजिरास्योर्ध्वमध्यगा
आनिम्नार्धत्रिमात्रे तु ऊर्ध्वोष्ठविपुलायते १५७
स्यात्त्रिवर्गोत्तरा पालिर्यवेनैवाधरोष्ठगा
उन्नतायतविस्तारे षडयवा षडयवाधिका १५८
मात्रा मात्राधरोष्टस्य समध्योच्चानतावधिः
तुण्डीरखण्डसंकाशं किंशुकप्रसवच्छवि १५९
हनुचक्रमथ श्लिष्टं ग्रीवायास्त्र्यङ्गुलोद्नतम्
ग्रीवा पञ्चाङ्गुलव्यासा व्यासत्रिगुणनासिका १६०
अंसौ पञ्चाङ्गुलव्यासावध्यर्धोच्चौ हनोरधः
हनुचक्रद्विमात्रार्धमास्यरूपं तु पूर्ववत् १६१
ऊर्ध्वे द्व्यर्धयवा दन्ता द्वियवा विपुलोन्नताः
तेभ्योऽर्धोनायतव्यासा अधोदन्तास्तु दन्ततः १६२
यवार्धेनाधिका दंष्ट्रा दन्ताः स्निग्धाः समाः स्थिताः
सुस्निग्धाञ्जनरोचींषि पक्ष्मरोमाणि योजयेत् १६३
अशीतिर्नवतिर्वापि संख्यया संमतानि च
केशास्तु ऋजवः शुद्धाः सूक्ष्माः स्निध्वाः समासिताः १६४
सालकं च ससीमन्तं सधम्मिल्लललाटयुक्

योषितां वदनं कुर्यात्सुप्रकारं मनोहरम्  १६५
बाहुमूलविशालस्तु ग्रीवातारसमो मतः
पक्षः कक्षान्तरं तस्य तारःसप्तदशाङ्गुलम्  १६६
हिक्काया दशमात्रान्तं विधेयं स्तनचूचुकम्
तदन्तरं द्विभागं स्यात्कुक्षेरप्यथ वक्षसि  १६७
स्तनौ पञ्चाङ्गुलोत्सेधौ वृत्तौ द्विविधचूचुकौ
मूले सप्ताङ्गुलव्यासावश्वत्थदलसंमुखौ  १६८
सुवृत्तावन्तरे ह्युच्चं वक्षोऽन्तर्विहितावधि
चतुर्दशाङ्गुलान्तं तु स्तनान्तं हृदयावधि  १६९
मूलबाहुद्वयान्तं स्यादेकोनत्रिंशदङ्गुलम्
हिक्काधो बाहुदैर्घ्यं तु द्वाविंशत्यङ्गुलं भवेत्  १७०
कर्पूरं स्याच्चतुर्मात्रं प्रकोष्ठो द्वादशाङ्गुलः
मणिबन्धस्य विस्तारं त्रियवेनाधिका कला  १७१
द्वियवेन कलानीव्रं पाणिमूलतलं मतम्
पञ्चाङ्गुलस्तलव्यासस्तलायामो द्विकोलकः  १७२
आयामो मध्यमाङ्गुल्यास्तलायामसमो मतः
मूलाङ्गुलिविशालस्य तलाग्रबहुलं समम्  १७३
चतुष्पञ्चयवस्त्वग्रनखोऽङ्गुष्ठो द्विपर्वभाक्
षट्पञ्चयवमूलाग्रा चतुरर्धाङ्गुलायता  १७४
अन्योऽन्यैकघनोपेतमूलमध्याग्रपर्वभाक्
त्रिचतुर्यवविस्तारश्यामरक्तनखान्विता  १७५
प्रादेशिन्यङ्गुलिस्तस्या यवमात्राधिकायता
एकोनविंशत्त्रिःपञ्चयवमूलाग्रनाहिका  १७६
प्राग्वन्नखत्रिपर्वाग्रा सा मता मध्यमाङ्गुलिः
अनामिका प्रदेशिन्या समाना मानलक्षणात्  १७७
त्रिमात्रद्वियवायामा मूले पञ्चयवा ततः

अग्रे चतुर्यवाध्यर्धत्रियवार्धनखान्विता १७८
प्राग्वत्त्रिपर्वसंयुक्ता सुवृत्ता सा कनिष्ठिका
मूलाद्यग्राः सुवृत्ताः स्युरङ्गुल्यः सुसमाहिताः १७९
अन्तर्हस्ततले ह्येतन्निम्नतुल्यतलं बहिः
बहिस्तलस्य मूलं तु मणिबन्धात्ततोऽधिकम् १८०
रेखा सुरक्ता सुस्निग्धा श्रीवत्साद्यङ्कसुच्छविः
गोमुखाकारवद्धस्तो युवतीनां विधीयते १८१
हिक्कासूत्रादधो यावदायामोऽन्तः षडष्टभिः
त्र्यर्धद्व्यर्धकला तस्य मूलमध्याग्रविस्तरः १८२
आमध्याङ्गुलि योषाणामेष हस्तविधिः स्मृतः
अधरोष्ठावधेर्ग्रीवा त्रिमात्रा स्यात्तथा ककुत् १८३
मात्रामात्रोन्नतिस्तस्यास्तिर्यक्कक्षे यवार्धकम्
पृष्ठे कक्षावधे रेखा दशकोलकसंमिता १८४
ग्रीवायाः कटिसूत्रैकविंशदङ्गुलदैर्घ्यभाक्
कट्यास्तु तुण्डतस्तालं पृष्ठं षड्यवकोलकम् १८५
पृष्ठे कट्यन्तविस्तारश्चैकविंशतिमात्रकः
पृष्ठे नाभिगुहासाम्ये श्रोणिः सप्तदशाङ्गुला १८६
ऊरुमूलात्त्रिमात्रोच्चं स्फिक्पिण्डं चाष्टमात्रकम्
स्फिक्ताराङ्गावधेस्तुल्यलेखा लेख्या मुखे मुखे १८७
एकादशाङ्गुलं मध्यव्यासस्त्रिगुणनाहयुक्
वलित्रययुतं कार्यं शातोदरसमं शुभम् १८८
अर्धाङ्गुलसुविस्तीर्णं तावद्गम्भीरसंयुतम्
प्रदक्षिणक्रमावर्ता नाभिः कार्या मुनीश्वराः १८९
श्रोणिः सप्तदशव्यासा कटिस्त्रिस्सप्तमात्रिकः
ईषन्निम्नतलं कार्यं नितम्बान्तं त्रिकोलकम् १९०
अष्टमात्रसमा योनिः करिणः शिरसा समा

अश्वत्थदलवद्बाह्याकृतिर्ग्राह्या मनोहरा १९१
लेख्योदरगता रोमराजिरामदनास्पदम्
स्निग्धैषा द्वन्द्वषड्गूढमणिरोमविवर्जितम् १९२
वराङ्गमङ्गनानां तु विधातव्यं विपश्चिता
योन्यन्तात्कटिकापार्श्वे रेखे द्वे विधिवन्मते १९३
कटिः कालाङ्गुलान्तस्था मूलोरोरुपरि स्थिता
तालं विशालं मूलोरोर्मध्योरोः पञ्चकोलकम् १९४
जान्वन्ते त्रिकलश्चोरुस्त्रिमात्रं जानुमण्डलम्
तत्पञ्चाङ्गुलविस्तारं जङ्घाभागः सषड्यवः १९५
नलका त्र्यङ्गुलव्यासा त्रिगुणीकृतनाहका
हस्तिहस्तनिभावूरू विरोमं जानुमण्डलम् १९६
बुद्बुदाग्रोपमा जङ्घा नलकांशावधेः समा
स्यादङ्गुष्ठकनिष्ठाग्रपार्ष्णिरङ्घ्रितलायता १९७
अङ्गुष्ठस्त्वङ्गुलायामो विस्तारोऽर्धाङ्गुलोऽधिकः
व्यासेन षड्यवायामा पादाङ्गुष्ठाद्यवाधिका १९८
प्रदेशिनी यवार्धोना चान्ययोश्च यवक्षयः
यवार्धेन विशालः स्यादङ्गुष्ठे षड्यवो नखः १९९
अन्यासामङ्गुलीनां तु नखस्त्रिद्व्यंशकोऽग्रतः
सामान्यलक्षणं प्रोक्तं प्रतिमानां द्विजोत्तमाः २००
यवादियववृद्ध्याष्टयवान्तं बेरकर्मणि
वृद्ध्या हान्या प्रयोक्तव्यं सर्वेष्वङ्गेषु वा द्विजाः २०१
तिथिमात्रं समारभ्य व्योममात्रविवर्धनात्
त्र्यङ्गुलान्तं शिरश्चक्रं सुवृत्तं मकरान्वितम् २०२
निर्गमन्तु तदर्धेन मकुटोच्चं त्रितालकम्
आरभ्याङ्गुलहान्यैकतलान्तं परिकल्पयेत् २०३
पञ्चागुलं समारभ्य व्योममात्रविवर्धनात्

त्रिंशदङ्गुलपर्यन्तं धनुर्बाणादियुक्तितः २०४
कल्पयेदायुधं युक्त्या प्रभाद्यं च प्रकल्पयेत् २०५
इति कामिकाख्ये महातन्त्रे सामान्यप्रतिमालक्षणविधिः
पञ्चषष्टितमः पटलः

त्रिशूलस्थापनविधिपटलः

त्रिशूलस्थापनं वक्ष्ये तल्लक्ष्म स्यादनेकधा
चन्दनश्च मधूकश्च खरिरस्सरलस्तथा १
शमीतिनिशतापिञ्चस्तलको देवदारुकः
क्रमुकस्सप्तपर्णश्च बकुलः कुन्दचन्दनौ २
पिण्डकस्तिमिशो रक्तचन्दनः पनसस्तथा
श्रीपर्णी खदिरस्सालतिन्तृणीसालबिल्वकौ ३
कदम्बश्शिंशुपाह्वश्च धन्विनश्शूलिनः कुजाः
पनसो देवदारुश्च पद्मतिन्दुकसंज्ञकौ ४
तिलकस्सप्तपर्णश्च विष्णोश्शूलार्थ ईरिताः
वकुलः कुटजाह्वश्च पिण्डतस्तिनिशः पुनः ५
धन्विनश्चार्जुनाश्वत्थौ ब्रह्मणः पादपा मताः
यस्य देवस्य या देवी तस्यास्तद्वृक्ष एव हि ६
वैकंकतश्च खादिर्यश्शमी दुर्गाकुजा मताः
ज्येष्ठायाः पाटली प्रोक्ता शिवाख्यस्सप्तमातृषु ७
वकुलश्चण्डवृक्षस्स्याद्दिक्पाले राजवृक्षकः
खादिरस्सर्वदेवानां क्षीरिणी खादिरस्तथा ८
सर्वासां देवतानां च श्रीवृक्षस्सम्प्रकीर्तिताः
गणपस्कन्दशास्तृणां मातृणां शिवपादपाः ९
सर्वे सर्वत्र वा कर्त्रा कृत्यनाहानुसारिणः
ताम्रारकूटरौप्यैर्वा शातकुम्भेन वा मताः १०

एकस्य चैकवृक्षस्स्याद्बहुवृक्षस्तु नेष्यते
द्रव्यसंग्रहणं कुर्यात्तद्विधानप्रकारतः ११
केशाङ्गुल्यादिमानार्थं मानार्धं दारुवन्नयेत्
ब्रह्मदण्डस्य विस्तारः पञ्चाङ्गुलमिति स्मृतम् १२
मेढ्रादिनाभिपर्यन्तं चतुरश्राकृतिर्भवेत्
नाभेर्हिक्कान्तकं चैव वस्वश्रः परिभाषितः १३
तस्योर्ध्वं वकुलं कुर्यात्पक्षदण्डस्य विस्तरः
सप्ताङ्गुल इति ज्ञेया तद्घने तु कला भवेत् १४
उभयोरग्रयोस्तस्य द्विमात्रे च शिखायतिः
व्योममात्रप्रमाणेन शिखाविस्तार इष्यते १५
एकद्वित्रिचतुस्संख्याश्शिखान्ताश्च प्रकीर्तिताः
रन्ध्रं विष्णवंशतारेण वक्षोदण्डस्य मध्यमे १६
हिक्कासूत्रादधस्तात्तु वक्षोदण्डस्य संस्थितिः
कटिदण्डस्य विस्तारस्सप्ताङ्गुल उदाहृतः १७
कला ज्ञेया घने तस्य पार्श्वयोरुभयोरपि
अग्न्यङ्गुलप्रमाणेन शिखा तिर्यङ्मुखा भवेत् १८
ब्रह्मभागस्य तारेण तन्मध्ये सुषिरं नयेत्
चतुरश्रस्य तारेण मानार्धं द्व्यङ्गुलं न्यसेत् १९
द्विमात्रं नाभ्यधस्तात्तु हित्वात्र कटिदण्डकम्
योजयेद्ब्रह्मदण्डे तु सुस्निग्धं सुदृढं नयेत् २०
ऊरुदण्डाग्रविस्तारः कोरकेति च संमतम्
तस्य मूले तु सुषिरं शिखामानेन कारयेत् २१
तस्याग्रे तु शिखां कुर्यात्पक्षमात्रप्रमाणतः
कटिदण्डे शिखायां च ऊरुदण्डं च योजयेत् २२
जङ्घायामेन संग्राह्यं चतुर्मात्रसमन्वितम्
जङ्घूलस्य विस्तारस्त्र्यङ्गुलस्समुदाहृतः २३

तस्य चाग्रे तु विस्तारस्सार्धमात्र इति स्मृतः
तस्य मूले तु सुषिरं शिखामानेन कारयेत् २४
वक्षोदण्डशिखायां तु बाहुदण्डं तु योजयेत्
योजयेत्तूरुदण्डं तु जानुमण्डलकं बुधः २५
जानुमण्डलविस्तारो युगाङ्गुलमुदाहृतः
आयामस्तत्समो ज्ञेयो जङ्घा तत्र तदर्धतः २६
तलदण्डस्य विस्तारश्चतुर्मात्रमुदाहृतः
बाहुमूलस्य विस्तारो गुणाङ्गुलमुदाहृतम् २७
तस्याग्रस्य च विस्तारस्सार्धपक्षाङ्गुलो मतः
सप्तमात्रप्रमाणेन तन्मूले सुषिरं नयेत् २८
वक्षोदण्डशिखायां तु बाहुमूलं तु योजयेत्
प्रकोष्ठमूलविस्तारस्त्रिमात्रस्समुदाहृतः २९
तस्याग्रस्य च विस्तारस्सार्धाङ्गुलमुदाहृतः
तन्मूलेन द्विमात्रेण सुषिरं कारयेत्ततः ३०
बाहुग्रस्तशिखाश्चैव प्रकोष्ठेनैव योजयेत्
वक्षोदण्डात्समारभ्य कटिदण्डान्तरक्रमात् ३१
पार्श्वदण्डायतं ज्ञेयं तत्तारं कोलकं भवेत्
तद्धनं तत्समं ज्ञेयं पार्श्वदण्डस्य चोपरि ३२
अधश्च सुषिरं कार्यमेकाङ्गुलप्रमाणतः
वक्षोदण्डकटीदण्डे योजयेत्पार्श्वदण्डकम् ३३
पार्श्वजं दण्डयोर्मध्ये अग्रे च ऋषिमात्रकम्
स्त्रीणां चैव विशेषेण वर्जयेत्पार्श्वदण्डके ३४
एतेषां दण्डमाने तु मांसमानं त्यजेद्बुधः
पादाङ्गुलं समारभ्य पादाङ्गुलविवर्धनात् ३५
द्विमात्रान्तो विधेयस्स्याद्धानिर्वृद्धिश्च युक्तितः
ब्रह्मदण्डेऽन्त्यदण्डेषु द्वात्रिंशद्गृह्यतां द्विजाः ३६

शिरः करतलं कर्णमम्बरं चरणादिकम्
स्वमानादर्धमात्रं तु हीनं युक्त्यैव कारयेत् ३७
स्थानकस्यैवमाख्यातं विशेषःकश्चिदासने
ब्रह्मदण्डस्य मूले तु योजयेत्तु युगाङ्गुलम् ३८
जङ्घामूलप्रदेशस्तु अध्यर्धाङ्गुलहीनयुक्
शूललक्षणमाख्यातं तत्स्थापनमिहोच्यते ३९
कालोऽपि पूर्ववन्नेयस्त्वङ्कुरार्पणमेव च
मण्डपः कुण्डक्लृप्तिस्तु नवपञ्चैकसंख्यया ४०
चतुरश्राणि कुण्डानि तद्दिक्कुण्डानि वा तथा
शिल्पिनं च विसृज्याथ पुण्याहं वाचयेत्ततः ४१
वास्तुहोमं च कृत्वान्ते स्थण्डिलं कारयेद्द्विजाः
सङ्कल्प्य शयनं तत्र ज्ञात्वा ब्रह्मादिदण्डकान् ४२
पञ्चगव्येन संप्रोक्ष्य ततः पञ्चामृतादिभिः
संस्नाप्य शुद्धतोयेन वस्त्रेणाच्छाद्य पूजयेत् ४३
आसनं कल्पयित्वा तु शय्यायामासनाणुभिः
मूर्तिभूतं तु तच्छूलं हृदयेन निवेशयेत् ४४
कौतुकं बन्धयित्वा तु तत्समन्ताद्धटान् न्यसेत्
सकूर्चान् हेमसंयुक्तान् सवस्त्रानुदपूरितान् ४५
तत्तन्मूर्तिमनुं मध्ये लोकेशान् परितो यजेत्
तत्त्वतत्त्वेश्वरोपेतान् मूर्तिमूर्तीश्वरान्न्यसेत् ४६
ब्रह्मभिस्सकलीकृत्य मूर्तिं तत्र निवेशयेत्
गन्धपुष्पादिनाभ्यर्च्य मूर्तिमन्त्रमनुस्मरन् ४७
पायसं सन्निवेद्याथ होमकर्म समारभेत्
कृत्वा कुण्डादिसंस्कारं मूर्तिमावाह्य तर्पयेत् ४८
समिदन्नाज्यलाजैश्च तिलसर्षपसंयुतम्
पालाशोदुम्बराश्वत्थवटाःपूर्वादिदिक्षु च ४९

शम्यपामार्गमाधूकश्रीवृक्षास्त्वग्निकोणतः
प्रधानस्य पलाशस्स्याच्छतसंख्या प्रधानके ५०
दशांशे ब्रह्मभिर्होमस्तथा नेत्रेण संमतः
तत्त्वतत्त्वेश्वराद्यैश्च प्रत्येकं त्रितयं क्रमात् ५१
ततः पूर्णाहुतिं कृत्वा प्रभाते मूर्तिपैर्गुरुः
स्नात्वा देवं घटं मन्त्री संपूज्याग्निं समीपतः ५२
स्थित्वा छिद्रं निरस्याथ पूर्णां मूर्त्या प्रदापयेत्
सुमुहूर्ते सुलग्ने तु प्राप्तपूजो गुरूत्तमः ५३
संगृह्य मूलधाम्नस्तु प्रदक्षिणमनुव्रजन्
प्रविश्य गर्भगेहं तु ज्ञात्वा ब्रह्मादिभागकान् ५४
स्थानकादिविभागेन कृत्वा स्नानं घटीकृतम्
इष्टकांशादिकास्तत्र न्यसेदाधारसंज्ञकम् ५५
स्थानकासनसुप्ताश्च यानगा गमनोन्मुखा
नाटचोत्सुकाश्च षोढा स्यात्स्थानकाधारसंज्ञतः ५६
तथैव नृत्तसक्ता च गमनाभिरता हि च
स्थानगोक्षादिसंस्था स्यादासनस्थास्तु पीठगाः ५७
शय्यासक्ता तु सुप्ता स्यात्सा च प्रायोऽस्य नेष्यते
विष्णवादिप्रतिमा सा स्यादाधारं त्वधुनोच्यते ५८
शूलमूलविशालेनाध्यर्धमाधारमानकम्
तद्वेराङ्गुलमानेन एकाङ्गुलविवर्धनात् ५९
चतुरङ्गुलमानं स्यात्समं स्याच्छतुरश्रकम्
तद्धनं त्रिविधं प्रोक्तं तस्मादेकैकवर्धनात् ६०
चतुर्मात्रान्तमानं स्यात्क्रियामानानुसारतः
सुवर्णतारताम्राद्यैः पादपाद्यैस्तु वा भवेत् ६१
पादानि नव तन्मध्ये कृत्वा कूटयुतानि वा
रत्नाद्यं विन्यसेत्तत्र प्रागुक्तविधिना गुरुः ६२

तत्र संस्थापयेद्वाग्मी तत्र मूर्तिमनुस्मरन्
ब्रह्मदण्डेऽन्यदण्डांश्च योजयेदुक्तवर्त्मना ६३
अथवा पीठिकोत्सेधं ब्रह्मदण्डस्य मूलतः
शूलदैर्घ्यान्वितं कृत्वा इष्टमानान्वितं तु वा ६४
कृत्वा तदवधिस्थाने स्थाप्यं वाधारसंज्ञकम्
स्थिराद्यं पीठबन्धाद्यैर्बन्धयेत्सुषिरं यथा ६५
मूर्तिनिर्गतशूलैश्च सुस्थिरैस्सारदारुजैः
इष्टनाहसमायुक्तैरिष्टसंख्यासमन्वितैः ६६
ब्रह्मदण्डादिदण्डे तु योजयित्वा गुरूत्तमः
स्थैर्यं सम्पादयेदत्र क्रियमाणानुसारतः ६७
ऋजुभिर्लोहपट्टैश्च लोहकीलैरनेकधा
बन्धयित्वा यथाकर्म आर्द्रं वा वस्त्रवेष्टनम् ६८
कल्कचिक्कणकाद्यैस्तु संपूर्णाङ्गं यथा नसत्
वर्णैर्नानाविधैश्चित्रं कारयेत् प्रतिमोक्तवत् ६९
चतुर्वार्णानुलोमाद्यैश्शिल्पिभिश्चित्रवित्तमैः
नयनोन्मीलनं कुर्याच्चित्रकर्मावसानके ७०
नयनोन्मीलनात्पूर्वं द्रव्यमात्रं तु तद्भवेत्
तत्र छेदादिकं चेष्टं तदूर्ध्वं नेष्यते द्विजाः ७१
तत्र प्रतिष्ठा कर्तव्या स्थापनोक्तविधानतः ७२
स्थानायैव तलव्यासमानेनाधारसंज्ञिकम्
जङ्घोरू प्रतिमादण्डात्स्थापयित्वा तदूर्ध्वतः ७३
कटिदण्डं च संयोज्य ब्रह्मदण्डे नियोजयेत्
सर्वदण्डादिसंयुक्तं कृत्वा च प्रतिमादिकम् ७४
पट्टाद्यैर्बन्धयित्वा तु तां शय्यायां निधाय च
तत्त्वमूर्त्यादिविन्यासं कृत्वा तां स्थापयेत्तु वा ७५
शैला चेत्प्रतिमा शैलं कुर्यादाधारसंज्ञकम्

अन्यत्सर्वं समानं स्यात्किन्तु पादशिलादयः ७६
कृत्वा कूर्चं क्रमात्क्षीणं बलानुगतमानकम्
सुषिरे पीठमध्ये तु यथास्निग्धं नियोजयेत् ७७
कृत्वासनं तु तन्मन्त्रैर्बाहुभिस्सकलीकृतः
मूर्तिमन्त्रान्न्यसेत्कुम्भं तोयगं प्रतिमाहृदि ७८
तदम्भसा तु संस्नाप्य लोकपान् परितो न्यसेत्
तच्छैलं सुधयालेप्य वस्त्रेणावेष्ट्य चित्रयेत् ७९
शूलस्थापनकाले तु मूर्तिमन्त्रमनुन्यसेत् ८०
इति कामिकाख्ये महातन्त्रे त्रिशूलस्थापनविधिपटलः षट्षष्टितमः

## देवतास्थापनविधिपटलः

देवतास्थापनं स्थानं वक्ष्येऽथ मुनिपुङ्गवाः
ग्रामे वा नगरे वापि पत्तने राजधानिके १
आदौ नद्यास्तटे पुण्ये देवतायतनेषु च
समुद्रतीरे सेतौ च पुष्करिण्यास्तटेषु च २
महाजलसमीपे वा महाजनसमीपगे
उद्याने पुण्यदेशे वा निष्कलं सकलं तु वा ३
शैलं वा लोहजं वार्क्षं रत्नजं मृण्मयं तु वा
सौधजं वार्धचित्रं वा आभासं वाथ पीठकम् ४
स्थापयेद्देशिको धीमान् ब्रह्मदेवादिभागवत्
आरभ्य पञ्चपञ्चांशमेकैकपदवर्धनात् ५
द्वात्रिंशत्पदपर्यन्तं कृत्वा गर्भगृहं ततः
एकं वापि द्वयं वापि त्रयं वा ब्रह्ममन्दिरे ६
तदन्तरं तथा कृत्वा दैविकं वार्षकं तथा
पदं पैशाचिकं प्रोक्तं ब्रह्मभागे प्रकल्पयेत् ७
इदं ब्रह्मादिकाद्यं तु ग्रामादौ वा वियोजयेत्

निष्कलं ब्रह्मभागे तु सकलं दैविकांशके ८
ग्रामादीनां निवेशे तु ब्रह्मांशे दैर्घिकांशके
स्थापयेन्मानुषं वापि मातुः केचिदिदं भवेत् ९
चित्रयुक्तं तु तद्बेरं बाह्ये पैशाचिके ऋपि
रक्षोगन्धर्वयक्षाद्याः पिशाचाद्याश्च मूर्तिपैः १०
मानुषे वाथ पैशाचे द्विजानां वास इष्यते
ईशानादिचतुष्कोणे सभाद्यं तत्र कल्पयेत् ११
ब्रह्मभागं चतुर्भागं कृत्वेशाने सभां नयेत्
वापीं चाग्नेयदेशे तु गोवासं कूपसंयुतम् १२
नैर्ऋते वापणस्थानं देवालययुतं तु वा
वायौ देवालयं कुर्याद्व्यत्यासे व्यसनं भवेत् १३
क्षुद्रवास्तौ तु तत्सर्वं नेष्यते ब्रह्मभागिके
द्विजवासस्तु तत्सर्वं शर्वे वाथ विधीयते १४
वरुणे विष्णुवासस्स्यात्केशवं शर्व एव च
पञ्चपंचांशतो न्यूनात्तदूर्ध्वं द्विजसत्तमाः १५
चतुस्सहस्रपर्यन्तं पदं पैशाचिकं क्रमात्
सूर्यस्कन्दगणेशानां दुर्गाद्या वास्तुदेवताः १६
वास्तुपैशाचिके मोटी मदनस्सप्तमातरः
मोटीशास्तृविहीना वा सप्तदेवास्तथा मताः १७
सहस्रविप्रादूर्ध्वे तु सभाद्यं ब्राह्मणादिकम्
कल्पना न्यूनविप्रे तु त्यजेत्कोष्ठमथाङ्कणम् १८
तदूर्ध्वं तु सहस्रान्ते गौरीव कमलालया
ब्रह्मा वैश्रवणस्सौम्यः कन्दर्पोऽन्तर्व्यवस्थिताः १९
बाह्ये क्षेत्राधिपज्येष्ठाः पूर्वोक्ते स्मृतदेवताः
तदूर्ध्वं सर्वदेवाश्च शंसिताः फलदायकाः २०
एतेष्वन्यतमार्थं तु शिवो गौरी विनायकः

स्कन्दस्तत्र विधेयो वा ब्रह्मभागादिभागके २१
शास्ता वान्तर्बहिस्थाप्यो बाह्ये रौद्राः प्रकीर्तिताः
वास्तुविन्यासतुष्टास्तु प्रागत्र स्थापिताः सुराः २२
उक्तदेशेऽन्यदेशे वा न ते वास्त्वङ्गभाजिनः
विना प्रतिष्ठां देवानां वास्तुन्यासं कथं भवेत् २३
तस्मात्सर्वप्रयत्नेन देवानां च प्रकल्पयेत्
विन्यसेद्रुद्रदेवांश्च शैवं सम्पादयेद्गुरुः २४
सन्त्यक्तमार्षस्थानाद्यथादेवालयास्त्विह
पुरातनात्त्वथालोच्य वास्तुन्यासं समाचरेत् २५
वास्तुन्यासादिकं सर्वं प्रागेव प्रतिपादितम्
तथापि पुनरद्यापि विशेषस्तत्र कथ्यते २६
पदं पैशाचिकान्तं तु ग्राममानं विधीयते
गृहश्रेणिषु वृद्धिर्वा हानिर्बाह्यान्तरेऽपि वा २७
आयामे विस्तरे वापि वैषम्यं तेषु मानतः
इष्यते क्षुद्रमार्गो वा क्षुद्रे महति वास्तुनि २८
बाह्यान्तरविधौ चैव वैषम्यं वा परस्परम्
वास्तुपैशाचवैषम्यमिष्यते वास्तुनिर्मितौ २९
तथैव मार्गो मानेषु यथा देवालयेषु च
स्थानादीनां यथा पीडा न स्यात्सर्वं तथा नयेत् ३०
ब्रह्मदैविकभागादिस्थिता पीडा न दोषदा
तस्मादुक्तेषु देशेषु मर्माद्यं परिगृह्य च ३१
नागरादिप्रभेदेन दिग्भेदेन विशेषतः
प्रतिपादितहर्म्येषु शिवाद्यान् स्थापयेत्ततः ३२
इति कामिकाख्ये महातन्त्रे देवतास्थापनविधिपटलः सप्तषष्टितमः

प्रतिमाप्रतिष्ठाविधिः

प्रतिमानां प्रतिष्ठां तु प्रवक्ष्यामि समासतः
द्रव्यसंग्रहणं पूर्वं बिम्बनिर्माणमेव च १
पश्चान्मण्डपनिर्माणं रत्नन्यासमतः परम्
नयनोन्मीलनं पश्चाद्बेरशुद्धिरनन्तरम् २
ग्रामप्रदक्षिणं पश्चाज्जलवेशोऽष्टमं भवेत्
मण्डपालङ्कृतिः पश्चाद्वास्तुहोममतः परम् ३
शय्याक्लृप्तिस्ततः प्रोक्ता प्रतिमास्थापनं ततः
ततः कौतुकबन्धस्स्याच्छयनारोहणं पुनः ४
कुम्भसंस्थापनं पश्चादर्पणं तदनन्तरम्
ततो मूर्त्यादिविन्यासो होमकार्यमनन्तरम्
दक्षिणादानमन्ते स्यान्मन्त्रन्यासमतः परम् ५
अतःपरं च स्नपनमर्चनं स्यादतः परम्
द्वाविंशतिः क्रियाः प्रोक्तास्तासां लक्षणमुच्यते ६
शिलामृल्लोहसद्वृक्षरत्नधातुसुधापटाः
दन्तबेरकनिर्माणे तस्य संग्रहमुच्यते ७
सुमुहूर्ते सुलग्ने तु नक्षत्रकरणान्विते
शिलादिस्थानमासाद्य स्थण्डिले पूजितेश्वरः ८
हुताग्निपूजितश्चाथ दत्तभूतबलिश्शुचिः
शिलाद्यं प्रोक्ष्य वस्त्रेण वर्मणावेष्ट्य पूजयेत् ९
हृदि वस्त्रेण संवेष्ट्य टङ्काद्यं मधुसर्पिषा
आप्लाव्य त्रिःप्रहारेण स्फोटयेदस्त्रमन्त्रतः १०
गुरोरनुज्ञया शिल्पी तथैवास्फोटयेत्पुनः
संपूज्य वस्त्रहैमाद्यैराचार्यं स्थपतिं तथा ११
तस्मात्संगृह्य तद्द्रव्यं नयेत्कर्मकुटीं पुनः
आदौ सिक्तं द्रवीभूतमस्त्रेणास्राव्य वारिणा १२
मण्डपे स्थण्डिलं कृत्वा सिक्तं तत्रैव निक्षिपेत्

संपूज्य गन्धपुष्पाद्यैर्हृदा वस्त्रेण वेष्टयेत् १३
तद्द्रव्यं शिल्पिने दत्वा कारयेल्लक्षणान्वितम्
तस्य निर्माणकाले तु उत्तराभिमुखो गुरुः १४
प्रतिमामूलमन्त्रं तु जपेदष्टोत्तरं शतम्
तस्याश्चोत्तरदिग्भागे शान्तिहोमं तु कारयेत् १५
देशिकं शिल्पिनं चैव पूजयेत्काञ्चनादिभिः
वृक्षसंग्रहणे वृक्षं संपूज्यैवं वदेद्गुरुः १६
श्रीनिकेत नमस्तुभ्यं देवजुष्ट वनस्पते
सङ्क्रामस्स्यादितिस्थानं गुणवद्यन्मनोरमम् १७
विसृज्यानेन मन्त्रेण छदात्मानं निरुच्यते
घृताक्तेन कुठारेण छिन्द्यान्मृत्युञ्जयं स्मरन् १८
यक्षेन्द्रशिवकाष्ठासु पतितं सर्वकामदम्
तापमृत्युमहारोगगुल्मोच्चाटनमग्नितः १९
द्रव्यसंग्रहणं चैवं निर्माणं पूर्वमेव तु
प्रतिमालक्षणं प्रोक्तं मण्डपं त्वधुनोच्यते २०
प्रासादस्य चतुर्दिक्षु मण्डपं चाग्रपार्श्वयोः
त्रिहस्तं तु समारभ्य चैकैककरवृद्धितः २१
पञ्चादशकरान्तं तु कुर्याल्लक्षणसंयुतम्
अत्रानुक्तं तु यत्किञ्चित्तत्सर्वं पूर्ववन्नयेत् २२
नवपञ्चैककुण्डानि पूर्ववत्परिकल्पयेत्
चतुरश्राणि वृत्तानि तद्दिगश्राणि वा नयेत् २३
शक्तीनां चैव सर्वासां योन्याकाराणि कल्पयेत्
मण्डपं समलङ्कृत्वा पीठं तत्र विनिक्षिपेत् २४
नवपट्टसमायुक्तं पञ्चपट्टयुतं तु वा
एकपट्टयुतं वापि पूजयेच्चन्दनादिभिः २५
आधाराख्यमनन्तं च मध्यमे विन्यसेद्गुरुः

लोकपालांश्च चतुरः रत्नानि विविधानि च २६
माणिक्यमिन्द्रनीलं च वैडूर्यं च प्रवालकम्
मुक्ता वज्रं तथा पुष्यरागं गोमेदकं तथा २७
मरकतं चैव रत्नानि नवरत्नादिपञ्चकम्
पञ्चरत्नमिति प्रोक्तं माणिक्कं चैकमेव वा २८
वज्रं वा मध्यमे प्रोक्तं महावेशमिति स्मृतम्
स्वस्वलोकपमन्त्रैश्च मध्यादिक्रमतो न्यसेत् २९
देवं रत्नोपरि न्यस्त्वा सुस्निग्धं कारयेद्दृढम्
शैलं चेत्स्थापने काले रत्नाद्यं विधिवन्नयसेत् ३०
शूलस्थापनकाले तु न्यसेद्रत्नानि मृण्मये
अन्येषां रत्नविन्यासं वर्जयेत्तु विशेषतः ३१
नेत्रद्वययुतर्द्धे तु कारयेन्नेत्रमोक्षणम्
सुगुप्ते मण्डपे रम्ये गोमयेनानुलेपिते ३२
प्रच्छन्नपटसंयुक्ते सर्वालङ्कारसंयुते
स्थण्डिलं तत्र कर्तव्यमष्टद्रोणादिव्रीहिभिः ३३
तिलतण्डुलसंयुक्तं लाजपुष्पसमन्वितम्
तस्य मध्ये न्यसेद्बिम्बं प्राङ्मुखं देशिकोत्तमः ३४
हेमसूचीप्रहाराभ्यां नेत्रमन्त्रमनुस्मरन्
प्रथमं दक्षिणं नेत्रं द्वितीयं वामनेत्रकम् ३५
ललाटस्थं तृतीयं तु लेखयेत्पूजयेद्गुरुः
पद्मरेखां पुरा कृत्वा ततो वै दृष्टिमण्डलम् ३६
ज्योतिर्मण्डलमालिख्य नेत्रमोचनमाचरेत्
तथैवोन्मीलनं शिल्पी वज्रकाञ्चनसूचितः ३७
पुष्पायोनिर्मितेनेव टङ्केनैव त्रिलोचने
नासिकाकर्णवक्त्राणि लिङ्गं पायुं च मोचयेत् ३८
तत्तद्देवाङ्गभूतानां नयनोन्मीलनं नयेत्

चित्राभासादिदेवानां तत्तद्वर्णैस्समाचरेत् ३९
तदाक्षिमोचनं कुर्याद्धेमतूलिकया गुरुः
उद्वास्य शिल्पिनं पश्चात्तस्याग्रे स्थण्डिलं नयेत् ४०
बिम्बं तस्योपरि न्यस्त्वा हृदयेन तु मन्त्रतः
ससूत्रान् सपिधानांश्च कलशानष्टदिक्षु च ४१
सवस्त्रान् वारिसंयुक्तान् सकूर्चान् पल्लवैर्युतान्
स्वमन्त्रैरभितो न्यस्त्वा लोकेशांस्तत्र पूजयेत् ४२
क्षुद्रेऽष्टकलशान् हित्वा चान्यत्सर्वं समाचरेत्
स्वर्णया दूर्वया नेत्रं मध्वाज्याभ्यां तु तर्पयेत् ४३
हृदा वा नेत्रमन्त्रेण मन्त्रिताभ्यां गुरूत्तमः
लोहजे शैलजे वार्क्षे रत्नजेप्येवमाचरेत् ४४
अन्येषामपि सर्वेषां भावयेत्तर्पणक्रियाम्
तर्जन्यनामिकामध्ये सूर्यसोमाग्निलोचने ४५
हिरण्यनखसंप्रोतैर्न्यसेत्तद्बीजसंयुतम्
सौवर्णे राजते ताम्रे कांस्ये वाथ शरावके ४६
घृतेन मधुना चैव प्रत्येकं प्रस्थपूरितम्
तदर्धेनार्धपादेन पूरितं वा पृथक् पृथक् ४७
घृतं प्रदर्शयेन्मन्त्री नेत्रमन्त्रमनुस्मरन्
दर्शयेन्मधुपात्रं तु मृत्युजिन्मन्त्रमुच्चरन् ४८
हृदयेन तु मन्त्रज्ञः तद्वत्साङ्गं प्रदर्शयेत्
बीजमुख्येन मन्त्रेण धान्यराशिं प्रदर्शयेत् ४९
शिवादिदशभागान्तं तेषां मानं प्रकीर्तितम्
ब्राह्मणान् दर्शयेत्पश्चात्पवमानमनुस्मरन् ५०
तेनैव दर्शयेत्कन्यां भूषितां सर्वभूषणैः
प्रच्छन्नपटमावर्ज्य जनसंघान् प्रदर्शयेत् ५१
मृद्भस्मकुशगोमूत्रगोमयैः पञ्चगव्यकैः

त्वक्सारैः प्रतिमाशुद्धिं चित्रादौ दर्पणे नयेत् ५२
रजन्यामलपिष्टाद्यैश्शुद्धियुक्तं प्रकल्पयेत्
वस्त्रैर्गन्धैश्च मालाभिर्भूषयेद्भूषणार्हकैः ५३
ग्रामप्रदक्षिणं कुर्यात्सर्वालङ्कारसंयुतम्
ग्रामप्रदक्षिणं वापि चित्रादौ परिवर्जयेत् ५४
महत्तरे वा तत्त्याज्यं प्रापयेत्तु जलं ततः
जलमध्ये प्रपां कृत्वा चतुर्गात्रसमन्वितम् ५५
मण्डितान् दर्भमालाद्यैस्तीरे समतले पुनः
स्थण्डिलं स्थापयित्वा तु गन्धाद्यैरर्चयेद्गुरुः ५६
तस्याग्रे स्थण्डिलं कृत्वा कलशानष्ट विन्यसेत्
लोकपालाधिपांस्तत्र हेमाढ्यान् पूजयेद्गुरुः ५७
व्यपोह्य भूषणार्हं तु वस्त्रेणाच्छाद्य वर्मणा
लम्बकूर्चेन संयुक्तं द्वात्रिंशत्सम्मितेन तु ५८
पीठे वा फलकादौ वा शाययेज्जलमध्यमे
गङ्गादितीर्थमावाह्य परितः कलशान् न्यसेत् ५९
एकादिनवरात्रान्तं वेदत्रिद्व्येकयामकम्
जलाधिवासनं कुर्याच्चित्रादौ दर्पणे न वा ६०
मण्डपं भूषयेत्पश्चात्पटेन महतावृतम्
ब्राह्मणान् भोजयेत्तत्र सहस्रान्तान् दशाधिकान् ६१
पुण्याहं वाचयित्वा तु वास्तुहोमं तु कारयेत्
पर्यग्निकरणं कृत्वा प्रोक्षयेत्तु शिवाम्भसा ६२
पुण्याहं वाचयेत्पश्चात्स्थण्डिले वेदिकोपरि
अष्टद्रोणैस्तदर्धैर्वा तदर्धैश्शालिभिर्मतम् ६३
तिलैर्लाजैश्च दर्भैश्च पुष्पैस्सम्यक् प्रकल्पयेत्
शयनं कल्पयेदूर्ध्वे चर्मजाद्यैरनुक्रमात् ६४
चित्रादौ कल्पयेच्छय्यां तत्तत्पादप्रदेशके

प्रोक्षयेत्पुरुषेणैव हृदा गन्धादिभिर्यजेत् ६५
जलादुत्तीर्य बेरं तु स्नानश्वभ्रे तु विन्यसेत्
व्यपोह्य वस्त्रकूर्चाद्यं स्नपनं पूर्ववन्नयेत् ६६
वस्त्रेणैव तु संवेष्ट्य पूजयेद्धृदयेन तु
कौतुकं बन्धयेत्पश्चाद्धृदा दक्षिणहस्तके
शक्तीनां चैव सर्वासां वामे वा दक्षिणेऽपि वा ६७
कुम्भान् संस्थापयेत्पश्चात्सर्वलक्षणसंयुतान्
ससूत्रान् सहिरण्यांश्च सकूर्चान् वस्त्रसंयुतान् ६८
गन्धोदकेन सम्पूर्णान् फलपल्लवशोभितान्
विन्यस्य परितस्सर्वान् गन्धपुष्पादिभिर्यजेत् ६९
मूर्तिन्यासं ततः कुर्याल्लिङ्गस्थापनमार्गतः
आत्मविद्यां शिवाख्यं च जानुकर्णशिरोवधि ७०
होमकर्म तदन्ते स्यात्प्रागुक्तविधिना सह
पलाशोदुम्बराश्वत्थवटाः पूर्वादिषु क्रमात् ७१
शम्यपामार्गश्रीवृक्षपिप्पलैश्चाग्निकोणतः
प्रधानस्य पलाशस्स्यात्समिधस्संप्रकीर्तिताः ७२
समिदाज्यचरू लाजसर्षपाश्चैव वैणवाः
यवप्रियङ्गुशाल्यश्च मुद्गमाषकुलुत्थकाः ७३
मधु क्षीरगुले सक्तु फलादावुदकास्स्मृताः
त्रिपञ्चसप्तनवभिः रुद्रैर्विश्वैश्च पक्षकैः ७४
द्रव्यैर्वा सप्तदशभिस्समस्तैर्होममाचरेत्
ब्रह्मादिदिक्षु ख्यातानि विदिक्षु हृदयादयः ७५
प्रधाने मूलमन्त्रस्स्यादङ्गब्रह्मसमायुतः
पञ्चाग्न्यायतनं चेत्तु हृदयादीनि वर्जयेत् ७६
एकाग्न्यायतनं चेत्तु द्रव्यैरेकत्र होमयेत्
सहस्रमर्धं तस्यार्धं शतं वाष्टशतं तु वा ७७

एवमर्धं च दशभिर्मूलमन्त्रेण होमयेत्
मूलाद्दशांशतोऽङ्गैस्तु सर्वैर्ब्रह्मादि होमयेत् ७८
तत्त्वतत्त्वेश्वराद्यैश्च होमं पूर्ववदाचरेत्
द्रव्यान्ते व्याहृतिं कुर्याद्धोमान्ते पूर्णया युतम् ७९
स्पर्शनं पूर्ववत्कुर्याच्छान्त्यम्भः प्रोक्षणं ततः
अत्रानुक्तं तु यत्सर्वं लिङ्गस्थापनवन्नयेत् ८०
आगमाध्ययनं दिक्षु कोणे मन्त्रजपं नयेत्
आगमाध्ययनं कुर्यादीशाने दीक्षितस्त्विह ८१
नृत्तगेयसमायुक्तं स्तोत्रमङ्गलवाचकैः
सत्रिशेषमपोह्याथ प्रभाते विमले ततः ८२
देशिको मूर्तिपैस्सार्धं कुर्यात्स्नानं तु पूर्ववत्
मन्त्रसन्नद्धकायस्तु प्रविश्य मखमण्डपम् ८३
उद्धृत्य प्रतिमां पूर्वं मुखे मूर्तिपसन्निभः
व्यपोह्य वस्त्रकूर्चादीन् यजेद्गन्धादिभिर्हृदा ८४
कुम्भान् संपूजयेत्पश्चाद्वह्निकुण्डेषु पूजयेत्
अघोराष्टशतं हुत्वा प्रायश्चित्तार्थमेव वा ८५
वौषडन्तं हरेणैव पूर्णाहुतिमथाचरेत्
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ८६
पञ्चनिष्कं समारभ्य पञ्चनिष्कविवर्धनात्
दक्षिणा नवधा प्रोक्ता प्रतिमानां निवेशने ८७
अथवा च दरिद्रस्तु निष्काद्यं पञ्चनिष्ककान्
दक्षिणा तु गुरोः प्रोक्ता ततो हीनां विवर्जयेत् ८८
अन्येषां चैव सर्वेषां पूर्ववद्दक्षिणा भवेत्
मुहूर्तनाडिकापूर्वे स्थापनं तु समाचरेत् ८९
शिवकुम्भं समुद्धृत्य वर्धन्या सह देशिकः
परिवारघटैर्युक्तं सर्वालङ्कारसंयुतम् ९०

हर्म्यप्रदक्षिणं कृत्वा प्रतिमाग्रे नयेद्धटान्
कुम्भाद्बीजं समादाय प्रतिमाहृदि विन्यसेत् ९१
तत्कुम्भस्थजलेनैव स्नापयेत्परमेश्वरम्
वर्धन्या बीजमादाय तत्पीठे विन्यसेद्गुरुः ९२
देवेन सह चेद्देवी तस्यास्तु हृदि विन्यसेत्
विभिन्नपीठा देवी चेत्पृथक्स्थापनमारभेत् ९३
मृण्मये त्वर्धपीठं वा आभासे च पटे तथा
सौधे कश्चिद्विशेषोऽस्ति तेषामेवाथ सन्निधौ ९४
दर्पणं स्थापयित्वा तु स्नापनं तत्र कारयेत्
कर्मार्चायास्तु पीठे वा कूर्चे वा स्नापनं स्थले ९५
अर्चनोक्तं समभ्यर्च्य वस्त्राभरणपुष्पकैः
प्रभूतं हविर्दद्यात्ताम्बूलादिसमन्वितम् ९६
स्नपनं कल्पयेद्वा चेदुत्सवेन युतं तु वा
अत्रानुक्तं तु यत्सर्वं लिङ्गस्थापनवन्नयेत् ९७
स्वप्रधाने पराङ्गे च स्थापनं चैवमीरितम्
परिवारसमायुक्तं स्वप्रधानमिति स्मृतम् ९८
इतरं तद्विहीनं स्यात्तच्च द्विविधमुच्यते
अन्तरङ्गं च बाह्याङ्गमाद्यधामान्तरस्थितम् ९९
चलं तदचलं वापि धामगर्भगृहादिके
भित्त्याश्लिष्टं चित्रयुक्तं शैलं वा ग्रामसंस्थितम् १००
परिवारालयस्थं यदन्तरङ्गमिति स्मृतम्
प्रासादे मण्डपे साले गोपुरे बलिपीठके १०१
तोरणादिषु सुस्थं यद्बहिरङ्गमिति स्मृतम्
बहिरङ्गे विशेषोऽस्ति तच्छृणुध्वं शिवद्विजाः १०२
जलाधिवासनं रत्नन्वासं धामप्रदक्षिणम्
शय्याक्लृप्तं विना वापि सर्वं पूर्ववदाचरेत् १०३

एतासामपि सर्वासां कर्षणं प्रथमेष्टकम्
धाम्नःक्लृप्तिं च नित्येष्टिमुत्सवं स्नपनं तथा १०४
मासपूजाविधानं च प्रायश्चित्तविधिक्रमम्
जीर्णोद्धारं बालगृहं तत्र संस्थापनं तथा १०५
अद्भुते शान्तिमन्यच्च प्रकृत्युक्तं समाचरेत् १०६
इति कामिकाख्ये महातन्त्रे प्रतिमाप्रतिष्ठाविधिः अष्टषष्ठितमः पटलः

विमानस्थापनविधिपटलः

विमानस्थापनं वक्ष्ये वाञ्छितार्थफलप्रदम्
धिष्ण्यावसाने पूर्वोक्ते काले च त्वङ्कुरार्पणम् १
प्रासादस्याग्रतः कुर्यान्मण्डपं वेदिकान्वितम्
नवकुण्डसमायुक्तं पञ्चकुण्डयुतं तु वा २
मण्डपं मण्डयित्वा तु कुर्याच्छिल्पिविसर्जनम्
ब्राह्मणान् भोजयेत्तत्र तद्दिनात्प्राग्दिनत्रये ३
तदा प्रासाददेहस्थे बेराणां दृष्टिमोचनम्
मध्वाज्यधान्यगोविप्रकन्यानां दर्शनं द्विजाः ४
तत्तद्धृदयमन्त्रेण कृत्वा संप्रोक्ष्य गव्यतः
संपूज्य गन्धपुष्पाद्यैः प्रासादं प्रोक्षयेत्ततः ५
जंघायुगलचूडान्तं तत्त्वतत्त्वेश्वरान् न्यसेत्
मूर्तिमूर्तीश्वरान् न्यस्त्वा बेरेष्वपि तथाचरेत् ६
वस्त्रैराच्छाद्य सर्वं तु पुष्पैर्दर्भैः परिस्तरेत्
मण्डपं संप्रविश्याथ पुण्याहं वाचयेत्ततः ७
स्थण्डिले वेदिकायां तु वसुद्रोणैश्च शालिभिः
तदर्धतण्डुलैश्शुद्धैस्तिलैर्लाजैस्तदर्धकैः ८
मध्यमे शिवकुम्भं तु वर्धनीसहितं न्यसेत्

दिङ्मूर्तिसंख्यया कुम्भांस्तद्बहिः परितो न्यसेत् ९
ससूत्रान् सापिधानांश्च सवस्त्रान् हेमसंयुतान्
चन्दनोदकसंपूर्णान् सकूर्चान् पल्लवान्वितान् १०
गन्धादिभिस्समभ्यर्च्य नैवेद्यान्तैस्समन्ततः
कृत्वा तथाग्निसंस्कारमग्निकार्योक्तमार्गतः ११
प्रधानकुण्डे हर्म्यस्य शिवाङ्गब्रह्मशम्बरैः
पूर्वस्मिन् पूर्वदिग्देवमन्त्रैर्दक्षे तु विन्यसेत् १२
पश्चिमे वरुणस्थैश्च सोमे सोमदिशि स्थितैः
विदिक्षु हृदयाद्यैश्च जुहुयाच्छतसंख्यया १३
पञ्चहोमाङ्गहीनैश्च मन्त्रैर्होमं समाचरेत्
समिदाज्यचरू लाजतिलसस्येन्दुवैणवाः १४
उदुम्बरवटाश्वत्थन्यग्रोधा दिक्षु संस्थिताः
शम्यपामार्गखदिरबिल्वाः कोणेषु संस्थिताः १५
प्रधानस्य पलाशस्स्यादेवं ज्ञात्वा समाचरेत्
तत्त्वतत्त्वेश्वराद्यैश्च हुत्वा पूर्णां समाचरेत् १६
प्रभाते तु गुरुस्स्नात्वा विशुद्धो मूर्तिपैस्सह
नववस्त्रस्त्रगुष्णीषस्सोत्तरीयस्समालकः १७
पञ्चाङ्गभूषणापेतो दशनिष्कादिदक्षिणः
नववस्त्रादिसंयुक्तमूर्तिपैश्च समन्वितः १८
प्रासादान्तस्स्थितान् देवानिष्ट्वा कुम्भांश्च पावकान्
प्रायश्चित्तं च पूर्णां च हुत्वा मूर्तिधरैस्सह १९
कुम्भान् संगृह्य हर्म्यस्य प्रदक्षिणमथाचरेत्
प्रासाददक्षिणे देशे स्थण्डिले विन्यसेद्घटान् २०
प्रासादं पूजयित्वा तु वस्त्वाधारे शिवासनम्
मूर्तिविद्यातनुं देहे अष्टत्रिंशत्कलान्वितम् २१
विन्यस्य सावधानस्सन् कुम्भादादाय शम्बरम्

न्यसेत्प्रासाददेहे तु वस्त्वाधारे मनोन्मनीम्  २२
तत्तज्जलेन संप्रोक्ष्य ततो दिङ्मूर्तिषु न्यसेत्
अर्चयेदथ गन्धाद्यैर्नैवेद्यान्तं पृथक्पृथक्  २३
एवं यः कुरुते मर्त्यो भुक्त्वा भोगान् शिवं व्रजेत्  २४
इति कामिकाख्ये महातन्त्रे विमानस्थापनविधिः एकोनसप्ततितमः पटलः

मण्डपस्थापनविधिपटलः

लक्षणं मण्डपानां तु वक्ष्यते विप्रसत्तमाः
उक्तानामपि सर्वेषां धाम्नामग्रेऽग्रमण्डपम्  १
तन्मानसममानं तु श्रेष्ठमित्यभिधीयते
मण्डपं सममानं चेत्सान्तरालं सवेशकम्  २
युग्मस्तम्भसमायुक्तं युक्त्या सर्वाङ्गशोभितम्
सार्धहस्तं द्विहस्तं वा प्रासादार्धमथापि वा  ३
अन्तरालस्य दीर्घं स्यादन्यत्सन्धिगतं तु यत्
तन्मध्यममिति प्रोक्तं त्रिगुणं चोत्तमं भवेत्  ४
एकदण्डं द्विदण्डं वा त्रिदण्डं तस्य वेशनम्
सावकाशान्तरालं चेत्तस्माद्द्वित्रिगुणं भवेत्  ५
पार्श्वसोपानसंयुक्तं मूलसोपानभित्तिकम्
तदर्धं भित्तियुक्तं वा तदष्टांशेन भित्तिकम्  ६
प्रासादमष्टधा कृत्वा ह्रासयेदष्टभागतः
यावद्द्विभागमानं तु भवेद्द्वादशमानकम्  ७
मूलधाम्नो भवेच्छुद्धिर्मण्डपं चेद्द्विपार्श्वयोः
अन्तरालप्रदेशोक्तं वेशयुक्तं प्रकीर्तितम्  ८
अग्रमण्डपमीदृक्स्यात्प्रासादसमतुङ्गकम्
स्वायंभुवादिलिङ्गे तु न्यूनं वाप्यधिकं तु वा  ९

तद्वृत्तस्य तलं चाथ भित्तिहीनं तु वा मतम्
विवृतस्तम्भसंयुक्तं न चेद्द्वारं तदग्रके १०
द्वारलक्षणमार्गेण तत्पार्श्वे द्वारपौ मतौ
विवृतस्तम्भसंयुक्तं चेन्मूलधामप्रवेशगौ ११
हित्वा तु मण्डपं तत्र शुकाग्रं वा विधीयते
शुद्धनागरधाम्नैतद्गर्भमानार्धनिष्क्रमः १२
शिखरार्धसमुत्सेधश्शुकनासाविभूषितः
अन्तरालं तदग्रे स्यात्पार्श्वदेशप्रमाणकम् १३
सनिष्क्रमान्तरालं वा मण्डपं वा विधीयते
पार्श्वद्वारसमोपेतं निर्द्वारं वाथ तद्भवेत् १४
तदग्रे मण्डपं कुर्यात्प्रतिमास्थापनार्थकम्
स्नपनार्थं तदग्रे स्यात्तदग्रे नृत्तमण्डपम् १५
एतेषामपि सर्वेषामधिष्ठानादिमानकम्
मूलधामसमं श्रेष्ठं स्वाष्टांशोनाधिकं तु वा १६
चतुष्षोडशभागोनमधिकं वा प्रकीर्तितम्
मानवे मानवं ह्येतत्सामान्यं समुदाहृतम् १७
मण्डपं वा सभा वापि कूटमेषां समाकृतिः
एतेषामपि सर्वेषां प्रमाणमधुनोच्यते १८
त्रिकरं तु समारभ्य करपादविवृद्धितः
शतहस्तावसानस्तु भवेन्मण्डपविस्तरः १९
प्रासादोक्तायसंयुक्तमिष्टपार्श्वगभित्तियुक्
नानाजालकसंयुक्तं नानाद्वारसमायुतम् २०
पृथगाद्येष्टकोपेतमायादिशुभसंयुतम्
विस्तारमष्टवह्न्यह्नि वसुघ्नं रविणा भजेत् २१
मन्वष्टघ्नैस्तु यच्छिष्टं भवेद्धनमृणं द्विजाः
योनिस्तारा च पर्यन्ते त्रिंशन्मुनिहते सति २२

तिथिवारक्रमेणैव मण्डपायादयो मताः
न चायं विहितस्त्वग्रमण्डपे चान्तरालके २३
आद्येष्टकादयोऽप्यत्र न विधेयाः पृथग्विधाः
अन्येषामपि सर्वेषां मूलोक्तं सर्वमाचरेत् २४
सार्धहस्तं समारभ्य त्र्यङ्गुलविवर्धनात्
पञ्चहस्तान्तमानं तु भित्तिमानं च मण्डपे २५
तथैव स्तम्भमानं स्यात्किं तु पङ्क्तिकरान्तकम्
पञ्चाङ्गुलं समारभ्य व्योममात्रविवृद्धितः २६
त्रिंशदङ्गुलपर्यन्तं स्तम्भतारं प्रकीर्तितम्
व्योमपङ्क्ति समारभ्य व्योमपङ्क्तिविवृद्धितः २७
पञ्चाशत्पाङ्क्तिपर्यन्तं मण्डपे पङ्क्तयो मताः
भद्रोपभद्रसंयुक्तं मध्यस्तम्भप्रभासनम् २८
लाङ्गलाकारकुड्याढ्यं नानालङ्कारशोभितम् २९
ब्रह्माङ्कणसमायुक्तमथवा तद्विवर्तितम्
द्वारतालतलोपेतं कूटकोष्ठादिशोभितम् ३०
एतदेव सभामानमिति प्रोक्तं द्विजेश्वराः
आस्थानमण्डपं कुर्याद्धाम्नो दिक्षु विदिक्षु च ३१
प्रागुक्तेन प्रमाणेन मण्डपं कूटमेव वा
सभा वा तत्र कर्तव्या चाष्टदिङ्मुखसंयुतम् ३२
समाश्रमायताश्रं वा मुखे भद्रयुतं तु वा
एकानेकतलोपेतं पार्श्वसोपानसंयुतम् ३३
संपाद्यैवं तदग्रे तु सभाद्यं परिकीर्तितम्
पञ्चहस्तं समारभ्य व्योमहस्तविवृद्धितः ३४
एकत्रिंशत्करान्तं तु विस्तारस्तस्य संमतः
विस्तारपादवृद्ध्या तु यावद्वेदगुणं भवेत् ३५
आयामं कल्पयेत्तस्य विस्तारे भित्तिरुच्यते

वह्निभित्तिं समारभ्य व्योमभित्तिविवर्धनात् ३६
विश्वभित्त्यवसानं तु विस्तारे भित्तयो मताः
विस्तारभित्तिवसुधां कृत्वार्धार्धविवर्धनात् ३७
विस्ताराध्यर्धमानान्तास्समानद्वारभित्तयः
युग्मभित्तिषु मध्यस्थपादानामोजविस्तरः ३८
तन्मानं वर्धयेन्मध्ये पार्श्वभित्तिषु ह्रासयेत्
ओजभित्तिषु मध्यस्थपदश्रेणिद्वयं तु वा ३९
त्यजेत्तस्य समन्तात्तु द्वारं कुर्याद्यथाविधि
मूलभित्तिप्रमाणेन पादं वार्धत्रिपादकम् ४०
द्वारमानं समाख्यातं तत्पादान् युक्तितो नयेत्
मूलपादाच्च द्वारस्थाः पादा ये संस्थितास्त्विह ४१
तत्तत्पादविशालेन बहिरन्तर्निवेशिताः
स्वस्वस्थानगता वापि विधातव्या विचक्षणैः ४२
सभादिमध्यगं रङ्गस्थानं देवासनं तु वा
एतेषामपि सर्वेषां प्रोक्षणं त्वधुनोच्यते ४३
कृत्वाङ्कुरार्पणं पूर्वं पुण्याहप्रोक्षणं तथा
ब्राह्मणान् भोजयित्वादौ तदुच्छिष्टं विवर्जयेत् ४४
पुण्याहं च पुनः कृत्वा पञ्चगव्येन सेचयेत्
वास्तुहोमं ततःकृत्वा पर्यग्निकरणं नयेत् ४५
मण्डपं भूषयित्वा तु गन्धाद्यैरर्चयेद्गुरुः
निवृत्त्यादिकला न्यस्त्वा मध्यस्तम्भचतुष्टये ४६
कौतुकं बन्धयेदग्निकोणभागेऽथ बन्धयेत्
वस्त्रैरस्त्रेण चावेष्ट्य मालाद्यैर्भूषयेत्ततः ४७
गन्धाद्यैः पुनरभ्यर्च्य तत्त्वतत्त्वेश्वरान्वितान्
मूर्तिमूर्तीश्वरान्न्यस्त्वा मध्यमे मण्डपस्य तु ४८
स्थण्डिलं शालिभिःकृत्वा वसुद्रोणादिमानतः

तण्डुलैस्तिललाजैश्च दर्भैःपुष्पैः परिस्तरेत् ४९
मध्यमे शिवकुम्भं तु निवृत्त्यादिकलान्वितम्
तद्वामे वर्धनीं तस्यां देवीमावाह्य भक्तितः ५०
चतुष्कुम्भं तु संस्थाप्य हेमवस्त्रादिसंयुतम्
धर्मं ज्ञानं च वैराग्यमैश्वर्यं तेषु वह्नितः ५१
पूजयेद्गन्धपुष्पाद्यैः नैवेद्यान्तैः पृथक्पृथक्
ततः शिवाग्निं संस्थाप्य समिदाज्यान्नलाजकैः ५२
शतसंख्यं तदर्धं वा शिवाद्यैर्होममाचरेत्
प्रधानेन शिवेनाङ्गैः पूर्वदिक्स्थण्डिले मताः ५३
धर्माद्यैर्हृदयाद्यैर्वा होमस्स्यादग्निकोणतः
तत्त्वाद्यैश्च ततो हुत्वा पूर्णाहुतिमथाचरेत् ५४
प्रभातेऽथ गुरुस्स्नात्वा मूर्तिपैश्च समन्वितः
नववस्त्रधृगुष्णीषी सोत्तरीयस्समालकः ५५
संप्राप्तदक्षिणे मूर्तिधारदैवज्ञशिल्पिभिः
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समारभेत् ५६
मण्डपं वेदगात्रं च कुम्भानग्निं च योजयेत्
प्रायश्चित्तमघोरेण कृत्वा पूर्णां समाचरेत् ५७
शिवमण्डपदेहे तु वस्वाधारे मनोन्मनीम्
न्यस्त्वा तदद्भिस्संप्रोक्ष्य गन्धपुष्पादिभिर्यजेत् ५८
नैवेद्यान्ते गुरुर्मन्त्री हृदयेन तु मन्त्रतः
एवमेव सभादीनां विधेयं प्रोक्षणं बुधाः ५९
एवं यः कुरुते मर्त्यस्सोऽनिष्टैर्विप्रयुज्यते ६०
इति कामिकाख्ये महातन्त्रे मण्डपस्थापनविधिः सप्ततितमः पटलः

## प्राकारलक्षणविधिः

अथ वक्ष्ये विशेषेण प्राकाराणां तु लक्षणम्

प्रासादस्य विशालार्धं दराडमित्यभिधीयते १
एकद्वित्रिचतुष्पञ्चदराडैर्मध्यात्समन्ततः
एकप्राकारक्लृप्तिस्तु पञ्चधा परिकीर्तिता २
मूलालयविशाले तु त्रिधा भक्ते पदं भवेत्
तेन भागेन तद्बाह्ये द्विगुणं त्रिगुणं तु वा ३
त्रिचतुर्गुणकं चापि चतुष्पञ्चगुणं तु वा
पञ्चषड्गुणमिष्टं च प्राकारद्वयकल्पनम् ४
एवं चतुर्विधं प्रोक्तं त्रिप्राकारस्तु कथ्यते
प्रासादस्य चतुर्भागे यस्तु दराडमिहोच्यते ५
तस्य द्वित्रिचतुर्भागैस्त्रिचतुष्पञ्चभिस्तथा
चतुष्पञ्चषडंशैस्तु पञ्चषट्सप्तभिस्तथा ६
षट्सप्ताष्टभिरुद्दिष्टं त्रिप्राकारप्रमाणकम्
पञ्चधा कथितं वेदप्राकारं शृणुत द्विजाः ७
त्रिप्राकारस्य बाह्ये तु एकैकाङ्गुलवर्धनात्
नवभागावसानं तु समन्तात्परिवर्धयेत् ८
एवं पञ्चविधं प्रोक्तं चतुष्प्राकारमानकम्
एवं चतुष्प्राकारेऽपि प्रासादस्य विशालकम् ९
समस्तं चार्धमानं च त्रिचतुर्भागमानकम्
दराडार्धं योजयेद्धीमान् हस्तमानेन चोच्यते १०
द्विहस्तादेकवृद्ध्या तु नवहस्तावसानकम्
एषु प्राकारमानं तु क्षुद्राणामष्टधा मतम् ११
द्विहस्तं च त्रिहस्तं च त्रिचतुर्हस्तमेव च
चतुष्पञ्चकरं चैव पञ्चषट्करमेव च १२
षट्सप्ताष्टकरं चैव अष्टनन्दं तथैव च
नन्ददीर्घाष्टकं चैव द्विप्राकारप्रमाणकम् १३
अस्मादेककरद्धर्या तु रुद्रहस्तान्तमेव च

त्रिप्राकारप्रमाणं तु वेदप्राकारकं तथा १४
एकैकहस्तवृद्ध्या तु रविहस्तावसानकम्
चतुष्प्राकारमानं तु क्षुद्रादीनां प्रकीर्तितम् १५
जातिच्छन्दविकल्पाभासादीनां तु समीरितम्
नियमो विद्यते नैव प्रासादे सार्वदेशिके १६
जातौ जातिकराणां तु अन्यस्यापि च सद्मनः
अर्धत्र्यंशचतुर्भागैर्द्विभागैश्च क्रमेण तु १७
सममार्गानुमार्गाभ्यां नागरादौ नियुज्यते
प्रासादस्य विशालेन सपादेन समेन च १८
पादोनेन विशालेन महामार्गार्हकं तु वा
कल्पयेद्धस्तमानेऽपि प्रागुक्तविधिना सह १९
अयं विभागो नास्त्येव प्रासादे सार्वदेशिके
पञ्चषण्मुनिसालेऽपि चाष्टनन्दवृतौ तथा २०
हस्तैः पादैस्समन्तात्तु वर्धयेत्पूर्वमानतः
समं तु चतुरश्रं तत्पूर्वं कृत्वा ततः परम् २१
कल्पयेत्तु मुखायामं देवस्याभिमुखं यथा
पृष्ठे वा कल्पयेत्पार्श्वे पुरातनविमानके २२
नूतने वा प्रकर्तव्यं स्थानसंकटसंयुते
एकहस्तं समारभ्य हस्तैकैकविवृद्धितः २३
एकादशकरान्तं तु प्रागुक्तात्तु विशालकात्
वर्धयेद्ध्रासयेद्वापि यावदिष्टप्रपूरणम् २४
पृष्ठे वापि मुखे वापि पार्श्वयोरुभयोस्तु वा
एकपार्श्वेऽथवा कुर्यान्मुखायामे प्रकल्पयेत् २५
पादाधिकमथाध्यर्धं पादोनद्विगुणं तु वा
द्विगुणं द्विगुणार्धं वा त्रिगुणं च चतुर्गुणम् २६
द्विहस्तं तु समारभ्य द्विद्विहस्तविवर्धनात्

यावत्पञ्चगुणं तारं मुखायामं प्रकल्पयेत् २७
भित्त्यन्तरालमानं वा भित्तिबाह्यमथापि वा
भित्तिमध्यं तु वा कुर्यात्प्राकाराणां प्रमाणकम् २८
आयादिषट्कसिद्ध्यर्थं वृद्धिं हानिं च हस्तकैः
कल्पयेत्पादमार्गेण प्राकारस्य प्रकल्पने २९
सच्छिन्नहस्तप्रासादे छिन्नहस्तस्य लोपनम्
पूरणं वा प्रकर्तव्यं हस्तमानवशेऽपि च ३०
देवानामेतदुक्तं तु नराणां स्यात्खलूरिका
तदुक्तमात्रं संग्राह्य मात्रोक्तं तत्र योजयेत् ३१
आयं वसुगुणं कृत्वा सप्तविंशतिभिर्हरेत्
शेषं ऋक्षं तु विस्तारात्सकलाद्वाथ कल्पयेत् ३२
उक्तादेकमथवाष्टगुणितं भानुभिर्भजेत्
आयं त्रिगुणितं दिग्भिर्मनुभिर्विभजेत्ततः ३३
व्ययस्तु कथितश्शास्त्रैर्द्विगुणं वसुभिर्हरेत्
ध्वजादियोनयः प्रोक्ताः पर्यन्तत्रिंशतो भवेत् ३४
तिथिश्च कथिता वारो मुनिभिर्भाजितो भवेत्
मूलप्रासादहस्तैर्वा चान्यैर्वाथ निरीक्षयेत् ३५
एकहस्तं समारभ्य चैकाङ्गुलविवर्धनात्
द्विहस्तान्तस्समुद्दिष्टस्सालानां चैव विस्तरः ३६
तद्विस्तारप्रमाणेन यावत्त्रिंशद्गुणं भवेत्
त्रिगुणं तु समारभ्य क्षुद्रे महति मन्दिरे ३७
प्राकारोत्सेध उद्दिष्टो मूलादूनं तदग्रतः
षडंशं तु समारभ्य यावत्षोडशभागिकम् ३८
तावत्कृत्वा समूलं तु चैकांशेन तदग्रकम्
अधिष्ठानादिवर्गाढ्यं खण्डहर्म्यादिमण्डितम् ३९
ऋजुभक्तियुतं वापि प्राकारं तु प्रकल्पयेत्

छत्रादिशिखरोपेतमूर्ध्वस्थवृषभान्वितम् ४०
तस्य दण्डप्रमाणेन चार्धेनाथ त्रिपादतः
सपादेनाथ सार्धेन पादोनद्विगुणेन वा ४१
द्विगुणेन च मूले तु भित्तेश्चैव विनिर्गमः
उपानं कथितं तस्योपरिष्टात्तेन मानतः ४२
अर्धादिपादवृद्ध्यादिद्विगुणान्तं हि पादकम्
तस्योपरिष्टात्कम्पं तु तच्चतुर्थांशमानतः ४३
तस्यार्धेन त्रिपादेन सपादेन च सार्धतः
पादोनद्विगुणं वापि द्विगुणान्तं प्रकल्पयेत् ४४
कम्पमेकं द्वयं वापि ऊर्ध्वोपानं तु वा भवेत्
अन्तस्सालाङ्कणं निम्नं बाह्यसालाङ्कणं भवेत् ४५
सालानामन्तरे व्यासं बाह्ये सालाङ्कणं भवेत्
अङ्गुलद्वयमारभ्य चैकैकाङ्गुलवर्धनात् ४६
नवमात्रान्तकं यावत्प्रतिसालं तु निम्नकम्
षट्पञ्चवेदरुद्राक्षद्व्यङ्गुलैः परिकल्पयेत् ४७
जातिच्छन्दविकल्पाभासानां क्षुद्रस्य चैव हि
सार्वदेशिकहर्म्ये तु न चायं विधिरिष्यते ४८
स्वायंभुवादिलिङ्गानामन्तर्निम्नसमं तु वा
बाह्यनिम्नं तु वा कार्यं सालानामङ्कणं बुधैः ४९
सालानामन्तरेऽपि स्यान्मालिकामण्डपाकृतिः
सभाकृतिर्वा कर्तव्या चैकद्वित्रिकभित्तिभिः ५०
चतुर्भित्तियुता वापि एकानेकतलान्विता
उपानात्तु समारभ्य मूलप्रासादतुङ्गकम् ५१
उत्तरान्तं विभज्याथ सप्तधा तु मसूरकम्
द्विपादं पाददैर्घ्यं तु शेषेण परिकल्पयेत् ५२
मूलधाम्नस्तु पादं तु भजेद्वा नवसंख्यया

अधिष्ठानद्विभागेन पादं शेषेण कल्पयेत् ५३
द्विहस्तं तु समारभ्य चैकैकाङ्गुलवर्धनात्
सप्तहस्तान्त उत्सेधस्स्तम्भानां परिकीर्तितः ५४
भित्तिमानं तथैव स्यात्क्षुद्रे क्षुद्रविमानके
पञ्चाङ्गुलं समारभ्य चार्धाङ्गुलविवर्धनात् ५५
चतुर्विंशतिमात्रान्तं स्तम्भविस्तार इष्यते
पादोच्चार्धमधिष्ठानसप्तमाष्टनवांशकम् ५६
हीनं वाप्यधिकं वापि पादोच्चेऽप्येवमेव हि
पादोच्चे त्रिचतुर्भागेनाथवापि मसूरकम् ५७
पादबन्धं सजातीयमधिष्ठानं नियोजयेत्
प्रस्तरादिप्रमाणं च प्रासादोक्तवदाचरेत् ५८
आग्नेये नैर्ऋते कोणे वायव्ये चाथ वैशके
चतुष्कोणेऽपि वा कुर्याद्गर्भं च प्रथमेष्टकाम् ५९
अभ्यन्तरमुखाश्चैव प्राकाराः परिकीर्तिताः
स्वस्य दक्षिणकेंऽशे तु द्वारकोणान्तरेऽपि वा ६०
गृहक्षते महेन्द्रे वा भल्लाटे पुष्पदन्तके
स्थानं गर्भस्य निर्दिष्टं तत्रस्था प्रथमेष्टका ६१
मूर्धेष्टकोर्ध्वकीलाढ्यं मूलात्तत्परिकल्पयेत्
भित्त्यूर्ध्वस्थचतुष्कोणेष्वेकस्मिन्निष्टकां न्यसेत् ६२
अन्तर्मण्डलमाद्यं स्यादन्तर्हारा द्वितीयका
तृतीया मध्यहारा स्यान्मर्यादाख्या चतुर्थका ६३
महामर्यादिकाख्या च पञ्चमी परिकीर्तिता
परिवारामरान् सर्वांस्तत्र संस्थापयेद्गुरुः ६४
परिवारविधानाय तच्च लेशान्निगद्यते
परिवारविमानानां मानं गर्भार्धमेव वा ६५
मूलवास्तुत्रिभागैकमर्धं वा पादबाह्यकम्

एकहस्तं समारभ्य रुद्रहस्तान्तमेव हि ६६
प्रासादस्य तु विस्तारो ह्युत्सेधः प्राग्वदेव हि
अङ्गलिङ्गालयाकाराः परिवारालया मताः ६७
भित्त्याश्रिता विशिष्टा वा परिवारालया मताः
सन्त्यक्तपादरूपांशमूलदेशमुखान्विताः ६८
पूर्वस्थाः पश्चिमाप्तयास्स्युः पूर्वास्याः पश्चिमस्थिताः
दक्षस्थास्सौम्यवक्त्रास्स्युर्दक्षास्यास्सौम्यदिग्गताः ६९
क्षेत्रेशो दक्षवक्त्रो वा चण्डेशश्च तथैव च
नागराडीशदेशे स्यादगस्त्यश्च तथैव च ७०
धनदोऽपि तथा प्रोक्तस्तथा चण्डेश्वरो मतः
वसवो ऋषयश्चार्का रुद्रा एकादशैव हि ७१
अश्विनौ वास्तुदेवाश्च बहिर्वान्तर्व्यवस्थिताः
सर्वेषु परिवारेषु सामान्योऽयं प्रकीर्तितः ७२
देवाग्रे स्थापयेदुक्षं देवस्याभिमुखं तु वा
मण्डपं तु चतुर्द्वारं कारयेद्वृषभस्य तु ७३
आदितः परिवारोऽयं त्रिशूलेन समाहितः
द्वितीयः परिवारस्स्यात्सचण्डेशस्तृतीयकः ७४
विघ्नेश्वरसमायुक्तश्चतुर्थः परिकीर्तितः
ततस्सप्तार्चिषा युक्तः पञ्चमोऽद्य समीरितः ७५
स्कन्दज्येष्ठासमायुक्तौ वीरौ द्वौ षष्ठसप्तमे
अष्टमः परिवारस्स्यात् संयुक्तस्सप्तमातृभिः ७६
सकलादिपदे देवान् स्थापयेद्युक्तितो बहिः
परिवाराष्टकैर्हीनं विमाने परिकल्पयेत् ७७
वृषोऽग्निमातरौ विघ्नस्कन्दौ ज्येष्ठा च चण्डिका
आदित्यश्च क्रमेण स्याद्गणविद्येश्वरास्तु वा ७८
मातृणामुत्तरे दक्षे चण्डिकां वा मुनीश्वराः

पद्मजं स्थापयेद्विष्णुं तद्विहीनमथापि वा ७९
दुर्गां हित्वाथ विष्णुं वा कुबेरं सोममेव वा
चण्डेशमीशदिग्भागे क्षेत्रपालं च तत्र वै ८०
विघ्नेशकन्दयोर्मध्ये वारुणे वा श्रियं न्यसेत्
विघ्ने सरस्वतीयुक्ता तृतीयं वा पृथङ्न्यसेत् ८१
अथवा लोकपालास्स्युर्यमो मातृयुतो न वा
अष्टदिक्षु विशालास्स्युस्सपीठाः केवलास्तु वा ८२
विघ्नेशस्सर्वदेशस्थो गौरीस्कन्दौ तथैव च
द्वादश स्युर्द्विरष्टौ च चतुर्विंशतिसंख्यका ८३
द्वात्रिंशत्परिवारास्स्युरन्तर्मध्यमहारयोः
द्विरष्टपरिवारोऽयं तेषु सौम्यं निगद्यते ८४
उपपीठपदं कृत्वा स्थापयेद्रविदेशतः
आदित्यं सुप्रजं वह्निं किन्नरं मातरं तथा ८५
विबुधं विघ्नराजं च श्रियं च वरुणं तथा
स्कन्दं ज्येष्ठां च दुर्गां च विष्णुं चण्डेश्वरं तथा ८६
क्षेत्रजं गीतजं पश्चात्स्थाप्यन्तां मुनिपुङ्गवाः
अस्मिन्नेव पदे चान्तर्विद्येशा द्वारपास्तु वा ८७
द्विरष्टपरिवारास्स्युर्द्वात्रिंशदधुनोच्यते
स्थण्डिले तु पदे स्थाप्य द्वात्रिंशद्रविभागतः ८८
आदित्यं चोदकं गङ्गां वह्निं नागमगस्त्यकम्
यमं सुशान्तं भूतेशं विघ्नेशं भारतीमपि ८९
श्रियं जलेशं स्कन्दं च दुर्गां ज्येष्ठां मनोन्मनीम्
ब्रह्माणं विष्णुमन्ते च काश्यपं नन्दिनं तथा ९०
क्षेत्रजं विमलं चान्ते गजेन्द्रं स्थापयेद्बहिः
अन्तर्विद्येश्वरान् वापि ऋषीन् वा विन्यसेद्वसून् ९१
अथाष्टपरिवारान् वा विन्यसेद्देशिकोत्तमः

एकसालादिसालेषु युक्त्या सर्वत्र योजयेत्  ९२
पीठस्था वाथ बिम्बस्थाः परिवारामरा मताः
वृषं शूलं च चराडेशं महापीठं गणाधिपम्  ९३
नागराजानमित्येतान् सर्वत्र परिकल्पयेत्
एषां मध्यादथेष्टान्वा न्यसेत्पञ्चादिसालके  ९४
चतुर्दिन्तु चतुष्पीठे चाग्रपृष्ठे द्वयं तु वा
पृष्ठं विहाय त्रितयमेकमग्रेऽथवा भवेत्  ९५
कोणद्वारे भवेत्पीठं कोणस्थं दिग्गतन्तु वा
प्रतिसालं तु पीठं वा पैशाचं तु बहिर्भवेत्  ९६
पञ्चाङ्गुलं समारभ्य चैकाङ्गुलविवर्धनात्
पञ्चविंशतिमात्रान्तो विस्तारादग्रपीठके  ९७
पादमर्धं त्रिपादं वा समं वोच्चविशालतः
द्वित्रिवेदेषु षट्सप्तभागान् कृत्वैकभागतः  ९८
एकद्वित्रिचतस्त्रस्स्युर्मेखलायास्तथोपरि
सकर्णिकं तु पद्मं स्यात्केवला कर्णिकापि वा
मेखलाद्विगुणं पद्मं त्रिगुणं वा चतुर्गुणम्  ९९
पद्मोच्चं कीर्तितो वेशो मेखलासदृशो भवेत्
त्रिपादं वा द्विपादं वा पादं वा परिकल्पयेत्  १००
कर्णिका मेखलोच्चा वा पद्मार्धेनाथ पादतः
त्रिपादेन विधेया वा यथाशोभबलेन वा  १०१
वृत्तं वा चतुरश्रं वा न्तुद्रपीठं तदीरितम्
महतां पीठकानां च लन्तणं शृणुतोत्तमाः  १०२
पद्मगर्भसमो वापि तदधः पाद एव वा
तदन्तरेऽष्टभागे तु नवधा विस्तरो भवेत्  १०३
रुद्रमात्रं समारभ्य द्वित्र्यङ्गुलविवर्धनात्
नवहस्तप्रमाणान्तो महापीठस्य विस्तरः  १०४

विस्तारसम उत्सेधस्सपादस्सार्ध एव वा
त्रिपादो ह्यर्धमानो वा तत्तदन्तरजोऽपि वा १०५
पीठोच्चष्षोडशांशो वा एकभागेन कीर्तितः
पीठतारसमो वा स्यादेकद्वित्र्यङ्गुलोन्नतः १०६
जगती चतुरंशस्स्यात्त्रिपादं कुमुदो भवेत्
पादेन कम्पः कर्णस्तु त्रिपादेन प्रकीर्तितः १०७
भागेनोपरि कम्पस्स्याद्वाजनं तु द्विभागतः
भागेन वाजनं चोर्ध्वे तदूर्ध्वे पद्ममिष्यते १०८
पीठाकारसमो वा स्यादेकद्वित्र्यङ्गुलोन्नतः
षोडशाष्टांशहीनो वा पत्रविस्तार इष्यते १०९
तदर्धो वा त्रिपादो वा स्वव्यासादुच्चमिष्यते
तयोरन्तरमानं तु नवधोच्चं भवेद्द्विजाः ११०
पद्मतारत्रिभागैका कर्णिकार्धेन वा मता
पादमानान्तराष्टांशे नवमानं प्रकीर्तितम् १११
कर्णिकाविस्तरः प्रोक्तस्तत्त्रिपादस्समोऽपि वा
अर्धमानान्तरोपेतः कर्णिकोच्छ्राय इष्यते ११२
पादाष्टांशविहीनस्स्यादग्रस्थूलस्य विस्तरः
अधिष्ठानोपपीठोक्ताकृतिं वोपरि कल्पयेत् ११३
धामाकृतिर्वा कर्तव्या प्रस्तरान्ता गुरूत्तमाः
मध्यभद्रयुतं वापि नानाचामरसंयुतम् ११४
नानाभूतसमायुक्तं कोणस्थर्क्षसमन्वितम्
अनेकनासिकाजालं सोपपीठं तु केवलम् ११५
वृत्तं वा चतुरश्रं वा त्र्यश्रं वस्वश्रमेव वा
प्रासादपोतमध्यात्तु पादमध्यविवर्जितम् ११६
मूलधाम्नः समारभ्य वह्निदण्डं व्यपोह्य च
तत्र संस्थापयेत्पीठं तत आरभ्य वर्धयेत् ११७

अर्धदराडेन पंचाशद्दराडान्तं देशिकोत्तमः
पीठायामान्तरा ह्येतद्वृषपृष्ठेऽथवा भवेत् ११८
सालानां मध्यदेशे वा ग्राममार्गान्तरेऽपि वा
ग्राममध्येऽथवा कुर्याद्धामेशानेऽथवा भवेत् ११९
आयाद्यं धामजात्युक्तवर्त्मनैव परीक्षयेत्
कुर्यादाद्येष्टकामध्ये पूर्वोक्तविधिना गुरुः १२०
दक्षिणे पश्चिमे वास्य सोपानं परिकल्पयेत्
संश्लिष्टं वाथ विश्लिष्टं सोपानं तदपीरितम् १२१
पश्चिमद्वारसंयुक्तं वृषभं शूलमेव च
महापीठध्वजाद्यं च पश्चिमे परिकल्पयेत् १२२
दक्षद्वारे च कौबेरेऽप्येवमेव समाचरेत्
चतुर्द्वारयुते द्वारं प्रत्यक्षं वा सशूलकम् १२३
महापीठमथैकत्र स्थापयेद्वा ध्वजादिकम्
प्रतोली पूर्वदेशे स्यात्पश्चिमे वा चतुर्दिशि १२४
आग्नेय्यां तु धनस्थानं नैर्ऋत्यामायुधालयः
वायव्यां शयनस्थानमैशान्यां कूपमिष्यते १२५
सदाशिवाद्यास्सर्वत्र स्थापनीयास्समन्ततः
इन्द्रपावकयोर्मध्ये धनस्थानं तु वा भवेत् १२६
आग्नेय्यां पचनस्थानं यागशाला च तत्र च
अग्निकुराडं च तत्र स्याद्यमपावकमध्यमे १२७
पुष्पमञ्जनशाला स्यात्पानीयस्थानमेव च
कामिकादिशिवज्ञानस्थानं याम्यदिशि स्थितम् १२८
यमराक्षसमध्ये तु गन्धादिस्थानमिष्यते
निर्ऋतौ पुष्पसंस्थानं तद्वामे वाथ कल्पयेत् १२९
धर्मसंकीर्तनं वात्र वारुणे वा प्रकल्पयेत्
वायव्ये दक्षिणे वाथ ज्ञानकोशं प्रकल्पयेत् १३०

तत्र वा शयनस्थानं सोमवाय्वन्तरेऽपि वा
कूपस्थानं कुबेरे वा तत्पूर्वे वैशदेशके १३१
यागमण्डपमिष्टं स्यात्तद्दक्षे वाद्यमिष्यते
ऐशान्यां शयनस्थानमथवा परिकल्पयेत् १३२
तद्दक्षिणे वा तत्स्थानं सोमे वा परिकल्पयेत्
कूपं च शयनस्थानं पुष्पमञ्जनमण्डपे १३३
मद्भक्तस्थानकं विद्यास्थानं वस्त्रसुवर्णयोः
देवोपकरणस्थानं नोक्तं विस्तारभीरुणा १३४
तत्सर्वं यजमानोच्छावशेन परिकल्पयेत्
देवोपजीविनां स्थानं तथैव परिकल्पयेत् १३५
देवालयसमीपे तु देशिकस्यालयो भवेत्
पूजकानां गृहं तत्र परिचारकसंस्थितिः १३६
पुष्पारामादिकानां तु स्थानं सर्वत्र कल्पयेत्
आस्थानमण्डपं सर्वदेशेऽपि विविधं नयेत् १३७
अन्यद्ग्रामोक्तरीत्या तु स्थानं संकल्प्यतां बुधाः १३८

इति कामिकाख्ये महातन्त्रे प्राकारलक्षणविधिः एकसप्ततितमः पटलः

## परिवारलक्षणविधिः

स्थापनं परिवाराणां संक्षेपाच्छृणुत द्विजाः
त्रिहस्तं तु समारभ्य करस्यैकस्य वर्धनात् १
मण्डपस्यास्य विस्तारो नवहस्तान्तमेव हि
तन्मध्ये वेदिकोपेतं षोडशस्तम्भसंयुतम् २
रविस्तम्भयुतं वापि चतुस्स्तम्भयुतं तु वा
कुण्डं वा स्थण्डिलं वापि शरवेदैकसंख्यया ३
वृत्तं वा चतुरश्रं वा कुण्डं कुर्याद्दिगश्रकम्

मातृणां नवकुगडं वा चैककुगडमथापि वा ४
योग्यानां रत्नविन्यासं नेत्रोन्मीलनमेव च
पञ्चगव्यादिभिस्तेषां शुचिं तोयाधिवासनम् ५
ततो मगडपसंस्कारं ततो बिम्बादिशोधनम्
कौतुकं शयनारोहं कुम्भविन्यासमेव च ६
कृत्वा तु पूर्ववत्सर्वं स्वनामाद्यक्षरेण तु
तत्तद्वर्णादिसंस्थाने यजेत्सम्यक्छिवद्विजाः ७
तेषां मूर्त्यादिविन्यासं कृत्वा होमं समाचरेत्
पलाशोदुम्बराश्वत्थवटैः पूर्वादिदिक्षु च ८
समिदाज्यचरून् लाजान् तितलं च जुहुयात्क्रमात्
ततः प्रभाते बिम्बाद्यं कुम्भानग्नींश्च पूजयेत् ९
दक्षिणां दापयेत्पश्चादाचार्यादेर्विधानतः
निष्कादिदशनिष्कान्ता गुरावन्येषु पूर्ववत् १०
मुहूर्तनाडिकापूर्वं मन्त्रन्यासं समारभेत्
कुम्भाद्बीजं समादाय विन्यसेत्स्वस्वदेशके ११
प्रासादतारपादं वा तदर्धं वा त्रिपादकम्
समं सपादं सार्धं वा सजगत् पादुका बहिः १२
न्यस्त्वा संस्थापयेत्पीठानथवादौ विधाय तान्
प्रतिष्ठां कारयेन्मुक्तारत्नन्यासं प्रदक्षिणम् १३
जलाधिवासनं कुर्यादन्यत्कर्म समारभेत्
महापीठप्रतिष्ठाया विधानमधुनोच्यते १४
पूर्वपश्चिमसोमेषु मगडपं पूर्ववन्नयेत्
वेदैकसंख्यया कुगडं वेदाश्रं स्थगिडलं तु वा १५
पञ्चगव्यादिभिः पीठशुद्धिं कृत्वा च कौतुकम्
स्थगिडले वेदिकायां तु कुगडन्यासं तु कारयेत् १६
मध्यपूर्वयमाप्येन्दुशङ्करस्थघटेष्वथ

अविघ्नं च तथामोदं प्रमोदं प्रमुखं तथा १७
दुर्मुखं विघ्नकर्तारं न्यस्त्वा वर्णांस्तु भावयेत्
अविघ्नं विद्रुमप्रख्यमामोदं श्यामवर्णकम् १८
प्रमोदं कृष्णवर्णं च प्रमुखं स्फटिकप्रभम्
दुर्मुखं कुङ्कुमाभं च ध्यात्वैवं पूजयेद्गुरुः १९
पीठे तत्त्वेशमूर्त्यादिन्यासं होमं समाचरेत्
जङ्घागलकपद्मान्तमात्मतत्त्वादिकं न्यसेत् २०
समिदाज्यचरून् लाजान् सर्षपं च यवं तिलम्
क्रमेण जुहुयाद्धीमान् पलाशोदुम्बरौ वटम् २१
अश्वत्थं प्राग्दिगारभ्य पूर्ववद्धोममाचरेत्
संपूज्य पीठं कुम्भांश्च प्रभाते पावकं तथा २२
दक्षिणां पूर्ववद्दत्वा मन्त्रन्यासं समारभेत्
अविघ्नं कर्णिकामध्ये विन्यसेत्कुम्भमध्यगम् २३
आमोदादीन्न्यसेद्धीमान् चतुर्दिक्ष्वीशकोणके
तत्तत्कुम्भोदकेनैव स्नापयेत्पीठमादरात् २४
एवं स्याद्भूतपीठस्य पैशाचेऽप्येवमाचरेत्
किन्तु मध्यमकुम्भस्य मध्यमे नीललोहितम् २५
नक्षत्रं पूर्वदिग्भागे राशिं चैव तु दक्षिणे
पश्चिमे क्षेत्रपालं च सोमे विश्वगणान्न्यसेत् २६
रुद्रांश्च पूर्वदिक्कुम्भे याम्ये मातृगणान्न्यसेत्
गणान् पश्चिमदिग्भागे यक्षानुत्तरदिग्गते २७
ग्रहानीशानदिग्भागे वह्नावसुरसंज्ञकान्
राक्षसान् पितृदेशे तु वायौ नागगणान्न्यसेत् २८
तद्बाह्ये कलशान् स्थाप्य लोकपालाधिदैवतान्
संपूज्य गन्धपुष्पाद्यैर्नैवेद्यान्तं हि देशिकः २९
एतदेव विशेषं स्यादन्यत्सर्वं समानकम्

कर्णिकायां न्यसेत्पञ्चगणानष्टौ दलेषु च  ३०
दलबाह्ये न्यसेद्धीमान् लोकेशान् स्वस्वदिग्गतान्
मन्त्रन्यासविशेषोऽयं पिशाचबलिपीठके  ३१
अनुक्तं यन्नयेत्सर्वं प्रतिमास्थापनोक्तवत्  ३२
इति कामिकाख्ये महातन्त्रे परिवारस्थापनविधिः द्विसप्ततितमः पटलः

## परिवारार्चनविधिः

परिवारार्चनं वक्ष्ये श्रूयतां मुनिपुङ्गवाः
आदौ प्रणवयुक्स्वस्ववर्णो विष्णुसमन्वितः  १
बिन्दुनादसमायुक्तश्चतुर्थ्यन्तस्सनामकः
नमस्कारादिसंयुक्तः परिवारार्चने मनुः  २
पूर्वाह्णे वाथ मध्याह्ने रात्रावभ्यर्चयेत्तु तान्
अथवा एककालं वा अन्यत्सर्वं समर्चयेत्  ३
बलिं त्रिद्व्येककालं वा दापयेत्तु क्रमेण तु
तेषां पूजा नमोन्तेन स्वाहान्तमनुना बलिः  ४
गन्धपुष्पान्नधूपैश्च दीपवाद्यादिसंयुतम्
द्वारादिबलिपीठान्तं बलिं दद्याद्विशेषतः  ५
पूर्वोत्तरमुखो भूत्वा धृतवस्त्रोत्तरीयकः
कुक्कुटाण्डप्रमाणेन तदर्धेन तदर्धतः  ६
नन्दिने प्रथमं दद्यान्महाकालाय पूर्वतः
चतुर्द्वारसमोपेतं भृङ्गिणे च विनायके  ७
दक्षिणे पश्चिमे देशे वृषस्कन्दबलिं न्यसेत्
देव्यै चण्डाय सोमे तु पश्चादुक्षबलिं ददेत्  ८
ततोऽष्टपरिवारादिबलिं दद्यात्क्रमेण तु
दत्वोदकं पुनर्गन्धं पुष्पं धूपं सदीपकम्  ९

दद्याद्धविष्यं पानीयसहितं बलिकर्मणि
देवदक्षिणदेशस्थस्तस्माद्गच्छेत्प्रदक्षिणम्  १०
बलिपीठं ततो गत्वा बलिं दद्यात्तु तत्र वै
कर्णिकायामविघ्नस्य आमोदे पूर्वदिग्दले  ११
प्रमोदे प्रमुखे चैव दुर्मुखे विघ्नकर्तरि
दक्षिणाप्योत्तरेशेषु बलिं दद्यात्स्वनामभिः  १२
सति पैशाचिके पीठे तत्रापि बलिमाचरेत्
एकत्र वा बलिं दद्यात्पैशाचे वाथ भौतिके  १३
कर्णिकामध्यमे नीलरुद्राय बलिरीरितः
पूर्वदक्षाप्यसौम्येषु ऋक्षादिभ्यो बलिं क्षिपेत्  १४
रुद्रेभ्यः पूर्वतो दद्यान्मातृभ्यो दक्षिणे तथा
गणेभ्यः पश्चिमे भागे यक्षेभ्यस्सोमदिग्दले  १५
गृहेभ्यश्च तथैशान्यामसुरेभ्योऽग्निगोचरे  १६
पालाश्यां पलभक्षेभ्यो नागेभ्यो वायुदिग्दले
दलबाह्ये बलिं दद्याद्दिक्पालानां स्वनामतः  १७
इति कामिकाख्ये महातन्त्रे परिवारार्चनविधिः त्रिसप्ततितमः पटलः

## वृषभस्थापनविधिपटलः

वृषभस्थापनं वक्ष्ये तल्लक्षणपुरस्सरम्
अन्तर्द्वारस्य पूर्वस्मिन् कल्पयेत्प्रथमं वृषम्  १
द्वितीयं मण्डपाग्रे तु पीठात्पूर्वे तृतीयकम्
पीठे पीठे विशेषेण पश्चिमे वृषभस्थितिः  २
पीठार्धं वा समं तत्र द्विगुणं त्रिगुणं तु वा
त्यक्त्वा चतुर्गुणं वापि तस्याग्रे स्थापयेद्वृषम्  ३
पूजाभागसमं श्रेष्ठं तदर्धं मध्यमं भवेत्
तदर्धमधमं ज्ञेयं चतुस्त्रिद्विगुणं तु वा  ४

तत्तदन्तरमानं वा लोहजे वृषभं मतम्
गर्भं कृत्वा नवांशं तु नवधा शैलजे मतम् ५
द्वारोच्चमष्टधा कृत्वा चैकैकांशविवर्धनात्
चतुर्गुणान्तमानं तु मृण्मये वृषभे मतम् ६
लोहजं संयजेद्द्वारे परिवारे तु शैलजम्
पीठाग्रे मृण्मयं प्रोक्तं शैलं वा तत्र संमतम् ७
लोहजं तु प्रकर्वत्यं स्थितं वा शयितं तु वा
शैलं सुधामयं कार्यं शयितं तु विशेषतः ८
स्थितं वापि प्रकर्तव्यमृषभं देशिकोत्तमाः
अथ सामान्यलिङ्गस्य पुरस्ताद्वृषभो मतः ९
स्वयंभुबाणलौहाख्यं रौद्रलोके प्रपूजितम्
लोकपालाङ्कितं सिद्धं शतसाहस्त्रलिङ्गकम् १०
मुखलिङ्गं च बेरं च विशिष्टं लिङ्गमीरितम्
तदन्यत्रवृषः प्रोक्तस्तत्रापि कथितस्तु वा ११
ध्वजयष्टिस्तथा प्रोक्ता तल्लक्षणमिहोच्यते
लिङ्गत्र्यंशायसंयुक्तो लम्बसूत्रार्थ दृग्युतः १२
पीठोच्चपृष्ठसंयुक्तो लम्बकूर्चाग्रमस्तकः
भक्त्वा चतुरशीत्यन्तं तेन मानं विधीयते १३
शृङ्गप्रदेशविस्तारष्षोडशाङ्गुल उच्यते
तावदेव च दैर्घ्यं स्याद्वक्त्रतारस्तु षट्कलः १४
सृक्विणीप्रोथयोर्मध्ये दशाङ्गुलविनिर्मिता
नेत्रं नेत्रसमं दैर्घ्यात्तदर्धं विस्तरेण च १५
तत्त्रिभागेन तारं स्याज्ज्योतिस्तत्पञ्चमांशतः
नेत्रार्धान्तं भ्रुवोस्स्थौल्यं तद्दैर्घ्यं स्याद्द्विमात्रकम् १६
नासा स्याद्द्व्यंगुला प्रोक्तस्तन्मध्ये वेदमात्रकः
नासाप्रदेशविस्तारो वक्त्रं स्याद्द्वादशाङ्गुलम् १७

तदूर्ध्वे दशमात्रं स्यात्तदूर्ध्वेऽष्टादशाङ्गुलम्
नेत्रान्तरं चतुर्मात्रं त्रिकोणे तु कपोलके १८
चतुर्नेत्रावुभौ पार्श्वौ वक्त्रसंध्योस्तु कर्णकौ
कर्णमूलाच्च नेत्रान्तं पञ्चवक्त्रं प्रकीर्तितम् १९
कर्णमूलात्तु कर्णान्तं प्रोक्तं मन्वङ्गुलं भवेत्
कर्णमूलौ द्विपात्रौ तु तद्वदुच्चसमन्वितौ २०
तत्रैव वर्तुले कार्ये दशाङ्गुलसुनाहके
कर्णौ पञ्चाङ्गुलायामौ कलावृत्तसमुद्भवौ २१
पञ्चाङ्गुलपृथूमध्ये परितः परतः कृशौ
षडङ्गुलावृतौ मूले ऋजुरेखाविभूषितौ २२
शृङ्गमूलं चतुर्मात्रं षडङ्गुलसमुच्छ्रयम्
अर्धाङ्गुलाग्रविस्तारो मनाग्वक्रसमन्वितः २३
शृङ्गमूलस्थितं पिण्डं हित्वा भागान्तरे मतम्
पिण्डमङ्गुलमानं स्यादुच्छ्रितं शृङ्गमूलयोः २४
शृङ्गाग्रादवटं यावत्षण्णेत्रं चान्तरं मतम्
अष्टनेत्रायता ग्रीवा ककुद्दैर्घ्यं त्रिणेत्रतः २५
त्रिणेत्रमुच्छ्रयादुक्तं मानं वक्त्रं च मूर्धनि
ककुदोऽधोष्टनेत्रस्तु जङ्घा पञ्चदृगायता २६
सन्धिरेकाङ्गुला प्रोक्ता चतुर्नेत्रोपजङ्घिका
सार्धनेत्रं ततो गुल्फे द्विनेत्रौ खुरकौ पुनः २७
गुल्फाधः खुरिके कांस्ये नेत्रपादे समे यथा
जङ्घामूलावृतिस्सप्तदशमात्रा प्रकीर्तिता २८
जङ्घाग्रे तिथिमात्रं स्यान्मनुमात्राङ्गुलक्रमात्
मूलाग्रे चोपजङ्घाया वेष्टनं परिकीर्तितम् २९
खुरयोरष्टमात्रं स्याद्धित्वा वेष्टनमात्रकम्
ककुदः पृष्ठमानं तु षट्त्रिंशन्मानमीरितम् ३०

तत्र त्रिकटमात्रं तु षडङ्गुलमिति स्मृतम्
त्रिकटानतिमानं तु द्वादशाङ्गुलमीरितम्  ३१
तस्माच्च परतः पुच्छसन्ततिस्तु प्रकीर्तिता
पुच्छमूलं चतुर्मात्रमग्रेऽङ्गुलविनिर्मितम्  ३२
त्रिंशदङ्गुलमानेन पुच्छदैर्घ्यं प्रकीर्तितम्
षडङ्गुलप्रमाणेन तस्मात्स्यात्केशसन्ततिः  ३३
पृष्ठे त्रिकटिदेशे च तारो विंशतिमात्रकः
विस्तारदेहमध्ये तु षोडशाङ्गुल उच्यते  ३४
ककुत्सन्धिप्रदेशे तु विस्तारं मनुमात्रकम्
ग्रीवाधस्ताच्चतुर्मात्रं सास्नालम्बः प्रकीर्तितम्  ३५
सा चाष्टादशमात्रा स्याज्जङ्घान्तायतिसंयुता
अशीत्यङ्गुलविस्तारा कुक्षिर्नाभिः प्रकीर्तिता  ३६
मध्यमाच्चाग्रदेशे तु षष्ट्यङ्गुलमिति स्मृतम्
नाभिर्नेत्रद्वयेन स्याद्द्विनेत्रौ वृषणौ मतौ  ३७
विस्तारायाममानेन परजङ्घा दशाङ्गुला
सन्धिर्द्विमात्रष्षण्णेत्रा चोपजङ्घा प्रकीर्तिता  ३८
द्विनेत्रौ गुल्फकौ ज्ञेयौ खुरौ पञ्चाङ्गुलौ मतौ
खुरके द्व्यङ्गुले कार्ये द्वाविंशत्यङ्गुलेन तु  ३९
जङ्घा मध्यमनाहस्स्यात्सन्धिदेशे पुनस्त्रयः
वेष्टनं चोपजङ्घायाष्षोडशाङ्गुलमुच्यते  ४०
द्व्यङ्गुलं पृष्ठदैर्घ्यं स्यादधस्त्वष्टाङ्गुलो मतः
एषा वृषक्रिया शक्तिपर्यन्तव्याप्तिसंयुता  ४१
अथवान्यप्रकारेण वृषलक्षणमुच्यते
भुक्त्वा पञ्चांशमुत्सेधं त्रिमात्रं खुरमुच्यते  ४२
मूलव्यासश्चतुर्मात्रश्शृङ्गाग्रं स्यात् द्विमात्रकम्
नवमात्रं ललाटस्स्यान्मुखव्यासस्स्वराङ्गुलः  ४३

उत्सेधश्च समस्तेन नेत्रायामं द्विमात्रकम्
सार्धाङ्गुलं तदुच्चं स्यान्नेत्रमध्या मुखाकृतिः ४४
चतुर्नेत्राङ्गुलं पृष्ठं ग्रीवायास्तु षडङ्गुलः
पन्नपञ्चांशमुत्सेधं तेन मानं प्रकीर्तितम् ४५
पञ्चषाङ्गुलमायामे प्रोक्तं तु मुनिसत्तमाः
आरभ्य मूर्ध्नः कराठाधो दशाङ्गुल इति स्मृतः ४६
ग्रीवोच्चं वसुमात्र स्यात्तयोर्दैर्घ्यं षडङ्गुलम्
अनुत्सेधं तु षरामात्रं जानुमात्रं द्विमात्रकम् ४७
जङ्घा द्वित्र्यङ्गुला दैर्घ्यात्त्रिमात्रं खुरमुच्यते
शृङ्गान्तरं द्विमात्रं स्यात्तयोर्दैर्घ्यं षडङ्गुलम् ४८
मूलव्यासं चतुर्मात्रं ललाटोच्चं मुनीश्वराः
नेत्रकर्णान्तरं तद्वत्कर्णायामश्शराङ्गुलः ४९
त्रिमात्रमुत्तरोष्ठोच्चमधरोष्ठं द्विमात्रकम्
मूलायामोच्चविस्तारो द्विमात्रैकत्रिमात्रकैः ५०
पञ्चनेत्राङ्गुलं कर्णव्यासो मूलोक्तमात्रकम्
पञ्चाशद्ग्रीवविस्तारो मूलविस्तार एव च ५१
षड्वस्वङ्गुल इत्युक्तः क्रमेण द्विजपुङ्गवाः
ककुत्षडङ्गुलव्यास उत्सेधो द्वित्रिमात्रकः ५२
कर्णस्याग्रविशालं तु द्विमात्रं युक्तितो न्यसेत्
ककुदस्तु शरीरोच्चं प्रोक्तमाष्टदशाङ्गुलम् ५३
द्विसप्तमात्रं पृष्ठे स्याद्विस्तारो द्वादशाङ्गुलः
अन्योन्यमूलमध्याग्रव्यासो वेदाङ्गुलेन च ५४
अष्टाङ्गुलेन दिङ्मात्रैः क्रमेणैव भवेद्द्विजाः
पञ्चाङ्गुलं तथायामो जानुदेशं द्विमात्रकम् ५५
जङ्घा पञ्चाङ्गुलोत्सेधा त्र्यङ्गुला स्याद्विशालतः
खुरोत्सेधं द्विमात्रं स्यात्तथास्यात्पुच्छमूलकम् ५६

सार्धाङ्गुलं तु पुच्छाग्रं जङ्घान्तं तस्य लम्बनम्
मुष्कायामविशाले तु द्विमात्रे च यथाक्रमम् ५७
जङ्घायामं त्रिमात्रं स्यादुदराङ्गुलमायतम्
शेषायामं त्रिमात्रं स्याद्गुदं मायाङ्गुलं भवेत् ५८
ऊरुमूलाग्रविस्तारो वेदाङ्गुलमिति स्मृतम्
जङ्घाग्रं तु त्रिमात्रं स्याच्छेषं युक्तिबलान्नयेत् ५९
घनं वाप्यघनं वापि लोहजं परिकल्पयेत्
वेणुवस्त्रादिवेत्रेण सदनं परिकल्पयेत् ६०
सकलस्य तु यन्मानं तन्मानं वा वृषोदये
उक्तेऽध्यर्धयवाद्यष्ट उच्छायस्य यवाङ्गुसम् ६१
हीनं वाप्यधिकं कार्यं कर्तुरिच्छावशेन तु
नानाभूषणसंयुक्तं घण्टाजालसमन्वितम् ६२
प्रतिमोक्ताय जात्यंशं तद्वदायादिशोभनम्
एवं लक्षणमाख्यातं स्थापनं श्रूयतां द्विजाः ६३
कालोऽपि पूर्ववज्ज्ञेयस्तद्वदेवाङ्कुरार्पणम्
मण्टपं परिवारोक्तमार्गेणैव समाचरेत् ६४
पञ्चैककुण्डे होमं स्यात्तथैव स्थण्डिलेऽपि वा
रत्नन्यासं प्रकर्तव्यं शैलजे लोहजेऽप्यथ ६५
रत्नार्थं हेमपद्मं वा पृणमयादौ विवर्जयेत्
ततोऽक्षिमोचनं शुद्धिर्ग्रामादीनां प्रदक्षिणम् ६६
तोयाधिवासनं प्राप्य ततो मण्टपसंस्कृतिः
द्विजसंभोजनं पुण्यतोयसेचनमेव वा ६७
वास्तुहोमं तथा शय्या स्नपनं कौतुकं तथा
वृषस्य दक्षिणे शृङ्गे कौतुकं बन्धयेद्गुरुः ६८
शयनारोहणं कुम्भस्थापनं पूर्ववन्नयेत्
सप्तवर्गाच्चतुर्थान्तं सप्तस्वरविभूषितम् ६९

बिन्दुनादसमायुक्तमादौ प्रणवसंयुतम्
वृषभाय नभश्चान्ते तस्मिन् ब्रह्माङ्गकल्पना ७०
मध्यकुम्भे वृषःप्रोक्तः परितोऽष्टसु लोकपाः
अथ विद्येश्वरान्वापि वृषस्य परितो न्यसेत् ७१
उक्षा च गोपतिश्चापि शङ्कुकर्णस्तथैव च
तीक्ष्णशृङ्गस्तथा नन्दी विषाणी पशुभृत्तथा ७२
महोदरोऽष्टमश्चैतान् स्वस्वबीजेन विन्यसेत्
संपूज्य गन्धपुष्पाद्यैर्मुद्गान्नं तु निवेदयेत् ७३
चरुकल्पे तथैव स्यात्तत्त्वमूर्त्यादिकं न्यसेत्
अग्निकार्यं ततः कुर्यात्प्रागुक्तविधिना सह ७४
समिदाज्यचरून् लाजान् मुद्गमाषान् क्रमाद्धुनेत्
प्रभाते देशिकश्शुद्धः पूजाहोमं च कारयेत् ७५
आचार्यपूजा स्यादन्ते होतृभ्यश्चापि दक्षिणाः
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समाचरेत् ७६
चलं चेद्वृषभस्थानं वेद्यन्ते च स्वदेशके
मूलमन्त्रेण संस्थाप्य गन्धपुष्पादिभिर्यजेत् ७७
ततः कुम्भान् समाहृत्य वृषाग्रे स्थण्डिले न्यसेत्
कुम्भाद्बीजं समादाय वृषस्य हृदये न्यसेत् ७८
अन्येभ्यो बीजमादाय तत्पीठे परितो न्यसेत्
ततः कुम्भोदकेनैव स्नापयेद्वृषमादरात् ७९
ध्वजस्यारोपणेऽप्येवं किन्तु तद्दण्डमूलके
कुम्भाभिषेकः कर्तव्यस्तत्र प्रोक्षणमेव च ८०

इति कामिकाख्ये महातन्त्रे वृषभस्थापनविधिः चतुस्सप्ततितमः पटलः

## गोपुरस्थापनविधिः

स्थापनं गोपुराणां च वक्ष्ये लक्षणपूर्वकम्
मूलप्रासादविस्तारे सप्ताष्टनवभागिके १
दशैकादशभागे तु तत्तदेकोनभागतः
द्वारशोभादिमानं स्याद्गोपुरान्तं विशालतः २
क्षुद्रेऽल्पे च तदुद्दिष्टं मध्यमानं विधीयते
धाम्नि तारे चतुष्पञ्चषड्भागेन विभाजिते ३
सप्ताष्टधा कृते तेभ्यो विभागो गोपुरान्तकः
द्वारशोभादिविस्तारः पञ्चधा परिकीर्तितः ४
त्रिभागैकमथार्धं च त्रिभागे तु द्विभागकम्
चतुर्भागे त्रिभागं च पञ्चांशे चतुरंशकम् ५
ज्येष्ठधाम्नां विशालं स्याद्गोपुरान्तं क्रमेण तु
द्विहस्तादिद्विरष्टान्तं व्योमारत्निविवृद्धितः ६
प्रत्येकं त्रित्रिमानं स्याद्गोपुरान्तं विशालतः
एकविंशत्करान्तं तु त्रिहस्तादिद्विकवर्धनात् ७
पूर्ववत्तिथिसंख्याता मानशोभादिविस्तरे
आरभ्य नन्दहस्तं तु द्विद्विहस्तविवर्धनात् ८
सप्तत्रिंशत्करान्तं तु गोपुरान्तविशालता
त्रिपञ्चदशसप्तात्तु एकहस्तविवर्धनात् ९
पञ्चमानं द्विरष्टाभ्यां पञ्चस्वेकस्य सम्मतम्
अन्यथा हस्तमानेन विस्तारः प्रविधीयते १०
पञ्चादिविश्वहस्तान्तं चैकैककरवृद्धितः
प्रथमावरणे द्वारशोभाविस्तार इष्यते ११
तिथिहस्तात्त्रयोविंशत्यन्तास्स्युर्द्वारशालके
पञ्चविंशतिहस्तात्तु त्रयस्त्रिंशत्करान्तकः १२
द्वारप्रासादविस्तारः पञ्चमः परिकीर्तितः
पञ्चविंशत्समारभ्य त्रिचत्वारिंशदन्ततः १३

द्वारहर्म्यविशालस्स्यान्नवपञ्चकरादितः
त्रिपञ्चाशत्करान्तं तु विशालो गोपुरस्य तु १४
एकद्वित्रिचतुष्पञ्चहस्तैर्न्यूनं तु वाधिकम्
नगरग्रामवेशादौ मानं गोपुरविस्तरे १५
सार्धद्विपादत्रिगुणत्र्यंशैकद्व्यंशमायते
कल्पयेद्द्वारशोभादौ सप्तांशदशभागिकम् १६
चतुरंशषडंशं तु सप्तांशे चतुरंशकम्
नन्दांशे भूताभागं च द्विगुणं च प्रकल्पयेत् १७
द्वारायतनतुङ्गार्थं खलूरीगोपुरादिकम्
मानमप्यथ संग्राह्यं निर्गमं चापि तत्समम् १८
गोपुरस्य विशालं तु कृत्वा विंशतिभागिकम्
एकाद्यष्टदशांशान्तं गोपुराणां गुरूत्तमाः १९
निर्गमं सालबाह्याद्वा तदन्तर्वा समाचरेत्
सार्धहस्तात्तु पादोनद्विहस्तादिद्विकरात्क्रमात् २०
षण्णन्दनवमात्रैस्तु वर्धयेद्देशिकोत्तमः
पञ्चसप्तनवान्तस्तु द्वारतारः पृथग्भवेत् २१
तिथिसंख्या च हीने स्यान्मध्ये श्रेष्ठं तु सम्मतम्
पञ्चांशे द्वारविस्तारे सप्तांशे मुनिभाजिते २२
दशांशो द्विगुणः पादादधिकः पञ्चधोच्छ्रयः
मूलधाम्नि मसूरादितुङ्गाद्वेदांशकादिकः २३
रविभागावसानं तु कृत्वैकांशं विहाय च
कृत्वा मसूरपादं च तच्छेषेणैव पीठकम् २४
योजयेद्गोपुरद्वारं तुङ्गवृद्ध्यार्धमेव च
अथ प्रागुक्तभागे तु वर्द्धितं सममेव वा २५
धामाङ्गोक्ताखिलं मानं गोपुराङ्गेषु वा मतः
छेदयेत्तदधिष्ठानं सोपपीठे तु केवलम् २६

उत्तरान्तसमुत्सेधं तदर्द्धं विस्तृतान्वितम्
गोपुरद्वारतुङ्गं वा कारयेद्वास्तुशास्त्रवित्  २७
एकद्वित्रितलं कुर्याच्छोभायामेकवृद्धितः
तलादिकमथो कुर्यात्पञ्चषट्सप्तभूमिकम्  २८
गोपुरं तु विधेयं स्यान्मध्यमेऽप्येवमूह्यताम्
द्वारशोभा द्वारशाला द्वारप्रासादहर्म्यके  २९
गोपुरेणैव पञ्चान्तं मराडलादिषु संस्थिताः
मसूरस्तम्भमानं तु प्रागेव प्रतिपादितम्  ३०
तदूर्ध्वप्रस्तरात्स्थूपिपर्यन्ते मानमुच्यते
षोढा विभज्य तत्तुङ्गं प्रस्तरैस्साङ्घ्रिभागकैः  ३१
तद्वत्कराठशिरोध्यर्धभागेन स्थूपिकांशकः
एवमेकतलं प्रोक्तं द्वितलं च विधीयते  ३२
तदुच्चं नवधा कृत्वा साङ्घ्र्येकप्रस्तरोदयः
एकांशं गलमित्युक्तं सार्धद्व्यंशं शिरो भवेत्  ३३
शेषश्शिरोद्धृतः प्रोक्तः द्वितलं त्वेतदीरितम्
द्वादशांशं त्रिभूम्युच्चैः कपोतं साङ्घ्रिभागभाक्  ३४
सार्धद्व्यंशं च पादोच्चं प्रस्तरो भाग एव हि
द्विभागः पाददैर्घ्यं स्यादष्टांशेनांशमानतः  ३५
तदुच्चं चांशो ग्रीवोच्चं सार्धद्व्यंशश्शिरो भवेत्
शेषेण स्थूपिकोत्सेधस्त्रितलं चैवमीरितम्  ३६
उत्तरादिशिखान्तं यन्मानमष्टादशांशकम्
त्रिभागसहितं भागमन्तोच्चं प्रविधीयते  ३७
सार्धद्व्यंशं तु पादोच्चं साङ्घ्र्येकप्रस्तरोदयः
भागेन गलमानं स्यात्त्रिभागैश्शिखरोदयः  ३८
शेषेण स्थूपिका प्रोक्ता पञ्चभौममतः परम्
उत्तरादिशिखान्तं चाप्येकोनत्रिंशदंशकम्  ३९

भागार्धं प्रस्तरं कुर्यात्पादोच्चं चतुरंशकम्
पादोनद्व्यंशकं मञ्चं सार्धद्व्यंशं तु पादपः ४०
त्रिपादांशैककं मञ्चं त्रिभागात्पादपायतिः
सपादांशकपोतोच्चमूर्ध्वभागाद्द्विभागतः ४१
प्रस्तरोच्चं द्विभागेन कन्धरोच्चसमो भवेत्
सार्धद्व्यंशश्शिरस्तुङ्गश्शेषेण स्याच्छिरोदयः ४२
एवं तु षट्तलं प्रोक्तं सप्तभौममथोच्यते
उत्तरादिशिखान्तं यन्मञ्चं षट्त्रिंशदंशकम् ४३
साङ्घ्रिद्व्यंशं कपोतं स्यात्सार्धवेदांशतोऽधिकम्
द्विभागः प्रस्तरोत्सेधः पादोच्चं वेदभागतः ४४
सत्रिपादांशकं मञ्चं सार्धद्व्यंशस्तु पादपः
मञ्चं पादोनभागाभ्यां त्रिपादः पादवैधृतिः ४५
सार्धांशं प्रस्तरोच्चं स्यात् द्व्यंशस्त्वन्ततलायतिः
सपादभागं मञ्चोच्चं सार्धभागद्विभागिकम् ४६
कपोतोच्चं तु भागेन कन्धरं तत्समं भवेत्
सद्विपादद्विभागेन शिरश्शिष्टाः शिखा मताः ४७
सप्तभौममिदं श्रेष्ठं तदूर्ध्वे पूर्वमानभाक्
स्तम्भप्रस्तरभागाभ्यां कल्पिताभ्यामधस्तले ४८
रविभौमान्तमिष्टं स्याद्गोपुराणामिहागमे
उक्तानि गोपुराङ्गानि विभजेच्चतुरंशकम् ४९
आरभ्याष्टदशांशं तेष्वेकांशं तु नवांशकम्
द्व्यङ्गुलं त्र्यङ्गुलं वापि चतुःपञ्चषडङ्गुलम् ५०
वर्धयेद्ध्रासयेद्वापि युक्त्या प्रागुक्तमानतः
पञ्चभागे विशाले तु त्रिभागे गर्भविस्तरः ५१
शेषेण भित्तिरत्रोक्ता व्योमभूमौ मुनीश्वराः
व्यासस्सप्तांशवेदांशो गर्भकूटस्तु भागभाक् ५२

कोष्ठस्यात्मगविस्तारदैर्घ्यं पञ्चांशमिष्यते
कूटकोष्ठान्तराले तु पञ्जरादिविभूषितम्  ५३
एवं द्वितलमाख्यातं त्रितलं चाधुनोच्यते
तारे नवांशे गभस्स्यात्त्रिभागस्तद्बहिः क्रमात्  ५४
गृहपिण्डचलिन्दहारांश्च क्रमेण परिकल्पयेत्
कूटकोष्ठादिसर्वाङ्गं पूर्ववत्परिकल्पयेत्  ५५
विशाले पङ्क्तिभागे तु गर्भगेहे त्रिभागतः
सार्धांशो भित्तिविष्कम्भ एकभागमलिन्दकम्  ५६
खण्डहर्म्यं तु भागेन कूटकोष्ठादि पूर्ववत्
मुखे पृष्ठे महाशाला पञ्चांशो वा षडंशकः  ५७
चतुर्भौममिदं ख्यातं सर्वावयवसुन्दरम्
विस्तारे रुद्रभागे तु नालीगेहं त्रिभागतः  ५८
द्विभागो भित्तिविष्कम्भो व्योमांशस्स्यादलिन्दकः
एकांशं खण्डहर्म्यं स्यादन्यत्सर्वं समानकम्  ५९
पञ्चभौमं समाख्यातं षड्भौममधुनोच्यते
विस्तारे रविभागे तु नालीगेहं युगांशकम्  ६०
द्विभागो भित्तिविस्तारो द्वारांशेन प्रकीर्तितः
भागेन खण्डहर्म्यं स्यादन्यत्सर्वं समानकम्  ६१
षष्ठभौममिदं प्रोक्तं सप्तमं त्वधुनोच्यते
त्रयोदशांशे विस्तारे गर्भस्स्यादंशभागभाक्  ६२
सार्धद्व्यंशं तु भित्तिस्स्यादेकेनालिन्दमिष्यते
खण्डहर्म्यमिहैकांशं कूटशालादि पूर्ववत्  ६३
पृष्ठे मुखे महाशाला षड्भागेन प्रकीर्तिता
पञ्चांशे हस्तिपृष्ठे च पञ्चशालादिभिर्युतः  ६४
नानामसूरकस्तम्भवेदिकाजालतोरणम्
सप्तभौममिदं प्रोक्तं गोपुरं सार्वदेशिकम्  ६५

मूलभूद्वारविस्तारपञ्चांशेन विशालभाक्
चतुरंशोनकं वा स्यादूर्ध्वद्वारं तु विस्तरात् ६६
उपर्युपरि द्वारं स्यान्मध्याधमोत्तमान्वितम्
सोपानगर्भगेहे तु तलं प्रति समाचरेत् ६७
उपपीठे चतुष्कराठे सोपानं प्रविधीयते
मराटपाभं भवेद्द्वारं शोभायै परिडतेश्वराः ६८
दराडशालासमाकारा द्वारशाला प्रकीर्तिता
प्रासादाकृतिवद्द्वारप्रासादं परिपठ्यते ६९
मालिकाकृतिवद्द्वारहर्म्यं स्यान्मुनिसत्तमाः
शालाकारसमं कुर्याद्द्वारगोपुरमन्तिमम् ७०
सर्वत्र गोपुरं कुर्याद्यथाशक्ति विशेषतः
पञ्चभागादिभागं वा चैकत्रिंशत्समावधि ७१
भागान्कृत्वा विशालांस्तु गोपुरस्य द्विभागतः
वृद्ध्या भागोऽर्धमानेन तिथ्यंशान्तं प्रकल्पयेत् ७२
गर्भगेहविशालं स्याच्छोभादीनां मुनीश्वराः
तेन विस्तारभागेन व्योमांशंद्विगुणावधि ७३
सायतं वा समं वापि गर्भगेहं प्रकल्पयेत्
तस्मादूर्ध्वं तु दैर्घ्यं स्यादधिकं द्वारतारकम् ७४
यथा भवेत्तथा कुर्याद्गोपुरं मुनिपुङ्गवाः
गर्भगेहात्समन्तात्तु गर्भार्धात्पादवृद्धितः ७५
त्रिभागावधि कुड्यं च व्योमादिबहुसंख्यकः
तथालिन्दं च हारं च कल्पयेत्कल्पवित्तमः ७६
अंशमानेन वा द्वारतारं वा गोपुरं भवेत्
त्रिभागं तु समारभ्य अर्धांशात्तिथिसंख्यया ७७
यावद्द्वारविशालार्थमंशानत्र प्रयोजयेत्
प्रासादालङ्कृतिं चैव शालायालङ्कृतिं तु वा ७८

सर्वं वा गोपुरे कुर्यात्सञ्चितादिविभेदतः
नानामसूरकोपेतं नानास्तम्भसमन्वितम् ७९
नानाप्रस्तरसंयुक्तं वेदाश्रगलसंयुतम्
वलभ्यादिशिरोयुक्तं बहुस्थूपिसमन्वितम् ८०
कूटशालैकतुण्डैश्च पञ्जरैः पञ्चशालया
आयामांशाधिकैर्वापि समांशैः परिकल्पयेत् ८१
नानाद्वारसमायुक्तं वृषस्थलसमन्वितम्
धाम्नां समस्तभूषाभिरन्याभिस्समलंकृतम् ८२
मूलधामोनभौमं वा समभौमं तु वाधिकम्
खलूरिकाविधानोक्तरीत्या चैतत्समाचरेत् ८३
दिग्विदिक्षु तदिष्टं स्यात्पूर्ववत्प्रथमेष्टकाम्
मूर्धेष्टकाविधानं च धामोक्तविधिनाचरेत् ८४
किञ्चिन्मध्ये द्वयोर्वापि चैकं स्यात्स्थूपिकासु वा
कृत्वोर्ध्वशैलं प्रत्येकं चतुस्संख्यं निवेश्य च ८५
तदूर्ध्वं स्थूपिकां स्थाप्य स्थूपिकोक्तविधानतः
किञ्चैतदधिदेवांश्च ज्ञानाख्यक्रियया सह ८६
त्रिषु चेत्स्युस्त्रितत्त्वानि चतसृषु कलाः स्मृताः
निवृत्तिं च विना ब्रह्मरहिताः कारणं तु वा ८७
सद्योजातादिका वापि निवृत्त्याद्यास्तु पञ्चसु
अण्डान्तर्वर्तिनष्षट्सु कलान्यासाः प्रकीर्तिताः ८८
कलाद्यास्सप्त विज्ञेया विद्येशा वसुकल्पने
वामाद्या नवकल्पे स्युर्लोकपाला दशाख्यके ८९
रुद्रसंख्ये तु रुद्रास्स्युरादित्याश्चार्कसंख्यके
विश्वेरुद्राश्विनी प्रोक्ताश्चतुष्पञ्चदशान्विते ९०
तिथयो भुवनान्युक्ता दक्षादारभ्य पश्चिमे
तत्तत्स्वनाममन्त्रेण न्यसेत्तद्धाम्नि निर्मिते ९१

गोपुरस्थापनं कुर्यात्तदग्रे मराडपे कृते
पूर्वोक्तविधिनायुक्तकुराडे वा स्थरिडलेऽपि वा ९२
नवकुराडैकसंख्ये वा पुरायाहप्रोक्षणान्विते
स्थरिडले वेदिकोर्ध्वे च अष्टौ च स्थापयेद्धटान् ९३
मध्यमे च महादिक्षु शान्त्यादीन् तत्र पूजयेत्
शतसंख्यैस्तदर्धैर्वा तन्मन्त्रैस्समिदादिभिः ९४
पूर्णां दत्वेष्टिसन्तुष्टो गुरुः पञ्चघटोदके
शान्त्यादीनादितो न्यस्त्वा तन्मनूनभिषेचयेत् ९५
क्रियैषा प्रचुरा कार्या प्रधाना देशिकोत्तमाः
अन्यत्राप्यनुकल्पं स्यात्प्रचुरा वा प्रकीर्तिता ९६
गोपुरं प्रतियोज्यास्स्युर्नन्द्याद्याश्च द्विपार्श्वयोः
निष्कले पश्चिमद्वारं सकले दक्षिणं हितम् ९७

इति कामिकाख्ये महातन्त्रे गोपुरस्थापनविधिः
पञ्चसप्ततितमः पटलः
पूर्वकामिकं समाप्तम्

Reference:
Svāmināthaśivācārya, Śrī Ce., *Kāmikāgamaḥ Pūrvabhāgaḥ*, (Madras: South Indian Arcaka's Association, 1975).

## प्रथमः पटलः पश्चिमद्वारार्चनविधिः

पश्चिमस्यार्चनं वक्ष्ये निष्कले सकलेऽपि वा
मिश्रे च गृहिणां योग्यं परार्थयजनार्थकम् १
राजराष्ट्र विवृद्ध्यर्थं भुक्तिमुक्तिफलप्रदम्
प्रातरावश्यकं शौचं कृत्वा स्नानं विधाय च २
सूर्यश्चेत्यादिभिर्मन्त्रैः संध्यासु तिसृषूदकम्
पीत्वा संमार्जयेत् तद्वत् दधिक्राविरणेति चादिभिः ३
ओं भूर्भुवस्सुवरादि मन्त्रेण वारत्रयमथांजलिम्
पुनस्तेनैव। मन्त्रेण दशवारं जपन्नयेत् ४
एतत् प्रतिदिनं कार्यं द्विजत्वापत्ति सिद्धये
श्रुति स्मृत्यादि संसिद्धिं अनुष्ठानन्तु यद्भवेत् ५
आवश्यकेतु शौचेवा स्नाने त्वाचमनेऽपिवा
संध्यायां वन्दने वापि तर्पणे होमकर्मणि ६
गृहबल्यादिके चान्यत् द्विजानां विहितन्तुयत्
कर्तव्यं वा न कर्तव्यं शैवमावश्यकं मतम् ७
स्वशास्त्र सन्ध्यामन्त्रादि तर्पणं च विधाय च
व्रजेद्देवालयाद्यं तु पादशौचं विधाय च ८
समाचम्य प्रविश्यान्तः स्वासनस्थ उदङ्मुखः
त्रिपुण्ड्रं भस्मना कृत्वा सान्द्रेण धवलेन च ९
करन्यासं ततः कृत्वा सुषिरं देहमध्यमे
ध्यात्वा ज्वलन्तं हुंकारं प्राणान् संयम्य निश्चलम् १०
फट्कारान्तं तु तेनैव रेचकेन समन्वितम्
पञ्चग्रन्थीं स्ततो भित्वा तस्मात्प्रति निवृत्य च ११
मूर्ति मन्त्रेण संगृह्य जीवं हुंकार मूर्धनि
कुंभकेन समोपेतं वायुमूर्ध्वगतं नयेत् १२
तेनैव द्वादशान्तस्थ शिवेन सह योजयेत्

अात्मयोजन मेतत्स्यात् ततो भूतादि शोधयेत्  १३
निवृत्यादीनि भूतानि तान्यध्वानं समस्तकम्
व्याप्य व्यवस्थितानीति मत्वा तानि विशोधयेत्  १४
दहनं वाथ भूतानां परस्पर विशोधनम्
मराडलादि समायुक्तं भूतशुद्धिरिहोदिता  १५
शोध्यो परागरहितं कलामात्र व्यवस्थितम्
विचिन्त्य दिव्यदेहार्थ ममृताप्लावनं नयेत्  १६
ध्यात्वा कुराडलिनीं शक्तिं अमृतैक स्वरूपिणीम्
तदुद् भूतामृतस्त्रावैस्सिक्तां दिव्यां कलां स्मरेत्  १७
ध्यात्वा हृद्यासनं तस्मिन् मूर्त्यात्मानं समानयेत्
पुनराप्लावनं कृत्वा करन्यासं समारभेत्  १८
हस्त पृष्ठतलेऽस्त्रेण शोधयेच्चन्दनान्विते
तयोर्ब्रह्माणि विन्यस्य नेत्रं करतले न्यसेत्  १९
शिवं साङ्गं च विन्यस्य भूयस्तत्र शिवं न्यसेत्
कवचेनाव कुराठयाथ सर्वकर्मसु योजयेत्  २०
करन्यासः समाख्यातो अङ्गन्यासश्च कथ्यते
मूर्धादि पादपर्यन्तं अङ्गब्रह्माणि विन्यसेत्  २१
मूलब्रह्माणि वा विद्वान् अष्टत्रिंशत् कलां न्यसेत्
शिवं हृदि यथास्थानं हृ हृदयाद्यं निवेशयेत्  २२
नेत्रं नेत्रेषु विन्यस्य हेतिं दिक्षुगतं न्यसेत्
महामुद्रां ततः कृत्वा शिवमन्त्रं अनुस्मरन्  २३

महामुद्रा तावत् कराभ्यां सम्मुखाभ्यां पाद पङ्कजात्
आमस्तक स्पर्शनरूपा
अन्योन्य ग्रथिताङ्गुष्ठा प्रसारित कराङ्गुली
महामुद्रेय मुदिता परमीकरणे बुधैः

महामुद्रेयमाख्याता न्यूनाधिकं समापनी
प्रयोजयेदिमां मुद्रां देवताह्वान कर्मणि

अष्टत्रिंशत्कलान्यासं हित्वा ब्रह्माणि विन्यसेत्
लिपिन्यासं ततः कुर्यात् रुद्रशक्ति समन्वितम्  २४
श्रीकण्ठादि समोपेतं अक्षरन्यासमेव वा
केवलं मातृकान्यासं कुर्यात्तद्रहितं तु वा  २५
एवं शैवतनुं कृत्वा ततोऽन्तर्यजनं नयेत्
पूजा होमसमाधिस्यात् हृदि नाभौ ललाटके  २६
आत्मशुद्धिरियं ख्याता स्थानशुद्धिस्ततः परम्
हस्तास्फालन दिग्बन्धाव कुण्ठैश्च सम्मता  २७
पात्रत्रयं समादाय यन्त्रिकाकार संस्थितम्
पाद्यादित्रितयं तेषु कल्पयेद्विधिनामुना  २८
चन्दनोशीर सिद्धार्थं दूर्वा काश्मीर तोययुक्
उत्तमं पाद्य मुद्दिष्टं मध्यमं गतकुंकुमम्  २९
चन्दनोशीर युक्तांभः पाद्यं कन्यसमुच्यते
वरालोशीर कर्पूर त्रुटि जाति लवङ्गयुक्  ३०
मुरेणैव समायुक्त श्रेष्ठ माचमनीयकम्
एलालवङ्ग कर्पूर मुर जातियुतं समम्  ३१
एलालवङ्गं कर्पूर जलैस्सार्धन्तु कन्यसम्
आपःक्षीर कुशाग्रैस्तु यवाक्षत तिलैर्युतम्  ३२
शालि सिद्धार्थयुक् श्रेष्ठं यव सर्षप शालियुक्
तण्डलैर्मध्यमं प्रोक्तं शालितण्डुल संयुतम्  ३३
अर्घ्यं कन्यसमुद्दिष्ट मन्यथा च निगद्यते
सिद्धार्थ चन्दनोशीर दूर्वायुक् पाद्यमेव च  ३४
एलालवङ्ग। कर्पूर वरालफलसंयुतम्

एतदाचमनीयं वा यजेत् यजनाङ्गके ३५
कथितं चात्र वा ग्राह्यमत्रोक्तं तत्र वा भवेत्
यवसर्षप सद् व्रीहि तराडुलै रद्मतं भवेत् ३६
व्रीहि तराडुलं संयुक्तं अद्मतं तत्प्रकीर्तितम्
पञ्चाङ्ग मथवा त्र्यङ्गं केवं चार्ध्यमेव वा ३७
कल्पयेद्धृदयेनैव किञ्चार्घ्यै संहितामनुः
द्रव्यारायस्त्रेण संप्रोन्द्य कवचेनावकुराठयेत् ३८
हृदाभिमन्त्र्य प्रत्येकं मुद्रयेदमृताख्यया
तिलकं चन्दनं कृत्वा पुष्पं शिरसि विन्यसेत् ३९
द्रव्यशुद्धिर्भवेदेषा प्रणवादि नमोन्तकम्
मन्त्रमुच्चारयेन्मन्त्री मन्त्रशुद्धिर्भवेदियम् ४०
सामान्यार्घ्यं च संगृह्य द्वाराग्रे वृषभं यजेत्
गणपं भारतीमूर्ध्वे नन्दिनं जाह्नवीयुतम् ४१
महाकालेन यमुनां सव्येऽसव्ये समर्चयेत्
विमलं च सुबाहुं च तल्पयोश्च क्रमाद्यजेत् ४२
प्रविश्य सव्यपादेन देहल्यां अस्त्रमर्चयेत्
वास्तोष्पतिं ततश्चेष्ट्वा पूजां पर्युषितां यजेत् ४३
अपनीय च तां लिंगात् चराडेशाय निवेदयेत्
पिरिडकां शिवलिङ्गं च जलेन द्मालयेत् सुधीः ४४
लिङ्गशुद्धि रियंख्याता शुद्धयः पञ्च चोदिताः
संपूज्य द्वारपान् वाथ पञ्चशुद्धिं समाचरेत् ४५
विशुद्ध्यासनं संस्कारोपचार स्कन्ध संयुतम्
यजनं देवदेवस्य सर्व कामार्थ साधनम् ४६
विशुद्धिः कथिता पूर्वमासनं चाधुनोच्यते
गरोशं च गुरुं शक्तिमनन्तं धर्मसंमुखान् ४७
अधर्मप्रमुखानन्ते छदने पद्मकर्णिके

वामादि नव सूर्यादि मराडलं सेश्वरं यजेत्  ४८
शिवासनं तदन्ते च यजेत् स्वस्वमनुस्मरन्
पञ्चासनात्मकं ह्येतदेकासन मुदीरितम्  ४९
अनन्ताधारशक्तिभ्यां भवेदानन्तमासनम्
धर्मा धर्मादिभिर्वर्गैश्छदनाभ्यां समन्वितैः  ५०
सिंहासन मिदं प्रोक्तं। योगं मायाब्जमुच्यते
पद्मं वैद्येश्वरं पद्ममराडलं विमलासनम्  ५१
स्नानाऽवाहनकालादौ पृथगेतान् प्रकल्पयेत्
संकल्प्यासनमेवं तु मूर्तिं तदुपरि न्यसेत्  ५२
तस्मिन् ब्रह्माणि विन्यस्य चाष्टत्रिंशत्कलां न्यसेत्
लिपिन्यासं तु वा कुर्याच्छीकराठादि युतं तु वा  ५३
अष्टत्रिंशत्कलोपेतं पञ्च ब्रह्मणि विन्यसेत्
विद्यादेहं ततो न्यस्त्वा शिवमावाहयेत्ततः  ५४
स्थापनं सन्निधानं च सन्निरोधं समाचरेत्
स्वस्व स्थाने हृदादीनि विन्यसेदानुपूर्वकम्  ५५
शिवं तदुपरि न्यस्य तदेकीकरणं नयेत्
प्ररोचनं वा कर्तव्यं महामुद्रा प्रयोगतः  ५६
पाद्यमाचमनं चार्घ्यं दूर्वाद्यं विनिवेदयेत्
संस्कारा दश विख्याताः उपचारैः शिवं यजेत्  ५७
गन्धं तु चन्दनाद्यं स्यादिष्टमानेन वा नयेत्
नानाविधानि पुष्पाणि नूतनानि प्रकल्पयेत्  ५८
लघुचन्दन निर्यास प्रमुखैः धूपमुच्यते
तैलाज्यकल्पितान् दीपान् कर्तुर्वाञ्छावशान्नयेत्  ५९
अनिर्वाण प्रदीपांश्च तथैव परिकल्पयेत्
आमन्त्रण हविः प्रोक्तं मुद्गाद्यं चाढकादिकम्  ६०
भूषणादि ततो दत्वा पुनर्धूपं निवेदयेत्

तस्मिन् मङ्गलगानैश्च सर्वातोद्य समन्वितैः ६१
नाना नृत्त समायुक्तैस्तोषयेद् वृषभध्वजम्
आरात्रिकं ततो दद्यात् धूपदानावसानके ६२
भस्मना गन्धमिश्रेण त्वङ्गुष्टानामिकाग्रतः
भ्रामयित्वा ततस्त्यक्त्वा तिलकं दापयेच्छिवे ६३
दर्पणं दर्शयेच्छत्रं चामरं च निवेदयेत्
रात्रौ नीराजनं कुर्यात् दीपदानावसानके ६४
महाहविर्निवेद्यान्ते बलिहोमौ समाचरेत्
आमन्त्रण हविः काले बलिं वा होममाचरेत् ६५
उभयत्रोभयं वापि पृथग्वा परिकल्पयेत्
स्नपने मन्त्रगेयं वा वीणा गान मथापि वा ६६
वेदाध्ययन मन्यद्वा स्तोत्रपाठादिकं च यत्
तदूर्ध्वे गौडभासाद्यैर्गानं धूपान्तमाचरेत् ६७
ऊर्ध्वं द्राविडभाषाद्यै र्गानं नृत्तयुत्तं तु वा
संस्कृतं तदपभ्रंशं नाना स्वर समन्वितम् ६८
यदष्टादश भाषोत्थं गानं वा परिकल्पयेत्
नाना देश प्रसूतं च नर्तनं परिकल्पयेत् ६९
विशेषादुत्सवादौ च गन्धर्वै र्बहुभिर्युतम्
नित्योत्सवं ततः कुर्यान्नाना स्त्रीभिस्समन्वितम् ७०
रूपयौवनसंपन्ना योषितः कर्तृवांच्छया
मम दास्यस्समाख्याता रुद्रकन्या भवन्ति चेत् ७१
तासां संख्या भवेद् ग्रामविन्यास जन संख्यया
उत्सवस्स्यात्तदन्ते तु नित्योत्सव विधानतः ७२
वादकानष्ट संख्यातान् कल्पयेत् कल्पवित्तमः
तदन्ते शुद्धनृत्तं स्यात्तदन्ते चुलुकोदकम् ७३
विसर्जनं ततः कुर्यात् लयाङ्गं वाथ विन्यसेत्

साधकेन च सिद्ध्यर्थं पूजामाहृत्य लिंगतः ७४
लिंगं संशोध्य भूयोऽपि गन्धाद्यै रर्चयेच्छिवम्
नेतत्प्रतिदिनं कुर्यात् किं तु साध्यावसानकम् ७५
उत्तमं मध्यमं नीचं त्रिविधं स्यान्मदर्चनम्
केवलैश्शुद्ध शैवोक्तै र्मन्त्रैरुत्तम मुच्यते ७६
मध्यमं शैववेदोत्थैरधमं वैदिकैर्मतम्
नित्ये नैमित्तिकेऽप्येतद्विधानं परिकीर्तितम् ७७
शैवमन्त्र समो मन्त्रो नास्त्यत्र भुवनत्रये
तत्रापि मूलमन्त्रस्तु बीजात्मा श्रेष्ठमुच्यते ७८
प्रणवाद्याश्च ये मन्त्रा नियुताद्यक्षरात्मकाः
बीजमन्त्रसमुद्भूता रुद्राध्यायादयोऽपि च ७९
तदर्थं बीजमन्त्रं तु तत्स्थाने विनियोजयेत्
बीजाणु सदृशो नास्ति मम प्रीतिकरः परः ८०
एतत्सर्वं तु सामान्यं पूर्वास्ये दक्षिणास्यके
कौबेरास्ये च लिंगे च सकले मिश्र लिंगके ८१
विशेषः पश्चिमेद्वारे श्रूयतां पण्डितेश्वराः
प्राग्वदन्यत्समुद्दिष्टं विशेषः कश्चिदिष्यते ८२
द्वारस्याभिमुखं चोर्ध्व वक्त्रं देवं प्रकल्पयेत्
वामे वा दक्षिणे वापि स्थापनीया मनोन्मनी ८३
देववन्मुख संयुक्ता द्विहस्तैक मुखान्विता
ईशान मीशदेशे वा निरृतौ वा समर्चयेत् ८४
पुरुषं पूर्वदेशे वा पश्चिमे वाथ चिन्तयेत्
दक्षिणे चोत्तरे वापि बहुरूपं विचिन्तयेत् ८५
उत्तरे दक्षिणे वापि वामदेवं स्मरेत् गुरुः
पश्चिमे पूर्व देशे वा सद्यवक्त्रं स्मरन् न्यसेत् ८६
हृदयं वह्नि दिग्भागे वायव्यां वा प्रकल्पयेत्

शिरश्चैशेथ नैऋत्यां शिखां पितरि वैशके ८७
कवचं वायुदिग्भागे आग्नेय्यां वा प्रकल्पयेत्
पूर्वस्मिन् पश्चिमे वापि चतुर्दिक्ष्वस्त्रमर्चयेत् ८८
पूर्वस्मात् पश्चिमाद्वापि विद्येशावरणं यजेत्
गणेशावरणं सोमादृत्तादारभ्य वार्चयेत् ८९
लोकेशाः प्राग्वदेवस्युर्वज्राद्याश्च तथा मताः
देवाग्रे वृषभःशूलं ध्वजस्थानं च गोपुरम् ९०
परिवारार्चनं पूर्वदेशादारभ्य कारयेत्
वारुणादि निऋतृऋत्यन्तं परिवारार्चनं तु वा ९१
नालो वामे प्रकर्तव्यस्सोमस्याभिमुखं यथा
चण्डेशस्त्वीश देशे स्यात् विघ्नराट् पितरि स्मृतः ९२
९२१-२ अन्यत्सर्वं समानं स्यात्पूर्वद्वारार्चनेन तु

इति उत्तरकामाकाख्ये महातन्त्रे पश्चिमद्वारार्चन विधिः

प्रथम पटलः

करस्थं पायसं त्यक्त्वा कूर्परे लेडि दुर्मतिः

क्रन्यासः

ओं हां शिवासनाय नमः ओं हां शिवमूर्तये नमः
ओं हों ईशानमूर्धाय नमः
ओं हें तत्पुरुषवक्त्राय नमः
ओं हुं अघोरहृदयाय नमः
ओं हिं वामदेव गुह्याय नमः
ओं हं सद्योजात मूर्तये नमः
ओं हां हौं विद्यादेहाय नमः
ओं हौं नेत्रेभ्यो नमः
ओं हां हृदयाय नमः
ओं हीं शिरेसे नमः

ओं हूं शिखायै नमः
ओं हैं कवचाय नमः
ओं हः अस्त्राय नमः
ओं हां कवचाय नमः
ओं हां शिवाय वौषट्
अङ्गन्यासः
ओं हां शिवासनाय नमः
ओं हां शिवमूर्तये नमः
ओं हों ईशानमूर्धाय नमः
ओं हें तत्पुरुषवक्त्राय नमः
ओं हुं अघोरहृदयाय नमः
ओं हिं वामदेव गुहचाय नमः
ओं हं सद्योजातमूर्तये नमः
ओं हां हौं विद्यादेहाय नमः
ओं हौं नेत्रेभ्यो नमः
ओं हां हृदयाय नमः
ओं हीं शिरेसे स्वाहा
ओं हूं शिखायै वषट्
ओं हैं कवचाय हुं
ओं हः अस्त्राय फट्
ओं हः अस्त्राय हुंफट्
ओं हः अस्त्राय फट्
ओं हां शिवाय वौषट्
पाद्यं पादाम्बुजद्वन्द्वे वक्त्रे च आचमनीयकम्
अर्घ्यं शिरसि देवस्य पुष्प दूर्वाक्षतानि च
सुप्रभेदागमेः

उशीरं चन्दनोपेतं दूर्वा सिद्धार्थ संयुतम्
चतुर्द्रव्य समायुक्तं पाद्यमेत दुदाहृतम्
एलालवंग कर्पूर जम्बू जाती फलं मुरम्
षट् द्रव्य रस संयुक्तं शिवस्य आचमनीयकम्
आपः क्षीर कुशाग्राणि तण्डुलाः सुमनास्तिलाः
अर्घ्योष्टाङ्ग इति प्रोक्तो यवैः सिद्धार्थकैस्सह
बभमयरलसंज्ञैः अक्षरैः कॢप्तपत्रे
सुखकरमुपविष्टं पङ्कजे पद्मयोनिम्
अभयवरदहस्तं गण्डिकां चाक्षमाला
करयुगलमभयं चिन्तयेद्विश्वयोनिम्
वशषसदलयुक्ते सौम्यमाधारपद्मे
तरुणमरुणगानं वारणास्यं गणेशम्
अभयवरदहस्तं चारुपाशाङ्कुशोद्यत्
करयुगलमनन्यं चिन्तयेद्विघ्नराजम्
डाद्यैः फलान्तगतैः प्रकल्पितदलैः पद्मे निविष्टं हरिं
मार्तण्डद्युतिमादिपूरुषमजं नारायणं शार्ङ्गिणम्
हस्ताम्भोजगदारशङ्खममलं पीताम्बरं कौस्तुभं
श्रीवत्साङ्कितमब्धिजासहचरं ध्यायेज्जगन्मोहनम्
काद्यैष्ठान्तगतैः प्रकल्पितदले पंकेरुह पार्वती
कान्तं कान्तिशशाङ्ककोटिसदृशं प्रख्यं कपर्दोज्वलम्
शान्तं टङ्कमृगाभयेष्टवरदं युक्तं करैः कङ्कणैः
ध्यायेदीश्वरमीप्सितार्थफलदं हृत्पुण्डरीके स्थितम्
मूर्त्यंगेषु निविष्टमङ्गरहितं शान्तं तुषारप्रभं
व्याप्तशेषचराचरारैर्गुणगणैः भावेन संवेष्टितम्
मूर्तामूर्तमनेकमूर्तममलं ज्योतिः प्रदीपोपमं
साक्षात् षोडशपत्रयुक्तकमले जीवं परं चिन्तयेत्

हक्ताभ्यां परिवृत्तपत्रकमले दिव्ये जगत्कारणं
विश्वोत्तीर्णमनेकदेहममलं स्वच्छन्दमात्मेच्छया
तत्तद्योगतया स्वदेशिकतनुं भावेन दीपांकुरं
प्रत्यक्षाक्षरविग्रहं गुरुपदं ध्यायेद्विभुं शाश्वतम्
महामुद्रा तावत् कराभ्यां संमुखाभ्यां
पाद पङ्कजात् आमस्तक स्पर्शन रूपा
अन्योन्य ग्रथिताङ्गुष्टा प्रसारित कराङ्गुली
महामुद्रेय मुदिता परमीकरणे बुधैः
महामुद्रेय माख्याता न्यूनाधिकं समापनी
प्रयोजयेदिमां मुद्रां देवताह्वान कर्मणि

द्वितीय पटले दक्षिणद्वारार्चन विधिः

वक्ष्ये दक्षिणवक्त्रार्चा त्रिप्रकारा तु सा स्मृता
लिंगे वा प्रतिमायां वा मुखलिङ्गे तु वा मता १
प्रतिमा दक्षिणास्या चेदुत्तमोत्तम संज्ञका
मिश्रे तु मध्यमा प्रोक्ता लिङ्गेऽर्वा त्वधमा मता २
प्रतिमायां तु मध्ये यद् दक्षास्य यजनं द्विजाः
नृत्तमूर्ते विशेषेण त्वति शोभन मिष्यते ३
श्रेष्ठं पश्चान्मुखं लिंगं दक्षास्यं बेरमुच्यते
अव्यक्तं मोक्षदं लिंगं व्यक्तं भूतिप्रदायकम् ४
भुक्ति मुक्ति प्रदं मिश्रमेवं ज्ञात्वा समाचरेत्
शौचमाचमनं स्नानं सन्ध्योपासन मेव च ५
कृत्वा शिवार्घ्य हस्तस्तु दक्षिण द्वारमाश्रयेत्
द्वार मस्त्रेण संप्रोक्ष्य द्वारपानर्चयेत् क्रमात् ६
गणपं भारतीमूर्ध्वे सव्येगङ्गां च नन्दिनम्
यमुनां च महाकालं गन्धाद्यैः क्रमशोर्चयेत् ७

संप्रविश्यान्तरे वास्तु पतिं संपूज्य फूजकः
पूजयेत् पूर्ववक्त्रस्तु शिवं षड्गुण संयुतम्  ८
लिंगार्चनं चेत् प्राग्वत् स्यादीशानं तु स्वगोचरे
अघोरं पुरुषं वापि दक्षिणे सम्यगर्चयेत्  ९
अघोरं वाथ सद्यं वा पश्चिमे तु समर्चयेत्
सद्यवक्त्रं तु वामां वा सौम्यदेशे समर्चयेत्  १०
पुरुषं वाथ वामं वा पूर्वस्मिन् संप्रपूजयेत्
ईशानमग्नि देशे तु न्यसेत् पूर्वे मनोन्मनीम्  ११
पितृवाय्वग्नि ईशेषु हृदयादि व्यवस्थितम्
अथवा प्राग्वदेवं स्याद् विद्येशा दक्षिणादितः  १२
गणेशःपूर्व देशे वा प्राग्वद्वा संप्रकीर्तिताः
पूर्व दारभ्य शक्राद्या वज्राद्याश्च तथा मताः  १३
उक्तं दक्षिण संस्थं च बलिपीठं ध्वजादिकम्
प्राग्वदेव विधेयं स्यात् अन्यत्सर्वं समाहिताः  १४
लिंगार्चनं च देवं स्याद् अथबेरार्चनं तु चेत्
तदुच्यते समासेन श्रूयतां मुनिसत्तमाः  १५
लोहजे शैलजे वापि मृज्जे धतुज रत्नजे
चित्रहीने शिलाबिंबे मूललिंग वदाचरेत्  १६
रत्नजे लोहजे पक्व मृरामये बेरशोधनम्
अभीष्ट दिवसे कुर्याद् यावद्बेरं सधूसरम्  १७
वस्त्र संमार्जनं पुरायदिवसे स्नपनं मतम्
कर्मार्चार्यामथान्येषां मणिलिङ्गेऽथ पीठके  १८
अथवा बाणलिंगे वा दर्पणादौ समर्चयेत्
आधाराख्य मनन्तं च धर्माद्यं हि चतुष्टयम्  १९
गात्रं तुर्यमधश्चोर्ध्वच्छदने पद्मकर्णिके
वामादि नवकं सूर्यमराडलाद्यं च साधिपम्  २०

संपूज्य हृत्पुटे नेत्रमन्त्रं विद्यातनुं स्मरेत्
ईशाने सकले मूर्ध्नि पुरुषं वदने स्मरेत्  २१
अथापरं समानं स्यात् शिवलिंगार्चनेन तु
कलान्यासस्समाख्यातः प्रतिमानां विशेषतः  २२
प्रतिमालक्षणं प्रोक्तं ध्यानमत्रोप लक्ष्यताम्
हृद्बीजात्पश्चिमे वर्णे षष्ठं बीजं नियोजयेत्  २३
मात्रात्रय समायुक्तं मूर्ध्नि बिन्दुं नियोजयेत्
मन्त्र मेतत्समुच्चार्याऽवाहयेत् प्रतिमाहृदि  २४
न्यास मार्गेण संस्थाप्य सन्निधान निरोधने
विधायैवं हृदा पाद्यं पादयोस्तु निवेदयेत्  २५
सिद्धार्थ चन्दनोशीर दूर्वा सङ्कल्पितं द्विजाः
एलालवङ्ग कर्पूर वराल फल कल्पितम्  २६
दद्यादाचमनीयं तु वक्त्रे तत्पुरुषाह्वये
क्षीर सिद्धार्थ सस्येन्द्र तिलशाल्यक्षातान्वितम्  २७
कुशपुष्पसमोपेतं दद्यादर्घ्यं तु मूर्धनि
यवसर्षप सद् व्रीहि तण्डुलै रक्षतं भवेत्  २८
व्रीहि तण्डुल संयुक्त मच्युतं तत्प्रकीर्तितम्
पाद्यादि पञ्चकं ह्येतत् सकले निष्कलेऽपि च  २९
संमिश्रेऽपि विधेयं स्यात् अर्चने स्नपने मखे
पवित्राहोहणादौ च प्रोक्तं वाथ समाचरेत्  ३०
सर्व द्रव्यसमायुक्तं श्रेष्ठमित्याभिधीयते
एकहीनं तु मध्यं स्याद् द्वाभ्यां हीनं तु कन्यसम्  ३१
त्रिभिहीनम् तु नीचं स्यात् सर्वद्वारेषु योग्यकम्
गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च  ३२
तांबुलं मूलमन्त्रेण दद्यात्तु परमेश्वरे
बलि होमोत्सवं नृत्तं यथाकालं समाचरेत्  ३३

सन्ध्या तिथ्यर्ध नाडी स्नपन यजन नैवेद्यबल्यग्निकार्यं-
नित्योक्तं चोत्सवान्तं भवति विधिरयं शुद्धनृत्तक्रमेण
नाडीनामक्षिपक्षैर्दरदरदलितै र्व्योमचन्द्रैर्यथाव-
न्न्यूनेऽस्मिन्नर्चनाङ्गैस्स्मर शरमुनि संख्यार्ध नाड्योऽथवास्युः ३४
उत्तमोत्तम पूजा चेत् कालोयामद्वयेन तु
मध्यमे दशनाड्यस्स्याद्याम मात्रेण कन्यसः ३५
अन्तरा त्वष्टधा भक्त्वा नवधा कालमादिशेत्
कर्षणादि प्रतिष्ठान्तं कर्म संवत्सरोत्सवम् ३६
पवित्रारोहणं मासार्चन मङ्कुर वापनम्
नित्यार्चनादिकं सर्वं तन्त्रेस्मिन् प्रतिपादितम् ३७
समालोच्य विधेयं स्यात् सकले निष्कले शिवे
अनेनैव प्रकारेण न्यायेनान्वीक्ष्य देशिकः ३८
सौम्य वक्त्रेश पूजाद्यं कारयेद्देशिकोत्तमः
अन्तरालं तु पूर्वस्यां दिशि व्यक्ते विशिष्यते ३९
किमत्र बहुनोक्तेन यस्य देवस्य यन्मुखम्
तस्य देवस्य सा प्राची निश्चिता द्विजसत्तमाः ४०
तद्वशादपरा कल्प्या दिशो दिग्वेदिभिस्सदा ४०१-२

इति उत्तरकामिकाख्ये महातन्त्रे दक्षिणद्वारार्चन विधिः
द्वितीयः पटलः

सन्ध्या तित्यर्थ नाडी स्नपन यजन नैवेद्यबल्यग्निकार्यं-
नित्योक्तं चोत्सवान्तं भवति विधिरयं शुद्धनृत्तक्रमेण
नाडीनामक्षिपक्षैर्दरदरदलितै र्व्योमचन्द्रैर्यथाव-
न्न्यूनेऽस्मिन्नर्चनाङ्गैस्स्मरशरमुनि संख्यार्ध नोड्योऽथ-वास्युः
उत्तमोत्तम पूजाचेत् कालोयामद्वयेन तु
मध्यमे दशनाड्यस्स्यात् याम मात्रेण कन्यसः

अन्तरा अष्टधा भक्त्वा नवधा कालमादिशेत्
पूजयेत् पूर्ववक्त्रस्तु शिवं षड्गुण संयुतम्
षड्गुण - १ सर्वज्ञत्वम् २ परितृप्तत्वम् ३ अनादि बोधृत्वम् ४ स्वतन्त्रत्वम् ५ अलुप्तशक्तित्वम् ६ अनन्तशवक्तिस्वम्

## तृतीय पटले सकलार्चनाविधिः

वक्ष्येहं सकलार्च्चान्तु सर्वाभीष्टफलप्रदाम्
शौचमाचमनं स्नानं सन्ध्यावन्दनतर्पणम् १
कृत्वा प्रविश्य हर्म्यन्तु पादशौचं विधाय च
सम्यगाचभ्य संगृह्य भसितं वारिणा सह २
त्रिपुण्ड्रं विधिना कृत्वा करन्यासं विधाय च
तत्करेण च संयोज्य शिवेह्यात्मानमादरात् ३
भूतशुद्धिं सुधाप्लावं आत्मावाहनमेव च
करन्यासं च विन्यासं ब्रह्मणामीश पूर्वकम् ४
स्वविग्रहे कलान्यासमीशानं मूर्ध्नि विन्यसेत्
पुरुषं वदने सर्वं मलामन्त्रमनुस्मरन् ५
अन्यत्पूर्वसमानं स्यादेकत्रिंशत्कलां न्यसेत्
अन्तर्यागमतः कृत्वा स्थानशुध्दिन्ततो नयेत् ६
विशेषार्घ्यञ्च संकल्प्य गन्धपुष्पाक्षतैर्युतम् ६ १-२
ईक्षणाद्यैर्चतुर्भिस्तु द्रव्यशुध्दिन्तु पूर्ववत्
कृत्वात्मानं समभ्यर्च्य मन्त्रशुद्धिं समाचरेत् ७ १-२
द्वारं संप्रोक्ष्य चास्त्रेण वृषमग्रे समर्चयेत्
द्वारपार्श्वोभयंवापि गणपञ्चसरस्वतीं ८ १-२
नन्दिनञ्च महाकालं गंगाह्वां यमुनामपि
संपूज्योदुम्बरे शस्त्रं प्रविश्यान्तः पुरं पुनः ९९-२
दत्वा पुष्पञ्च वास्त्वीशे दत्वार्घ्योदं शिरस्यथ

शिवस्येशानमन्त्रेण मालाद्यमपनीय च १० १-२
शुद्धिं कृत्वा विधानेन पटाद्यैर्वोदकेन वा
आधाराख्यमनन्तञ्च धर्माधर्माद्यमेव च ११ १-२
अधश्चोर्ध्वश्चदेपद्मकर्णिकेशक्तिपुञ्जकं
वामाद्यं हृदयोपेतं शिवासनमनुस्मरन् १२ १-२
तस्मिन्मूर्तिं समावाह्य विद्यादेहं प्रकल्पयेत्
सदाशिवो महेशश्च रुद्रश्चेचि त्रिधामतः १३ १-२
शिवदेह-इति प्रोक्तः विद्यादेहस्स उच्यते
या तस्य विमलाशक्तिश्शिवस्य समवायिनी १४ १-२
तद्देहत्रयसिद्ध्यर्थं मूर्तिमादौ प्रकल्पयेत्
हृत्संपुटेन संयोज्य तस्यां ब्रह्माणि विन्यसेत् २० १-२
कलान्यासन्ततः कुर्यात्तद्विधानमिहोच्यते
सदेशे देह सिद्ध्यर्थमष्टत्रिंशत्कला मता २१ १-२
रुद्रेशयोश्शरीरार्थमेकत्रिंशत्कला मता
अष्टत्रिंशत्कलान्यासं प्रागेव प्रतिपादितम् २२ १-२
एकत्रिंशत्कलान्यासे विशेषः कश्चिदिष्यते
एकमेव शिरोवक्त्रं महेशे रुद्रविग्रहे २३ १-२
तत्रेशानेन वक्त्रेण ममुना सकलेन च
मलात्मना विशिष्टन्तु पूर्ववत्परिकल्पयेत् २४ १-२
ध्यात्वा सदाशिवरूपन्तच्चतुर्दशसंयुतम्
षष्ठस्वरसमोपेतं बिन्दुनादविभूषितम् २५ १-२
सान्तं हृत्संपुटं कृत्वा विद्यादेहं प्रकल्पयेत्
बेरे सदाशिवेवापि लिंगेप्येवं समाचरेत् २६ १-२
महेशनृत्तमूर्त्यादि ध्यानं शान्तमनुस्मरन्
प्रतिमालक्षणोक्तञ्च महेशमनुनायुतम् २७ १-२
कलान्तकगजघ्नादि रूपं रौद्रमनुस्मन्रन्

तन्मन्त्रेण समोपेतं विद्यादेहं प्रकल्पयेत्  २८ १-२
महेशरुद्रमूर्तौ च मन्त्रस्सादाशिवो यथा
विद्यादेहार्थमुद्दिष्टस्सर्वतश्शिव एव च  २९ १-२
आवाह्य समनुर्मन्त्रोद्धारे प्रागेवकीर्तिताः
तेनावाह्य शिवन्देहत्रितये पूर्ववर्त्मना  ३० १-२
स्थापनाद्यन्ततः कुर्यात् पाद्यञ्च परमेश्वरे
गन्धं पुष्पञ्च धूपञ्च दीपन्नैवेद्यमप्य च  ३१ १-२
ताम्बूलसहितं सर्वन्निष्कलार्चनवन्नयेत्
पञ्चावरणसंयुक्तञ्चतुस्त्रिद्वयेकसंवृतौ  ३२ १-२
इष्टावरणसंयुक्तं प्रागुक्तविधिना गुरुः
परिवारयुतञ्चेत्तु बलिन्तस्मिन्समाचरेत्  ३३ १-२
होमं नित्योत्सवं वापि स्वप्रधाने समाचरेत्
शुद्धनृत्तञ्चयन्नोक्तं सर्वं प्रकृतिवन्नयेत्  ३४ १-२
द्वारपालार्चनोपेतं बलिहोमसमन्वितम्
शुद्धनृत्तञ्च हित्वा वा कर्म सर्वं समाचरेत्  ३५ १-२
प्रदोषादौ नटेशस्य कुर्यान्नीराजनक्रियाम्
उत्सवं स्नपनञ्चैव दमनारोहणक्रियाम्  ३६ १-२
पवित्रारोहणं संम्यक् कृत्तिकादीपमेव च
संवत्सरादि लेखाञ्च वसन्ताख्यं तदुत्सवम्  ३७ १-२
मासोत्सवं तथा मासेनवनैवेद्यकर्म च
प्रायश्चित्तञ्च जीर्णानां उद्धारञ्च गुरूत्तमाः  ३८ १-२
देवोक्तमखिलं सर्वं देव्याश्चापि समाचरेत्
किञ्चाषाढेऽश्विनी मासे पूर्वफल्गुनिसंगमे  ३९ १-२
पूरकर्मापिकर्तव्यमादिशक्तेर्द्विजोत्तमाः
गौरीमहेश्वरीमूर्तीसदेशे तु मनोन्मनी  ४० १-२
मनोन्मन्यणुना मूर्तिं मनोन्मन्यां प्रकल्पयेत्

गौरी मन्त्रेण गौर्यास्तु षड्विंशतिकलान्विताम् ४१ १-२
आदिशक्त्यणुना तस्यामादिशक्तिं प्रपूजयेत् ४२

इति उत्तरकामिकाख्ये महातन्त्रे सकलार्चनाविधिः
तृतीयः पटलः

इन्दु निभ पञ्च मुख हस्त दश युक्तं
शूल वर टङ्क मसि वज्र मभयं स्यात्
पाश वरदाङ्कुश मणिर्दहन वामे
श्वेत कमलासन सदाशिव स्वरूपम्

## चतुर्थे पटले स्नपनविधिः

अथातस्संप्रवाक्ष्यामि स्नपनं परमेष्ठिनः
अष्टम्यां वा चतुर्दश्यां विषुवायनसंक्रमे १
ग्रहणे मासनक्षत्रे चार्द्रायां पर्वणोर्द्वयोः
सुयोगे सूर्यवारे वा चोत्सवान्ते दिनं त्रयम् २
कर्तुर्जन्मवियोगर्क्षे तस्याप्यनुदिनेथ वा
राज्ञोभिषेकनक्षत्रे दुर्भिक्षे दुर्निमित्तिके ३
भूमिकम्पे दिशान्दाहे ज्वरमार्यादि पीडने
प्रतिष्ठान्ते ह्द्भुते सर्वरोगोत्पत्ताववग्रहे ४
नित्ये नैमित्तिके काम्ये कारयेच्छंकरस्य च
स्नपनन्तु यथान्मायं तच्चानेकविधं भवेत् ५
अंकुरार्पणमादौ स्यात् महास्नपन कर्मणि
प्रागुक्तमण्टपे वापि वेदिकावर्जितेपि वा ६
अथवा पूर्वक्ल्प्तौ तु तम्मानाद्यनपेक्षया ६ १-२
पञ्चहस्तादिषट्सप्तहस्तपर्यन्तकेपि वा
चतुर्गात्रादिकेष्टाष्टगात्रपर्यन्त संयुते ७ १-२

सर्वालंकारसंयुक्ततोरणैरन्वितेपि वा
नृत्तवाद्यादिसंयुक्ते गानध्वनिसमन्विते ८ १-२
अस्त्रेण शोधयेत् भूमिं वामदेवेन लेपयेत्
सूत्रन्यासमघोरेण तालमात्रान्तरं यथा ९ १-२
द्वितालं शिवकुम्भस्य वर्द्धन्यास्तालमात्रकम्
त्रितालं कर्णिकामानं सर्वसामान्यमीरितम् १० १-२
अथवोत्तरवीथ्यां स्यात् करकस्य स्थितिर्यदा
तदा द्वितालमानेन कर्णिकामानमीरितम् ११ १-२
चतुर्दलं यथा पञ्चकलशस्थापनं दिशि
विदिक्ष्वपि नवाख्यं स्यात्समन्तादेकमावृतम् १२ १-२
पञ्चविंशतिसंख्यान्तं तत्समन्तात्समावृतम्
एकोनपञ्चाशत्संख्यामष्टोत्तरशतं द्विजाः १३ १-२
आवृतिद्वयसंयुक्तं तत्बाह्ये परिकल्पयेत्
पञ्चविंशतिसंख्यातान् कलशान् मध्यमस्थितम् १४ १-२
परिहृत्य समन्तात्तु द्वाभ्यां वैकेनमार्गिकम्
अष्टद्वारसमायुक्तं बहिष्ठादादवृतित्रयम् १५ १-२
मध्यमे तिथिसंख्यास्युः नवकोणे व्यवस्थिताः
मध्यमे तिथिसंख्येतु मध्यमत्रितयं त्यजेत् १६ १-२
अष्टोत्तरशतं ह्येतत् सहस्रञ्चेन्नवाधिकम्
चत्वारिंशच्च व्यूहं स्यात् पृथक् स्यात् पञ्चविंशतिः १७ १-२
एकद्वित्रिचतुर्भिस्तु पदैर्व्यूहान्तरं स्मृतम्
मध्यव्यूहस्य परितश्चतुष्कुण्डन्तु वाष्टकम् १८ १-२
स्वस्वसंख्या समव्यूहे होमार्थं परिकल्पयेत्
अन्तर्मार्गं समावाह्य वीथिश्शास्त्रे समीरितम् १९ १-२
शिवव्यूहस्य परितः षोडशैव परित्यजेत्
सूत्रन्यासस्समाख्यातः अन्यथापि भविष्यति २० १-२

अष्टोत्तरशताख्ये तु मध्यमे पञ्चविंशतिः
मार्गबाह्ये तु कोणेस्यादेकविंशति संख्यकः २१ १-२
शेषैर्दिक्षु चतुर्द्वारं सहस्रे पुनरुच्यते
सूत्रद्वयं न्यसेत्पूर्वापरगं याम्यसौम्यगम् २२ १-२
सार्धहस्तान्तरं हस्तमानान्तरमथापि वा
स्याच्चतुर्दशसंख्याता वीथिबाह्ये क्रमेण च २३ १-२
तद्बहिर्होममिष्टं स्यात् चतुर्दिक्षु अष्टदिक्षु वा
स्थण्डिलं पुरुषेणस्यात् चतुः प्रस्थमिदं वरम् २४ १-२
त्रिः प्रस्थं मध्यमं हीनं द्विप्रस्थमिति कीर्तितम्
हीनहीनतरं प्रस्थमानमित्यभिधीयते २५ १-२
शालिमानमिदं तस्माद्धीनन्नैव प्रयोजयेत्
अधश्चेधभिचारार्थं भवेदेव न संशयः २६ १-२
आरम्य द्विगुणन्त्वेकवृद्ध्या दशगुणावधि
मानन्तु शिवकुम्भेस्यात् तस्योर्ध्वेकरकेमतः २७ १-२
व्रीह्यर्धं तण्डुलं विद्यात् तदर्धं तिलमानकम्
तिलार्धं लाजमानं स्यादष्टद्रोणं सहस्रके २८ १-२
अष्टाधिक शिवव्यूहे शालिमानं प्रकीर्तितम्
हृदयेन न्यसेत् मुम्भान् स्वर्णादिविनिवेशयेत् २९ १-२
शिवादिप्रस्थवृद्धया तु सप्तविंशतिमानकम्
शिवकुम्भस्यमानं स्यात् तदर्थं करकेमतमू ३० १-२
चतुस्त्रिद्वयेकसंख्यातप्रस्थमानप्रपूरितम्
कलशे वेष्टनं त्रिद्विव्योमसूत्रैः क्रमेण तु ३१ १-२
अथवा व्योमसूत्रेण त्रितयं परिवेष्टनम्
वर्मणाविहितं तच्चकुम्भन्यासो हृदामतः ३२ १-२
षट्त्रिंशत्तत्वपर्यन्तान् कुशान्त्र्यादीन्यथान्यसेत्
कूर्चान्वैशेनमन्त्रेण द्रव्यं मूलेन विन्यसेत् ३३ १-२

मणिक्कञ्चेन्द्रनीलञ्च वैडूर्यञ्चप्रवालकम्
मुक्ता च पञ्चरत्नं स्यादभावे हेमसम्मतम्  ३४ १-२
निष्कं पादन्तु पादार्धं दशमाषाष्टमाषके
तयोरर्धं तदर्धं वा माषं वातिदरिद्रके  ३५ १-२
तस्माद्धि करकेर्धं स्यात् द्रव्याणि कलशेषु च
माद्यमाचमनञ्चार्घ्यं पञ्चगव्यञ्चतुर्दिशि  ३६ १-२
गन्धोदं वाथ शुद्धोदं प्रथमे परिकीर्तितम्
कुशोदकं ततः क्षीरं दधिकोष्णं घृतं भवेत्  ३७ १-२
गन्धोदं वाथ कोणेषु क्रमेणाष्टकमेव वा
द्वितीयस्थापनं प्रोक्तं तृतीयञ्च निगद्यते  ३८ १-२
मधुलाजाशकृच्चूर्णं लाजचूर्णं हरिद्रकम्
भूतिक्षुसार कदलीतिलसर्षपपानसाः  ३९ १-२
भसितंतिलसारञ्च कदलीतिलसर्षपान्
नालिकेरञ्च नारंङ्गद्वयंस्यान्मातुलंगकम्  ४० १-२
डाडिमञ्चाथबाह्ये तु क्रमुकौद्रवमाद्रके
पनसाम्रकदल्युत्थ नालिकेरञ्च सर्षपम्  ४१ १-२
तिलबिल्वे तदन्ते तु मातुलंगफलम्मतम्
नारंगद्वितयन्तस्माद्यवनीवारलाजकम्  ४२ १-२
सत्वन्तेत्वथवादौ वा क्षौद्रमित्यभिधीयते
कुष्टं गुलं पयः पश्चात् सर्षपञ्च लवंगकम्  ४३ १-२
तक्कोलन्दधिमेघञ्च तिलोशीरघृतं शकृत्
सत्तुकन्नालिकेरञ्च हरिद्राचूर्णकन्तथा  ४४ १-२
एवं त्रिविधकन्नित्ये त्रितयं पञ्चविंशतेः
पञ्चविंशति मध्ये तु सन्त्यजेदन्तरावृतिम्  ४५ १-२
एवं कृते भवन्त्यत्र कलशानान्तु षोडश
चतुर्दिक्षु च कोणेषु पाद्याद्यष्टकमीरितम्  ४६ १-२

अन्तरालेषु मध्यादि वसु संख्यकमीरितम्
ऊर्ध्वमेकोनपञ्चासत्क्रमेण परिपठ्यते ४७ १-२
गुलचन्दनलोहानि कुष्ठकञ्चोलपुष्पकम्
पत्रकर्पूरनीरञ्च दान्तं मांसिमुरन्तृणम् ४८ १-२
शमीदूर्वा च शुक्लार्कबिल्वचम्पकशंखिनी
अपामार्गन्ततो विष्णुक्रान्ति धुर्तूरसंज्ञकम् ४९ १-२
नन्द्यावर्तसिताब्जञ्च चत्वारिंशन्नवाधिके
अथवान्यप्रकारेण तदेव पुनरुच्यते ५० १-२
पाद्यमाचमनञ्चार्घ्यं गव्यं पूर्वादिदिक्षुवै
क्षीरंदधिघृतं क्षौद्रमाग्नेयादि विदिक्षु च ५१ १-२
तक्कोलं भस्मनिर्यासं हरिबेरञ्च मञ्जरी
नालिकेरञ्च बिल्वञ्च जम्बुकञ्चोलपाटली ५२ १-२
पुन्नागशंखपुष्पौ च लक्ष्मी व्याघ्रनखी तथा
सिम्हधुर्तूरसंज्ञे च षोडशास्त्रविनिर्दिशेत् ५३ १-२
सदुर्वासिर्षपाम्राणि नारंगपनसेमते
कदलीशतपत्रञ्च धातकी श्वेतलोधकम् ५४ १-२
इक्षुसारञ्च लाजञ्च चम्पकं गन्धतैलकम्
नीवारकुंकुमतिलमाञ्जीमुरजसक्तुकम् ५५ १-२
मातुलंगं मलयजमलयजमगरूशीर रात्रिजम्
पञ्च कल्सौ च ब्रह्माणि हित्वेशानं द्विजोत्तमाः ५६ १-२
विद्येशा अष्टकल्सौस्युः बाह्ये मूर्तीश्वरा दिशि
अन्तरे वामदेवाद्याः पञ्चविंशति संख्यया ५७ १-२
अष्टौ गणेश्वरा बाह्ये चांगुष्ठप्रमुखास्तथा
क्रोधाद्या वसुसंख्याताः शतरुद्रादिकस्तु वा ५८ १-२
एकोनेन तु पञ्चाशत् स्नपने देवतामताः
कृत्वा पदानि षट्त्रिंशत् त्यजेदंशं चतुष्टयम् ५९ १-२

द्वात्रिंशत्पदसंख्यास्यात् पाद्यदींस्तत्र विन्यसेत्
दक्षिणार्धं समारभ्य चोत्तरार्धं समावधि ६० १-२
अत्रानुक्तमथैकोन पञ्चाशत्सदृशं मतम् ६१
अष्टोत्तरशतं वक्ष्ये तच्चत्रिविधमुच्यते
चन्दनागरुकुष्ठानि कञ्चोलं पुष्पपत्रके ६२
कर्पूरं हरिबेरञ्च दान्तं मांसीमुरंतृणम्
तृतीयवरणस्थानि द्रव्याणि द्वादशैव हि ६३
चम्पकं सहदेवी च शतपत्री च रोचना
बिल्वं यवा शमी दूर्वा तक्कोलं मेघसम्ज्ञकम् ६४
धात्री मोचफलञ्चैव लक्ष्मीभूम्यरविन्दकम्
रास्ना च व्यापलाशञ्च श्वेतार्कं करवीरकम् ६५
धातकी द्रोणधुर्तूरं लोध्रापामार्गकार्जुनाः
प्लेक्षेभपिप्पली संज्ञा विष्णुक्रान्ति नृपाह्वया ६६
अश्वत्थं नागपुष्पञ्च चतुर्थे द्रव्यमीरितम्
तुलसी तगरञ्चैव तुरुष्कं तेजनीपुनः ६७
बिलकं जीरकं कृष्णजीरकञ्च हरेणुकम्
श्रीवेष्टकम् गन्धरसं फलिनी रक्तचन्दनम् ६८
सौरिपकं व्याघ्रनखं वल्लकीस्वर्णपुष्पकम्
दार्वीशुक्तिनखं दारु सिताह्वं च कुटं नटम् ६९
गुग्गुलुञ्चैव मृद्वीका सितेति गिरिकर्णिका
वटश्रृंगेन्द्रियाह्वञ्च फणिर्जम्बु मनश्शिला ७०
शंखिनी भृंगराजश्च नीवारं गैरिकं तथा
आम्रमोचरसं जातिः पाटली मार्जनं पुनः ७१
पञ्चमावरणं ह्येतदन्यथा च निगद्यते
शमीदूर्वार्क बिल्वञ्च चम्पकं शङ्खपुष्पकम् ७२
अपामार्गं तथा विष्णुक्रान्तिर्धुत्तरमेव च

नन्द्यावर्तं ततः प्रोक्तं श्वेतपद्मं ततो मतम् ७३
पुन्नागं जातिपुष्पञ्च पाटली सहदेविका ७३ १-२
शतपत्रञ्च लक्ष्मीस्यात् भूपद्मं धातकी पुनः
तुलसी करवीरञ्च कृष्णवल्ली च मल्लिका ७४ १-२
गोक्षुरादौ शतावेरी ततस्तस्मात्कृताञ्जलीः
महाद्रोणपुनर्द्रोणमहाभद्रीच भद्रिका ७५ १-२
इन्द्रवल्ली रुद्रपर्णी धात्र्यन्ते तु हरीतकी
व्याघ्रनख्या च मंजिष्ठं सरलं भद्रकोष्ठकम् ७६ १-२
नवनीतं द्राविडाह्वं सञ्ज्ञं तक्कोलसंज्ञकम्
चञ्चलातिबलाचैव बलासिंहाप्रियंगुकम् ७७ १-२
लोघ्रञ्च केसरन्नागं पूर्वं जम्बू कपित्थकम्
अश्वत्थो गुग्गुलुञ्चैव लाजिरं कृष्णजीरकम् ७८ १-२
सतिलं कुंकुमं मेघमगरुं कृष्णरोचना
श्रीवेष्टको गन्धरसः पिप्पली हस्तिपिप्पली ७९ १-२
कृष्णागरुं चतगरं ततः प्रोक्तंमनश्शिलाम्
रक्तचन्दनसंज्ञञ्च लवंगं रात्रिचूर्णकम् ८० १-२
कषायं मार्जनञ्चान्ते स्थापयेद्धृदयाणुना
चतुः क्षीर कुजोद्भूतत्वक्सार्वस्यात्कषायकः ८१ १-२
आम्रजम्बूतरूत्त्थत्वक् सारोपरि च कीर्तितः
दूर्वातिलकुशाग्रैस्तु मार्जनं त्वभिधीयते ८२ १-२
अतिबलान्तमिष्टं स्यादेकाशीतिघटस्थितौ
पाद्यमाचमनञ्चार्घ्यं गव्यं दिक्षु विदिक्षु च ८३ १-२
दधिसर्पिमधुक्षीरमग्रेः प्रभृति विन्यसेत्
तिलं श्रीवृक्षपत्रञ्च चन्दनं मेघसंज्ञकम् ८४ १-२
चम्पकं हरिबेरञ्च सर्षपन्नागकेसरं
तक्कोलञ्च फलं कुष्ठं कञ्चोलं लोहसंज्ञकम् ८५ १-२

लवंगपत्रकर्पूरान् बाह्ये षोडश विन्यसेत्
तृतीयावरणे सक्तून् अग्नौ भूतघटेष्वपि  ८६ १-२
भसितं रात्रिचूर्णञ्च शकृच्चूर्णं क्रमेण च
धात्री च नालिकेरञ्च लिकुचं मातुलंगकम्  ८७ १-२
तद्बाह्येग्नयादि कोणेषु चतुस्सप्तसु विन्यसेत्
लक्ष्मीञ्च सहदेवीञ्च विष्णुक्रान्तिं क्रमेण तु  ८८ १-२
रुद्रपर्णा समायुक्तं चतुर्नवसु विन्यसेत्
गुञ्जादि निष्कपर्यन्तं पाद्याद्यंगं प्रमाणकम्  ८९ १-२
एकद्वित्रिचतुःप्रस्थं पञ्चगव्यादि मानकम्
मध्यमानं तथा प्रोक्तं पादमर्धं तथापि वा  ९० १-२
आज्यतैलप्रमाणञ्च तथैव परिकल्पयेत्
कर्पूरकुंकुमादीनां मानमिष्टं प्रदीयताम्  ९१ १-२
मध्ये विद्येश्वराः पूज्याश्शतरुद्राबहिर्मताः
एवं त्रिविधरीत्या तु शतमष्टोत्तरं मतम्  ९२ १-२
नवसंख्यैर्नवव्यूहैः काष्ठाद्वितयमध्यगैः
अष्टाद्वारसमायुक्ते रेकाशीतिस्तु पूज्यते  ९३ १-२
अष्टोत्तरसहस्राख्यं अधुनात्र निगद्यते
वरालत्रुटिकर्पूरत्वगेलोशीरजातयः  ९४ १-२
एभिर्युक्तं शिवाम्भस्याच्छिवमन्त्राभिमंत्रितम्
तेनैव पूरयेत्कुम्भान् वर्धनी कलशानपि  ९५ १-२
पाद्यमाचमनञ्चार्घ्यं पञ्चगव्यं कुशोदकम्
क्षीरन्दधिघृतञ्चैव प्रथमावरणे न्यसेत्  ९६ १-२
क्षौद्रं यवं गुलन्नयस्त्वा कुशं रम्भाफलं तथा
सर्षपं नालिकेराख्यं रजनी मातुलंगकम्  ९७ १-२
लाजडाडिमसक्त्वाख्यान् पनसं भस्मचूर्णकम्
पञ्चविंशतिमध्यस्थ द्रव्याण्येतानि षोडश  ९८ १-२

रत्न लोहजधातूनां बीजं गन्धोदकं क्रमात्
पूर्वस्मिन् संस्थितं ज्ञेयं कोणद्वयविवर्जितम् ९९ १-२
मृन्मार्जनं परिमुखं मार्जनं पत्रपुष्पयुक्
दक्षिणे पश्चिमे ज्ञेयं मान्यास्त्रफलतोययुक् १०० १-२
कषायाढयोदकोपेतमुत्तरे पुनरुच्यते
कान्तमूलोदकं ब्रह्मकूर्चं शान्त्युदवल्कले १०१ १-२
माणिक्कञ्चेन्द्रेनीलञ्च मुक्तावैडूर्यवज्रकम्
पुष्परागं प्रवालञ्च स्फटिकं मरकतन्तथा १०२ १-२
पञ्चरत्नमिति ज्ञेयं आद्या भावे द्वितीयकम्
रत्नोदकमिति प्रोक्तं लोहोदकमतः परम् १०३ १-२
सुवर्णं रजतं ताम्रमायसं त्रपुसीसकम्
आरकूटं ततः कांस्ययुक्तं लोहोदकम् परम् १०४ १-२
सौराष्ट्रमञ्जनं श्यामा हरितालं मनश्शिला
गैरिकं रोचनं चान्ते धातूदकमिदं मतम् १०५ १-२
शालिकोद्रवनीवार प्रियंगुतिल सर्षपाः
श्यामाष्टकं यवो बीजो बीजोदकमिहोदितम् १०६ १-२
नवनीतञ्च कर्पूरं त्वगेलापत्रसंयुतम्
चन्दनं लघुकुष्ठञ्च वरालोशीरमुस्तकाः १०७ १-२
कुंकुमं हरिबेरञ्च कञ्चोलं जातिरेव च
एभिस्तु चूर्णितैर्युक्तं गन्धोदकमिति स्मृतम् १०८ १-२
पर्वते च नदीतीरे वल्मीके कर्कटावटे
वृषशृंगे च सत्क्षेत्रे समुद्रे गजदन्तके १०९१- २
अष्टभिश्च समायुक्तं मृदम्भः परिकीर्तितम्
गोक्षुरा सहदेवी च विष्णुक्रान्ता कृताञ्जलि ११० १-२
शिरीषेन्दीवरं रात्रिरेभिर्मार्जनमुच्यते
दूर्वांकुरञ्च कुशाग्रं गौरसर्षपम् १११ १-२

भद्राकृताञ्जलीयुक्तं परिमाणं तदुच्यते
तुलसीबिल्वपत्रञ्च तमालञ्च तपस्विनी  ११२ १-२
अपामार्गसमायुक्तं पत्रतोयमिहेरितम्
पद्मं रक्तोत्पलं पश्चात् पाटली चम्पकं तथा  ११३ १-२
पुन्नागकुरवनारंगनन्द्यावर्तं च मल्लिका
श्वेतार्कवकुलैयुक्तं पुष्पतोयमिहेरितम्  ११४ १-२
कुष्ठं कुटन्नटं लोहञ्चन्दनं कुंकुमन्तथा
कर्पूरोशीरसम्युक्तं मान्योदकमिहेरितम्  ११५ १-२
शूलं कपालहरिणी पिनाकः परशुस्तथा
पाशोक्षमालाःहैमाश्च तैरस्त्रोदकं भवेत्  ११६ १-२
पनसो नालिकेरश्च मातुलंगद्वयं ततः
नारंगद्वयरम्भाद्यैः उक्तमस्मिन् फलोदकम्  ११७ १-२
पलाशोदुम्बराश्वत्थमायूरप्लक्षपाटली
जम्बूत्वग्भिस्समायुक्तं कषायोदकमीरितम्  ११८ १-२
अभ्रकत्रितयं पश्चान्माक्षिकत्रितयन्ततः
गन्धत्रयसमायुक्तमाढ्यतोयमिति स्मृतम्  ११९ १-२
सूर्यकान्तस्त्वयस्कान्तो भ्रामकश्चन्द्रकान्तकम्
निकुन्तः पञ्चभिर्युक्तंकान्तोदकमिति स्मृतम्  १२० १-२
उशीरो हरिबेरञ्च पीवरिः पुष्करन्तथा
श्रीकण्ठश्चेति पञ्चभिर्युक्तम्मूलोदकं स्मृतम्  १२१ १-२
गोमूत्रं गोमयं क्षीरन्दधिसर्पिः कुशोदकम्
एभिर्द्रव्यैस्समायुक्तं ब्रह्मकूर्चमिति स्मृतम्  १२२ १-२
मयूरशिखिभूर्जत्वग्रोचनाभृंगराजकम्
कृतांजलिश्च पञ्चभिर्युक्तं स्याद्वल्कलोदकम्  १२३ १-२
अग्निकोणात् क्रमात्तैलं क्षीरन्दधिघृतं न्यसेत्
चत्वारिंशत्सुमध्यस्थकलशद्रव्यमीरितम्  १२४ १-२

लक्ष्मी भद्रा कुशोदान्तो नीवारं चम्पकम् पुनः
विभीता गोक्षुराद्यष्टौ गर्भावरणगा मताः १२५ १-२
रक्तोत्पलं शमीपश्चात् पद्मं सुरस संज्ञकम्
नद्यावर्तमपामार्गं दूर्वा च करवीरकम् १२६ १-२
यवाह्वाद्रोणपुष्पञ्च विष्णुक्रान्तिञ्च मल्लिका
जाति बिल्वं सितार्कञ्च एकपत्रारविन्दकम् १२७ १-२
द्रव्याणि षोडशैतानि प्रतिव्यूहन्तृतीयकम्
वृत्तक्रममथो वक्ष्ये शिवकुम्भन्तु मध्यतः १२८ १-२
तद्वामे वर्धनी ज्ञेया रत्नान्यष्टसु विन्यसेत्
माणिक्कं शिवकुम्भे तु पञ्चरत्नसमन्वितम् १२९ १-२
कर्णिका बाह्यदेशे तु दलमध्येष्टदिक्षु वा
पाद्यादिकं सहस्रं तु तद्बहिर्विन्यसेत् क्रमात् १३० १-२
पाद्यमाचमनञ्चार्घ्यं पञ्चगव्यं कुशोदकम्
क्षीरन्दधिघृतञ्चैव प्रथमावरणे न्यसेत् १३१ १-२
द्वितीयावरणे स्वर्णं पदे षोडशसंख्यके
चतुर्विंशति संख्याते नालिकेरफलं बहिः १३२ १-२
द्वात्रिंशत्संख्यके प्रोक्तस्त्विक्षुसारश्चतुर्थके
षट्पञ्चाशत् घटे प्रोक्तो पञ्चमे मधु कीर्तितम् १३३ १-२
चतुष्षष्टियुतो बाह्ये नानापुष्पञ्च कीर्तितम्
द्विसप्ततिसमायुक्तो सप्तमे सर्वबीजकम् १३४ १-२
अष्टमे चतुराशीतौ विन्यसेत् कदलिफलम्
नवमेषराणवत्यन्ते भसितन्तदनन्तरम् १३५ १-२
दशमे शतसंयुक्ते पञ्चगव्यं प्रकीर्तितम्
चतुर्युक्ते शतेपञ्चगव्यमेकादशांशके १३६ १-२
अष्टोत्तरशतं बाह्ये कषायोदकमुच्यते
धातु लोहोदकं पश्चात् शतेषोडशसंयुते १३७ १-२

शते विंशतिसंयुक्ते बाह्ये मृद्वारिकीर्तितम्
सर्वगन्धञ्च सर्वेषु कलशेषु विनिक्षिपेत्  १३८ १-२
पञ्चविंशति संख्ये तु प्रतिव्यूहन्तु मध्यमे
घटं वा कलशं वापि चत्वारिंशत्तु संख्यया  १३९ १-२
वर्धन्यर्थं सुवर्णञ्च वस्त्रकूर्चादिसंयुतम्
प्रत्येकं विन्यसेत्सम्यक् द्रव्यं वा विनिवेशयेत्  १४० १-२
उभयञ्चोत्तमं विद्यात् द्रव्यन्यासे द्विजोत्तमाः
उक्तमार्गेषु सर्वञ्चेल्लब्धं श्रेष्ठं प्रकीर्तितम्  १४१ १-२
अर्धेन मध्यमं प्रोक्तं पादात्कन्यसमुच्यते
विद्येशाः मध्यमे देवास्त्वन्यत्र शिव एव हि  १४२ १-२
स च नाम्नां सहस्रैस्तु पठ्यतेतद्विशेषतः
पठन्वापूजयेदीशां शिवनाम्नाथ केवलम्  १४३ १-२
कूटाक्षरादिसंयुक्तञ्चतुर्थ्यन्त समन्वितम्
स्वाहान्तं वा नमस्कारप्रान्तं प्रणवपूर्वकम्  १४४ १-२
अष्टोत्तरसहस्रात्तु त्यजेत्बाह्यावृतिं गुरुः
तत्राग्नेयादिकोणस्थञ्चतुर्व्यूहं समाचरेत्  १४५ १-२
अन्तः कोणचतुष्केषु शिवव्यूहस्य बाह्यतः
स्थापयेद्दिक्षुहोमार्थमेतेषामन्तरालके  १४६ १-२
तत्बाह्ये षोडशव्यूहाः पूर्ववत्संव्यवस्थिताः
अन्यत् सर्वं समानं स्यादष्टपञ्चशतं भवेत्  १४७ १-२
अष्टसंख्या समायुक्तो द्विशते मध्यमेष्टकम्
तत्बहिः पञ्चविंशञ्च दिग्विदिक्षु प्रकल्पयेत्  १४८ १-२
बाह्ये षोडशसंख्यातान् गृहणीयाद्दिग्विदिग्गतम्
अष्टव्यूहन्तथात्वेतु उक्त संख्यान्वितं भवेत्  १४९ १-२
द्रव्याणान्तु प्रमाणं यत् विस्तारात्पुनरुच्यते
रत्नानि स्वस्वरूपेण शस्तानि द्विजसत्तमाः  १५० १-२

दशभाषादितद्वृद्ध्या निष्कान्तं लोहमानकम्
लोहवृद्धया तु मानं स्यात्तथा पाषाणमानकम् १५१ १-२
निष्कपादादितद्वृद्ध्या पलान्तं बीजमानकम्
तावत्तण्डुलमानं स्यात् सितामानन्तथा मतम् १५२ १-२
किन्तु नन्दपालान्तं स्यात् द्विगुणं गुलमानकम्
गन्धद्रव्यप्रमाणन्तु धातुवत्परिकीर्तितम् १५३ १-२
फलानि पत्रचूर्णानि तद्वल्लाजाश्च सक्तवः
तिलसर्षपहारिद्रगोशकृत्भस्ममानकम् १५४ १-२
पञ्चगव्यन्दधिक्षीरं मानं भस्मप्रमाणकम्
क्षीरवत्घृतमर्धं वा पादं क्षौद्रन्तथापलम् १५५ १-२
फलाभावे यथालाभं शेषमद्भिः प्रपूरयेत् १५६
घृतवत्तैलमानं स्यात् सर्वं वा पात्रमानयेत्
अर्धपादन्तदर्धं वा पुष्पं हस्तमितं भवेत् १५७
ओषधिस्तत्समं प्रोक्तन्तन्मानञ्च तथा मतम्
तथैव पात्रमानं तु मूलमानन्तु गन्धवत् १५८
शुष्क पुष्पफलादीनाम्मानं गन्धवदिष्यते
मृन्मानं पूर्ववत्प्रोक्तमन्यदप्येवमूह्यताम् १५९
वज्रं समस्तरत्नानां लोहानामग्निदैवतम्
यवो निखिल बीजानां धातूनां हरितालकम् १६०
ओषधीनामभावे तु सहदेवी प्रशस्यते
फलानां कदलीजातं पत्राणां बिल्वपत्रकम् १६१
नीलोत्पलन्तु पुष्पाणामुत्पलं विधीयते
चन्दनं सर्वगन्धानां मृदस्युर्दर्भमूलजाः १६२
त्वचामाश्वत्थजा प्रोक्ता मूलानान्तु कुटन्नटम्
सिताभावे गुलं प्रोक्तमिक्षूगक्षौद्रयोश्च तत् १६३
फलपुष्पाद्यभावे तु तत्पत्रादिकमेव वा

द्रव्याण्येतानि सर्वाणि मूलमन्त्रेण विन्यसेत् १६४
पिधाय बीजमुख्येन शरावैः पल्लवैस्तु वा
दत्वा हृदयमन्त्रेण वस्त्राणि विविधानि च १६५
वर्जयित्वाति कृष्णानि हीनानि शरहस्ततः
गन्धं स्वनाममन्त्रेण पुष्पन्धूपन्तथैव हि १६६
दीपेन सहितो मन्त्री लिंगमुद्रां प्रदर्शयेत्
कवचेनावकुण्ठ्याथ होमकर्म समारभेत् १६७
सहस्रकलशे पञ्चशतहोमं समाचरेत्
कुण्डे वा स्थण्डिले वापि सर्वलक्षणसंयुते १६८
कृत्वा कुण्डादिसंस्कारमग्निकार्योक्तवर्त्मना
समिदाज्यान्नलाजांश्च तिलं वै होमयेत्क्रमात् १६९
पलाशोदुम्बराश्वत्थ वटाः पूर्वादितः क्रमात्
शमीरवादिरमायूरश्रीवृक्षाः पावकादितः १७०
अष्टपक्षे तु समिधः त्यजेत्कोणचतुष्टयम्
पञ्चपक्षे तु समिधः त्यजेच्छम्यादि सम्भवाः १७१
चतुर्होमविधाने तु प्रधानेवाथ पूर्वके
शतमर्धं तदर्घं वा मूलहोमः प्रकीर्तितः १७२
मूलाद्दशांशतोंगानान्तथा ब्रह्म सुलोचने
कृत्वा होमं प्रविश्यान्तर्द्वारपूजां विधाय च १७३
प्रविश्य गर्भगेहे तु लिंगं संशोद्धय पूर्ववत्
संकल्प्य चासनं पीठे मूर्तिमावाह्य पूजयेत् १७४
ब्रह्मभिः सकलीकृत्य विद्यादेहं ततो न्यसेत् १७४ १-२
पाद्यादित्रितयं दत्वा गन्धपुष्पं सधूपकम्
दीपञ्च मूलमन्त्रेण दत्वातोद्यसमन्वितम् १७५ १-२
नृत्तगेयसमायुक्तं शंखध्वनिसमन्वितम्
वेदस्तोत्ररवोपेतं घण्टानादसमन्वितम् १७६ १-२

जयशब्दसमोपेतं शिवं कुम्भञ्च वर्धनीम्
उद्धृत्य नीत्वा देवाग्रे त्रिपादोपरि विन्यसेत् १७७ १-२
दत्वा घटस्थ देवाय देव्याः पाद्यादिकं त्रयम्
गन्धपुष्पं सधूपञ्च दीपमर्घ्यं विधाय च १७८ १-२
अपनीय पिधानं तत् दक्षहस्तेन देशिकः
सकूर्चपुष्पतोयाढ्यं शिवमन्त्रं समुच्चरन् १७९ १-२
संगृह्य तत्वचित्तस्तु लिंगमूर्ध्नि मनुं न्यसेत्
देवेशीमपि तद्वामे देवस्य विनिवेशयेत् १८० १-२
शिवमन्त्रं स्मरन्कुम्भतोयेन स्नापयेच्छिवम्
पिण्डिका रूपिणीं देवीं स्नापयेत्तं मनुस्मरन् १८१ १-२
दत्वा जातेन पाद्यन्तु पादयोस्तन्मुखेषु
ईशानाद्यैश्च सद्यान्तैः पञ्चभिर्विनिवेशयेत् १८२ १-२
आचा स्य चूडान्ते शिरस्यर्घ्यं प्रदापयेत्
पञ्चगव्याभिषेकादौ महाघण्टारवान्वितम् १८३ १-२
उपस्थानसमायुक्तं धूपं वा विनिवेशयेत्
अवश्यमावृतान्तेस्यादुपस्थानं सधूपकम् १८४ १-२
नानाफलानि गव्यानि पञ्चामृतयुतानि च
विद्यन्ते चेत् तदातैश्च स्नापयेत् परमेश्वरम् १८५ १-२
विरुद्दय गन्धतोयेन स्नापयेल्लिंगमादरात्
अर्चनोक्तं समभ्यर्च्य होमोपेतं समापयेत् १८६ १-२
सकलस्नपनञ्चेत्तु सकलस्थापनोक्तवत्
आसनं संप्रकल्प्यास्मिन् कुम्भे मूर्तिमनुं स्मरेत् १८७ १-२
ब्रह्मभिस्सकलीकृत्य तत्कलास्तत्र विन्यसेत् १८८
न्यस्त्वा विद्यातनुं तत्तद्रूपं ध्यात्वा सदाशिवम्
स्नपनाद्यञ्च पाद्यादि कृत्वा दत्वा हृदा गुरुः १८९
गन्धं पुष्पञ्च धूपञ्च दीपमर्घ्यं विधाय च

प्रदर्श्य लिंगमुद्रान्तु कवचेनावकुण्ठयेत्  १९०
इष्ट्वा गौरीञ्च वर्धन्यां योनिमुद्रां प्रदर्श्य च
वर्मणा चावकुण्ठ्याथ रुद्रानावरणस्थितान्  १९१
पूर्वोक्तविधिनावापि क्रमेणावाह्य पूजयेत्
गत्वा सकलसामीप्यमासनं मूर्तिमेव च  १९२
संकल्प्य सकलिकृत्य विद्यादेहमनुं स्मरन्
स्नपनाद्यं ततः कृत्वा दत्वा पाद्यादिकत्रयम्  १९३
गन्धं पुष्पञ्च धूपञ्च सदीपं विनिवेदयेत्
प्राग्वत् घटञ्च करकं नीत्वा हृदि मनुं न्यसेत्  १९४
तत्तद्देवीमनुं देव्या हृदये विनिवेशयेत्
स्नापयित्वा क्रमेणैव पाद्यादिद्वित्रिभागिकम्  १९५
देवे दत्वाऽवशिष्टन्तु देव्याश्च विनिवेदयेत्
पृथग्वा स्थापयित्वा तु देवेशीमभिषेचयेत्  १९६
पादमूलञ्च देवस्य गन्धाद्यैर्वाभिषेचमेत्
चित्राद्यैर्दर्पणाद्यैश्च स्नापयेत् स्नपनोक्तवत्  १९७
देव्याश्चेत् स्नपनं मध्ये कुम्भं वा करकन्यसेत्
द्रव्येषु भेदा नास्त्यत्र देवताभेद इष्यते  १९८
शान्त्याद्याः पञ्चकल्पैस्स्युर्वामाद्या नवकल्पने
धारिकाद्या महादिक्षुस्त्रीपाठवशमागताः  १९९
अनन्ताद्याविदिक्ष्वष्टपञ्चविंशतिसंज्ञकाः
पृथिव्याद्याः प्रधानान्तास्तत्र देवास्तु वामतः  २००
ऊर्ध्वानुदेवताः प्रोक्तास्त्रीलिंगान्तास्समीरिताः
अत्रैव स्नपनं वक्ष्ये क्षीराद्यैर्द्विजसत्तमाः  २०१
पयोदधिघृतक्षौद्रैः पुष्पैर्विशेषान्नालिकेरजैः
सलिलैस्सत्फलोपेतैस्सद्धटादिषु संस्थितैः  २०२
चूर्णैर्हारिद्रकैः पुष्पैर्विशेषान्नालिकेरजैः

सलिलैस्सत्फलोपेतैस्सद्धटादिषु संस्थितैः २०३
गन्धाद्यैरौषधोपेतैश्शुद्धोदैर्गन्धतैलतः
गंगादिप्रभवैस्तोयैः पूर्वोक्तेन च वर्त्मना २०४
स्नापयेत् परमेशानं सर्वदोषापनुत्तये
सर्वाभीष्ट प्रसिद्ध्यर्थं राज्ञां विजयहेतवे २०५
सदारोद्यप्रसिध्यर्थमायुष्यार्थं विशेषतः
सर्वसम्पत्प्रसिद्ध्यर्थं बलार्थं कान्तिहेतवे २०६
राष्ट्रदुर्भिक्षनाशाय तत्स्थदुष्टनिवृत्तये
राष्ट्रक्षोभेऽद्भुतप्राप्तौ दुर्निमित्ते विशेषतः २०७
वश्यार्थं सर्वलोकानां गजाश्वादि प्रसिद्धये
तेषां रोगविनाशार्थं रोगानुत्पत्तिहेतवे २०८
युद्धोद्यते स्वसेनाया बलायामृति हेतवे
भयार्थं परसेनायाः क्षयार्थं तत्भ्रमार्थकम् २०९
नरनारी गवादीनां रोगनाशार्थमेव
जन्मर्क्षे दिने राज्ञामभिषेके तथापि वा २१०
तत्तच्चन्द्राष्टमर्क्षे वा तस्य वैनाशिकोडुके
अयने विषुपे वापि ग्रहणस्थापनादिके २११
उत्सवे च पवित्रे च दमनारोपणेऽपिच
कृत्तिका दीपनक्षत्रे चान्यस्मिन् मासऋक्षके २१२
अष्टम्यां वा चतुर्दश्यां पञ्चदश्यां विशेषतः
मार्गशीर्षे च मासेथत्वार्द्रायान्तु विशेषतः २१३
प्रायश्चित्तेषु तत्कार्यं नवनैवेद्यकर्मणि
जनकल्याणकाले च नराणां रक्षणार्थके २१४
विशेष पूजाकाले च भक्तानामुत्सवेपि च
देवभ्रमणकाले वा मृगयायां विशेषतः २१५
कुर्यात्प्रतिदिनं वापि त्रिसंध्यायां गुरूत्तमाः

सन्ध्याद्वये वा चैकस्यां स्नपनं कारयेच्छिवे  २१६
प्रागुत्तवर्त्मना कश्चित् विशेषस्तत्र गद्यते
कुम्भेनैकेन वा व्योमसंख्येन कलशेन वा  २१७
प्रागुत्तद्रव्ययुक्तेन वर्धनी सहितेन वा
पञ्चब्रह्माधिपैः पञ्चघटैर्वाकलशैस्तु वा  २१८
एकद्रव्ययुतैर्वापि वर्धनी सहितैस्तु वा
इष्टद्रव्यं भवेन्मध्ये तद्वान्यत्करकस्थितम्  २१९
एकद्रव्यंचतुर्दिक्षु भिन्नद्रव्यमथापि वा
पाद्यमाचमनञ्चार्घ्यं पञ्चगव्यन्तु वा भवेत्  २२०
नवकुम्भविधानेऽपि विधानं सदृशं मतम्
एकद्रव्यन्तु वा हीने दिक्षु पाद्यादिकन्तु वा  २२१
स्वर्णादि निर्मिते पात्रे विधानं वैतदीरितं
प्रागुक्तत्रितयञ्चैतत् विशेषान्नित्यकर्मणि  २२२
पञ्चविंशतिसंख्यातमपि नित्ये प्रशंस्थितम्
उत्तमोत्तमपूजायामष्टोत्तरशतावधि  २२३
स्नपनं वा प्रकर्तव्यं नित्याद्ध्याय प्रचोदितम्
नैमित्तिकं तदूर्ध्वस्थं पूर्वोक्तमपि संस्थितम्  २२४
पञ्चविंशतिसंख्यादि साष्टसाहस्रकावधौ
अन्तरावरणे कश्चित् विशेषस्त्वभिधीयते  २२५
हित्वा चतुष्टयं कोणसंस्थितन्तद्युतन्तु वा
स्नापयेद्देवदेवेशमुदगैः प्राग्वदेव हि  २२६
श्रेष्ठ पूजादि संयुक्ते स्थाने स्नपनपूर्वकम्
कर्म तद्वद्विधेयं स्यात् श्रेष्ठहीनां क्रियां त्यजेत्  २२७
हीनकर्मणि न श्रेष्ठाः क्रियाशस्ता द्विजोत्तमाः
नित्यं नैमित्तिकं काम्यं स्नपनं त्रिविधं मतम्  २२८
नित्य नैमित्तिके कार्ये प्रत्यवायजिघांसया

काम्यार्थं काम्यकर्मेष्टन्निषिद्धन्न समाचरेत् २२९
कर्तव्यं वा न कर्तव्यमितिसन्देहसंगतौ
करणेभ्युदयो ज्ञेयो करणे दोष इष्यते २३०
समश्चेल्लोकशास्त्राभ्यां विधेर्न्यायस्समीरितः
ताभ्यामेव निषिद्धे तु सन्दिग्धं तत्परित्यजेत् २३१
क्रियामन्त्रादिभेदेन शास्त्रभेदेन वा भवेत्
क्रियामन्त्रादिभेदेन तन्त्र भेदो यतस्ततः २३२
तस्मात्तत्रच शैवोक्तं कर्तव्यन्नान्य शास्त्रतः
प्रशस्तन्नोदितन्तत्र शास्त्रान्तरमथाश्रयेत् २३३
तद्विधानानुपन्ने तत्राप्येषो विधीयते
प्रायश्चित्तादिकेऽनुक्ते स्वशास्त्रे परशास्त्रतः २३४
वर्तमाने तु शास्त्रार्थे तदंगं सृक्स्रुवादिकम्
स्वशास्त्रसिद्धं वाग्राह्यमथ शास्त्रान्तरोदितम् २३५
एकमादिकमालोच्य कारयेद्यो नृपोत्तमः
सोऽचिरेण तु कालेन सकलाधिपतिर्भवेत् २३६
तस्याप्यायुषमारोग्यम्मनस्संकल्पितञ्चयत्
सर्वन्तत्रभवेत्तस्य शिवे भक्तिः प्रजायते २३७
विपरीतक्रियान्दृष्ट्वाप्यौदासीनं करोति यः
स राजा क्षयमाप्नोति नात्रकार्या विचारणा २३८
तस्मादाचार्यवर्येण पञ्चगोचरवर्तिना
शैवागमपरिज्ञानपारगेण क्रियावता २३९
क्रियानिर्वर्तनीयास्यात् स्वस्यराष्ट्राभिवृद्धये
गुरो र्गुरूत्तमो ग्राह्यश्शिवशास्त्रविशारदः २४०
तेनैवस्नपनाद्यन्तु कारयेत् मुनिसत्तमाः
विशेषपूजातेनैव वर्तनीयेष्टसिद्धये २४१
पयोदधिघृतक्षौद्रप्रमुखैर्देवमीश्वरम्

संस्नाप्यामलपिष्टाद्यैर्विरूद्दयेशं संवेदिकम्  २४२
गन्धतोयेन संस्नाप्य वाससा परिमार्जयेत्
चन्दनाद्यैस्समालिप्य पट्टाद्यैर्भूषयेच्छिवम्  २४३
गन्धपुष्पसगाद्यैश्च धूपयेत्तदनन्तरम्
कर्पूरवर्तिसंयुक्तं दीपमारात्रिकन्नयेत्  २४४
पञ्चवर्णहविष्यं वा पायसं शुद्धमेव वा
नानोपदंशसंयुक्तं नानाफलसमन्वितम्  २४५
दत्वा तदन्ते ताम्बूलम्मुखवाससमन्वितम्
एलालवंकेकर्पूरजातीतक्कोलचूर्णयुक्  २४६
मञ्जिष्टाखराडसम्मिश्रं मुखवासमिदं भवेत्
प्रणम्याध्येष्यलब्धाज्ञो होमार्थं कुराडमाश्रयेत्  २४७
समिधाज्येन चरुणा तिलेनापि समन्वितम्
शतमष्टोत्तरं हुत्वा पूर्णामन्ते समाचरेत्  २४८
तस्मात् भस्मसमादाय यजमानाय दापयेत्
संप्रार्थ्य वाञ्छितं कर्म प्रणमेच्च पुनः पुनः  २४९
दिनमेकं समारभ्य सप्ताहान्तं समाचरेत्
द्विगुणं त्रिगुणं चतुष्पञ्चगुणान्तु वा  २५०
षट्सप्तगुणसंख्यातं कर्मसिद्ध्यर्थमेव वा
पूजावैशेषिकीख्याता पूर्वोक्तफलदायिनी  २५१
नैमित्तिकञ्च नित्यान्ते कर्तव्यमविरोधतः
नित्येप्रवर्तमाने तु यदा नैमित्तिकं भवेत्  २५२
समाप्याल्पेन कालेन नित्यनैमित्तिकञ्चरेत्
सन्ध्यापराद्धकालाचेत् पूर्वार्धे विद्यते यदि  २५३
नैमित्तिकं स्वकाले तु कर्तव्यमविचारतः
सन्ध्यामप्यल्पकालेन चापरार्धे समाचरेत्  २५४
तन्त्रैणैवाप्यनुष्ठानमुभयत्र समाचरेत्

धूपान्तं वाथ नैवेद्यपर्यन्तन्नित्यकर्म च २५५
विधाय प्राप्तकाले तु नैमित्तिकमथाचरेत्
नैमित्तिकं महच्चेद्धि समारभ्यस्वकालके २५६
एकाद्यावरणान्तं तु सन्ध्याशेषं समाप्य च
सन्ध्यान्ते सर्वकलशैः स्नापयेदुक्तवर्त्मना २५७
नैमित्तिकद्वयप्राप्तौ महदादौ समाचरेत्
लघ्वन्ते सदृशन्तश्चेत् कामचारो विधीयताम् २५८
नैमित्तिकस्यकालोपि द्विविधः परिकीर्तितः
अल्पानल्पविभागेन स्वल्पस्यादयनादिकः २५९
ग्रहणादिर्महाकालस्वल्पकालोऽग्रतो भवेत्
ग्रस्यमाने रवौकुर्यान्मुच्यमाने निशाकरे २६०
भविष्यत्ययने दक्षे त्वतीते चोत्तरायणे
विषुवे मध्यकाले च स्नपनाद्यं समाचरेत् २६१
कन्यायां मिधुने धनुष्यन्ते समाचरेत्
सिह्मे च वृश्चिके कुम्भे वृषेश्चादौ समाचरेत् २६२
अर्धमेकं द्वयं वापि यामं वा घटिकामपि
आदौ चान्ते च गृह्णीयात् स्नपनादिषु कर्मसु २६३
आचार्यं पूजयेत्पश्चाद्वस्त्रहेमांगुलीयकैः
उपयुक्तमिहद्रव्यं यागे स्वर्णाम्बरादिकम् २६४
आचार्याय प्रदेयं स्यात् नान्यभोगाय कल्पयेत्
यागावशिष्टं यत् द्रव्यं भूषणं मण्डपस्य तु २६५
स्थण्डिलञ्चाम्बरं स्वर्णं कुम्भं वा कलशादिकम्
तोरणं स्रुक्स्रुवावष्टमंगलन्नवरत्नकम् २६६
तद्धोमचरुनैवेद्यशेषंयन्मण्डपस्य च
वलयन्तत्प्रपादींश्च मदन्यदुपयुक्तकम् २६७
आचार्यायैव देयं स्यात् पञ्चगोचरवर्तिने

निष्कादिदशनिष्कान्ता देशिके दक्षिणे मता  २६८
निष्काष्टमांशं हीनस्यादधमांशन्तदर्धकम्
नवधा धक्षिणा क्षुद्रक्रमे स्याद्धीन वृत्तिके  २६९
नित्ये तु कल्पयेद्वृद्धिं मनस्सन्तोषणं तथा  २६९ १-२
इति उत्तरकामिकाख्ये महातन्त्रे स्पनविधिः चतुर्थः पटलः

स्नपनविधि पटलः

पञ्च हस्तादि षट् सप्त हस्तपर्यन्तकेऽपि वा
चतुर्गात्रादिकेऽष्टाष्ट गात्र पर्यन्तकेऽपि वा
सूत्रन्यास मधोरेण तालमात्रान्तरं यथा
कषायोदकं
चतुक्षीरकुजोद्भूत त्वक् सारस्यात् कषायकः
आम्रजम्बूतरूत्थत्वक् सारो वा परिकीर्तितः
मार्जनोदकं
दूर्वातील कुशाग्रैस्तु मार्जनं त्वभिधीयते
रत्नोदकम्
माणिक्कं चेन्द्रनीलस्य मुक्ता वैडूर्य रत्नकम्
पुष्परागं प्रवालं च वज्रं स्फटिक खण्डकम्
मरकतञ्च रत्नानि नवरत्नानि पञ्चकम्
पञ्चरत्नमिति ज्ञेयं आद्यभावे द्वितीयकम्
लोहोदकम्
सुवर्णं रजतं ताम्रं आयसं त्रपु सीसकम्
आरकूटं ततः कांस्य युक्तं लोहोदक मतः परम्
धातूदकम्
सौराष्ट्रं मञ्जनं श्यामा हरितालं मनश्शिला
गौरिकं रोचना चान्ते धातूदकमितं मतम्

बीजोदकम्
शालिकोद्रव नीवार प्रियंगुतिल सर्षपाः
श्यामाष्टकं यवो बीजो बीजोदक मिहोदितम् १०६
गन्धोदकम्
नवनीतं च कर्पूरं त्वगेलापत्रसंयुतम्
चन्दनं लघुकुष्टं च वरालो शीर मुस्तकाः १०७
कुंकुमं हरिबेरं च कच्चोलं जातिरेव च
एभिस्तु चूर्णितैर्युक्तं गन्धोदक मिति स्मृतम् १०८
मृदोदकम्
पर्वते च नदीतीरं वल्मीके कर्कटावटे
वृषशृंगे च सुक्षेत्रे समुद्रे गजदन्तके
अष्टभिश्च समायुक्तं मृदंभः परिकीर्तितम् १०९
मार्जनोदकम्
गोक्षुरा सहदेवी च विष्णु क्रान्ता कृताञ्जली
शिरीषेन्दीवरं रात्रिरेभि मार्जन मुच्यते ११०
परिमाणोदकम्
दूर्वांकुरञ्च पद्मं च कुशाग्रं गौर सर्षपम्
भद्रा कृताञ्जलीयुक्तं परिमाणं तदुच्यते
पत्रोदकम्
तुलसी बिल्वपत्रं तमालश्च तपस्विनी
अपामार्ग समायुक्तं पत्रतोय मिहेरितम्
पुष्पोदकम्
पद्मं रक्तोत्पलं पश्चात् पटली चम्पकाकृतः
पुन्नाग कुरव नारंग नद्यावर्तं च मल्लिका
श्वेतार्क वकुलैर्युक्तं पुष्पतोय मिहेरितम्
कुष्टं कुटन्नटं लोहञ्चन्दनं कुंकुमन्तथा

कर्पूरोशीर संयुक्त माडयोदक मिहेरितम्
अस्त्रोदकम्
शूलं कपाल हरिणी पिनाकः परशुस्तथा
पाशाक्षमाला हैमाश्च तैरस्त्रोदकं भवेत्
फलोदकम्
पनसो नालिकेरश्च मातुलुंग द्वयं ततः
नारङ्गद्वयरंभाद्यैः उक्तमस्मिन् फलोदकम्
कषायोदकम्
पलाशोदुम्बराश्वत्थ मायूरप्लक्ष पाटली
जम्बू त्वग्भिस्समायुक्तं कषायोदकमीरितम्
आड्योदकम्
अभ्रक त्रितयं पश्चात् आक्षिक त्रितयन्ततः
गन्धत्रय समायुक्तं आडयतोय मिति स्मृतम्
कान्तोदकम्
सूर्यकान्तस्त्वयस्कान्तो भ्रामरश्चन्द्रकान्तकम्
निकुन्दः पञ्चभिर्युक्त कान्तोदक मितिस्मृतम्
मूलोदकम्
उशीरो हरिबेरश्च पीवरिः पुष्करन्तथा
श्रीकराठश्चेति पञ्चभिर्युक्तम्मूलोदकं स्मृतम्
वल्कलोदकम्
मयूर शिखि भूर्जत्व ग्रोचना भ्रंगराजकम्
कृताञ्जलिश्च पञ्चैभिः युक्तं स्याद्वल्कलोदकम्
त्वगोदकम्
लक्ष्मी भद्रा कुशादान्तो नीवारं चम्पकं पुनः
विहिता गोक्षुराद्यष्टौ लोध्रत्वक्वारि निर्मितम्
चतुर्दलं यथा पञ्चकलश स्थापनं दिशि

विदिद्त्वपि नवाख्यं स्यात् समन्तात् एकमावृतम् १२
विधिद्त्वपि नवाख्यं स्यात्समन्तादेकमावृतम्
पञ्चविंशति संख्यान्तं तत्समन्तात्समावृतम् ४९ १०९
अष्टोत्तरशताख्ये तु मध्यमे पञ्चविंशतिः
मार्गबाह्ये तु कोणे स्यादेकविंशति संख्यकः
शेषैर्दिक्षु चतुर्द्वारं सहस्रे पुनरुच्यते १०८
द्वितालं शिवकुम्भस्य वर्द्धन्यास्तालमात्रकम्
त्रितालं कर्णिकामानं सर्वसामान्यमीरितम् १०
अथवोत्तरवीधिस्यात् करकस्य स्थितिर्यथा
तथा द्वितालमानेन कर्णिकामानमीरितम् ११
चतुर्दलं यथा पञ्चकलशस्थापनं दिशि ११ १-२
विधिद्त्वपि नवाख्यं स्यात्समन्तादेकमावृतम्
पञ्चविंशति संख्यान्तं तत्समन्तात्समावृतम्
एकोनपञ्चाशत्संख्यामष्टोत्तरशतं द्विजाः
चत्वारिंशच्च व्यूहं स्यात् पृथक् स्यात्पञ्चविंशतिः
एकद्वित्रिचतुर्भिस्तु पदैर्व्यूहान्तरं स्मृतम्
मध्य व्यूहस्य परितः चतुष्कुण्डन्तु वाष्टकम्
स्व स्व संख्या समव्यूहे होमार्थं परिकल्पयेत्
अन्तर्मार्गं समावाह्य वीथिश्शास्त्रे समीरितम्
शिवव्यूहस्य परितः षोडशैव परित्यजेत्
सूत्रन्यासस्समाख्यातः अन्यथापि निगद्यते
१३ एकोनपञ्चाशत्संख्यामष्टोत्तरशतं द्विजाः
१४ आवृतिद्वयसंयुक्तं तद्बाह्ये परिकल्पयेत्
पञ्चविंशति संख्यातान् कलशान् मध्यमस्थितान्
१५ परिहृत्यसमन्तात्तु द्वाभ्यां वैकेन मार्गिकम्
अष्टद्वारसमायुक्तं बहिष्ठादावृतित्रयम्

१६ मध्यमे तिथिसंख्यास्स्युः नवकोणे व्यवस्थिताः
मध्यमे तिथिसंख्ये तु मध्यमं तत्रयं त्यजेत्
१७ अष्टोत्तरशतं ह्येतत् सहस्रं चेन्नवाधिकम्

सूत्रद्वयं न्यासेत्पूर्वापरगं याम्यसौम्यगम्
सार्धहस्तान्तरं हस्तमानान्तरमथापिवा
स्याच्चतुर्दशसंख्याता वीथिबाह्ये क्रमेण च
तद्बहिर्होममिष्टं स्यात् चतुर्दिक्षु अष्टदिक्षु वा

१० द्वितालं शिवकुम्भस्य वर्द्धन्यास्तालमात्रकम्य
त्रितालं कर्णिकामानं सर्वसामान्यमीरितम्
११ अथवोत्तर वीधिस्यात् करकस्यस्थितिर्यथा
तथा द्वितालमानेन कर्णिकामानमीरितम्
१११-२चतुर्दलं यथा पञ्चकलशस्थापनं दिशि
१२ चतुर्दलं यथा पञ्चकलश स्थापनं दिशि
विदिक्ष्वपि नवाख्यं स्यात् समन्तात् एकमावृतम्
विदिक्ष्वपि नवाख्यं स्यात्समन्तादेकमावृतम्
पञ्चविंशति संख्यान्तं तत्समन्तात्समावृतम्
विदिक्ष्वपि नवाख्यं स्यात्समन्तादेकमावृतम्
पञ्चविंशति संख्यान्तं तत्समन्तात्समावृतम्
एकोनपञ्चाशत्संख्यामष्टोत्तरशतं द्विजाः
१३ एकोनपञ्चाशत्संख्यामष्टोत्तरशतं द्विजाः
१४ आवृतिद्वयसंयुक्तं तद्बाह्ये परिकल्पयेत्
पञ्चविंशति संख्यातान् कलशान् मध्यमस्थितान्
१५ परिहृत्य समन्तात्तु द्वाभ्यां वैकेन मार्गिकम्
अष्टद्वारसमायुक्तं बहिष्ठादाष्टतित्रयम्

१६ मध्यमे तिथि संख्यास्स्युः नवकोणे व्यवस्थिताः
मध्यमे तिथिसंख्ये तु मध्यमं तत्रयं त्यजेत्
१७ अष्टोत्तरंशतं ह्येतत् सहस्रं चेन्नवाधिकम्

अष्टोत्तरशताख्ये तु मध्यमे पञ्चविंशतिः
मार्गबाह्ये तु कोणे स्यादेकविंशति संख्यकः
शेषैर्दिक्षु चतुर्द्वारं सहस्रे पुनरुच्यते

१००८ चत्वारिंशच्च व्यूहं स्यात् पृथक् स्यात्पञ्चविंशतिः
एकद्वित्रिचतुर्भिस्तु पदैर्व्यूहान्तरं स्मृतम्
मध्य व्यूहस्य परितः चतुष्कुण्डन्तु वाष्टकम्
स्व स्व संख्या समव्यूहे होमार्थं परिकल्पयेत्
अन्तर्मार्गं समावाह्य वीथिश्शास्त्रे समीरितम्
शिवव्यूहस्य परितः षोडशैव परित्यजेत्
सूत्रन्याससमाख्यातः अन्यथापि निगद्यते
सूत्रद्वयं न्यसेत्पूर्वापरगं याम्य सौम्य सौम्यगम्
सार्धहस्तान्तरं हस्तमानान्तरमथापिवा
स्याच्चतुर्दश संख्याता वीथि बाह्ये क्रमेण च
तद्बहिर्होममिष्टं स्यात् चतुर्दिक्षु अष्टदिक्षु वा

पञ्चमे पटले नित्योत्सवविधिः

नित्योत्सवविधिं वक्ष्ये नित्यपूजांगमुत्तमम्
शिवाग्रे वाथ तद्वामे वामे शुद्धमहीतले १
प्रासादमण्टपादौ वा गोमयेनोपलेपिते
प्रोक्षितेऽस्त्रेण संस्थाप्य पात्रं लक्षणसंयुतम् २
सौवर्णं राजतन्ताम्रं कांस्यनिर्मितमेव वा

तिथ्यंगुलं समारभ्य व्योमांगुलविवृद्धितः ३
द्वात्रिंशदंगुलान्तं तु पात्रमानमुदीरितम्
वृत्तमिष्टघनोपेतं कर्णिकादलशोभितम् ४
तत्पात्रे रससप्ताष्टनवदिग्रुद्रभाजिते
एकद्वित्रिचतुःपञ्चषट्भागैः कर्णिका भवेत् ५
शेषेण दलमाख्यातं विकाराष्टदलम्मतम्
अर्धत्रिपादमात्रंवा द्विमात्रं कर्णिकोच्छ्रयम् ६
तद्वदोष्टसमोपेतं केवलं पात्रमेव वा
कुडुपद्वयमारभ्य कुडुपादाढकावधि ७
तण्डुलं कल्पयेदन्नलिंगार्थं वाऽक्षतार्थकम्
मध्वाज्य मिश्रितं वान्नं प्रक्षिपेत्पात्रमध्यमे ८
तेनान्नलिंगं कर्तव्यं भूतमात्रप्रमाणतः
एकांगुलं तु दैर्घ्यंस्याद्यावदष्टादशांगुलम् ९
अंगुलत्रयमारभ्य तिथिमात्रं तु विस्तरम्
अग्रद्वित्रिचतुःपञ्चमात्रं षण्मात्रमेव वा १०
नैमित्तिकार्थन्नित्यार्थमन्नलिंगमुदाहृतम्
त्रिकालमन्नलिंगं वा प्रातर्मध्याह्नयोस्तु वा ११
मध्याह्ने वाथ पूर्वाह्ने पुष्पलिंगमुदाहृतम्
प्रदोषेऽक्षतलिंगंस्यात्तत्रपाशुपतं यजेत् १२
चन्द्रशेखरसंयुक्तन्तद्विहीनकमेव हि
त्रिधा पाशुपतो ज्ञेयो मिश्रश्शान्तोऽग्रहेतुकः १३
सौम्यस्सौम्येक्षणापेतः द्विचतुर्हस्त संयुतः १३ १-२
विद्युन्मालानिभश्वेतः जटामकुटमण्डितः
दक्षेऽभयाक्षमालायुगितरे वरपाशयुक् १४ १-२
वरदाभयपाणिर्वा सर्वलक्षणसंयुतः
हित्वाऽक्षमालां पाशञ्च पद्मं घण्टां क्रमेण वा १५ १-२

योजयेत्सौम्यमूर्तिस्यादुग्रमूर्तिरथोच्यते
शूलमूलाभये दक्षे शूलाग्रवरदेऽन्यतः १६ १-२
रौद्रदृष्टिं ज्वलत्केशं व्यत्यासकरशूलकम्
त्रिशूलाक्षकरं वापि त्रिधा रौद्रं स्मरन्यजेत् १७ १-२
एवं रौद्रन्तु मिश्रं स्यात् परशुं शूलमावहम्
दक्षे पाशं मृगं वामे त्वन्यथा वा निगद्यते १८ १-२
त्रिशूलमभयं सव्ये पाशञ्चवरदप्रदम्
दक्ष द्विधा समाख्यातं मिश्रं पाशुपतं त्रिधा १९ १-२
पुष्पाक्षतान्नलिंगेषु पूजनीयस्स्वमन्त्रतः
अथवा प्रतिमाकारो विधेयस्तत्प्रमाणतः २० १-२
सपीठे गोलकाकारे विपीठे वा तमर्चयेत्
अन्नलिंग प्रमाणे तु मूलाग्रसमविस्तरे २१ १-२
हस्तावधिप्रमाणान्ते सर्वलक्षणलक्षिते
स्थलिकामानदण्डेन सहितं वा समर्चयेत् २२ १-२
इन्दु शेखरमूर्तिस्यात् प्रतिमालक्षणेन तु
पादुके त्र्यंगुले तस्मादंगुलांगुलवर्धनात् २३ १-२
तिथिमात्रावसानन्तु तयोर्दैर्घ्यं प्रकीर्तितम्
दैर्घ्यानुसारतः कार्यो विस्तारस्यार्ध उच्छ्रयः २४ १-२
अष्टांशावधिको मध्यमानेन नवमानकः
तयोस्तु वृषभः पूज्यस्त्वनन्तो वा प्रकीर्तितः २५ १-२
समन्ताल्लोकपाः पूज्याः पूजादाववसानके
नवान्नलिंगसंयुक्तमथ नित्योत्सवं नयेत् २६ १-२
सर्वैरेतैस्समायुक्तन्नित्योत्सवमथाचरेत्
द्वाभ्यां त्रिभिश्चतुर्भिः वा पूर्वाह्णे च प्रदोषके २७ १-२
मध्याह्ने केवलः पूज्यो देवः पाशुपताह्वयः
रंगे वा शिबिकायां वा परिचारकमूर्धसु २८ १-२

आरोप्यलंकृतान्देवान्वितानेन समन्वितम्
छत्रचामरसंयुक्तं नानाध्वजसमन्वितम्  २९ १-२
गीतनृत्तसमायुक्तं वाद्यध्वनिसमन्वितम्
धूपदीपसमायुक्तं प्रदक्षिणं समाचरेत्  ३० १-२
आद्यं प्रदक्षिणं कुर्यात् मंगिणी तालसंयुतम्
वृषस्य ब्रह्मतालं स्यादग्नेस्तालन्तु भृंगिणी  ३१ १-२
मातृणां चण्डवाद्यं स्यात् विघ्नराजस्य ढक्करी
षण्मुखस्योद्धटञ्चैव ज्येष्ठायाः कुञ्चिततालकम्  ३२ १-२
तटप्रहारं दुर्गायाः चण्डके विषमचिह्नकम्
ग्रामे वा नगरे वापि तथा प्राकार एव वा  ३३ १-२
द्वितीयभ्रमणं ह्येतन्महापीठप्रदक्षिणम्
एकं वापि द्वयं वापि त्रयं स्याच्छबरीयुतम्  ३४ १-२
अथवा बलिपीठन्तु ब्रह्मतालसमन्वितम्
गणतालेन संयुक्तं द्वयं कुर्यात् प्रदक्षिणम्  ३५ १-२
पैशाचेत्वेकमेवं स्याच्चबरीतालसंयुतम्
गोपुरे वाद्यहीनं वा शंखध्वनिसमन्वितम्  ३६ १-२
इन्द्रस्य समतालंस्यात् गान्धारस्वरसंयुतम्
बद्धावणं भवेदग्नेः कोल्लिगानसमन्वितम्  ३७ १-२
दक्षिणे भृंगिणी तालं कौशिकेन समन्वितम्
मल्लतालं समाख्यातं नैरृत्यां नट्टभाषया  ३८ १-२
पश्चिमे नवतालन्तु कामरध्वनिसंयुतम्
वायव्यां बलितालन्तु तक्केशीस्वरसंयुतम्  ३९ १-२
सौम्यायां कोटिकः प्रोक्तस्तर्करागः समन्वितः
शाला पाणिसमायुक्तं शांकरे ढक्करी मता  ४० १-२
एवं प्रदक्षिणं कृत्वा तृतीयं धामसंविशेत्
पक्षालितांघ्रयस्सर्वे प्रविशेयुश्शिवालयम्  ४१ १-२

ग्रथवा मराटपादौ तु पीठसंस्थान मूर्तिषु
पाद्याद्यैरुपचारैस्तु पूजयित्वा प्रवेशयेत् ४२ १-२
लिंगाद्देवं समाहृत्य लिंगे दत्ते निवेशयेत्
शिवस्य पादौ पूज्यौ पादुके वामदत्तिणौ ४३ १-२
ग्रन्येषामपि देवानां देवीनां मूलबिम्बवत्
रूपान्तरं वा स्वाध्याय सिद्धन्नित्योत्सवार्थकम् ४४ १-२
संपाद्य तेन नित्यन्तु नित्योत्सवमथाचरेत्
तदस्त्रमन्नलिंगादौ पूजनीयं स्ववाहनम् ४५ १-२
पादुका द्वितये पूज्यमन्यत्सर्वं समानकम् ४६
इति उत्तरकामिकाख्ये महातन्त्रे नित्योत्सवविधिः पञ्चमः पटलः

षष्ठे पटले महोत्सवविधिः

उत्सवं संप्रवद्त्यामि यथावदनुपूर्वकम्
ध्वजारोहावरोहान्ता क्रिया उत्सव उच्यते १
ध्वजांकुरो ध्वजंगस्यात् ध्वजात् पूर्वन्तु तन्नयेत्
तीर्थर्त्तमादौ निश्चि त्य तत्पूर्वे त्रिगुणेपि वा २
द्विगेणे तद्दिने वापि ध्वजारोहणमारभेत्
मासभं तीर्थनत्तत्रमार्द्रत्तं सर्वमासके ३
राज्ञां जन्मावसानर्त्तमाभिषेकर्त्तमेव वा
माघमासे तु षष्ठ्यन्तं पर्वान्तं सर्वमासके ४
विषुवायनपर्यन्तं ग्रहणान्तन्तु तीर्थभम्
भूताष्टम्यन्तमन्येषां स्वस्वतीर्थावसानकम् ५
त्रिगुणे द्विगुणे वापि तद्दिने वाह्नि रात्रिके
ग्रधिवासनपूर्वन्तु ध्वजमारोपयेत् गुरुः ६
पञ्चहस्तादि विस्वान्तं ध्वजदैर्घ्यं प्रकल्पयेत्
मानमेतत् समाख्यातं शिरः पुच्छान्तरे द्विजाः ७

तत्संयुक्तञ्च वा ग्राह्यं चतुस्सप्तसमावधि
भागं कृत्वैकभागेन पटविस्तार उच्यते ८
विस्तारेण समः पुच्छस्त्रिपादंवार्धमुच्यते
विस्तारार्धं शिरो ज्ञेयं पुच्छद्वयसमन्वितम् ९
वेत्रद्वयसमायुक्तं तन्मध्ये वृषभं लिखेत्
आयादि शुभसंयुक्तं स्थितं वा शयनान्वितम् १०
श्वेतं वा रक्तवर्णं वा पीतं वालसमन्वितम्
रक्तशृंगसमायुक्तं तद्वत् खुरसमन्वितम् ११
ग्रामाभिमुखसंस्थानं ग्रामादिभ्रमणे वृषम्
विश्वामित्रादि षट्त्रिंशन्मात्रोत्सधसमन्वितम् १२
जात्यायांशसमायुक्तं त्रिवर्णनयनान्वितम्
सर्वलक्षणसंयुक्तं स्वर्णमालासमन्वितम् १३
मानं मात्रांगुलाभ्यां स्यात् ध्वजदण्ड पटोवृषः
पद्मासनसमायुक्तं पार्श्वे दीपद्वयान्वितम् १४
चामरद्वयसंयुक्तं छत्रसंवृतमस्तकम्
पूर्णकुम्भयुतं वापि त्रिशूलेन युतन्नवा १५
एवं वृषं समापाद्य कृत्वा वा नेत्रमोक्षणम्
अस्त्र तोयेन संप्रोक्ष्य शिवाग्रे मण्टपेपि वा १६
मनोरम्येऽन्यदेशे वा स्थण्डिलद्वयसंयुते
स्थालिकोर्ध्वे न्यसेत्पात्रं त्रिपाद्युपरिसंस्थितम् १७
ध्वजन्नवघटं वस्त्रहेमरत्नं सकूर्चकम्
सापिधानं ससूत्रञ्च मध्यमे वृषभाधिपम् १८
कलशैरष्टसंख्यातैस्सापिधानैस्सवस्त्रकैः
सलोकपैस्सकूर्चैस्तु वृतं वृषभपूर्वकम् १९
आधाराख्यमनन्तञ्च धर्माद्यञ्च चतुष्टयम्
वृषासनपदञ्चोक्त्वा चतुर्थ्यन्तं हृदान्वितम् २०

प्रणवादि नमोन्तञ्च कृत्वोच्चासनमत्रहि
वृकारं हृत्पुटं कृत्वा वृषमूर्तिं प्रकल्पयेत् २१
ऊर्ध्वे ब्रह्माणि विन्यस्य मूलन्तत्कल्पितन्यसेत्
संकल्पितहृदादींश्च क्रमेण विनिवेशयेत् २२
तत्वतत्वेश्वरोपेतं मूर्तिमूर्तिश्वरान्यसेत्
आवाहनादिकं पूर्वं प्रमुखं वृषमूलतः २३
कृत्वा वृषभगायत्र्या गन्धाद्यैः क्रमशोर्चयेत्
मध्यकुम्भेऽपि संपूज्य लोकपान् परितो यजेत् २४
वृषभ गायत्री-
तीक्ष्णशृङ्गाय विग्रहे वेदपादाय धीमहि
तन्नो वृषभः प्रचोदयात्

कुण्डे वा स्थण्डिले वापि पूर्ववत्परिकल्पिते
निरीक्षणादि संस्कारैश्शिवाग्निं संप्रकल्पयेत् २५
तन्मध्ये वृषमावाह्य सांगं सन्तर्पयेत्तदा
सामिदाज्येन चरुणा शतेनाष्टोत्तरेण च २६
तत्वतत्वेश्वरादींश्च होमयेत्तदनन्तरम्
पूर्णान्दत्वा समूलेन सर्वकामप्रपूरणीम् २७
संपूज्य गन्धपुष्पाद्यैः मुद्गान्नन्तु निवेदयेत्
पटस्थाय घटस्थाय वृषायासन रूपिणे २८
प्रातस्संपूज्य गन्धाद्यैः पटं कुम्भं यथाक्रमम्
मुखवासनताम्बूलं वृषभाय निवेदयेत् २९
पुनः पूर्णाहुतिन्दत्वा सर्वमंगलसंयुतम्
सर्वातोद्य समायुक्तन्नृत्तवाद्यसमन्वितम् ३०
रंगे वा शिबिकायां वा समारोप्य वृषध्वजम्
त्रिशूलेन समायुक्तन्देवेशेन युतन्नवा ३१

ग्रामदक्षिणन्नीत्वा प्रविशेदालयं प्रति
दण्डं संस्थापयेत्पश्चात् सर्वलक्षणसंयुतम्  ३२
ध्वजारोहणदिने वापि अधिवासदिनेपि वा
धामोच्चस्तारसदृशः द्विगुणस्त्रिगुणोपि वा  ३३
षट्सप्तवसुहस्तेन दण्डस्यादधमत्रये  ३३ १-२
एकादितलपर्यन्तं गोपुरान्तमथापि वा  ३४
रुद्रद्विगुणमध्यस्थकरसंख्यामितन्तु वा
मध्येकनीयसे चेत्तु खातं चेत्तद्बहिष्कृतम्  ३५
सर्वश्शूलोक्तवृक्षो वा त्वक्सारक्रमुकादिकः  ३५ १-२
पलाशखदिराश्वत्थवटचन्दन दारवः  ३६
सालम्माधूकतालं वा साराम्रकमथापि वा
वैणवं जाति वृक्षै वा शमीबिल्वमथापि वा  ३७
चम्पको वा द्विरष्टादि त्रिगुणावधिनाहयुक्
स्वभावनाहसंयुक्तस्त्वक्सारद्रुमनिर्मितः  ३८
ध्वजदण्डस्समाख्यातो ध्वजयष्टिश्च कथ्यते
द्विभागादि नवांशान्तन्दण्ड दैर्घ्यं विधाय च  ३९
एकांशेन विधातव्या ध्वजयष्टिर्गुरूत्तमाः
पञ्चांगुलं समारभ्य चांगुलात्षोडशांगुलम्  ४०
यावत्तावत्परीणाहमुपदण्डस्य कल्पयेत्
पञ्चांशात् द्वादशांशान्तं मूलनाहं विधाय च  ४१
एकांशेनोनमग्रंस्यात्तथा दण्डाग्रमिष्यते
दण्डोक्तो वेणुवृक्षो वा ध्वजयष्टिमहीरुहः  ४२
उभयोर्योगासिद्ध्यर्थं स्कन्धत्रयमथाहरेत्
स्कन्धं द्वयं तन्मानद्वादशांगुलमानतः  ४३
षट्त्रिंशम्मात्रपर्यन्तं स्कन्धदैर्घ्यं प्रकल्पयेत्
सप्तांगुलं समारभ्य गायत्र्यर्णांगुलावधि  ४४

स्कन्धविस्तार उद्दिष्टो मूलांग्रे तु त्रिभागतः
अर्धेन वा त्रिपादेन दर्व्याकारो यथा तथा ४५
चतुस्त्रिद्वयंगुलं वापि मानमेषां प्रकीर्तितम् ४५ १-२
अर्धछिद्रमधस्कन्ध प्रान्ते यष्ट्यग्रदेशके ४६
मूलाग्रसुषिरोपेत दण्डयष्ट्यनुरूपतः ४६ १-२
अर्धछिद्रमधस्कन्ध प्रान्ते यष्ट्यग्रदेशके ४७
दण्डप्रान्ते विधेयं स्याद्वलयं स्कन्ध एव वा
बृहत्स्कन्ध त्रिभागार्थं त्रिपादगुणमानतः ४८
षडंगुलं समारभ्य षडंगुल विवृद्धितः
दण्डखातप्रमाणान्तन्दण्दाग्रा द्वलय स्थितः ४९
तदर्धं वलयादूर्ध्वं यष्ट्यग्रं परिकीर्तितम्
भू प्रविष्ट प्रमाणं यद्दण्डाग्रे यष्टिदैर्घ्यकम् ५०
कल्पयेन्महदल्पं वा खातञ्चेत्तत्बहिष्कृतम्
दण्डाग्रावधि संस्थाप्यो वलयस्कन्ध एव च ५१
पञ्चविंशतिमात्रादि त्रित्र्यंगुलविवर्धनात्
द्विगुणान्तं विधेयं वा भूमानं भूगतद्विजाः ५२
एकांगुलं समारभ्य पादमात्रविवृद्धितः
त्रिमात्रान्तो विधेयं स्याद्वलयः कीलसंयुतः ५३
वलयाकाश एषो वा वलयस्याद्यथा बलम्
रज्जुर्वलयमध्येस्याज्ज्येष्ठाद्यंगुलनाहयुक् ५४
ध्वजारोहक्रियायोग्यदैर्घ्येण च समन्वितम्
तन्तु जस्त्रिप्रदिष्टं स्यादशक्तौ बन्धनाहकम् ५५
एवं रज्जुं समापाद्य शुद्धिर्दण्डे विधाय च
संवेष्ट्य दर्भमालाभिरूर्ध्वात्सर्वं क्रमेण तु ५६
शतदर्भकृतं कूर्चं यष्ट्यग्रे विनिवेशयेत्
अस्त्रमन्त्रेण संप्रोद्त्य शिवतत्वादिकन्यसेत् ५७

साधिपञ्च त्रिधादराडं विभज्याग्रात् क्रमेण तु
स्कन्धत्रये च तान्येव वलये रविमर्चयेत्  ५८
रज्जु शक्तिस्समाख्याता शिवस्स्याद्दराडनायकः
गन्धाद्यैरर्चयेद्देवन्ततस्स्थापनमारभेत्  ५९
रत्नन्यासन्ततः कुर्याद्दराडमूले निवेशयेत्
कूर्मं वा वृषभं वाऽपि दराडमूले निवेशयेत्  ६०
हैमगुञ्जादि निष्कान्तं मानन्देवालयाननम्  ६० १-२
अधोमुखञ्च दष्डाधस्स्वस्वमन्त्रार्चितं द्विजाः
तदूर्ध्वे स्थापयेद्दराडं यष्टिरग्रे यथा भवेत्  ६१ १-२
देवालयाननो दराडो वृषाग्रे पृष्टतोपि वा
तथैव गोपुरस्यापि महापीठान्तिकेपि वा  ६२ १-२
अन्तर्मराडलसालादि मध्यगोपुरमध्यतः
नवपञ्चैकदराडो वा वसुदिन्तु चतसृषु  ६३ १-२
प्रधानस्त्वग्रेदेशस्थो ध्वजास्तत्संख्ययामताः
अष्टदिन्तु च विद्येशाश्चतुर्दिन्तु नरादिकाः  ६४ १-२
दराडाधिपास्समाख्याता पटेषु वृष एव हि
दराडमूले तु कर्तव्या वेदिका सा त्वनेकधा  ६५ १-२
हस्तमात्रं समारभ्य त्र्यंगुलादि विवृद्धितः
द्विहस्तमानपर्यन्तं वेदिका विस्तरो मतः  ६६ १-२
समोत्तुंगा त्रिपादा वा अष्टांशात् सप्तपञ्च वा
चतुस्त्र्यंशार्धतुंगं वा वेदिका परिकीर्तिता  ६७ १-२
त्रिमेखला युता वापि प्रत्येकं वसुमात्रतः
द्वित्र्यंगुलन्नयाद्वापि मेखला मानमीरितम्  ६८ १-२
मेखला रहिते पीठे मूलेस्यादुपवेदिका
द्व्यंगुलात् पादवृद्ध्या तु षडंगुलसमाविधि  ६९ १-२
पादार्धार्धत्र्यंघ्रिसमा उत्सेधाः परिकीर्तिताः

वेद्युर्ध्वेब्जं प्रकर्तव्यं चतुरंगुलमानतः ७० १-२
व्योमांगुलविवृद्ध्याष्टादशांगुल समावधि
पद्मोत्सेधस्समाख्यातो विस्तारो वेदिका समः ७१ १-२
एकैकांगुल वेशात्तु रुद्रमात्रसमाविधि
पद्मवेशस्समाख्यातः पद्मं स्यात् कर्णिकायुतम् ७२ १-२
कर्णिका निर्गमो दण्डात् पादावृद्ध्यैकमार्गतः
गुणांगुलावधिः कार्यः तदुत्सेधनमुच्यते ७३ १-२
चतुरष्टदलं पद्मं विकारदलमेव वा
वृत्तं वा चतुरश्रं वा विधेयन्दलवेष्टनम् ७४ १-२
तथोपदलसंयुक्तं तद्वियुक्तन्तु वा भवेत्
एवं संपाद्य पीठन्तु कारयेछशिल्पितोषणम् ७५ १-२
पुण्याहं वाचयित्वा तु अस्त्रेणाभ्युन्दय वेदिकम्
दर्भैः दण्डं समावेष्ट्य वृषकुम्भञ्च तत्पटम् ७६ १-२
त्रिशूलेन समायुक्तं मंगलांकुरशोभितम्
धाम्नः प्रदक्षिणवशान्नीत्वा दण्डस्य सन्निधिम् ७७ १-२
आधाराख्यमनन्तञ्च कूर्मे तु विनिवेशयेत्
कोणमध्ये च धर्मादीन् अधर्मादीन् प्रकल्पयेत् ७८ १-२
दलेष्वष्टसु वामाद्या कर्णिकायाम्मनोन्मनीम्
दण्डे सदाशिवञ्चेष्ट्वा गन्धपुष्पादिभिः क्रमात् ७९ १-२
त्रिवर्गसहिता सा च स्नपनोक्तविधानतः ८०
बद्ध्वा वृषपटं रज्वा वृषगायत्रिमन्त्रतः
क्षुद्र घण्टां समायोज्य शस्त्रमन्त्रमनुस्मरन् ८१
कुम्बात्बीजं समादाय वृषरूपं स्मरन् गुरुः
वृषेन्द्रहृदये न्यस्त्वा गन्धपुष्पादिभिर्यजेत् ८२
आरोपयेद्वृषं शीघ्रं वृषमूलेन देशिकः
आदौ स्पृष्ट्वा स्वयञ्चान्यंप्रेरयेद्रोहणायवा ८३

अधोमुखे वृषेराज्ञश्शान्तिर्भूम्यां विशेषतः
पटोर्ध्वगे वृषेराज्ञो जयो देवादितृप्तये ८४
आप्येन्दु शर्वपूर्वासुध्वजस्य गमनं शुभम्
क्षेमारोग्यजयाः पुष्टिः क्रमेण फलमीरितम् ८५
तपोमृत्युर्महारोगो वह्निकोणात्फलं भवेत्
वायौ भयं विजानीयात् पुच्छेप्येवं फलं भवेत् ८६
आरोहणे निरुद्धश्चेत् पटे देशिकदोषतः
दोषशान्तिं तदा कुर्यात् बहुरूपमनुस्मरन् ८७
शतमष्टोत्तरं ब्रह्म समिदाज्यान्नसंयुतम्
वृषकुम्भस्थतोयेन प्रोक्षयेद्दण्डमूलकम् ८८
वृषविद्येश्वरानष्टौ पूर्वादिषु दलेषु च
तत्तोयैर्दलानष्टौ क्रमेण प्रोक्षयेत् गुरुः ८९
गन्धपुष्पादिनाभ्यर्च्य मुद्नान्न विनिवेदयेत्
पुण्याहन्तत्समारभ्य यावन्नैवेद्यदानकम् ९०
सर्वातोद्यसमायुक्तं गानध्वनिसमन्वितम्
चतुर्दिङ्नर्तनं कुर्याद्विशेषाच्छुद्धनर्तनम् ९१
अतः प्रभृतितीर्थान्तमवरोहावसानकम्
एककालंद्विकालं वा त्रिकालं पूजयेद्वृषम् ९२
यत्रैतत् क्रियते राष्ट्रे ध्वजयष्टिनिवेशनम्
नाकालमृत्युस्तत्रास्ति नालक्ष्मीः पापकृत्स्वपि ९३
नोपसर्गभयन्तत्र न परागमविभ्रमः
विपरीता न मतयो रोगिणामपिभूयसा ९४
स्वकालवर्षी पर्जन्यस्सुभिक्षं विजयी नृपः
शान्तानि सर्वपापानि पयस्विन्यः पयोभृतः ९५
कृतघ्नो ब्रह्महागोघ्नो दृष्ट्वा ध्वजनिवेशनम्
प्राप्नोति पापनिर्मोक्षं मखकर्तुः कुलद्वयम् ९६

भेरीसन्ताडनं रात्रौ कर्तव्यन्तु यथाविधि
स्थण्डिलद्वितयं कुर्याद्देवदेवस्य सन्निधौ ९७
षडुत्थमासनं कुर्माच्छूलभेर्यां गुरूत्तमाः
एकत्र विन्यसेच्छूलं भेरीं तत्सन्निधौ न्यसेत् ९८
पूर्वापरायतं पूर्वस्थितन्दक्षाननान्वितम्
पुण्याहं वाचयित्वादौ त्रिशूले देवतां न्यसेत् ९९
मध्यपत्रे भवेद्रुद्रो ब्रह्मादक्षिणपत्रके
वामे विष्णुं समावाह्य पालिकायां तु पार्वती १००
सेनानीः कुम्भदेशे तु तदास्ये विघ्नराजकः
दण्डाग्रे मदने ज्ञेयो भास्करो दण्डमध्यमे १०१
दण्डमूले तु चण्डेशो लक्ष्मीः पूर्वदलाग्रके
मातरस्सप्तदक्षे तु ज्येष्ठापश्चिमदिक्दले १०२
कात्यायनी तु कौबेर्यां शूलमूले मता इमे
रुद्रार्कवसवोश्विन्यावष्टादशगणाश्चये १०३
तानाहूयाशिषश्चोक्त्वा भेर्यां तद्देवतान्यसेत्
भेरीं वस्त्रेण संवेष्टय मध्ये रुद्रं समर्चयेत् १०४
ब्रह्माणन्दक्षिणे वक्त्रे विष्णुं वाममुखे यजेत्
वलये दक्षिणे सूर्यमितरे चन्द्रमर्चयेत् १०५
सप्तकीलेषु मातृश्च नवकीले नवग्रहान्
रुद्रांस्तत्संख्यके न्यस्त्वा चर्मसूत्रेषु वासुकीम् १०६
प्रहरे षण्मुखं पूर्वं मस्तकेभ्यर्चयेत् गुरुः
गन्धपुष्पादिभिर्द्रव्यैः नैवेद्यान्तैः पृथक् हृदा १०७
भेर्यास्सन्ताडनं कुर्यादस्त्रमन्त्रमनुस्मरन्
एकप्रहारतः पूर्वं द्वितीयं द्विप्रहारतः १०८
तृतीयं त्रिःप्रहारेण त्रयंवैकप्रहारतः
सन्ताडय वादकं प्रोक्ष्य मन्त्रं पञ्चाक्षरं स्मरन् १०९

वस्त्रं गन्धं च माल्यञ्च सोत्तरीयं ससूत्रकम्
तद्धस्ते कुसुमं दद्यात्तन्मन्त्रं समनुस्मरन्  ११०
भेर्यां पुष्पं विनिक्षिप्य देशिकानुज्ञया तदा
भेरीं स्कन्दे समारोप्य वादयेत् सर्वतालवित्  १११
गन्धारादि स्वरोपेतं समतालादि तालकम्
गीतनृत्तसमायुक्तमन्नलिंगसमायुतम्  ११२
प्रतिमा सहितं वापि चराडेश्वरयुतन्तु वा
संग्रहीत्वास्त्रराजानं वितानच्छत्रसंयुतम्  ११३
धूपदीपसमायुक्तं घराटारवसमन्वितम्
प्रविश्य नगराद्यन्तु ब्रह्मास्थानादितः क्रमात्  ११४
इद्रस्थानादितो वापि बलिन्दद्यात् स्वनामतः
बलिदानावसाने तु तालस्वरसमायुतम्  ११५
समायुक्तं कारयेत् स्वस्वदिक्षु च
ब्रह्माणि ब्रह्मतालं स्यात् मेघरागस्वरान्वितम्  ११६
समतालञ्च गान्धारं कोल्ली बद्धावणन्ततः
भृंगिणी कौशिकन्नट्ट भाषया मल्लतालकम्  ११७
श्रीकामरन्नवाख्येन तत्केश्या बलिदानकम्
कोटिकन्तर्करागेण शालापाणयातु डक्करी  ११८
पूर्वादि दिक्षुसंयुक्तं पूर्वतालं यथा तथा
ध्वजारोहण पूर्वं स्यादुत्सवे त्रिगुणे दिने  ११९
भेरीताडन पूर्वं चेत् तद्दिने द्विगुणे मतम्
देवस्य सन्निधौ कृत्वा स्थरिडलानाञ्चतुष्टयम्  १२०
न्यस्त्वास्त्रमूर्तिमादौ तु तदग्रे विन्यसेत्पटम्
तदग्रे वृषकुंभंस्यात् वृषविद्येश्वरान्वितम्  १२१
तदग्रे विन्यसेत् भेरीं सर्वलक्षणसंयुतम्
क्रमेणैतान् समभ्यर्च्य गन्धपुष्पादिभिः क्रमात्  १२२

भेरी कुम्भान्तरे होमं स्थण्डिले कल्पयेत्तु वा
प्रागुक्त विधिना चेष्ट्वा तत्वादीन् विनिवेशयेत्  १२३
त्रिशूले देवताह्वानं कृत्वा प्रागुक्तवर्त्मना
भेरीं सन्ताड्य संग्राह्य त्रिशूलं वृषभान्वितम्  १२४
अन्नलिंगसमायुक्तं सर्वातोद्यसमन्वितम्
ग्रामप्रदक्षिण कृत्वा देवतावाहनान्वितम्  १२५
बलिप्रदानकालान्ते ध्वजस्थानं प्रविश्य च
ध्वजस्यारोहणं कुर्यात् प्रागुक्तविधिना गुरुः  १२६
रात्रावेतत् समुद्दिष्टिं भेरीताडनपूर्वकम्
ध्वजस्य भ्रमणञ्चाह्निं कुर्याद्वा संस्कृतस्य च  १२७
देवताह्वानकाले तु वर्जयेत् वृषभभ्रमम्
ततोंकुरार्पणं रात्रौ यागारम्भदिने मतम्  १२८
तदर्थमंकुरं कुर्यात् तत्पूर्वे वर्जयेत्तु वा
ग्रामप्रदक्षिणन्तीर्थांकुरस्यावश्यकम्मतम्  १२९
अन्येषामपि सर्वेषां कारयेद्वर्जयेत्तु वा
अंकुरार्पण पूर्वे तु सायाह्नसमयेमृदम्  १३०
संग्राह्य वापयेत् रात्रौ बीजान्यंकुरसिद्धये
तद्दिनेचैतदिष्टंस्यात् भेरीताडनपूर्वकम्  १३१
अन्यत्सर्वं समुद्दिष्टमंकुरार्पण पूर्वके
तद्रात्रावैवकर्तव्यः यागारम्भश्शिवस्य तु  १३२
केत्वंकुरो नवाहे स्यात् स्प्ताहे चोत्सवांकुरम्  १३२ १-२
एवन्निश्चित्य पूर्वेद्युरस्त्रराजन्तु वार्चयेत्
यागशालान्ततः कुर्यादग्रे वा त्वग्रपार्श्वयोः  १३३ १-२
वामेऽवामे तथा पञ्चशालानामिष्टदेशके
मध्यागारे विशेषेण पञ्चहस्तप्रमाणतः  १३४ १-२
एकहस्तविवृद्धया तु तिथिहस्तसमाविधिः

पङ्क्तित्रयसमायुक्तं पञ्चपङ्क्तिसमन्वितम्  १३५ १-२
समानपंक्तयोवास्युर्मात्रादेकांशवर्धनात्
नवांगुलान्तमानेन त्वधिकाः पञ्चपङ्क्तयः  १३६ १-२
एकपङ्क्तियुतावापि चतुर्द्वारं महीयसी
एकद्वारयुतां वापि मण्डपाकारसंस्थिताम्  १३७ १-२
शालाकूटनिभां वापि नवपञ्चाग्निसंयुताम्
एकाग्निसहितां वापि वितानध्वजसंयुताम्  १३८ १-२
दर्भमालासमायुक्तां मुक्तादामप्रलम्बिताम्
नालिकेरफलोपेतां सर्वमण्डनमण्डिताम्  १३९ १-२
मध्यमे वेदिकोपेतां वसुमात्रप्रमाणतः
एकांगुलविवृद्ध्याष्टाविंशत्यंगुलकावधि  १४० १-२
वेदिकोत्सेध उद्दिष्टो विस्तारस्य त्रिभागतः
अथवा पङ्क्तिमानेन चोपदेवी समन्वितम्  १४१ १-२
मुष्ट्यरत्नीमितं कुण्डं करमानन्तु वा भवेत्
युगाश्रं वर्तुलं वापि त्रिमेखलसमन्वितम्  १४२ १-२
मण्डपे मालिकादौ वा कुर्यात् यागाधिवासनम्
एवं सर्वञ्च संपाद्य शिल्पिमोचनमाचरेत्  १४३ १-२
पुण्याहं वाचयित्वान्ते वास्तुहोमं समाचरेत्
भूपरिग्रहकं वापि सर्वाध्वर शिरोयुतम्  १४४ १-२
स्थण्डिलं वेदिका मध्ये कुर्याल्लक्षणसंयुतम्
द्रोणात् द्रोणविवृद्ध्यातु नवद्रोणावसानकम्  १४५ १-२
तदर्धतण्डुलोपेतं तदर्धतिलसंयुतम्
तद्वल्लाजसमोपेतं तदर्धतिलसंयुतम्  १४६ १-२
विचित्रकर्णिकोपेतं प्रज्वलद्दलशोभितम्
तिललाजादिरेखाढ्यन्दर्भवेष्टनसंयुतम्  १४७ १-२
पञ्चाद्येक विवृद्ध्या तु तत्वदर्भान्तसंख्यया

तन्मध्ये स्थापयेत्कुम्भं शिवाख्यं वर्धनीयुतम्  १४८ १-२
अष्टविद्येश्वरोपेतं कुम्भावरणसंयुतम्
सर्वे ससूत्रवस्त्राढ्याहेमपंकजभूषिताः  १४९ १-२
सापिधानास्सकूर्चाश्च पक्वबिम्बफलप्रभाः
स्नपनाद्ध्यायसंसिद्धप्रमाणेन समन्विताः  १५० १-२
शिवाख्ये नवरत्नं स्यात् वर्धन्यां पञ्चरत्नकम्
लोकेशादिषु हेमानि क्षिपेल्बाह्यघटेष्वपि  १५१ १-२
आढ्येनैवं प्रकर्तव्यं वस्त्रयुग्मञ्च मध्यमे
तोरणद्वारकुम्भांश्च लोकपालघटानपि  १५२ १-२
हित्वा विद्येशसहितशिवं शक्तिसमन्वितम्
मङ्गलाष्टकसंयुक्तं दशास्त्रं विनिवेशयेत्  १५३ १-२
एवं संपाद्य सर्वन्तु कुर्यात्प्रतिसरक्रियाम्
सौवर्णं राजतं सूत्रं यद्वा कार्पासनिर्मितम्  १५४ १-२
सौवरणं राजतं बेरप्रकोष्ठपरिणाहतः
स्वल्पाधिकप्रमाणाढ्य नागराजफणान्वितम्  १५५ १-२
तत्पुच्छसंयुतं सूत्रं पटाकारसमन्वितम्
अनन्तस्त्वधि देवस्यात् सौवर्णे राजतेऽपि वा  १५६ १-२
सर्वकामप्रसिद्ध्यर्थं सूत्रमेकतमं भवेत्
ग्रथितं श्रेष्ठमित्युक्तं वलयग्राहकान्वितम्  १५७ १-२
क्षौमपट्टादिसूत्रोक्तं यदि तत्वत्रयात्मकम्
शान्त्यर्थं विजयार्थन्तत्कलात्मकमितिस्मृतम्  १५८ १-२
नवतत्वात्मकं कार्यमारोग्यार्थं प्रमाणतः
षडंगमूर्तिपांगञ्चेत् पुत्रायुष्यफलप्रदम्  १५९ १-२
एकद्वित्र्यंगुलाधिक्यं योग्यनाहप्रमाणतः
संशोद्ध्य वारिणा चैवञ्चन्दनेनोपलिप्य च  १६० १-२
भस्माधारे न्यसेत्भस्म मध्येनेत्रमनुस्मरन्

प्रत्येकं स्थरिडलं कृत्वा तदूर्ध्वे यन्त्रिकोपरि १६१ १-२
पात्रं संस्थाप्य संपूर्य तरडुलैरुडुसन्निभैः
द्विप्रस्थान्तैर्नतद्धीनैः द्रोणाद्यै र्हृदयं स्मरन् १६२ १-२
तन्मध्ये विन्यसेत्सूत्रं भस्माधारसमन्वितम्
अभिन्नयुग्मसुश्लद्दणपूगसारसमन्वितम् १६३ १-२
अच्छिन्नमूलपूर्वोदक् वक्त्रताम्बूलकान्वितम्
ताम्बूलं सूत्रसहितं स्थरिडलोपरि विन्यसेत् १६४ १-२
पुरयाहं वाचयित्वा तु प्रोद्मयेद्धृदयेन तु
स्थरिडले पूजयेच्छक्तिं यंत्रिकायां त्रितत्वकम् १६५ १-२
प्रधानतत्वं पात्रेस्यात् दरडवत्तरडुलेमता
भस्माधारे उमाख्यास्यात् भसिते लकुलीश्वरम् १६६ १-२
अनन्तादींश्च सूत्रे तु गन्धाद्यैरर्चयेत्क्रमात्
पात्रमाच्छाद्य पट्टाद्यैः मालान्तदुपरिन्यसेत् १६७ १-२
सर्वालंकारसंयुक्तं सर्वातोद्यसमन्वितम्
ग्रामदद्मिणं वाथ प्रासादस्य प्रदद्मिणम् १६८ १-२
कारयेद्वर्जयेद्वाथ देवेशं पूजयेत्ततः
अंगुष्ठानामिकाभ्यन्तु ग्रहीत्वा वामहस्तके १६९ १-२
आलभेत् भस्म संयुक्तं सूत्रन्दद्मांगुलद्वयात्
मन्त्रेणानुष्टुभानेत्रंस्मरन् सर्वप्रकोष्ठके १७० १-२
देवानां बन्धयेत्तत्र भसितं विनिवेशयेत्
सर्वात्मनाथ देवीनां वामे वा दद्मिणेथ वा १७१ १-२
जनेभ्यो भसितन्दद्याद्देशिकप्रमुखस्तथा
ताम्बूलञ्च फलापूपनालिकेरफलान्वितम् १७२ १-२
दद्यात् देवाय भक्तेभ्यः दापयेद्वर्जयेत्तु वा
स्कन्दो मा सहिते स्कन्दहीने वा चन्द्रशेखरे १७३ १-२
देवियुक्ते वियुक्ते वा नृत्तरूपे विशेषतः

उमा महेश्वरे वामे सुखासीने महेश्वरः १७४ १-२
अन्यस्मिन् सौम्यरूपे च कल्पयेदुत्सवाय च
एकद्वित्रिषु सर्वत्र वाञ्छया कौतुकं मतम् १७५ १-२
कौतुकञ्चेत्कृतं कार्यं ग्रामादीनं प्रदक्षिणम्
यागारम्भदिनेत्वेतत् विधानं परिकीर्तितम् १७६ १-२
अन्यस्मिन् दिवसे कार्यं मध्यमे चोत्सवस्य वा
कौतुकं वाञ्छिते बिम्बेतद्दिनात् पूर्वरात्रिके १७७ १-२
रौद्रे शान्तेऽपि वा बेरे शिवभक्ते विधिर्मतः
त्रिशूले मध्यपत्रे वा तत्स्थ देवकरेपि वा १७८ १-२
दशायुधानां सर्वेषां सूत्रबन्धनमिष्यते
यागारम्भस्य पूर्वेद्युः तद्दिने वा समाचरेत् १७९ १-२
तीर्थार्थमंकुरं कुर्यादनयोः पूर्वकालतः
देशिको मूर्तिपैस्सार्धं सकलीकृतविग्रहः १८० १-२
द्वारपूजान्ततः कृत्वा यागशालां प्रविश्य च
ब्रह्मेष्टिं भूतशुद्धिञ्च सकलीकरणं पुनः १८१ १-२
पाद्यादि त्रितयं कृत्वा प्रोक्षयेदर्घ्यवारिणा
वेदिकायां ततः कृत्वा स्थण्डिले तु शिवासनम् १८२ १-२
कृत्वा शिवघटे मूर्तिं मूर्तिमन्त्रेण कल्पयेत्
पञ्चब्रह्माणि विन्यस्य कल्पयेत्तत्कलामयम् १८३ १-२
विद्यादेहञ्च संकल्प्य प्रणवं विन्यसेत् शिवम्
हृदयादीनि विन्यस्य पाद्यद्यैरर्चयेत्ततः १८४ १-२
एवं मनोन्मनीन्नयस्त्वा शक्तिमन्त्रेण पूजयेत्
विद्येशान् परितश्चेष्ट्वा लोकपालान् प्रपूजयेत् १८५ १-२
तदस्त्राणि च संपूज्य दर्पणादीनि पूजयेत्
तानि वा वेदिका बाह्ये स्थण्डिलोर्ध्वे स्थलेपि वा १८६ १-२
अष्टदिक्षु वा पूज्य महादिक्षु द्वयं द्वयं

तदन्ते चास्त्रराजानमष्टदिक् स्थण्डिलेस्थितम्  १८७ १-२
एवं क्रमेण संपूज्य यायात्कुण्डान्तिकं गुरुः
संस्कृत्य विधिना कुण्डं शिवाग्निं विधिना नयेत्  १८८ १-२
नवधा पञ्चधा कृत्वा स्वस्वकुण्डे स्वदिक् गतम्
न्यस्त्वाऽवाह्य शिवं सांगं सब्रह्मांगञ्च तर्पयेत्  १८९ १-२
चतुर्दिक्षु नराद्यास्युः हृदयाद्या विदिक्षुवै
स्वस्वमन्त्रप्रधाने तु सर्वैर्मन्त्रैश्च तर्पयेत्  १९० १-२
वेणुबिल्वयवा वापि सक्तुक्षीरं यवंगुलम्
तिलसर्षपमुद्गा वा होमकर्मणिसंस्थिताः  १९१ १-२
ब्रह्मशालियवैर्वापि माषशालियवैस्सह
तिलसर्षपमुद्गाश्च सक्तुवेणुर्गुलं मधु  १९२ १-२
चतुर्द्धैवं समाख्यातं होमद्रव्यं मुनीश्वराः
समिदाज्यान्नलाजांस्तु चतुर्वर्गेषु होमयेत्  १९३ १-२
शतमष्टोत्तरं होमं शिवेनांगैर्दशांशतः
प्रधानेत्वन्य कुण्डेषु कलार्थञ्जुहुयुः क्रमात्  १९४ १-२
द्रव्यभेदेन मन्त्रास्तु क्वचिदुक्ता शिवागमे
तत्र भेदेन मन्त्राणां भेदो नात्र विधीयते  १९५ १-२
होमान्ते तु हविर्दिद्याद्धोमादौ वा हविर्भवेत्
तदन्ते बलिदानं स्यात् तद्विधानमिहोच्यते  १९६ १-२
नित्योत्सवविधानेन कृत्वा लिंगंहविर्मयम्
तत्रेष्ट्वा चास्त्रराजन्तु त्रिशूलेन समन्वितम्  १९७ १-२
दशायुधसमोपेतं धूपदीपसमन्वितम्
घण्टारवसमोपेतं बलिद्रव्यसमायुगम्  १९८ १-२
नानाछत्रसमायुक्तं नानावाद्यसमन्वितम्
प्रविश्य नगराद्यन्तु देशिकश्शिष्य एव वा  १९९ १-२
देवताह्वानदेशे तु बलिं दद्यात् क्रमेण तु

लड्डुकं मोदकं मौद्गं गुलं सक्तुं गणेश्वरे २०० १-२
पायसं रात्रिचूर्णन्तु पद्मपुष्पं सलाजकम्
ब्रह्मप्रियमिदं देयं द्वितीयेहनिकीर्तितम् २०१ १-२
कृसरान्नं घृतोपेतं कदलीफलसंयुतम्
तृतीयेहनि दातव्यं भूतानां प्रीतिकारणम् २०२ १-२
रात्रिचूर्णसमोपेतं नालिकेरफलान्वितम्
चतुर्थेहनिदातव्यं गन्धर्वप्रियमेव च २०३ १-२
घृतं प्रियंगुसंयुक्तं इन्द्रवल्ली समन्वितम्
पञ्चमेहनि दातव्यं इन्द्रप्रियकरं भवेत् २०४ १-२
वेणवन्नं घृतसंयुक्तं पनसोत्थ फलान्वितम्
षष्ठेहनि प्रदातव्यं ऋषीणां प्रीतिसिद्धये २०५ १-२
गुलान्नं घृतसंयुक्तं बृहतीफलसंयुतम्
सप्तमेहनि दातव्यं श्रियः प्रीतिकरं भवेत् २०६ १-२
माषोदनं घृतोपेतं अजमांससमन्वितम्
अष्टमेहनि दातव्यं राक्षसः प्रीतिसिद्धये २०७ १-२
शुद्धान्नन्दधिसक्तुञ्च लाजपुष्पसमन्वितम्
नवमेहनिदातव्यं शिवप्रीतिकरं भवेत् २०८ १-२
अथवान्यप्रकारेण देवताद्रव्यमुच्यते
शुद्धान्नन्दधिसंयुक्तं लड्डुकापूपसंयुतम् २०९ १-२
फलैश्च गुलसंयुक्तं गणेशस्य प्रियं भवेत्
फलैश्च रजनीचूर्णं घृतान्नं दधिसक्तुकम् २१० १-२
भूतेभ्यः कृसरः प्रोक्तः तेन तेभ्यो बलिर्भवेत् २११
पद्ममूलकुशाग्रञ्च शाल्यान्नं घृतमिश्रितम्
कदलीफलसंयुक्तं ऋषिभ्यो बलिमाचरेत् २१२
इन्द्रवल्ली हरिद्रा च प्रियंगुघृतसंयुतम्
चतुर्थेऽहनि दातव्यं शक्रस्यास्य तु तृप्तये २१३

पायसं रात्रिचूर्णञ्च पद्मपुष्पं सलाजकम्
पञ्चमेहनि दातव्यं ब्रह्मप्रीतिकरं भवेत्  २१४
गुलान्नमाज्यसंयुक्तं बृहतीफलसंयुतम्
षष्ठेहनिप्रदातव्यं विष्णुप्रीतिविवृद्धये  २१५
कृसरान्नं घृतोपेतं नालिकेरफलान्वितम्
सप्तमेहनिदातव्यं शिवप्रीतिकरं भवेत्  २१६
वेणवन्नं दधिसंयुक्तं कदलीपनसान्वितम्
अष्टमेहनिनिदातव्यमीश्वरप्रीतिसिद्धये  २१७
शुद्धान्नन्दधिसंयुक्तं लाजपुष्पसमन्वितम्
नवमेहनि दातव्यं चण्डेशप्रीतिहेतवे  २१८
नवानां दिवसानान्तु देवद्रव्याणि च द्विजाः
कथितान्यत ऊर्ध्वन्तु कथ्यते द्वादशाहके  २१९
मुद्गान्नं लड्डुकं सर्पिकदलीगुलसंयुतम्
प्रथमेहनि दातव्यं विघ्नमन्त्रमनुस्मरन्  २२०
रक्तान्नं मांससंयुक्तं कृसरापूपसंयुतम्
घृतमत्स्यसमायुक्तं जपाकुसुमसंयुतम्  २२१
द्वितीयेहनि दातव्यं पैशाचम्मन्त्रमुच्चरन्
पायसं सक्तुपुष्पञ्च पद्मपुष्पसमन्वितम्  २२२
तृतीयेहनि दातव्यं ब्रह्ममन्त्रमनुस्मरन्
कृसरान्नं घृतं सक्तु लड्डुकैश्च समन्वितम्  २२३
चतुर्थेहनिदातव्यं गन्धर्वम्मन्त्रमुच्चरन्
इन्द्रवल्ली हरिद्रान्नं सघृतं लाजसंयुतम्  २२४
पञ्चमेहनितातव्यं भूतमन्त्रमनुस्मरन्
गुलान्नं घृतसंयुक्तं नालिकेरफलान्वितम्  २२५
षष्ठेहनिप्रदातव्यं स्कन्दमन्त्रमनुस्मरन्
कुशाग्रं घृतसंयुक्तं शुद्धान्नं दधिसंयुतम्  २२६

सप्तमेहनि दातव्यं ॠषीणां मन्त्रमुच्चरन्
क्षीरान्नं शालिपिष्टञ्च इक्षुखण्डसमन्वितम् २२७
अष्टमेहनि दातव्य नागमन्त्रमनुस्मरन्
दधिकान्नं गुलोपेतम्मातुलंगफलन्तथा २२८
नवमेहनि दातव्यमैन्द्रमन्त्रमनुस्मरन्
गुलान्नमाज्यसंयुक्तं कदलीपनसमन्वितम् २२९
दशमेहनिदातव्यं विष्णुमन्त्रमनुस्मरन्
रक्तान्नं मांससंयुक्तं अपूपं तिलचूर्णयुक् २३०
एकादशाहे दातव्यं रक्षसाम्मन्त्रमुच्चरन्
शाल्यन्नं दधिसंयुक्तं गुलखण्डसमन्वितम् २३१
द्वादशेहनि दातव्यं शिवमन्त्रमनुस्मरन्
सप्ताहे वाथ पञ्चाहे त्रिदिने व्योमरात्रिके २३२
पूर्वं त्यक्त्वा परं प्रोक्तं दिनद्रव्याश्च देवताः
दिनद्रव्यबलिद्रव्यं कथितं मुनिसत्तमाः २३३
पूर्वं ब्रह्मादि देवेषु द्रव्यैरेतैर्बलिर्भवेत्
दिनाधिपति तृप्त्यर्थं शुद्धान्नं दधिसंयुतम् २३४
दद्याल्लोकेशतृप्त्यर्थं लोकपालादि मन्त्रतः
वृषादि परिवारेषु ध्वजे ब्रह्मादिषु क्रमात् २३५
बलिन्दत्वा तदन्ते तु बलिपीठे बलिं क्रमात्
ध्वजादि बलिपीठान्तं अथवा बलिरीरितः २३६
ब्रह्मादि बलिपीठन्तं शक्रात् पीठान्तमेव वा
तत्तत् दिनाधि देवानां बलिपीठे बलिस्तु वा २३७
दिन देवादि तृप्त्यर्थं शुद्धान्नेन बलिस्तु वा
लोकेशेभ्यो बलिर्वापि दिनदेवेषु वामतः २३८
दिनदेवबलिद्रव्यैः लोकपालेऽथ वा बलिः
दिनानामपि सर्वेषां दिनं प्रतिबलिद्वयम् २३९

कुर्यात् वाद्यं तयोरेकं बलिर्दिवसयोस्तु वा
सायं प्रातर्बलिन्दद्यात् तत्काले वा तदन्तके २४०
बेरयात्रा प्रकर्तव्या यानक्रममिहोच्यते
प्रथमे वृषयन्त्रं स्यात् द्वितीये भ्रमणार्हकम् २४१
डोलायन्त्रं तृतीये स्यात् वाजियन्त्रं ततः परम्
सिह्मयन्त्रं ततः प्रोक्तं दीपयन्त्रं ततो भवेत् २४२
मेषयन्त्रं ततो ज्ञेयं रथयन्त्रं ततो भवेत्
अन्योन्यञ्चारुरूपाणि कार्याणि द्विजसत्तमाः २४३
बेराणयनेकरूपाणि तदन्ते कथितानि च
तदन्ते बलिदानं स्यात् बलिपीठसमन्वितम् २४४
अन्नलिंगसमायुक्तं त्रिशूलेन समायुतम्
दशायुधसमायुक्तं गोलकालिंगसंयुतम् २४५
रथस्थितगणेशानां तदन्ते नन्दिकेश्वरम्
रथे वा शिबिकायां वा सर्वालंकारसंयुतम् २४६
एतैस्सर्वैर्विहीनोग्रे बल्यंगैश्च समन्वितः
तदन्ते वृषभं पश्चात् वृत्तार्थं मुखरंगकम् २४७
तदन्ते देवदेवेशरथस्सर्वांगसुन्दरः
रथाग्रोभयसंस्थाभ्यां भूषिताभ्यां विशेषतः २४८
घृतचामरहस्ताभ्यां मत्कन्याभ्यां विराजितः
नवरत्नोज्वलच्छ्वेत छत्रेणोपरिगामिनाम् २४९
मदन्तिक गतेनैव शैवाचार्येण शोभितः
मत्पृष्ठभागसंस्थेन मत्कर्मनिरतेन च २५०
परिचारक संज्ञेन मत्भक्तेनाप्रमादिना
पद्मकुड्मलसन्नद्धपाश संबन्धहस्तया २५१
पुरुषाकारधारिण्या शोभितो रुद्रकन्यया
मद्दास्यावाथ सर्वांगसुन्दर्यास्स्यन्दनस्य च २५२

तदन्ते देवदेवेशिरथस्तद्वत् विभूषितः
तदन्ते चरडनाथस्यात् प्रथग्वान्यसमन्वितम् २५३
षोडशप्रतिमादीनि यान्यन्यानि शिवस्य तु
शिवभक्ताश्च ये ख्यातास्तेषां रंगान्यनेकधा २५४
तानि अग्रगान्यनेयानि पृष्टतो वा द्विजोत्तमाः
एषामिष्टन्तु यत्ग्राह्यं बल्यंगं कौतुकं विना २५५
नानावाद्यसमायुक्तं गजाश्वाद्युष्ट्रसंयुतम्
वीथिसम्मार्जनोपेतं जलसेकसमन्वितम् २५६
गृहं प्रतिकृतालेपचूर्णचित्रसमन्वितम्
मंगुलांकुरसद्दीपवर्धनीकुम्भवारियुक् २५७
कदलीपूगसंयुक्तं पट्टवस्त्रादि शोभितम्
दर्भमाला समायुक्तं मुक्तादामविभूषितम् २५८
उपरिष्टादधस्तात्तु तलं प्रति तलं प्रति
विन्यसेद्दीपदरडांश्च रात्रौ चेद्दीपमालया २५९
गृहालंकार उद्दिष्टो गृहहीनस्थलेपि च
नानाध्वजसमोपेतं नानावाद्यसमन्वितम् २६०
नानागानसमोपेतं नानानृत्तसमन्वितम्
नानाच्छत्रसमोपेतं पिच्छचामरसंयुतम् २६१
तालवृन्तसमोपेतं धूपदीपसमन्वितम्
प्रतिदिनं कुर्यादह्निरात्रौ महोत्सवे २६२
रथादौ शिबिकादौ वा परिचारकमूर्धसु
यानकाले तु ताम्बूलं देयं नानाफलानि च २६३
भक्ष्यापूपादिकन्देयं दत्वा कारडपटादिकम्
योग्यायोग्य विभागेन दग्धार्द्र विषयः क्रमात् २६४
दग्धं सर्वं द्विजैस्सिद्धमार्द्रं शूद्रे तु वा मतम्
वित्वक् सत्वक् कृतं युक्तया वीक्षणादिविशोधितम् २६५

शंखध्वनिसमायुक्तं पाद्याचमनसंयुतम्
प्रच्छन्नपटमावर्ज्य निर्माल्यापनये कृते २६६
दत्वोपहारान् सर्वेभ्यो मद्भक्तेभ्यः क्रमेण तु
आगन्तुकेभ्य स्त्वन्येभ्यः तत्तत् भक्त्यनुसारतः २६७
प्रवेश्यस्थानकूटाद्यमासनस्थाय शम्भवे
दत्वा पाद्यादिकं नित्यं स्नपनं शान्तिहोमयुक् २६८
कार्यं तद्वादिसंस्पृष्टरथादिस्पर्शशान्तये
चण्डालपाणदृक्दोषनिवृत्यर्थं विशेषतः २६९
आवश्यकमिदं ज्ञेयं प्रतिधानं गुरूत्तमाः
शान्तिहोमं विनावाथ अशक्तौ स्नपनं नयेत् २७०
पञ्चप्राकारबाह्ये तु मम याने प्रकल्पिते
विधाय स्नपनं वाथ पञ्चखारिसमन्विते २७१
चत्वारिंशमितैर्भारैः जलैर्वाथ तदर्धतः
पादेन वाथ तन्यूनैस्स्नापयेद्देवमादरात् २७२
मृगयात्रां विशेषेण स्नपनं कर्म कल्पयेत्
स्वकालविहितश्चैतदिष्टदं परिकीर्तितम् २७३
प्रातस्सन्ध्यार्चनन्नित्यं यागमण्टपवेशनम्
रथाद्यारोहणं यानन्ततो मध्याह्नपूजनम् २७४
रथेचेद्धूपदानान्तं नैवेद्यान्तं शिवालये
यात्रार्थस्नपनं पश्चात्ततो नैमित्तिकार्चनम् २७५
विनोददर्शनञ्चान्ते प्रदोषे पूजनन्ततः
पुनर्होमनिवेशश्च ततो ग्रामप्रदक्षिणम् २७६
यात्रार्थस्नपनं पूजा नृत्तगेयादि दर्शनम्
ततो धाम निवेशश्च देव्या सह निवेशनम् २७७
काले षोडशसंख्याते यामार्धपरिनिष्ठिते
कृतसर प्रति सरस्यैता देवताः विहितः क्रियाः २७८

स्वकालेनुष्ठितास्त्वेता क्रियास्सर्वार्थसाधकाः
पूर्वपूर्वग्रहेऽपुष्टिः पृष्ठपृष्ठग्रहेऽशुभः २७९
तस्मात्सर्व प्रयत्नेन पूर्वकाले समाचरेत्
स्वकालेपि च दोषस्स्यात् पृष्ठकाले समाचरेत् २८०
यानकाले बलेः काले पूर्वकालेऽथवामतः
परिवारोक्तमार्गेण बलिपीठे समाचरेत् २८१
मार्दवार्द्वन्तु वा पीठं लोहं वाभू विलेपनम्
यागमण्डपवेशञ्च हित्वान्तर्वेशनन्तु वा २८२
तत्र ताम्बूलदानाद्यं वर्जयेद्वाथ कारयेत्
उक्तकाले परित्यागे शान्तिहोमञ्च कारयेत् २८३
रात्रौ नीराजनं कार्यं धूपदीपावसानके
प्रभूतन्तु हविर्दद्याद्यानकालावसानके २८४
एवं प्रतिदिनं कुर्यात् विशेषस्त्वघुनोच्यते
ग्रामादौ तत्बहिः वापि कल्पिते मण्डपादिके २८५
नीत्वा देवं समाराध्य विनोदालोकनन्ततः
प्रविश्य धाम वा नो नयेत् ग्रामं समस्तकम् २८६
प्रवेशेवाथ वृष्ट्यादावेवमेव समाचरेत्
भविष्यद्वृष्टिशंकायान्धकारे महत्यपि २८७
शान्तिहोमो विधेयस्यादवशिष्टप्रदक्षिणे
यागारम्भदिने वाथ तीर्थदानदिनेपि च २८८
सकलं भ्रामयेत् ग्रामं प्रायश्चित्तन्नचोच्यते
ग्रामप्रदक्षिणे हीने दिशाहोमन्तु कारयेत् २८९
निर्मले नभसीन्दोश्च दर्शनेऽवश्यमेव च
बेरयात्रा प्रकर्तव्या बलिन्नित्यं समाचरेत् २९०
तीर्थाह्नः पञ्चमे पूर्वे चतुर्थे वा समाचरेत्
तैलाभ्यंगञ्च तद्वारे रात्रिचूर्णयुतन्तु वा २९१

ताम्बूलदानसहितन्देवे भक्तेषु च क्रमात्
अन्यत्रापि च कर्तव्यं ध्वजारोहेपि वामतम्  २९२
देवाग्रे स्थापयेत्तैलं स्थण्डिलेयंत्रिकोपरि
अस्त्रमन्त्रेण संप्रोक्ष्य संहिता मनुना लभेत्  २९३
कवचेनाव कुण्ठ्याथ यजेद्गन्धाधिभिः हृदा  २९३ १-२
शिवतत्वादिभिस्तैलं मूलयुक्तैर्नमोन्तकैः
सपुष्पन्निक्षिपेन्मूर्ध्नि रात्रिचूर्णमनुक्रमात्  २९४ १-२
ललाटात् पादबाह्वन्तं देव्याः कण्ठान्तमाचरेत्
तत्र वन्यत्र वा स्नानं कृत्वा मौद्गन्निवेदयेत्  २९५ १-२
तीर्थाह्वात् पूर्वदिवसे तत्पूर्वे वा समाचरेत्
नटेशभ्रमणं कुर्यात्तदर्धे पूर्वरात्रिके  २९६ १-२
कौतुकं पूर्वविधिना कारयेन्नृत्तमूर्तये
सर्वाभरणयुक्ताय पूजिताय विशेषतः  २९७ १-२
तस्मादन्यत्र कूटेवा रंगे वाऽस्थानमण्टपे
सर्वालंकारसंयुक्तं कृत्वा धामप्रदक्षिणम्  २९८ १-२
तत्काले वा प्रभाते वा देवदेवं प्रवेश्य च
विनोददर्शनञ्चापि कारयेद्द्विजसत्तमाः  २९९ १-२
प्रातस्नानादिकं कृत्वा भूषयेत् भूषणार्हकैः
नानागरुसुगन्धञ्च कर्पूरेण विमिश्रितम्  ३०० १-२
धामप्रदक्षिणं कृत्वा सर्वातोद्यसमन्वितम्  ३०१
स्थण्डिलोपरि संस्थाप्य पुण्याहं वाचयेत्ततः
संप्रोक्ष्याघ्र्याम्भसास्त्रेण मन्त्रयेत् शर्वशम्बरैः  ३०२
गन्धादिभिस्समभ्यर्च्य कवचेनावकुण्ठयेत्
समिदाज्येन चरुणा तिललाजगुलैस्तु वा  ३०३
मूलेन शतहोमस्स्यादस्त्रहोममतो न वा
पञ्चाग्नि संस्कृतिर्युक्तो होमस्सर्वार्थसाधकः  ३०४

प्रायश्चित्तंत्वघोरेण कृत्वा पूर्णासमन्वितम्
सद्योजातेन संस्पृश्य गन्धंमूलेन दापयेत् ३०५
सवत्सांगां सुवर्णञ्चकांस्यपात्रं सुवस्त्रयुक्
तिलमाज्यमथान्यद्वा दद्यादाचार्य तृप्तये ३०६
जलदानसमोपेतं यात्रादानमिदंमतम्
अथान्यद्वा हरिद्राञ्च लवणन्तिलसर्षपौ ३०७
ताम्बूलन्तण्डुलञ्चैव गन्धाज्यं तिलतैलकम्
शिवदानमिति ख्यातं कर्तुरिष्ट प्रदायकम् ३०८
योगिनां ध्यानयुक्तानां शिवज्ञानार्थवेदिनाम्
तत्पूजादानमिष्टं स्यात् सर्वेषां प्राणिनामपि ३०९
उष्णीषाद्यं प्रदेयं स्याद्विशेषेषु दिनेषु च
प्रतिदानं तु देयं स्याज्जलोपेतं तु तद्भवेत् ३१०
उष्णीषाद्यं प्रदातव्यं दद्याचार्यधीमतः
आचार्यश्शिव एवस्यादनयोरन्तरन्नहि ३११
यः पश्येदनयोर्भेदं सोधोगतिमवाप्नुयात्
सर्वागमज्ञं शान्तञ्च शिवलिंगार्चनारतम् ३१२
नित्यहोमादिभिर्युक्तं शिवार्थान्नप्रकल्पितम्
ग्रहबल्यादिसंयुक्तं भिक्षा प्रदमनिन्दितम् ३१३
किमत्र बहुनोक्तेन देशिकस्त्वीदृशो यदा
तृप्तो यत्र तदातस्य पुरुषार्थगतिर्द्विजाः ३१४
सत्यं सत्यं पुनस्सत्यं त्रिसत्यं सत्यमेव हि
तद्वित्तमाहृतं येन त्रिजगच्चोर उच्यते ३१५
देवस्वादपिनिस्तार्यं कल्पकोटिशतैरपि
तस्मात् पापं परिज्ञाय बहुधा देशिकस्य च ३१६
तद्दत्तं श्रद्धया ग्राह्यन्तच्छ्राव्यन्तारकम् यतः
यात्रादान मिदं कार्यान्नैवेद्यादि निवेदयेत् ३१७

पूर्वान्ते भवेल्लिंगप्रतिष्ठादौ च सम्मतम्
अन्यत्रापि च कर्तव्यं राज्ञां विजयहेतवे ३१८
सर्वदानोत्तमं ह्येतत् ग्रहणादौ विशिष्यते
सर्वालंकारसंयुक्तं मुखेणसमन्वितम् ३१९
शैवाचार्यसमोपेतमारोप्य शिबिकोत्तमम्
पञ्चप्राकारमध्ये वा तत्बाह्ये वा प्रदक्षिणम् ३२०
कृत्वा यानक्रमं प्रोक्तं सर्वमंगल संयुतम्
राजवेषधरैः पुंभिर्नानानृत्तसमन्वितैः ३२१
आरूढ शिबिकैर्दक्षैः पुष्पोदैर्गन्धतोयकैः
अग्रतः पृष्ठतो वापि कृतसेवा समन्वितैः ३२२
वर्जयेद्वाथ मुखं राजवेषधरान्वितम्
प्रवेश्य भवनं पश्चात् स्थापयेत् पूर्ववर्त्मना ३२३
कौतुकञ्च परित्यज्य गन्धपुष्पादिभिर्यजेत्
तदन्ते बेरयात्रादि तत्पूर्वे वा प्रकीर्तितम् ३२४
रात्र्यन्ते रथमारोप्य देवदेवन्नटेश्वरम्
पूर्वयानक्रमेणैव ग्रामादीनां ग्रदक्षिणम् ३२५
कृत्वा निवेशयेदन्तः पुनस्नपनमाचरेत्
अन्येष्वपि च बेरेषु विधानं सदृशं मतम् ३२६
तीर्थाह्नः पूर्वदिवसे तत्पूर्वे वा द्विजोत्तमाः
युद्धारम्भक्रियोपेतं मृगयात्रावसानकम् ३२७
अन्येन चोत्सवार्थेन बेरेण पुनराचयेत्
विशेषेण स्नपनन्तस्य विधेयं पूर्ववर्त्मना ३२८
तद्रात्रौ कौतुकं कुर्यात् तीर्थार्थं पूर्ववर्त्मना
तीर्थार्थं साधयेद्रात्रौ कलशान्नवसंख्यया ३२९
ससूत्रान् सापिधानांश्च सकूर्चान् पल्लवान्वितान्
सवस्त्रान्वा विवस्त्रान्वा प्रधाने वस्त्रमेव वा ३३०

रात्रौ वा साधयेत्तीर्थं स्नाने तत्समयेपि वा
प्रातः प्रागुदयात् पूर्वन्तीर्थकार्यं समाचरेत् ३३१
तीर्थस्थानञ्च संप्राप्य शुद्धिं कृत्वा महीतले
स्थण्डिलद्वितयं कुर्यात् शूलार्थं कलशार्थकम् ३३२
पश्चिमे स्थापयेच्छूलं तदग्रे कलशान्यसेत्
पुण्याहं वाचयित्वा तु देवानाहूयपूर्वकम् ३३३
त्रिशूले सर्वतीर्थञ्च सर्वंदुर्गासमन्वितम्
मध्ये मनोन्मनीयुक्तं गन्धपुष्पादिभिर्यजेत् ३३४
तज्जलैः स्नापयेच्छूलं नद्याद्यन्तः प्रविश्य च
तीर्थसंग्रहणं कुर्यात् गंगाद्यावाहनेन च ३३५
हे देवि गंगे यमुने नर्मदे च सरस्वति
सिन्धो गोतावरित्वञ्च कावेर्यत्रजलाशये ३३६
सन्निधीभवशर्वस्य तीर्थार्थमिदमुत्तमम्
खेरस्तमनं यावत् तीर्थानां पापशुद्धये ३३७
तीर्थसंग्रहणं तन्मध्ये प्राक्शिरान्वितम्
त्रिशूलं स्नापयेदप्सु शिवमन्त्रमनुस्मरन् ३३८
जलादुत्तीर्य शूलन्तु जलतीरे निवेशयेत्
तीर्थसंग्रहणं कृत्वा तीर्थं देवालयेपि वा ३३९
अवगाहनहीनन्तु नयेद्दूरजलाशये
सर्वालंकारसंयुक्तं प्रविशेदालयं प्रति ३४०
होमञ्च बलिदानञ्च कृत्वा प्रागुक्तवर्त्मना
चूर्णोत्सवं ततः कुर्यात् देवस्यास्थानमण्टपे ३४१
स्थण्डिले द्वितयं कुर्यात् देवदेवस्य सन्निधौ
त्रिशूलं पश्चिमेन्यत्रोलूखलं विनिवेशयेत् ३४२
तन्मध्ये विन्यसेद्रात्रिमथतच्चूर्णसिद्धये
वस्त्रेणावेष्ट्य तन्मध्ये रात्रिचूर्णन्तु वा क्षिपेत् ३४३

त्रिशूलं पूजयित्वादौ ततो रात्र्यधिवासनम्
संक्ल्प्योलूखलेशक्तिम्माधाराख्यं प्रकल्पयेत्  ३४४
मुसले पूजयित्वेशं कुर्यात् घृतशिरोर्पणम्
दूर्वा पुष्पसमोपेतैः व्रीहितण्डुलकादिभिः  ३४५
सम्मुखं विमुखं वापि शूलं देवस्य कीर्तितम्
तद्वन्मुसलमुद्दिष्टं तथैवोलूखनं भवेत्  ३४६
सवस्त्रं वा विवस्त्रं वा मूसलं परिकीर्तितम्
मुसलं पूर्वमभ्यर्च्योलूखनं तदनन्तरम्  ३४७
शिवतत्वादितो वा स्यादात्मतत्वादितोपि वा
दूर्वाप्रदानं कर्तव्यं गुरुणा वा नियोगिना  ३४८
राज्ञा देव्या च तस्याथ तन्नियुक्तैर्महात्मभिः
पुरोहितमुखैर्देयं ततो माहेश्वरैर्जनैः  ३४९
मत्कन्याभिश्चदासीभिः कर्तव्यं राजसन्निधौ
नो चेत्राजनियुक्ताभिरुद्रकन्याभिरेव वा  ३५०
दासीभिर्वाथ भक्तैर्वा योग्यैर्रन्यैः क्रमेण च
दूर्वादानं प्रकर्तव्यं विद्धैर्देशिकाज्ञया  ३५१
अन्यस्मिन्नपि देवस्य देव्या वा कौतुकान्तरे
तदादौ स्नानकालादौ कर्तव्यम्मंगलार्थकम्  ३५२
तदन्ते चूर्णयेद्रात्रिं त्रिःकृत्वा चास्त्रमुच्चरन्
दूर्वादानं क्रमेणैव चूर्णयेद्रात्रिमादरात्  ३५३
तच्चूर्णं तन्मनुं स्मृत्वा तस्मादादाय निक्षिपेत्
नानाविधेषु पात्रेषु लिंगार्थकं प्रतिमार्थकम्  ३५४
उत्सवप्रतिमार्थकञ्च त्रिशूलार्थं विशेषतः
परिवारार्थमेकञ्च भागं संकल्पयेत् क्रमात्  ३५५
अवशिष्टजनार्थञ्च संग्रहेत् कलशादिषु
केवलं गन्धतैलं वा पृथक् पात्रेषु कल्पयेत्  ३५६

संप्रोक्ष्य हेतिना पश्चात् हृदमन्त्रेण समर्चयेत् ३५६ १-२
अमृतीकृत्य गोस्तन्या दद्यात्ताम्बूलपूर्वकम्
रात्रिचूर्णं च देयं स्यात् प्रागुक्तविधिना द्विजाः ३५७ १-२
चूर्णोत्सवं त्रिशूलेन ग्रामादावालयेऽपि च
कारयेत् शीघ्रगत्या तु समर्थैः परिचारकैः ३५८ १-२
महातीर्थं प्रकर्तव्यं समुद्रादौ महाजले
नाल्पोदके विधातव्यं तच्च कौतुकतीर्थवत् ३५९ १-२
किं तु बेरसमोपेतं प्रपादि परिमण्डिते
कलशस्थापनोपेतं देवताह्वानसंयुतम् ३६० १-२
विबेरं वापि प्रकर्तव्यं तीर्थकार्ये द्विजोत्तमाः
तीर्थसंग्रहणं पूर्वं न कृते तु जलान्तरे ३६१ १-२
तीर्थसंग्रहणं कृत्वा महातीर्थं समाचरेत्
विमोच्य कौतुकं सर्वं भक्तेभ्यो विनिवेश्य च ३६२ १-२
महातीर्थं प्रकर्तव्यं शूलबेरसमन्वितम्
त्रिशूलसहितं वापि नानादेवालयागतैः ३६३ १-२
त्रिशूलैर्देवतोपेतैः सहितं वा समाचरेत्
अथवा पद्मचक्राभ्यां सहितं वा समाचरेत् ३६४ १-२
महामोटिसमायुक्तं रात्रौ वा तीर्थमाश्रयेत्
अह्नितीर्थं प्रकर्तव्यं मध्याह्ने तीर्थमुत्तमम् ३६५ १-२
पूर्वाह्ने मध्यमं तीर्थमपराह्नेऽधमं भवेत्
हित्वेन्दु ग्रहणं तीर्थं रात्रौ वा वरमिष्येते ३६६ १-२
तच्च मोटि समायुक्तं उत्तमोत्तममिष्यते
तिथिप्रधानं सामुद्रयमन्यद्दक्षप्रधानकम् ३६७ १-२
तिथिनक्षत्रसंयोगयुक्तं दुर्लभमुच्यते
पूर्वाह्ने वा पराह्नेवा तिथिऋक्षसमन्वितम् ३६८ १-२
समुद्रे वाथ नद्यादौ कार्यं मध्यन्दिने वरम्

नक्षत्रमधिकं त्वह्निसंग्राह्यं तिथिरेव वा  ३६९ १-२
वारद्वयगते ऋक्षे तिथौ वा योगसम्भवे
तीर्थर्क्षद्वयसंप्राप्तावेकमासे परं वरम्  ३७० १-२
तत्रापि योगयुक्तञ्चेत् पूर्वं संग्राह्यमेव वा
यस्मिन् मासे तु यदृक्षं पूर्वं तीर्थमनुष्ठितम्  ३७१ १-२
तस्मिन् मासे तु तदृक्षे पश्चादपि समाचरेत्
लिंगे स्वायम्भुवे चेत्तु दैविके चार्षिकेपि वा  ३७२ १-२
मानुषे पूर्वतीर्थर्क्षे मासर्क्षन्तद्विमासके
नक्षत्रे वा तिथौ वापि तीर्थकार्यं द्विजोत्तमाः  ३७३ १-२
जलमध्ये ततस्तीर्थं कारयेद्देशिकोत्तमः
द्विधावगाहनं प्रोक्तं बेरयोगवियोगतः  ३७४ १-२
वियोगे तीरदेशे तु बेरस्नपनमेव वा
कारयेत् पूजयेत् पश्चात् गन्धाद्यैरुपचारकैः  ३७५ १-२
नैवेद्यं दापयेत्तत्र नोचेद्देवालयेपि वा
आरामादौ च देवेशं तोषयेत् सर्वमंगलैः  ३७६ १-२
ग्रामप्रदक्षिणोपेतमथवा तद्विवर्जयेत्
सर्वैर्भक्तजनोपेतं तैर्विहीनन्तु वा भवेत्  ३७७ १-२
पूर्णाहुतिं ततो हुत्वा सर्वमंगलसंयुतम्
धामप्रदक्षिणोपेतं विशुद्धैः परिचारकैः  ३७८ १-२
ग्राहयित्वा तु देवेशं देव्या विद्येश्वरैर्युतम्
गर्भगेहे सुसंस्थाप्य लिंगे पीठेह्यनुक्रमात्  ३७९ १-२
देवं देवीञ्च विन्यस्य विद्येशान् परितोन्यसेत्
तत्तत् तोयैश्च संप्रोक्ष्य शुद्धोदैस्नापयेद्विभुम्  ३८० १-२
ततस्संपूजयेद्देवं यथाविभवविस्तरम्
ध्वजावरोहणं तस्यां रात्रौ श्रेष्ठमुदाहृतम्  ३८१ १-२
तृतीये पञ्चमे वापि सप्तमे नवमेव वा

एकादशाहे विश्वर्त्ते कुर्यात्पञ्चदशाहके ३८२ १-२
कुर्यात् सप्तदशाहे वैकोन विंशत्यहेऽपि च ३८३
मूर्तिहोमयुतं कुर्याद्दिशाहोमन्तदूर्ध्वतः
ध्वजादि तीर्थपर्यन्तं दिनसंख्यास्थिता यदि ३८४
पुनरुत्सवमारभ्य तीर्थान्तं सर्वमाचरेत्
ध्वजावरोहऋत्तेतु शुद्धाख्यं स्नपनं नयेत् ३८५
लिंगे बेरे शूले ध्वजे स्नपनमाचरेत्
अर्चनोक्तं समभ्यर्च्य मलाभिर्धामभूषयेत् ३८६
गर्भगेहं समारभ्य गोपुरान्तं स्वशक्तितः
कालागरूद्भवै र्धूपैर्धूपयेद्देवमन्दिरम् ३८७
नैवेद्यं विविधन्दद्यात् तोषये द्देवं मादरात्
चराडपूजान्ततः कुर्यात् होमेन सहितन्नवा ३८८
ततो ग्रामबलिं दद्यात् अन्नलिंगसमन्वितम्
त्रिशूलेन समायुक्तं चराडनाथयुतन्तु वा ३८९
भेरिका मद्दलोपेतं पटहैः काहलैर्युतम्
श्रीखराट शंखसंयुक्तं बलिकाले तु घोषराम् ३९०
कृत्वा विसर्जयेद्देवान् ब्रह्मदीन् ग्रामवर्तिनः
ध्वजेवादौ बलिन्दद्यात्तदन्ते च ध्वजं पुनः ३९१
अवतार्यपटस्थञ्च योजयेत् वृषभं वृषे
ध्वजावरोहरास्यादौ चान्ते वा बलिरिष्यते ३९२
आचार्यं पूजयेत्कर्ता वस्त्रहेमांगुलीयकैः
अंकुरार्पराकाले च ध्वजारोहराकालके ३९३
यागाधिवासेन होमप्रारम्भे सन्ध्ययोर्द्वयोः
अथवा चैकसन्ध्यायाः प्रारम्भेवावसानके ३९४
नृत्तमूर्त्युत्सवे तीर्थे शुद्धस्नपनकालके
दक्षिणान्दापयेत्पश्चात् त्रिविधा सा च सम्मता ३९५

अधमा पञ्चनिष्का च द्विगुणा मध्यमा भवेत्
त्रिगुणा चोत्तमा ज्ञेया देशिकस्य तु दक्षिणा ३९६
तदर्धसंख्यया प्रोक्ता दक्षिणाकन्यसक्रमे
श्रेष्ठं तु द्विगुणा प्रोक्ता त्वन्यथा वा निगद्यते ३९७
निष्कमर्धं तदर्धं वा प्रत्यहं दक्षिणा मता
भक्तोत्सवन्ततः कुर्यात् पक्षाहात् पूर्व एव वा ३९८
उत्सवादौ च मध्ये वा भक्तानामुत्सवो मतः
संवत्सरोद्भवेकाले यदा मासोत्सवो भवेत् ३९९
बलि होमादिसंयुक्तो बेरयात्रादि संयुतः
वर्जयेद्वानयेत्बेर यात्रामात्रमथापि वा ४००
मासोत्सवद्वयप्राप्तावेवमेव समाचरेत्
मासोत्सवमिहप्रोक्तस्त्वेकाहोत्सवत् द्विजाः ४०१
कुर्यादेकमनेकं वा मास्येकस्मिन् तदुत्सवम्
अंकुरार्पणपूर्वं वा तद्वियुक्तमथाचरेत् ४०२
एकाहमुत्सवं कुर्यात् भेरीताडनपूर्वकम्
स्थण्डिलद्वितयं कृत्वा शूलमेकत्र विन्यसेत् ४०३
तदग्रे स्थापयेद्भेरीं पुण्याहं वाचयेत्ततः
अस्त्रं भेरीञ्च संपूज्य भेरीं सन्ताडयेत् क्रमात् ४०४
ततः प्रतिसरं बद्ध्वा देवे शूले यथाक्रमम्
धामप्रदक्षिणं कृत्वा यागशालां प्रविश्य च ४०५
स्थण्डिले स्थापयेत् शूलं वेद्यूर्ध्वे स्थण्डिले शुभे
विन्यसेत् शिवकुम्भञ्च वर्धनी सहितं गुरुः ४०६
समन्तात् स्थापयेदष्टौ घटान्वाकलशान्वथ
पुण्याहं वाचयित्वा तु प्रोक्षयेदस्त्रवारिणा ४०७
हेमाब्जं निक्षिपेत्कुम्भे वर्धन्यां वस्त्रवेष्टितम्
उभयञ्च विधातव्यं सूत्रकूर्चपिधानयुक् ४०८

फलपल्लवसंयुक्तं कुम्भे शम्भुम्मनोन्मनीम्
वर्धन्यामष्टविद्येशान् कलशेषु समर्चयेत् ४०९
द्वाराणि द्वारपान्नन्दि प्रमुखान् कलशेषु वा
स्थण्डिलेतान् समभ्यर्च्य तोरणैरष्टमंगलैः ४१०
संयुक्तन्तद्विहीनं वा दशायुधयुतन्नवा
कुण्डे वा स्थण्डिले वापि होमकर्मसमाचरेत् ४११
पञ्चसंख्येऽथवैकस्मिन् पूर्वद्रव्यसमन्वितम्
ततो ग्रामबलिं दद्यात् बिम्बेन सहितन्तु वा ४१२
एवं रात्रौ प्रकर्तव्यं प्रातर्यागेश्वरान् यजेत्
कृत्वा होमं बलिं कुर्याद्बेरेण च समन्वितम् ४१३
आलयं प्रविश्यान्ते कुर्याच्चूर्णोत्सवं गुरुः
ततस्तीर्थं प्रकर्तव्यमत्रानुक्तन्तु पूर्ववत् ४१४
प्रातर्वाकारयेत् सर्वं भेरीताडन वर्जितम्
सद्योधिवासनं कृत्वा प्राग्वत्सर्वं समाचरेत् ४१५
चूर्णोत्सवविहीनं वा विधानमिदमाचरेत्
आलये बलियाने च स्यातां तीर्थं विहाय वा ४१६
बेरयात्रा प्रकर्तव्या सायाह्ने वा प्रदोषके
तीर्थोर्ध्वञ्चेत् भवेत् यात्रा बलिकालेऽन्यबेरतः ४१७
बेरयात्रा विधेया वा त्वन्यथा च निगद्यते
बलिहोमादिकं हित्वा भ्रमणं केवलन्तु वा ४१८
देवस्य कौतुकं कुर्याद्दिनेष्वेतदपीरितम् ४१८ १-२
कर्तुर्वाञ्छावशात् कॢप्तकालेष्वेतच्च वा मतम्
कर्तृजन्मावसानर्क्षे चार्द्रा नक्षत्र एव वा ४१९ १-२
चतुर्दश्यामथाष्टम्यां पर्वण्युभयपक्षयोः
अयने विषुवे राहु दर्शनेदमनोत्सवे ४२० १-२
पवित्रेमासपूजायां कृत्तिकादीपरोहणे

संवत्सरादिलेखायान्नवतोयागतावपि ४२१ १-२
पूर्वफाल्गुननक्षत्रे नवनैवेद्यकर्मणि
अन्यस्मिन् मंगले कार्ये कुर्यादेकोत्सवं बुधः ४२२ १-२
एवं प्रत्यब्धसंयुक्तं भुक्त्यै नोचे द्विमुक्तये
वारपूजादि कर्तव्या रविवारादितः क्रमात् ४२३ १-२
पञ्चगव्यामृतैर्वापि स्नापयेत् स्नपनांगकैः
पुष्पकलैर्गन्धपुष्पाद्यैः पूजयेत् परमेश्वरम् ४२४ १-२
स्थलपद्ममपामार्गं श्रीपर्णन्तुलसी तथा
गोक्षुरा बिल्वपत्रञ्च विष्णुक्रान्तिः क्रमेण तु ४२५ १-२
अर्कवारादि वारेषु पत्राण्येतानि योजयेत्
माणिक्कमर्कवारेस्यात् चन्द्र वारे तु मौक्तिकम् ४२६ १-२
प्रवालं गुजवारे तु बुधे मरकतं भवेत्
सुरेढ्ये पुष्परागं स्यात् शुक्रे वज्रमिति स्मृतम् ४२७ १-२
इन्द्रनीलं च सौरे स्यात् सर्वाण्यन्यानि यानि च
सर्ववारेषु योग्यानि भूषणानां विधिर्मतः ४२८ १-२
तद्वर्णाभानि च पुष्पाणि वस्त्राणि च नियोजयेत् ४२९
तत्तद्वर्णानि नैवेद्यन्तत्तद्वारे निवेदयेत्
वारपूजावसाने तु वारोत्सवमथाचरेत् ४३०
अर्कवारोत्सवं वापि कारयेदिष्टसिद्धये
ग्रहपीडाविनाशार्थमारोग्यार्थं विशेषतः ४३१
जगत्क्षोभविनाशार्थं बाधायेन ग्रहेण च
तद्वारपूजा कर्तव्या तद्वारोत्सवसंयुता ४३२
तत्तद्वारविभेदेन गन्धादिग्रहणेन वा
संवत्सरोत्सवः प्रोक्तः तथा मासोत्सवोपि च ४३३
वारोत्सवस्य विप्रेन्द्रा विशेषस्तत्र कथ्यते
पूर्वाह्ने ब्राह्मणानान्तु मध्याह्ने क्षत्रियस्य तु ४३४

सायाह्ने वैश्यजातेस्तु चतुर्थस्यार्धरात्रके
ध्वजस्यारोहणं कुर्यात् ध्वजारोहण पूर्वकम् ४३५
भेरीताडनपूर्वं वा बीजनिर्वापपूर्वकम्
ब्राह्मणादि त्रयाणां वा शूद्रे वांकुरपूर्वकम् ४३६
नगरे ध्वजपूर्वं वा मंगले भेरिपूर्वकम्
पत्तनेंकुरपूर्वं वा तद्वछ्शूद्रे प्रकीर्तितम् ४३७
चतुस्सहस्रकादूर्ध्वे वैप्रे ग्रामे महत्तरे
पुरादौ संकरोनोक्तः उत्सवानां द्विजोत्तमाः ४३८
सप्तषट्पञ्चवेदैस्तु तालैर्वाध्यजदण्डकैः
ध्वजस्य वेदिकां कुर्यात् शूद्रादीनां विलोमतः ४३९
ध्वजे ध्वजन्न कर्तव्यं कर्तव्यो वृषभध्वजः
उत्सवे चोत्सवन्नेष्टमिष्टं शैवोत्सवं द्विजाः ४४०
सर्वानुकूल नक्षत्रे ध्वजारम्भादिको वरः
श्वेतं रक्तञ्च पीतञ्च ब्राह्मण्यादि त्रये मतः ४४१
शूद्रस्य पीतः सर्वेषां श्वेतो वा परिकीर्तितः
आरम्भस्तु पटे मूर्धा पुच्छस्यादवसानयुक् ४४२
ध्वजप्रदक्षिणे काले गच्छेदग्रे गुरुर्नवा
गान्धारं पूर्वभागे तु दक्षिणे कौशिको भवेत् ४४३
पश्चिमे कामरो ज्ञेयस्तर्करागस्तदुत्तरे
एवञ्च दिक्विभागेन स्वरास्तु परिकल्पयेत् ४४४
ध्वजारोहणकाले तु चतुर्ष्वेकतमोपि वा
ध्वजारोहादि तीर्थान्तं रात्रौ ग्रामबलिस्तु वा ४४५
अथवा ध्वजमूले तु देवानां बलिरेव वा
नित्योत्सवयुतस्थाने चोत्सवेन्यत्रवापि वा ४४६
ब्राह्मणादि विभेदेन सौम्यादारभ्य कुण्डकम्
प्रदक्षिणक्रमाद्वापि कुर्यादेकाग्निकल्पने ४४७

चण्डरूपधरोब्रह्मचारी सम्मृष्टभोजनः
आत्मानञ्चण्डवत् ध्यात्वा छिन्द्याद्वाध्वजदण्डकम् ४४८
उत्सवं वा पवित्रं वा कल्पयेदुभयन्तु वा
केत्वंकुरन्नवाहे स्यात् सप्ताहेचोत्सवांकुरम् ४४९
तीर्थांकुरन्तु तत्संख्ये सर्वं सर्वत्र वामतम्
मध्याह्ने ध्वजपूजां वा सोमकुम्भे जलस्य च ४५०
निक्षेपञ्चाथ तत्पूजा रात्रौ वाथ विधीयते
कृतकौतुकबेरस्य तत्ग्रामान्निर्गमोपि वा ४५१
मृगयाचेष्टकालेषु कर्तव्यं द्विजसत्तमाः
सौरश्चान्द्रो द्विधाप्रोक्ता वत्सरः कामिकागमे ४५२
सौरश्रेष्ठ इह प्रोक्तश्चान्द्रो मध्यम उच्यते
सावनस्त्वधमः प्रोक्तस्तेन कार्यन्तु नेष्यते ४५३
उत्सवादिषु कालेषु प्रतिष्ठाद्यन्न कारयेत्
विधाय शान्तिहोमन्तु प्रतिष्ठाद्यन्तु वा नयेत् ४५४
अथवान्यप्रकारेण उत्सवन्तु विधीयते
ध्वजमेकं समारोप्य ध्वजारोहणपूर्वकम् ४५५
तस्मिन्नेवदिने विप्रा मन्दीभूते दिवाकरे
श्रावयेत्तीर्थदिवसं गजाद्यारोहितेन च ४५६
चण्डालेन सदारेण कुर्यात् घोषयुतेन च
तद्रात्रावेव कर्तव्यं भेरीताडनपूर्वकम् ४५७
बेराग्रे शूलसंयुक्ते देवानावाह्यपूर्ववत्
आश्राव्य तीर्थदिवसं ग्रामादिबलिवर्जितम् ४५८
धामन्येव विधायैवं तस्माद्गत्वा जलाशयम्
स्थण्डिलद्वितयं कृत्वा जलतीरे गुरूत्तमाः ४५९
एकत्र स्थापयेच्छूलमन्यत्र कलशान्नयसेत्
नवकैस्नापयेच्छूलं तच्छूलमवगाहयेत् ४६०

प्रविश्य देवतास्थानं तद्दिनाद्वा दशाहके
यागारम्भं पुनः कुर्यादंकुरार्पणपूर्वकम्  ४६१
एकहोमसमायुक्तं ग्रामादिबलिमाचरेत्
बेरयात्रा समायुक्तं दिवसं प्रत्यहर्निशम्  ४६२
पञ्चमे दिवसे तत्र सिकता ग्रस्त्रमन्त्रिताः
विकिरेत् सदनं सर्वमन्तर्बाह्य विकल्पितम्  ४६३
ग्रष्टादाशदिने प्राप्ते बीजानिर्वापमाचरेत्
तीर्थाथं तन्निशायान्तु धाम्नस्त्वष्टादिशास्वपि  ४६४
ध्वजानष्टौ समारोप्यांकितान् लोकेशवाहनैः
तदस्त्राकान् वृषाङ्कान्वा मूर्तिपैश्च समन्वितः  ४६५
ततः प्रभृतिकर्तव्यं होमकर्मविशेषतः
तदन्ते बलिदानं स्यात् बेरयात्रासमन्वितम्  ४६६
एवं नवदिनं कृत्वा दशमे तीर्थमाचरेत्
ध्वजानामष्टसंख्यानां तद्रात्रावरोहणम्  ४६७
कृत्वा तद्दिनमारभ्य नानावाद्य समन्वितम्
नानागानसमायुक्तं नानानृत्तसमन्वितम्  ४६८
ग्रामप्रदक्षिणं कृत्वा परिवेषक्रमं नयेत्
सप्ताहमेवं कृत्वान्ते तस्माद्गत्वा जलाशयम्  ४६९
स्थण्डिलद्वितयं कृत्वा जलतीरे गुरूत्तमः
एकत्र स्थापयेच्छूलमन्यत्र कलशान्न्यसेत्  ४७०
नवकैः स्नापयेच्छूलं तच्छूलमवगाहयेत्
प्रविश्य देवतास्थानं सर्वातोद्यं विवर्ज्य च  ४७१
स्थापयेन्मौनमास्थाय सप्ताहं तदनन्तरम्
चण्डेश्वरं पुरो नीत्वा बेरयात्रामनन्तरम्  ४७२
बलिहोमविहीने तु नयेत् सप्ताहमाचरेत्
चण्डपूजा समायुक्तं होमंस्नपनसंयुतम्  ४७३

तदन्ते कारयेत्तीर्थं त्रिशूलेन समन्वितम्
ध्वजावरोहणं कुर्यात् तद्रात्रौ पूर्ववर्त्मना ४७४
बेरयात्रा विहीनं वा विधिमेनां समाचरेत्
नवान्नलिंगं कृत्वा वा दिक्पालास्त्रार्थमेव वा ४७५
तैस्त्रिशूलेन वा कुर्यात् ग्रामादौ वा बलिक्रियाम्
नित्योत्सवान्नलिंगानि दश वा परिकल्पयेत् ४७६
द्वादशाब्दावसानान्त ध्वजस्थापनमेव वा
जीर्णादि दोषे तं त्यक्त्वा ध्वजमन्यं निवेशयेत् ४७७

इति उत्तरकामिकाख्ये महातन्त्रे महोत्सवविधिः षष्ठः पटलः

पञ्चहस्तादि विश्वान्तं ध्वजदैर्घ्यं प्रकल्पयेत्
मानमेतत् समाख्यातं शिरःपुच्छान्तरे द्विजाः
तत् संयुक्तं वा ग्राह्यं चतुस्सप्त समावधि
भागं कृत्वैक भागेन पट विस्तार उच्यते
विस्तारेण समः पुच्छः त्रिपादं वार्धमुच्यते
विस्तारार्धं शिरोज्ञेयं पुच्छद्वय समन्वितम्
वेत्रद्वय समायुक्तं तन्मध्ये वृषभं लिखेत्
आयादि शुभ संयुक्तं स्थितं वा शयनान्वितम्
श्वेतं वा रक्तवर्णं वा पीतवाल समन्वितम्
रक्तश्रृंग समायुक्तं तद्वत्खुर समन्वितम्
मान मात्राङ्गुलाभ्यां स्यात् ध्वजदण्डः पटोवृषः
पद्मासन समायुक्तं पार्श्वेदीप द्वयान्वितम्
चामरद्वय संयुक्तं छत्रसंवृत मस्तकम्
पूर्णकुंभयुतं वापि त्रिशूलेन युतं न वा
एवं वृषभं समापाद्य कृत्वानेत्र विमोक्षणम्

सर्वशशूलोक्त वृक्षो वा त्वक् सारः क्रमुकादिकः
द्विभागादि नवांशान्तं दराडदैर्घ्यं विधाय च
एकांशेन विधातव्या ध्वजयष्टिर्गुरूत्तमाः
पञ्चांगुलं समारभ्याङ्गुल वृद्धया षोडशाङ्गुलम्
यावत्तावत्परीणाह मुपदराडस्य कल्पयेत्
पञ्चांशात् द्वादशां शान्तं नूलनाहं विधाय च
एकांशेनोनमग्रं स्यात् तथा दराडाग्रमिष्यते
दराडोक्तो वेणु वृक्षो वा ध्वजयष्टिर्महीरुहः
उभयोर्योग सिद्ध्यर्तं स्कन्धत्रयमधाहरेत्

सप्तमे पटले निराजनविधिः

नीराजनविधिं वक्ष्ये स च रात्रौ विधीयते
प्रदोषादौ विधेयो वा धूपदीपावसानके १
उत्सवादौ च कर्तव्यमन्यस्मिन् मंगलेपि च
तदर्थं स्थरिडलं कुर्यात् मराडलं वा समाचरेत् २
गर्भेऽर्धमराडपे वापि स्नपनाख्ये तदग्रके
महानसेवाचान्यस्मिन् प्रोक्षयेदस्त्रमन्त्रतः ३
पात्रारयाहृत्य शुद्धानि दीपाधारयुतानि च
पात्राणि च विधेयानि बलिपात्रोक्तवर्त्मना ४
दीपाधारांश्च तन्मध्ये कारयेदेकमात्रतः
पादांगुलविवृद्ध्यातु नवांगुलसमाविधि ५
विस्तारस्तत्समोवापि तदर्धं वोच्चमिष्यते
वसुधा मध्यमे भक्ते नवधामानमीरितम् ६
ओष्ठो यवद्वयादर्धवृद्ध्या मात्रावसानकः
पात्रमान घनं चार्धं मध्ये सुषिरसंयुतम् ७
पद्माकारञ्च वा कुर्यात् पालिकापादसन्निभम्

धुर्तूरकुसुमाकारं शरवाकारमेव वा  ८
चतुरष्टदलोपेतं सर्वालंकारसंयुतम्
एकपात्रे भवेदेकदीपाधारन्तु पञ्च वा  ९
नव वा कारयेत्तांश्च संसक्तान् सान्तरांस्तु वा
पिष्टेनान्नेन वा दीपाधारान्देवार्थमेव वा  १०
देव्यर्थं प्रतिमार्थञ्च विशेषान्नृत्त रूपिणः
एकत्र तिलमन्यत्र सर्षपं लवणन्तथा  ११
कार्पासबीजमन्यत्र गोमयं पिष्टमेव वा
वर्णभक्त हविष्यं च वटाश्वदकानि  १२
चतुर्दिक्षु च कोणेषु क्रमेण परिकल्पयेत्
मध्यमे दीपपात्रन्तु पञ्च वा परिकल्पयेत्  १३
गन्धमर्घ्यञ्च पुष्पञ्च भस्मचाग्नेयकोणतः
सर्वत्र दीपान्वा कुर्यान्नवसंख्यान् समुज्वलान्  १४
घृतार्द्रांस्तैलसंयुक्तान् ब्रह्मांगसहितान्यसेत्
लोकपाला विरिञ्चेन मूर्तयोमूर्तिपास्तु वा  १५
वसवो वह्निसंयुक्ता वामाद्याश्शक्तयः पराः
कलाभूतानि देवांश्च ब्रह्माद्याः कारणेश्वराः  १६
पात्रदेवास्समाख्याता वह्निर्वादीपदेवताः
प्रस्थपादादि तद्वृद्ध्यातु चाढकान्तमुदाहृतम्  १७
तिलादीनां प्रमाणन्तु पात्राणां कर्तुरिच्छया
संस्कारैस्सर्वसामान्यैः संस्कृत्योक्त क्रमेण च  १८
वह्नि बीजमनुस्मृत्य दीपं दीपेन नियोजयेत्
सर्वातोद्यसमायुक्तं शंखध्वनि समन्वितम्  १९
गामनृत्तसमायुक्तं धारयेत्तान्यथाक्रमात्
स्त्रीभिर्वावाहयेद्दीपानथवा परिचारकैः  २०
देवाग्रे स्थापयित्वा तां त्रिपाद्युपरि पूजयेत्

दत्वा पाद्यमजातेन दद्यादाचमनं हृदा २१
गन्धादिनार्चयेत् सर्वान् स्वबीजेन हृदादिना
त्रिवारमेकवारं वा भ्रामयेच्छिवमूर्धनि २२
संगृह्य तानि हस्ताभ्यां दीपपात्राणि पूजयेत्
आत्मतत्वादिभिर्मन्त्रैः दद्याच्छिष्य कराम्बुजे २३
सोपि संगृह्य तं दीपं सप्रणामन्निवेशयेत्
सितं पूतं सुगन्धञ्च निर्वालुकमनन्तरम् २४
गृहीत्वा भस्महस्तेन भ्रामयित्वा शिवोपरि
त्रिवारन्दीपमध्ये तु निक्षिप्य तदनन्तरम् २५
अंगुष्ठानामिकाभ्यान्तु तिलकं पञ्चवक्त्रके
ललाटेषु क्रमात् कुर्याद्धृदि बाह्वोरनुक्रमात् २६
पीठेपि तिलकं कुर्याद्देवीं वामप्रदेशके
देवी व्यक्तस्वरूपाचेत्तिलकञ्च पुरो भवेत् २७
कण्ठप्रदेशे मूलेन हृदयेनाथवानयेत्
बेरे ललाटहृत्बाहुप्रदेशे तिलकन्नयेत् २८
तद् भस्मना समादाय स्वल्पञ्चण्डेश्वरादिषु
भक्तेष्वन्येषु लोहादि कृतबेरेषु दापयेत् २९
ततो भक्तजनेभ्यश्च दद्याद्देशिक पूर्वकम्
सर्वालंकारसंयुक्तं पात्राण्याहृत्यपूर्ववत् ३०
सज्वालान्यथ निर्ज्वालान्यादाय शिवमन्दिरात्
पीठाग्रे वृषभागे वा गोपुरस्यान्तिकेपि वा ३१
वृषमूलेथवान्यस्मिन्निक्षिपेत्ताननुक्रमात्
द्रव्याणि गुरवे दद्याद्दहेद्वातेन वह्निना ३२
तिलादीनां प्रमाणन्तु यथेष्टं वा प्रकीर्तितम्
राज्ञामपि च कर्तव्यं किन्त्वग्निस्तत्र देवता ३३
राज्ञाभिषेककलादौ कुर्याद्विजयहेतवे

देशिकस्याभिषेकेपि किन्तु दीपविवर्जितम्  ३४
तराडुला विहितास्तत्र रात्रौचेद्दीपसंयुतम्  ३४ १-२
इति उत्तरकामिकाख्ये महातन्त्रे निराजनविधिःसप्तमः पटलः

अष्टमे पटले कृत्तिकादीपावलिविधिः

दीपावलिं प्रवक्ष्यामि शृणुध्वं द्विजसत्तमाः
मासे तु कार्तिकाख्ये तु नक्षत्रे कृत्तिकाह्वये  १
पूर्णायां वाथ तद्योगे सर्वकामप्रसिद्धये
रव्यस्तमय वेलायान्दीपारोहणमाचरेत्  २
कर्तुरष्टमराश्यादि लग्नदोषनिरीक्षणम्
वृष्टिवैनाशिकर्क्षादि प्रेक्षणन्तत्र सम्मतम्  ३
रवेरस्तमयात्पूर्वं यामपादावसानकम्
कालस्तदूर्ध्वं यामार्धपर्यन्तः काल एव वा  ४
एवन्निश्चित्य कालन्तु कारयेद्वांकुरार्पणम्
दीपाराधनपूर्वेद्युरधिवासनमारभेत्  ५
देवाग्रे स्थापयेद्दराडं प्रतिगोपुरमेव वा
अष्टदिक्षु चतुर्दिक्षु त्रिष्वेकत्र च वा द्वयोः  ६
दीपदराडप्रमाणन्तु ध्वजदराडप्रमाणवत्
स दराडो नालिकेरो वा तालः क्रमुकवेणुजौ  ७
ध्वजदराडोक्तदराडो वा तत्र कीलांश्च योजयेत्
द्वादशांगुलमारभ्य व्योमांगुलविवृद्धितः  ८
पञ्चाशत्करजान्तं तुदराडात्कीलविनिर्गमः
द्विमात्रात् पादवृद्ध्यातु षडंगुलसमावधि  ९
विस्तारस्यात् घनस्तस्य त्र्यंशमर्धं त्रिपादकम्
दराडप्रोक्ता भवेयुर्वा लग्ना वा कीलपादपाः  १०
नवकीलं समारभ्य व्योमकीलविवृद्धितः

सप्तविंशतिकीलान्तं दिश्येकस्यां नियोजयेत् ११
विसृष्वन्यासु दिक्ष्वेवं कीलांश्च विनिवेशयेत्
त्रिकीलं वा चतुष्कीलमिष्टमानसमन्वितम् १२
तदग्रे स्थापयेत् पात्रधारणार्थं विशेषतः
दारूद्भवानि चक्राणि प्रतिकीलन्तु योजयेत् १३
दीपिकाः प्रतिचक्रन्तु वसुद्वादशषोडश
योजयेद्वा बहिश्शुष्कैः नालिकेरदलादिभिः १४
छादयेद्वाथ चक्राणि तन्निच्छिद्रं यथा भवेत्
एकहस्तविशालन्तु द्विगुणायतसंयुतम् १५
दक्षिणे कल्पयेत् द्वारं दण्डारोहणसिद्धये
कल्पमेतत्समाख्यातमनुकल्पमथोच्यते १६
हित्वा चक्राणि सर्वाणि प्रतिकीलन्तु दीपिकाः
योजयेदुपकल्पं स्याद्व्योमकूटविवर्जितम् १७
दण्डं विहाय यत्क्ळ्समकल्पमिति कथ्यते
दीपकूटान्नयेद्दिक्षु विदिक्ष्वपि तदन्तरे १८
प्रतिवेदन्तु कर्तव्या दीपिका बहुसंख्यया
स्थापयेत् दीपदण्डांश्च मालाकारेण वा बहून् १९
तोरणाकारतोपिवा वृत्ताकारेण वा बहून्
प्रभाकारांश्च वा कृत्वा तत्र दीपांश्च योजयेत् २०
प्रासादे गोपुरे शाले परिवारालयादिषु
मण्टपे बलिपीठादौ कूपे वाथ गृहेपि वा २१
वृषे महानसे कुर्यात् पुष्पमण्टपिकादिषु
बहिर्वा कल्पयेद्दीपान् ग्रामादिष्वपि सर्वतः २२
दीपावलिरियं कार्या अधिवासनपूर्वकम्
अस्त्रेण शोधयेद्दण्डं प्रणवेन तु पूजयेत् २३
षट्चतुःपञ्चतालेनावटं भूमौ समाचरेत्

स्थापयित्वा तु पूर्वेद्युः स्तन्मूले वेदिकां नयेत्  २४
ध्वजदराडे यथा देवी किन्तु पद्मयुतन्तु वा
शिल्पिनं मोचयित्वान्ते पुरायाहं वाचयेत्ततः  २५
दीपेन पूजयेद्दराडं गन्धपुष्पादि संयुतम्
बध्वा प्रतिसरञ्चान्तः प्रविश्येदं समाचरेत्  २६
आलये मराटपे वापि यागमराटप एव वा
मनोरमे शुभेन्यत्र गोमयेनोपलेपिते  २७
स्थरिडलन्तत्र संकल्प्य शस्त्रेण प्रोक्षयेत् गुरुः
नववा पञ्चपात्राणि वैकं वा तत्र विन्यसेत्  २८
नीराजनविधौ देवास्ते सर्वेत्रापि च सम्मताः
पात्रे प्रणव इत्युक्तश्चन्दनाद्यैस्समर्चयेत्  २९
कुराडं वा स्थरिडलं वापि तत्पूर्वस्मिन् प्रकल्पयेत्
शिवाग्निं तत्र संपाद्य शिवं सांगञ्च तर्पयेत्  ३०
समिधाज्येन चरुणा ततः कार्पासबीजतः
क्षीरेण शतमर्धं वा तदर्धं वा समाचरेत्  ३१
मूलेनांगैर्दशांशेन वह्निबीजमनुस्मरन्
शतमष्टोत्तरं हुत्वा पूर्णामन्ते विधाय च  ३२
देवं सांगं विसृज्याथ दीपानारोपयेत् गुरुः
तैलाज्येनवापूर्य पात्रं सर्वात्मकं स्मरन्  ३३
वह्निबीजमनुस्मृत्य मध्यादिभ्यः क्रमेण तु
गन्धपुष्पादिभिश्चेष्ट्वा शिवाग्निञ्च विसर्जयेत्  ३४
गृहीत्वा मध्यपात्रं तु दीपदीपिकया गुरुः
सर्वालंकारसंयुक्तं तरुणाख्यन्तु दीपकम्  ३५
दराडोर्ध्वे स्थरिडलेवापि हृदयेन निवेशयेत्
होमान्ते दीपदराडस्य कौतुकं वा समाचरेत्  ३६
ततो द्वितीयदिवसे चतुर्दिक्षुविदिक्षु च

चतुस्तोरणसंयुक्तञ्चतुष्कूटसमन्वितम्  ३७
कूटानि पञ्चवेदाग्नि हस्तानिष्टान्तराणि च
पूर्वस्यामथवाग्नेय्यां कूटमेकन्तु वा नयेत्  ३८
तोरणानि यथायोग्यन्नयेदिच्छावशेन तु
सर्वत्र तोरणं कूटन्दर्भमालादिशोभितम्  ३९
सर्वालंकारसंयुक्तं कदलीपूगसंयुतम्
एवं संपाद्य सर्वन्तु मन्दीभूते दिवाकरे  ४०
पुण्याहं वाचयित्वा तु दण्डं गन्धादिनार्चयेत्
वस्त्रयुग्मेन चैकेन वेष्टयेद्दण्डमूलकम्  ४१
स्वर्णादि निर्मितं पात्रं दण्डोर्ध्वे विनिवेशयेत्
कार्पास बीजसाराभ्यां युक्तन्तैलाज्यसंयुतम्  ४२
कूटेषु योजयेद्धीमान् कुण्डेषु स्थण्डिलेषु वा
अधिवासन होमेन समं होमं समाचरेत्  ४३
वह्नावीशे तु कूटे वा देशिको होममाचरेत्
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः  ४४
अत्र होमाधिपाः प्रोक्ता दीपदण्डे सदाशिवः
पलाशवटशम्यर्कान् सर्वे वह्नेरथापि वा  ४५
आचार्यं पूजयेत्पश्चात् वस्त्रकाञ्चनभूषणैः
पूर्णाहुतिप्रदानान्ते सर्वादीपाद्विजोत्तमाः  ४६
एकीकृत्य हृदा पात्रे स्थापयेत् वह्निबीजतः
सर्वालंकारसंयुक्तं मंगलांकुर शोभितम्  ४७
वितानध्वजसंयुक्तं छत्रचामरसंयुतम्
नानावाद्यसमायुक्तन्नानानृत्तसमन्वितम्  ४८
बेरेण च समायुक्तं बेरयात्रायुतन्नवा
ग्रहस्थे ब्रह्मचारी वा दीपं संग्राह्य पाणिना  ४९
दण्डं शीघ्रं समारुह्य तदूर्ध्वे सौम्यवक्त्रयुक्

दीपयेदूर्ध्वपात्रे तु तस्मात् सोप्यवतार्य तु ५०
विज्ञापयेन्महेशाय तस्मिन् काले तु चक्रगान्
मूर्धादि पादपर्यन्तन्दीपानारोप्ययेत्ततः ५१
दीपारोपणकर्तारं पूजयेत् परिचारकम्
वस्त्राद्यैर्देशिको धीमानुत्तराभि मुखस्थितः ५२
ज्योतिलिंगमनुस्मृत्य दहेत् कूटचतुष्टयम्
अथवा कूटदाहञ्च हित्वान्यत् सर्वमाचरेत् ५३
तोरणाधो नयेद्देवं दीपदण्डप्रदक्षिणम्
कारयित्वा त्रयं ग्रामं नयेद्दीपसमन्वितम् ५४
हर्म्य प्रदक्षिणं कृत्वा नयेदास्थानमण्टपम्
प्रासादादिषु सर्वत्र दीपानारोपयेत्तदा ५५
प्रविश्य देवतास्थानं परिवेषक्रमं नयेत्
स्नपनं कारयेन्नो वा बेरलिंगं तदुक्तितः ५६
प्रभूतन्तु हविर्दत्वा ताम्बूलन्तु निवेदयेत्
पृथुकन्दापयेद्देवे नालिकेरफलान्वितम् ५७
मरीचजीरकोपेतं गुलसारसमन्वितम्
अंकुरार्पणहीनं वा क्रियामेनां समाचरेत् ५८
गुरवे दक्षिणान्दद्याद्धोतृभ्यस्तदनन्तरम्
अत्रोपयोगियत् द्रव्यं होमकूटादि दण्डकम् ५९
तदंगमपरं चान्यद्देशिकाय प्रदापयेत्
इदं कर्म विधेयं स्यात् राज्ञामावासकेपि च ६०
ग्रामादौ च विधेयं स्यात् ब्रह्मस्थानादिषु द्विजाः
अन्येषामपि मर्त्यानां वाहनानां क्षयेपि च ६१
गोशालायां विशेषेण तेषां रोगनिवृत्तये
यान्तिथिं समनुप्राप्य उदयं याति भास्करः ६२
सा तिथिस्सकला ज्ञेया शुक्ले कृष्णे द्विजोत्तमाः ६२ १-२

यदृक्षं समनुप्राप्य अस्तं याति भास्करः
तदुक्तं सकलं ज्ञेयं नक्षत्रेष्येवमेव तु ६३ १-२
एवं ज्ञात्वा प्रयोक्तव्यं सर्वकर्मद्विजोत्तमाः ६४
इति उत्तरकामिकाख्ये महातन्त्रे कृत्तिका दीपावलि विधिः अष्टमः पटलः

ध्वज दण्डोक्त दण्डोवा तत्रकीलांश्च योजयेत्
द्वादशांगुलमारभ्य व्योमांगुल विवृद्धितः
पञ्चाशत्करजान्तं तु दण्डात्कीलविनिर्गमः
द्विमात्रात् पाद वृद्ध्यां तु षडङ्गुल समावधिः
विस्तारः स्यात् घनं तस्य त्र्यंशमर्धं त्रिपादकम्
दण्डप्रोता भवेयुर्वा लग्नावा कीलपादपाः
नव कीलं समारभ्य व्योमकील विवृद्धितः
शप्तविंशति कीलान्तं दिश्येकस्यां नियोजयेत्
त्रिकीलं वा चतुष्कीलं मिष्टमान समन्वितम्
तदग्रे स्थापयेत् पात्रधारणार्थं विशेषतः
दारूद्भवानि चक्राणि प्रतिकीलं तु योजयेत्
दीपिकाः प्रतिचक्रं तु वसु द्वादश षोडश
दक्षिणे कल्पयेद्द्वारं दण्डारोहण सिद्धये
लोकः ३
कर्तुरष्टमराश्यादि लग्नदोष निरीक्षणम्
विष्टि वैनाशिकर्क्षादि प्रेक्षणं तत्र संमतम्
करणदोषः विष्टिः
चतुर्थ्यां अपरे विष्टिः अष्टम्यां पूर्वभागतः
एकादश्यां परे विष्टिः पूर्वे पूर्णे तु पर्वणि
तृतीयायां पटे कृष्णे सप्तम्यां पूर्वभागतः

दशम्यां अपरे विष्टिः चतुर्दश्यां तु पूर्वतः
वैनाशिकः
द्वाविंशज्जन्मनक्षत्राद्वैनाशिकमिति स्मृतम्

## नवमे पटले मार्गशीर्षे घृतस्नान डोलारोहण पुष्ये क्षौद्रपूजा विधिः

मार्गशीर्षाख्य मासे तु यजेदार्द्रोडुके शिवम्
घृतस्नानसमोपेतं प्रागुक्तविधिना सह १
केवलस्नपनं वापि कारयित्वा विशेषतः
गन्धाद्यैरर्चयेद्देवं नानागानैश्च तोषयेत् २
ग्रामप्रदक्षिणन्नीत्वा देवं धाम्नि निवेशयेत्
अथवा बलिहोमाभ्यां युक्तं रात्रौ दिवावपि ३
बेरप्रदक्षिणं कृत्वा सर्वालंकार संयुतम्
चूर्णोत्सव समायुक्तं तीर्थं कृत्वाऽऽलयं विशेत् ४
डोलारोहन्ततः कुर्यात् सायाह्न समये द्विजाः ४ १-२
सर्वालंकारसंयुक्तं कृत्वा स्तम्भद्वयं तथा
स्तम्भलक्षणसंयुक्तं तयोर्यष्टिन्निवेशयेत् ५ १-२
तन्मध्ये विन्यसेड्डोलाञ्चतुर्हस्तसमन्विताम्
चतुर्बाहु समायुक्तामूर्ध्वप्रच्छादनान्विताम् ६ १-२
नानालंकारसंयुक्ता मथबाहुद्वयान्विताम्
एकहंसासनोपेतां पुण्याह प्रोक्षणान्विताम् ७ १-२
अस्त्रतोयेन संप्रोक्ष्य कल्पयेदासनं यथा
फलकायां यजेद्धंसं हृदा हंसासने यजेत् ८ १-२
ब्रह्माणन्दक्षिणे बाहौ वामबाहौ यजेद्धरिम्
विष्टरे रुद्रमिष्ट्वा तु फलकोर्ध्वे शिवं यजेत् ९ १-२
वामे देवीं समभ्यर्च्य सेनानीन्मध्यमे यजेत्

गन्धाद्यैरथवा देवीमर्चयेत् फलकोपरि १० १-२
नानागानसमायुक्तन्नाना नृत्तसमन्वितम्
नानावाद्यसमोपेतं तदा सन्तोषयेद्धरम् ११ १-२
अन्यत्रापि च कर्तव्यं डोलरोहणमिष्टदम्
प्रत्यहं वा विधेयं स्यात् सर्वकामार्थसिद्धये १२ १-२
डोलाचलनमिष्टं स्यात् बेरस्यारोहणेन च
अस्मिन् मासे सपित्रर्क्षे विशेषाज्यसमन्वितम् १३ १-२
पायसं दापयेच्चम्भोर्देव्या अपि च सम्मतम् १४
पुष्यमासे तु पुष्यर्क्षे कुर्यात् क्षौद्राभिषेचनम्
महाहविर्निवेद्यान्ते बेरयात्रां प्रकल्पयेत् १५
पूर्वोक्तविधिना कर्ता फलमिष्टमवाप्नुयात् १५ १-२
इति उत्तरकामिकाख्ये महातन्त्रे मार्गशीर्ष पुष्यमास पूजाविधिः
नवमः पटलः

डोरारोहं ततः कुर्यात् सायान्हसमये द्विजाः
सर्वालङ्कार संयुक्तं कृत्वा स्तंभद्वयं तथा
स्तम्भलक्षण संयुक्तं तयोर्यष्टिं निवेशयेत्
तन्मध्ये विन्यसेड्डोलां चतुर्हस्त समन्विताम्
चतुर्बाहु समायुक्तां ऊर्ध्व प्रच्छादनान्विताम्
नानालङ्कार संयुक्तामथ बाहुद्वयान्विताम्
एक हंसासनोपेता पुण्याह प्रोक्षणान्विताम्

दशमे पटले माघमासे घृतकम्बलपूजाविधिः
माघमासे मघर्क्षे तु कुर्याद्वै घृतकम्बलम्
कापिलं केवलञ्चाज्यं कृमि कीटादिवर्जितम् १
नीरोमं नूतनं शुद्धं सुगन्धं स्थापयेत् गुरुः

शस्त्रेण निक्षिपेत् तोये वारुणं बीजमुच्चरन्  २
तदाज्यं पिण्डवत् कृत्वा कुंकुमागरुसंस्कृतम्
हरिद्राचूर्णकर्पूर चूर्णाभ्यामपि संस्कृतम्  ३
हेमादि पात्रे संस्थाप्य धूपयित्वाभिमन्त्रयेत्
पञ्चब्रह्मषडंगैश्च शिवेन तदनन्तरम्  ४
विशेषस्नपनं कुर्यात् पञ्चगव्यामृतैस्तु वा
विशेषपूजां कृत्वान्ते स्थण्डिले स्थापयेत् घृतम्  ५
गनधाद्यैरर्चयेद्धीमान् हृन्मन्त्रं सम्यगुच्चरन्
तत्पूर्वे स्थण्डिले धीमान् तर्पयेच्छिवपावकम्  ६
पलाशसमिदाज्यान्न तिललाजसमन्वितम्
शतमष्टोत्तरं हुत्वा पूर्णामन्ते विधाय च  ७
घृते संपातहोमञ्च पवित्रारोहवर्त्मना
कृत्वा संस्थापयेत्पूर्वं स्थण्डिले सापिधानकम्  ८
कवचेनावकुण्ठ्याथ प्रातर्मध्याह्न एव वा
संपूज्य पूर्ववद्देवं स्नपनादि समन्वितम्  ९
विशेषेणार्चयित्वा तु सर्वालंकारसंयुतम्
धामप्रदक्षिणं कृत्वा शिवमन्त्रं समुच्चरन्  १०
लिंगं सर्वत्र चालिप्य पीठान्तं सर्वपीठकम्
गन्धाद्यैरर्चयित्वा तु कम्बलेन च वेष्टयेत्  ११
दद्यादेवं हविश्शम्भोस्ताम्बूलेन समन्वितम्  ११ १-२
सन्ध्यन्तरेपरेद्युर्वा कम्बलाद्यं विवर्ज्य च
पूर्ववत् पूजयेद्देवं गुरुं संपूजयेत्तदा  १२ १-२
दक्षिणां दापयेत्तस्य यथा विभवविस्तरम्
अंकुरार्पणपूर्वं वा रहितं वैतदाचरेत्  १३ १-२

इति उत्तरकामिकाख्ये महातन्त्रे घृतकम्बलपूजाविधिः दशमः पटलः

## एकादशे पटले माघे शिवरात्रिपूजाविधिः

अथ वक्ष्ये विशेषेण शिवरात्रिव्रतं द्विजाः
शृणवन्तु संयतायूयं व्रतानामुत्तमोत्तम् १
अनुष्ठितं पुरा देव्या यदन्यैरप्यनुष्ठितम्
मया सह मुदा सार्धं रमन्तीप्सितमाययुः २
न बाध्यन्ते यमादेशात् किंकरैः क्रूरदृष्टिभिः
यमञ्चापि न पश्यन्ति नरकाणि च नो ययुः ३
श्रिणुध्वं तद्विधानं हि सर्वेषामपिसम्मतम्
माघमास्यासिते पक्षे विद्यते या चतुर्दशी ४
तद्रात्रिश्शिवरात्रिस्यात् सर्वपुण्यशुभावहा
तस्यामेव शिवपूजा शिवलिंगे शिवालये ५
कृतस्नानोपवासेन पूर्वेह्नि नियतेन च
साधकेनोपचारेण कर्तव्या श्रद्धया सह ६
पञ्चशुद्धिः पुरा कृत्वा पूर्वोक्त विधिना ततः
शिवासनं प्रकल्प्यात्र मूर्तिं विद्यातनुं ततः ७
आवाह्य सन्निधीकृत्य शिवं पाद्यादिनार्चयेत्
अभ्यर्च्य गन्धतैलेन पिष्टेनोद्वर्त्य शोधयेत् ८
पञ्चामृतैः पञ्चगव्यैस्तत्तद्युक्त्या भषेचयेत्
गन्धोदकेन विधिना घृताद्यैरभिषेचयेत् ९
पवित्रैः पञ्चभिः कुर्यात् पञ्चांगैश्च क्रमेण तु
पिष्टेन पुनरप्येवमुद्वर्त्यामलकेन तु १०
चूर्णेनापि सपिष्टेन रजन्या धूपितेन च
अस्त्रेण शोधितेनैव शोधयेदुदकेन च ११
नालिकेरोदकेनैव तं पश्चादभिषेचयेत्
गन्धोदकेन मूलांगब्रह्मभिश्चाभिषेचयेत् १२
कार्पासकेन शुद्धेन वस्त्रेण परिमार्जितम्

लिंगमाच्छाद्य देवांगाद्येन शुद्धेन वाससा १३
यामं प्रति पृथक् द्रव्यैर्गन्धाद्यैश्च समर्चयेत्
चन्दनागरुकर्पूर कुंकुमाद्यैः क्रमेण तु १४
मल्लिकोत्पलपुष्पैश्च जाति पुष्पैश्च बिल्वकैः
दूर्वाक्षततिलैश्चापि संयुक्तं सम्यगर्चयेत् १५
गुग्गुल्वगरुनिर्यास सर्जसारैश्च धूपयेत्
दीपयेत् सुसितेनैव वर्तिनाज्यप्लुतेन च १६
पायसं प्रथमे यामे द्वितीये कृसरं भवेत्
गौलमन्नन्तृतीयेन शुद्धान्नञ्च चतुर्थके १७
निवेद्य च ततः पश्चात् सर्वव्यञ्जन संयुतम्
सघृतं गुलसंयुक्तन्ताम्बूलञ्च निवेदयेत् १८
धूपमारात्रिकोपेतं शिवाय विनिवेद्य च
होमं कुर्याद्विशेषेण कुण्डे वा स्थण्डिलेथवा १९
कुण्डे कल्पेऽथवा पात्रे कुण्डसंस्कारपूर्वकम्
शिवाग्निं कल्पयित्वाग्नौ हृदि कल्प्य शिवासनम् २०
संपूज्य तत्र देवेशञ्जुहुयात् ज्वलितेनले
समादाज्य हविर्लाज तिलैर्मूलांगब्रह्माभिः २१
शिवाद्दशांशमन्येषां मन्त्राणामागुतिर्भवेत्
दशादिदशवृद्ध्यातु यावत्पञ्चदशाहुतिः २२
कृत्वा पूर्णां शिवेनैव निच्छिद्रपरिपूरणीम्
वन्दयित्वाथ तम्भस्मदेवेशमभिवन्द्य च २३
पूजयेत् पुनरप्येवं प्रतियामं पुनः पुनः
स्वयं कर्तृमशक्तश्चेत् स्वार्थमन्येव कारयेत् २४
नीत्वा जागरणं रात्रौ प्रभाते विमले ततः
कृतनित्यक्रियः पश्चात् स्नपनं विधिपूर्वकम् २५
देवं पूर्ववदभ्यर्च्य गुरुपूजान्ततो नयेत्

दक्षिणाञ्च ततो दद्यात् वित्तशाठ्य विवर्जितः २६
लिंगिनश्शिवभक्तांश्च ब्राह्मणानतिथीनपि
पूजयेच्छक्तितो भक्त्या पूजां सम्यक् समाप्य च २७
गत्वा बन्धूजनैस्सर्धं स्वगृहं प्रतिसाधकः
पादौ हस्तौ च संक्षाल्य पारणन्तु समाचरेत् २८
इति उत्तरकामिकाख्ये महातन्त्रे माघशिवरात्रिपूजाविधिः एकादशः पटलः

द्वादशे पटले फाल्गुनमासगन्धपूजाविधिः

उत्तरे फाल्गुने मासे सर्वगन्धैश्च पूजयेत्
विशेषस्नपनोपेतं विशेषयजनान्वितम् १
दिक्पालात्पलवृद्ध्या तु पलसाहस्रकावधि
प्रमाणञ्चन्दनस्योक्तन्तदर्धमगरुर्भवेत् २
तत्पादं वा तदर्धं वा कुंकुमं स्यात्तदर्धतः
पादमष्टांशकं वेष्टन्तदर्धं पादमेव वा ३
कर्पूरद्विगुणं वापि पिष्ट्वा सर्वञ्च धूपयेत्
वासितं गन्धपुष्पैश्च सर्वमन्त्रैश्च मन्त्रितम् ४
घृतकम्बलमार्गेण संस्कृतं होमवर्त्मना
गन्धैरालिप्य लिंगन्तु सपीठं शिवमन्त्रतः ५
सुगन्धपुष्पमालाभिर्भूषयेल्लिंगपिण्डके
कम्बलेन विना सर्वं घृतकम्बलवन्नयेत् ६
सर्वरोगसमुत्पत्तावद्भुते वाञ्छिताप्तये
आभिचारकृते दोषे विधानमिदमाचरेत् ७
इति उत्तरकामिकाख्ये महातन्त्रे फाल्गुनमास गन्धपूजाविधिः द्वादशः पटलः

## त्रयोदशे पटले चैत्रमास दमन पूजा विधिः

दमनारोपणं वद्ये चैत्रमासफलप्रदम्
हरकोपात् पुराजातः बैरवो दमनाह्वयः १
दान्तास्तेन सुरास्सर्वे दानवाश्च महाबलाः
प्रीतेनाथ शिवेनोक्तो विटपो भवभूतले २
दान्तनुत्वमनुप्राप्य मत्भोगाय भविष्यसि
पूजयिष्यन्ति येमर्त्या देवन्त्वत्पल्लवादिभिः ३
ते यास्यन्तिपरं स्थानन्दमनस्य प्रभावतः
ये पुनर्नुकरिष्यन्ति दामनं पर्वमानवाः ४
तेषान्तु चैत्रमासोत्थन्दत्तं पुण्यफलं मया
सप्ताम्यां वा त्रयोदश्यां गत्वा दमनकान्तिकम् ५
शोधयित्वास्त्र मन्त्रेण पजयेत्संहिताणुभिः
अथ संबोधयेद्दामं शिववाक्येन मन्त्रवित् ६
हरप्रसादसंलब्द त्वमन्त्रसन्निधी भव
शिवकार्यं समुद्दिश्यनेतव्योसि शिवाज्ञया ७
एवन्दमनमामन्त्र्य संरद्त्य भवनं व्रजेत्
यदिदूरं समानीय समूलम्मृत्तिकान्वितम् ८
पुनरारोप्य मृत्पूर्णे पात्रे संसिच्य वारिणा
ग्रहेप्यामन्त्रणं कार्यं पूर्वोक्तविधिना बुधः ९
सायाह्नसमये प्राप्ते विदध्यादधिवासनम्
आहृत्य यागवस्तूनि कृतस्नानादि सत्क्रियः १०
यथा विधिसमभ्यर्च्य भानुशंकरपावकान्
पश्चिमे देवदेवस्य तस्य मूलम्मृदायुतम् ११
सद्योजातेन मनुना दीपितं हृदयेन वा
वामेन शिरसा वापि नालन्धात्रीमथोत्तरे १२
दद्दिणे भस्मपात्रञ्च शिखया रूपिणाथवा

पुंसा वा वर्मणा प्राच्यां सपुष्पं दन्तधावनम् १३
फलंमूलेन गायत्र्या ऐशान्यां गन्धसंयुतम्
पञ्चांगमञ्जलौ कृत्वा दामं पुष्पाक्षतान्वितम् १४
विज्ञापयेज्जगन्नाथन्दमणारोपणं प्रति
आमन्त्रितोसि देवेश प्रातः काले मया प्रभो १५
कर्तव्यञ्च यथा लाभं पूर्णं पर्वतवाज्ञया
इति विज्ञाप्य देवस्य मस्तके कुसुमाञ्जलिम् १६
संयोज्य शिवमन्त्रेण विदधीत जपादिकम्
शेषं पात्रे विनिक्षिप्य द्वितीयेन पिधाय तत् १७
पवित्रकविधानेन कवचेनावकुण्ठयेत्
एवं सुरक्षितं कृत्वा शिवाय विनिवेदयेत् १८
हविस्तदनु भुञ्जीत यदि वा पवनाशनः
शिवाग्रे जागरं कृत्वा ध्यानगानजपादिभिः १९
प्रातस्नात्वा जगन्नाथमष्टपुष्पैस्समर्चयेत्
नित्यान्नैमित्तिकीञ्चैव कृत्वा पूजां विशेषतः २०
दमनैः पूजयेद्देवं पञ्चांगैरपि खण्डितैः
शेषमञ्जलिनादाय दूर्वापुष्पाक्षतान्वितम् २१
ध्यायन्नभिमुखन्देवं पञ्चवक्त्रं सदाशिवम्
आत्मविद्याशिवैस्तत्वैश्शिवाद्यैरीश्वरान्तकैः २२
पवित्रक विधानेन क्रमेण शिवमर्चयेत्
पूर्वोक्तैरात्मतत्वाद्यैः द्विचतुष्षट्स्वरान्वितैः २३
सबिन्दुकैश्च शान्तैश्च पवित्रमनुनाचरेत्
चतुर्थाञ्जलिमन्त्रस्तु प्रणवं शिवमन्त्रकम् २४
मखेश्वराय च मखं पूरयेति च वीप्सितम्
शूलपाणिश्चतुर्थ्यन्तन्नमस्कारान्तमाचरेत् २५
प्रणम्य शिवमभ्यर्च्य पावकञ्च विधानवित्

विज्ञापयेत् शिवं पश्चात् वाञ्छितार्थफलप्रदम्  २६
भगवन्नतिरिक्तं वा हीनं वा यन्मयाकृतम्
सर्वन्तदस्तु संपूर्णंपर्व दामनकं मम  २७
एवं दामविधिं कृत्वा कुर्वीत गुरुपूजनम्
परितोषकरं पश्चात् दीक्षितानपि तर्पयेत्  २८
ग्रहस्थो ब्रह्मचारीवा य एनं कुरुते विधिम्
पूजा जपादिकन्तस्य स फलञ्चैत्रमासजम्  २९
इति उत्तरकामिकाख्ये महातन्त्रे चैत्रमासदमनपूजाविधिः
त्रयोदशःपटलः

चतुर्दशे पटले चैत्रमास वसन्तोत्सवविधिः

तस्मिन् मासे विधेयस्याद्वसन्तोत्सव इष्टदः
पूर्वेद्युः कौतुकं बद्ध्वा नानावृक्षसमाकुले  १
नानामाला समाकीर्णे नानाफलविचित्रते
नानागानसमोपेते नानावाद्यसमन्विते  २
नानानृत्तसमायुक्ते नानायन्त्रसमन्विते
प्रकीर्णपुष्पप्रकारे नानागन्धसमायुते  ३
पताकाभिस्समाकीर्णे ज्वलद्दीपैश्च दीपिते
अास्थानमण्टपोपेते जलक्रिडासमन्विते  ४
देवोद्यानेनयेद्देवं सर्वालंकारसंयुतम्
ग्रामप्रदक्षिणोपेतं मन्दीभूते दिवाकरे  ५
परिवेषक्रमन्तस्मिन् कृत्वा देवं विशेषतः
पूजयेदुपचारैस्तु गन्धधूपसृगादिभिः  ६
सेवार्थमागतं स्मृत्वा वसन्तं कुसुमायुधम्
देवस्य दक्षिणे वामे नानागन्धादिभिः क्रमात्  ७
कुम्भयोरर्चयेत्तौ तु हेमवस्त्राद्युपेतयोः

स्थण्डिलद्वितये वापि नानापुष्पसमन्विते ८
वस्त्रेणाच्छाद्य नैवेद्यं पायसं विनिवेदयेत्
ताम्बूलन्दापयेदन्ते तोषयेत्तौ विशषतः ९
नृत्तवाद्यसमोपेतैर्दिव्यगानैर्व्यपोह्य च
एवं काले तु देवेशन्नयेद्देवालयं पुनः १०
स्नपनं कारयेच्चैव विशेषणार्चयेच्छिवम्
एवं देवं विशेषणाभ्यर्चयेच्छिवमादरात् ११
एवं यः कुरुते मर्त्यस्सर्वान् कामानवाप्नुयात् ११ १-२

इति उत्तरकामिकाख्ये महातन्त्रे चैत्रमासवसन्तोत्सवविधिः
चतुर्दशः पटलः

## पञ्चदशे पटले वेशाखमासशीतकुम्भविधिः

ततो वक्ष्यो विशेषेण शीतकुम्भमनुक्रमात्
विशाखर्क्षे तु वैशाखेऽवग्रहे वा विधीयते १
सर्वारिष्टविनाशार्थं सर्वाद्भुत निवृत्तये
प्रायश्चित्तादिके कार्ये ग्रामदाहादिके नयेत् २
चतुष्पाद्रोगसमये ज्वरमार्यादि संभवे
शीतकुम्भविधिः कार्यस्तत्तंद्दोषापनुत्तये ३
यज्ञयोग्यैः द्रुमैः कृत्वा त्रिपादीं लिंगमूर्धनि
वस्त्वंगुलं समारभ्यांगुलवृद्ध्याकरान्तकम् ४
यथान्तरं तथा कृत्वा संप्रक्षालयाम्बुना गुरुः
वस्त्रेणाच्छाद्य पादांश्च ब्रह्माणन्दक्षिणे यजेत् ५
विष्णुं वामे वृषं प्रष्ठे त्रिषु पादेषु देवताः
महामायान्नयसेदूर्ध्वे फलाकायां समन्ततः ६
एवं कृत्वा त्रिपादींश्च विन्यसेल्लिंगपूर्धनि
मण्डपे स्थण्डिलं कृत्वा वसुद्रोणादिशालिभिः ७

तण्डुलैस्तिललाजैश्च तत्र कुम्भन्निवेशयेत्
चतुर्द्रोणेन संपूर्णं श्रेष्ठं द्रोणत्रयेण तु ८
मध्यमं खारिसंपूर्णं कन्यसं सूत्रवेष्टितम्
पक्वबिम्बफलाकारं सवस्त्रं कूर्चसंयुतम् ९
कनकाब्जसमायुक्तं पञ्चरत्नोदरं शुभम्
पृष्ठे सुषिरसंयुक्तं हेमनालसमन्वितम् १०
एकद्वित्र्यंघ्रिसंयुक्तन्निष्कमानकृतेन तु
युगांगुलसदैर्घ्येण सूच्यग्रसुषिरेण तु ११
पिधानेन समोपेतं पल्लवेन समन्वितम्
उपकुम्भन्तदग्रे वस्त्रहेमादि संयुतम् १२
पृष्ठरन्ध्रविहीने तु दक्षिणे तस्य विन्यसेत्
आसनञ्च ततः कृत्वा मूर्तिमावाहयेत्घटे १३
ब्रह्माभिश्च कलोपेतैर्विद्यादेहं प्रकल्पयेत्
प्रणवं शिवमावाह्य गन्धाद्यैस्सम्यगर्चयेत् १४
चोपकुम्भे च क्रियामेनां समाचरेत्
गन्धोदं वा मधुपयस्सर्वार्थं विनियोजयेत् १५
प्रायश्चित्तेद्भुतेन्यस्मिन् दुरितानां क्षयार्थकम्
पञ्चगव्यं विनिक्षिप्य शुद्धोदकमथापि वा १६
गन्धं स्याच्चन्दनं भस्म सहितं वाथ कल्पयेत्
अथवाचमनीयार्थं कल्पितो गन्ध एव वा १७
नीरोमजन्तुकं द्रव्यं उपकुम्भे विनिक्षिपेत्
हृदा संपूज्य गन्धाद्यैस्ततो होमं समाचरेत् १८
नवपञ्चैककुण्डेषु समिदाज्यान्न संयुतम्
तिललाजसमायुक्तं मधुसस्येन्द्रसंयुतम् १९
समिधोवञ्जुलोत्थास्युः सर्वावारुणमन्त्रतः
आप्येनामृतबीजेन संपुटेन शिवेन च २०

आप्याधारणयोपेतं सहस्रं वा तदर्थकम्
शतमष्टोत्तरं वापि प्रतिद्रव्यन्तु होमयेत् २१
आप्याणुसंपुटं मूलं जपेत्तत्संख्यकं यथा
जप्तव्या वारुणा मन्त्रा मन्त्रजापिभिरिष्टिभिः २२
आप्यायस्वेति वक्तव्या चतुर्वेदिभिरादरात्
कृतस्नानैर्बिनीतैश्च हविष्यान्नाशनैर्द्विजैः २३
अनन्यमानसैश्शान्तैराचार्याज्ञानुपालनैः
शिवदीक्षासमोपेतैः सर्वैर्वृष्ट्यभिकांक्षिभिः २४
सर्वं देवालयं वारिसेकैस्सिञ्चेदहर्निशम्
तत्काले पातयेत् क्षीरं गोस्तनेभ्यः विशेषतः २५
सहस्रसंख्यकावास्युः अर्धसंख्या समन्विताः
शतसंख्याश्च पाताश्चेत् पुष्टावृष्टिर्भविष्यति २६
एवं प्रतिदिनं कार्यं होमकाले द्विजोत्तमाः
पूजायाञ्चाथ पूर्णायां वारुणीन्धारणां द्विजाः २७
ध्यात्वाऽमृतमयम्मूलमुच्चरन्वौषडन्ततः
कुर्याच्छंखस्वनोपेतं प्रत्यहं चैवमाचरेत् २८
नित्यपूजावसाने तु नैमित्तिकमुपक्रमेत्
नैमित्तिकं महच्चेत्तु महदादौ समाचरेत् २९
नानागन्धसमोपेतैश्शीतोदैस्स्थापनान्वितैः
संस्थाप्य देवदेवेशममृताप्लावनं स्मरन् ३०
चन्दनागरुकर्पूरकुंकुमैः प्रचुरैर्गुरुः
गन्धपुष्पैरनेकैश्च तत्क्षणं प्रतिबोधितैः ३१
कृष्णागरूद्भवैर्धूपैः हृष्टराज्यप्रकल्पितैः
कर्पूरवर्तिभिर्दीपैः पायसैः प्रचूरैः क्षणात् ३२
नवभाण्डप्रक्ळ्प्तैश्च नैवेद्यैश्शालिकल्पितैः
पानीयैश्शीतलैर्गन्धैः मृष्टैर्नूतनभाण्डकैः ३३

ताम्बूलैर्गौरपत्रैश्च सुगन्धैः क्रमुकोद्भवैः
मुखवाससमोपेतैः गानैर्वाद्यैश्च नर्तनैः  ३४
नवनाट्यरसोपेतैः स्तोत्रैर्वेदस्वरैरपि
जापिभिर्जयशब्दैश्च नमस्कारैरनेकशः  ३५
पूजयेत् प्रत्यहं देवं यावत्स्यात् कांक्षितं फलम्
तदन्ते होमकर्मेष्टं प्रत्यहं विधिरीतितः  ३६
प्रथमेह्नि विशेषोऽयं पूर्णान्ते तु घटद्वयम्
संग्राहयित्वादोस्थञ्च शिरस्थं वा प्रदक्षिणम्  ३७
आभ्यां कृत्वा सुधाम्नस्तु च सुवारके
आचार्यस्यानुकूलर्क्षे यजमानस्य चैवहि  ३८
सितिथौ च सुलग्ने वा रोपयेच्छिवमुच्चरन्
घटं ससुषिरन्तस्मिन् नवकुम्भस्थितञ्जलम्  ३९
शिवमन्त्रं समुच्चार्य ध्यात्वा चामृत धारणम्
निक्षिपेदुत्तरास्यस्तु त्रिपाद्युपरिमध्यगम्  ४०
तोयशेषन्नयेन्नित्यं यावत्कर्मप्रसिद्ध्यति
सप्ताहं वा द्विसप्ताहं त्रिसप्ताहन्तु मासकम्  ४१
द्विमासंन वा त्रिमासं वा विधिमेवंन समाचरेत्
आचार्यं पूजयेदादौ वस्त्रैः पञ्चांगभूषणैः  ४२
दक्षिणान्दापयेदादौ दशनिष्कादिकान्नृपः
अन्ते च द्विगुणां पूजां दक्षिणामपि मानवाः  ४३
अन्येषामपि सर्वेषां हेमवस्त्रांगुलीयकान्
निष्कैकन्दक्षिणोपेतां दद्याच्छ्रद्धासमन्वितम्  ४४
प्रत्यहं भोजनार्थन्तु तण्डुलव्यञ्जनान्वितम्
ताम्बूलञ्च नृपस्तेभ्यः दद्याच्छ्रद्धासमन्वितम्  ४५
नित्यञ्च भोजनं कार्यं भक्तानां योगिनामपि
दीनानाथ जनानाञ्च प्रत्यहं भोजनं भवेत्  ४६

स्नपनं कारयेदन्ते प्रचुरन्दापयेद्धविः ४६ १-२
इति उत्तरकामिकाख्ये महातन्त्रे वैशाखमासशीतकुम्भविधिः
पञ्चदशः पटलः

यज्ञयोग्यद्रुमैः कृत्वा त्रिपादीं लिङ्गमूर्धनि
वस्त्वङ्गुलं समारभ्याङ्गुलवृद्ध्याकरान्तकम्
यथान्तरं तथा कृत्वा सप्रक्षाल्यांबुनागुरुः
वस्त्रेणाच्छाद्यपादां ब्रह्माणां दक्षिणे यजेत्
विष्णुं वामे वृषं पृष्ठे त्रिषु पादेषु देवताः
महामायाः न्यसेदूर्ध्वफलकायां स्वमन्त्रतः
एवं कृत्वा त्रिपादीं च विन्यसेल्लिंग मूर्धनि
चतुर्द्रोणेन संपूर्णं श्रेष्ठं द्रोणत्रयेण तु
मध्यमं खारि संपूर्णं कन्यसं सूत्रवेष्टितम्
पक्वबिम्बपलाकारं सवस्त्रंकूर्चसंयुतम्
कनकाब्ज समायुक्तं पञ्चरत्नोदरं शुभम्
पृष्ठे सुषिरं संयुक्तां हेमनाल समन्वितम्

षोडशे पटले ज्येष्ठमासफलपूजाविधिः
ज्येष्ठमासे तु मूलर्क्षे पूजयेत् स्वादुभिः फलैः
विशेषस्नपनोपेतं पञ्चामृत समन्वितम् १
विशेषपूजा संयुक्तं पायसेन समन्वितम्
विशेषहोम संयुक्तं समिदाज्यान्नकैस्सह २
नानाफलसमायुक्तैर्द्रव्यैः पूर्णां विधाय च
पीठादि लिङ्गमूर्धान्तं फलैर्मूलेन पूरयेत् ३
कृत्वान्तर्हितलिङ्गं तु तद्बहिः पूरणं तु वा
वस्त्राभ्यां वेष्टयेल्लिङ्गं पीठं कवचनमन्त्रतः ४

सन्ध्यन्तरे परे वाह्नि तानि तस्माद्बहिर्नयेत्
क्रियान्ते पूजयेत् कर्ता देशिकं वस्त्रकाञ्चनैः ५
यद्यदिष्टफलं कर्तुस्तत्तच्छीघ्रं भविष्यति ५ १-२
इति उत्तरकामिकाख्ये महातन्त्रे ज्येष्ठमास फल पूजाविधिः
षोडशः पटलः

सप्तदशे पटले आषाढ मास पूर्वफल्गुनी पूजा विधिः
आषाढे मासि नक्षत्रे पूर्वफाल्गुन संज्ञके
आश्वयुज्यथ वा मासे क्रियामेनां समाचरेत् १
कौतुकं बन्धयेद्रात्रौ देव्याः पूर्वोक्तवर्त्मना
देवदेव्यौश्च वा प्रातः कन्याभ्यः काञ्चनादिकम् २
वस्त्रं च भोजनं दत्वा देव्याः क्षीरं निवेदयेत्
ग्रामप्रदक्षिणं कुर्यात् सर्वालङ्कार संयुतम् ३
तत्काले दापयेन्मुद्गाङ्कुरं लक्षण संयुतम्
ग्रामप्रदक्षिणात्पूर्वं नैवेद्यं दापयेन्न वा ४
आस्थान मण्डपं नीत्वा परिवेषक्रमं नयेत्
रात्रिचूर्णं च तैलं च चूर्णोत्सवविधानतः ५
दद्याद्देवाय देव्यै च जयेभ्यस्तदनन्तरम्
ताम्बूलसहितं नानाव्यञ्जनं तण्डुलान्वितम् ६
हित्वा वा चूर्णकार्यं च तण्डुलादिप्रदानकम्
त्रिशूलेन समायुक्तं देवीं नद्यादिकं नयेत् ७
स्थण्डिलद्वितयं कुर्याच्छालिभिर्विधिना गुरुः
एकत्र शूलं संस्थाप्य देव्याः पूर्वं तदग्रके ८
संस्थाप्य तान्घटान् सम्यक् स्नपनोक्तविधानतः
सक्तुभिश्च फलोपेतैस्तान् संपूज्य हृदा गुरुः ९
तैः संस्नाप्य च तच्छूलमवगाहनमाचरेत्

तीर्थमध्ये जनैस्सार्धं प्रविशेदालयं प्राति १०
तीर्थकर्मविहीनं वा ग्रामादिभ्रमणावधि
अास्मिन्दिने वा निर्वाणदीपमम्लानमालया ११
प्रतिसंवत्सरं कुर्याद्बलिदान समन्वितम्
अथवा बलिहोमाभ्यां युतं रात्रौ दिवापि वा १२
बेरप्रदक्षिणं कृत्वा सर्वालङ्कार संयुतम्
नानाभक्तजनैस्सार्धं नानास्वादुफलानि च १३
गुडखण्ड समोपेतं सक्तु संदापयेद् गुरुः
नानापूप समायुक्तं नानाफल समन्वितम् १४
जलतीरे निवेद्यैशे गुडादि फलसक्तुकम्
विमोच्य देवदेवाग्रे ततस्तीर्थं नवोदके १५
विधाय केवलं वापि त्रिशूलेन समन्वितम्
नीत्वालयं ततः कुर्यात् स्नपनं पूजया सह १६
प्रभूतहविषोपेतं मुखवासेन संयुतम्
ताम्बूलेन तदन्ते तु पूजयेद्गुरुमादरात् १७
वस्त्रहेमाङ्गुलीयाद्यैर्दक्षिणां दापयेत्तः
सर्वपापविनाशार्थं सर्वारिष्टनिवृत्तये १८
सर्वाभीष्ट प्रसिध्यर्थं सर्वकार्याथ सिद्धये
विधानमेतत् कर्तव्यं देव्यास्सन्तुष्टिकारणम् १९

इति उत्तरकामिकाख्ये महातन्त्रे-अाषाढ मास पूर्वफल्गुनी पूजा विधिः सप्तदशः पटलः

अष्टादशे पटले श्रावणमासे पवित्रारोहण विधिः

दुरितस्य विनाशार्थं संवत्सरकृतस्य तु
पवित्रकमहं वक्ष्ये श्रूयतां मुनि पुङ्गवाः १
प्रायश्चित्तमकुर्वाणो मन्त्री विधि विलङ्घनात्

सिद्धि भ्रंशमवाप्नोति देशिको रोग भाग् भवेत् २
पुत्रको भुक्ति भांङ्नस्यात् जन्मनैकेन रोधनात्
समयी समयस्थोऽपि नैव यस्मात् पवित्रकम् ३
विधातव्यं प्रयत्नेन येन केन प्रकारतः
प्रत्यहं वाङ्मनः कायव्यापारजनितादलम् ४
पतनात् त्रायते यस्मात् तस्मादेदत् पवित्रकम्
आषाढादि त्रयोमासाः ज्येष्ठ मध्यमकन्यसाः ५
अश्विनी कृत्तिकामासावथवा संप्रकीर्तितौ
पूर्व पक्षे चतुर्दश्यामाषाढे तु पवित्रकम् ६
इतरेषु च मासेषु पक्षयोश्शुक्लकृष्णयोः
चतुर्दश्यामथाष्टम्यां पवित्रं विधिनाचरेत् ७
कृत्तिकादीपतः पश्चान्नैव कार्यं पवित्रकम्
शुक्लपक्षे गृहस्थस्य यतेरुभय पक्षयोः ८
कर्तुः कारयितुश्चानुकूलर्क्षं वा न वा मतम्
क्षौमकार्पासजं सूत्रं मौञ्जं वा तदसंभवे ९
दर्भं सवत्कलोत्थं वा समाहृत्याधिवासयेत्
त्रिगुणं त्रिगुणीकृत्य शोधयेदस्त्रमन्त्रतः १०
रोमाद्यं शुद्धतोयैश्च क्षालयेदस्त्र मन्त्रतः
शुष्कं कृत्वा हृदा तेन पवित्रं कारयेद्गुरुः ११
शक्तयो नव वामाद्या नव सूत्राधिपा मताः
दिगुणास्तन्तवो हस्ते दशवृद्ध्या ततः क्रमात् १२
शतमष्टोत्तरं तेषां तन्तूनामुत्तमोत्तमम्
द्वादशोत्तरया वृद्ध्या द्वादशाभ्यस्तदन्तिकाः १३
तन्तवो वाथ संसिद्धाः कन्यसादिषु सिद्धिषु
यवीयसां कलासंख्या मध्याना वर्ण लक्षिताः १४
ज्येष्ठानां पदसंख्याता स्तन्तवो मानुषे मताः

स्वायं भुवादिलिङ्गेषु बाणे वा रत्नजेऽपि वा १५
स्थण्डिले मण्डलेवापि चले वा प्रतिमासु च
संख्यास्सर्वाश्च संग्राह्यास्समा वा विषमाश्च वा १६
समा एव गृहस्थस्य परिवारामरादिषु
तथैवहीन वित्तेषु लिङ्गादिषु मुनीश्वराः १७
एकाद्येकैक वृद्ध्यातु तन्तवो द्वादशान्तकाः
ग्रन्थयस्तन्तु संख्याताः स्निग्ध गर्भा नवा मताः १८
यथेष्ट ग्रन्थतो वापि समास्सर्वत्र संस्थिताः
एकादित्र्यंगुलं वापि ग्रन्थिमानमिहागमे १९
ग्रन्थयो वेष्ट देशेऽथ विधातव्या विचक्षणैः
रक्त चन्दन काश्मीर गैरिकागरुचन्दनैः २०
कुष्ठकर्पूर संयुक्तं हरिद्राकृष्ण गन्ध युक्
रञ्जयेद्धृदयेनैव रक्तसूत्रादिभिस्तु वा २१
त्रितयं मूर्ध्नि कर्तव्यमात्मविद्याशिवात्मकम्
पिण्डिकास्पृक् चतुर्थं तु पवित्रं सर्व तात्विकम् २२
यज्ञसूत्राख्यमाला च बाहुमला ततः परम्
मुखलिङ्गे विधेयास्यात् सकलेऽप्यथवा मताः २३
आजानुशोभिव्यक्तेषु त्रिपूर्वं स्वेष्टतन्तु युक्
यन्त्रलिङ्ग प्रमाणं वा पुष्पलिङ्गमितं तु वा २४
क्षुद्रलिङ्गे पवित्रं स्यात् स्थण्डिलादौ यथामतम्
आशृङ्गमेकं वृषभे ककुदः खुरगं परम् २५
पवित्रमेकं सर्वेषामावृतानां विधीयताम्
एकैक मेव दातव्यं चण्डेश क्षेत्र पालयोः २६
क्षेत्रनेभ्यां लोकभृद्ध्यस्सूत्रमेकं प्रदक्षिणम्
यागधामवृषस्थान प्रासादालय संश्रयान् २७
कारकाणि च सर्वाणि त्रिवृत्सूत्रेण वेष्टयेत्

एवं निश्चित्य पूर्वेद्युरधिवासनमारभेत् २८
प्रासाद स्याग्रदेशे वा तद्वामे दक्षिणेऽपि वा
मण्डपे पञ्चहस्तादि चतुर्विंशत्करान्तके २९
षोडशस्तंभसंयुक्ते रविस्तंभ युतेऽपि वा
मध्यमे वेदिकायुक्ते सर्वलक्षण सम्युते ३०
त्रिभागायामयुक्ते वा विंशति स्तंभ संयुते
मण्डपे पूर्व क्ल्प्से वा द्विगुणायतवेदिके ३१
तत्समन्तात् सुसंक्ल्प्स नव पञ्चैक कुण्डके
तत्संख्ये स्थण्डिलेवापिवेदिकारोहितेऽपिवा ३२
पश्चिमे मण्डलं कुर्यात् पवित्रं प्राचि विन्यसेत्
कृतशौच विधस्नान सन्ध्यावन्दन तर्पणः ३३
कृतानित्यार्चनो मन्त्री सूर्यार्चन समन्वितः
अविसृज्य रविं शुद्धो मन्त्रसन्नद्ध देहयुक् ३४
परिगृह्य भुवं द्वारं द्वारपान् वास्तुनायकम्
लक्ष्मी यागेशवर्धन्यौ लोकपान् गणपं गुरून् ३५
इष्ट्वा संप्रार्थ्यतत्पश्चात् मण्डलेऽपिचशङ्करम्
संपूज्य विधिवद्देव समीपे स्वासनेस्थितः ३६
आसनार्चनमारभ्य कुर्यादावाहनान्तकम्
कर्म पञ्चामृतोपेतं विशेषस्नपनान्वितम् ३७
नानागन्धान्वितां नाना भक्ष्यभोज्यान्नसंयुताम्
पूजां विशेषतः कृत्वा गत्वा कुण्डान्तिकं गुरुः ३८
कुण्डसंस्कारमारभ्य पूर्णान्तं होममाचरेत्
समिदाज्यचरुल्लाजां स्तिलसस्येन्द्र संयुतान् ३९
पलाशोदुम्बरावत्थवटाः प्रागादि दिक्षु च
शमीखादिरश्रीवृक्षप्लक्षाः स्युःवह्निकोणतः ४०
प्रधानेतु पलाशस्स्याच्छतं वार्धं शिवस्य तु

शिवाद्दशांशतोऽङ्गानां कुराडे प्राधानिके मते ४१
तदर्धमन्य कुराडेषु नरादिषु हृदादुषु
स्थालीपाकहविः कृत्वा तद्धृता विभजेत् त्रिधा ४२
शिवांशमग्नि भागं च मध्वाज्याभ्यां तु मिश्रितम्
कुर्यादात्मीय भागं तु केवलेन घृतेन च ४३
हृदा देवांशमभ्यर्च्य तमादाय शिवान्तिकम्
गत्वा संपूज्य देवेशं व्रताङ्गानि निवेदयेत् ४४
दन्त काष्ठं न्यसेत् प्राच्यां विध्युक्तं पुरुषं स्मरन्
भस्मदक्षिणतश्शुद्धपात्रे ऽघोरेण मन्त्रवित् ४५
पश्चाद्दद्यान्मृदं शुद्धां सद्योजातं च तां स्मरन्
धात्रीफल मुदक् पूर्वे पञ्च भक्ष्यं निवेदयेत् ४६
होमद्रव्याणि सर्वाणि सकुशान्यपरानने
दराडाक्षमालाकौपीन भिक्षापात्राणि दक्षिणे ४७
रोचनं कुङ्कुमं तैलं शलाकां केशशोधिनीम्
दर्पणं कर्त्रिकां दन्त नखशोधन मञ्जनम् ४८
तत्पात्रमपरं दद्याद्वाम देव मनुस्मरन्
तांबुलं भस्म संमिश्रं दद्यात्तत्पुरुषं स्मरन् ४९
ऐशान्यामासनं छत्रं पादुके योगपट्टिकाम्
स्थरािडले सूत्रनिकटे परितशिचाधिवास्य वा ५०
अस्त्रेण प्रोक्षितं वर्म कुरािठतं हृदयार्चितम्
धेनु मुद्रामृती भूतं शिवांशं विनिवेदयेत् ५१
ब्रह्मभिर्देव देवाय पवित्राराययाहरेत्ततः
स्थरािडलं वेदिकोर्ध्वे स्यात् अष्टद्रोणेन शालिना ५२
तदर्धतराडुलोपेतं तिल लाजसमन्वितम्
तत्र संस्थापयेत् पात्रे पवित्राराय्यऽथ देशिकः ५३
मराडले वेदिकोर्ध्वे चेदत्र कुंभान्तिकेऽपि वा

संस्थाप्याघ्योदकेनैव प्रोन्दय संहितयालभेत् ५४
मृगाजिनादिनाच्छाद्य स्थापयेत् पावकान्तिके
संवत्सरात्मकं सर्वकृत्य साक्षिणमव्ययम् ५५
गोप्तारं संश्रयं कर्म फलप्राप्तिनिबन्धनम्
अनुस्मरन् शिवं ब्रह्म षडङ्गं शिवमन्त्रतः ५६
त्रिस्सप्तकृत्वः संपातं तथैव जुहुयात्ततः
दत्वा गन्धपवित्रं तु भानोराचम्य देशिकः ५७
याग धामवृषस्थान प्रासादानल संश्रयान्
कारकान् पञ्च सूत्रेण वर्मणा परिवेष्टयेत् ५८
दद्याद्गन्ध पवित्रं तु नन्द्यादिभ्यः प्रदक्षिणम्
प्रविश्य पूर्ववच्चान्तः ब्रह्मणे च पवित्रकम् ५९
तदेतानि पवित्राणि भगवन् संस्कृतानि हि
अर्पयामि घटस्थाय शिवायाध्येषये दिति ६०
समर्प्य रक्षणायास्मै तेभ्यो गन्धपवित्रकम्
आदौ वा कुंभवर्धन्योर्दत्वायायाच्छिवान्तिकम् ६१
स्वमूर्तौ गुरु पङ्क्तौ च दद्याद् गन्ध पवित्रकम्
एक ग्रन्थि समायुक्तमल्प तन्तु विनिर्मितम् ६२
धूपितं पुष्पसंयुक्तं समादायाञ्जलौ गुरुः
आमन्त्रणपवित्रं तत् सुधामुद्रा प्ररोचितम् ६३
शिवायारोप्य तन्मूर्ध्नि रेचकेन शिवाणुना
आमन्त्रणात्मकं मन्त्रं पठेद्देवेश सन्निधौ ६४
समस्तविधिविच्छिद्र पूरणेशमखंप्रति
प्रभो वामन्त्रयामि त्वां त्वदिच्छावाप्तिकारकः ६५
तत्सिद्धि मनुजानीहि यजतश्चिदचित्पते
सर्वथा सर्वदा शम्भो नमस्तेऽस्तु प्रसीद मे ६६
जप्त्वा निवेद्य देवाय स्तुत्वा नत्वा क्षमापयेत्

दद्यादाशाधिपालानां तदस्त्राणां पवित्रकम् ६७
दत्वा वह्निस्थ देवाय तृतीयांशं चरोर्गुरुः
आमन्त्रण पवित्रं च दद्यात्तस्यैव पूर्ववत् ६८
इन्द्राय संगृहाणेति नत्यन्तं प्रणवादिकम्
अन्येषां चैव मूर्तिना- क्रमाद्दद्यात् बहिर्बलिम् ६९
वायव्यांक्षेत्रपालाय दत्वाचम्य बलिं पुनः
प्रायश्चित्तं ततो हुत्वा पूर्णां दत्वा ततो गुरुः ७०
भूर्भुवस्वः पदैर्व्यस्तैसमस्तैरपि होमयेत्
अग्नये त्वथ सोमाय ताभ्यां स्विष्टकृदा हुतिम् ७१
स्वाहान्तैर्दीप पूर्वैस्तु हुत्वा मन्त्रैर्यथादितैः
मण्डलस्थ शिवेनैव पावकस्थं शिवं ततः ७२
नाडी सन्धानमार्गेन योजयेद्भावयेच्छिवम्
सिद्धान्त पुस्तके दत्वा स्वगुरौ च पवित्रकम् ७३
निस्सृत्य यागधाम्नस्तु समाचम्यगुरुश्शुचिः
पञ्चगव्यं चरुं दन्त धावनं च क्रमाद्भवेत् ७४
आचम्य पुनरप्यन्ते स्वपेच्छिवमनुस्मरन्
अथ प्रातः कृतावश्यस्नान सन्ध्याणुतर्पणः ७५
अविसर्जित देवेशात् पवित्राण्यवरोपयेत्
तानीश मण्डले पात्रे चण्डेशार्थं प्रकल्पयेत् ७६
दत्वाष्ट पुष्पकं देवे लिङ्गाद्देवं विसर्जयेत्
समाचम्य कृतन्यासस्सामान्यार्घ्यकरो गुरुः ७७
कृत्वा नित्यविधिं सम्यगाचान्तो मन्त्र विग्रहः
द्वारद्वाराधिपानिष्ट्वा प्रविश्यास्त्राणि कुंभयोः ७८
दिक्पालानां च सास्त्राणां क्रमेणाभ्यर्चनं नयेत्
स्वासने दीपसंक्ळ्प्ते सैम्यास्योर्ध्व स्थित स्थितिः ७९
मन्त्रकायो विशेषार्घ्यद्रव्य शुद्धि समन्वितम्

शिवहस्तं च संकल्प्य पञ्चगव्यं च पूर्ववत्  ८०
विशेषस्नपनोपेतं पञ्चामृतसमन्वितम्
पञ्चगव्य समायुक्तं विशेषेण शिवं यजेत्  ८१
जपं कृत्वा समावेद्य यायात् कुण्डान्तिकं गुरुः
कुण्डमस्त्रेण संप्रोक्ष्य मेखलापरिधिस्थितान्  ८२
सम्पूज्य स्रुक्स्रुवावाज्यं संस्कृत्य च विधानवित्
दत्वा पूर्णाहुतिं देवमावाह्याभ्यर्च्य तर्पयेत्  ८३
प्रायश्चित्तं ततो हुत्वा पूर्णाहुतिमथाचरेत्
दत्वा भानोः पवित्रं तु समाचम्याणुदेहयुक्  ८४
नन्द्यादिभ्यो पवित्रं तु दत्वान्तस्संप्रविश्य च
ब्रह्मणे कुम्भवर्धन्योः क्रमाद्द्यात् पवित्रकम्  ८५
गत्वा देवान्तिकं स्वस्य चासने सूपविश्य च
कृत्वा विशेष पूजां च विभवस्यानुसारतः  ८६
स्वमूर्तौ गुरु पङ्क्तौ च दत्वा सूत्रं शिवं स्मरन्
वर्षर्तुमास पक्षाहर्नाडी प्राणादि विग्रहम्  ८७
सर्वेन्द्रिय शरीरर्थ व्यवहारैक कारणम्
कृताकृत समुत्सृष्टक्लिष्ट कर्मैक साक्षिणम्  ८८
क्षेत्रगोप्तारमीशानं शरण्यं शुचिमानसः
प्रब्रूयादीश्वराशास्यस्सपवित्रकरो विभुम्  ८९
कालात्मना त्वयादेव यद्दृष्टं मामके विधौ
कृतं क्लिष्टं समुत्सृष्टं हृतं गुप्तं च मत्कृतम्  ९०
तदस्तु क्लिष्टमक्लिष्टं कृतं पुष्टमसत्कृतम्
सर्वात्मनामुना शम्भो पवित्रेण त्वदिच्छया  ९१
पूरयेति द्विरुच्चार्य मखव्रत फलं ततः
नियमेश्वरायेति पदं स्वाहेत्यन्तं समुच्चरन्  ९२
आत्मतत्त्वाधिपतये शिवाय नम इत्यपि

तत्वविद्याशिवाख्यं च मुक्तिकामपदं पठेत् ९३
पवित्रकत्रयंमूर्ध्नि तद्धोगी शिवादिकम्
शिवाणुमादावुच्चार्य शिवविद्यात्मकं पुनः ९४
सर्वतत्त्वेश्वरायेति दद्याद्गङ्गावतारकम्
पुष्पाञ्जलिपुटो भूत्वा भक्त्या विज्ञापयेत्प्रभुम् ९५
त्वं गति स्सर्वभूतानां संस्थितत्वं चराचरे
अन्तश्चारेण भूतानां द्रष्टात्वं परमेश्वर ९६
कर्मणा मनसा वाचात्वत्तो नान्योगतिर्मम
मन्त्रहीनं क्रियाहीनं द्रव्य हीनं च यत्कृतम् ९७
जपहोमार्चनाहीनं कृत्यं नित्यं मया तव
अकृतं वाक्यहीनं च तत्पूरय महेश्वर ९८
सुपूतत्वं सुरेशान पवित्रं पाप नाशनम्
त्वया पवित्रितं सर्वं जगत्स्थावरजडगमम् ९९
खण्डितं यन्मया देव व्रत वैकल्य योगतः
एकी भवतु तत्सर्वं तवाज्ञासूत्रगुंभितम् १००
जपं कृत्वा निवेद्यास्मै स्तुत्वा नियममीश्वरात्
गृह्णीयात्प्रणतो भक्त्याचतुस्त्रिद्व्येकमासकम् १०१
अर्धमासं च सप्ताहं पञ्चाहं तु त्र्यहं तु वा
अथवैकाह मारब्ध कर्मान्तं नियमं नयेत् १०२
एक भुक्त्यादि यत्सर्वं शक्त्यानुष्ठेय मीश्वरात्
व्रतं गृहीत्वा कर्तव्यं यावत्सूत्रा वरोहणम् १०३
सास्त्रेभ्यो दिक् पतिभ्यस्तु सूत्रं मत्वाग्निसंस्थिते
शिवे पवित्रं तुर्यं तु दत्वा व्याहृतिभिर्गुरुः १०४
वह्निं संरोध्य स्विष्टान्तं गुत्वान्तस्संप्रविश्य च
देवं सम्पूज्य गुरवे सैद्धान्ते पुस्तकेऽपि च १०५
दत्वा पवित्रं दिक्पालबलिमाचम्य देशिकः

प्रायश्चितं ततो दत्वा पूर्णां वै छिद्र पूरणीम् १०६
मण्डलस्थं च सम्पूज्य ततो देवं क्षमापयेत्
तदन्ते भोजनाच्छाद मात्रोपकरणादिभिः १०७
सम्पूज्य दीक्षितान्ब्रूयात् प्रीयतां मे सदाशिवः
लिङ्गात्पवित्रमुद्वारस्य निर्माल्यापनये कृते १०८
स्नातेऽर्चिते तदारोप्य मा विसर्ज्य दिने दिने
ब्रतान्ते प्राग्वदाभ्यर्च्य चातीतदिनवच्छिवम् १०९
व्रतं निवेदयेदुक्त्वा ममास्तु फल साधकम्
भुक्तिकामो व्रती कामेकर्मबन्धक इत्यपि ११०
मन्त्र तर्पण कर्मान्तं कृत्वा निष्कृतिमाचरेत्
भसितं वन्दयित्वाथ वह्निस्थं योजयेच्छिवे १११
वह्नेर्मन्त्रांश्च संहृत्य नीत्वा तां द्वादशान्तिके
हृदये संनिवेश्याग्निं विसृत्योद्वारस्य विष्टरात् ११२
परिधींश्च बलिं दत्वा समाचम्य गुरुश्शुचिः
शिवकुंभास्त्रवर्धन्योर्मनून् संहृत्य योजयेत् ११३
ईशे सापेक्षमुक्त्वैवं क्षमस्वेति विसर्जयेत्
दिक्पालानस्त्र संयुक्तान् द्वारपान् द्वारसंस्थितान् ११४
रव्यन्तं तु विसृज्याथ पवित्राणि महेश्वरात्
आदाय सति चण्डेशे तस्मै दद्यात्पवित्रकम् ११५
निर्माल्यादिकमन्यं च पवित्रं न कृतं यदि
लक्षं त्वघोरमावृत्या दशांशं होममाचरेत् ११६
पवित्रं नित्य पूजाङ्गं पुष्याद्यैः परिकल्पयेत्
दत्ते नित्यपवित्रे वा सांवत्सरिकमाचरेत् ११७

इति उत्तरकामिकाख्ये महातन्त्रे श्रावणमासे पवित्रारोहण विधिः
अष्टादश पटलः

## एकोनविंशत्तमे पटले नवनैवेद्यविधिः

अतः परं प्रवक्ष्यामि नवनैवेद्यलक्षणम्
मार्गशीर्षमथाषाढं माघमासं विवर्ज्य च १
अन्येषु सर्वमासेषु नवनैवेद्यमाचरेत्
निश्चित्य शुभनक्षत्रं तत्पूर्वेऽङ्कुरमाचरेत् २
विना वाङ्कुरकार्यं तु सुमुहूर्ते सुलग्नके
शङ्खदुन्दुभिनादैश्च गीतनृत्तादिमङ्गलैः ३
नानाध्वजवितानैश्च धूपदीपाङ्कुरैर्युतम्
मम भक्तजनैस्सार्धं त्रिशूलेन समन्वितम् ४
चण्डेश्वर समायुक्तं देवक्षेत्रे समाविशेत्
चण्डेशास्त्रं विना वापि क्षेत्रं गत्वा विचक्षणः ५
हविषा दधियुक्तेन भूतानां तु बलिं क्षिपेत्
पूर्वाद्यष्टदिशास्वेवं गन्धपुष्पादि संयुतम् ६
सलक्षणेन दात्रेण पूजितेनैव हेतिना
प्राङ्मुखोदङ्मुखो भूत्वा शस्त्रमन्त्रमनुस्मरन् ७
शूकं लूत्वा युग्मे तु स्थलिकोर्ध्वे निवेशयेत्
तच्छूकेन समायुक्तं नवव्रीहि समायुतम् ८
तण्डुलैश्च समोपेतं नानाव्यञ्जन संयुतम्
नालिकेरफलोपेतं नवपूगफलान्वितम् ९
मरीचगुलखण्डाद्यैः इक्षुभिश्च समन्वितम्
नानाशाकसमायुक्तं नानाव्यञ्जनसंयुतम् १०
पृथक्कन्दफलोपेतैः पूजाद्रव्यैस्तथाविधैः
आश्चर्यकारकैरन्यैस्सर्वातोद्य समन्वितम् ११
नृत्तगानसमायुक्तं नानाध्वजसमन्वितम्
नानाछत्रसमायुक्तं प्रविश्य नगरादिकम् १२
ग्रामं प्रदक्षिणं कृत्वा प्रविशेदालयं प्रति

पूर्णकुम्भसमायुक्तं नानदीप समन्वितम्  १३
कदलीस्तम्भसंयुक्तं नानामङ्गलमण्डितम्
विमोच्य व्रीहिं शूकेभ्यश्शोषयेदातपेन वै  १४
वेत्रादिनिर्मिते पात्रे भूतले केवलेऽपि वा
गोमयालेपिते पिष्टचित्रिते दीपसंयुतम्  १५
चूर्णोत्सवक्रमप्रोक्तमार्गेणाकुट्य वर्जयेत्
तुषादीन तण्डुलाञ्शुध्दान् सङ्गृह्य चालयेत्ततः  १६
मरीचजीरकोपेतं गुलसारसमन्वितम्  १६ १-२
नालिकेरफलोपेतं संस्कुर्यात्तण्डुलं पुरा
स्नपनं कारयेद्देवं भूषयेद्भूषणार्हकैः  १७ १-२
मुहूर्ते समनुप्राप्ते व्रीहिनास्तीर्य भूतले
पटं तदूर्ध्वे विन्यस्य रम्भापत्राणि विन्यसेत्  १८ १-२
अस्त्रतोयेन संप्रोक्ष्य मृत्युञ्जयमनुस्मरन्
तण्डुलं तत्र निक्षिप्य गुलतोयेन सेचितम्  १९ १-२
कवचेनावकुण्ठ्यान्ते हृदा संपूजयेद् गुरुः
धेन्वाख्ययामृतीकृत्य ब्रह्मभिः पुरुषेण वा  २० १-२
नैवेद्यं परमेशाय पानीयं दापयेत् क्रमात्
तैर्मन्त्रैर्देवदेवाय ताम्बूलं विनिवेदयेत्  २१ १-२
नवपूगफलोपेतं देव्यै च विनिवेदयेत्
सर्वेभ्यस्सकलेभ्यश्च प्रागुक्तविधिना गुरुः  २२ १-२
अथवा स्थलिकायां वा सर्वेभ्यो विनिवेदयेत्
वृषादिपरिवारेभ्यो होमकर्म समापयेत्  २३ १-२
नैवेद्यं दापयेदन्ते ताम्बूलं विनिवेदयेत्
बलिदानसमोपेतमतिथीनां समर्पणम्  २४ १-२
निवेद्य तण्डुलं चान्नं पश्चाद्धोमोऽथवा भवेत्
तदन्ते चोत्सवं कुर्यात्तं विना वा समाचरेत्  २५ १-२

हित्वा क्षेत्रबलिं वाथ हित्वा वोलूखलक्रियाम्
सर्वमन्यत्समानं स्यात् तदन्ते पूजयेद्गुरुम्  २६ १-२
वस्त्रहेमाङ्गुलीयादैर्दक्षिणां दापयेत्ततः
एवं यः कुरुतेमर्त्यस्स पुण्यां गतिमाप्नुयात्  २७ १-२

इति उत्तरकामिकाख्ये महातन्त्रे नवनैवेद्य विधिः
एकोनविंशतितमः पटलः

विंशतितमे पटले समयविशेषदीक्षा विधिः

अथेदानीं प्रवक्ष्यामि दीक्षां समय संश्रिताम्
आचार्य कृतनित्यस्तु कृतमन्त्रादि तर्पणः  १
कृतभान्वर्चनश्शुद्धः कृतमन्त्र परिग्रहः
सामान्यार्घ्यकरो भूत्वा प्रविशेद्यागमण्टपम्  २
द्वाराण्यस्त्रेण संप्रोक्ष्य द्वारद्वाराधिपान्यजेत्
आदौ शान्तिकला शब्दद्वाराय नम इत्यपि  ३
पठित्वा पूजयेत्पूर्वद्वारं विद्याख्यदक्षिणम्
वारुणं च निवृत्याख्यं प्रतिष्ठाख्यमुदाहृतम्  ४
प्राच्यां नन्दिमहाकालौ याम्ये भृङ्गिविनायकौ
पश्चिमे तु वृषस्कन्दौ देवीचण्डावुदग्दिशि  ५
प्रणवादिनमोऽन्तं तु चतुर्थ्यन्तं क्रमाद्यजेत्
तोरणस्थान् घटस्थान् वाभित्तिस्थानपि पूजयेत्  ६
पश्चिमद्वारमाश्रित्य पुष्पक्षेपं विधाय च
अस्त्रेण पार्ष्णिघातस्य त्रयं कृत्वाथ भूगतान्  ७
कृत्वा ताकत्रयं मन्त्री विघ्नानाकाशवर्तिनः
छोटिकात्रयतो विघ्नात् धाम्नः प्रोत्सारयेद्बहिः  ८
दक्षजङ्घां समुत्क्षिप्य वामशाखाश्रयी विशेत्
अस्त्रेणोदुम्बरे पुष्पं क्षिप्त्वा धाम्नश्च मध्यमे  ९

वास्तोष्पतये चेति ब्रह्मणे नम इत्यपि
संपूज्य गन्धपुष्पाद्यैरस्त्रप्राकारकल्पनात् १०
वर्मावकुण्ठनाद्यागगेहं संरक्ष्य देशिकः
उपविष्ट उदग्वक्त्रो भूतशुद्धिं समाचरेत् ११
सकलीकरणं कृत्वा कृतान्तर्यजनोगुरुः
विशेषार्घ्यं ततः कुर्याद्यवसिद्धार्थकाक्षतैः १२
अद्भिस्तिलकुशाग्रैश्च क्षीरपुष्पैः समन्वितम्
तदम्भसा तु संप्रोक्ष्य स्वशिरोद्रव्य संहितम् १३
अस्त्रमन्त्रेण तत्सर्वं कवचेनावकुण्ठयेत्
हृदाभिमन्त्र्य प्रत्येकं तिलकं चन्दनं नयेत् १४
शिवहस्तं च संकल्प्य तदारोपितमस्तकः
ज्ञानासिं तत्वसंख्यातैश्चतुरूनैरथापि वा १५
दर्भैः प्रादेशमात्रं तु निर्मितं शस्त्रमन्त्रितम्
कल्पयेत् पञ्चगव्यं तु तद्विधानमिहोच्यते १६
मण्डपस्य शुभे भागे क्षेत्रे नवपदीकृते
पञ्चतत्वाकृतन्यासे पञ्चपात्राणि विन्यसेत् १७
शिवेसदाख्ये विद्यायां काले पुंसि च देशिकः
सुप्रतिष्ठं सुशान्तं च तेजोवदभृतात्मकम् १८
रत्नोदकं च संकल्प्य क्षीरं दधिघृतं न्यसेत्
गोमयं चैव गोमूत्रमीशानाद्यैस्तु मन्त्रितम् १९
एकद्वित्रिचतुष्पञ्चवारैष्षड्भिः कुशोदकम्
अमृतीकृत्य संपूज्य शिवेनैकत्वमाचरेत् २०
मण्डपं तेन संप्रोक्ष्य विकिरानभिमन्त्रयेत्
लाजचन्दनसिद्धार्थ भस्मपुष्पकुशाक्षताः २१
हेतयोऽस्त्रेण सप्तैते विधातव्या विमिश्रिताः
नैरृत्यां मण्डपेस्थित्वा संस्कृती मण्डपस्य तु २२

कुर्यादीशानवक्त्रस्तु संस्कारैर्वीक्षणादिभिः
कुण्डस्येवं पुरास्यापि गुरुरष्टादशात्रतु २३
विकीर्य विकीरानीशे कुशकुर्च्या समाहरेत्
वेद्यां वा मण्टपे वापि ईशाने वापि पश्चिमे २४
हेमाद्येकतमं कुम्भमानीय गलिताम्मसा
पूरितं पल्लवोपेतं स्वर्णवस्त्रादि संयुतम् २५
संहृतौ विकिरास्त्राणामासनं तु चलाचलम्
संकल्प्य मूर्तिमन्त्रेण मूर्तीभूतं घटं न्यसेत् २६
वर्धनीं सोदकां वस्त्रसूत्रस्वर्णादिसंयुताम्
विन्यसेदस्त्रभूतांतां प्रत्यङ्गनालसमन्विताम् २७
संपूज्य गन्धपुष्पाद्यैर्घटास्त्रालू गुरूत्तमाः
इन्द्रमग्निं यमं चैव निऋृतिं वरुणं तथा २८
वायुं सोमं तथैशान्यं पूजयेत्प्राग्दिगादितः
विरिञ्चिमीशदक्षस्थं विष्णुं निऋृतिवामगम् २९
घटस्थं कलशस्थं वा कुंभस्थं वाजयेद्गुरुः
तथैव वज्रशक्त्यादिदशास्त्राण्यपि पूजयेत् ३०
भो भो शक्र त्वया स्वस्यां दिशि विघ्नप्रशान्तये
सावधानेन यागान्तं स्थातव्यं तु शिवाज्ञया ३१
सर्वेषां लोकपालानामनेन क्रमयोगतः
शिवाज्ञां श्रावयेत् कुभ्भं भ्रामयेदग्रतोऽस्त्रकम् ३२
विन्यसेत्कुम्भवर्धन्यौ पूर्ववत्तदनन्तरम्
स्थिरासनं च संपूज्य देवमस्त्रं च पूजयेत् ३३
मूर्तिविद्यातनुं साङ्गं शिवं सावरणास्त्रकम्
पूजयित्वा तयोरैक्यं कल्पयेद्भगमुद्रया ३४
सव्यमुष्टिरुमापिण्डलिङ्गमङ्गुष्ठको हरः
भूतये कलशं स्पृष्ट्वाः पूर्वमङ्गुष्ठपर्वणा ३५

संस्पृशेद्वर्धनीं पश्चान्मुष्ठिनाहृदयाणुवा
मुक्तये च पुरस्पृष्ट्वा वर्धनीं मुष्ठिनैव तु ३६
स्पृशेदङ्गुष्ठकाग्रेण चरमं च घटं तथा
उमायै भगरूपिण्यै लिङ्ग रूपधराय च ३७
शङ्कराय नमस्तुभ्यमितिस्तुत्वाऽनुमोद्य च
यज्ञस्यास्य पतिस्त्वं हि मूर्तिरेषा तवाचला ३८
एतत्ते ज्ञाननिस्त्रिंशत्तद्गृहाण स्वमायुधम्
मया प्रवर्तितश्चायं यज्वना भवतुः क्रतुः ३९
रक्षणीयं त्वयैतद्धि समाप्तिर्यावदस्यहि
यज्ञरक्षाधुरं तस्मिन्नेवमारोप्य देशिकः ४०
अर्घ्यपात्रं विधायाथ दद्यादर्घ्य मथाम्भसा
निरोधनाय तत्पात्रं तथैव स्थापयेद्गुरुः ४१
वर्धनीविकिरोत्थास्त्रैस्समन्ताद्यागमण्टपम्
अपसारितविघ्नं तु भावयेद् भूपरिग्रहम् ४२
मण्डलेस्थण्डिले वापि लिङ्गे वा शिवमर्चयेत्
विशेषपूजयोपेतं पावके शिवमर्चयेत् ४३
भगवन् देहमाविश्य मदीयमनुकम्पया
कर्तव्योऽनुग्रहस्तेषां शिष्याणां भावितात्मनां ४४
संप्रार्थ्यैवं करोमीति लब्धानुज्ञश्शिवात्गुरुः
मन्त्रितं मूलमन्त्रेण सप्तकृत्वः सितं शुभम् ४५
उष्णीषं शिरसि न्यस्य शिवेनैक्यं तु भावेयेत्
सर्वेषां कर्मणां साक्षी मण्डले समुपस्थितः ४६
यज्ञस्य रक्षकत्वेन शिवकुम्भे व्यवस्थितः
होमाधि करणत्वेन पावकस्थस्सदाशिवः ४७
शिष्यदेहे तु तच्छिष्यपाशमोचनकारकः
अनुग्रहकरो देवो मम देहे व्यवस्थितः ४८

पञ्चाधिकरणो देवस्सोऽहमेव सदाशिवः
अपृथग्भूतमात्मनां तत्समानगुणं स्मरेत् ४९
ममापि हृदयादीनि साधनानि न संशयः
स्वातन्त्र्यमेव संभाव्य शिवं विज्ञापयेदिति ५०
यदर्थोऽयं मया देव भवद्यागः प्रवर्तितः
त-इमे पशवश्शान्ता द्वारि तिष्ठन्ति वारिताः ५१
अविसंवादिभिलिङ्गैरुद्धूतध्वन्तवृत्तयः
भवदीयकैर्ज्ञात्वा चिरं युष्मत्प्रचोदितैः ५२
विहितावश्यकाः स्नातानिवर्तितदिनक्रियाः
सितवस्त्रोत्तरीया स्त्वत्पादपद्मदिदृक्षवः ५३
तत् करोतु प्रसादं मे तत्प्रवेशाय शङ्कर
प्रवेशयामि तानेतान् भवत्पादाम्बुजान्तिकम् ५४
कुरुष्व वचनं भद्र प्रवेशाय किलेत्यहम्
उक्तश्शिवेन संभाव्य ततश्शिष्यान् प्रवेशयेत् ५५
द्वारस्य संमुखं बाह्ये प्रणवे कुशमण्डले
शिष्यं तत्रैवं संस्थाप्य स्थित्वा स्वयमुदङ्मुखः ५६
वोलोकयेच्छिखान्ताञ्च यावत्पदनखाग्रकम्
नखाग्रच्चूलिकां यावत् तत्वज्ञानदृशा गुरुः ५७
अयमात्मा शिवत्वार्हश्शिथिलीकृतबन्धनः
पतिशक्त्या निवेशाय पाशव्रातश्च मद्वशः ५८
तदामुं ताम्रसंस्थानं स्वगुणोदययोग्यकम्
स्पर्शवेधिमणिप्रख्यं चोदितोऽहं च शम्भुना ५९
संस्पर्शाद्विमलीकृत्य कलधौतमिवाचिरात्
करोमि गुणसंपन्नं सतां मस्तकभूषणम् ६०
ततस्संप्रोक्ष्य दर्भेण शिरस्याताड्यभस्मना
दर्भमूलाग्रभागाभ्यां हृत्प्रदेशादधोर्ध्वयोः ६१

उल्लिखेत् पाशसंतानं प्रवृत्तकरणोन्मुखम्
सकलीकृत्य तं शिष्यं नेत्रबन्धं विधाय च  ६२
अस्त्रेण प्रोक्षितेनैव कुण्ठितेनैव वर्मणा
संस्तुतेनैव मूलेन सितवस्त्रेण देशिकः  ६३
प्रवेश्य पुष्पक्षेपं तु कारयित्वा तु दर्शयेत्
शिवमण्डलदक्षस्थे मण्डले पूर्ववन्नयेत्  ६४
प्रणवं तत्र संस्थाप्य शिष्यमुन्नतदेहकम्
धारणाद्यैश्च संशोध्य सकलीकृत्य तन्तनुम्  ६५
गन्धाधिवासितं कृत्वा स्वसव्यकरपल्लवम्
शासनेन सदेहेन शिवेन समधिष्ठितम्  ६६
शिवहस्तमिति ध्यात्वा सापेक्ष निरपेक्षकम्
हृद्देशाद्भ्रूप्रदेशान्तं नीत्वा वै चूलिकान्तकम्  ६७
सह प्रासादोच्चारेण समस्तग्रन्थिभेदिना
रुद्रेश्वरस्पदावाप्तिदायकं शिरसि न्यसेत्  ६८
कुर्याच्छिष्यस्य सर्वाङ्गालम्भनं च विशेषतः
ततस्तस्याञ्जलौ पुष्पगन्धधूपाधि वासितम्  ६९
न्यस्य सर्वात्मना शम्भोः प्रत्येकं प्रार्थयेत् स्थितम्
अपनीय दृगालोकाच्छादनं वसनम् क्रमात्  ७०
सहसालोकितेशान शिववक्त्रसरोरुहम्
यात्तमङ्गमुञ्चेति प्रसूनं शिवसंमुखम्  ७१
स्फुटभक्ति शिवाम्भो जपरागामिव पुञ्जितम्
तत्पातसूचिते स्थाने पूर्वं शिवपदोत्तरम्  ७२
नामावधार्यं विप्रस्य देवकण्ठगणात्मकम्
क्षत्रविट्छूद्रजातीनां स्त्रीणां शक्त्यन्त संज्ञकम्  ७३
शिवनामाथ सर्वेषां सर्वं सर्वत्र वा मतम्
सप्रदक्षिणमष्टाङ्गं प्रणामं चोपदिश्यच  ७४

नीत्वाकुराडान्तिकं स्वस्य दक्षिणे प्रणवासने
संस्थाप्य शिष्यं तद्धस्ते दत्वा दर्भस्य मूलकम्  ७५
दर्माग्रं स्वस्य जङ्घायास्सन्धौ संयोज्य देशिकः
पिङ्गलामध्य देहस्थां विनिःसृत्य शिशोः स्वतः  ७६
स्वस्यनाड्यां विलीनेति भावयेन्मूलमन्त्रतः
दत्वाहुतित्रयं नाडीसन्धानार्थतया गुरुः  ७७
प्रवेशनिर्गमौ कार्यौ चैतन्यग्रहणाय च
शतमष्टोत्तरं हुत्वा शिवमङ्गानि वै दश  ७८
पूर्णां हुत्वा शिवेनैव प्रायश्चित्तनिमित्ततः
शतमष्टोत्तरं हुत्वा तेनैव शिवमन्त्रतः  ७९
विप्रादयोऽपि शूद्रास्स्युर्गुणतस्तान् समुद्धरेत्
शूद्रादिजातिमुद्धृत्य स्वाहान्तेनैव मूलतः  ८०
हुत्वाहुतित्रयं पश्चाच्छिवं प्राति वदेदिति
आहारभावदोषाभ्यां योनि बीजशरीरतः  ८१
शुद्धो द्विजो भवत्वात्मा भगवन् परमेश्वर
रुद्रांशापादनेऽप्येवमाहुत्रयमाचरेत्  ८२
अयं रुद्रो भवत्वात्मा भगवंस्वत्प्रसादतः
इत्येवं प्रार्थनां कृत्वा कुर्यात्प्रोक्षणताडने  ८३
प्रविश्य शिष्यदेहे तु रेचकेनात्मनो गुरुः
विधायास्त्रेण विश्लेषच्छेदनं चाङ्कुशाख्यया  ८४
मुद्रया शिष्यचैतन्यमाकृष्य द्वादशान्तके
समानीय ध्रुवेणैव संपूज्य शिशुमस्तकात्  ८५
संहारमुद्रया स्वस्य हृदये पूरकेण तु
प्रविश्य कुम्भकेनैव स्मृत्वा समरसं शिशोः  ८६
रेचकेन प्रयोगेण केशेशानसदाशिवान्
नीत्वात्मानं समावर्त्य द्वादशान्ते ततश्शिवम्  ८७

संहारमुद्रया शिष्यदेहे संयोजयेद् गुरुः
दद्याद्यज्ञोपवीतं तु मूलमन्त्राभिमन्त्रितम्  ८८
शतं सहस्रं वा हुत्वा पूर्णां दद्याच्छिवेन तु
एवं समयसंस्कारयुक्तो यश्शिवपूजने  ८९
होमे चाध्ययने चैव मन्त्राणां श्रवणेऽपि च
योग्यस्स्यान्मुनयो रौद्रं पदं प्राप्नोति मानवः  ९०
ततो निर्वाणदीक्षायामधिकारि भवेद्द्विजः
शूद्रं हि दीक्षयित्वा तु विधानेवाग्रजन्मनः  ९१
सोऽपि शुद्रत्वमाप्नोति दीक्षादानान्न संशयः  ९१ १-२

इति उत्तरकामिकाख्ये महातन्त्रे
समयविशेषदीक्षाविधिःविंशतितमः
पटलः

एकविंशत्तमे पटले स्थालीपाकविधिः

स्थालीपाकविधिं वक्ष्ये नैवेद्यचरुकल्पने
स्थालीं ताम्रमयीं वाथ मृणमयीं लक्षणान्विताम्  १
प्रक्षाल्य पात्रमस्त्रे कवचेनावकुण्ठ्य च
निरीक्ष्य प्रोक्ष्य चाभ्युक्ष्य संताड्यालिप्य गन्धतः  २
कण्ठे संवेष्ट्य कौशेन रज्जुना वर्मरूपिणा
मण्डले गोमयालिप्ते प्रोक्षिते शस्त्रवारिणा  ३
वर्माकुण्ठिते पात्रे मन्त्रविन्यस्तदर्भके
षडुत्थमासनं चेष्ट्वा तां न्यसेन्मूर्तिरूपिणीम्  ४
शिवं सावरणं तत्रावाह्य संपूज्य संत्यजेत्
पुष्पाद्यमाज्येनाभ्यज्य वस्त्रपूतं पयो न्यसेत्  ५
चुल्लीमस्त्रेण चोल्लिख्य तेन प्रोक्ष्यावकुण्ठ्य च
संमृज्य चोपलिप्याथ धर्माधर्मद्वयं यजेत्  ६

दक्षवामस्थ भुजयोश्शिवाग्निं मध्यमे न्यसेत्
आसनं प्रणवं कृत्वा तां तस्यामधिरोपयेत् ७
द्विप्रस्थमाढकं वापि पञ्चप्रसृतिनिर्मितम्
चतुर्थं कल्पयेद्धीमान् शालीतण्डुलकादिकम् ८
चालनोद्धाटनेऽस्त्रेण कृत्वघोरमनुस्मरन्
विपचेत्पूर्ववक्त्रस्सन् मध्यपक्वं यथा भवेत् ९
उष्णे तप्ताभिघारस्स्यात् शीते शीताभिघारणम्
स्वान्तया मन्त्रसंहत्या शिवहव्यवहे पुरा १०
हविष्यान्ते च हेत्युक्त्वा सुस्स्विन्नो भव इत्यपि
तप्ताभिघार एवं स्यात् द्वितीये मण्डले ततः ११
प्रोक्षणादि समायुक्ते पूजितेऽप्यवरोप्य ताम्
सुशीतले भवेत्येवं वौषट्पल्लवया तथा १२
शीताभिघार एवं स्यान्मन्त्रसंहितया भवेत्
संमृज्य च मृदम्भोभ्यां स्थालीं सुरभिमुद्रया १३
अमृतीकृत्य कुण्डस्य पश्चिमे पूर्वमण्डले
पूजिते हृदयेनेष्ट्वा चाङ्गैरेकैकशः क्रमात् १४
शिवेनाष्टोत्तरशतं संपातं पूर्ववन्नयेत्
एवं संपादितेनैव चरुणा होम-इष्यते १५
तण्डुलेनाम्भसा चाथ चरुं नित्यं विपाचयेत्
हविष्यचतुरंशेन होमकर्माथवा मतम् १६
होमावशिष्टं देयं स्यादाचार्याय प्रयत्नतः
पञ्चगोचर संस्थाय समस्तागमवेदिने १७
शिष्टमन्यप्रदत्तञ्चेद्धोमो निष्फल एव हि
शेषहीने चरोर्होमे सहोमः स्यादनिष्टदः १८
हविषो न्यूनवेदांशश्चरुर्वा होमकर्मणि
आद्यांशो दैविकः प्रोक्तो द्वितीयो होमकर्मणि १९

परिवारे तृतीयः स्याच्चतुर्थो देशिकाय हि
पृथक् चरुश्चेन्नैवेद्यं सर्वमीशे निवेदयेत् २०
प्राणाग्निहोत्रं कर्तव्यं साधकैः फलकांक्षिभिः
एतेषामन्यथाभावे सर्वं भवति चान्यथा २१
इति उत्तरकामिकाख्ये महातन्त्रे स्थालीपाकविधिः
एकविंशतितमः पटलः

द्वाविंशत्तमे पटले स्वप्नाध्याय विधिः
अथ वक्ष्ये विशेषेण स्वप्नाध्यायं द्विजोत्तमाः
दीक्षापूर्वे च काम्ये वा लक्षयेत् स्वप्नमुत्तमम् १
तत्र हि प्रथमे यामे स्वप्नोयदि भविष्यति
लक्षयेदात्मनः काले फलभाक्त्वं द्विजोत्तमाः २
संवत्सरे तु सिद्धिस्यात् द्वितीये यामके यदि
षण्मासेनतु सिद्धिस्यात् तृतीये यामके यदि ३
मासेनैवतु सिद्धिस्यात् चतुर्थे यामके यदि
शीघ्रमेव फलं तस्य भविष्यति न संशयः ४
रश्मिमन्तं विवस्वन्तं शशाङ्कं तारकावृतम्
प्रदीप्तमग्निहोत्रञ्च प्रदीपमति भास्वरम् ५
मातरं पितरं दारान् पुत्रान् भ्रातृन् सुहृज्जनान्
यदि पश्येन्नरः स्वप्ने विपुलां श्रियमाप्नुयात् ६
चन्द्रार्क तारग्रसनं परिमार्जनमेव च
भक्षणं धारणं तेषां राज्यं संप्राप्नुयान्नरः ७
श्वेत पुष्पज मालानां धवलानां च पक्षिणाम्
सौवर्णानां खगानां च दर्शनाल्लभते श्रियम् ८
गन्धर्व नगरं वापि देवगन्धर्व योषिताम्
दर्शनात्प्रापणात्स्वप्ने विपुलां श्रियमाप्नुयात् ९

जातरूपमयं छत्रं श्वेतमाला विभूषितम्
चूतादि पुरयवृक्षाणां सफलनां तु दर्शनम् १०
तेषामारोहणं शस्तं तत्फलानां च संग्रहः
तेषां च भक्षणं शस्तं शैलहर्म्याश्वहस्तिनाम् ११
गो सिंह वृषभाणां च वीक्षणारोहणे हिते
सिंहासन चतुर्दन्ति शिबिकारोहणं शुभम् १२
सूर्येन्द्वग्न्युदधिव्योमधरित्रीशैल वीक्षणम्
तरणं निम्नगाम्भोधि काननानां जलस्य च १३
प्रशस्तं दोहनं कर्म महिषीणां गवामपि
सिंहीनां हस्तिनीनां च बान्धवानां स्ववेश्मनि १४
प्रसवो वाथ चैतासां भूतिलिङ्गमितिस्मृतम्
पयसः पाटलाया गोः पानं यद्वत्सलीलया १५
दध्नश्चापक्वमांसानां विष्ठापायस भक्षणम्
एतेषामपि लाभश्च प्रशस्तो मुनिपुङ्गवाः १६
सुधारुधिरमद्यानां पानं मत्स्यस्य भक्षणम्
एतेषां वीक्षणां वापि स्नानं वा रुधिरेण यत् १७
अम्भसा त्वभिषेकस्तु गवां शृङ्गस्रुतेन च
चन्द्रश्रुतेन वा राज्याभिषेकश्शुभमिष्यते १८
पशुसिंह गजानां च लाभो युद्धे विशेषतः
अध्यापनं च शास्त्राणामन्नलेपनमेव च १९
तृणदारूद्भवौ नाभौ कुसुमस्योदकस्य च
बहिर्शीर्षकर्हस्तत्वं सितमाल्यानुलेपनम् २०
सिताम्बरत्वं विप्रस्य दर्शनं चाशिषश्शुभाः
श्वेताभस्य फलस्यापि व्यजनस्य ध्वजस्य च २१
सरोजस्यातपत्रस्य मणीनां दर्पणस्य च
दीपस्य चामरस्यापि शस्त्रस्यकमलस्य च २२

विमलस्यांभसश्शस्तं दर्शनं हाटकस्य च
राज्ञश्च दर्शनं तेन भाषणं शुभदं मतम्  २३
देवालयं सप्रतिमं दृष्ट्वा श्वेतां च गामपि
सागरं सरितो वापि तोययुक्ता श्रियं लभेत्  २४
एतेषामपि पनेन राज्यं संप्राप्नुयान्नरः
शङ्खमाभरणं श्वेतवस्त्रं पुरुषमेव च  २५
रूपयौवन संपन्नां श्रियंवा तादृशीमपि
उत्तमां श्रियमाप्नोति स्वप्ने दृष्ट्वा तु मानवः  २६
कुमारं सर्पमुक्षाणं गजं दृष्ट्वा सुतं लभेत्
तृणं च विपुलं धान्यं गृहमग्नियुतं तथा  २७
दृष्ट्वा स्वप्ने लभेल्लक्ष्मीं दृष्ट्वा शक्रध्वजं तथा
भूम्यम्बु वैरिग्रसनं शत्रूणां च वधक्रियाम्  २८
जयं विवादद्युतादौ संग्रामे विजयं तथा
कृत्वा तु श्रियमाप्नोति भूमौ चन्द्र निवेशनम्  २९
निर्मलं गगनं दृष्ट्वा ह्योदनाप्तिं मृतिं तथा
दृष्ट्वाग्निं संग्रहं कृत्वा लब्ध्वा वैराजचिह्नकम्  ३०
नरस्सुखमवाप्नोति तन्त्रीवाद्यस्य वादनम्
तयोरुल्लङ्घनं चैव रोदनं च शुभावहम्  ३१
परस्त्रीणां च तथा लाभस्तथाऽऽलिङ्गनमेव च
निगलैर्बन्धनं धान्यं स्वदेहदहनं तथा  ३२
निकृत्य च तनुं दिक्षुक्षेपणं शुभदं मतम्
स्वागतेनोरगेणाथ सिंहेनैवाथ भक्षणम्  ३३
हृन्मूर्ध्नोदर्शनं शस्तं सस्यानां च विशषटः
पात्रे मणिमये वाथ राजते वाथ भोजनम्  ३४
सौवर्णेपद्मपत्रेवा दध्नोवान्नस्य भोजनम्
लाभोवाहयशब्दस्य जय भुक्ष्वेति शब्दयोः  ३५

मुद्रा भृङ्कार वृष्टीनां दर्शनं शुभदं द्विजाः
पिरायाको गोशकृत् शस्ता चोच्छ्रितं स्वात्मनो गृहम्  ३६
बन्धुभिस्संवृतं दीप्तमात्मानं वेश्मसंस्थितम्
शिवाङ्कुराणि बीजानि तथा विद्याधरागमम्  ३७
चिन्नाभ्यां रुधिराक्ताभ्यां पादाभ्यां स्वंच पश्यति
ऐश्वर्य शीघ्रमाप्नोति पुत्रांश्च लभते बहून्  ३८
छिन्नस्याद्दक्षिणोहस्तः स्वप्ने यस्य सशोणितः
पुत्रं च लभते शीघ्रमायुष्मन्तं यशस्विनम्  ३९
छिन्नं यस्यशिरः स्वप्ने दृश्यते रुधिराप्लुतम्
लभते क्षिप्रमारोग्यं धनं चास्य विवर्धते  ४०
सुवर्णाकृतिभिर्गात्रं स्वप्ने यस्य विशीर्यते
धनधान्यमवाप्नोति सर्वाभरण भूषितः  ४१
आपणा जीवमात्मानं स्वप्नान्ते यस्तु पश्यति
वृद्धिं तस्य विजानीयादायुश्चास्य विवर्धते  ४२
चक्रं च पूर्ण कुंभं च श्रीवत्सं स्वस्तिकं तथा
सोमपानं तथा प्राश्य लभते वाच्छितं फलम्  ४३
शिवागमादि शब्दानां श्रवणं धनदं भवेत्
गुरुप्राज्ञागमश्चापि शुभो वृश्चिक दर्शनम्  ४४
देवद्विजमरुत्स्त्रीभिर्भाषणं शुभतं मतम्
ताम्बूलमञ्जनं बिल्वपत्रं कुङ्कुममराडले  ४५
पश्येदिष्ट्यादि करणं कुडयगोष्ठक्रियामपि
उद्यानारामकरणं शुभप्रदमिहोच्यते  ४६
आगम्यागमनं चैव सर्वगात्रेषु बन्धनम्
बन्धुभिर्घर्षणं धन्यं कन्यायाः पतिसंग्रहः  ४७
स्नानं शिवार्चनं वह्नेस्तर्पणं दर्शनं सताम्
गणानां विबुधानां च सुधापानं नभोगतिः  ४८

इत्येवमादिकं स्वप्ने दर्शनं शुभशूचकम्
भूवस्त्रलाभ पर्यङ्कशय्या दाहोंबरस्य च ४६
आसनस्य च दाहो वा नावा रोहणमेव च
नवशुक्लांबरत्वं च तथा शुद्धोदनाशनम् ५०
मधुनः पङ्कजस्येव जननं हननं स्वकम्
शंखपद्म निधेर्ल्लाभः शुभस्वप्नोयमीरितः ५१
दृष्टानामपि चैतेषां प्राप्तानां च कथञ्चन
अप्राप्तिरपहारश्च स्वप्नेऽनिष्टार्थसूचकः ५२
लिङ्गस्य प्रतिमाया वा भङ्गादौ नृपतेर्मृतिः
पिण्डिकाया महिष्यास्तु धाम्नो राष्ट्रस्य विभ्रमः ५३
बन्धूनां च क्षयः पुत्रनाशस्त्वग्नि प्रवेशनम्
हस्तध्वस्तफलं भस्म गुलशाकस्त्वनिष्टदः ५४
विदेशगमनं जातीस्थौल्यं व्याधि प्रपीडनम्
उद्दन्तता विनाशश्च मलिनत्वमशोधनम् ५५
सुवर्ण रजताङ्गार मुद्रविष्ठोद्गमोऽशुभः
चूर्णानां मूर्ध्नि कांस्यानां नग्नता मलिनाम्बरः ५६
अभ्यङ्गपतनं चोच्चाङ्डोलारोहस्त्वनिष्टदः
रक्तपुष्पद्रुमाणां च चण्डाल व्याध दर्शनम् ५७
भक्षणं पक्वमांसानां तैलस्य रुधिरस्य च
नर्तनं ग्रसनं चैव विवाहो गीतमेव च ५८
तन्त्रीवाद्यविहीनानां वाद्यनामपि वादनम्
स्त्रोतोनिमज्जनं यच्च स्नानं गोमयवारिणा ५९
पङ्कोदेनाथवा मातुः प्रवेशो जठरेऽशुभः
चितायां रोहणं शक्रध्वजस्य पतनं तु वा ६०
सूर्या चन्द्रमसोस्तारा पतनं चाशुभप्रदम्
दिव्यान्तरिक्ष भौमानामुत्पातानां च दर्शनम् ६१

देव द्विजादि भूपालगुरूणां क्रोध एव च
आलिङ्गनं कुमारीणां पुरुषाणां च मैथुनम् ६२
हानिश्चैव स्वगात्राणां विरेकवमनक्रिये
दक्षिणाशाभिगमनं व्याधिनाभि भवस्तथा ६३
गृहणाश्चैव पातश्च गृह संमार्जनं तथा
पीडापिशाच क्रव्यादैः वानरैश्च नरैरपि ६४
परादभिभवश्चैव तस्माच्च व्यसनोद्भवः
काषायवस्त्र धारित्वं तद्वत्स्त्रीक्रीडनं द्विजाः ६५
स्नेह पानावगाहौ च रक्तमाल्यानुलेपनम्
क्रीडनं च लिहा स्फोटः क्षुत् पिपासा परिश्रमः ६६
नक्षत्राणां ध्वजानां च श्रोतसां गमनं च वा
रज्जुच्छेदः प्रतापेतु वपनं श्मश्रु केशयोः ६७
नखस्य दीर्घतासेवा सेवनं च स्त्रियोपिवा
विरूपेण नरेणाङ्गमर्दनं चोत्सवेऽपिवा ६८
पशुक्रीडाण्डजानां च स्तब्धस्य च मृतस्य च
प्लवनं भग्नयानत्वमशुभाय भविष्यति ६९
सरसि क्रीडनं नृत्तं जतुभाण्डेन द्विजाः
द्रव्यस्य नाशः सुहृदो वियोगः श्यामवस्त्रता ७०
छेदः पाण्यो सरोजस्यापहारो जीर्णवस्त्रता
प्रासाद वेश्म शृङ्गानामवतारस्तु नेष्यते ७१
कर्णे च नासिकादौ वा सर्पवेशप्रवेष्टने
कार्पासतिल मूलादि लोहानि लभते च यः ७२
स्वस्थश्च लभते व्याधितो मृत्युमृच्छति
भग्न ध्वजाधिकं भग्नं छत्रंदृष्ट्वाऽशुभं लभेत् ७३
एकस्थ पुण्डरीकस्य धारणं तद्वदीरितम्
तथैवहसनं भुक्तिरोदनस्य तिलैः सह ७४

अधः शिरस्तस्या स्नानं तैले दन्तविदारिणम्
कुञ्चरस्य पृथिव्याश्च ज्वलनं जातवेदसा ७५
दारुणां पर्वतानां च पीठे कृष्णायसे द्विजाः
संस्थानं कृष्णवर्णत्वं रथे खर समन्विते ७६
यानं च कणठबन्धश्च शिंशुमाराहिपीठनम्
हीननृत्तसमजश्च नाभेरन्य प्रदेशके ७७
तृणवृक्षपशूनानां प्रोद्भवः क्रीडयापि च
खरेण कपिनोष्ट्रेण भोगो व्यालेन रौद्रकैः ७८
सत्वैरन्यैरनिष्टाय भवेत्कायस्य लेपनम्
स्नेहेन गोमयेनापि पङ्कैःकलुषवारिभिः ७९
नेष्टं जिह्वा भुजानां च रोम्णां विच्छेदतं नखैः
व्यालस्यारोहणं नेष्टं तदाघ्राणं न संमतम् ८०
आघ्रायते यश्चभृशं श्वापदैर्विकृताननैः
सच दुःखमवाप्नोति पङ्कमग्रस्तथैव च ८१
परिष्वङ्गोऽथ यस्यापि प्रेतैः प्रव्रजितैरपि
अन्तावसायिभिर्योवा कृष्यते यमदूतकैः ८२
शाल्मलीं किंशुकं यूप चैत्यं वा परिभद्रकम्
पुष्पाढ्यं को वदारं वा योध्यारोहतिमानवः ८३
शोषणं कथिताख्यं च तोयपानं प्रमेहिणः
हरिद्राभोजनं चापि यद्भवेत्पाणडुरोगिणः ८४
रक्तपित्तं पिबद्यश्च शोणितं स विनश्यति
भग्नयाना वरोहंश्च स्वप्नेऽलक्ष्मी प्रदो भवेत् ८५
आदित्यचन्द्रताराणां मलिनत्वमशोभितम्
पद्मं हव्यं कन्या वा भक्त्याकाशतो यदि ८६
ग्रहानां ग्रहणेनापि राज्ञो मरणमादिशेत्
दर्शनं चाशुभानां वा तैरेवालिङ्गनं तु यत् ८७

काकं गृध्रं तथाश्येनं पिशाचं राक्षसं तथा
पतन्तीं प्रतिमां वापि दृष्ट्वा व्यसनमाप्नुयात् ८८
पतन्तमुच्छितं केतुं पर्वतं वृषमेव वा
गृहं महत्तरं कुडयं प्रधानमरणं भवेत् ८९
निर्वाणदीपं रजकं श्वित्रिणं द्यूतकारकम्
म्लेच्छं दृष्ट्वान्त्यजं वापि कृष्णदन्तं च दुर्मुखम् ९०
कपालोन्मत्तवेषं च पुरुषं वा स्त्रियं च वा
कृष्णां सशूलां स्वप्नान्ते सद्योमरणमश्नुते ९१
निहतं च तथात्मानं ताभ्यां दृष्ट्वा तथा भवेत्
अश्वमुष्ट्रं खरं वापि महिषं श्वानमेव च ९२
सृगालं महिषीं तैलं दुर्वर्णं वायसं वृकम्
वृषं वराहं मार्जारमुलूकं कृष्ण सर्पकम् ९३
कृष्णकीटं च गांकृष्णां पश्येच्चेद्भयमाप्नुयात्
एतेषां स्पर्शने वापि ग्रहणे रोहणे तथा ९४
काञ्चनस्यापि वृक्षस्य दर्शनं मरणप्रदम्
वह्नियान रथादीनां छत्रादीनां च भग्नता ९५
विधवा दर्शनं चापि तत्सङ्गेन धनक्षयः
धूमायमानमात्मानं शिरोमुण्डनमेव च ९६
बद्धमन्यैर्निरुद्धं वा पश्येच्चेद्भयमाप्नुयात्
यवागू मारनालं वा पिपेद्धन विनाशनम् ९७
तण्डुलं पक्वमांसं वा तुषमङ्गारकोषरे
मुद्गं माषं मरीचं च सर्षपं पश्यतोऽशुभम् ९८
कुण्डादौ पतनं नेष्टं तथा केश विकीर्णता
वर्तितैलतिलादीनामञ्जनालेपनं तथा ९९
अन्धकारनिवेशस्तु महामार्गगतिस्तुवा
संन्यासि प्रेतकैः सार्धं कुण्डकादिषु वेशनम् १००

तारं च भद्त्येद्वाथ शवं वा भद्मयेद्यदि
रक्तवर्णं तु यद्द्रव्यं कृष्णं वा न प्रशस्यते १०१
अशुभं च भवेद्रक्तं कृष्णवस्तु प्रकीर्तितम्
अन्यत्र शोणितान् पद्मात् पलाशाद्रक्त चन्दनात् १०२
तथा च रजकश्वत्रिद्यूतकम्लेच्छकारिणः
पश्येत्पाषरिडनो वापि नशुभं तस्य जायते १०३
वल्मीकदर्शनं शुष्क विषवृद्मस्य दर्शनम्
भूतानां रोदनं नेष्टं वृद्माणां पतनं द्मणात् १०४
देवताश्च द्विजातिश्च पितरो योगिनो नृपः
यद्वदन्ति नरं स्वप्ने तत्तथैव भविष्यति १०५
एष्यत्कर्मविपाकस्य शुभस्याप्य शुभस्य च
लिंगं स्वप्नोविधितस्य न क्वचिद्धातु दोषजः १०६
यद्धातु प्रकृतिर्येन धातुना वापि दूषितः
तद्विकारं ननु स्वप्ने प्रत्यद्मानिव पश्यति १०७
यश्च सुप्तोऽर्थमादृत्य दृष्टं वा यदि वा श्रुतम्
तच्चिन्ता सन्ततिः स्वप्ने प्रत्यद्मेवावभासते १०८
तद्द्वयं स्वप्नविज्ञानं नाभिप्रेत मिहागमे
दृष्टाद्मदूर विज्ञेय व्यभिचारि प्रकाशवत् १०९
समधातुरतः स्वप्ने यत्पश्यति शुभाशुभम्
प्रणिधानविनिर्मुक्त स्तत्सत्यं नाविशेषतः ११०
अशुभं वा शुभं स्वप्नं आचार्याय निवेदयेत्
द्विजाति प्रक्रमेणैव वयसा वा धनेनवा १११
आचारेणाथ धर्मेण विद्यया वाथ यस्यतु
श्रेष्ठत्वं विद्यते विप्राः सर्वादौ निवेदयेत् ११२
अनेनैव क्रमेणाथ स्वंस्वं स्वप्नं निवेदयेत्
आचार्यानुज्ञया वाथ ज्येष्ठत्वं तेषु कीर्तितम् ११३

ब्राह्मण समयाख्येन संस्कारेण समन्वितः
निर्वाण दीक्षया युक्तः शूद्रो द्वावेकभागिनौ १९४
नियोगो यस्य तन्मध्ये स एव गुरुमाश्रयेत्
आदौ समानदीक्षायां सत्यामपि च यत्र तु १९५
नियोगः स शिशुः पूर्वं नमस्कुर्याद् गुरूत्तमम्
जात्यादि साम्ये संस्कार साम्ये सत्यपि यत्र तु १९६
नियोगो देशिकस्यासीत् स चादौ गुरुमाश्रयेत्
परस्पर नमस्कारेऽप्येवमेव क्रमोमतः १९७
ज्येष्ठत्वेऽप्यस्य संस्काराद्येषां तैर्गुर्वनुज्ञया
न संमान्यो नमस्कार प्रमुखैः कारणाद्गुरोः १९८
एकदेशिक शिष्याणा माचारः परिकीर्तितः
किमत्र बहुनोक्तेन यदुक्तं देशिकेन तु १९९
तदेव सर्वदा कार्यं शिष्यैः श्रोयोभिकांक्षिभिः १९९ १-२

इति उत्तरकामिकाख्ये महातन्त्रे स्वप्नाध्याय विधिः द्वाविंशतितमः पटलः

## त्रयोविंशत्तमे पटले निर्वाण दीक्षा विधिः

निर्वाणाख्यां प्रवक्ष्यामि दीक्षां परममोक्षदाम्
आचार्यः कृतनित्यस्तु कृतमन्त्रादि तर्पणः १
कृत सूर्याचनः शुद्धः सकलीकृत विग्रहः
सामान्यार्घ्यकरो द्वार द्वारपार्चन संयुतः २
पश्चिमद्वार मार्गेण संप्रविश्य मखालयम्
कृत ब्रह्मार्चनः शुद्धः क्षेत्रे रक्षां कृत्वा विधानतः ३
भूतशुद्धिमणोर्न्यासं विशेषार्घ्यं च कृत्यवित्
कृत्वा ज्ञानाख्य खड्गं च पञ्चगव्यं विधाय च ४
विकिरानभिमन्त्र्याथ भूमिशुद्धिं विधाय च

निक्षिप्य विकिरांस्तांश्च कुशैरीशे समाहरेत् ५
कुंभं च वर्धनीं तत्र संपूज्य परितो गुरुः
लोकपालानथाभ्यर्च्य तेषां आज्ञां तु श्रावयेत् ६
भ्रामयित्वा घटास्त्रालू ज्ञानखड्गं समर्च्य च
मण्डले देव देवेशं इष्ट्वाऽग्नौ तर्पयेन्मनून् ७
भगवन् देहमाविश्य मदीयमनु कंपया
अनुग्रहस्त्वया कार्यः शिष्याणां भावितात्मनाम् ८
इति विज्ञाप्य लब्धाज्ञश्चोष्णीषम् शिरसि न्यसेत्
सर्वेषां कर्मणां साक्षी मण्डलस्थः सदाशिवः ९
यज्ञस्य रक्षकः कुंभे पावके होम कारणम्
शिष्येतु पाशनाशाय मद्देहे पाशमोचकः १०
पञ्चाधिकरणो देवः त्वमहमेव सदाशिवः
मन्त्राः कारणभूता ये शिवस्य हृदयादयः ११
ममापि ते तथैवेह स्वातन्त्र्यं स्वस्यचात्मनि
संभाव्याध्येषयेद्देवं प्राणैरन्तर्बहिस्थितैः १२
परीक्षितः समर्थोऽयं निर्वाणार्थ मुपस्थितः
उत्कृष्ट जातिरीशांशः समयेषु व्यवस्थितः १३
तदेतस्मिन् विमोक्षाय प्रसादः क्रियतां मम
पूर्णसंकल्पितार्थः सन् शिवशास्त्रोपबृंहितः १४
आरभ्य यागधाम्नस्तु प्रवेशं चाग्निसंमुखम्
आत्मनः सव्यभागे तु कृत्वा शिष्यस्य वेशनम् १५
नाडी सन्धानकर्मज्ञस्तर्पणं पूर्णया सह
कृत्वा शिवादिमन्त्राणां दीपनं सम्यगोचरेत् १६
अघोर संपुटं कृत्वा शिवं साङ्गं फटन्तकम्
कुटिलभ्रू समायुक्तं सरालवदनान्वितम् १७
आहुतीनां त्रयं कार्यं मन्त्राणां दीपनं च यत्

कन्या विनिर्मितं सूत्रं त्रिगुणं त्रिगुणीकृतम्  १८
अस्त्रेण प्रोक्षितं वर्म कुण्ठितं मूलमन्त्रतः
संपूज्य चोर्ध्वकायस्य शिखायां बन्धयेत्शिशोः  १९
अंगुष्ठकाग्रपर्यन्तं तत्सूत्रमवलम्बयेत्
सूत्रं सुषुम्नारूपं तु ध्यात्वाशिष्यस्य देहतः  २०
सुषुम्नायै नमश्चेति संगृह्यास्मिन् नियोजयेत्
संपूज्यगंध पुष्पाद्यैः वर्मणाचाव कुण्ठयेत्  २१
संनिधानाय मूलेन चाहुति त्रयमाचरेत्
शिष्यस्य हृत्प्रदेशं तु संप्रोक्ष्यास्त्रेण पुष्पतः  २२
संताड्य हृदयं तस्य रेचकेन प्रविश्य च
हुंकारं उच्चरंस्तस्य चैतन्यं तारकाकृतिम्  २३
हृद्ग्रन्थिमस्त्रमन्त्रेण छित्वा संगृह्यमूलतः
द्वादशान्ते न्यसेत् शिष्य जीवं हृदय संपुटम्  २४
सान्तं बीजं समुच्चार्य तस्मिन् संहार मुद्रया
सूत्रे नियोजयेत् वर्म मन्त्रेणैव अवकुण्ठयेत्  २५
हुत्वाहुतित्रयं तस्य संविधानाय मूलतः
मलं च कर्ममायेयं भोक्तृ भोलशरीरजम्  २६
शान्त्यतीतादिकं सूत्रे भाजयेत्स्वस्वमन्त्रतः
शान्त्यतीतां चतुर्थ्यन्तां हुफट्कारां शिवादिकाम्  २७
पुष्पास्त्रेणैव संताड्य शिष्यस्य शिरसि स्थिताम्
संहारमुद्रयाकृष्य शिवं प्रणव पूर्वकम्  २८
शान्त्यतीतां चतुर्थ्यन्तां नमस्मकार समन्विताम्
उच्चार्य योजयेत्सूत्रे भ्रूमध्यान्तोपलक्षिते  २९
अनेनैव क्रमेणाथ भूतशुद्ध्युक्तमार्गतः
कलाचतुष्टये कुर्यात्ताडनग्रहयोजनम्  ३०
गलश्चभ्रन्तनाभ्यन्तजान्वन्ताङ्गुष्ठकान्तिकम्

व्याप्यव्यापकभावं तु कुर्यात्तत्रविचक्षणः ३१
मन्त्राः पदानिवर्णाश्च तत्त्वानिभुवनानि च
व्याप्यानि व्यापकाः कर्ममलमायेयबन्धनाः ३२
व्याप्यामलादयश्चापि व्यापकास्तु कलास्मृताः
तासांच संग्रहे तस्मात् सर्वेस्युः स्वीकृतास्त्विह ३३
स्थापिताभिश्च शुद्धाभिरहोपस्थापिता अपि
शुद्धा भवन्ति सर्वेस्युस्तस्मात्तच्छुद्धिरिष्यते ३४
तासांच दीपनं कार्यमोङ्कारादि फडन्तकम्
अघोरबीजं मूलं च शान्त्यतीतकलामपि ३५
चतुर्थ्यन्तं समुच्चार्य हुंकारं तु समुच्चरन्
त्यक्त्वान्यासां च मूलं तु स्वस्वबीजं स्मरन् नयेत् ३६
आहुतीनांत्रयं हुत्वा पाशबन्धनमाचरेत्
शिरः संताड्यचास्त्रेण शिवमन्त्रं त्रिधास्मरन् ३७
भगवन् शान्त्यतीताख्यं मलकर्मसमन्वितम्
व्यापकं शान्ति तत्वादेः पाशं बन्ध पदद्वयम् ३८
हुंफडन्तं समुच्चार्य सूत्रे ग्रन्थिं समाचरेत्
शिवं संपुटितं स्वस्वबीजं च भगवत् पदम् ३९
कलाचतुष्टयंपाशं मल तत्वादिव्यापकम्
बन्ध बन्ध पदंचोक्त्वा हुंफषन्त समन्वितम् ४०
पृथक् पृथक् समुच्चार्य सूत्रेग्रन्थिं समाचरेत्
तत्सूत्रं च समादाय शरावयुग संपुटम् ४१
कृत्वासंपात होमंच तत्सूत्रं मण्डलाधिपे
निवेद्य तस्य रक्षार्थं शिवकुंभान्तिकं न्यसेत् ४२
प्रणतिं कारयित्वा च शिवेन शिवकुंभके
आचार्यः शिष्यसहितो निःसृत्य मखमण्डपात् ४३
पञ्चगव्यं चरूं तेभ्यः प्रदद्यात् दन्धदावनम्

शुचौ सावरणे देशे विविक्ते लेपिते भुवः ४४
पृथङ्मण्डलकस्थेभ्यो भुक्तिमुक्तिव्यपेक्षया
भूतये पूर्ववक्त्रेभ्यः सौम्यास्येभ्यः विमुक्तये ४५
निर्णिक्तपादपाणिभ्यः प्रयतेभ्यो यथाक्रमम्
अन्तर्जानूपविष्टेभ्यः सकुशे दक्षिणेकरे ४६
उद्धृत्य दक्षिणेनैव सपवित्रेणपाणिना
चुलुकं पञ्चगव्यस्य दद्यादेकं हृदान्वितम् ४७
तत्पीत्वा प्रयतेभ्योऽथ तद्वदेव द्वितीयकम्
चुलुकं चापरं चापि दत्वा दद्यात्ततश्चरुम् ४८
अष्टग्रासप्रमाणंतु पुटके ब्रह्मवृक्षके
मुमुक्षुभ्यो भुभुक्षुभ्यः कृते पिप्पल पत्रकैः ४९
अद्विज स्पर्शमेतस्य भक्षणानन्तरं पुनः
शुचिभ्यो दन्तकाष्ठैश्च क्षीर वृक्षसमुद्भवम् ५०
कनिष्ठिकाङ्गुलस्थूलमृजुं सरसमव्रणम्
मङ्गलार्काङ्गुलान्मुक्तिभुक्ति लिङ्गप्रकाशकम् ५१
राजदन्त्राग्रसन्दंशचर्वितं धौतमग्रतः
आमुक्तं निपतेद्यत्र तेन विद्याच्छुभाशुभम् ५२
अग्नयन्तक पलाशानां दिक्षु वायौ न शोभनम्
मुखपातोऽस्य शेषासु शोभनः कर्मणां वशात् ५३
इति ज्ञात्वा तु तत्पातमाचान्तास्तान् समाहितान्
स्वप्नाधिगमनेनैव सरक्षान् स्वापयेन्निशि ५४
सद्योगोमंयसंस्पृष्ट भूतल स्पर्शनीषु च
पूर्वयाम्योत्तमाङ्गासु शय्यासु कुशभस्मना ५५
परस्परमलग्नासु सोपधानासु पार्श्वतः
चतुर्दण्डकयास्त्रेण गुप्तासु वितमस्सु च ५६
अस्त्राभिरक्षितास्वस्त्रजप्तासु शतसंख्यया

हदारोप्य शिखाबद्धशिखान् वर्माभिमन्त्रितैः ५७
वस्त्रैराद्मादिताञ्छिष्यां स्तिलसर्षपभूतिभिः
अस्त्राभिमन्त्रितैस्तिस्त्रो रेखाः संकल्प्य बाह्यतः ५८
स्वप्नमाणवकं मन्त्रमनुज्ञाय च तानथ
दत्वा बाह्यबलिं दिन्तु दिक्पतिभ्यो यथाक्रमात् ५९
चरूं दन्तधवादिष्टप्रतिकूलोपशान्तये
विषमार्चिषमादीप्य हुत्वा चैकैकतः शतम् ६०
प्रायश्चित्तं ततो हुत्वा मूलेनाष्टोत्तरं शतम्
प्रन्नालिताङ्घ्रिहस्तस्तु स्वाचान्तः स्नानमम्भसा ६१
निर्वर्त्य भस्मना वापि परिवर्त्य सितांशुके
शिवीकृततनुर्ध्यात्वा समस्ताध्वतनुं शिवम् ६२
चरुकं पञ्चगव्यं च प्राशये द्दन्तधावनम्
पूर्ववत्प्रयतो भूत्वा शुद्धः स्वयमपि स्वपेत् ६३
अथ प्रातर्द्वितीयेऽह्नि कृतनित्यक्रियो गुरुः
शिष्यान् पृष्ट्वा निशास्स्वप्नान् दुःस्वप्ने शान्तिमाचरेत् ६४
घृतदूर्वामधुन्नीरैः शतहोमं च कापिलैः
शुभे पूर्ववच्छिष्यप्रवेशादिकमाचरेत् ६५
आहूय शिष्यान् कुण्डस्य समीपे स्वस्य दन्निणे
अवल्म्ब्य च तत्सूत्रं शिष्यदेहेऽधिवासितम् ६६
करोम्यनुग्रहं देव शिशो रध्येषयेदिति
लब्धानुज्ञो न्यसेदग्नौ शक्तिमाधार रूपिणीम् ६७
निवृत्तिं विन्यसेच्छक्तौ कला तत्वादि संयुताम्
पृथिवी तत्वं न्नकारश्च मन्त्रौ हृदयसद्यकौ ६८
कालाग्निरथकुमाण्डं हाडकं ब्राह्मवैष्णवौ
रौद्रं च भुवनान्यन्तर्ब्रह्माण्डस्यस्थितानि षट् ६९
कापालीशो ह्यजोबुद्धो वज्र देहः प्रमर्दनः

विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः ७०
अग्निरुद्रो हुताशश्च पिङ्गलः खादको हरः
ज्वलनो दहनो बभ्रुः भस्मान्तकः क्षयान्तकः ७१
याम्यो मृत्युर्हरो धाता विधाता कर्तृसंज्ञकः
संयोक्ता च वियोक्ता च धर्मो धर्मपतिस्तथा ७२
निरृतिर्मारणो हन्ता क्रूरदृष्टिर्भयानकः
ऊर्ध्वकेशो विरूपाक्षो धूम्रलोहितदंष्ट्रिणः ७३
बलो ह्यतिबलश्चैव पाशहस्तो महाबलः
श्वेतोऽथ जयभद्रश्च दीर्घबाहुर्जलान्तकः ७४
मेघनादः सुनादश्च दशमः परिकीर्तितः
शीघ्रो लघुर्वायुवेगस्तीक्ष्णः सूक्ष्म क्षयान्तकः ७५
पञ्चान्तकः पञ्चशिखः कपर्दी मेघवाहनः
निधीशो रूपवान् धन्यः सौम्यदेहो जटाधरः ७६
लक्ष्मीधृग्रत्नधृक्छ्रीधृक् प्रसादश्च पकामदः
विद्याधिपेशौ सर्वज्ञो ज्ञानभुग्वेदपारगः ७७
सुरेशःशर्वो ज्येष्ठश्च भूतपालो बलिप्रियः
वृषो वृषधरोऽनन्तः क्रोधनो मारुताशनः ७८
ग्रसनोढुम्बरेशौ च फणीन्द्रो वज्रदंष्ट्रिणौ
शंभुर्विभुर्गणाध्यक्षस्त्रियक्षस्त्रिदशेश्वरः ७९
संवाहश्च विवाहश्च नभो लिप्सुस्त्रिलोचनः
वीरभद्रो भद्रकाली सर्वोर्ध्वे भुवनद्वयम् ८०
कपालीशादयः प्राच्यामग्निरुद्रादयोऽनले
याम्याद्या दक्षिणे भागे निरृत्याद्याश्च नैरृते ८१
बलाद्या वारुणे भागे शीघ्राद्या वायुगोचरे
उत्तरे तु निधीशाद्या ईशे विद्याधिपादयः ८२
वृषादयस्त्वधोभागे शम्भुमुख्या नभोगताः

भुवनानां शतं चाष्टाधिकमेवं तु विन्यसेत् ८३
एकाशीतिपदेष्वन्त्यप्रणवादि विलोमतः
नमोद्वयं प्रणवं षडक्षरमतः परम् ८४
सर्वदश्च ततः शर्वशिवसूक्ष्मद्वयं तथा
शब्दद्वयं तथा ज्ञानद्वयं पिङ्गद्वयं तथा ८५
पतङ्गं च द्विरभ्यस्तं तुरुयुग्मपदं भवेत्
साक्षियुग्मपदं पश्चात्पूर्वस्थितमतः परम् ८६
अस्तुत अस्तुत इत्येवं ततश्चानर्चितानर्चित
ब्रह्मविष्णुरुद्रपर सर्वसन्निध्यकारकः ८७
सर्वभूतसुखप्रद भवोद्भवपदं ततः
भवयुग्मं तथा शर्वयुग्मं च प्रथमद्वयम् ८८
मुञ्च मुञ्च पदं योगाधिपते च पदं भवेत्
महातेजः पदं सद्भावेश्वरं चेति कीर्तितम् ८९
महादेवपदं पश्चात्पदान्यष्टौ च विंशतिः
निवृत्त्या व्याप्तमध्वानं तत्त्वाद्यं कलया स्मरेत् ९०
ह्लां निवृत्तिकलायै च नमोऽन्तं प्रणवादिकम्
इत्युच्चार्य निवृत्तिं तु सूत्रात्संग्राह्य पावले ९१
आवाह्येष्वाहुतीनां तु त्रयं स्वाहान्तमाचरेत्
मलः कर्म च मायाख्यं भोक्तृभोगशरीरजम् ९२
भावयन् कल्पयेद्योनिरनन्ता देविगर्भगाः
तद्व्यापिकां च वागीशीं समावाह्य प्रपूजयेत् ९३
वागीश्वर्यै नमश्चेति हृत्पूर्वं प्रणवादिकम्
हुत्वाहुतित्रयं पश्चात्स्वाहान्तेनैव मन्त्रतः ९४
संनिधीभव देवेशि पश्वनुग्रहकर्मणि
प्रार्थैवं शिष्यमस्त्रेण संप्रोक्ष्य हृदि ताडयेत् ९५
अस्त्राणुना फडन्तेन प्रणवेनान्वितेन च

स्वात्मनो रेचकेनैव तस्य देहे प्रविश्य च ९६
अस्त्रमन्त्रेण हृच्छेदं कृत्वा चाङ्कुशमुद्रया
आकृष्य मूलमन्त्रेण चाहुतित्रयमाचरेत् ९७
तृणाग्रबिन्दुवद्ध्यात्वा प्रणवेन पुटीकृतम्
सान्तबीजं समुच्चार्य शिशुं संहारमुद्रया ९८
पूरकेन हृदि स्वस्य संनिवेश्य च कुम्भकम्
कृत्वा मूलं स्मरन् स्वस्य द्वादशान्ते नियोज्य च ९९
आदाय तस्माच्चैतन्यं मुद्रयोद्भव संज्ञया
सर्वासु योनिषु शिशोः संयोगं युगपन्नयेत् १००
स्वाहान्तमूलमन्त्रेण चाहुतित्रयमाचरेत्
भगवन् देव देवेश शिशोस्सर्वासु योनिषु १०१
संयोगं कुरु कुर्वत्र दीक्षाकर्मणि मोक्षदम्
निष्पत्यै सर्वगर्भाणां दद्यान्मूलहुतित्रयम् १०२
भगवन्नस्य शिष्यस्य गर्भनिष्पत्तिमत्रच
सर्वासु योनिषु कुरुकुर्वित्येवन्नयेद्विजाः १०३
ततस्तु जननार्थन्तु दद्यात् मूलहुतित्रयम्
भगवन् सर्वगर्भाणां जननं कुरु कुर्वणोः १०४
इत्युक्त्वा जननार्थं च पशोः वृद्ध्यर्थमेव च
मूलहुतित्रयं दत्वा शिवंप्रतिवदेदिदम् १०५
भगवन् शिष्यदेहानां प्रवृत्तिं कुरु कुर्विति
कर्मार्जनाय मूलेन आहुतित्रयमाचरेत् १०६
भगवन् आत्मनो नानाभोगदं कुरु कुर्वथ
कर्मार्जनं पठित्वैवं विशेषो लोकधर्मिणि १०७
प्राक्कर्मागामिकं धर्मरूपं कर्मार्जनं कुरु
देशतः कालतश्चैव देहेन विषयेण च १०८
संचितागामिभेदेन भोगन्नाना विधं स्मरन्

भोक्तृत्व लिंगितेपुंसि सुखदुःखात्मवेदनम्  १०९
मूलाहुतित्रयं दत्वा शिवंसंप्रार्थयेदिति
भगवन् भोगनिष्पत्तिं सर्वत्र कुरु कुर्वणोः  ११०
परमप्रीति रूपं च भोगेषु संस्मरन्
शिवाहुति त्रयं दत्वा परमप्रीति रूपकम्  १११
लयंच कुरु कुर्वीति शिशोः निर्वाण कर्मणि
जात्यायुर्भोगसंस्कारशुद्ध्यर्थं निष्कृतावणोः  ११२
हृदाहुति शतं हुत्वा नयेत्मूलाहुतित्रयम्
सर्वकर्मसु शुद्धिंच निष्कृत्या कुरु कुर्वणोः  ११३
भगवन्निति विश्लेषम् भोगाभावादणोरिह
बहिर्निष्कामरूपन्तु मायापाशात् स्मरन्नयेत्  ११४
मूलहुतित्रयं पश्चात् मलविश्लेषमाचरेत्
मलकार्यंच भोक्तृत्वंस्मृत्वा शुद्ध्यर्थमाहुतीः  ११५
दश दत्वा हृदा पश्चात् दद्यात् मूलहुतित्रयम्
मलविश्लेष एवंस्यात् कर्म विश्लेष उच्यते  ११६
अत्यन्ताभावरूपन्तु विश्लेषं कर्मणामिह
स्मृत्वाहुतित्रयं दद्यात् मूलमन्त्रं समुच्चरन्  ११७
भगवन्नात्मनो मायाफल कर्मात्मकं त्विह
विश्लेषं कुरु कुर्वत्र तेभ्यो निर्वाणसंस्कृतौ  ११८
ततो निवृत्तिपाशस्य व्यापिनस्तु मलादिषु
अस्त्राहुतित्रयं दत्वा शुद्ध्यै तस्य च मूलतः  ११९
आहुतीनां त्रयं दत्वा निवृत्तिछेदननंत्विह
भगवन् कुरु कूर्वत्रेति आज्ञां प्राथ्र्यैव माचरेत्  १२०
अशेषाणां शरीराणां नाशेत्वेकत्वमात्मनः
संभाव्य वौषडन्तेन दद्यात् पूर्णां शिवाणुना  १२१
ओंब्रह्मणे नमश्चेत्यावाह्य संपूज्य तर्पयेत्

शब्दस्पर्शौ गृहणात्र ब्रह्मन् स्वाहेति मन्त्रतः १२२
आहुतीनां त्रयं दत्वा शिवाज्ञां श्रावयेत् ततः
कारणेशत्वयानास्य धातुः पदमनामयम् १२३
प्रतिबन्धो विधातव्यस्त्वाज्ञैषा पारमेश्वरी
ब्रह्माणं संविसृज्याथ शुद्धतत्वाग्र संस्थितम् १२४
निवृत्ति पाशनिर्मुक्तं शुद्धस्फटिकसन्निभम्
ध्यात्वाहुतित्रयं दद्यान्मूलमन्त्रं समुच्चरन् १२५
निवृत्तिपाशादुद्धारं पूरकेण भगवन्नस्य चात्मनः
कुरुकुर्वीति संहारमुद्रया पूरकेन तु १२६
कृत्वात्मस्थं ततस्सूत्रे कवचेन निवेशयेत्
आहुतीनां त्रयं दद्याच्छिशोः स्थित्यै शिवाणुना १२७
वागीश्वर्यै नमश्चेति संपूज्यैनां तु तर्पयेत्
आहुतीनां त्रयेणाग्नेः कार्यमस्या विसर्जनम् १२८
अथ सूत्रे प्रतिष्ठायां शुद्ध्यर्थमवलोकयेत्
त्रयोविंशतितत्वानि चापस्तेजोमरुद्वियत् १२९
गन्धो रसो स्पर्शौ शब्दोपस्थौ च पायु च
पादौ पाणी च वाङ्नासा जिह्वा चक्षुस्त्वचश्श्रुतिः १३०
मनोऽहङ्कारबुद्धि च प्रकृतिः स्यात्ततः परम्
तत्वानि कथितान्येवं लादिटान्ताः द्विजोत्तमाः १३१
चतुर्विंशतिवर्णाः स्युः शिशो वामस्तथैव च
अघोर इति मन्त्रास्स्युष्षट्पञ्चाशत् पुराणि तु १३२
अमरेशः प्रभासश्च नैमिशः पुष्करोऽवधिः
डिण्डिमुण्डिस्तथा भारभूतिश्च लकुलीश्वरः १३३
हरिश्चन्द्रश्च श्रीशैलो जल्पेशाम्रातकेश्वरौ
मध्यमेशो महाकालः केदारो भैरवस्तथा १३४
गया चैव कुरुक्षेत्रं नाखलो नखलस्तथा

विमलेशोऽट्टहासश्च महेन्द्रो भीमसंज्ञकः १३५
वस्त्रापदो रुद्रकोटिर विमुक्तो महालयः
गोकर्णोभद्रकर्णश्च स्वर्णाक्षः स्थाणुरित्यपि १३६
भ्गलरडो द्विरण्डश्च माकोटो मण्डलेश्वरः
कालञ्जरः शङ्कुकर्णः स्थूलेश्वरः स्थलेश्वरः १३७
पैशाच राक्षसं याक्षं गान्धर्वं चैन्द्रमेव च
सौम्यं चैव ताथाग्नेयं प्राजेशं ब्राह्ममेव च १३८
अकृतश्च कृतश्चैव भेरवोब्राह्मवैष्णवौ
कौमारमौमं श्रैकण्ठमष्ट सप्तभवन्तिहि १३९
अमरेशादि चात्पत्वे हरिश्चन्द्रादितेजसि
गयादि वायु तत्वे च व्योम्नि वस्त्रापदादि च १४०
भ्गलण्डाद्यहंकारे पैशाचाद्यं मनौस्थितम्
प्रकृतावकृताद्येवं षट्पञ्चाशत् पुराणानि तु १४१
महेश्वराद्यरूप्यन्ता पदानामेकविंशतिः
महेश्वर पदं चाद्यं परमात्मा द्वितीयकम् १४२
ततश्शर्वपदंचोक्तं शिवेति च ततः परम्
निधनोद्भवसंज्ञं च निधनाख्य पदं ततः १४३
अनिधनपदं चैवम् ओंस्वक्षःपदमतः परम्
ओंभुवश्चपदं चान्यदोंभूः पदमतः परम् १४४
चतुर्धू निर्मितम् चान्यन्नाना नाना पदं ततः
अनादे तुपदं चान्यदभस्मेति पदं ततः १४५
अधूमपदमन्यच्च अनग्नीति पदं ततः
अरूपपदमन्यच्च ज्यातिर्ज्योतिस्तथैव च १४६
तेजस्तेजः पदं प्रोक्तुं प्रथम प्रथमेत्यपि
अरूपिन् पदयुग्मंच पदान्येकं च विंशतिः १४७
प्रतिष्ठाकलयाचैतत् सर्वं व्याप्तं तु भावयेत्

इत्युक्त संख्यत त्वार्णपदमन्त्रैस्त्रिविष्टपैः १४८
गर्भितां तामनुस्मृत्य संतधीतोपभुक्त्या
शुद्धं पाशं लघुं स्मृत्वा शोध्यं च गुरुमेतयोः १४९
वाचकं तद्वदुच्चार्य शोध्येशुद्धिं विलोकयेत्
सर्वसन्धानयोगाय चोपदिष्टश्शिवद्विजाः १५०
ओं ह्रां ह्रीं पूर्वमुच्चार्य चतुर्थ्यन्तं कलाद्वयम्
नमस्कारान्तमिष्ट्वान्ते दद्यान्मूलाहुतित्रयम् १५१
कलोपस्थापनाद्यं तु सर्वं पूर्ववदाचरेत्
निष्कृतिं शिरसादद्याच्छत होमेन देशिकः १५२
हरेश्शुक्लं रसं दत्वा कलां विद्यां समाश्रयेत्
कलया विद्यया व्याप्तः पुरुषश्चादिमो भवेत् १५३
रागो नियतिविद्ये च कलाकालौ च मोहिनी
ञकारादिधकारान्ता वर्णास्सप्त विलोमतः १५४
मन्त्रश्शिखा पुराणीह सप्तविंशतिसंख्यया
वामो भीमस्तथोग्रश्च भवेशानैकवीरकाः १५५
प्रचण्डोमापती चाजोऽनन्तैकशिवसंज्ञकौ
क्रोधेशश्चवै संवर्तो ज्योतिः पिङ्गश्चादिमो भवेत् १५६
पञ्चान्तकैकवीरौ च शिखेदश्च महाद्युतिः
वामदेवो भवश्चैवोद्भवश्चाप्येकपिङ्गलः १५७
एकेक्षणस्तथैशानस्तथैवाङ्गुष्ठमात्रकः
षट्कं च पञ्चकं चैवं युग्मं युग्मं द्वयं द्वयम् १५८
अष्टकं पुरुषादौ च मायान्ते तु पुराणि हि
पदानि विंशतिर्व्यापिन् व्यापिन्निति पदं भवेत् १५९
व्योमिन् व्योमिन् पदं पश्चादीप्सितं स्यादचेतनम्
परमेश्वर परायेति पदं चैव पुनर्भवेत् १६०
ज्योतिरूपायसंज्ञं च सर्वयोगाद्यमेव च

पदं चानिधनायेति पदं गोप्त्रे प्रकीर्तितम्  १६१
गुह्याय चातिगुह्याय पदं स्यादौ नमो नमः
पदं ब्रह्माणि पञ्चात्र सद्यादीनि क्रमेण तु  १६२
शिवायेति पदं सर्वप्रभवेति ततः
शिवायेति पदं पश्च ाद् ओं पदमन्ततः  १६३
ध्यानाहारायसंज्ञं च कीर्तितानि पदानि च
संधानं पूर्ववत् कृत्वा विद्यामग्नौ निवेशयेत्  १६४
निष्कृतिं शिखया दत्वा शतहोमं विधाय च
रूपगन्धौ हृहाणेति रुद्रे शुक्लं समर्पयेत्  १६५
भवाख्यं पदमेतत्तु कलात्रितयगोचरम्
भवोत्तीर्णमथात्मानमात्मतत्वोपरि स्थितम्  १६६
अधिकारमलाविष्टमुद्धवैश्वर्य भाजनम्
बुभोजयिषुराचार्यो भोगं शुद्धात्नसाधनम्  १६७
अनुकूलमसंकीर्णमनासक्तिनिबन्धनम्
विलोक्य मनसा शान्ति तस्यामन्तर्गतानि च  १६८
तत्वानि त्रीणि विद्येशसादाख्यानि द्विजोत्तमाः
वर्णास्तु गखकाः प्रोक्ता मन्त्रौ वक्त्रतनुच्छदौ  १६९
वामा ज्येष्ठा च रौद्री च काली कलविकरणी
बलविकरणी चैव बलप्रमथनीत्यपि  १७०
सर्वभूतदमन्येव मनोन्मन्यपरा भवेत्
पुराणि नव विद्यायामनन्तस्सूक्ष्मसंज्ञकः  १७१
शिवोत्तमैकनैत्रौ चाप्येकरुद्रस्त्रिमूर्तिकः
श्रीकण्ठश्च शिखण्डी चेत्येवमीशे पुराष्टकम्  १७२
सादाख्यभुवनं स्वस्मिन् पुराण्यष्टादशैव तु
एकादशपदान्यासन्नित्यंयोगिन इत्यपि  १७३
योगपीठाद्यमन्यत् स्याच्छाश्वतायपदं पुनः

ध्रुवायेतिपदं चैवानाश्रितायपदं ततः १७४
अनाथायपदं प्रोक्तमनन्तायपदं पुनः
शिवायेतिपदं सर्वव्यापिने च पदं ततः १७५
व्योमादिव्योमरूपाय पदं व्योमाद्यमेव च
निष्कृतौ शतहोमं तु कवचेन समाचरेत् १७६
सर्वं पूर्ववदुद्दिष्टं शुक्लार्थं बुद्ध्यहङ्कृती
ईश्वरः कारणेशस्स्यात् प्राग्वत्सर्वमतः परम् १७७
शान्त्यतीतकलायां तु शिवतत्त्वं व्यवस्थितम्
बीजं षोडशकं मन्त्राश्चास्त्रेशानशिवास्त्रयः १७८
ओमित्येकं पदं ज्ञेयं पुराणि दश पञ्च च
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्च नाभसी १७९
पुराणि बन्दवामीह पञ्च प्रोक्तान्यतः परम्
इन्धिका दीपिका चैव रोचिका मोचिका तथा १८०
तथोर्ध्वगामिनी चेति नादोत्थभुवनानि तु
व्यापिनी व्योमरूपा चाप्यनन्ता च ततःपरम् १८१
अनाथा च तथा प्रोक्ताऽनाश्रिता पञ्चमीरिता
भुवनानि तु शाक्तानि पञ्चैव कथितानि च १८२
एभिश्च गर्भिणीं ज्ञात्वा सन्धानं शुद्धया नयेत्
ह्यौं हौं चतुर्थ्यन्तं कलाद्वयमुदाहरन् १८३
संपूज्य मनसा युक्तं दद्यान्मूलहुतित्रयम्
कलोपस्थापनाद्यं तु सर्वं पूर्ववदाचरेत् १८४
निष्कृतौ शतहोमं तु शिवमन्त्रेण कारयेत्
अस्त्रं त्यक्त्वा तु दीपेन पाशच्छेदाय होमयेत् १८५
ततो निर्बीजदीक्षायां पूर्णान्ते कारयेदिदम्
समयं समयाचारं शक्तो पाशात्मके न्यसेत् १८६
समयं समयाचारपाशशुद्धिं महेश्वर

शिष्यस्य कुरु कुर्वन्नित्युक्त्वा शुक्लं समर्पयेत् १८७
शिवबीजं समुच्चार्य सदाशिवपदं पुनः
मनो हृहाण स्वाहेति चाहुतित्रयमाचरेत् १८८
पूर्ववत्संविसृज्यात्म सूत्रं संगृह्य निर्मलम्
रेचकेनात्मसंस्थं तु शिष्यदेहे निवेशयेत् १८९
शिरस्युदकबिन्दुं च दत्वा वागीश्वरीं यजेत्
संतर्प्य पावकस्थां तु ततो विज्ञापयेदिति १९०
पश्वर्थं खेदितोसि त्वं देवि गच्छ स्वगोचरम्
शान्त्यतीतां कलां शक्तितत्त्वे लीनां विचिन्त्य च १९१
आत्मतत्त्वं च मायान्तमुपस्थाप्य गुरूत्तमाः
आत्मतत्त्वं चतुर्थ्यन्तमादौ मूलसमन्वितम् १९२
नमः प्रणवसंयुक्तमुक्त्वा संपूज्य सन्निधौ
विधिवैकल्यशुद्ध्यर्थं स्वाहान्तं शिवमन्त्रतः १९३
सशब्दं तु शतं हुत्वा विद्यातत्त्वमुपांशुवत्
सदेशान्तमुपस्थाप्य हुत्वा चाष्टोत्तरं शतम् १९४
मन्त्रोच्चारणवैकल्याच्छिवमन्त्रेण शुध्यति
शिवतत्त्वमुपस्थाप्य शक्त्यन्तं मानसं स्मरेत् १९५
शतमष्टोत्तरं हुत्वा मनोवैकल्यमात्रतः
मुच्यते शिवमन्त्रेण शिखाच्छेदमथारभेत् १९६
अध्वान्तस्थां च सर्वाध्वव्यापिकामध्वकारणाम्
ध्यात्वा शिखां तदग्रस्थं शुद्धस्फटिकसन्निभम् १९७
संचिन्त्य शिष्यचैतन्यं कर्तरीं शिखयालभेत्
छिन्धाच्छिखां तु शिखया ततस्संस्नापयेच्छिवम् १९८
आचम्य सकलीकृत्य गुरुर्गोमयवेष्टिताम्
स्रुगग्रस्थां शिखां पूर्णां हुत्वाहुत्या च पावके १९९
ततो बहिर्विनिःसृत्य स्रुक्स्रुवौ कर्तरीमपि

प्रक्षाल्याचम्य शुद्धस्तु शिवमिष्ट्वा वदेदिदम्  २००
अध्वशुद्धिश्शिखाच्छेदस्त्वत्प्रसादान्मया कृतः
यावत्त्वयं परं धाम भगवन् परमेश्वर  २०१
शिष्यं संयोजयाम्येनमाज्ञेदानीं विधीयताम्
एवं कुर्वित्यनुज्ञातः प्रकृष्टोऽर्घ्यकरो गुरुः  २०२
समाहूय शिशुं यायाच्छिष्ययुक्तोऽग्निसंमुखम्
शिष्यस्य प्रोक्षणं चैव सकलीकरणं ततः  २०३
अन्तर्यागं ततो नाड्योस्सन्धानं मन्त्रतर्पणम्
सकलीकृतमन्त्राणामेकैकाहुतिदानतः  २०४
सकलीकरणशुद्धिं च कृत्वा संयोजयेच्छिवे
विद्यातत्त्वास्पदाचार्यो बिन्दुकॢप्तासनस्थितः  २०५
इन्धिका दीपिका चैव रोचिका मोचिका तथा
तथोर्ध्वगामिनी चेति सूक्ष्मा सुक्ष्मामृता मता  २०६
बिन्दुशक्तिरिति प्रोक्ता नादशक्तिः कला द्विजाः
आभिः कलाभिस्संकॢप्तदेहयुग्देशिकोत्तमः  २०७
व्यापिनी व्योमरूपा चाप्यनन्ता ह्यपरा मता
अनाथानाश्रिता चेति बहिः करणसंयुतः  २०८
अन्तः करणसंयुक्तस्समनाकल्पितं च तत्
आत्मतत्त्वोन्मनाश्शर्वे समापूरितदेहयुक्  २०९
कृत्वा पूरककुम्भौ तु जिह्वासंबद्धतालयुक्
ईषद्धयावृत्तवक्त्रः स दन्तैर्दन्तान्न संस्पृशन्  २१०
सम्यगुन्नतगात्रस्तु शिशुं संयोज्य चात्मनि
नाडीं सुषुम्नां प्राणाख्यवायुनैकीकृतां स्मरन्  २११
सम्नत्रं शिष्यचैतन्यं शुद्धस्फटिकसंनिभम्
संभाव्य मन्त्रमुच्चार्य कारणत्यागयोगतः  २१२
शिवे संयोजयेच्छिष्यं पूर्णया कुम्भकेन तु

व्यावर्तितमनः प्राणदानशक्तिकलात्मनः  २१३
समीपे स्रुक्स्रुवौ मुक्त्वा मृतं संहारमुद्रया
शुद्धमुद्यच्छिखाकल्पं वह्नेरादाय पुद्गलम्  २१४
योजयेदस्त्रबीजेन शरीरे तस्य पूर्ववत्
तत्र युक्तोऽप्यसौ तेन न समानगुणीकृतः  २१५
यावत्तावत् प्रयातस्य तत्वप्राप्तिर्यथा विभोः
साम्राज्याधिगमेऽप्युच्चैर्नृपसूनोः कृतार्थता  २१६
न षड्गुणयानभिज्ञस्य शतस्यापि न राजते
स्वगुणव्यक्तये तेन स्रुवेणाज्याहुतीस्तु षट्  २१७
होमयेद् देशिको धीमान् प्रयोगेणामुना यथा
सर्वज्ञो नित्यसंबोधः स्वतन्त्रस्तृप्तिमान् भव  २१८
अलुप्तानन्तशक्तिस्त्वं ह्रस्वप्रासादपूर्वकम्
आत्मन्निति पदोपेतं स्वाहान्तं दीपसंयुतम्  २१९
इत्येवं कथिता दीक्षा सर्वपापविमोचनी
चत्वारो ब्राह्मणाद्याश्चाप्यनुलोमाश्च ये मताः  २२०
न्यायजा गूढजाता वा दीक्षायामधिकारिणः
जामातृपितृपत्न्याद्याः योग्यास्स्युर्मोक्षकांक्षिणः  २२१
दीक्षकर्ता शिवो यस्मात्तेषां तस्मान्न पुत्रया
अन्त्यजानां न होत्री स्यात् किं तु तेषां तु चाक्षुषी  २२२
इति उत्तरकामिकाख्ये महातन्त्रे निर्वाणदीक्षाविधिस्त्रयोविंशतितमः पटलः

## चतुर्विंशत्तमे पटले आचार्याभिषेक विधिः

अभिषेकमथो वक्ष्येयेन स्यात् देशिकोभुवि
आर्यावर्तोद्भवः श्रीमान् सर्वलक्षण लक्षितः  १
यत्र विप्राः सदाचाराः यतयश्च तपोधनाः

सन्ति देवाः तथा वेदाः आर्यावर्त इतिस्मृतः २
एषदेशो समादिष्टो न च विन्ध्याब्धि मध्यगः
ककाराष्टक निर्मुक्तः प्रसंङ्गात् सोऽपि कथ्यते ३
कर्णाटश्च कलिङ्गाख्यः कच्छः काश्मीर संज्ञकः
कोङ्कणः करहाटश्च कुक्कुटः काङ्क ईरितः ४
आदिशैव कुलेजातः श्रेष्ठस्यात् स्थापनादिषु
विप्रादयश्चतुर्वर्णाः अपि योग्याः स्व कर्मणि ५
दीक्षायां सर्वमर्त्यानां पतिष्ठायामथोत्सवे
स्नपने प्रोक्षणेऽन्यत्र प्रायश्चित्तेऽभिषेचने ६
व्याख्यानादौ च शस्तस्यात् स्वार्थे वाथ परार्थके
सर्व देवार्चने विप्रास्त्वादि शैवो गुरूत्तमः ७
विप्रादयस्त्रयो वर्णाः दीक्षायां स्थापनेऽपि च
ब्राह्मणक्षत्रियादीनां क्षत्रियः शूद्र वैश्ययोः ८
वैश्यः शूद्रस्य दीक्षायां स्वस्यजातावपीष्यते
स्वार्थेष्टौ चल लिंगस्य प्रतिष्ठायां त्रयस्विमे ९
शूद्रोपि शूद्रदीक्षायां स्वार्थे च चलसंज्ञके
बाणलिंगेक्षणेवापि स्थापको यदि नैष्ठिकः १०
आचार्यं गौलकं चैव दयित परिवर्तकम्
तथैव पारवेत्तारं देवलं च पुनर्भवत् ११
अभक्ष्य भक्षकं चैव कुण्डं भस्माङ्कुरं तथा
खट्वाङ्गिश्यामदन्तौ चाप्यारूढं पतितं तु वा १२
अलसं वृषलं चैवं व्रात्यं वैश्यापतिं तथा
असच्छस्त्रकृतं क्लीबं व्याधितं कुनखं तथा १३
अथव्यसनिनं पारदारिकं वृषलीपतिम्
चित्रकं गायकं चैव नर्तकं च विवर्जयेत् १४
परराष्ट्र भृतं चैवाशुद्धबुद्धिं च तान्त्रिकम्

परापवाद शीलं च तथा बहुकिणैर्वृतम्  १५
सूतकं कामुकं वैद्यं कुतर्कस्थं तथालभम्
बैद्धादि शास्त्रनिरतं सन्यासं व्रतिनं तथा  १६
चपलं शठसञ्चारं वृद्ध्या जीवन मेव च
शुक्लकर्मरतं चैव न्याये वैशेषिकेपि च  १७
सांख्ये विविधभेदे च मायावादेऽर्हतो मते
बौद्धे लोकायते शास्त्रे मीमांसां विशषतः  १८
अन्येष्वपि कुमार्गेषु कापाले पाञ्चरात्रके
सोमसिद्धान्तके वापि पूर्वाम्नाये तु पश्चिमे  १९
भैरवे कौलशास्त्रे च शेषेष्वनादृतेषु च
सिद्धप्रमेय जाले च कृताशं च निरन्तरम्  २०
काव्य नाटकसक्तं च भरते तु निरन्तरम्
कामशास्त्रकृताभ्यासं पदव्युत्क्रान्तकं नरं  २१
ज्योतिज्ञानपरंवेद पुराणहित चेतसम्
तत् सिद्ध पुरुषार्थेषु कृतयत्नं परित्यजेत्  २२
कामिकादि शिवज्ञानं वेदार्थज्ञानमेव च
समं यो मन्यते मोहात्तं प्रयत्नेन वर्जयेत्  २३
शिव सिद्धान्त संसिद्ध ज्ञानयोग क्रियासु च
चर्यायां व स्व संसिद्ध प्रमेय शिवभाषिते  २४
शैवार्थ देहिके हित्वा विचारं सन्ततं नरः
योध्यत्र कुरुते न्यासं दुर्मतिं च विवर्जयेत्  २५
अन्यायेन शिवद्रव्य हारिणं हन्तृ सन्निभम्
अल्पविद्यामर्षकौ च विरूपं च विवर्जयेत्  २६
दैवज्ञं च तथाम्बष्ट मूहापोह विवर्जितम्
समान गोत्र संबन्धं कुसुमाद्यं च वर्जयेत्  २७
इत्युक्त लक्षणोपेतं शुद्धलग्नोदयेऽहनि

अभिषेकं ततःकुर्यात् अंकुरार्पण पूर्वकम्  २८
पूर्वस्यां वाथ वैशान्यां पश्चिमायां चदिश्यथ
मण्डपे सौम्य वक्त्रे तु वितानेनोपशोभितम्  २९
अर्धहस्तोच्छ्रयं तद्वद्युगाश्रं वेदिकाद्वयम्
चतुर्हस्त प्रविस्तारं दक्षिणोत्तर दिग्गतम्  ३०
स्वस्तिकेन चतुर्दिक्षु रञ्जितं दीपराजितम्
भुवः परिग्रहं कृत्वा मण्डपेग्नौ शिवं यजेत्  ३१
लुप्तक्रियान्वितश्शिष्यो यदि संस्कृत्य दीक्षया
बहिरन्तर्बलिं दत्वा विधान मिद माचरेत्  ३२
काञ्जिकोदन मृद्भस्म दूर्वा गोमय गौलकैः
सिद्धार्थदधि तोयैश्च निर्मृज्य तदनन्तरम्  ३३
नवधा पञ्चधा वापि सर्वधान्यो परिस्थितान्
घटान्वा कलशान्वाथ सकूर्चान् सापिधानकम्  ३४
स सूत्रान् सोदकान् गन्ध रत्न स्वर्ण वरान्वितान्
चूताश्वत्थ पलाशास्यान् बीजापूरफलावहान्  ३५
सदेशानेन विद्येशैः नवपञ्चपवित्रकैः
पञ्चपक्षे निवृत्यादि कलाभिस्त्वभि मन्त्रयेत्  ३६
शिवेन शतधालब्धान् पूजितान् स्नपनोचितान्
अथवा कलशानेकघटं वा शिव संयुतम्  ३७
दक्षवेद्यां तु संस्थाप्य सौम्यायां तु शिशुं न्यसेत्
भद्र पीठे शिवेनैव साङ्गेनाधिष्टितं यथा  ३८
स्वासनेन तथा सम्यक् अर्चितं विभवेन वा
वर्णभक्त शरावैस्तु निर्मज्य वा जलेन वा  ३९
शुद्धोदकेन संस्नाप्य तस्मात् देशान्तरे पुनः
परि वर्तित सूत्राद्यं सोत्तरीयं समालकम्  ४०
सितचन्दनदिग्धाङ्ग भस्मोद्धूलितमेव च

आनीयं दक्षवेदिस्थो भद्रपीठे निवेशयेत् ४१
पूर्वास्यं गन्धपुष्पाद्यैः पूजयित्वा प्रवर्तयेत्
आरात्रिकं ज्वलद्दीपैस्सद्वर्त्या प्रतिबोधितैः ४२
ततोऽस्य दद्यादाचार्यः शिष्यस्योष्णिकादिभिः
करणीं कर्तरीं तद्वत् धटिकां स्रुक् स्रुवौपुनः ४३
दर्भं च पुस्तकान्यच्च सूत्रमामकुटं गुरुः
पादुकां चामरं छत्रं हस्तिनं शिबिकादिकम् ४४
राजाङ्ग मन्यत् तत्काले दद्याच्छ्रद्धा समन्वितः
आज्ञां च श्रद्धया यावदद्य प्रभृति देशिकः ४५
दीक्षाव्याख्यादिकं ज्ञात्वा परिक्ष्य विधिना वुर्थ
तथैवं देव देवाय देशिकाय मयाकृतम् ४६
त्वत् प्रसादादविघ्नेन चाधिकारं करोत्विति
विज्ञापयेत् ततः कुण्ड सन्निधिं प्राप्य देशिकः ४७
निवृत्यादि कलानां तु पृथगेवाहुतिं नयेत्
स्व स्व मन्त्रैः ततः पूर्णां कृत्वा तद्दक्षिणे करे ४८
दर्भोल्मुखेन पञ्चाङ्गैः कनिष्टादिषु लाच्छयेत्
हरहस्तं च संकल्प्य स्वाधिकारं समर्पयेत् ४९
तदर्थं विधिनानेन प्रयश्चित्तं समाचरेत्
शिवासनाङ्गमन्त्रैश्च पूज्यदेवस्य नामभिः ५०
अङ्गैर्दशाहुतीर्हुत्वा शिवेनान्ते दशाहुतीः
तेनैव पूर्णां दत्वान्ते भगवन्तं क्षमापयेत् ५१
अनेनैव प्रकारेण साधकं चाभिषेचयेत्
किंतु सध्यानुना लब्धै र्घटैरस्याभिषेचनम् ५२
दीक्षितः पुत्रकः प्रोक्तः संस्कृत स्समयी कृतः
सामान्य समयी यस्तु स तु माहेश्वरस्स्मृतः ५३
जात्युद्धार विहीनो यस्सामान्य समयी भवेत्

तद्युक्तस्तु विशेषस्यात् चाक्षुष्याद्यास्तु याः स्मृताः ५४
दीक्षास्ताभिस्समायुक्ताः परिचारक नामकाः
न तु लिंगार्चने योग्याः किमु दीक्षादि कर्मणि ५५
शापानुग्रह कर्ता चेत् गुर्वादीश्चैव दीक्षयेत्
शिवद्विज कुलोत्थाये ते च माहेश्वरा जनाः ५६
शिवेन दीक्षिताः पूर्वं सृष्ट्यादौ सर्व एव ते
मदर्चनार्थं तेषां च दीक्षा शुद्ध्यर्थमिष्यते ५७
शरीर बन्धनं यस्मात् प्रायश्चित्त मथाचरेत्
बहुधा दीक्षितोयस्तु शीघ्रं शिवमवाप्नुयात् ५८
भौतुको ब्रह्मचारी वा देशिको गृहमेधिनाम्
नैष्टिको नैष्टिकेषु स्यात् भुक्तौ मुक्तौ क्रमाद्यतः ५९
भुक्ति मुक्ति प्रसिद्ध्यर्थं गृहथो गुरुरिष्यते
सर्वानुग्राहकः प्रोक्तः सान्तानिक गुरुस्सदा ६०
अनुलोम क्रमो वा स्यात् प्रतिलोमस्तु नेष्यते
योषित् युक्तस्स केशश्च जटारुद्राक्ष दण्डयुक् ६१
कौपीन मेखलाभिश्च परित्यक्तस्तुयो भवेत्
स गृहस्थ इति प्रोक्तः मुण्डवा स्याज्जटादियुक् ६२
व्रती दार वियुक्तस्तु भिक्षाशी च तथा भवेत्
व्रती व्रताऽस मर्थो यो विधिना व्रतमर्पयन् ६३
पश्चात् कृतविवाहस्स व्रतार्पक इहेष्यते
सृष्ट्यानन्तर काले ये दीक्षिताः कौशिकादयः ६४
शिवेन तत्कुलोत्थाः स्युः शैवास्सान्तानिकाद्विजाः
आदिशैवास्तु ते ज्ञेयाः सर्वानुग्रहकामताः ६५
वर्णाचार व्रतास्तेषु तद्वियुक्तास्तु वा मताः
पक्षत्रय मधश्शायी नक्ताशी चरुभुक् सदा ६६
मौनी त्रिषवण स्नायी शिवाग्नि गुरुपूजकः

समूर्तिकं शिवं साङ्गमभ्यसेच्छक्तितो गुरुः ६७
आचार्य व्रतमेतस्यात् व्रतानामुत्तमं व्रतम्
आचार्यस्साधकश्चान्यः पुत्रकः समयीयतः ६८
लिङ्गाद्यं पूजयेन्नित्यं नान्यो नैमित्तिके मतः
प्रत्यहं समनुष्ठेयं तन्नित्यमिह कीर्त्यते ६९
स्नपनोत्सव शान्त्यादि कर्म नैमित्तिकं मतम्
प्रयाश्चित्ते स्वनित्योत्थे तस्योस्स्यादधिकारिता ७०
स्वार्थ नैमित्तिके योग्यः पुत्रको न परत्र च
यदि सान्तानिकौ तौ हि सोऽसौ नैमित्तिकेपि च ७१
स्वार्थे वाथ परार्थे वा स्थापनादि विवर्जिते
आचार्याधिकृते कृत्ये सर्वस्मिन् स्थापनादिके ७२
तदङ्ग होम कर्मादौ योग्यौ तौ देशिकाज्ञया
स्थापनाद्यङ्ग भूतेषु मङ्गलाङ्कुरकादिषु ७३
अधिकार स्तयोरस्ति देशिकाज्ञा भवेद्यति
आचार्य सर्व योग्यस्याद्यदि सान्तानिको भवेत् ७४
साधकश्च तथा भूतस्सर्वकर्माणि शंसितः
महा शैवादयो योग्या दीक्षिता नित्यकर्मणि ७५
नैमित्तिकं कृतं तैस्तु यदि दोषाय कल्पितम्
लक्षाध्यायी गुरुश्रेष्ठः भुक्ति मुक्ति फलप्रदः ७६
मध्यमस्स्यात्तदर्धज्ञस्तत्पादज्ञोऽधमो भवेत्
संहिता पारगो वाथ लक्षाध्याय्युपदेशतः ७७
संहिता स्याच्चतुष्पादयुक्ता कामिक पूर्विका
शैवं चतुर्विधं प्रोक्तं शैवं पाशुपतं तथा ७८
सोमसिद्धान्तकं चैव लाकुलं च चतुर्विधम्
चतुर्वक्त्रान्महेशाच्च पुरुषाद्याननोद्भवम् ७९
पूर्वं पुर्वगुणोत्कृष्टं तत्र त्वेवं चतुर्विधम्

प्रत्येकं त्रिविधं प्रोक्तं वामदक्षिण भेदतः ८०
सिद्धान्तास्येन तेषां च सिद्धान्तः श्रेष्ठ उच्यते
तत्रापि शैवसिद्धान्तः सर्वेभ्यो ह्युत्तमोत्तमः ८१
सिद्धान्तो मन्त्रतन्त्रं स्याद् अतिमार्गं ततोऽवरम्
अध्यात्मं यत्ततो नीचं तस्माद्वैदिकमेव च ८२
वैदिकाल्लौकिकं हीनं ब्रह्माद्याः पञ्चदेवताः
वक्तारो लौकिकादीनां तेषां भेद इहोच्यते ८३
सद्यमन्त्राद्विनिष्क्रान्तौ ब्रह्मनामखिलार्थ दृक्
तेन वै लौकिकं शास्त्रं मर्त्यलोकेऽवतारितम् ८४
शब्दशास्त्रमलंकारो निरुक्तं छन्द एव च
कौटिल्यं भारतं ज्योतिश्शास्त्रं वात्स्यायनादिकम् ८५
आयुश्शास्त्रं धनुश्शास्त्रं वृक्षायुर्वेद एव च
लोकायतं तथा सांख्य मार्हतो मतमेव च ८६
मीमांसा दण्डनीतिश्च वार्ताद्यं लौकिकं मतम्
वाम मन्त्रोद्भवो विष्णुः कारणेशो द्वितीयकः ८७
तेन वैदिक मुद्दिष्टं त्वष्टादश पुराणकम्
धर्मशास्त्रं च वेदान्तं पाञ्चरात्रं च बौद्धकम् ८८
रुद्रोऽघोराद्विनिष्क्रान्तो स्वध्यात्मं च प्रणीतवान्
न्याय वैशेषिकं सांख्यं सेश्वरं यत् प्रणीतवान् ८९
ईश्वरः पुरुषाज्ञात स्त्वति मार्गं प्रणीतवान्
पञ्चार्थं लाकुलं तान्यत् तथा पाशुपतं मतम् ९०
सदाशिवोहि भगवान् मन्त्र तन्त्र मपालयत्
ऋक्यजुस्सामाथर्वाश्च पुरुषाद्याननोद्भवाः ९१
पश्चिमं वाम संज्ञं तु वामाद्दक्षिणमुत्तमम्
दक्षिणात् कौलकं श्रेष्टं महाकौलं ततः परम् ९२
पूर्वाम्नायां ततःश्रेष्ठं तस्मात् सिद्धान्त उत्तमः

सिद्धान्तात् परमं ज्ञानं नेति शास्त्रस्य निश्चयः ९३
अन्यतन्त्रेषु येमुक्ताः सिद्धान्ते पशवो मताः
सिद्धान्तो वेदसारः स्यादन्यद्वेद बहिष्कृतम् ९४
सिद्धान्त विहिताचारो वैदिकाचार उच्यते
गर्भा धानादिकं कर्म यावच्छ्राद्धावसानकम् ९५
तावत्तु वैदिकं कर्म शैवं वाथ समाचरेत्
तस्यापि दीक्षा कर्तव्या जातकर्मादिका क्रिया ९६
युक्ता समयया स्त्री चेत् दीक्षया पुरुषेण च
दीक्षा युक्तेन सोढा वै तद्गर्भाधान मेव च ९७
तथा पुंसवनादिश्च शैव आवश्यको मतः
तत्पुत्रस्यापि कर्तव्या जातकर्मादिका क्रियाः ९८
क्रियास्तस्यापि कर्तव्याः पुरुषार्थ प्रसिद्धये
वैदिक्यादौ तदन्ते वा कर्तव्या लोकसंवृतौ ९९
भार्या दीक्षा विहीना चेत् तस्याः पुत्रस्य चोभयोः
वैदिक्येन क्रियाकार्या भर्ता यद्यपि दीक्षिताः १००
निकृष्टेष्वनुलोमेषु वैदिकी नेष्यते क्रिया
हित्वा सुवर्णं दैवज्ञं तथा स्याद् वैदिकी क्रियाः १०१
शैव कर्म समायुक्ता शैवे शैवी च केवला
श्रुतिस्मृत्यादि संसिद्ध मनुष्टानं तु यद्भवेत् १०२
आवश्यके वा शौचे वा स्नाने त्वाचमनेऽपि च
सन्ध्याया वन्दने वापि तर्पणे होमकर्मणि १०३
गर्भाधानादिके वापि दहने श्राद्ध कर्मणि
अष्टका करणे वापि नित्यनैमित्तिकेपि वा १०४
वेदाध्ययन संस्कारे सोमयागादिकेपि वा
वेदाध्ययनकादौ वा द्विजानां विहितं तु यत् १०५
तत्सर्वं कर्म कर्तव्यं न वावश्यं तु शैवकम्

कर्तव्यं त्वप्यनिष्टेयं शैवकर्म विरोधियत् १०६
विरुद्धं चेत् परित्याज्यं न तु शैवीं परित्यजेत्
संग्राह्यं वैदिकं सर्वं शैव वाक्याऽविरोधतः १०७
शैव वैदिक मेवोक्तं वैदिकं शैवमेव वा
वैदिकान्न बहिर्भूतं शैवं शैवात्तदप्यथ १०८
तथापि वैदिकाच्छ्रेष्टं शैवं शैवात्परम् नहि
सिद्धान्तं कामिकादिस्यात् नास्मात् परमनुत्तमम् १०९
शैवन्तु मूलभूतं स्यात् चतुर्वेदास्तमुद्भवाः
तदापि वैदिकं वेदसार मित्यादि वाक्यतः ११०
शैवे प्रोक्तं च सर्वत्र तदर्थोक्तया मुनीश्वराः
सर्वेषां कामिकादीनां शिवदेहत्वमिष्यते १११
स शिवो द्विविधः प्रोक्तः सृष्टि संहार इष्यते
कामिकाद्वातुलान्तेन वातुलात् कामिकान्तकः ११२
कामिकं तूर्ध्वमकुटं योगजं पुरुषाह्वयम्
अघोर मकुटं चिन्त्यं वामगं कारणं भवेत् ११३
अजितं सद्यमकुटं दीप्तमीशानवक्त्रकम्
सूक्ष्मं तु पुरुषास्यं स्यात् सहस्त्रंदक्षिणाननम् ११४
अंशुमान् वामवक्त्रं स्यात् सद्यास्यं सुप्रभेदकम्
विजयं कर्ण इत्युक्तो निश्वासं गलमुच्यते ११५
स्वायंभुवं च हृदयं नाभिरत्रानलं भवेत्
वीरं कटि प्रदेशस्यात् रौरवं गुदमुच्यते ११६
मकुटं तूरूप्रदेशः स्यात् विमलं वामगो भवेत्
चन्द्रज्ञानं तदग्रं स्यात् दक्षस्थं बिंबमन्यतः ११७
प्रोद्गीतं दक्षजानुस्यात् वामाङ्घ्रे र्ललितं भवेत्
जङ्घा सिद्धमिति प्रोक्तं संतानं वामगं भवेत् ११८
जङ्घाग्रं स्याच्च शार्वोक्तं वामकं पारमेश्वरम्

किरणं तल मित्युक्तं वातुलं वामकं तलम्  ११९
सृष्टिभेदः शिवः प्रोक्तः संहारो विपरीततः
ऋषय ऊचुः
पूर्वं तन्त्रवतारे तु कामिकं पादयुग्मकम्  १२०
इत्यादि कथितं देव परस्परविरोधनं
ईश्वर उचाच
बहुधा कथितं विप्राः भवद्भिरवधारितम्  १२१
मम सर्वत्र मकुटं तथा नेत्रं तथाप्यकम्
तदा पादौ च हस्ताश्च किं तु ध्यातु विभेदतः  १२२
सृष्टि संहार मार्गेण ममदेहो विभिद्ययत्
भोग मोक्ष प्रसिद्ध्यर्थं ज्ञानदेहो ममाग्रजाः  १२३
निराकारं भवेज्ज्ञानं संकरं तदुपास्यतः
परस्पर विरोधीति मतिहीनैः प्रबाध्यते  १२४
ऐश्वर्यं यद्भवेद्वाक्यं तत्पूज्यं मतमुत्तमैः
न पुम्भिरार्षकं वाक्यं दैविक मृषिभिस्तथा  १२५
न देवैः ब्राह्मणो वाक्यं वैष्णवं पद्मजेन वा
न शैवं विष्णुना वाक्यं बाध्यते न कदाचन  १२६
उत्तरोत्तर वैशिष्ट्यं सर्वेषां परिकीर्तितः
कामिकाद्यजितान्ताश्च ईश वक्त्रसमुद्भवाः  १२७
दीप्तादि सुप्रभेदान्ताः पुरुषाख्यान नोद्भवाः
विजयाद्वीरतन्त्रान्ताः पञ्चैतेऽघोरवक्त्रकाः  १२८
रौरवान्मुख बिंबान्ता वामदेव मुखोद्भवाः
प्रोद्गीताद्यष्ट तन्त्रं च सद्यवक्त्रसमुद्भवम्  १२९
तन्त्रावतारे सद्यादि शब्दै ईशादयो मताः
अष्टाविंशति तन्त्रं त सोपभेदं च वेत्तियः  १३०
स गुरुश्शिव एव स्यात् श्रिणुयात् तं प्रयत्नतः

अन्येन गुरुणारब्धे तस्य स्यादधिकारिता १३१
विशिष्ट गुरुणारब्धे न हीनस्याधिकारिता
हीना रब्धे विशिष्टस्याधिकार कर्मणीरितः १३२
विशिष्टमरणादौ स्याद् गुर्वन्तर निवेशनम्
विशिष्टे विद्यमाने च हठादज्ञेन कारिते १३३
साहानिस्तन्महांश्छिद्र समूहश्चान्धमूकता
तेन राज्ञो बवेद्दोषो राष्ट्र स्यापि भयं भवेत् १३४
कर्तुः कारयितुश्चापि ग्रामस्यापि च दोषकृत्
लोकप्रख्यात विद्याय गुरवे दत्तमरावपि १३५
द्रव्यं करोति सुमुखं सर्वलोकसमं यशः
ततो हि राज्ञो विज्ञेयं तद्दानं चोत्तमोत्तमम् १३६
तद्वित्तमाहृतं येन स पापी च स दुर्मतिः
नराधमस्स विज्ञेयः सर्वलोक बहिष्कृतः १३७

इति उत्तर कामिकाख्ये महातन्त्रे आचार्याभिषेक विधिः
चतुर्विंशतितमः पटलः

ज्ञानदीक्षाविधिः

ज्ञानदीक्षामहं वक्ष्ये शृणुध्वं द्विजसत्तमाः
सुवारे सुदिने पक्षे सुमुहूर्ते विशेषतः १
एकान्ते निर्जने स्थाने मध्यरात्रवुपक्रमे
सच्छिष्याणां सदाचार्यो बोधं कुर्याद्विशेषतः २
शिवालये गुरुस्थाने शक्तिपीठे मठे गृहे
शुद्धदेशे सुखासीनः पञ्चगोचरसंभवः ३
दर्भासने व्याघ्रचर्मे षट्पदे पीठमध्यमे
सद्गुरूणां सुखावासे वसेज्ज्ञानमनुस्मरन् ४
स्नानोपचारकाद्यैश्च दुकूलाभरणैरपि

गन्धपुष्पादिभिः पूज्य योगपीठस्य मध्यमे ५
पायसं चाप्यपूपं च ताम्बूलं च निवेदयेत्
षोडशेनोपचारणाभ्यर्चयेद्गुरुपादयोः ६
ज्ञानदीक्षां विशेषेण कुर्यात्सद्देशिकोत्तमः
शरीरमर्थं प्राणं च सद्गुरुभ्यो निवेदयेत् ७
दीर्घदण्डं नमस्कुर्यान्निर्लज्जो गुरुसंनिधौ
सच्छिष्ये तु विशेषेण बोधं कुर्यात्सदेशिकः ८
गन्ध पुष्करः स्थित्वा शिष्यमूर्ध्नि च कारयेत्
अर्चितं तु शिरोमध्ये पादं कारुण्य देशिकः ९
तत्पश्चाज्ज्ञान सद्भावमिदं शिष्यस्य बोधयेत्
प्रथमं तत्त्वरूपं च द्वितीयं तत्त्वदर्शनम् १०
तृतीयं तत्त्वशुद्धिश्च चतुर्थं चात्मलक्षणम्
पञ्चमं चात्मसन्दर्शं षष्ठं स्यादात्मशोधमन् ११
सप्तमं शिवरूपाख्यमष्टमं शिवदर्शनम्
नवमं शिवयोगं च दशमं शिवभोगकम् १२
त्रित्रिभेदैश्चतुष्केण पति पाश पशु त्रयम्
गुरोर्वचनमात्रेण जीवन्मुक्तिप्रकाशकम् १३
इत्यर्थं दशकं ज्ञानमार्गेणास्य विधीयते १३ १-२

पञ्चविंशत्तमे पटले गोत्र निर्णय विधिः

ऋषीणामपि सर्वेषां वक्ष्ये गोत्रविनिर्णयम्
गोत्राणां सहस्राणि आयुतान्यर्बुदानि च १
ऊनपञ्चाशदेवैषां संख्या स्यान्महतामिह
कौशिकः काश्यपश्चैव भारद्वाजोऽथ गौतमः २
अत्रिर्वसिष्ठश्चागस्त्यो जामदग्निश्च भार्गवः
अङ्गिराश्च मनुश्चान्यो द्वि विधास्ते प्रकीर्तिताः ३

शिवसृष्टि समोपेताः मुनयस्तद्विवर्जिताः
शिवसृष्ट्यन्विता ये ते पञ्चवक्त्रेषु दीक्षिताः ४
कौशिकाद्याश्च मुनयस्सर्वे सर्वत्र दीक्षिताः
गोत्रं च दीक्षया नैषां किं त्वेषां तु स्वजातिकम् ५
क्षत्रियाणां तु वैश्याणां गोत्रमाचार्यजं तु वा
नैव शूद्रस्य गोत्रं स्यादेवं गोत्रविधौ मतम् ६
आदिशैवे यथा गोत्रमनुशैवे तथामतम्
किं तु दीक्षाविहीनं तु शिवसृष्टिविवर्जितम् ७
जातिसिद्धं विवाहे तु परिहार्य विचक्षणैः
उभयं परिपाल्यं वा कलौ नेष्टं तु वा द्विजाः ८
प्रधानमुनयश्चादौ कथ्यन्ते द्विजसत्तमाः
कौशिका लिहिता रौद्रा विश्वामित्राः कतास्तथा ९
धनञ्जयास्ततोवाजानाश्च परिकीर्तिताः
अघमर्षणपूर्वाश्च कौशिका इन्द्र पूर्वगाः १०
पौरणाः काश्यपा रेफाश्शाण्डिल्याश्च ततो गताः
लोकाक्षयो भरद्वाजास्ततो रौक्षायणा मताः ११
भार्गवाःस्युः शरद्वन्तः कौमण्डाश्चततो मताः
ततो दीर्घतमा ज्ञेयाः ततः कारेण पालयः १२
उशना वामदेवोऽत्रिर्वार्धक्याश्च गविष्ठिराः
मुद्गलाश्च वसिष्टाश्च कुण्डिना उपमन्यवः १३
पराशरस्ततोऽगस्त्यस्साम्बवाहनसंज्ञकाः
सोमवाहनसंज्ञाश्च यज्ञवाहास्ततो मताः १४
वत्सा बिदा आर्ष्टिषेणा यस्का मित्रयुवास्तथा
वैन्याश्च शुनका विष्णुवृद्धा कण्वास्ततः परम् १५
हारिताः संकृतिश्चैव पश्चाद्रथीतरा मताः
मुद्धवाक्कथिताः प्रोक्ता ऊनपञ्चाशदेव हि १६

कौशिकानादितो वक्ष्ये कुशिकाः पार्णजङ्घकाः
पारक्या श्रौदलिर्माणिरालर्विर्बृहदग्नगः १७
तथा घट्टिस्तथापत्तिस्ततस्त्वापाद्यवा मताः
कान्तका बाष्पका वाच्युकिता लोमका धनाः १८
साङ्कायनाश्च गौराश्च लोकास्सौगतयो मतर्
यम दूता श्रानभिन्ना ततस्तारायणा मताः १९
चौलकायनसंज्ञाश्च जाबाल्युदुम्बरौ मतो
दण्डा भुवनयो याज्ञबल्क्यः सौश्रतयस्तथा २०
श्यातामयो भ्राष्टषट्क देहा निश्चिश्रत्यसंज्ञकाः
शालावतां मयूराश्च तथोदुत्सरित्यपि २१
चित्रयज्ञाश्च सौमत्याः श्वेतुन्दायनसंज्ञकाः
ततो मनुवतश्चैव मान्तवाः परिकीर्तिताः २२
येऽत्यन्तपादपर्यन्तास्ततोबालव्य इत्यपि
स्याद्रालवा उन्मनय इति रव्यातास्तु कौशिकाः २३
पञ्चार्षेयाः समुद्दिष्टा विश्वामित्रस्तथैव च
देवरातो दधीचीति प्रवरे ऋषयस्त्रयः २४
लोहिताः स्युर्दण्डकायाश्चक्रवर्मायणास्स्मृताः
जक्ष्ययः प्राज्ञको वाजिजय इत्यपि लोहिताः २५
कुशिकाश्चैव एते च प्रवरे स्युस्त्र्यार्षयकाः
विश्वामित्रः स्टैषकयो लोहिताश्च त्रयस्त्वमी २६
प्रवर्या ऋषयः प्रोक्तास्ततो रौक्षास्तु संमताः
माणा उद्वहला एते रोक्षास्तु कुशिका मताः २७
प्रवरे त्रियार्षेयाः स्युर्विश्वामित्रश्च रौक्षकः
माणिश्चैव त्रयस्त्वेते मुनयो मुनिपुङ्गवाः २८
विश्वामित्रस्ततो देवश्रवसश्च परि भ्रमः
श्रौमितो देवतरसः कामकायनिकस्ततः २९

कामकायन इत्येते विश्वामित्राः प्रकीर्तिताः
त्रयार्षेयाः समुद्दिष्टा विश्वामित्रस्तदादिमः ३०
देवश्रावस इत्यन्तो देवतरस इत्यमी
कठाः स्वैरन्ध्रिसंज्ञाश्चकरभाः सहिताः परे ३१
वाजायनाश्च कौकृत्यास्ततो जाणायना मताः
कौकृत्याः शैशिराश्चैव ततश्चोदुम्बरायणः ३२
पिण्डग्रीवास्ततो नारायणा नारद्य संज्ञकाः
एते कठाः समाख्यातास्त्रियार्षेयाः समीरिताः ३३
विश्वामित्रकठश्चाष्टिलश्चेत्यन्ये धनञ्जयाः
आश्ववीताः कारिषयो मयूराः सैन्धवायनाः ३४
तलव्याश्च महाद्वाश्च पुष्टा ये ते धनञ्जयाः
त्रियार्षेयाः समुद्दिष्टाः प्रवरे तु मुनीश्वराः ३५
विश्वामित्रो मधुच्छन्दो धनञ्जय इति त्रयः
आजायनस्ततः प्रोक्त एकवत्सश्च संमतः ३६
त्रियार्षेयाः समुद्दिष्टा विश्वामित्रस्तथैव च
स्यान्मधुश्चाथ सोजश्च प्रवर्या ऋषयस्त्रयः ३७
अघमर्षणपूर्वाश्च कौशिकाश्च ततो मताः
एते च त्रियेर्षेयाःस्युः विश्वामित्रोऽघमर्षणः ३८
कौशिकश्च त्रयस्त्वेते प्रवर्या मुनिपुङ्गवाः
कौशिकाश्चेन्द्रपूर्वाश्च ततः प्रोक्ता मुनीश्वराः ३९
त्र्यार्षेया इति विज्ञेया विश्वामित्रेन्द्र कौशिकाः
ऋषयस्त्रय आख्याताः प्रवर्या यागकर्मणि ४०
पौरणाद्या द्व्यार्षेयाःस्युः कौशिकास्ते च संमताः
ऋषी द्वौ संमतौ विश्वामित्रः पौरणः इत्यपि ४१
कौशिकाश्च दशाप्येवं न समन्वयगामिनः
काश्यपानथ वक्ष्येऽहं काश्यपस्ते चादिमः ४२

ततश्चाङ्गिरसो ज्ञेया माठरा एतिशायनाः
आभूत्याश्चैव वैशिप्रा धूमा धूम्रायणा मताः  ४३
धौमधौम्रायणा औधप्रचुराग्रायणा मताः
रुद्राग्नयश्च प्रवरास्तथा पैम्बकयोऽपरे  ४४
कायाताया अकापाया निकामौषनिकिस्तथा
काद्रायणा औज्वलयो रोहितायनसंज्ञकाः  ४५
पिङ्गाद्विर्मितकुम्भाश्च मारायणाय एव च
वैकर्णेयास्ततः प्रोक्ता धूमलक्ष्मणयः सुराः  ४६
कौषीतकेया वात्स्यः स्यादग्निशर्मायणा मताः
कामिजङ्घोदरा गौरीवायना दौक्षकायनाः  ४७
वैतम्बा देवयाताश्च महाचक्रेयसंज्ञकाः
पैठिनसाश्च बान्ध्रेप्रास्ततो मालन्दनामकाः  ४८
वृषगणाश्च पानध्यो दाक्षपायण एव च
हरिता गाखमित्रेया पञ्चावाश्चैव स्वैरिकाः  ४९
जारमण्डश्च वायुश्च स्वन्तिवर्ष गणायनाः
वैशम्पायनसंज्ञाश्च ततः केशायताः स्मृताः  ५०
औकायनिस्ततो मार्जायनाः कांसायनाः परे
देवश्च होतसूच्यास्थूणा भागुरयस्तथा  ५१
पाथिकार्याः खरेभा ये गोमयातास्ततः परम्
हिरण्यपापाः मुसला आविश्रेण्यस्ततः परम्  ५२
अग्निदेविस्तथा सौम्यः शूलभिन्दव इत्यपि
उत्तरतो गण्यमाना मन्त्रवैकर्णयः परः  ५३
नैध्रुवाः काश्यपा एते त्रियार्षेयाः प्रकीर्तिताः
काश्यपश्चापवत्सारो निधवा ऋषयस्त्रयः  ५४
त्रियार्षेयास्तथा रेफाः काश्यपा इति संस्मृताः
काश्यपश्चपवत्सारो रेफश्च मुनयस्त्रयः  ५५

शारिडल्याः कौलहाश्चैव पायकाः पायिकास्ततः
रभेरव्ययसौमानौ वनसंस्तु करेयुतः ५६
काकुरडेयश्च कारेयस्ततः ष्टैषिकयो मताः
महाकायो जारणवंशाः कौश्रेयः कार्दमायनः ५७
ततः कामशयः पश्चान्महौजक्य एव च
ततो मौञ्जायनाः प्रोक्तास्ततो गांगायना मताः ५८
वात्सभालय इत्युक्तास्ततो गोमिलसंज्ञकाः
वेदायनास्ततो ज्ञेयास्ततो वाश्यायना मताः ५९
बहूदरय इत्युक्ता भागुरिर्वार्दती मुखाः
हिरगयबाहुस्तेदेहा गोमूत्राश्च ततो मताः ६०
वाक्यशुराठास्तथा जानन्धरिर्धन्वन्तरिस्ततश्
जालन्धरिरिति प्रोक्तस्त्रियार्षेयास्तु शरिडलाः ६१
काश्यपश्चपवत्सारः शरिडलश्च त्रयोऽथवा
काश्यपन्नापवत्सारोऽसितं इत्यथवा त्रयः ६२
शरिडलोऽप्यसितोऽग्निस्तु देवलप्रवरस्तु वा
कोकान्नयो मैत्रवादिर्वेहो दार्भायणस्ततः ६३
चैरन्ध्रिः पशवश्चिव पयणायनसंज्ञकाः
कलयश्चापि कापुष्टिलौंगान्नय इति स्मृताः ६४
कांसपत्राश्च इत्युक्ता वालुकायनिरित्यपि
कौनामिसौतयश्चोक्ताःस्युः परस्ताविरोदकी ६५
सैतकिंष्टिर्भेरोनिष्टिः ष्टैषिकिः सौसुकिस्ततः
यौथकालकिकालेयाः स्युर्लोकान्नय इत्यपि ६६
यौधवा याजपा एते लोगान्नय इति स्मृताः
अहर्वसिष्ठा नक्तं तु काश्यपास्त्रियार्षेयकाः ६७
काश्यपश्चापवत्सारो वसिष्ठो मुनयस्त्रयः
पूर्वोक्तैः काश्यपैः सिद्धैर्वसिष्ठस्य च संमताः ६८

भरद्वाजश्च मागराडस्ततः ह्नाम्यायणा मताः
देवाश्वा उद्वहव्याश्च ततः प्राग्वाशयो मताः ६९
ततो वाहलवाश् द्वयौगा अपरे वासिनायनाः
आजा औमाश्च तौदेहाः परिणद्धेधसंज्ञकाः ७०
शैखेयाः भूरयो रूढाः शौद्धयः खारिग्रीवयः
वयोह्निभेदा औपशया अग्निवेश्याः शठा अपि ७१
श्वेलकास्तनकर्णाश्च वेश्याः स्युगौरिवायनाः
ऋृह्नाश्च माणभिद्याश्च काम्बोदकसुसंज्ञकाः ७२
पैलाः सौज्ज्वलयः कारुणादयः शुगसंज्ञकाः
भारुराडेया इषुमतास्तथा वौदोदमेघयः ७३
सौरभरास्तथा भाद्रपथयः परिकीर्तिताः
ततः स्युर्देवमतयः कल्माषाश्च सदोपकृत् ७४
प्रवाहणेया विज्ञेयाः स्तम्भस्तम्भिस्ततो मताः
वाराहयोः देववेला वलभीगय इत्यपि ७५
भद्राङ्गतसंज्ञाश्च शालाहलय इत्यपि
नृत्यायना महावेलास्ततः शालालयो मताः ७६
शार्दूलयस्ततो ज्ञेयाः काह्नला बाष्कलास्तथा
क्रोधायनास्तु कौटिल्याः सैंह्यकेन्द्रास्ततः परम् ७७
ब्रह्मस्तम्भास्तथा राजस्तम्भाह्न परिकीर्तिताः
सोमाग्निवायुसूर्येन्द्रयमविष्णवापपूर्वकाः ७८
स्तम्भास्ततोऽन्ये स्तम्भान्तास्त्विष्टा अरुणसिन्धवः
ततः कौमुदगन्धिश्च शक्तिः स्यात्कौतुकायनाः ७९
आत्रेयाणाश्च मामराडा धूमगन्धास्तथैव च
धूम्राः कौह्नेयका नितुतयो दाभय इत्यपि ८०
मत्स्यक्रोधाश्चश्यामेयास्ततः ह्नोह्नेयनामकाः
काब्ल्याः कारुपथयः कारिषायणसंज्ञकाः ८१

भरद्वाजवनौ द्वौ तु ऋषयः पञ्च संमताः
भारद्वाजा इमे सर्वे त्रियार्षेयाः प्रकीर्तिताः ८२
अङ्गिराश्च बार्हस्पत्या भारद्वाजा इति स्मृताः
एको रौक्षायणः पञ्चार्षेयस्तु प्रकीर्तिताः ८३
भरद्वाजः विज्ञेयस्त्वङ्गिराश्च बृहस्पतिः
स्याद् मात वचसो वन्दनोऽथ गर्गाः समीरिताः ८४
सांभरायणसंज्ञाश्च तथा यौगन्धरायणः
सखीना बाहुलकयो भ्रष्टयो भ्रष्टुबिन्दवः ८५
ततः क्रोष्टकयः सौयामुनिः काणायना मुनिः
भाजिताक्षय इत्युक्ता गोत्रापचय इत्यपि ८६
सत्यापचय आख्याता जाणपक्वलसंज्ञकाः
पलाशशाखावन्तस्ते मर्कटायनसंज्ञकाः ८७
ततः संग्रहतुल्याश्च वैधूह्यः कारिरोतयः
त्रिस्त्रो तसा श्च कारवल्या राजयः पैलयस्तथा ८८
पञ्चत्रिमुनिका गर्गा भारद्वाजः समीरिताः
अङ्गिराश्च भरद्वाजो बार्हस्पत्याश्चशैन्यकाः ८९
गर्गश्च प्रवर्याः पञ्च अङ्गिरश्शैन्यगर्गकाः
ऋषयस्त्रय आख्याताः प्रवर्याश्च त्रिपक्षके ९०
भारद्वाजास्त्रयश्चापि न समन्वयगामिनः
गौतमानथ वक्ष्येऽहमायास्यास्तौडिनिस्ततः ९१
आणीचयाश्च मूढाश्च बाध्याः काचाक्षतो मताः
सात्यकायश्च तैदेहाः कौमाराः सात्यमुग्रिकाः ९२
व्याप्यापौ नैकरिष्टिश्च ष्टैषकिर्देवकिस्ततः
कठोरिः कारुणिः कीलालयः पार्थिवसंज्ञकाः ९३
काशिवाजा इमे ज्ञेया आयास्या गौतमा मताः
एतेषां त्रियार्षेयास्तु प्रवरे मुनिपुङ्गवाः ९४

प्रवर्या ऋषयः ख्याता आङ्गिरायास्य गौतमाः
शरद्वन्ताश्च रोहिरायास्ततस्त्वभिजिता मताः ९५
ततः क्षीरकम्भाश्च ततः सौमुचयो मताः
सौर्यामुनिस्तथा औपबिन्दवो रायणो मताः ९६
राहूगणाश्च माषरायाः शरद्वन्ता इमे मताः
एते च गौतमा ज्ञेयास्त्रियार्षेया इति स्मृताः ९७
अङ्गिरा गौतमश्चैव शरद्वन्तश्च ते त्रयः
कौमारण्डा मासुराक्षश्च ततो मामान्यरेषणः ९८
पयन्त्याता यनाश्चाथ काष्टेयः पशवस्ततः
ऊर्जायना इमे ज्ञेया गौतमा द्विजसत्तमाः ९९
पञ्चार्षेयास्त्वाङ्गिरसौचथ्यौ काक्षीवतस्ततः
कौमारण्डो गौतमः पञ्च ततो दीर्घतमा मताः १००
पञ्चार्षेयास्तु विज्ञेयास्त्वेक एव च सम्मताः
आङ्गिरसौचथ्य काक्षीवता गौतमा इत्यपि १०१
ततो दीर्घतमश्चेति पर्यायाः पञ्च संमताः
कारेणुपालयश्चैव वास्तव्याश्चोदिवास्ततः १०२
बृहदुक्था अपि पौञ्जिष्ठा राजगन्धय इत्यपि
औदुञ्चायनसञ्ज्ञाश्च एते कारेणुपालयः १०३
गौतमास्ते त्रियार्षेयास्त्वङ्गिरा गौतमस्ततः
कारेणु पालिरित्येते त्रयस्त्वौशनसस्ततः १०४
सह दिष्टाः प्रशस्ताख्याः सुरूपाक्षामहोदराः
विकंहतः सुबुद्ध्याश्च निहताश्च गुहा इति १०५
प्रोक्ता उशनसा एते त्रियार्षेयास्तु गौतमाः
अङ्गिरा गौतमस्त्वौशनसश्च ऋषयः स्मृताः १०६
सह दिष्टाः प्रशस्ताख्याः सुरूपाक्षा महौजसः
तथैव वामदेवश्च त्रियार्षेयास्तु गौतमाः १०७

अङ्गिरा गौतमो वामदेवश्चेति त्रयस्त्विमे
अत्रीन्वद्ये समासने तेष्वादाव त्रयो मताः १०८
भोजश्चादितिसंज्ञश्च चान्द्रोशीः पार्व इत्यपि
कामङ्गुल्यश्च शैवाश्च छगालाश्छागलास्तथा १०९
ततश्च तृणबिन्दुश्च तथा भागन्तयो मताः
ततो मालरुकः प्रोक्तस्ततो व्याकलयो मताः ११०
शाम्ब व्यसन संज्ञाश्च कार्मर्यायनयो मताः
ततो दाचिश्च तैदेहो गाणिस्पतय इत्यपि १११
औद्दालकिर्द्रोण भवा गौरीग्रीवायतास्तथा
ततो गविष्टिरः प्रोक्तः शिशुपालस्ततो मताः ११२
गौरात्रेयस्ततः कृष्णात्रेयश्चारुणपूर्वकाः
श्वेत नील महाश्याम पूर्वात्रियाश्चतुर्विधाः ११३
हालेयाश्चैव वालेया ह्लेलेयाश्च ततो मताः
वामरथिनो वैदेहा वाजो भ्रेयास्ततो मताः ११४
कौद्रेयास्तु कौपमानास्ततः कालतपः स्मृताः
अनीलाययनसंज्ञाश्च अङ्गिराश्च ततो मताः ११५
गौरङ्गिश्चैव सौरङ्गिर्मानङ्गिः पुष्पयो मताः
शैलेलश्च पुनः साकेतायनाः प्रकीर्तिताः ११६
भारद्वाजायनाश्चेन्द्रातिथिरित्यत्रयो मताः
त्रियार्षेयाः समाख्याताः पालिकाश्चात्रिरेव च ११७
अर्चनानस इत्येते ऋषयस्त्रय ईरिताः
तथा वाग्भूतका ज्ञेयास्त्रियार्षेयास्तत्र वा मताः ११८
अत्रिरर्चनानसो वाग्भूतका ऋषयस्त्रयः
ततो गविष्ठिरा ज्ञेयास्त्रियार्षेयास्तु चात्रयः ११९
अत्रिरर्चनानसेति गविष्ठिर इति त्रयः
मुद्गलो व्यालसन्धिश्च चूर्णवाबोधवाजकिः १२०

वैत भावय इत्येते ॠषयश्च ततो मताः
ततः शालिमतो गौरीमतो ब्राह्मीमतस्ततः १२१
ततो गौरकयो वायुपूरकाः सायनास्ततः
इत्येते त्रियार्षेयाः स्युर्मुद्गलाः संप्रकीर्तिताः १२२
अर्चानानसः पूर्वादिस्तिथिश्चेति त्रयो मताः
चतुर्विधा अप्यात्रेया न समन्वयगामिनः १२३
वसिष्ठानथ वक्ष्येऽहं तत्रादौ वैकलिर्मतः
वाठरकिस्ततः प्रोक्तो गौरीश्रवस इत्यपि १२४
आश्वलायनसंज्ञाश्च गविष्ठास्त्वाश्वलयनाः
शौचिवृक्षास्ततः प्रोक्तास्ततः स्युः व्याघ्रपादयः १२५
औडुलोमिर्जतूकर्णो वाष्टव्यो वाह्यकायनिः
कोलायनाश्च को भोजिस्ततः पौलायना मताः १२६
सुन्दहरित इत्युक्तः काण्डेय विधिरेव च
सप्तवेलां इमे ख्याता वसिष्ठाश्च द्विजोत्तमाः १२७
एकार्षेयास्तु एतेस्युः वसिष्ठस्त्वेक एव सः
प्रवर्यश्च समादिष्टः कुण्डिनाश्च ततो मताः १२८
ततो गुग्गुलयः प्रोक्तस्ततो लोहायना मताः
आविश्वाश्वत्थवैकर्णिराजीवखदिराः स्मृताः १२९
पेठकाश्च नवग्रामास्तथाश्मरथ्यवाहवाः
सोमरङ्गलिनः कोकास्ततः कापटवा मताः १३०
हिरण्याक्षायणाश्चैव पुलाभक्षास्ततैव च
माध्यान्दिनिश्च शान्तिश्च सौपदार्थश्च कौण्डिनः १३१
त्रियार्षेयाः समुद्दिष्टा वसिष्ठश्चेति शंसिताः
वसिष्ठमित्रावरुणौ कुण्डिनश्च त्रयस्त्वमी १३२
उपमन्युरौपगवा मण्डलेखय एव च
जालागतो जयो लोकास्ततः प्रोक्ताः कपिञ्जलाः १३३

त्रैवर्ण वैवशागारिसारक्षा रक्षसंज्ञकाः
शैलालयो महाकर्णानया बालशिखा मताः १३४
औद्वाहमानयो बालानया भागास्ततो मताः
इत्युन्मायन संज्ञाश्च ततः कुण्डोदरायणाः १३५
लक्ष्मणेयास्ततः काचान्वयलाकुलयो मताः
अनृक्षर वसंज्ञाश्च कापिला वय एव च १३६
कपिकेशा इति ज्ञेयाएते स्युरूपमन्यवः
वसिष्ठास्त्रियार्षेयास्ते वसिष्ठाश्चाभरद्वसुः १३७
इन्द्रप्रमद इत्येवं त्रयः पश्चात् पराशराः
ततो वा त्रितयः प्रोक्ता भरदवसुरिति स्मृतः १३८
भैमतायनो वाजिश्च गोपालिः पञ्चमस्ततः
कृष्णा पराशराः प्रोक्तास्ततः प्रारोहयो मताः १३९
कौमुदि प्लाक्षयश्चैव ततो वैकलयो मताः
हार्यश्विः पञ्चमस्तेषामिति गौराः पराशराः १४०
खल्वायनय इत्युक्ता गोपयः कार्कयस्ततः
श्वेतयोवारुणिस्तेषां पञ्चमः प्रकीर्तिताः १४१
पराशराः स्युररुणास्ततो भालुक्य संज्ञकाः
बादरिश्च तथा गार्गो वना वै कौकसादयः १४२
इत्येते कथिता पञ्च प्रनीलाश्च पराशराः
ततः सौधवसानाश्च आलंभायन संज्ञकाः १४३
स्वर्याः काकुक्षताश्चैव लोमाद्याः पूर्णकायनाः
चोलकायन संज्ञाश्च वार्णवल्कास्तथैव च १४४
पुनर्देवनगौख्याः श्रविष्टायन संज्ञकाः
ततो वाशवयः पञ्चवाजयस्तदनन्तरम् १४५
आद्यक्षायत इत्युक्ताः पूतिमाषास्तथैव च
कैमीयतय इत्येते पञ्च नीलाः पराशराः १४६

कृष्णाजिना काविशुभास्ततः श्यामायना मताः
ततः पौष्करसादिश्च श्वेतयूपय इत्यपि १४७
श्वेताः पराशराः पञ्च वात्स्यायन एव च
श्यामेया पार्णयश्चैव सहचौलिश्च सौबुधः १४८
श्यामाः पराशराः एते षट्प्रोक्तास्त्रियार्षेयकाः
वसिष्ठ शक्तिसंज्ञश्च पराशर इति त्रयः १४९
सर्वे पराशरास्त्वेते परस्परमयोगिनः
ततोऽगस्त्यानहं वद्येऽगस्तयस्तेषु पूर्वगाः १५०
शालाद्याख्यश्च कुल्माषो दण्डिश्चैव कलायनाः
तथौपदहनिश्चैव धावणिर्लावणिस्ततः १५१
लाव्योऽर्बुदोवैरणयो बुधादरय एव च
बोदरिः शैवरतयस्ततः श्यामातयो मताः १५२
ततो मौञ्जिकिय पाण्डूरुहिर्मौसलयस्तथा
गौरीदीपाश्च रोहिष्या इत्येते त्रियार्षेयकाः १५३
दृढच्युरितगस्त्यश्च इध्मवाहस्त्रयस्त्विमे
सांभवाहन संज्ञाश्च त्रियार्षेयास्त्वगस्तयः १५४
दृढच्युतिरगस्त्यश्च सांभवाहस्त्रयस्त्विमे
सोमवाहनसंज्ञाश्च त्रियार्षेयास्त्वगस्तयः १५५
दृढच्युतिरगस्त्यश्च सोमवाहस्त्रयस्त्विमे
यज्ञवाहनसंज्ञाश्च त्रियार्षेयास्त्वगस्त्यः १५६
दृढच्युतिगस्त्यश्च यज्ञवाहस्त्रयस्त्विमे
अगस्तयस्तु चत्वारो नसमन्वियगामिनः १५७
जमदग्नीनथो वद्ये तत्रादौ वत्स ईरितः
मार्कण्डेयाश्च माण्डूका माण्डव्या कांसयस्ततः १५८
आलेखनास्ततो दार्भायणाश्च प्रकीर्तिताः
शार्कराद्मास्ततो देवतायनाः शौनकायनाः १५९

माराडूकेयाः पार्षिकाः स्युः साङ्कप्रभायनाः स्मृताः
पैङ्गलायन संज्ञाश्च पैला दाध्रेषयस्ततः १६०
ततो बाह्यकयो वैश्वानरयश्च विलोहिताः
बाह्यागोष्टायनाः ष्टैषकयो पाणिनयस्ततः १६१
वाद्भूतकाः काशकृत्स्ना ऋतभागैति शायनौ
वैहीनरयो वाल्मीकिः स्थौलपिराडय एव च १६२
दधीचयश्च वापाणिस्ततः शैखावताः मताः
वाकायनाः सौकृतयस्ततो बालायना मताः १६३
सौविष्टयो माराडविश्च ततो हस्ताग्नयो मताः
ततः शौद्धकयो ज्ञेया वैकर्णा द्रोणजिह्वयः १६४
जानायना श्रौरन्नयाः काम्बरोदरयस्ततः
कठोरकृद्विरूपान्ना देवमत्याश्चभैरविः १६५
वृकाश्वार्कायणौ चापि उच्चैर्मन्यव एव च
मार्कायणः शार्ङ्गरवो वायवापनयस्ततः १६६
काह्वायनाः कारबयस्ततश्चन्द्रमसो मताः
नोपेयाश्चैव गाङ्गेया याज्ञिकाः परिमराडलिः १६७
बाहुमित्रायणा श्रापिशलयो रोहितायनाः
ततो वैष्टपुरेयाश्च उष्ट्रान्नास्त्वपरे मताः १६८
ततो राजित वाहाश्च ततः शारद्वतायनाः
नालायनाश्चवासाश्च वाना वात्या इति स्मृताः १६९
वत्सा एते स्मृताः पञ्च श्रार्षेया जामदग्नयः
भार्गवश्च्यावनश्चौ र्वाप्नुवानौ जमदग्नयः १७०
ऋषयः पञ्चते ख्याताः प्रवर्या यागकर्मणि
विदाः शैलास्तथा शैलास्त्ववटास्तु पुलस्तयः १७१
प्राचीनयोगाः विज्ञेया वैनभूतास्ततो मताः
ततस्त्वभयजाताः स्युः काराडरथय एव च १७२

आर्कायणस्तथा नाष्ट्रायणा कार्कायणास्ततः
क्रौञ्चायनाश्च जामालास्ततः प्रोक्ता भुजायनाः १७३
एते मताः विदा पञ्च आर्षेया जामदग्नयः
भार्गवश्चयवनौर्वाप्नुवाना विदाश्च पञ्चते १७४
आर्ष्टिषेणा नैरथयो ग्राम्यायणव एव च
कणायनास्ततश्चान्द्रायणाः पौठिकलायनाः १७५
गौराम्भिराम्भी सिद्धाश्च तथा च सुमनायनाः
आर्ष्टिषेणा मताः पञ्च आर्षेया जामदग्नयः १७६
भार्गवश्चयावनश्चाप्नुवानोरथानूपसंज्ञकाः
आर्ष्टिषेणेन पञ्चेते ऋषयः प्रवरा मताः १७७
वत्सानमार्ष्टिषेणानां विदानां च परस्परम्
अविवाह इति प्रोक्त उच्यन्ते भृगवस्ततः १७८
यस्काश्च मौनो मूकश्च वाधूलो भास्करस्ततः
वर्ष पुष्यश्च वालेया स्ततो राजिततायनाः १७९
दुर्दिनो माध्यमेयाश्च दैवन्तायना अपरे
कौशाम्बेया वाकलयो वासयः प्रकीर्तिताः १८०
सात्यकिस्चित्रसेनश्च कौटिल्यास्तत औक्थकाः
भागन्तयस्ततो वार्कांश्वकयो भृगुरिन्धयः १८१
ततः स्युर्भोग चितय एते यस्तका इति स्मृताः
त्रियार्षेयाश्च विज्ञेया भार्गवाः प्रकीर्तिताः १८२
भृगुश्चैव तथा यस्को दिवोदास इति त्रयः
मित्रयुवस्ततो रम्यायणा दाद्मायणास्ततः १८३
सापिण्डनो महावाल्या माल्या यावाल्यसंज्ञकाः
पुराभिनाय एजेयास्ततो राद्मायणा मताः १८४
कैतवायनयो माञ्जायना मादायवः स्मृताः
एते मित्रयुवाः प्रोक्तास्त्रियार्षेयास्तु भार्गवाः १८५

भृगुश्च मित्रयुवश्च दिवोदास इति त्रयः
वैन्याः पार्था इति प्रोक्ता बाष्कला वैन्य संज्ञकाः १८६
त्रियार्षेया इति ख्याता भार्गवा द्विजसत्तमाः
भृगुश्च वैन्यपार्थौ द्वौ प्रवर्या ऋषयस्त्रयः १८७
शुनकः सौगन्धयो यज्ञपयो गार्त्समदा इति
गाङ्गायन मत्स्यगन्धाश्चैद्याः स्युः खार्दमायनाः १८८
श्रोत्रियास्तैत्तरीयाश्च इत्येते शुनकाः प्रकीर्तिताः
एकार्षेयाश्च इत्येते शुनकाः प्रकीर्तिताः १८९
एकोऽपि शुनकः प्रोक्तस्त्वथ भार्गव एव सः
यस्कानां मित्रयुवानां वैन्यानां च परस्परम् १९०
शुनकानां च संबन्धः कर्तव्य इति गम्यते
अथाङ्गिरस उच्यन्ते विष्णु वृद्धस्तु चादिमः १९१
भद्रणा भद्रणाश्चैव शठमार्षण संज्ञकाः
शाबरायणसंज्ञाश्च सात्यकिः सात्यकायनाः १९२
बादरायणसंज्ञाश्च वात्स प्रायण संज्ञकाः
आरुणयाश्चैव वैहोढा नैतुद्यास्तुत्य संज्ञकाः १९३
देवस्थानय इत्येते विष्णु वृद्धाः प्रकीर्तिताः
एते चाङ्गिरसः प्रोक्तास्त्रियार्षेया इति स्मृताः १९४
अङ्गिरा विष्णुवृद्धाश्च विष्णुदासत्रयः सदा
वैरुध्यश्च रुरुध्यश्च त्रासदस्युश्चते त्रयः १९५
कन्वा शैला वल्कलाश्च हलिनो मोजयाः परे
मौञ्जिश्च माञ्जयश्चैव मर्कटायन संज्ञकाः १९६
मौञ्जिगन्धस्ततः प्रोक्ता वाजयो वाजयास्ततः
मार्गश्रवस इत्येते कन्वा स्युस्त्रियार्षेयकाः १९७
अङ्गिराचाजमीढश्च कण्वश्च ऋषयस्त्रयः
हारिताश्च ततः कौत्साः सांख्या दार्भास्तथैव च १९८

शैवाङ्गो शर्मनायुश्च लाबेदर महोदरौ
नैमिश्रेयो हैमगवस्ततो मिश्रोदरो ततः १९९
कौतपाः कौलयः कारीषयः पौलय एव च
पौरण्डलश्चैव माधूपा मान्धाता मारण्डकारयः २००
इत्येते हरिताः प्रोक्तास्त्रियार्षेया इति स्मृताः
आङ्गिराश्चाम्बरीषश्च यौवनाश्वश्च ते त्रयः २०१
ततः संकृतयस्तण्डिः शंभुश्च मलकास्ततः
पौन्यश्च शैभवस्तारकाद्याः परिभावस्तथा २०२
हारिद्रा वैतलेयाश्च ततः श्रोतायन मताः
चारायणाः पूतिभाषास्तत आग्रायणा मताः २०३
चान्द्रायणाश्चापर्षया अवग्रापय इत्यमी
प्रोक्ता संकृतयस्त्वेते त्रियार्षेयाः प्रकीर्तिताः २०४
अङ्गिराः संकृतिश्चाम्बरीषश्च ऋषयस्त्रयः
रथीतरास्ततः काह्लायनाः स्युर्नैतिरक्षयः २०५
शैलालयश्च लैभिश्च ततो लीभायना मताः
मैक्षवाहश्च सौवाहवाहाः स्युर्हस्तिवासयः २०६
ततो हेमशता ह्येते त्रियार्षेया रथीतराः
अङ्गिराश्चाम्बरीषश्च रथीतर इति त्रयः २०७
अङ्गिराश्च विरूपश्च पृषदश्वेति वा भवेत्
मुद्गलाश्च हिरण्याक्षा मिताक्षा ऋषयस्ततः २०८
ऋग्याः ऋग्यायनाः दीर्घजङ्घा जङ्घा समीरिताः
ततस्तोरण बिन्दुश्च मुद्गलाः कीर्तिता अमी २०९
त्रियार्षेयाः समुद्दिष्टाः कवचस्तैकिलादयः
हम्याश्वश्च समुद्दिष्टाः कपयो वैतलास्ततः २१०
ऐतिशायन संज्ञाश्च तरस्विश्च पतञ्जलि
मिण्डवैं भोजसिश्चापि किञ्च शार्ङ्गरवस्ततः २११

ततः करशिखरण्डश्च ततो मौषींतकिर्मतः
तथा सांशय इत्युक्ताः पौष्पयश्च ततो मताः २१२
त्रियार्षेया इमे ज्ञेया कपयः प्रकीर्तिताः
अङ्गिराश्च कपित्थाश्च अंबरीष इति त्रयम् २१३
विष्णु वृद्धादयः सर्वेऽयोगिनः स्युः परस्परम्
राज्ञां विशां च वक्ष्येहं मनुश्चैल पुरुरवाः २१४
क्षत्रियाणां ततः प्रोक्तास्ततो लोहन्दने किलः
वात्सप्रमोदको वैश्ये नारासात्यादयोऽपि च २१५
आत्रेयश्चैव वाध्रेयो वाधूलश्चापि संकृतिः
वसिष्टः शुनकश्चैव कण्वो यस्क इमेऽष्टच २१६
नारासात्याः समाख्याता मनुर्वा प्रवरस्त्विह
अथक्षत्रिय वैश्याना माचार्य प्रवरोऽपि वा २१७
समानगोत्रप्रवराञ्ज्ञात्वा संबन्धमाचरेत्
समानगोत्र प्रवरां कन्यां न वृणुयात्सदा २१८
ऊढा चेद्भगिनी यद्वन्मातृवृत्परिरक्षयेत्
तस्याश्च रक्षणंकार्यमाहाराच्छादनादिभिः २१९
विवाह दोषशुद्ध्यर्थं व्रतं चान्द्रायणं चरेत्
तयासह प्रमादेन संयोगाद्यं कृतं यदि २२०
प्रायश्चित्ती सदा स स्यात्तद्विधानमिहोच्यते
सकृदागमने कुर्यात् तेन चान्द्रायणेन च २२१
सहस्राघोरहोमं तु द्विवारे द्वि सहस्रकम्
एवं योगाविवृद्ध्या तु होमवृद्धिरिहोच्यते २२२
मासोर्ध्वमाचरेत् कृच्छ्रहोमं चान्द्रायणान्वितम्
षण्मासादब्दपर्यन्तं पूर्वोक्तैस्सर्वमाचरेत् २२३
तदूर्ध्वमतिकृच्छ्रान्तैर्यावत्संवत्सरत्रयम्
निर्वाणाख्या तदूर्ध्वंस्यात् दीक्षासंसारमोचनी २२४

तदुद्भूताश्चये पुत्रास्ते सर्वेन द्विजा मताः
तत्पुत्रपौत्रसंयोगे प्रायश्चित्तं तदेव हि २२५
उपवासस्तदा स्नानं पञ्चगव्याशनं जपः
होमश्चैवमलंहन्ति सर्वसङ्करजं नृणाम् २२६
साये चाद्यन्तयोरहोर्मध्यमेऽह्नि च रात्रिके
चतुर्भुक्ति विहीनोय उपवास इति स्मृतः २२७
त्रिकालहीनो वा स स्याद्रात्र्यहोरात्रिषु क्रमात्
द्विकालहीनोवा क्षीणस्त्वानां दुर्बलात्मनाम् २२८

इति उत्तरकामिकाख्ये महातन्त्रे गोत्रनिर्णय विधिः
पञ्चविंशतितमः पटलः

षड्विंशत्तमे पटले शताभिषेकविधिः

शताभिषेकं वक्ष्येहं संक्षेपात् द्विजसत्तमाः
अकालमृत्यु मथनं आयुरारोग्यवर्धनम् १
वृद्धिदं धनधान्यानां पुत्रपौत्र विवर्धनम्
दीक्षितानां पुरा चन्द्रसहस्रस्य अवलोकिनाम् २
उत्तरायण कालेतु शुक्लपक्षे विशेषतः
सुलग्ने च सुवारे च सुतिथौ शोभने दिने ३
स्नापयेत् देशिकः शान्तः सर्वलक्षण संयुतः
मङ्गलाङ्कुर संयुक्ते मण्डपे समलंकृते ४
कूटेवाथ प्रपायां वा शुद्धदेशे मनोरमे
पञ्चादि पञ्चपञ्चाशत्करसीमासमन्विते ५
मुखायामयुते वापि चतुर्द्वार समन्विते
एकादि पञ्चपञ्चान्तभक्तिभिः परिमण्डिते ६
ब्राह्मणं क्षत्रियं वाथ वैश्यं शूद्रमथापि वा
अनुलोमसमुद्भूतं विशेषाद्भूपतिं द्विजाः ७

राजस्त्रियं वा सामन्तममात्यं वा पुरोहितम्
तत्तज्ञातिसमुद्भूतस्त्रियं वा शिवविप्रकाः ८
पञ्चाङ्गभूषणोपेतस्त्वभिषेकं समाचरेत्
अभिषेकदिनात्पूर्वं रात्रौ कौतुकबन्धनम् ९
कारयेद्यजमानस्य दक्षहस्ते गरूत्तमाः
तत्पत्न्याश्च प्रधानाय वामहस्ते तु बन्धयेत् १०
प्रधानपत्न्यो बह्वयश्चेत् सर्वासामेव कल्पयेत्
तद्रात्रौ तु पयः पीत्वा शय्यायां कम्बलादिभिः ११
कल्पितायामथैकेन स्वपेद्दक्षिणमस्तकः
मण्डपं कारयित्वाथ पूर्वोक्तविधिना यतम् १२
विसृज्य शिल्पिनंपश्चात् पुण्याहं वाचयेद्गुरुः
पूर्वाग्रमुत्तराग्रं च मनुसूत्रं प्रकल्पयेत् १३
शतं षष्ट्युत्तरं नन्दपदयुक्तं भवेत् स्फुटम्
तेषां मध्ये गृहीत्वा तु पादानां पञ्चविंशतिम् १४
परितस्संत्यजेदेकपदं द्वाराष्टकान्वितम्
चतुर्दिक्षु चतुर्द्वारं पदद्वयविलोपनात् १५
अष्टोत्तरशतानि स्युः पदान्यत्र विचक्षणाः
तन्मध्ये स्थण्डिलं कार्यं शालिभिर्द्रोणसंमितैः १६
वर्धन्याश्च तदर्धं स्यात् कलशेष्वाढकं भवेत्
अधमं त्वेकमाख्यातं द्विगुणं मध्यमं भवेत् १७
त्रिगुणं चोत्तमं विद्याच्छ्रेष्ठक्रम उदाहृतः
आढकं वा तदर्धं वा तदर्धं वा दरिद्रके १८
अयं क्षुद्रक्रमः प्रोक्तो व्रीहिमाने द्विजोत्तमाः
शाल्यभावे च व्रीहिः स्याद् व्रीह्यर्धं तण्डुलं क्षिपेत् १९
तदर्धं तु तिलं प्रोक्तं चतुर्थांशं तु वा क्षिपेत्
अष्टांशं क्षीणवित्तस्युःक्षिपेत् स्थण्डिलशुद्धये २०

मध्यमे शिवकुंभं तु द्वात्रिंशत्प्रस्थपूरितम्
वर्धनी च तदर्धेन पूरिता शिवपूरिताः २१
बाह्यस्थकलशा ज्ञेयास्त्वाढकेनाथ पूरिताः
त्रिसूत्र्या वेष्टनं कुम्भे द्विसूत्र्या करके भवेत् २२
अन्येषामपि सर्वेषामपि सर्वेषामेकसूत्रेण वेष्टनम्
पृथग्वस्त्रसमोपेतं पृथक्स्वर्ण समायुतम् २३
चन्दनागरुकर्पूरकुष्ठोशीरजकल्कयुक्
नादेयाम्भः प्रशस्तं स्याच्छिवकुम्भादिपूरणे २४
नानागन्धसमायुक्तं नानाबीजसमन्वितम्
नानाधातुसमायुक्तं नानालोहसमन्वितम् २५
नानादिगौषधोपेतं नानाफलसमन्वितम्
नानापुष्पसमायुक्तं नानागव्यसमायुतम् २६
संस्थाप्य कलशं सर्वं पूजयेत्पत्रपुष्पकैः
अष्टोत्तरशतानां तु रुद्राणां नाम कीर्तयेत् २७
पृथग्द्रव्यनिवेद्येन मानयेद्देशिकोत्तमः
वस्त्रयुग्मेन संवेष्ट्य शिवकुम्भं च वर्धनीम् २८
नवपञ्चादिकं रत्नं शिवेशक्तौ च विन्यसेत्
प्रथमावरणे विद्वानष्टलोहादि विन्यसेत् २९
हिरण्यं रजतं ताम्रमारकूटं च सीसकम्
आयसं त्रपु कांस्यं चाप्यष्ट विद्येश्वरान्न्यसेत् ३०
द्वितीयावरणे चैवं धातूनेतांश्च विन्यसेत्
अगरुं गन्धकं तालं मन्विकं च मनश्शिलम् ३१
रसमभ्रद्वयं श्चैव गैरिकाञ्जनमेव च
जातिलिङ्गं च सिन्दूरं तुत्थं च विमलद्वयम् ३२
कान्तं च षोडशैतानि द्वितीयावरणे न्यसेत्
ऐन्द्रद्वादशकोष्ठेषु विन्यसेद्द्वारपार्श्वयोः ३३

पालाशाः खादिराश्चाम्रप्लक्षन्यग्रोधसंभवाः
बैल्वाश्चैव शमीजाताः शिरीषाश्वत्थसंभवाः ३४
औदुम्बरी च नारङ्गमातुलुङ्गसमुद्भवाः
वृक्षाणां च त्वचस्त्वेतास्त्वन्तर्वामादितो मताः ३५
आग्नेयां नवके सम्यक् विन्यसेन्मृत्तिकाः पराः
नदीतटे तथा गोष्ठे वल्मीके गजदन्तके ३६
सागरे च ह्रदे क्षेत्रे पर्वतेऽश्वत्थमूलके
उत्पलस्य द्वयं श्चैव पङ्कजस्य द्वयं तथा ३७
वकुलं करवीरं च पाटलं कुरवं तथा
मालतीं मुनिपुष्पं च नन्दिकावर्तमेव च ३८
चम्पकं द्वादशैतानि विन्यसेद्दक्षिणे गुरुः
चन्दनोशीरकुष्ठं च कुङ्कमं च नरं तथा ३९
तक्कोलमगरुं चैव पत्रं चैव लवङ्गम्
नैरृते नवके ज्ञेयं वारुण्यामथ कथ्यते ४०
वैष्णवं माषनीवार गोधूमं यवमेव च
अपामार्गं तिलं मुद्ग प्रियङ्गुं सर्षपं तथा ४१
श्यामाकमाढकं चैव विन्यसेदानुपूर्वशः
लक्ष्मीश्च शंखपुष्पी च विष्णुक्रान्तिश्च हंसिनी ४२
तुलसी सहदेवी च इन्द्रवल्ली च पद्मिनी
सूर्यावर्तं च कथ्यन्ते वायव्यां नवके मताः ४३
पञ्चगव्यं तथा क्षीरं दधि गोमूत्रमेव च
गोमयं नालिकेरं त मातुलुङ्गफलं तथा ४४
नारङ्गं बिल्वकं चैव पनसं चाम्रमेव च
दाडिमीसंभवं चैव न्यस्तव्याः क्रमशस्ततः ४५
गन्धोदकमथैशान्यां कलशेषु नवस्वपि
एवं द्रव्याणि विन्यस्य शिवादीनर्चयेत् क्रमात् ४६

आचार्यो मूर्तिपैस्सार्धं स्नानं कृत्वा विभूषितः
वसानो नूतनं वासस्सोष्णीषस्सोत्तरीयकः ४७
पञ्चाङ्गभूषणोपेतस्साङ्गुलीयकं एव च
मण्टपे द्वारपूजादि सर्वं कर्म समाचरेत् ४८
पूजयेन्मध्यमे कुम्भे शिवं सर्वाङ्ग संयुतम्
मनोन्मनीं च वर्धन्यामेकपत्नी भवेद्यदि ४९
बह्व्यश्चेद् बह्व्य स्युस्तासु तामेव पूजयेत्
दीक्षितश्चेन्न चेद्दीक्षा तस्मिन्कालेऽथ दीक्षयेत् ५०
मण्डले पूर्वदिक्स्थाने कल्पयेच्चैशदेशके
उत्तरे दक्षिणे वाथ वह्निकुण्डेन संयुते ५१
अथवैतत् परित्याज्यं शम्भुकुम्भस्थिते भवेत्
पुष्पपातादिकं कृत्वा होमं कुर्याद्विशेषतः ५२
गन्धैः पुष्पैश्च दीपैश्च धूपैरन्यैर्विशेषतः
नवाग्निं वाथ पञ्चाग्निमेकाग्निं वाथ कल्पयेत् ५३
समिदाज्यचरू-ल्लाजतिलवैणव माषकान्
जुहुयात् क्रमशो विद्वान् होमयोग्यांश्च संभवान् ५४
उदुम्बरवटाश्वत्थप्लक्षा इंद्रादिदिषु च
शमीखदिरमायूरश्रीवृक्षाः स्युर्विदिक्षु च ५५
पलाशस्तु प्रधाने स्याच्छिव ब्रह्माङ्ककैः क्रमात्
सर्वद्रव्याणि जुहुयात् देव्याश्चापि प्रधानके ५६
शतमर्धं तदर्धं वा जुहुयान्मूलमन्त्रतः
ब्रह्माङ्गानां दशांशं तु जुहुयात्तु पृथक् पृथक् ५७
होमं कृत्वा क्रमेणैव रात्रिशेषं व्यपोह्य च
गुरूत्तमः प्रधानाग्नौ तेषां दीक्षां समाचरेत् ५८
अदीक्षिताश्चेत् कर्तारश्शिवकुम्भे शिवं यजेत्
किंतु पञ्चाक्षरेणैव शिवायै नम इत्यपि ५९

वर्धन्यां च यजेद् गौरीमशेषकलशेषु च
पश्चाद्धरेण मन्त्रेण रुद्रमेव समर्चयेत् ६०
दीक्षार्थं तु शतं ह्येतन्मण्डलं दर्शनार्थकम्
कल्पयेत् सर्वतोभद्रं सर्वपापविमुक्तये ६१
सर्वाभीष्टप्रसिद्ध्यर्थं दिव्यादिव्यरजोमयम्
प्रातस्स्नानाविलिप्ताङ्गं भूषितं भूषणार्हकैः ६२
सर्वालङ्कारसंयुक्तमानयेन्मण्टपान्तिकम्
पादप्रक्षालनोपेतमाचान्तं शान्तमानसम् ६३
आनयेद्दक्षिणद्वारं संप्रोक्ष्य प्रणवेन तु
पुष्पाञ्जलिं च तेनैव प्रदक्षिणनमस्कृती ६४
कारयित्वाथ कुम्भस्थे शिवे मण्डलसंस्थिते
कुण्डस्थेऽपि ततः स्नानवेद्यां संस्थाप्य देशिकः ६५
भद्रपीठे पयोवृक्षजाते वाम्रसमुद्भवे
पानसे बिल्वजे वाथ जम्बुजे ब्रह्मवृक्षजे ६६
सहस्रधारयोपेतं राज्ञां चेदभिषेचनम्
अन्येषामपि सर्वेषां शतधारावटेन वा ६७
हैमेन राजनेतापि तथोरन्यतरेण वा
सर्वालङ्कारसंयुक्तमन्ते चामलकादिभिः ६८
स्नात्वैवान्यैरपि द्रव्यैः प्रभृजेच्छुद्धवाससा
गात्रस्थं तोयमत्रैव वस्त्राद्यं परिवर्त्य च ६९
विलिप्य चन्दनाद्यैश्च गन्धपुष्पैरलङ्कृतम्
तदन्यत्र शुभे देशे विलिप्तेऽलङ्कृते गुरुः ७०
स्थण्डिलं कारयित्वा तु तस्मिन् भद्रासनं क्षिपेत्
सवैयाघ्रं सवस्त्रं चसहेमाम्बुजमस्य तु ७१
स्थापयित्वाभिषिक्तं तु मध्यमे भार्यया युतम्
आचान्तं मन्त्रदेहान्तं गन्धाद्यैर्बाहुमालया ७२

गन्धपुष्पैरलङ्कृत्य सर्वालङ्कारसंयुतम्
पटेन महाताच्छाद्य तदग्रेऽथ विलिप्तके ७३
स्थाने सर्वाणि धान्यानि मधुपात्रं सहैमकम्
स्थापयित्वा सवत्सांगां दर्शयेच्च पयस्विनीम् ७४
बन्धुभिः पूजितं हृष्टं वस्त्रहेमाङ्गुलीयकैः
सुवर्णपुष्पैरन्यैश्च गेयवाद्य समन्वितम् ७५
आरोप्य शिबिकादौ तु कृत्वा ग्रामप्रदक्षिणम्
गृहद्वारे पुरस्ताच्च विलिप्ते मङ्गलाङ्कुरे ७६
पूर्णकुम्भयुते दीपसंयुते फलकोपरि
स्थापयित्वा तु तत्पादौ क्षीरैः प्रक्षालनं जलैः ७७
कारयित्वा ततः स्त्रीभिः रजनीजलधारया
दीपेन सहिताभिश्च कारयेत्त्रि प्रदक्षिणम् ७८
ततः पादुकमास्थाय प्रविशेत्स्वगृहं प्रति
श्रेष्ठमार्गोऽयमेकोनपञ्चाशत् कलशैस्तु वा ७९
पञ्चविंशतिकलशैर्नवभिः पञ्चभिस्तु वा
एकेनवाभिषेकं तु कारयेदभिषेचनम् ८०
दक्षिणां च गुरोर्दद्यादुत्तमादिषु संभवाम्
दासीदासं भुवं गां च गृहोपकरणानि च ८१
मूर्तिपानां तदन्ते च तदन्ते जापिनामपि
स्तोतृणामपि भक्तानां दक्षिणा पूर्ववद्भवेत् ८२
पूजयेत् कल्पयेद्वित्तरूपानुसरणाय च
एवं यः कारयेन्मर्त्यस्तस्य धर्मे मतिर्भवेत् ८३
इहैव धनवानाढ्यः पुत्रवान् विजयी भवेत्
आयुरारोग्यमिष्टाः स्त्रीर्भुक्त्वाप्नोति परां गतिम् ८४
यत्रैव क्रियते राज्ये त्वभिषेकविधिक्रमः
नाकालमृत्युस्तत्रास्ति नालक्ष्मीः पापकृत्स्वपि ८५

नोपसर्गभयं तत्र न परागमविप्लवः
स्वकालवर्षी पर्जन्यः सुभिक्षं विजयी नृपः
शान्तानि सर्वभूतानि पयस्विन्यः पयोभृतः ८६
इति उत्तरकामिकाख्ये महातन्त्रे शताभिषेकविधिः
षड्विंशतितमः पटलः

सप्तविंशत्तमे पटले अन्त्येष्टिविधिः
अन्त्येष्टिं संप्रवक्ष्यामि दीक्षितानां द्विजोत्तमाः
ब्राह्मणः क्षत्रियोवाथ वैश्यशूद्रोनुलोमजाः १
आचार्यसाधका वास्युः पुत्रका समयस्थिताः
गतासवो यदा तेषां कार्याऽन्त्येष्टिस्तु दीक्षितैः २
आचार्यादि त्रयाणां स्यात् अध्वशुद्धि समन्विता
अन्त्येष्टिः इतरणां स्यात् अध्वशुद्धि विवर्जिता ३
आचार्याद्याः त्रयश्चैते यद्याचार विवर्जिताः
प्रायश्चित्तमकुर्वाणा मृताश्चान्त्येष्टिकर्मणि ४
तत्वशुद्ध्या च नित्यादि कर्म सम्यगनुष्टितम्
परिहृत्य निषिद्धे च यैस्तेषां अप्रमादिनाम् ५
तत्वशुद्धिं विहायैव केवलान्त्येष्टिरुच्यते
सद्योत्क्रान्तिः कृतायैर्वा ब्रह्मरन्ध्राधि भेदतः ६
यागविद्भिर्नतेषां च कथ्यते तत्वशोधनम्
यस्य प्राण वियोगाख्यकालो जन्तोस्समागतः ७
विधायस्नानमाग्नेयं मन्त्र संनद्ध विग्रहम्
मुमुक्षोश्च तथाग्नेयं मन्त्र कायं विधाय च ८
अष्टपुष्पिकया देवं पूजयित्वा मुमुक्षवे
स्वकरेण परेषां वा कराभ्यां चन्दनादिभिः ९
संस्थाप्य तस्य हृदये लिंगरूपं महेश्वरम्

स्पर्शयित्वाञ्जलिम् तस्य मस्तके सन्निधाप्य च १०
तदर्थमेतद्वाक्यं च पठद्देवेशसन्निधौ
दीक्षितोऽयं त्वयादेव शिवाज्ञापरिपालकः ११
नेयः शिवत्वमचिरात् सपिण्डीकरणोत्तरम्
एवं विज्ञाप्य देवेशं स्वस्थाने विनिवेशयेत् १२
एकधा बहुधा वापि क्रियामेनां समाचरेत्
पठेदुत्क्रान्तिसमये कर्णोपान्तेऽनुसंहिताम् १३
विशेषाच्छिवमन्त्रं च मन्त्रं पञ्चाक्षरं तु वा
एतत् सर्वं विधेयं तु देशिकेनतरेण वा १४
तद् गोत्रजेन वा अन्येन वक्ष्यमाणं च कर्म यत्
गत प्राणे नरे तस्य स्नानार्थं तीर्थ संभवम् १५
जलं शतघटाद्यैस्तु सुस्नातैः परिगृह्यवा
तैः स्नापयेत् गृहस्थश्चे ल्लौकिक स्नानसंयुतम् १६
विधायैवं घटान्वापि कलशान् स्नपनोक्तितः
संस्नाप्य वर्धनी हीनं केवलोदक संयुतम् १७
स्थण्डिलाढ्यं सवस्त्रं च सहिरण्यं सकूर्चकम्
पिधानाक्षत संयुक्तं विद्याङ्गहृदयार्चितम् १८
स्नापयेद्वा गृहेत्वेतत् श्मशानेवा समाचरेत्
अथवा स्नपनोपेतं संस्नाप्य आग्नेयमादरात् १९
कृत्वा संहारमार्गेण कौपीनं वसनं तथा
परिवर्त्याक्षमालाद्यै र्भूषणैर्भूषणार्हकैः २०
दीक्षितानामथान्येषां शिवशासनधारिणाम्
अन्येषां च यथायोग्यं रात्रिचूर्णं च तैलयुक् २१
ताम्बूलसहितं सर्वं जनेभ्यो दापयेत्तदा
आसन्दिकां नयेद्यज्ञवृक्षैरन्यैरनिन्दितैः २२
पुरुषायतमानां च षडङ्गुलविवर्धनात्

त्रिहस्तान्तसमायामां त्रिचतुष्पञ्चमांशतः २३
सुविस्तारसमायुक्तामोजः परव्यान्तविष्ठराम्द
ग्रासन्दिकां समारोप्य कूटान्तोर्धकृतक्रियाम् २४
रक्तमालाम्बरकॢप्तवितानालम्बनान्विताम्
इतरं चेदयोत्क्रान्त्या संस्थितं शिवयोगिनम् २५
निस्सारयेदलं कृत्य शुभैस्तं सर्व भूषणैः
शिबिकां वेदृशीं शुद्धामानीयारोपयेच्छिवम् २६
स्वनता मुखरेणोच्चैरातोद्येनाग्रगामिना
संघेन समयस्थानां पृष्ठतश्चाभिनन्दितम् २७
शङ्खध्वनिसमायुक्तं गानध्वनिसमन्वितम्
तज्ज्ञातयोऽनुगच्छेयुरमुद्धाटितमस्तकाः २८
निगृह्याक्षिजलं चाक्ष्णोस्संसारासारभाविताः
दक्षिणास्यशिरोयुक्तं बद्धाङ्गुष्ठद्वयान्वितम् २९
दर्भरज्ज्वा तमावेष्टस्य तदैशानीं दिशं नयेत्
दीक्षितैस्तुल्यज्ञातीयैरपसव्योपवीतकैः ३०
जपद्भिरस्त्रमन्यैर्वा वाहयित्वोदकान्वितम्
वह्निं च तत्पुरोऽन्येन सधूमं त्रिकटिस्थितम् ३१
वाहयेदर्थविश्रामदक्षिणावन्तके मनाक्
सुविशुद्धे भुवः पृष्ठे मृतं दक्षिणमस्तकम् ३२
व्रतस्थमव्रतस्थं वा ब्राह्मणं शिवदीक्षितम्
विपन्नं यो वहेत्तस्य नाकालमरणं भवेत् ३३
गत्वा च तमनुस्नात्वा दत्त्वा निर्वापवारि च
ईप्सितं सुखमाप्नोति परत्रेह च भावितः ३४
नोत्तमेनानुगन्तव्यो हीनवर्णो व्रतोज्झितः
ग्रनुगम्याम्भसि स्नात्वा सजातीशं शतं जपेत् ३५
ग्रसहायमनाथं च गतासुं शिवयोगिनम्

नीत्वा संस्कारयेद्यस्तु सोऽरिष्टैर्विप्रयुज्यते ३६
वैश्यादित्रितयेऽन्यस्मिन् न्यायोऽयं परिकल्पितः
अथ स्थानमदूरस्थमुदकस्य समं शुचि ३७
प्राप्य कूट प्रपां वापि विधायैवं तदन्तरे
षडङ्गुलोच्छ्रूपोपेतं मेखलैकं युगाश्रकम् ३८
कृत्वा कुण्डं विधानेन हास्तिकं तन्मृदानिले
संकल्प्य स्थण्डिलं तद्वच्चिताखातं चतुष्करम् ३९
हस्तद्वितयविस्तीर्णमष्टाङ्गुलगभीरकम्
कुण्डंदक्षिणतः कुर्यात् निष्पाद्यैवं त्रयं गुरुः ४०
गोमयेनोपलिप्याथ तत्समीपस्थितां भुवम्
शुचिः स्नातो गुरुर्मन्त्रकायश्चास्त्रालुकीकरः ४१
प्रदक्षिणक्रमात् गत्वा स्थण्डिलान्तमुदङ्मुखः
विपरीतकृतन्यासो हेतिमन्त्रेण रक्षितः ४२
कृतान्तर्यजनोऽस्त्रेण समालभ्यास्त्रवर्धनीम्
तज्जलप्रोक्षितैर्द्रव्यैः पूजां संकल्प्य चात्मनः ४३
आवर्त्य संहितामन्त्रान् कलास्संहारवर्त्मना
ब्रह्मादिकारणोपेताः स्वस्मिन् विन्यस्य देशिकः ४४
संहारहरहस्तं च कृत्वा स्मृत्वा शिवं सकृत्
विकीर्य विकिरांस्तत्र कुशान् भस्म तिलानथ ४५
समाहृत्य विधानेन चितावास्तु प्रपूजयेत्
पञ्चभागीकृते क्षेत्रे पञ्चपञ्चककोष्ठके ४६
पृथिव्यादि यथारूपैः पञ्चवर्णैर्विचित्रिते
वंशरज्ज्वादिसंपन्ने विन्यसेद्वास्तुदेवताः ४७
तत्र मध्ये भुवा सार्धं ब्रह्माणं पञ्चकोष्ठके
नैरृत्यां वारिणा संपन्ने विष्णुं कोष्ठचतुष्टये ४८
आग्नेय्यामग्निना सार्धं रुद्रं कोष्ठचतुष्टये

वायुकोणे चतुष्कोष्ठे वायुना सममीश्वरम् ४९
गगनेन सदेशानमैशकोष्ठचतुष्टये
पूर्वादि वेदकोष्ठेषु शक्रादींश्चतुरो यजेत् ५०
निजनाम्ना च नत्या च स्वाहान्तेन बलिं क्षिपेत्
ऐशान्यां दिशि वर्धन्यामिष्ट्वा पाशुपतास्त्रकम् ५१
शूलात् कुलिशपर्यन्तान्यस्त्राण्यष्टासु दिक्षु च
निधाय पूजयेदूर्ध्वमधः पद्मारिणावपि ५२
तिलदर्भान्तरे सम्यग्यजेन्मण्डलके भवम्
ऐश्वर्याद्यासनं दत्त्वा सदलाम्भोज मध्यमे ५३
मनोन्मन्यादि वामान्तं शक्तिचक्रं प्रपूजयेत्
व्युत्क्रमासनमिष्ट्वैवं साङ्गं संपूज्य शङ्करम् ५४
संस्कृत्य पूर्ववत् कुण्डं शक्तिमभ्यर्च्य तत्र च
क्रव्यादांशोज्झितं वह्निं विनिक्षिप्याप्रदक्षिणम् ५५
संस्कारैः पञ्चभिर्जातजावेदोहृदम्बुजे
शिवं स्थल इवाभ्यर्च्य तर्पयित्वाऽसितैस्तिलैः ५६
साज्यैः पूर्णाविशिष्टैश्च चिनुयात्तु चितिं ततः
अथवा पञ्चवर्णोत्थमण्डलानि विहाय च ५७
संस्कृतैः कलशैः प्रान्तैस्संस्कारैर्वीक्षणादिभिः
चितिगर्तेऽथ पीठे च माहेन्द्रं पुरमालिखेत् ५८
रजसा लोहितेनापि तन्मध्ये कृष्णवर्त्मनः
तयोस्तद्देवते योज्ये शङ्कून् कोणेषु रोपयेत् ५९
आग्नेय्यादिष्वपसव्येन शुष्ककाष्ठीयकीलकान्
ऊर्ध्वमूलानधोऽग्रांस्तानस्त्रलब्धान् सकृत् सकृत् ६०
पञ्चरञ्जितसूत्रेण कवचेन च वेष्टयेत्
अथवा रक्तसूत्रेण समन्तात् परिवेष्टयेत् ६१
शिवाहुतिश्शिवाग्नेः स्याद्रक्षोभ्यो रक्षणाय तु

शवशय्यां घनां तत्र काष्ठैरास्तीर्य याज्ञिकैः ६२
चन्दनागरुसंमिश्रैर्विपर्यस्तपटावृताम्
संपूज्य चास्त्रराजेन सकुशैः कुसुमैस्तिलैः ६३
कृत्वा मृतं मृदोद्धृष्टं गोमयेन सहाम्भसा
स्नापितं धूपितं तत्र भस्मना नववर्त्मना ६४
सब्रह्मसूत्रवसनं पूर्ववर्णानपेक्षया
आग्नेय्यां शिवमिष्ट्वाग्नेर्दक्षिणस्यां कुशासने ६५
वीक्षणादिविशुद्धस्य धारणाभिश्च पञ्चभिः
ततोऽस्य मन्त्रकायस्य हृत्सरोरुहकोटरे ६६
भोग्यकर्माशयारक्तमप्राप्ताधारदेहकम्
महाजालेन तल्लिङ्गं संहृत्य विनिवेशयेत् ६७
ओं हूं हामथ हं हां हूं महाजालमिदं मतम्
उक्त्वान्ते मृतदीक्षाख्यां नत्यन्तां भावितो गुरुः ६८
विद्यादेहं च तद्देह संहृत्य पञ्च ताः कलाः
सषडंगंशिवं न्यस्त्वा मूलेन जुहुयाच्छतम् ६९
चैतन्यसन्निधानार्थं ततस्तत्त्वानि शोधयेत्
निवृत्यादि समादाय युगपद्वा क्रमेण वा ७०
कलास्तास्साधिपाः प्राग्वद्वह्नौ संपूजयेत्ततः
ताडनादिविभेदेन लिङ्गादादाय लिङ्गिनम् ७१
योजयेत्पूर्ववत्तत्र जन्मकर्माधिकारिताः
भोगो लयोऽथ संशुद्धिस्तत्त्वानां स्त्रोतसामपि ७२
तिरोभावः पशुत्वस्य पाशविश्लेष भेदने
तद्दाहो व्युत्क्रमैः कृत्यं कारणाद्वा पशूद्धतिः ७३
विश्लिष्य तेन पूर्वेण पशुं निर्वाणकर्मणा
एवमेवोपरिष्टाच्च पाशानन्यान्विशोधयेत् ७४
उक्त्या कर्मपद्धत्या तानप्येवं शिवावधि

अग्नेरुद्धृत्य होमान्ते योजयेदमले पदे ७५
यदात्त्कों न पुनर्जातु पराधीनो भवेदणुः
कृतनिशेशेषपाशान्तमिष्ट्वेशं च विवर्जयेत् ७६
विद्यादेहं च तद्देहे संहृत्य स्वपदे गुरुः
स्थण्डिलेशानमप्येवं संहृत्य स्वपदे गुरुः ७७
शवमभ्येत्य शय्यायामारोप्य प्रावृतं कुशैः
याम्यशीर्षमुदक्पादं मुक्तानां स्त्रुक्स्त्रुवान्वितम् ७८
आचार्यं साधकं चैव ताभ्यामन्यं तदुज्झितम्
तुरुष्कागरुकर्पूरचन्दनोत्तरदारुभिः ७९
संछाद्यानीय कुण्डाग्निं शिरोदेशे विनिक्षिपेत्
मधुसत्तैलसर्पीषि प्रक्षिप्योज्ज्वलितेऽनले ८०
सर्पिर्मधुपयः पूर्णां स्त्रुचमुत्क्षिप्य पूजिताम्
गुरुः स्थित्वा शिरोदेशे सौम्याशाभिमुखाननः ८१
पावकास्ये क्षिपेद्धारामिति वाक्यमुदीरयन्
त्वममग्ने दक्षिणः कालः कालेनैवोपपादिताम् ८२
गृहाण मन्त्रसंपूतां शाव्यामेनां महाहुतिम्
प्रक्षिप्यावाङ्मुखौ तत्र स्त्रुक्स्त्रुवावप्यनन्तरम् ८३
नियुज्य संस्क्रियाकर्मकुशलांश्चतुरो गुरुः
अप्रदक्षिणमादाय गृहीत्वा खड्गवर्धनीम् ८४
उत्क्षिप्यारोप्य वामांसे छन्नमूर्धा पराङ्मुखाम्
धारां विमुच्य संयुक्तः स्वधर्मस्थैः प्रदक्षिणम् ८५
अपसव्यक्रमात् कृत्वा वर्धनीं तामधोमुखीमि
क्षिपेत् तत्र यतो देशादुद्धृता सास्त्रवर्धनी ८६
ततो जलाशयं गत्वा स्नात्वा प्रस्तीर्य सत्कुशान्
तदूर्ध्वमपसव्येन प्रणवं हृदयं पुरा ८७
शुद्धात्मन्निति चेशादिशान्तपर्यन्तनामयुक्

स्कन्दपूर्वं गणेशान्तं नाम वा भवपश्चिमम्  ८८
उक्त्वा यथार्हं मन्त्री त्रिःस्वधान्तं तर्पयेत्पुनः
भूयः स्नात्वा सौम्यास्याश्शिवसंहिताम्  ८९
अशेषास्तेऽथवास्त्राणामेकं वा रूपिणश्शतम्
द्विगुणं स्कन्धदातारस्तथा तद्वाहका अपि  ९०
शावाशौचं विधायैवमागच्छेयुः स्वमन्दिरम्
विदंश्य निम्बपत्राणि नियता द्वारि वेश्मनः  ९१
आचम्याथाग्निमुदकं गोमयं गौरसर्षपान्
प्रविशेयुस्समालभ्य कृत्वाश्मनि पदं शनैः  ९२
शिष्टस्य समयस्थस्य हीनस्योत्तरदीक्षया
निर्वाणदीक्षा कर्तव्या ममेत्याहितचेतसः  ९३
विपन्नस्यापि सा तत्त्वशुद्धान्त्येष्टिरिहेष्यते
जलेन वाग्निना शस्त्रैर्विशेषेणेभसिंहतः  ९४
शार्दूलेनान्यसत्वैर्वा वृक्षादिपतनेन वा
स्वहस्तताडनोच्छेदरज्जुबन्धनपातनैः  ९५
अन्यैरेतादृशैर्येषां मरणं पूर्ववत् क्रिया
अविद्यमानदेहानां तथा विकलदेहिनाम्  ९६
क्षयकुष्ठविसूर्यादिमहारोगशरीरिणाम्
कुशादिनिर्मिते देहे क्रियास्सर्वास्समाचरेत्  ९७
विकलाङ्गं मसूर्यादिरोगिणं च नरं मृतम्
दहेद्वा केवले वाग्नावमन्त्रं निखनेत्तु वा  ९८
क्षिपेद् गङ्गादितीर्थेवा वह्न्यादीनां प्रवेशनम्
इष्यते यदि पुण्यार्थं ज्ञात्वैवं कर्म तन्नयेत्  ९९
कुशैर्दर्भैः पलाशोत्थैर्दलैस्तन्तुसमन्वितैः
कुर्यात् प्रतिकृतिं पैष्टीं पञ्चगव्यपरिप्लुताम्  १००
प्रतिमां गोमयोत्थां वा कारयेदिष्टमानतः

अस्यां च कर्म कर्तव्यं यथापूर्वामुदाहृतम् १०१
किं तु सपिर्मधुक्षीरसिक्तं तां प्रतिमां दहेत्
भद्रे त्रिपदनक्षत्रे शुक्राङ्गारबृहस्पतौ १०२
दहनं मरणं येषां तत्कुलक्षयकारणम्
तदर्थमेवं कर्तव्यं पुनर्दहनमादरात् १०३
नृणामकृतचूडानां मृतानामवटक्रिया
न तेषां दहनं नैव बलिर्नैवोदकक्रिया १०४
नृणां चौकान्तरे वा स्याद्दहनं वावटक्रिया
ऊनद्विवर्षहे प्रेते नाग्निर्नैवोदकक्रिया १०५
यतीनां ज्ञानिनां वापि क्रिया स्यादवटक्रिया
लवणापूरणोपेता विना बल्युदकौदनैः १०६
कृतचूडस्य दहनं भवेत् पिण्डोदकान्वितम्
प्रत्यब्दमृद्ध्या वृद्धः स्यात् पिण्डे वोदककर्मणि १०७
दशाहं स्याद्दशाब्दे तु तदूर्ध्वं च विशेषतः
कर्म यच्चावटे देहे शुद्धिं कृत्वोपलेपिते १०८
सिकतास्तरणे दर्भानास्तिर्योत्तरमस्तकम्
आरोप्य शिबिकादौ च श्मशाने शुद्धभूतले १०९
बाहुमात्रं खनेद्भूमिं तच्छय्यायामविस्तराम्
न्यस्त्वा दत्वाक्षताद्यं च तूष्णीं गन्धादिनार्चयेत् ११०
तत्र न्यस्त्वा मृतं याम्यमस्तकं पूरयेन्मृदा
योगिनां दण्डमात्रं वा खनेद्दण्डार्धमात्रतः १११
लवणेनाथवापूर्य तत्समीपप्रदेशतः
तत्रैवालयसंयुक्तं पीठं वा लिङ्गमेव वा ११२
बेररूपं स्वरूपं वा कृत्वा संस्थाप्य पूजयेत्
तत्र पिण्डोदके श्राद्धं यदन्यदपि नेष्यते ११३
अङ्गुष्ठबन्धनं चास्य ताम्बूलक्षेपणं च यत्

भक्तानामथवाप्येषां नेष्यते मुनिपुङ्गवाः १९४
अशन्यग्निजलाद्यैश्चमृतानां दहनं नयेत्
समा वातीत्य भर्ता तु यदि देशान्तरं गतः १९५
द्वादशाब्दमतीत्यैव वैधव्यं व्रतमाचरेत्
मृतो वा न मृतो वाप्यविज्ञातश्चेत्स सर्वथा १९६
वेदाश्रमण्डल कृत्वा तत्र कीलत्रयोर्ध्वतः
पात्रमध्ये तुषान् क्षिप्त्वा दहेदग्निकणान्तकम् १९७
मृतस्य दहनार्थं तु वह्निमेवं हि संहरेत्
होमशेषघृतोपेतं तण्डुलं क्षीरसंयुतम् १९८
श्रवणाद्यास्याहन्नाभिदेशेषु हृदयाणुना
नवद्वारेषु हैरण्यशकलक्षेपणं हृदा १९९
तण्डुलं क्षीरसंमिश्रं वामदेवेन निक्षिपेत्
अङ्गुष्ठबन्धनछेदमघोरास्त्रेण कारयेत् १२०
स्रक्पातं च ततः कुर्युस्सपिण्डा भ्रातृभिस्सह
वस्त्राग्रेण तदा सर्वे तत्प्रदक्षिणकारिणः १२१
दाहकृत् पूर्णकुम्भं च समादाय प्रदक्षिणम्
त्रयं विधाय तद्वामे निक्षिपेदस्त्रमन्त्रतः १२२
तोयं भिन्नकपालस्थं प्राणस्थानेषु निक्षिपेत्
स्नानान्ते पञ्चगव्यं वा घृतं पीत्वा जपे च्छवम् १२३
यथाशक्ति तदा दानं कृत्वा च श्रमदाहयोः
तिलोदकं च दातव्यं मृतनाम्ना समन्वितम् १२४
इत्यादि कर्म कर्तव्यं तत्त्वशुद्धि विहीनया
अन्त्येष्टया च समेतानां तेषां माहेश्वरात्मनाम् १२५
प्रत्यहं तर्पणं कार्यमीशस्कन्दादिनामतः
पृथक् पृथक् त्रयं कार्यं तर्पणं प्रथमेऽहनि १२६
प्रत्यहं वर्धयेदेकं द्वादशान्तं पृथक् पृथक्

पञ्चसप्ततिसंख्यातं तर्पणं प्रति भोजनम्  १२७
कल्पयेद् द्विशतं पञ्चपञ्चसंख्यासमन्वितम्
ईशादित्रयतृप्त्यर्थं त्वेकभोजनमेव वा  १२८
नग्नप्रच्छादनं दद्याद् दीक्षिताय कुटुम्बिने
दाहान्ते मृतमुद्दिश्य वस्त्रतण्डुलसंयुतम्  १२९
तर्पणान्ते बलिं दद्यान्नद्यादौ वा गृहेऽपि वा
नैष्ठिकस्य न कर्तव्यं प्रत्यहं तर्पणं बलिः  १३०
एकाहं किं तु दाहान्ते ईशादित्रिभिरेव हि
तदर्थं तर्पणं कृत्वा तदर्थं पूजयेच्छिवम्  १३१
वीतशोकस्य सक्तानां नराणां मूढचेतसाम्
समूह्यपनयेयुश्च यथात्म्यस्मरणाच्छुचम्  १३२
शिवव्रतधरा ये च शैवा ये हृहिणीसखाः
न शुचः कारणं तेषामस्ति किञ्चिद्विवेकिनाम्  १३३
तथा चात्मा विभुर्नित्यश्चेतनिश्शिववत्सदा
न विनाशोऽस्ति तस्येह चेदस्ति तथा न सः  १३४
आत्मनो भोगहेतूनामभावादुपचर्यते
तन्नाशस्तत्क्षयो मृत्युः स्वगुणानुपलब्धितः  १३५
स्वस्थात्मनोऽनुकूलोऽपि प्रतिकूलं समाचरेत्
अनिष्टापगमे यस्य न भवेदिष्टशेमुषी  १३६
सर्वज्ञः स्यात् तनोश्चान्ते येनोक्तश्शिव दीक्षितः
चितेवरणग्श्चायं भोगस्तद्भोगसाधनम्  १३७
देहोऽयं तद्वियोगो यस्सोऽत्यन्तं हित उच्यते
मानुष्यकदलीस्तम्भे निस्सारे सारमार्गणम्  १३८
यः करोति स संमूढो जलबुद्बुदसंनिभे
पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः  १३९
कर्मभिस्स्वशरीरोत्थैः का तत्र परिवेदना

गन्त्री वसुमती नाशमुदधिर्दैवतानि च  १४०
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति
श्लेष्माश्रु बान्धवैर्मुक्तं यतो मुङ्क्ते मृतोऽवशः  १४१
अतो न रोदितव्यं स्यात् क्रिया कार्या तु शक्तितः
द्वितीयेऽहनि शेषाङ्गदहनं कारयेन्न वा  १४२
घृतक्षीरसमायुक्तं सपिण्डैश्च समायुतः
तृतीयेऽप्यथवाद्येऽह्नि कुर्यात् संचयनं चितेः  १४३
हृत्वाथ मृण्मयं पात्रं क्षीरेण पयसाथवा
पूर्णां त्रिकाष्ठिकां तत्र कृत्वा तत्त्वत्र विन्यसेत्  १४४
अस्थिसंग्रहणं वाथ कुर्यात् संचयनं विना
एकत्रिपञ्चसप्ताहे नवभाण्डे तु मृण्मये  १४५
अस्थिसंग्रहणं विप्रप्रमुखाणां क्रमेण वा
सक्तुलाजौदनापूपैश्चतुर्दिक्षु बलिं क्षिपेत्  १४६
पिशाचबलिरेष स्यात् तेषां तृप्त्यर्थमाचरेत्
अङ्गैरङ्गानि संहृत्य तन्मन्त्रेणैव निक्षिपेत्  १४७
ग्रामाद् बाह्ये तु निक्षिप्य गङ्गादिक्षेपणाय च
तद्दिने वाथ पक्षान्ते मासान्ते वा त्रिमासिके  १४८
षण्मासे वाब्दसंपूर्तौ तदूर्ध्वे वाथ निक्षिपेत्
निक्षिप्य तत्र तत्तीर्थे स्नानं कृत्वा तिलैस्सह  १४९
पैतृकं तर्पणं कृत्वा देवादीनपि तर्पयेत्
दानं कुर्याद्यथाशक्ति पिण्डं दद्याच्च तद्भुवि  १५०
शिष्यैकगुरुसंबन्धा गुरुसंबन्धिनश्च ये
त्यजेयुस्त्रिदिनं कर्म नित्यादन्यज्जपादिकम्  १५१
तेभ्योऽन्ये शैवमार्गस्था हृहिणोऽगृहिणोऽपि वा
दिनमेकं क्षिपेयुस्ते शावाशौचाय दीक्षिताः  १५२
गृहिणो लोकमार्गस्था लङ्घयेयुर्न लौकिकम्

आचारं दीक्षितास्तस्मात्कुर्वीर-ल्लोकसंवृतिम् १५३
शिवव्रतधरस्यास्य न मृतिर्न च सूतकम्
पूर्वाश्रमानपेक्षत्वादस्तसंसारहेतुतः १५४
पूर्वाश्रमस्थितस्यापि गृहस्थस्य तु दीक्षया
अस्तसंसारबीजस्य ज्ञानिनः सत्क्रियावतः १५५
क्षणमात्रं भवेत्त्वच्च स्नानादेव निवर्तते
विप्रे शुद्धिर्दशाहे स्यात् क्षत्रिये द्वादशाहिका १५६
दशपञ्चाहिका शुद्धिर्वैश्ये शूद्रे हि मासिका
उद्वाहिताश्चतस्त्रस्तु ब्राह्मणेन स्त्रियो यदा १५७
क्रमेण सूतकं ग्राह्यं दशषट्त्र्येकवासरम्
सूतकं तत्सुतादीनां मातृपक्षे यथामतम् १५८
पूर्णगर्भान्मृतो जातश्शुद्धिः स्नानात् क्षणात्मिका
माससंख्योदिता मातुः स्त्रीपुंसोर्गर्भनाशने १५९
नाम्नः प्राग्दन्तजननात्तथोपनयनादपिं
स्नानमेकदिनं प्रोक्तं त्रिदिनं च क्रमेण तु १६०
तदूर्ध्वं च दशाहं स्याज्ज्ञातीनां त्रिषु कथ्यते
क्षौरादष्टमवर्षाच्च विवाहात् पूर्ववत् क्रमात् १६१
भ्रातृणां च दशाहं स्यात् कृते नाम्नि तु सर्वदा
पित्रोर्दशाहमेव स्यात् सर्वत्राशौचमग्रजाः १६२
पक्षिणी स्यात् प्रदत्तायाः पित्रोः सोदरयोर्मृतौ
तत्सुतानां प्रयाणे च पक्षिणी द्विजसत्तमाः १६३
दिवसद्वयमध्यस्था रात्रिर्वा रात्रिमध्यगम्
दिनं वा पक्षिणीत्युक्ता ज्ञात्वैवं कर्म कारयेत् १६४
त्रिदिनं च सपिण्डानां यत्र तत्रैकवासरम्
समानोदकवर्गाणामाशौचं विहितं विधौ १६५
ऊर्ध्वं दन्तोद्भवात् स्नानं तेषामत्र प्रकीर्तितम्

आमौञ्जीबन्धनाद्विप्रः क्षत्रियश्च धनुर्ग्रहात्  १६६
आप्रतोदग्रहाद्वैश्यश्शूद्रो वस्त्रद्वयग्रहात्
पूर्णाशौचं भवेदूर्ध्वं मृतो यदि नरोत्तमाः  १६७
यदा निवृत्तचूडस्स्यात् क्षत्रियष्षड्दिनैश्शुचिः
वैश्यश्चेन्नवभिश्शुद्धः शूद्रो द्वादशाभिदिनैः  १६८
एतत्सर्वं तु विहितं ज्ञातीनां मुनिपुङ्गवाः
भवेत् त्रिरात्रमाशौचमाचार्यमरणे सति  १६९
तस्य पुत्रस्य पत्न्याश्च दिवारात्रमिति स्मृतम्
शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत्  १७०
शावेन शुध्यते सूतिर्न सूतिश्शावशोधिनी
सूतके सूतकं भूयो यद्यपि स्याद् द्विजोत्तमाः  १७१
प्राक्शेषेणैव शुद्धिस्स्यान्मृतके मृतकं तथा
सूतके मृतकं चेत् स्यात् सूतके सूतकं तथा  १७२
तत्राधिकेन शुद्धिस्स्यान्न तु न्यूनदिनैश्शुचिः
अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्  १७३
सूतेऽतीते दिनैकं स्यात् स्नानमेवोर्ध्वमब्दतः
कृतनित्याग्निकार्यस्य मृतस्य दहनाद्रितः  १७४
अनाहिताग्नेराशौचं मरणाहात्प्रकीर्तितम्
ये च माहेश्वराश्शूद्रा भस्मरुद्राक्षधारिणः  १७५
तेषां पञ्चदशाहे तु शुद्धिस्सूतौ मृतावपि
तथैव रुद्रकन्यानां पञ्चाचार्येऽपि संमतम्  १७६
हीनानुलोमिनां तद्वद्भस्मरुद्राक्षधारिणाम्
न स्पृशेयुस्सपिण्डाश्च दाहकं तत्र कथ्यते  १७७
सूतकाद् द्विगुणं शावं शावाद्द्विगुणमार्तवम्
आर्तवाद् द्विगुणा सूतिस्तस्या अपि च दाहकम्  १७८
प्रेतस्पर्शः कृतो यैस्तु वाहकैर्ग्रामबाह्यतः

नक्षत्रदर्शनाद्वापि वसेयुस्सूर्यदर्शनात् १७९
स्पृष्ट्वान्तेऽग्निं पिबेयुस्ते पञ्चगव्यं घृतं तु वा
इदं सामान्यमर्त्यानां विधानं परिकीर्तितम् १८०
ये च माहेश्वराश्शूद्रा इस्याद्याः परिकीर्तिताः
शिवगानविदां तद्वच्छिवाश्रमनिषेविणाम् १८१
दिनैर्विंशतिभिश्शुद्धिर्देवदास्याः प्रकीर्तिता
आशौचं दासदासीनामधिष्ठातृकुलोचितम् १८२
प्रतिलोमेषु नाशौचमिष्यते द्विजसत्तमाः
कुलं तु रुद्रकन्यानां मातृजं परिकीर्तितम् १८३
तथैव देवदासीनां मातृजं कुलमीरितम्
राज्ञां पुरोहितानां च नाशौचं मृतसूतयोः १८४
समयस्थस्य नाशौचं नित्यकर्मणि सर्वदा
गृहिणोऽगृहिणो वापि व्रतयुक्तस्य सर्वतः १८५
निर्वाणदीक्षायुक्तानामनुष्ठानाहितात्मनाम्
हृहस्थानां च नाशौचं नित्ये नैमित्तिकेऽपि वा १८६
काम्यकर्मणि चाशौचं यतः स्नानान्निवर्तते
स्नानं च व्रतीनो नोक्तं पृथक् पाकभुजो यदि १८७
स्वार्थे वाथ परार्थे वा विधानमिदमीरितम्
परित्ययेत् परार्थं वा लोकसंवरणाय च १८८
भ्रातृपुत्रपितृभ्योऽन्ये बान्धवा ज्ञातयः स्मृताः
ज्ञातीनां स्त्रीषु जातासु नाशौचं प्रविधीयते १८९
आसप्तपौरुषाद् ग्राह्यं तत्पुंसां मृतसूतयोः
तत्रापि त्र्यहमाशौचं परतः पञ्चपौरुषात् १९०
तदूर्ध्वं पक्षिणी ग्राह्या विज्ञातं यदि बान्धवम्
विप्रस्य विधिनोढासु रक्ताद्यासु तिसृष्वथ १९१
एकद्वित्रिदिनह्रासाज्जातानां ब्राह्मणादितः

अन्यायजानां शुद्धिस्तु द्वित्रिवेददिनर्द्धितः १९२
नाशौचं प्रतिलोमानां ते नित्याशुचयो यतः
साधारणस्त्रियो याश्च पूता नैव कदाचन १९३
राजानस्सर्वदा पूतास्त्वभिषेकेन संयुताः
महान्तो मन्त्रिणश्चापि यदि भक्ता महेश्वरे १९४
शिवकर्मरता ये तु शूद्रा भस्मादिसंयुताः
दिनैर्विंशतिभिश्शुद्धाः पञ्चविंशतिभिः परे १९५
प्रेतसूतकसंबन्धि नित्यहानिं करोति यत्
तस्य तावत्तिथौ शुद्धिर्यावत्तानि दिनानि तु १९६
प्रायश्चित्तं तदर्थं तु नक्तं यावकभोजनम्
त्रिकालस्नानपूजाग्निजपहोमपुरस्सरम् १९७
विना हानि यदा योगस्तदन्ते च त्रिरात्रकम्
योगं विना यदा हानिस्तत्राप्यन्ते दिनत्रयम् १९८
भक्तिज्ञानं च वैराग्यमेतेष्वेकतमं तु वा
यस्य सम्यग् भवेत्तेन कार्यं समयिनार्चनम् १९९
मन्दमन्दतरं वापि यस्यैतत् त्रितयं भवेत्
अन्तर्यागश्च तेनापि कर्तव्योऽन्ते दिनद्वयम् २००
एकाहं वा यवाहारी चरुभुग्वा सहस्रकम्
जपेदघोरं स्नानान्ते दशांशो होम एव वा २०१
यस्य नास्ति शिखाच्छेदस्तस्य पादार्थकस्य च
अयमेव विधिः प्रोक्तः समयस्थस्य हे द्विजाः २०२
निर्वाणदीक्षितस्यापि शिखाच्छेदयुतस्य च
नित्ये नैमित्तिके काम्ये सर्वत्रैवाधिकारिता २०३
शिखाच्छेदविहिनस्य नित्यकर्मणि योग्यता
एतेषामपि सर्वेषां प्रासादादिप्रवेशनम् २०४
अग्रमण्डपबाह्ये तु न दोषाय प्रकल्पते २०४ १-२

इति उत्तरकामिकाख्ये महातन्त्रे अन्त्येष्टिविधिः
सप्तविंशतितमः पटलः

## अष्टाविंशत्तमे पटले पितृ यज्ञ विधिः

पितृयज्ञविधिं वक्ष्ये श्रूयतां मुनिपुङ्गवाः
आवश्यकं गृहस्थानां लोकमार्गानुयायिनाम् १
अङ्कणे बाह्यदेशे वागारे पितृगृहं नयेत्
पीठं पीठोक्तरीत्या तु सत्रिमेखलमाचरेत् २
तत्पुरस्तालमात्रेणावटं कुर्यान्नवं गुरुः
गोमयाम्भोभिरालिप्य न्यस्य पीठस्य मध्यमे ३
कूर्चं प्रादेशमात्रं तु पञ्चभिस्सप्तभिस्तु वा
विप्रादीनां क्रमाद्वापि रुद्रान्तकसुसंमितैः ४
दर्भैर्वा सत्कुशैः कूर्चं दक्षिणाशाग्र संयुतम्
प्रणवेनासनं दत्त्वा मूर्तिमावाहयेत्ततः ५
तद् गोत्रादि समोपेतं देव दत्तादि मूर्तये
स्वधेत्युक्त्वा विनिक्षिप्य तद्गतात्माणु सम्युतम् ६
तद्गोत्रादि समोपेतमात्मानं प्रणवं न्यसेत्
पाद्यादिनिचयं वस्त्रं गन्धपुष्पतिलान्वितम् ७
धूपं दीपं च नैवेद्यामाढकादि विनिर्मितम्
तदर्ध निर्मितं वापि तस्य प्रीतिकरं च यत् ८
गुलखण्डाज्यसंयुक्तं सोपदंशं प्रकल्पितम्
आशौच रहितैः नवमद्भाण्ड एव हि ९
ताम्बूल रहितं दद्यात् नित्यं कालद्वयेऽपि च
द्वयमह्येव कर्तव्यमेक कालेऽथवा द्वयम् १०
एतत्सर्वं च तन्नाम्ना स्वधान्तेज हृदान्वितम्
अथवार्घ्यबलिं दद्यादन्यत्रान्नं प्रकल्पयेत् ११

पिण्डत्रयं तु वा देयं केवलं त्ववटं हि वा
कृत्वेष्टकां वा पाषाणं शरावे वा निधाय च १२
कूर्च पुरोदितं दत्त्वा तत्रैतत् कर्मवा नयेत्
सप्ताहं वा नवाहं वा दशाहं वा तदाचरेत् १३
तदन्ते चापराह्ने वा पूर्ववद्विधिनार्चयेत्
मृदमुद्वास्य तत्स्थानात् पिण्डं पुष्पसमन्वितम् १४
तत्कूर्चमिष्टकायुक्तं पाषाणां पीठिकां च वा
संग्राह्य पीठिकादौ च धूप दीपादि संयुतम् १५
अतोद्य सहितं वाथ निक्षिपेत् तीर्थ मध्यमे
एतत्सर्वं तु वा पुण्यस्थाने नद्यादिके नयेत् १६
विप्रादीनां तु सामान्यं विशेषस्त्वधुनोच्यते
ब्राह्मणे दशपिण्डास्तु क्षत्रिये द्वादश स्मृताः १७
वैश्ये पञ्चदश प्रोक्ताश्शूद्रे त्रिंशत् प्रकीर्तिताः
आशौचं यावदेतेषां तावत् पिण्डोदकक्रिया १८
पञ्चमे ह्येकपिण्डं तु द्वितीये चतुरस्तथा
तृतीये पञ्चवै दद्यात् त्रिदिनादौ मतो विधिः १९
दशाहे समतिक्रान्ते एकोद्दिष्टे कृते सति
पिण्डमेकं तदा देय माशौचं चाप्रदानतः २०

इति उत्तरकामिकाख्ये महातन्त्रे पितृ यज्ञ विधिः
अष्टविंशतितमः पटलः

एकोनत्रिंशत्तमे पटले शैव श्राद्ध विधिः

ततः श्राद्धविधिर्लेशात् कथ्यते दीक्षितात्मनाम्
नित्यं नैमित्तिकं काम्यं वृद्धिः पार्वणमेव च १
प्रोक्तं पञ्चविधं श्राद्धं ज्ञात्वा कर्म समाचरेत्
नित्यं दद्यादहरहर्नैमित्तं स्यान्मृतेऽहनि २

कामाय विहितं काम्यं कुर्हो पार्वणामिष्यते
वृद्धि श्राद्धं विवाहादावेवं पञ्चविधिं भवेत् ३
तदर्थं श्रद्धया दत्तं भोजनं श्राद्ध मुच्यते
तत्संशुद्धि दिनाद्यावदब्दमासादिभेदतः ४
एकोद्दिष्ट प्रकर्तव्यं प्रति संवत्सरं कृतम्
श्राद्धं स्यादेक वर्षोर्ध्वं श्राद्ध पद्मे विशेषतः ५
नवश्राद्धं भवेदाद्यं ततः स्यात्शोडषात्मकम्
चतुर्थे पञ्चमे त्वह्नि नवाहैकादशाहयोः ६
मृदमुद्धिश्य यद्दानं नव श्राद्धमिति स्मृतम्
नव श्राद्धममन्त्रं तु पिराडोदकविवर्जितम् ७
अनूदकमधूपं च गन्धमाल्य विवर्जितम्
आशौचान्ते प्रकर्तव्यमेकोद्दिष्टं द्विजोत्तमाः ८
एकादशे त्रिपद्मे च तथा च प्रतिमासके
वत्सरार्धे च यत्कर्म सांवत्सरिक सम्युतम् ९
षोडष श्राद्ध मित्युक्तं दानमेतेषु यत्कृतम्
एतच्च षोडश श्राद्धमेकोद्दिष्टमिति स्मृतम् १०
यस्यैतानि नकुर्वन्ति श्राद्धनि नव षोडश
पिशाचत्वं चिरं तस्य दत्तैश्श्राद्ध शतैरपि ११
द्वारे च भस्मनिचये चाकाशे च यथाक्रमम्
त्र्यहाणि त्रीणि चैकं च प्रेता भूतस्सतिष्ठति १२
सपिराडीकरणादूर्ध्वं शिवलोकं स गच्छति
मरणाहात् समारभ्य प्रत्यहं वत्सरावधि १३
भोजनं सोदकुंभं च प्रदद्याद् देशिकात्मने
विधायाथ नवश्राद्धमेकोद्दिष्ट समन्वितम् १४
सोदकुंभयुतं पश्चात् सपिराडीकरणं समे
विधातव्यं प्रयत्नेन ब्रह्मचर्यमनुज्भत १५

षरामासान्ते त्रिमासान्ते मासान्ते वा समाचरेत्
एकोद्दिष्ट द्वितीयाहे सपिराडीकरणं क्रियाम् १६
अर्वाक् सपिराडीकरणं यस्य संवसराद्भवेत्
तस्याप्यन्नं सोदकुंभं दद्याद्संवत्सद्गुरुः १७
पूर्वमेव नवश्राद्धमेकोद्दिष्ट समन्वितम्
सपिराडीकरणं कुर्याद्भोजनं चैकवर्धनम् १८
समूह्य वै तत् कर्तव्यं विशेषाद् देशिकात्मने
शिवाय वा प्रदातव्यमथवा दीक्षितात्मने १९
एकोद्दिष्ट क्रियान्ते तु पक्षश्राद्धं विशांमतम्
पाक्षिकं मासिकं श्राद्धं शूद्राणां च तथा भवेत् २०
अन्यत्सर्वं समानं स्याद्ब्राह्मणैश्च त्रिवर्णिनाम्
घटकन्यागते सूर्ये कृष्णपक्षे विशेषतः २१
चतुर्थी सप्तमी चैव नवमी च त्रयोदशी
अमावस्या मघा चासु पितृपक्षं प्रकल्पयेत् २२
अष्टम्यां पर्वशेषेषु मातृवर्गं प्रकल्पयेत्
व्यतीपातेऽयने वापि स्वर्भानोरपि दर्शने २३
विष्वोरपि गजच्छायासंक्रान्त्यादिषु कारयेत्
शस्त्राग्निभृगुपाताम्बुप्रवेश विधिना मृताः २४
एतोषां तु चतुर्दश्यां श्राद्धं कुर्यात् सुतृप्तये
अन्यदा वापि कर्तव्यं संभवे वसुपात्रयोः २५
रात्रौ तु राक्षसं श्राद्धं सन्ध्ययोरुभयोरपि
रात्रावपि च कर्तव्यं यदि स्याद्राहुदर्शनम् २६
गृही त्रयोदशी श्राद्धं न च कुर्वीत पुत्रवान्
मघासु कुर्वतः श्राद्धं ज्येष्ठपुत्रो विनश्यति २७
नन्दायां दारसून् चतुर्दश्यां त्रिजन्मसु
यदि कुर्यान्नवश्राद्धम्॥ कुलक्षयकरं भवेत् २८

शुक्रे च बुधवारे च गुरोस्सोमस्य वारयोः
एतेषु कुर्वतः श्राद्धं कर्तुर्मरणमादिशेत् २९
पौष्णमादित्यमैन्द्राग्नी रोहिणी त्रय उत्तराः
आत्मनश्च त्रिजन्मानि चतुर्विंशतिभं तथा ३०

३१

अमाद्वयस्तु वै मासो मलिनः पापसंभवः
गर्हितः पितृदेवेभ्यः सर्वकर्मसु संत्यजेत् ३२
नित्यनैमित्तिकं कुर्यात् प्रयतस्सन्मलिम्लुचे
वैशाखे शुक्लपक्षस्य तृतीया शुक्लकार्तिके ३३
नवमी स्यादमावास्या नभस्ये कृष्णपक्षके
तिथिस्त्रयोदशी माघे तथा पञ्चदशी मता ३४
तिस्रोऽष्टकायने सूर्याचन्द्रयोर्ग्रहणेऽपि च
कालेष्वेतेषु वा दद्यादुदकं तिलसंयुतम् ३५
अमासहस्त्रं तच्छ्राद्धं भवत्येव न संशयः
कन्यां गते सवितरि पितरो यान्ति वै सुतान् ३६
ततो वृश्चिकसंप्राप्तौ निराशाः पितरो गताः
ततः स्वभजनं यान्ति शापं दत्वा सुदारुणम् ३७
अकुर्वाणश्च तच्छ्राद्धं पङ्के गौरिव सीदति
उपात्तेषु सुसंतानं शकुना इव पिप्पले ३८
मधुमांसैश्च पाकैश्च पयसा पायसेन च
एष नो दास्यति श्राद्धं वर्षासु च मघास्वपि ३९
पूर्वाह्णे दैविकं श्राद्धं अपराह्णे तु पैतृकम्
एकोद्दिष्टं तु मध्याह्णे प्रातर्वृद्धि निमित्तकम् ४०
शुक्लपक्षे तु पूर्वाह्णे कृष्णे स्याद् पराह्णके
आम श्राद्धं प्रकर्तव्यं पूर्वाह्णे द्विजसत्तमाः ४१

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा
आमश्राद्धमशक्तौ स्याच्छूद्राद्यैस्तु सदैव हि ४२
द्विजोत्तमादय स्सर्वे प्रशस्ताः श्राद्ध संपदि
स्वजात्युर्कर्षतो ग्राह्याः स्वस्वजात्युद्भवाश्च वा ४३
आचार्य लक्षण प्रोक्त लक्षणा न तु निन्दिताः
न ब्राह्मणं परीक्षते दैव कर्मणि धर्मवित् ४४
पित्र्ये कर्मणि तु प्राप्ते परीक्ष्येत प्रयत्नतः
उपकार वियुक्ताय दत्तं यत् तद्धि सात्विकम् ४५
शिवज्ञानार्थ विदुषे बहुविद्याय यत् द्विजाः
दारिद्राय प्रदत्तं यत् सात्विकं हृष्ट चेतसा ४६
शिवशास्त्र विहीनाय यत्तु पूर्वोपकारिणे
समृद्धाय च यद्दत्तं तत्सर्वं राजसं मतम् ४७
संबन्धिने च यद्दत्तमव्रतस्थाय सुव्रताः
फलार्थिभिश्च रात्रौ च तद्दानं राजसं मतम् ४८
शिवार्चनादिहीनाय शिवज्ञानापहारिणे
दीयते तस्करायापि तद्दानं तामसं स्मृतम् ४९
सरोषमपसव्यं यैश्च युक्तमवज्ञया
सेवकाय च यद्दत्तं तद्दानं तामसं स्मृतम् ५०
कल्पस्त्वेवं समाख्यातस्त्वनुकल्पश्च कथ्यते
मातामहो मातुलश्च स्वस्त्रीयःश्वशुरो गुरुः ५१
दौहित्रोविट्पतिर्बन्धुः ऋत्विगाधोऽपि वा मताः
व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत् ५२
अलाभे त्वथभिक्षूणां भोजयेद्ब्रह्मचारिणम्
श्राद्धं कृत्वा परश्राद्धं यस्त मुञ्जीत मोहितः ५३
पतन्ति पितरस्तस्य लुप्त पिण्डोदकक्रियाः
पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ५४

दानं प्रतिग्रहं होमं श्राद्धं भुक्त्वाष्ट वर्जयेत्
श्राद्धार्थं वरणं कृत्वा न प्रयच्छति यः पुमान् ५५
तस्मै प्रार्थयते सोऽयं रोरवं नरकं व्रजेत्
प्रणीत श्राद्ध तन्त्रो यो न भुङ्क्ते श्राद्धकर्मणि ५६
सोऽयं नरकमाप्नोति कुंभीपाकं न संशयः
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वरम् ५७
श्राद्धे त्रीणि पवित्राणि सत्कुशाः कुतपास्तिलाः
सैन्धवं लवणं चैव तथा मानस सम्भवम् ५८
पवित्रे परमे ह्येते प्रत्यक्षमपि नित्यश
रामठं च प्रशस्तं स्यादशुष्कव्यञ्जनानि च ५९
यत् किञ्चित् पच्यते गेहे भक्ष्यं वा भोज्यमेव
अनिवेद्य न भोक्तव्यं पिण्डार्थं न कदाचन ६०
कोद्रवं लवणं सर्वं तथा जम्बूफलानि च
कूश्माण्डालाबुवार्ताकं माहिषं क्षीरमेव च ६१
बीजपूरक माषाणि मरीचिं पिप्पलीमपि
कृतं च लवणं सर्वं वंशाग्रं च विवर्जयेत् ६२
वर्ज्यं च लोहितं सर्वं हित्वा कुङ्कुममेव च
आरक्ता ये च निर्यासाः प्रत्यक्षलवणानि च ६३
कूलस्थं पादसंस्पृष्टं शुक्लं पर्युषितं च यत्
पिण्याकं मथितं चापि तथातिलवणं च यत् ६४
हस्तदत्तास्तु ये स्नेहाल्लवणं व्यञ्जनानि च
दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते च किल्बिषम् ६५
निरङ्गुष्ठं च यच्छ्राद्धं बहिर्जानु च यद्धुतम्
बहिर्जानु च भक्तं यत् सर्वमेवासुरं भवेत् ६६
दानं प्रतिग्रहो होमो भोजनं बलिरेव च
साङ्गुष्ठेन तथा कार्यमासुरं स्यात् तथान्यथा ६७

अन्तर्जानु विशेषेण तथैवाचमनं भवेत्
दर्भाः पवित्रं पूर्वाह्णे हविष्याणि च सर्वशः ६८
विनियुक्तास्तु ये श्राद्धे दैवे वा मांसमुत्सृजेत्
यावन्ति पशुरोमानि तावन्नरकमृच्छति ६९
यो वेष्टितशिरो भुङ्क्ते यश्च वैदक्षिणामुखः
सोपानत्कश्च यो भुङ्क्ते तद्वै रक्षांसि भुञ्जतेऽ ७०
मृण्मयेषु च पात्रेषु श्राद्धे यो भोजयेत् पितृन्
देशिकेनान्नदाता च भोक्ता च नरकं व्रजेत् ७१
मृतसंपृक्ताभिरद्भिश्च प्रोक्षणं तु विशिष्यते
नाभेरधश्च संस्पर्शं कर्मयुक्तो विवर्जयेत् ७२
आयुः पुत्रो धनं प्रज्ञा सौभाग्यमतुलं यशः
मित्राण्यारोग्यसंपश्च भवेच्छ्रद्धादनिन्दितात् ७३
नित्यहानिर्मनस्तापो मित्रनाशः क्षयश्श्रियः
कलहो विप्रवासश्च निन्दितश्राद्धतो भवेत् ७४
भौतिको ब्रह्मचारी च श्रष्ठोऽसौ श्राद्धकर्मणि
शैवं सन्तानिकं लब्ध्वा पितृदेवार्थमिष्टदम् ७५
नैष्टिकं त्वतिथित्वेन लब्ध्वा सीदति कः पुमान्
चतुर्वेदार्थविदुषां ब्राह्मणानां महात्मनाम् ७६
आचार्येण तु भुक्तेन कोटिर्भवति भोजिता
लक्षं तु साधके भुक्ते दीक्षतेऽयुतमेव तु ७७
समयस्थे सहस्त्रं स्यात् शतं माहेश्वरे नरे
साधकद्वितयं देवं पित्रर्थं देशिकत्रयम् ७८
संभवे कथितं श्राद्धे सर्वे सर्वत्र वामताः
ईशस्सदाशिवश्शान्तश्शिवश्राद्धे प्रकीर्तिताः ७९
रुद्रोऽनन्तश्च कथितो विश्वेदेवा इति द्विजाः
दीक्षितानाममी प्रोक्ता रुद्रांशानामथोऽच्यते ८०

स्कन्दचराडगणेशानास्त्रयः पित्रर्थमीरिताः
तत्र नन्दिमहाकालौ द्वौ गणौ द्वितये स्थितौ ८१
तृप्तैस्तैर्निखिलं तृप्तं शिवान्तं च भवेद्भुवि
पञ्चाभावो यदा तत्र तदा तद्द्वयकल्पना ८२
बाहुमूलशिरस्स्थाने भवेत् त्रितयकल्पनम्
एकत्रान्यत्र कर्तव्यं स्थानमंसद्वयं द्वयोः ८३
एकत्र बाहुयुग्मेन सह वा पञ्च कल्पयेत्
षड्दैवतं गृहस्थानां लिङ्गिनां तु त्रिदैवतम् ८४
इत्येवमभिसंधाय श्राद्धकर्म समाचरेत्
निमन्त्रयीत पूर्वेद्युर्यथावृद्धमतन्द्रितः ८५
वृद्धान् संस्पृश्य जङ्घे द्वे समानान् करपल्लवौ
यवीयसः प्रियोक्त्या तु समाश्वास्य क्षणेदमून् ८६
ताम्बूलदानसहितं श्राद्धकृद्देशिकोत्तमः
वसेद् रजनीं तां च स्मरन्तः परमेश्वरम् ८७
संयम्य चेन्द्रियग्राममनुगृहानुकम्पया
अन्येद्युः स्नानपूजादिक्रिया निर्वर्त्य तानया ८८
व्याहरेदपराह्णे तु कृतस्नानादिकर्मणः
अभ्युत्थानासनाद्येन स्वागतेनागतानथ ८९
संभाव्य पादशौचाय कुर्यान्मराडलकानि तु
सुसमे गोमयाम्भोभिस्सुप्रलिप्ते गृहाजिरे ९०
समन्ताद्रङ्गरेखाभिराकीर्णपदवीपदे
द्वे चतुष्कोणके प्राच्यां प्रतीच्यां द्वे सुवर्तुले ९१
दक्षिणोत्तर संस्थाने हस्तमात्रे तदन्तरे
प्रतिमराडलमग्रे वावटः स्याद्द्वादशाङ्गुलैः ९२
मातृश्राद्धे पितृश्राद्धे मराडलं चावटं तु वा
कल्पयेदेव पित्रर्थमर्घ्यं पात्रेषु पञ्चसु ९३

गन्धपुष्पकुशाम्भोभिः विद्याङ्गैर्ब्रह्मसंयुतैः
देवार्थं यवसंयुक्तैः पित्रर्थं तिलसंयुतैः ९४
अभ्युद्दयार्घ्याम्भसा मन्त्रैर्विद्याङ्गैरभिमन्त्रयेत्
पुरुषेण च वस्त्राणि गन्धं हृदयमन्त्रतः ९५
पुष्पाणि ब्रह्मशिरसा शिखाया धूपदीपके
अनुक्तमन्यच्छ्राद्धाङ्गं हृदयेनाभिमन्त्रयेत् ९६
एवं द्रव्याणि संशोध्य ततः कर्म समाचरेत्
साग्रयोरवकीर्याथ यवान् सद्वृत्तयोस्तिलान् ९७
तिर्यङ्मध्ये कुशान्न्यस्त्वा मृतपिण्डं दक्षिणे न्यसेत्
विद्याङ्गास्त्रेण दक्षस्थं मण्डलं साश्रमर्चयेत् ९८
सुगन्धैः श्वेतपुष्पाद्यैर्विद्याङ्गहृदयेन तु
सौम्यस्थं प्रणवाद्येन स्वस्वनाम्ना समन्वितम् ९९
स्वाहान्तेनापसव्यस्थयज्ञसूत्रेण पश्चिमे
मण्डले करपृष्ठेन स्वधान्तेन समर्चयेत् १००
पात्रेभ्यः पृथगादायार्घ्योदकं पादयोः क्रमात्
दत्त्वार्घ्यं मृदमादाय पादौ प्रक्षालयेदनु १०१
सौम्यमण्डलयोरेवमेषां दत्त्वा सुशीतलैः
तोयैराचमनं पश्चादाचान्तस्संप्रवेश्य तु १०२
उपलिप्ते शुचौ देशे दक्षिणे प्रणवान्विते
आसनेषु सुधौतेषु ज्ञात्वा तानुपवेशयेत् १०३
ततः श्राद्धं करिष्येऽहमिति तान् प्रार्थयेदथ
कुरुष्वेत्यभ्यनुज्ञातो दद्याद्दर्भासनं द्वयोः १०४
न तु हस्तेषु दातव्यं पतॄणां विश्वदेवयोः
उदगग्रमजातेन सव्ये कृत्वोत्तरीयकम् १०५
आवाहयामीति वदेदुक्तस्त्वावाहयेति तैः
आवाहयेत्यनुज्ञातः स्वनाम्ना प्रणवादिना १०६

स्थापनादि त्रयं कृत्वा वामदेवेन मन्त्रवित्
अथ रक्षार्थमादाय यवानवकिरेत् परि १०७
प्रदक्षिणान्तरेणैव दद्यादर्घ्यमथाञ्जलौ
रूपिणा संनिधानाय द्वितयस्य सकृत् सकृत् १०८
प्रतिगृह्य तदर्घ्यं तु पात्रे संस्थाप्य तद्भुवि
जानुभ्यामवनौ स्थित्वाघोरेणाभ्यर्चयेद्यवैः १०९
पद्भ्यां प्रभृति विश्वाङ्गमाक्रम्याक्रम्य सादरम्
गन्धैरालिप्य सर्वाङ्गं भूषयत्पुष्पदामभिः ११०
वामदेवाणुना धीमान्देवो धूपोऽपि रूपिणा
दीपं च तेन संदद्यादीशानेन पवित्रकम् १११
वस्त्रं प्रावरणोपेतमङ्गुलीयकमादरात्
तदङ्गमपरं दद्यादुपवीतिक्रमेण तु ११२
कृत्वा ततोऽपसव्यं तु पितृणामप्रदक्षिणम्
कुशांस्तु द्विगुणं दत्त्वा सद्योजातेन मन्त्रतः ११३
आवाहयेदनुज्ञातः पितृस्तत्तन्मनुं स्मरन्
स्थापनादि त्रयं कृत्वा वामेनैवाप्रदक्षिणम् ११४
रक्षां तिलैरथेशेन दद्यादर्घ्योदकं पुनः
त्रयाणां संनिधानार्थमघोरेणाञ्जलौ पृथक् ११५
पूर्ववत्प्रतिगृह्यार्थं स्थापयेदञ्जलौ स्थितम्
भूमिष्ठजानुरीशेन शिरसः प्रभृति क्रमात् ११६
तिलैरभ्यर्चयेद्वामदेवमन्त्रमनुस्मरन्
गन्धाद्यं धूपदीपौ च रूपिणा दापयेत्ततः ११७
ईशानेन पवित्राद्यमपसव्यं स्वधान्तकम्
पूर्णमस्त्विति वक्तव्यं पूर्णमस्त्विति तैरपि ११८
ततस्तां संस्रवांस्तेषां पात्रे कृत्वा विधानतः
पितृस्थानमसीत्येवं व्युब्जं पात्रमधो न्यसेत् ११९

सौवर्णं राजतं पात्रं ताम्रजं दलसंभवम्
भाजनं शुद्धमादाय भोजनायोपपादयेत्  १२०
हस्तप्रक्षालनायापो दत्त्वा भूयश्च शोधयेत्
पङ्क्तिदोषनिवृत्त्यर्थं कृत्वा तुपरिहारकान्  १२१
सर्वपाकविशुध्यर्थं शिवाग्न्याहुतिपूर्वतः
शिवानले करिष्येऽहं पृच्छेद्धोममिति द्विजाः  १२२
कुरुष्वेत्यभ्यनुज्ञातो वह्नौ होममथाचरेत्
सोमाय पितृमच्छब्दं चतुर्थ्यन्तं स्वधा नमः  १२३
ततो यमायेत्युच्चार्याङ्गिरसे ते स्वधा नमः
उक्त्वाग्नये ततः कव्यवाहनाय स्वधा नमः  १२४
हुतशेषं प्रदद्यात्तु भोजनेषु नरं स्मरन्
पित्रर्थं चैव पिण्डार्थं न दद्याद्विश्वदेवयोः  १२५
अन्नमिष्टं हविष्यं च दद्यादक्रोधनो नरः
दद्यात्तु मधुरान्नं तु पुरुषेण घृतप्लुतम्  १२६
संस्पृश्याघोरमन्त्रेण तत्पात्रमभिमन्त्रयेत्
पवित्रीकरणायेति ततस्सव्यमधोमुखम्  १२७
तदगुष्ठं स्वहस्तेन गृहीत्वान्ते विवेश्य च
गुह्यमन्त्रं जपेद्वायमृत्युजिन्मन्त्रमेव वा  १२८
अमृतत्वाय परितः पाणिना भ्रामयेज्जलम्
आपोशनार्थमाद्येन प्रदद्यात् पाणिपङ्कजे  १२९
शुभं भुञ्जीध्वमित्युक्ते भुञ्जीरंस्तेऽपि वाग्यताः
अतिथिं भोजयेच्छक्त्या तत्काले न विचारयेत्  १३०
देवो देवी गुहो विष्णुर्धर्मस्साक्षाच्छरीरवान्
चरन्त्यतिथिरूपेण तस्मात् तान्न विचारयेत्  १३१
जपन्नीशानमतिष्ठेदातृप्तेरुदगाननः
तृप्तास्स्थेति भृतान्नस्सन्तृप्तास्स्म इति कीर्तिते  १३२

तदन्नं प्रक्षिपेद्भूमौ सकृद्द्भिस्समन्वितम्
उच्छिष्टसन्निधौ कुर्याद्गोमयेनैव मण्डलम्  १३३
कुशानास्तीर्य दक्षाग्रानजानेन तिलांस्तथा
वामेन तिलसंयुक्तं सर्वौदन समन्वितम्  १३४
दक्षिणाभिमुखो भूत्वा पिण्डत्रितयमुद्धरम्
मध्वाज्यतिलसंयुक्तं भूमिष्ठस्सव्यजानुना  १३५
दद्यादुपरि दर्भाणां क्रमादीशादिशम्बरैः
विधाय वारिणो धारां वामदेवमुदीरयन्  १३६
क्षौमं कार्पाससूत्रं वा दद्याद्वस्त्रार्थमञ्जनम्
संपूज्य गन्धपुष्पाद्यैः प्रणिपत्य क्षमापयेत्  १३७
क्षमध्वमिति संहृत्य पितृनाचम्य मन्त्रवित्
पूर्वमाचमनं त्रिभ्यो द्वाभ्यां दद्यादनन्तरम्  १३८
प्रदद्याच्छुद्धहस्तेभ्यस्ताम्बूलं चास्यशुद्धये
सकर्पूरं तदङ्गं सद् गृहोपकरणं तथा  १३९
गोभूदास्यादिकं दद्याद्दक्षिणां तेषु तृप्तये
वर्द्धनीमुदकापूर्णां श्राद्धकृद्दक्षिणाननः  १४०
धृत्वा पठेत् स्वधाकारं वदेयुर्वाच्यतामिति
ईशादित्रितयं पश्चात् चतुर्थ्यन्तमुदीरयेत्  १४१
स्वधान्तं श्राद्धकृत्पश्चादीशाद्यास्सर्व एव च
अस्तु स्वधेति ब्रूयुस्ते भूमौसिञ्चेत्ततो जलम्  १४२
एवं त्रिवारं कर्तव्यं पठेयुस्तदनन्तरम्
देवा रुद्राश्च तृप्तयन्तामित्येते च स्वयं पठत्  १४३
दातारो नोऽभिवर्धन्तां शैवसन्ततिरेव च
इत्युक्ते तैरिदं वाक्यं प्रति द्विजसत्तमाः  १४४
पुनश्चिवं वदेत् कर्ता उत्तरे श्राद्धकृत्ततः
श्रद्धा च नो मा व्यवगाद् बहुदेयं च नोऽस्त्विति  १४५

इत्युक्त्वा च प्रिया वाचः प्रणिपत्य क्षमापयेत्
यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः १४६
पितृपात्रं तदुत्तानं कृत्वा पश्चाद्विसर्जयेत्
सद्योजातेन मन्त्रेण पितृपूर्वमनुव्रजेत् १४७
अन्नशेषैः किं क्रियतामित्युक्ते श्राद्धकारिणा
इष्टैस्सहोपभोक्तव्यमिति ते ब्रूयुरिष्टदाः १४८
पिण्डांश्च गोषु विप्रेभ्यो दद्यादग्नौ जलेऽपि वा
प्रक्षिपेत् कुलपत्नी वा मध्यमं पिण्डमश्नुयात् १४९
ततोऽस्यां जायते पुत्रो रुद्रांशो लक्षणान्वितः
धीरश्श्रीमान्यशस्वी च विद्यासन्तानपारगः १५०
गर्भाधानादिके विद्वान् संस्कारे षोडशात्मके
वृद्धौ नान्दीमुखे नैव पितॄन् श्राद्धेऽनुतर्पयेत् १५१
नान्दीमुखे तथान्यस्मिन् सर्वमङ्गलकर्मणि
दद्याच्च दधिकर्कन्धुमिश्रान् पिण्डान्यवैः क्रियाः १५२
अपसव्यं न कुर्वीत न कुर्यादप्रदक्षिणम्
प्रदद्यात् प्राङ्मुखः पिण्डान् वृद्धिश्राद्धेषु नित्यशः १५३
प्रगग्रेषु च दर्भेषु पिण्डं दद्यात्तुवृद्धिषु
अनिष्ट्वा तु पितॄन् श्राद्धे सर्वकर्म न कारयेत् १५४
नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च
एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् १५५
आवाहनाग्निकरणरहितमपसव्यम्
उत्तिष्टतामित्यक्षय्यस्थाने तेषां विसर्जनम् १५६
अभिरम्यतामिति वदेद् ब्रूयस्तेऽभिरताः स्महे
एको वाथ नरो ग्राहो निमित्तस्य च संमतः १५७
स्वनाम्ना सर्वकर्म स्यात् प्राग्वत् किं तु महद्भवेत्
गोभूहिरण्य सद्वेश्मवाहनाच्छादनादिकम् १५८

वस्त्राणि कांस्यपात्राणि धान्यानि विविधानि च
आसनं तालवृन्तं च छत्रं पादुकसंयुतम्  १५९
उपधानयुतां शय्यां तदीयमपरं च यत्
दद्याद्दक्षिणयोपेतं जलदानयुतं पृथक्  १६०
अशौचान्तदिने त्वेतदेकोद्दिष्टं महद्भवेत्
नवश्राद्धमन्त्रं तु पिण्डोदक विवर्जितम्  १६१
अनूदकमधूपं च गन्धमाल्यविवर्जितम्
पिण्डोदकं समाख्यातं पिण्डपात्रगतस्य च  १६२
जलस्य धारया नेष्टं पिण्डोर्ध्वे भ्रमणं द्विजाः
प्रणामं न च कुर्वीत स्वधाकारं तथैव च  १६३
नैवाग्नौ करणं तच्च प्रश्ने विप्रोत्तमान् प्रति
अग्नौ करिष्य इत्येददेकोद्दिष्टेऽपि स्मृतम्  १६४
हविष्यान्नेन ते मासं वत्सरं पायसेन तु
तिष्ठन्ति युक्ताशीर्वादाः स्तुवन्ति च पितामहाः  १६५
रक्तशाल्यादिभक्तैश्च सव्यञ्जनपरिष्कृतैः
तृप्यन्ति पितरो दत्तैर्मासवृद्ध्या न संशयः  १६६
गयायां विहितं श्राद्धं सर्वमानन्त्यमुच्यते
गन्धोदकतिलैर्युक्तं कुर्यात्पात्रं चतुष्टयम्  १६७
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्
तन्नामभिरधोरादिपूर्वकैर्भवपश्चिमैः  १६८
ओमित्येव पितश्चेति शेषं पूर्ववदाचरेत्
पात्रत्रयं तु पित्रर्थं निमित्तार्थं परं मतम्  १६९
सपिण्डीकरणं त्वेतदेकोद्दिष्टं स्त्रिया अप
कर्तव्यं सर्वकर्मार्थं यथापूर्वमुदाहृतम्  १७०
स्वनाम्ना सर्व कर्तव्यं सपिण्डीकरणात्पुरा
ईशादिनामभिः पश्चात्सर्वकर्म समाचरेत्  १७१

यस्सपिराडीकृतं प्रेतं पृथक् पिराडेन योजयेत्
पितृघ्नो जायते कर्ता मातृहा च भवेद्ध्रुवम्  १७२
स्रायुष्कामो लभेदायुः धनकामो वसूनि च
विद्याकामोऽमलां विद्यां रतिकामो वरस्त्रियः  १७३
पुत्रान् सौभाग्यमारोग्यं यशो वीर्यं श्रियस्सुखम्
एतानि लभते नित्यं श्राद्धदो नावसीदति  १७४
प्रमीतस्य पितुः पुत्रैः श्राद्धं देवं हि दीक्षितैः
ज्ञातिबन्धुसुहृच्छिष्यैर्भृत्याचार्यैश्च दीक्षितैः  १७५
पुत्राभावे तु पत्नी स्यात् पत्न्याभावे तु सोदरः
योग्यो ह्यनुपनीतोऽपि श्राद्धकर्मरायदीक्षितः  १७६
कृतचूडस्तु कुर्वीत ह्युदकं पिराडमेव च
स्वधाकारं प्रयुञ्जीत मन्त्रोच्चारं न कारयेत्  १७७
एकवस्त्रो न भुञ्जीत न कुर्याद्देवतार्चनम्
दानमाचमनं होमं भोजनं देवतार्चनम्  १७८
प्रौढपादेन कुर्वीत स्वाध्यायं पतृतर्पराम्
स्रासनारूढपादश्च जान्वोर्वा जङ्घयोस्तथा  १७९
परकीयप्रदेशे तु पितृणां निर्वपेत्तु यः
तद्भूमिस्वामिपितृभिः श्राद्धकर्मोपभुज्ञते  १८०
स्रटवी चाकृतारगयं नदीतीराणि यानि च
सर्वाणयस्वामिकान्येव तेषु श्राद्धादिकं नयेत्  १८१
चराडालश्च वराहश्च कुक्कुटश्च तथैव च
रजस्वाला च षराडश्च नेक्षेरन्नश्नतो द्विजान्  १८२
होमे प्रदाने भोज्ये च यदि तैरपि वीक्ष्यते
दैवे हवींषि पित्र्ये च तद्गच्छत्ययथातथम्  १८३
वृद्धश्रावकनिर्गन्धाः शाक्या जीवन्तिकास्तथा
ये धर्मान्नानुवर्तन्ते ते च नग्नादयो मताः  १८४

अन्नं पश्येयुरेते तु यदि वै हव्यकव्ययोः
उत्सृष्टव्यं प्रधानार्थं संस्कारश्चापदि स्मृतः १८५
दिवसस्याष्टमे भागे मन्दीभूतदिवाकरः
स कालः कुतपः प्रोक्तस्तस्मिन् पैतृकमाचरेत् १८६
अथवान्यप्रकारेण कुतपस्त्विह कथ्यते
शिवोक्तिश्शौचमक्रोधस्तत्पराः पात्रवह्नयः १८७
तिलो दर्भश्च कालश्च नवैते कुतपः स्मृताः
पिता पितामहश्चैव प्रपितामह एव च १८८
गणोऽन्यस्सर्वसामान्यो न स्वपित्रादयो मताः
क्रमादीशादयः प्रोक्तास्तद्वन्मातामहादयः १८९
स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते सुधासमम्
पितामही तथा स्वेन तथैव प्रपितामही १९०
पिण्डदेयास्त्रयः पिण्डानेवं कुर्वन्न मुह्यति
मातृश्राद्धं तु युग्मे स्यात् सदैवं प्राङ्मुखैस्सदा १९१
मातृश्राद्धं तु पूर्वं स्यात् पितृणां तदनन्तरम्
अपुत्रायां मृतायां तु पतिःकुर्यात् सपिण्डताम् १९२
एकोद्दिष्टं तु कर्तव्यं यावत्पित्रोस्सपिण्डता
सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं निवर्तये १९३
न पृथक् पिण्डदानं तु तस्मादूर्ध्वं विधीयते
अपुत्रका मृताः केचित् स्त्रियो वा पुरुषाश्च ये १९४
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्
पित्रादित्रय पत्नीनां भोज्या मात्रे वृता द्विजाः १९५
स्त्रीणामेवाथवा दद्यान्मातृश्राद्धे द्विजोत्तमाः
स्वगोत्राद् भ्रंशते नारी उद्वाहान् सप्तमे पदे १९६
स्वामिगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया
चतुर्थीहोममन्त्रैस्तु मांसमज्ञादिभिस्सह १९७

एकत्वं सा गता भर्त्रा ततस्तद्गोत्रभागिनी
पाणिग्राहणिका मन्त्राः पितृगोत्रापहारिणः १९८
आसुरादि विवाहेषु विशेषः कश्चिदिष्यते
स्त्रीणामन्यस्य भर्तुर्वै यद्गोत्रं तेन निर्वपेत् १९९
यदि त्वक्षतयोनिस्सा त्वन्यपक्षं प्रतिष्ठिता
तद् गोत्रेण तु दातव्यं पिण्डं श्राद्धं तथोदकम् २००
जनन्यां संस्थितायां तु सपिण्डीकरणादिकम्
पैतृकं तु भवेत् गोत्रं ऊर्ध्वं तु पितृ दैवतम् २०१
पितृगोत्रं समुत्सृज्य न कुर्याद्भ्रातृ गोत्रतः २०१ १-२

इति उत्तरकामिकाख्ये महातन्त्रे शैवश्राद्ध विधिर्नाम
एकोन त्रिंशतितमः पटलः

त्रिंशत्तमे पटले प्रायश्चित्त विधिः

प्रायश्चित्त विधिं वक्ष्ये श्रूयतां द्विजसत्तमाः
विधिर्निषेध इत्येवं चोदना द्विविधा मता १
अनुष्ठितायां तस्यांस्याद्यथावद्धर्म संग्रहः
वैपरीत्ये त्वधर्मस्यात्तेन पापं महद्भवेत् २
तेनाधो गमने प्राप्ते कर्तुरूर्ध्वं परं पदम्
यत्कर्मनयतीत्युक्तं प्रायश्चित्तमिहागमे ३
प्रकृष्टायास्समानत्वाद्दोषः प्रायः प्रकीर्तितः
चिदात्मा कथितश्शास्त्रे तरणं तु तकारतः ४
सदोषस्यात्मनो यस्मात्तरणं पततो ह्यधः
तस्मात्प्रकीर्तितं विप्राः प्रायश्चित्तं शिवाश्रिताः ५
विधिर्निषेधो वा नास्ति यस्मिन् कर्मण्यनुष्ठिते
तस्मिन् पुण्यं च पापं वा नेति शास्त्रार्थ निश्चयः ६
आवश्यके कृते पूर्वमुखेनैव प्रति क्रिया

कर्तव्या पश्चिमास्येन कोणास्येन न वेति च ७
प्रायश्चित्तं विभेदेन न शक्यं वक्तुमग्रजाः
कर्मणामप्यनन्तत्वाद् ग्रन्थविस्तार दोषतः ८
ततो निगद्यते लेशात् प्रायश्चित्तं सनातनम्
स्नानं जपश्शिवध्यानं प्राणायामः प्रदक्षिणम् ९
लिङ्ग बेरागमादीनां स्वगुरोर्देशिकस्य च
शिवज्ञानरतानां च दर्शनं तन्निरीक्षणम् १०
नमस्काराद्यमेतेषां शिवधामनिषेवणम्
शिवाग्नि गुरु पूजा च भोजनं दीक्षितात्मनाम् ११
पुण्यतीर्थावहाह्यश्च पञ्चगव्याशनं ततः
शिवास्त्राम्भस्ततो दीक्षा पुण्यक्षेत्राधिवासनम् १२
उपवासश्चरोर्भुक्तिः पात्रशेषाशनं च यत्
शान्तिश्च शान्तिहोमश्च दिशाख्यः संहिताहुतिः १३
मूर्तिहोमो घृतक्षौद्रक्षीरस्नानाद्यनेकधा
एकाहाद्युत्सवश्शीतकुम्भो वैशेषिकार्चनम् १४
एवमादि समुद्दिष्टं प्रायश्चित्तं सनातनम्
विभज्य लक्षणं तेषां केषांचिदिह कथ्यते १५
पञ्चगोचर संभूतश्शिवद्विज कुलोद्भवः
सोष्णीषस्सोत्तरीयश्च नवाम्बर समन्वितः १६
पञ्चाङ्ग भूषणोपेतो देशिको निष्कृतिं चरेत्
प्रायश्चित्तेऽद्भुते वापि शान्तिं सद्यस्समाचरेत् १७
दिन पक्षर्क्ष लग्नादि प्रेक्षणं नात्र संमतम्
प्रायश्चित्तं कृतं सद्यो यदि श्रेष्ठं प्रकीर्तितम् १८
मध्यं सप्तदिनादर्वाक् पक्षाहादधमं भवेत्
तस्मान्मासावसानं तु हीनमित्यभिधीयते १९
मासोर्ध्वं नैव कर्तव्यं यदिशान्त्या समाचरेत्

लिङ्गपीठविमानादि प्रायश्चित्तादिकं नयेत्  २०
आदौ मध्ये तदन्ते वा सन्धानार्थं द्विजोत्तमाः
प्रायश्चित्ते समुत्पन्ने कर्ता वा देशिकोऽथवा  २१
स्थानिको वा यदा कुर्युरौदासीन्यं क्रियां प्रति
वित्ताभावान्मनः क्षोभाद्रागद्वेषादिहेतुभिः  २२
पापकर्माभिधाताद्वा एते मद्द्वेषिणोनराः
नृप भङ्गाय जातास्ते राष्ट्रविक्षोभकारिणः  २३
अनुशास्याश्च मद्भक्तैर्वीतरागैस्तपस्विभिः
देवस्वहारिणो मर्त्या येऽप्येवं शासनार्हकाः  २४
सश्रद्धं निष्कृतिं कुर्युर्मदीयास्ते नरोत्तमाः
राज्ञो हितकराः पुण्यकर्माणो राष्ट्रपोषकाः  २५
तद्ग्रामर्द्धिकराः स्थानमत्पूजावृद्धि हेतवः
इति ज्ञात्वा तु यत्नेन प्रायश्चित्तं समाचरेत्  २६
अथ मन्त्रजपं कुर्यात् स्नानं चोदितभस्मना
मन्त्रकाय उदग्वक्त्रः पूर्वास्यः साक्षमालिकः  २७
शिवाणुमथवाघोरं यद्वा पाशुपतं वरम्
अघोरास्त्रं शिवास्त्रं वा ब्रह्माण्यङ्गानि वा पुनः  २८
मेलामन्त्रं तु यद्वान्यं परार्धान्तं शतादितः
जपेत्तदनुरूपेण मितग्रासो हविष्यभुक्  २९
अनाहारोऽथ भिक्षाशी चरुभुक् क्षीरपोऽपिवा
शाकयावकपिण्याककन्दमूलफलाशनः  ३०
स्मरंस्तद् देवतारूपं जपंस्तस्मै निवेदयेत्
जपं एव समाख्यातः प्रदक्षिण मथोच्यते  ३१
नानाविधं तदाख्यातमन्तर्बाह्यविभेदतः
लिङ्ग प्रासादयोर्मध्ये श्रेष्ठाश्रेष्ठं प्रकीर्तितम्  ३२
अन्तर्मण्डल शालादावन्तः श्रेष्ठं प्रकीर्तितम्

गर्भे प्रदक्षिणं कर्तुं न शक्यं बहुदोषकृत् ३३
गर्भगेहे भवेल्लिङ्गच्छाया निर्माल्य सङ्करः
सोमसूत्रस्य मूलं च देवसमीप्यमेव वा ३४
परिहृत्य कृतं सर्वं यदि सर्वफलावहम्
अन्तर्मण्डलदेशेऽपि सोमसूत्रं च विद्यते ३५
प्रासादार्ध प्रमाणं प्रासादसममेव वा
निर्माल्यसङ्करोऽपि स्याद्धामछाया च विद्यते ३६
परिहृत्य तु तत्सर्वं प्रदक्षिण मथाचरेत्
सव्यापसव्य मार्गेण कर्तव्यं वा प्रदक्षिणम् ३७
सव्यं चण्ड प्रदेशः स्यादपरं सोमसूत्रतः
सव्यापसव्यमार्गेण मृदुगत्या समाचरेत् ३८
सव्यापसव्यमेवं स्यादन्तर्नित्योत्सवेऽपि वा
छायाया लङ्घनं धाम्नो देवदेवोत्सवेऽपि वा ३९
तत्कालकृतसेवस्य नैव दोषप्रदं भवेत्
तद्बाह्ये नैव दोषस्य प्रवेशोऽस्ति मनागपि ४०
प्रयत्नोऽपि महान् बाह्ये बहूनि स्युः पदानि च
पदे पदेऽश्वमेधस्य फलं दशगुणं भवेत् ४१
अङ्गप्रदक्षिणं चान्यदुदयास्तमनान्तकम्
अनयोः पुण्यमाहात्म्यं न शक्यं वक्तुमग्रजाः ४२
क्षेत्रमाहात्म्यतस्त्वेत देवानन्त फलं भवेत्
एवं प्रदक्षिणं ख्यातं शिवाम्भस्तत्र कथ्यते ४३
कुम्भे वा कलशे वाथ स्थण्डिलोपरिसंस्थिते
सूत्रवस्त्र सुवर्णाम्बु कूर्चचन्दन संयुते ४४
शिवेनाङ्गैस्समभ्यर्च्य ब्रह्मभिस्तत्स्थितोदकम्
शिवाम्भ इति निर्दिष्टमस्त्रोदं चास्त्र जापतः ४५
ततः मृच्छ्रादयः प्रोक्ताः कृच्छ्रोऽन्यस्तप्तसंज्ञकः

अतिकृच्छ्रपराकौ द्वौ चान्द्रायणविधिस्ततः ४६
त्रिरात्रमेकभुक्तिस्स्यात् त्रिदिनं लङ्घनं भवेत्
एवं कृच्छ्रः समाख्यातः प्राजापत्य इति स्मृतः ४७
पिबेत्सोष्णं त्र्यहं वारि त्रिदिनं क्षीर भोजनम्
सोष्णमाज्यं त्र्यहं चाद्यात् त्रिदिनं केवलोयदा ४८
तप्त कृच्छ्रमितिख्यातं त्वतिकृच्छ्रश्च कथ्यते
एक विंशति नक्तत्रं त्रिपलं क्षीरभोजनम् ४९
अतिकृच्छ्रः समाख्यातः पराक इह कथ्यते
द्वादशाहनिर्राहारः पराक इति संस्मृतः ५०
मासार्धं ग्रासवृद्धिस्स्याच्छुक्ले कृष्णे च हासयेत्
चान्द्रायण विधिः प्रोक्तो जलेनैव जलात्मकः ५१
सायमाद्यन्तयोरह्नो सायं प्रातश्च मध्यमे
चरिष्णुरुपवासं च त्यजेत् भुक्ति चतुष्टयम् ५२
मध्यम द्वितयं वाथ तदर्थं दानमेव वा
उपवासः समाख्यातश्शान्तिस्त्वत्र निगद्यते ५३
मण्डपं तु शुभाशायामग्नौ वा पूर्व वर्त्मना
तन्मध्ये कुण्डमापाद्य कृतं हस्तमितन्तथा ५४
शिल्पिनं च विसृज्याथ पुण्याहप्रोक्षणं नयेत्
देवं संशोध्य विधिना स्नपनं प्रत्यहं नयेत् ५५
गन्धाद्यैः पुष्कलैरिष्ट्वा शान्तिकर्म समारभेत्
संस्कृत्य कुण्डं वह्निं च शिवं साङ्गं च तर्पयेत् ५६
अघोरामथवा शैवमस्त्रं पाशुपतं तु वा
अघोरास्त्रमथान्यं वा सुसिद्धं देशिकात्मना ५७
कर्णिकायां समभ्यर्च्य साङ्गं संतर्पयेदथ
समिदाज्यं च गव्यं च मधुरत्रय संयुतम् ५८
तिलदूर्वाक्षतैर्युक्तं शुद्धान्नं वाथ पायसम्

सहस्त्रं वा तदर्थं वा शतमष्टाधिकं तु वा ५९
प्रत्यहं होमयेदेतैर्मन्त्रमादौ समुच्चरन्
स्वाहान्ते भगवन् सर्वव्घ्नोपनाशंपदं ततः ६०
कुरुकुर्वीति संयुक्तं प्रतिमन्त्रं दशान्तरम्
पञ्चाशदन्तरं वापि शतमन्त्रान्तरं तु वा ६१
पठन् होमं समाप्यैवं पूर्णामन्ते समाचरेत्
मुखवाससमायुक्तं ताम्बूलं च निवेद्य च ६२
कामिकादि शिवज्ञानं पञ्चदिक्षु व्यवस्थितम्
तत्तद्दिङ्मुख संजातं पठेयुश्शास्त्रपारगाः ६३
प्राचि तत्पुरुषं घोरं दक्षिणे वाममुत्तरे
पश्चिमे जातमीशानं जपेयुस्तत्र दीक्षिताः ६४
ऋृगाद्यध्ययनं कुर्युश्चत्वारो वेदपारगाः
स्तोतारो बहवो वैकः पठेयुः स्तोत्र संहतिम् ६५
तदर्थ भावनोपेतास्संस्कृताश्शिवदीक्षया
एतत् सर्वं प्रकर्तव्यं स्नातैर्होम प्रवर्तकैः ६६
होमरक्षां च संगृह्य दत्वार्घ्यं च पराङ्मुखम्
निरोध्य तत्र देवेशं दद्यादन्तर्बहिर्बलिम् ६७
समाचम्य कृतन्यासः प्रविशेद्देवसंनिधिम्
होमकर्म निवेद्यास्मै प्रार्थयेत् दुरित क्षयम् ६८
एवं शान्तिस्समादिष्टा नवधा सा समीरिता
एक त्रिपञ्चसप्ताहनवाहैश्च द्विसप्तकैः ६९
पक्षत्रिसप्त नक्षत्रैरविच्छिन्नायतस्ततः
कुण्डे विसर्जनं नोक्तं देवस्याग्नेः पुराविधेः ७०
विसर्जनं तु वा देवे पावकस्य न सर्वथा
शान्तिरेवं समाख्याता शान्तिहोमो विधीयते ७१
स च द्विविध उद्दिष्टश्श्रेष्ठः पूर्वं निगद्यते

शुभाशास्वग्निदेशे वा मराडपे समलंकृते  ७२
स्थरिडलं तत्र संकल्प्य तन्मध्ये विन्यसेत्घटम्
ससूत्रं सोदकं कूर्चवस्त्रहेमाम्बुजान्वितम्  ७३
सितचन्दन दिग्धाङ्गं फलपल्लव संयुतम्
परितः कलशानष्टौ वस्त्रकूर्चादि संयुतान्  ७४
विन्यस्य मध्यमे कुम्भे यजेत्पाशुपताह्वयम्
प्रणवासनमारुढं दुराधर्षं महाबलम्  ७५
पञ्चास्यं दशकर्णं च प्रतिवक्त्रं त्रिलोचनम्
दंष्ट्राकराकमत्युग्रं मुक्तनादं सुदुर्जयम्  ७६
कपालमालाभरणं चन्द्रार्धकृतशेखरम्
केकराद्मं महामालानागाभरणलेलिहम्  ७७
सूर्यकोटय्ययुताभं च विघ्नसंघात मर्दकम्
भुजैर्दशभिरत्युग्रैर्भैरवास्त्रैस्समन्वितम्  ७८
खड्गचापमहाशूलाभयपाशांश्च दक्षिणे
खेटबाणा कपालांश्च वरप्रासौ च वामतः  ७९
पिङ्गाभस्मश्रु संयुक्तं तथाविधशिरोरुहम्
ध्यात्वैवं समुच्चरन् मन्त्रमावाह्यार्चनमारभेत्  ८०
ओं श्लीङ्कार संयुक्तं पं शुं हुफराणस्त्विति
प्रणवं वह्नि दिग्भागे श्लीङ्कारं शाङ्करे यजेत्  ८१
पङ्कारं नैर्ऋते भागे शङ्कारं वायु गोचरे
ओङ्कारादि फडान्ताश्च वर्णाः स्थाने हृदादयः  ८२
सर्वे पाशुपतोपेतहृदयादि समन्विताः
फडन्तान् प्रणवोपेतान् वज्रादीन् कलशेषु तान्  ८३
इष्ट्वा गन्धादिभिर्देवं नैवेद्यान्तं समर्चयेत्
तदग्रे हास्तिके वृत्त कुराडे वा स्थरिडलेऽपि वा  ८४
संस्कृते पूर्ववत्पञ्चसंस्कारैस्संस्कृतेऽनले

देवं पाशुपतं साङ्गमावाह्याभ्यर्च्य तर्पयेत् ८५
समिदाज्यतिलक्षीरसितदूर्वाचरूंस्ततः
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ८६
प्रत्येकं जुहुयान्मन्त्रमुच्छरन् कर्मनिर्दिशेत्
भगवन् दोषशान्तिं तु कुरुकुर्विति देशिकः ८७
अङ्गानि दश चास्त्राणि दशहुत्वा प्रतोषयेत्
पूर्णाहुतिं ततो दद्यादस्त्रं पाशुपतं स्मरन् ८८
प्रायश्चित्ताहुतिं हुत्वा मन्त्रं पाशुपतं स्मरन्
पुनः पूर्णां च ताम्बूलं दत्वार्घ्यं च पराङ्मुखम् ८९
कृत्वा लयाङ्गमाकर्मपर्यन्तं परिरक्षयेत्
प्रत्यहं वा तदुत्पाद्य तर्पयेदस्त्र रूपिणम् ९०
अन्तर्बहिर्बलिं दत्वा समाचम्याणुविग्रहः
समर्पितक्रिये देवे त्वभीष्टं प्रार्थयेद्गुरुः ९१
कुम्भाद्देवं विसृज्याथ द्वादशान्ते नियोजयेत्
ततस्तत्कुम्भ पानीयैः प्रोक्षयेदभितस्ततः ९२
होमो वा समिदाज्यान्नैः कुम्भसंस्थापनं विना
कर्तव्यश्शान्तिहोमोऽयं शान्त्युक्तदिनसंख्यया ९३
दिशा होमं ततो वक्ष्ये द्विविधस्स उदाहृतः
प्रायश्चित्तार्थमन्योऽयं स्नपनाद्यङ्ग भाग्भवेत् ९४
लिङ्गेवा प्रतिमायां वा पीठे प्रासाद एव वा
मण्डपे मालिकादौ वा वृक्षादेर्मूल एव वा ९५
यदर्थं वर्तते प्रायश्चित्तं तस्यचतसृषु
दिक्षु कूटान् प्रपां वापि कृत्वा कुण्ड चतुष्टयम् ९६
वेदाश्रं वा सुवृत्तं वा हस्तमात्रमितं यथा
स्थण्डिलं वा समापाद्य प्रोक्षयेदस्त्र वारिणा ९७
सर्वार्थं वा चतुर्दिक्षु प्रासादस्य तदाचरेत्

एकं वा कूटमापाद्य तत्र सर्वं समाचरेत्  ९८
मध्यमे वेदिकायुक्तं कुम्भसंस्थापनाय च
अथैतद्यागशालायां कर्म सर्वं समापयेत्  ९९
अथान्यत् कुण्डमैशान्यां ब्रह्माङ्ग सहितस्य च
तर्पणार्थं महेशस्य कल्प्यं वा मुनिपुङ्गवाः  १००
शिवं संपूज्य विधिवल्लिङ्गे वा स्थण्डिलादिके
तदग्रे संयजेदस्त्रंशिवाख्यंदेशिकोत्तमः  १०१
चतुर्वक्त्रं ज्वलत्केशं विद्युत्पुञ्जसमप्रभम्
चन्द्रखण्डसुमूर्धानं सचतुष्कर पल्लवम्  १०२
अशनिध्वनिसंयुक्तमसह्यं भीमविक्रमम्
द्वादशाक्षियुतं शक्तिशूलाभयवरान्वितम्  १०३
ध्यात्वैवं गन्धपुष्पाद्यैः शिवास्त्रं स्वाणुनार्चयेत्
दक्षेऽघोरमभ्यर्च्य पश्चात् पाशुपतं यजेत्  १०४
सौम्ये प्रत्यङ्गिरा पूज्या तद्ध्यानमन्त्रमुच्यते
ओं ह्रींङ्कारं ततः कृष्णवाससे चेति यत्पदम्  १०५
ततश्च सिह्मवदने महावदन इत्यपि
महाभैरविवर्णे च सर्वशत्रुपदं ततः  १०६
कर्मविध्वंसिनीत्येवं परमन्त्रपदं ततः
च्छेदनीत्युद्धरे पश्चात् सर्वभूतदमन्यपि  १०७
सर्वभूतांस्ततो बन्धबन्धेति पदमुद्धरेत्
सर्वविघ्नानिति पदं छिन्धिछिन्धीति यत्पदम्  १०८
सर्वव्याधि निकृन्तेति निकृन्तेति पदं च यत्
सर्वदुष्यांस्ततो भक्ष भक्षेति पदमुद्धरेत्  १०९
ज्वाला जिह्वे करालेति पदं दंष्ट्रेपदं पुन
प्रत्यङ्गिरे पदं पश्चात् ह्रीं नमोस्त्विति यत् पदम्  ११०
ते स्वाहेत्युद्धरेदेष मन्त्रः प्रत्यङ्गिरात्मकः

प्रणवात् सप्तवर्णं हृच्छिरः पञ्चदशाक्षरम् १११
दशाक्षरा शिखा तस्मात् कवचं सप्तवर्णकम्
तथैव तस्मान्नेत्राणुश्चतुस्त्रिं-शद्भिरस्त्रकम् ११२
त्रयोदशार्णा गायत्री सावित्री सप्तवर्णतः
नमः स्वाहावषड्वौषड् हुंफड् युक्ता हृदादयः ११३
सिह्मवक्त्रोग्रदंष्ट्राग्निसप्रभोर्ध्वशिखान्विताम्
कृष्णाञ्जननिभां वृत्तरक्तनेत्रत्रयान्विताम् ११४
वहन्तीं सव्यहस्ताभ्यां शूलं डमरुकं परम्
वहन्तीं वामहस्ताभ्यां मुण्डं शेषे तु पल्लवम् ११५
कृष्णाम्बरधरां सास्त्रमांसास्यां नर्तने रताम्
मौक्तिकाभरणैर्युक्तां सर्वावयवभूषणाम् ११६
अट्टहासरवोपेतां कृष्णाजिन समन्विताम्
ध्यात्वैवं गन्धपुष्पाद्यैरर्चयेत्परमेश्वरीम् ११७
अथवा पञ्चकुम्भांस्तु ससूत्रान् वस्त्रवेष्टितान्
गन्धोदकोदरान् कूर्चहेम पङ्कजसंयुतान् ११८
पृथक् स्थण्डिलकाधारान् सपिधानान् सपल्लवान्
चन्दनालिप्तदेहांस्तु विन्यस्य करकेण च ११९
तथाविधेन संयुक्तं तत्र मध्ये शिवाम्बिकाम्
प्रागुक्तया परितोऽस्त्राणि ततः प्रत्यङ्गिरामपि १२०
इष्ट्वा विज्ञाप्य होमार्थं विशेयुः पावकालयम्
कुण्डं स्वकीयं संस्कृत्य पावकं च यथा पुरा १२१
स्वस्वदेवान् समावाह्य साङ्गान् गन्धादिना सह
तर्पयेयुर्यथान्यायं मूर्तिपा गुरुणा सह १२२
कुर्युश्चाध्ययनं मन्त्रजपं स्तोत्र जपादिकम्
प्राग्वत् समाहिताः स्वस्वदिक्षु सम्यग् व्यवस्थिताः १२३
प्लक्षोदुम्बरकाश्वत्थ वटास्समिध ईरिताः

प्रधानस्य पलाशस्स्यात् स च सर्वत्र वा मतः  १२४
तिलाज्यदूर्वास्समिधः क्षीराक्तार्काङ्गुलायतः
चरूश्च होमद्रव्याणि शतं पञ्चाशदेव वा  १२५
प्रत्येकमेतैर्जुहुयुः स्वदेवध्यान तत्पराः
प्रायश्चित्ताहुतिं पूर्णां ताम्बूलाहुतिसंयुताम्  १२६
रक्षादानं निरोधार्घ्यं लयाङ्गं सन्निरोधनम्
अन्तर्बहिर्बलिं पश्चादाचान्तो मन्त्रविग्रहः  १२७
कर्म विज्ञापनं देवे प्रार्थयंस्तत्प्रसादतः
कर्तुर्भस्मप्रदानं च कुर्यात्सर्वमनुक्रमात्  १२८
देवं कुम्भस्थपानीयैः संस्नाप्याभ्यर्चयेद्गुरुः
देव धाम्निकृतं चैतद्यदि कुम्भोदकैस्तदा  १२९
प्रायश्चित्तं समुद्दिश्य वर्तते प्रोक्षयेत्तुतम्
दिशाहोमस्समाख्यातस्सर्वारिष्ट निवारणः  १३०
दिशाहोमो द्वितीयोऽसौ विशेषतस्तत्र कथ्यते
प्रत्यङ्गिरायाश्चास्त्राणां पूजा नात्र समीरिता  १३१
समिदाज्योदनैर्होमस्सुतिलैस्सिततण्डुलैः
होमश्च पुरुषाघोरवामाजैर्दिक्षु संमतः  १३२
स्नपनादिषु होमेऽयं चतुर्दिक्षु च संमतः
वक्ष्येहं संहिताहोमं सर्वदोषनिकृन्तनम्  १३३
शुभाशायामथान्यस्मिन् नित्याग्नौ यागमण्डपे
उत्सवाद्यग्निमध्ये वा स्थण्डिले वा समाचरेत्  १३४
सब्रह्माङ्गश्शिवश्शास्त्रे संहितेत्यभिधीयते
तैर्मन्त्रैस्संस्कृते वह्नौ गन्धाद्यैरर्चितो गुरुः  १३५
पलाशसमिदाज्यान्नैश्शत संख्या शिवाणुना
शिवाद्दशांशतोऽङ्गानामाहुतिर्ब्रह्मणामपि  १३६
ततोऽघोराणुना होमं पञ्चविंशतिसंख्यया

प्रायश्चित्तार्थमापाद्य पूर्णां कुर्याद्विधानतः १३७
संहिताहोम एष स्यान्मूर्तिहोमो विधीयते
हर्म्याग्रेऽन्यत्र वा कृता स्थरिडलं कृतमराडले १३८
शिवकुम्भं न्यसेन्मध्ये वर्धनीं तस्य दक्षिणे
अष्टदिक्ष्वष्ट कुम्भांस्तु वज्राद्यायुध संयुतान् १३९
ससूत्रान् सापिधानाश्च सवस्त्रान् सहिरगयकान्
गन्धोदकोदरान् गन्धपुष्पधूपदीप प्रदीपकैः १४०
मध्यकुम्भे शिवं चेष्टवाघोरास्त्रं करके यजेत्
यद्वाघोरास्त्रराजानं मध्यकुम्भे शिवं विना १४१
वर्धनीमपि हित्वैव साङ्गमभ्यर्चयेद्गुरुः
दत्वासनमथास्त्रासनाय हुं फराणमस्त्विति १४२
दत्वास्त्रमूर्तये हुं फराणमो मूर्तिं च तामपि
ध्यायेत्सूर्यसहस्राभं प्रलयाम्बुदनिस्वनम् १४३
प्रदीप्तदशन प्रान्तप्रकाशमुखकन्दरम्
त्र्यक्षं तटिल्लताजिह्वादीप्तभ्रूश्मश्रुमूर्धजम् १४४
सर्वोपवीतं शूलासिशक्तिमुद्गरधारिणम्
चतुर्भुजं चतुर्वक्त्रं स्फुरच्चन्द्रार्ध शेखरम् १४५
नृत्यन्तं तं महाकायं नागाभरण भूषितम्
देवदानवदैत्यानां दर्पितानां विमर्दकम् १४६
वज्रादि शूल पर्यन्तान्यभितोऽस्त्राणि संयजेत्
पद्मं चक्रं तथैशाने नैरृते च क्रमाद्यजेत् १४७
तदग्र कल्पिते कुराडे हास्तिके वृत्तसंनिभे
स्थरिडले संस्कृते वापि वह्निं विन्यस्य देशिकः १४८
संस्कृत्य पञ्चसंस्कारैर्वह्निकार्योक्तवर्त्मना
तत्रावाह्य यजेत्साङ्गं अघोरास्त्रं शिवानले १४९
समिदाज्य तिलक्षीरसितदूर्वामधुत्रयम्

हविष्यान्नं सहस्रं वा तदर्धं शतमेव वा १५०
प्रत्येकं जुहुयादेतैरघोरास्त्रं शिवानले
कर्मनिर्देश संयुक्तमङ्गैरस्त्रैश्च तर्पयेत् १५१
पूर्णाहुतिं ततो दत्वा प्रायश्चित्तं समाप्य च
पुनः पूर्णां च ताम्बूलं दत्वा स्तुत्वाभिवन्द्य च १५२
अध्येष्याभीष्टमाचार्यो होमरक्षां समाचरेत्
स्वार्थं च यजमानार्थं च दद्यादर्घ्यं पराङ्मुखम् १५३
लयाङ्गं पूजयित्वान्ते शिवं व्याहृतिमाचरेत्
तत्रैव रक्षयेन्नित्यं यावत्कर्म समाप्तये १५४
प्रत्यहं जनयेद्वाथ स्थण्डिले होमकर्मणि
अन्तर्बहिर्बलिं दत्वा समाचम्याणुविग्रहः १५५
गत्वा कुम्भान्तिकं कर्म विज्ञाप्येशेऽस्त्ररूपिणि
ततस्तत्कुम्भ पानीयैः स्नापयेत् परमेश्वरम् १५६
गन्धपुष्पसृगाद्यैश्च नैवेद्यान्तैः प्रपूजयेत्
संप्रार्थ्य वाञ्छितं देवाल्लब्धानुज्ञः प्रसादजम् १५७
भस्मापि यजमानाय दातव्यं होमकर्मणि
अत्राप्यध्ययनं मन्त्रजपं शान्तिवदाचरेत् १५८
मूर्तिहोमः समाख्यातः प्रायश्चित्तार्थमीरितः
अन्योऽपि मूर्तिहोमस्य विशेषस्त्वत्र कथ्यते १५९
यजेत् कुम्भास्त्रवर्धन्योर्मध्यमे शिवमम्बिकाम्
संयजेन्मूर्तिमूर्तीशानष्ट कुम्भेषु बाह्यतः १६०
अष्टदिक्षु च शर्वादिमन्त्रैर्होमं समाचरेत्
स्थण्डिलेष्वष्टकुण्डेषु वेदिकासहितेषु वा १६१
समिदाज्यतिलक्षीरयवैरष्टोत्तरंशतम्
पञ्चाशत्संख्यकं वापि तदर्थं वा पृथक् पृथक् १६२
पलाशोदुम्बराश्वत्थ वटा दिक्षु विदिक्ष्वथ

शम्यपार्मश्रीवृक्षप्लक्षास्समिध ईरिताः १६३
क्षीरसस्येन्द्र हीनैर्वा पञ्चकुण्ड घटैस्तु वा
पञ्चपक्षेऽष्तपक्षे वा स्थण्डिलं पूर्वदिग्गतम् १६४
विधाय सर्वं मन्त्रैस्तु होमं तत्र समाचरेत्
पूर्वस्मिन्नीश कुण्डे वा गुरुस्संहितायाहुतिम् १६५
पूर्णाहुतिं ततो दत्वा घटोदैः स्नापयेच्छिवम्
संपूज्य गन्धपुष्पाद्यैः प्रार्थयेदिष्टसिद्धये १६६
एवं श्रेष्ठादि भेदेन मूर्तिहोमस्त्रिधामतः
कर्तव्यो मूर्तिहोमोयं मूर्तीशार्चनहोमयुक् १६७
संप्रोक्षण प्रतिष्ठादौ निष्कृत्यै नायमीरितः
शान्त्युक्तदिन संख्याया वशेनैतत्समाचरेत् १६८
मूर्तिहोम इति प्रोक्तो घृतस्नानादिकः पुरा
यतो मया समदिष्ट स्ततो नाद्यापि कथ्यते १६९
एकसन्ध्यादि भेदेन नित्यपूजा विलोपने
द्वारेशार्चनलोपे च पञ्चशुद्धिविलोपने १७०
लोपे चासनसंस्कारोपचाराणामथावृतेः
पाद्यादीनां चतुष्के चाभ्यङ्गकोद्वर्तनेऽपि वा १७१
निमज्जन विहीने वा तैलाद्यैस्संयुते शिवे
अर्चिते पञ्चगव्ये वा लुप्ते पञ्चामृतेऽपि वा १७२
गन्धेऽदत्तेऽथवा स्वल्पे पुष्पे दत्ते विपर्ययात्
दीपे चारात्रिके लुप्ते धूपारात्रिकयोरथ १७३
नीराजनस्य वा दीपमालास्थेनाहृतेन वा
मूषिकाद्यैस्तु दीपेन वह्निना वा द्विजोत्तमाः १७४
लिङ्गबेरागमादौ तु स्पृष्टे दुष्टेऽन्यवर्णकैः
लिङ्गादिस्थेऽम्बरे दग्धे दग्धे सद्मनिवातथा १७५
दीपे च रक्षादीपे वा हविष्यामन्त्रणात्मके

हीने काराडपटे गन्धे पुष्पे नैवेद्यकादिषु  १७६
कृमिकीटनराद्यस्थिनखरोमादिदर्शने
देवाय दत्तद्रव्येषु नखरोमादिदर्शने  १७७
श्लेष्माश्रुरुधिराद्युक्तद्रव्यैरम्भ्यर्चितेशिवे
सामान्यप्राणिसंभूत मलयुक्तैरथापिवा  १७८
नैवेद्याहरणे काले तोयसेके विलोपिते
तदाक्रमे वा शङ्खस्य निस्वने वा तदुज्झिते  १७९
प्रागेव निश्चित द्रव्यहीने तस्य वर्धने
लिङ्गे बेरादिके शून्यमस्तके पूर्वकल्पिते  १८०
मालाद्येऽवस्थिते म्लाने लिङ्गाद्ये पूजिते सति
बलावदत्ते नित्ये वा वह्निकर्मणि नित्यके  १८१
काम्ये वा त्वकृते कुराडवह्नि संस्कार लोपने
अशैवाग्नौ कृते होमे वैदिकादि क्रियाकृतौ  १८२
केवले सशिवे वाग्नौ निर्वाणेतु द्विजोत्तमाः
होमद्रव्येऽथवा हीने नित्योत्सवविलोपने  १८३
बेरं विहाय वा तस्मिन् पुष्पलिङ्गादिभिः कृते
वृष्टिपातादिभिर्वापि राष्ट्रक्षोभादि हेतुभिः  १८४
गर्भगेहे कृते तस्मिन् तत्काले दीपलोपने
अतोद्य नृत्तकरणे वितानस्य विलोपने  १८५
बलिप्रदान कालेतु वाद्यदीपविलोपने
पादुकाराधन हीने तद्याने वा विलोपिते  १८६
अयोजितास्त्रनाथे वा लिङ्गे पाशुपताह्वये
उक्तप्रदक्षिणे हीने वैपरीत्यप्रदक्षिणे  १८७
बैरादौ पतिते वान्नलिङ्गे पात्रेऽथ पादुके
सौख्ये कृते तदङ्गे वा पञ्चाचार्याधिपोज्झिते  १८८
सौख्यश्लोकविहीनेतु गणिकापतनेऽथवा

तदा दीपेऽथवा गाने विहीने तु द्विजोत्तमाः १८९
अतोद्यनृत्तवैकल्ये नीराजनविलोपने
तदङ्गे वाप्यदत्तायां रक्षायां भस्मनस्तथा १९०
अदत्ते दर्पणे छत्रचामरादौ सति प्रभोः
कृते पर्युषित पुष्पाद्यैरर्चने गर्भगेहके १९१
सनिर्माल्येऽथवा विप्राः द्रव्यैरीशे प्रपूजिते
निर्माल्यसङ्करोपेतैः क्षयकुष्ठादिरोगिभिः १९२
बधिरैः पापरोगार्त्तैरपस्मारादिसंयुतैः
दुष्टलक्षणयुक्तैश्च हीनाङ्गैर्वाधिकाङ्गिभिः १९३
विशिखैर्वाचिते देवे सन्ध्यातिक्रमणे तथा
आदिशैव कुलोद्भूतव्यतिरिक्तैश्शिवेऽर्चिते १९४
अधिकारविहीनैर्वा देवलैर्वार्चितेशिवे
एवं नित्यविधो प्रोक्तः प्रायश्चित्ते ह्यनुक्रमः १९५
अनुक्रमानुरूपेण नित्यनिष्कृतिरुच्यते
एकसन्ध्यार्चनाहीने पूजयोत्तमया युते १९६
स्थानराज्ञोनिरोधः स्याद्दिशाहोमं तदा नयेत्
मध्यया मूर्तिहोमस्स्याद्धीनया शान्तिहोमकम् १९७
विधाय पूजां त्रिगुणां द्विगुणां वा समामथ
उपसन्ध्यार्चने हीने हीनोक्तां निष्कृतिं गुरुः १९८
नयेद्दोषापहारार्थं द्विसन्ध्यालोपने ततः
कलशैर्नवभिर्दैवं संस्नाप्य तदनन्तरम् १९९
प्रायश्चित्तं ततः कुर्यात् प्रागुक्तं देशिकोत्तमः
त्रिसन्ध्यार्चन लोपे तु स्नपनं पञ्चविंशतिः २००
चतुस्सन्ध्यार्चने हीने पञ्चाशत् स्नपनादिकम्
प्रायश्चित्तं प्रकर्तव्यमेकाहे तु विहीनके २०१
अष्टोत्तरशतं स्नानादिकं कार्यं पुरोदितम्

दिनद्वये विहीने तु द्विदिनं चैतदाचरेत्  २०२
तत्रापि सन्ध्यालोपश्चेत्तदुक्ता निष्कृतिर्मता
दिनानि यानि हीनानि पूजया नित्यसंज्ञया  २०३
तदहस्संख्यया कुर्यात् प्रायश्चित्तं पुरोदितम्
एक मासावधिं यावत्ततस्संप्रोक्षणं नयेत्  २०४
नान्यथा देवदेवस्य सन्निधिर्द्विजसत्तमाः
द्वारपालार्चने हीने विघ्नबाधा द्विजोत्तमाः  २०५
तदर्थं संहिताहोमं समाप्यद्वारपान्यजेत्
पञ्चशुद्धि विहीना या सा पूजा त्वकृता भवेत्  २०६
आसनस्कन्धहीने तु दुस्थितिर्भुवि जायते
शिवसंस्कारहीने तु नराः स्युर्दुष्टचारिणः  २०७
अथोपचार वैकल्ये क्षुत्पिपासादिभिर्नराः
पीडयन्ते क्रमभङ्गेतु साङ्कर्यं भुविजायते  २०८
विद्यादावृति भङ्गेतु प्रेष्याणां दुस्थितिं गुरुम्
शान्ति होमं तदाकृत्वा यथावत्सर्वमाचरेत्  २०९
नित्ये नैमित्तिके काम्ये पाद्यादि द्रव्य हीनके
तदङ्गे वा भवेल्लोके तत्तद्द्रव्यविनाशनम्  २१०
पाद्यद्रव्ये तदङ्गे वा विहीने पादरोगता
तद्वदाचमनाङ्गे वा मुखरोगो भविष्यति  २११
शिरस्यर्घ्ये तदङ्गे वा हीने रोगो भवेद्ध्रुवम्
दूर्वापुष्पाक्षतैर्हीने तदङ्गे तत्फलं ध्रुवम्  २१२
अभ्यङ्गादि विहीने तु भवेयुस्सरुजा नराः
पञ्चगव्य विहीने तु हीने पञ्चामृतेङ्गके  २१३
तत्तद्द्रव्यविनाशस्तु भवेल्लोके न संशयः
गन्धादानेऽङ्गवैकल्ये पुष्पादाने तदङ्गके  २१४
तत्तद्द्रव्य विनाशो हि भवेल्लोके मुनीश्वराः

धूपेऽदत्ते तदङ्गे वा हीने स्याद्धोर रोगता २१५
घराटायास्ताडने हीने पिशाचै रात्तसादिभिः
पीडयन्ते सोपसर्गाश्च जायन्ते तन्निवासिनः २१६
दीपप्रदाने हीनेऽङ्ग लोपेवा दृष्टरोगता
ग्रामन्त्रण हविर्लोपे तदङ्गानामथापिवा २१७
नैवेद्य तदङ्गस्याप्रदाने सस्यनाशनम्
ताम्बूलानामभावेऽङ्गे हीने वा वक्त्ररोगता २१८
ग्रथ काराडपटे हीने देवानां संनिधित्तयः
भवेदिति गुरुर्ज्ञात्वा प्रायश्चित्तं समाचरेत् २१९
देवं संपूज्य तद्द्रव्यं द्विदुर्णं दापयेच्छिवे
शान्तिहोमं ततः कुर्यात् स्नपनं वा गुरुर्नयेत् २२०
तत्तद्द्रव्यविहीने च द्विगुणं दापयेच्छिवे
कर्तव्यस्संहिताहोमश्शताघोर जपोऽथवा २२१
द्रव्याणामेव चैतेषामर्धे पादे तदर्धके
प्रदत्तेऽघोर मन्त्रेण द्विचतुष्षट्शतं क्रमात् २२२
जप्त्वा देवाय तद्द्रव्यंद्विगुणं दापयेत्ततः
द्रव्याण्येतान्यमन्त्रेण दत्तानि यदि शङ्करे २२३
ग्रदत्तमेव तद्द्रव्यं देवमभ्यर्च्य देशिकः
दद्यादन्ते स्वमन्त्रेण द्रव्यं वा द्विगुणं समम् २२४
स्नपनं कारयेद्दिष्टं शतं घोरजपं तु वा
नित्ये नैमित्तिके काम्ये पाद्यादित्रयलोपने २२५
दद्योजातनरेशानाश्शतधावर्त्य देशिकः
याद्यादि द्विगुणं दद्यात्तद्द्रव्यं केवलं तु वा २२६
दूर्वापुष्पात्तते हीने शतं जापोहृदामतः
प्रवर्तमानेऽभ्यङ्गे वोद्वर्तनिर्मज्ञनादिके २२७
हीने हृदा शतं जप्त्वा द्विगुणं दापयेत्ततः

संस्थितेऽभ्यङ्ग तैलाद्ये पूजया संहिताहुतिः २२८
नित्ये नैमित्तिके काम्ये पूर्वकॢप्तशरावृते
विलुप्ते संहिताहोमं कृत्वा द्विगुणमाचरेत् २२९
अनेन विधिना कुर्यात् पञ्चगव्यं च निष्कृतिम्
पूर्वसंकल्पिते गन्धे लुप्ते सद्यः शतं जपेत् २३०
जुहुयाद्वाथ तद्द्रव्यं द्विगुणं सममेव वा
अपुष्कले विहीने वा पुष्पे दत्ते विपर्ययात् २३१
शतवारं जपेदीशं तद्दद्यात् द्विगुणं ततः
धूपेचारात्रिके घोरं जप्त्वान्ते द्विगुणं ततः २३२
धूपारात्रिकयोर्दानकाले नीराजनस्य च
दीपमालास्थितेनाथ मुषिकाद्याहृतेन वा २३३
वह्निना यदि संस्पृष्टे लिङ्गबेरागमादिके
अणुना महता वापि राज्ञो रोगो भविष्यति २३४
संशोध्य वह्निना दुष्टं संस्नाप्यपरमेश्वरम्
पञ्चामृत समायुक्तं नालिकेरोदकान्वितम् २३५
संपूज्य देवदेवेशं मूर्तिहोमं समाचरेत्
अणुमात्रो भवेद्वह्निर्यदि शान्तिं समाचरेत् २३६
लिङ्गबेरादिसंस्थानि वासांसि यदि वह्निना
निर्दग्धानि तदा कुर्यात् कर्म संप्रोक्षणादिकम् २३७
दग्धानि चेत् प्रदेशेन तदा शान्तिं समाचरेत्
दहने सद्यनः कुर्यात् सद्य संप्रोक्षणात्मकम् २३८
देवाय स्नपनं कुर्यात् धामच्छेदादिसंभव
तदुक्तां निष्कृतिं कुर्यात् सन्धानादि समन्वितम् २३९
वह्निना लिङ्गबेरादावन्यवर्णमुपायते
मानुषं चेत् परित्याज्यं ग्राह्यं स्वायंभुवादिकम् २४०
प्रतिक्रियानुकर्मोक्त्या कार्या संप्रोक्षणान्विता

पुस्तको यदि लेशेन दग्धः शान्तिं समाचरेत् २४१
सकले विकले कुर्याच्छिवस्य स्नपनं महत्
प्राग्यङ्गधूपादेन च पञ्चमस्य शतं जपेत् २४२
दीपानामथ वैकल्ये जपेदघोर शतत्रयम्
दीपानि द्विगुणं पश्चात् देवदेव प्रदापयेत् २४३
रक्षा दीपस्य विच्छेदेऽप्येवं द्विगुणजापयुक्
हविष्य दत्ते देवाय स्नपनं तु विधाय च २४४
द्विगुणं दापयेत्पश्चादामन्त्रण हविष्यपि
अथ काण्डपटे हीने कवचं द्विशतं जपेत् २४५
गन्धपुष्पनिवेद्यादि द्रव्येष्वपि तथा भवेत्
कृमिकीटनराद्यस्थिनखरोमादि दर्शने २४६
त्यजेत् स्वल्पं तु तद्द्रव्यं महच्चेन्न परित्यजेत्
शिवाय दत्तद्रव्येषु नखरोमादि दर्शने २४७
पञ्चगव्यैस्सुसंस्नाप्य जपेदघोरं शतत्रयम्
श्लिष्माश्रुरुधिराद्युक्त द्रव्यैश्चेत् पूजितः शिवः २४८
स्नपनं देवदेवाय कल्पयेत् कर्तुरिच्छया
सामान्यप्राणि संभूतमलयुक्ते तथाचरेत् २४९
नैवेद्याहरणे पाकस्थानात्तोयेन सेचनम्
हीनं लङ्घनं तत्र यदि जायेत दोषदम् २५०
अर्घ्याम्बुना तदाप्रोक्ष्य नैवेद्यं बहुरूपिणा
शतं जपेद्विशुध्यर्थं हीने वा शङ्खनिस्वने २५१
आतोद्य सहिते स्थाने पुरुषाणां शतं जपेत्
प्रागेव निश्चितद्रव्यहीने तद्दोषकारकम् २५२
तदा मूलं शतं जप्त्वा द्विगुणं दापयेच्छिवे
प्रागेव निश्चितद्रव्यवर्धनं धनवर्धनम् २५३
नित्ये नैमित्तिके काम्येऽप्येषा निष्कृतिरीतिता

लिङ्गबेरादयश्शून्यमस्तकायदि दोषदाः २५४
तदाघोरं शतं जप्त्वा पुष्पाद्यैरर्चयेत्ततः
पूर्वसन्ध्यार्चितम्लानपुष्पाद्यैस्समवस्थिते २५५
पूजिता लिङ्गबेराद्या यदि दोषकरा नृणाम्
अघोरेण शतं जप्त्वा पुनः पूजां समाचरेत् २५६
बलिदानविहीनं चेद्भवन्त्यखिलदेवताः
तत् स्थान विमुखास्तासां तृप्त्यर्थं द्विगुणं नयेत् २५७
दशाहोर्ध्वं विहीनं चेत् स्वाणुनापि शताहुतिः
नित्ये नैमित्तिके काम्ये त्वकृते वह्निकर्मणि २५८
अवग्रहो भवेत्तत्र शान्तिहोमं समाप्य च
पुनस्तत्त्रिगुणं कार्यं तन्मात्रं वा द्विजोत्तमाः २५९
यदि देशिकसामर्थ्यं द्विसन्ध्यादौ समाचरेत्
होमकार्याणि यावन्ति परित्यक्तानि देशिकैः २६०
तत्तद्द्रव्यैश्च तावन्ति मिलित्वा दिनवृद्धितः
प्रमाणहीनं तत्कुण्डं स्थण्डिलं वारि वृद्धिदम् २६१
शान्तिहोमं तदा कृत्वा यथावत्पुनराचरेत्
कुण्डसंस्कारहीने तु शिवाग्निर्नैव सिद्ध्यति २६२
तथाविधे कृते होमे कुण्डे वा स्थण्डिलेऽपि वा
अनिष्पन्ने शिवाग्नौ वा तयोस्संस्कार पूर्वकम् २६३
होमः पुनरपीष्टस्स्यान्नान्यथा देव सन्निधिः
अशैवाग्नौ कृतो होमश्शैवो व्याधिप्रदो भवेत् २६४
शिवाग्निरेव शैवे स्यान्नान्योऽग्निः शिवमन्दिरे
वैदिकाग्नि क्रिया या तु नेष्यते शिवमन्दिरे २६५
पुण्याहाद्यं कथं चोक्तमिति चेच्छैव चोदितम्
इत्यत्र क्रियते नैव स्वमनीषा प्रवर्तितम् २६६
शिवालये प्रकर्तव्यमित्यादि श्रुतिचोदितम्

अस्ति चैद्वेदिकं कर्मेत्येतत्सिद्धान्तवर्त्मना २६७
कामिकादि प्रभेदेन स्थापिते पूजितेऽपिवा
नोच्यते वैदिकं वाथ पुराणस्मृतिचोदितम् २६८
किमु पाशुपतादीनां प्रवेशो नेतितद्द्विजाः
रक्षितेऽग्नौ तु निर्वाणे यजमान विनाशनम् २६९
तदाघोराणुना कुर्यात्सहस्रं जपतर्पणे
सशिवेऽपि हि निर्वाणेऽयुतं घोराणुनाहुतिम् २७०
तत्संख्याजप संयुक्तां निष्कृत्यर्थं समाचरेत्
होम द्रव्य विहीने स्यात् तद्द्रव्य द्विगुणागुतिः २७१
नित्योत्सवो विहीनश्चेत् सर्वदोषकरो नृणाम्
तदादेवं समभ्यर्च्याघोरेणैव शतं हुनेत् २७२
सन्धित्रयेऽपि हीने तु शान्ति होमं समाचरेत्
अहोरात्रे विहीने तु स्नपनं कारयेच्छिवे २७३
पञ्चाहात्तु तदेव स्यादघोरशतहोमयुक्
दशाहे स्नपनं शान्तिहोमसंयुक्तमाचरेत् २७४
तस्य पक्षकविच्छेदे शान्तिः स्यात् स्नपनेन तु
एकमासान्तरे हीने स्नपनं च शताहुतिः दिशाहुतिः २७५
शान्तिस्तदूर्ध्वं स्यात् किं तु त्रिदिनं ब्राह्मणोत्तमाः
पक्षान्तरे ततोप्यूर्ध्वं यदि निष्कृति ऋक्षकम् २७६
वर्धयेद्युग्म संख्यातं पक्षपक्षावसानकम्
नित्योत्सवश्च कर्तव्यो निष्कृतेरनुदेशिकैः २७७
निवर्त्यमाने बेरेण तस्मिन्नित्योत्सवे यदा
बेरं विहाय पुष्पाद्यैर्लिङ्गैर्निर्वर्तिते सति २७८
तदाघोरं जपेन्मन्त्री त्रिशतं द्विशतं तु वा
वृष्टिपातादिभिर्वापि राष्ट्रक्षोभादिहेतुभिः २७९
गर्भगेहे कृते नित्योत्सवेप्येवं जपोऽर्धभाक्

तत्काले दीपविच्छेदे राष्ट्रभन्धतमो भवेत्  २८०
तदाघोरशतं जप्त्वा दीपद्विगुणमाचरेत्
एवं स्याद्यदि वाद्ये वा नृत्ते वा दोषकारकम्  २८१
कृत्वा तु संहिताहोममघोर जपमेव वा
सहस्त्रं द्विगुणं पश्चान्नृत्तं वाद्यं समाचरेत्  २८२
तदा वितानवैकल्ये तृतीयं त्रिशतं जपेत्
एवं स्यात् बलिदानेऽपि वाद्यादीपविलोपने  २८३
पादुकाराधने हीने याने वा पादरोगता
कुर्याद्वा संहिताहोमं सहस्त्रं दक्षिणं जपेत्  २८४
अयोजितेऽस्त्रनाथेवा लिङ्गे पाशुपताह्वये
विघ्नबाधा जपेद्धोरं कुर्याद्वा संहिताहुतिम्  २८५
उत्सवे कृत एवं स्याद्वैपरीत्य प्रदक्षिणे
उक्त प्रटक्षिणेहीने संहिताहोम इष्यते  २८६
बेरादिपतने यानकाले संवत्सरोक्तवत्
तद्वत्कुर्यान्निष्कृतिं च अन्नलिङ्गादिपातने  २८७
बेरेतु पतिते कुर्यादन्नलिङ्गोक्त निष्कृतिम्
पादुके पतिते राष्ट्रकलहस्तन्निवर्तये  २८८
ध्वजाधिवासरीत्या तु कुम्भं संस्थाप्य मध्यमे
पादुकं च समभ्यर्च्य तत्पुरश्शान्तिहोमकम्  २८९
विधाय कुम्भन्यासं च कृत्वान्ते स्नानमाचरेत्
भेदादावनुकर्मोक्त्या निष्कृतिस्स्याद्विजोत्तमाः  २९०
सौख्यं चेन्न कृतं विद्यात्तदा तल्लोकदुःस्थितम्
पञ्चविंशतिभिः कुर्यात्स्नपनं कलशैस्तदा  २९१
नवभिः कलशैर्वाथ गव्यस्नपनमेव वा
सौख्यानि यानि हीनानि तत्सौख्यं द्विगुणं नयेत्  २९२
पञ्चाशत् स्नपनाख्यं स्यादनेकदिनलोपने

सौख्याङ्गे तु विहीने वा द्विगुणं तु तदा नयेत्  २९३
पञ्चाचार्याः स्वकर्माणि न कुर्वन्ति तदा यदि
तदा मर्त्याः स्ववृत्तिस्था न भवन्त्यत्र वासिनः  २९४
ईशास्याघोरवामाजाञ्जपेन्मन्त्राश्शतं शतम्
सर्वाभावे नयेच्छान्तिहोमं बहुदिनेऽपि च  २९५
सौख्यश्लोक विहीने स्यात् तत्सौख्यमकृतं भवेत्
अघोरेण शतं जप्त्वा पुनस्तद्द्विगुणं नयेत्  २९६
सौख्यकाले तु गणिकापतने राष्ट्रदुःस्थितिः
यावदेव तदा कुर्याच्छान्ति होमं तदुक्तवत्  २९७
स्नपनं वा त्वघोरेण सहस्रजपमेववा
सौख्यदीपस्य विच्छेदे घोरेणैक शतं जपेत्  २९८
गानाभावे च तद्राष्ट्रभीतिस्सौख्यं यथोदितम्
प्रायश्चित्तं तदा कार्यं तद्भीतिविनिबृत्तये  २९९
आतोद्य नृत्तवैकल्ये संहिताहोम इष्यते
सहस्रं वा जपेद्घोरं द्विगुणं दापयेत्ततः  ३००
नीराजने तदङ्गे वा हीनेऽग्निभयमादिशेत्
देवं संस्नाप्य गव्येन समभ्यर्च्यादराद्गुरुः  ३०१
द्विगुणं तु नयेत्पश्चाद्यानि हीनानि तानि च
शान्तिहोमस्तु वा कार्यो मूर्तिहोमोथवा मतः  ३०२
अदत्ता भस्मरक्षा चेदघोरेण शतं जपेत्
अदत्ते दर्पणच्छत्रचामारादौ तदा नयेत्  ३०३
अघोरजपसाहस्रमथ पञ्चशतं तु वा
कृतेऽप्युषितपुष्पाद्यैरर्चने राष्ट्र विभ्रमः  ३०४
स्नपनं देवदेवाय कृत्वा शान्तिं त्र्यहं नयेत्
गर्भगेहे सनिर्माल्ये देवानां नात्र सन्निधिः  ३०५
स्थलशुद्धिं तदा कृत्वा देवं संपूज्य यत्नतः

अघोराख्यं जपेन्मन्त्रं सहस्त्रं दोषशान्तये ३०६
निर्माल्य सङ्करोपेतैर्द्रव्यैरीशे प्रपूजेते
तद्राष्ट्रवासिनो मर्त्याः पीडयन्ते शत्रुभिस्तदा ३०७
क्षयकुष्ठादिरोगार्तैर्बधिरैः पापरोगिभिः
अपस्मारादिभिर्ग्रस्तैर्दुष्टलक्षण लक्षितैः ३०८
हीनाधिकाङ्गैर्वेज्यायां कृतायां विशिखैस्तु वा
राष्ट्रक्षोभाय सा पूजा भवेन्निष्कृतिरुच्यते ३०९
सकृत् कृतेऽर्चने घोरशतमेकं नेयेद्गुरुः
तदूर्ध्वं शतवृद्ध्या तु कालभेदाज्जपं नयेत् ३१०
पक्षोर्ध्वे संहिताहोमो मासोर्ध्वे शान्तिहोमकः
षाण्मासोपरि शान्तिस्स्यान्मूर्तिहोमस्समोपरि ३११
स्वदेशकालयोरेव यज्ञा इष्टफलप्रदाः
अन्यदेशेऽन्यकाले च त एवानिष्टहेतवः ३१२
सन्ध्याति क्रमणे घोर सहस्र जपमाचरेत्
सा च पञ्चविधा प्रोक्ता शास्त्रे बालादि भेदतः ३१३
बालातिबाला युवतिर्वृद्धाति श्रेयसी मता
अतिबालाति वृद्धाभ्यां तास्सार्ध घटिका मताः ३१४
मार्ताण्डस्योदयार्धात्तु मध्यमात् पूर्वगानिनी
अतिबाला च बाला च नास्ति ग्राह्यस्तिसृष्वपि ३१५
सन्ध्यास्तत्पृष्ठगामिन्यो युवत्याद्यस्समीरिताः
तास्वेव प्रारभेत्पूजां पूर्वाह्णादिषु सर्वदा ३१६
श्रेयस्यामुत्तमा तस्याः पार्श्वयोर्मध्यमे मते
अतिबालातिवृद्धा च गर्हितारम्भकर्मणि ३१७
आराब्धाचेत्तयोः पूजा पूर्वोक्तानिष्कृतिर्मता
सन्ध्यारम्भे तदन्यत्र संहिताहोममाचरेत् ३१८
आदिशैव कुलोद्भूत व्यतिरिक्तैश्शिवार्चने

कृते परार्थे दोषाय सकृत्सन्ध्यार्चने कृते ३१९
आचरेत्संहिताहोमं तद्वृद्ध्यादिनवर्धने
पक्षोर्ध्वं शान्तिरित्युक्ता मासोर्ध्वं शान्तिहोमकः ३२०
द्विमासे मूर्तिहोमः स्याच्चतुर्मासे दिशाहुतिः
षाण्मासोर्ध्वे विधातव्यं कर्मसंप्रोक्षणं द्विजाः ३२१
षाण्मासात्परतो यस्मादतो देवलकाह्वये
अधिकारोऽनुशैवेस्ति भृत्यर्थं न बवेद्यदि ३२२
मध्यदेशोद्भवश्चेद्यस्तस्य तत्राधिकारिता
चललिङ्ग प्रतिष्ठायां दीक्षायां सर्वदेशकाः ३२३
विन्ध्याद्रे र्दक्षिणे राज्ञामुत्तरे वैश्यजन्मनाम्
सान्तानिकस्य सर्वत्र न च शूद्रस्य कीर्तिता ३२४
अधिकारविहीनेनानुष्ठितं त्वकृतं भवेत्
कृते देवलकाह्वेन स्थापनादौ गुरूत्तमाः ३२५
पुनस्संस्थापनं कृत्वा विधिनार्चां समाचरेत्
अधिकारविहीनेनानुष्ठितं तद्वदाचरेत् ३२६
एवं नित्यविधौ प्रोक्तं प्रायश्चित्तं द्विजोत्तमाः
अष्टबन्धादि विश्लेषे निष्कृतिक्रम उच्यते ३२७
अष्टबन्धे तु विश्लिष्टे लिङ्गे वा प्रतिमादिके
रिपुणा संगृहीतो वा देवी वा केवलाद्विजाः ३२८
देवीं विहाय देवो वा केवलो रिपुणा हृतः
तत्रापि धाम्नि स्फुटिते महत्स्वल्पादि भेदतः ३२९
स्थूप्याद्यवयवच्छेदे स्थलाधो जलनिस्त्रवे
स्थलेऽधः पतिते वापि तदङ्गे वाखिलेऽपि वा ३३०
पिण्डिकापतने वाधः परिवारविलोपने
बलिपीठविहीने तु तज्जीर्णे स्फोटनेऽपिवा ३३१
तद्दाहपतनादौ च प्राकारे गोपुरे तथा

जीर्णेपि पतिते वापि स्फोटनादिसमन्विते ३३२
कपिकुक्कुटकाद्यैर्वा कपोतैस्सूकरैश्श्वभिः
उलूकगृध्रकाकैश्च ऋतुस्त्री चोर गर्दभैः ३३३
पतितैः प्रेतकैर्वापि पातकैस्सूतकैरथ
गूढजैः पापरोगार्त्तैर्व्रात्यैर्वा प्रतिलोमजैः ३३४
गुर्वादिद्रोह संयुक्तैर्दीक्षाहीनैर्द्विजातिभिः
चतुष्पादैरथान्यैश्च पक्षिभिर्वा सरीसृपैः ३३५
हीनजातिभिरन्यैर्वा नरैर्दीक्षान्तरस्थितैः
शिल्पिभिः पाणचण्डालरजकाद्यैरथापि वा ३३६
स्पृष्टे पीठेऽथ लिङ्गे वा बेरादौ गर्भगेहके
प्रविष्टे वाथ पूर्वे तु मण्डपे प्रतिमाह्वये ३३७
परिवारालये वान्तर्मण्डपे वा द्वितीयके
महानसे प्रविष्टे वा बलिपीठेषु वा द्विजाः ३३८
निर्वाणदीक्षया हीनैश्शूद्राद्यैस्समयस्थितैः
परार्थ स्थापिते लिङ्गे स्पृष्टे गर्भे प्रवेशिते ३३९
अन्तर्मण्डलसालादौ मालिकादौ च मण्टपे
उषिते वा चिरं मध्ये अशुचिक्षेपणेऽथवा ३४०
गर्भेऽर्धमण्डपे बेरमण्डपे बाह्यदेशके
विष्ठाख्यप्रस्रवोद्गारश्लेष्म मद्यादि सेचने ३४१
अशौचिभिः त्रिवर्णाद्यैरन्तर्मण्डलवेशने
प्रासादे गर्भगेहेऽर्धे प्रतिमा मण्टपादिके ३४२
साले वा मालिकायुक्ते केवले गोपुराङ्कणे
बेरे पीठे वृषादौ वा तद्धाम्नि बिलपीठके ३४३
परिवारालये कूपे पचनालय एव वा
आस्थानमण्डपेऽन्यास्मिन् नृपवेश्मनि वा गृहे ३४४
सभायां चूलिकायां वा वाल्मीके समुपस्थिते

शिथिलीसंभवे वाथ मधुपञ्जर संभवे ३४५
बृहत्पिपीलिकाक्षुद्रारक्तस्त्रीक्षुद्रजन्तवः
एतेषां वा समुत्पत्तौ द्वारे वा शयनालये ३४६
तैलाज्यहविषः स्थाने द्वारनालेऽनिलालये
अजगोमहीषादीनां स्थाने वा ग्राम मध्यमे ३४७
दार्वादि लिङ्गे बेरादौ वीथ्यां वा चैत्यदारुणि
मठे प्रपादिके वापि आरामादावथापि वा ३४८
लिङ्ग मूलेऽथवा तेषां वल्मीकादौ समुद्भवे
नित्ये नैमित्तिके काम्ये लुप्ते स्नपनकर्मणि ३४९
वैकल्ये वा तदङ्गस्य स्थण्डिले वा तदङ्गके
कुम्भादीनां विलोपे च कुम्भादौ मानवर्जिते ३५०
स्थापिते शिवकुम्भे वा करके कलशेऽपिवा
भेदादिसहिते दत्ते पृष्टे वा द्विजसत्तमाः ३५१
शङ्ख हैमादि पात्रैर्वा ब्रह्मवृक्षादलोद्भवैः
स्नपने कल्पिते बेरे सूत्रवेष्टनवर्जिते ३५२
स्वल्पेन तन्तुनावाथ वेष्टिते कलशादिके
विधानकूर्च लोपे वा उत्कूर्चक्रमलोपने ३५३
रत्नहेमाम्बरादीनां विलोपे च घटादिषु
गव्यादि द्रव्य लोपे वा पुण्याहे वा विवर्जिते ३५४
कुम्भादावर्चनापेते मन्त्रन्यासाप्रकल्पने
आषाढादिषु मासेषु कृत्तिकान्तेषु पञ्चसु ३५५
पवित्रारोहणे हीने दमनारोहणेऽपिवा
कृत्तिकादीपविच्छेदे राष्ट्रक्षोभादिहेतुभिः ३५६
बेरादौ भुवि तोये वा गुहायां वा सुरक्षिते
पुष्पशून्यशिरोलिङ्गे वृष्टिपातादिसेचिते ३५७
भग्नधामस्थिते वापि मृगपक्षिसरीसृपैः

पशुभिर्बाधिते लिङ्गे देवतान्तरबाधिते ३५८
एवमादिषु कृत्येषु प्रायश्चित्तं विधीयते
अष्टबन्धेतु विश्लिष्टे राष्ट्रे शैथिल्यमादिशेत् ३५९
अष्टबन्धं त्रिबन्धं वा कृत्वान्ते स्नपनं नयेत्
पुरातनं परित्यज्य शास्त्रेणास्त्रं समुच्चरन् ३६०
अघोरेण शतं होमं समिदाज्यतिलोदनैः
रिपुणा संगृहीतं चेल्लिङ्गं वा प्रतिमादिकम् ३६१
तद्राष्ट्रनाशो नृपतिश्शत्रुभिः परिपीड्यते
सर्वयत्नात् तदाहृत्य तत्रैव स्थापनाय च ३६२
लब्धं चेल्लिङ्ग बेराद्यं गुप्तदेशेविधाय च
लिङ्गोत्पाटजदोषस्य शान्त्यर्थं घोरमन्त्रतः ३६३
सहस्रं होमयेजाद्यतिलाभ्यां चरुणा शतम्
मधुरत्रय संयुक्तं सहस्रं दूर्वयाहुतिम् ३६४
कृत्वान्ते स्थापनोक्त्यातु स्थापयेत्पूर्वभूतले
लक्षणोद्धारणं दृष्टि मोचनं जलवेशनं ३६५
विहायान्यत् प्रकर्तव्यं स्थापयेत् तत्वदर्शिभिः
अलब्धं लिङ्गबेराद्यं यदान्यत् स्थापयेन्नवम् ३६६
मादादर्वाक् तदूर्ध्वं चेद्यावन्मासत्रयावधि
प्रत्यहं शान्तिहोमश्च कर्तव्यः स्थापनान्तकम् ३६७
तदूर्ध्वं स्थापनं बाललिङ्गादेश्चात्र नोदितम्
तस्मात् सर्वप्रयत्नेन मासत्रितयमध्यमे ३६८
संस्थाप्य बाललिङ्गाद्यं बालस्थापन वर्त्मना
कैर्गृहीतं क्व चोराद्याः क्व लिङ्गं कीदृशं तु तत् ३६९
प्रतिमा मुखलिङ्गं वा बाणलिङ्गादिकं तु वा
प्रत्यहं चैवमन्वेष्य स्थितमन्यत्रचेद्ध्रुवम् ३७०
तदायुद्धेन जित्वा वा वित्तं दत्वाथवादरात्

आहृत्य लिङ्गबेराद्यं स्वस्थाने स्थापयेभृशम्  ३७१
संवत्सरत्रयादर्वाक् संलब्धं बहुयत्नतः
संवत्सरत्रयादूर्ध्वमलब्धं चेन्मुनीश्वराः  ३७२
मूलस्थाने यथापूर्वं तद्द्रव्यैस्तत्प्रमाणतः
संस्थाप्य मूललिङ्गाद्यमर्चयेदर्चनोक्तवत्  ३७३
अज्ञातं पूर्वमानं चेदाकृतिर्वगुरूत्तमैः
तत्प्रासादानुरूपेण यजमानानुरूपतः  ३७४
लिङ्गमापाद्य विधिना स्थापयेदुक्तवर्त्मना
बाणलिङ्गं तु वा तत्र स्थापयेत् सर्वसिद्धये  ३७५
बेराद्यं पीठिकावापि न्यायेनानेन कारयेत्
देवीं विहाय देवो वा देवी वा केवला यदा  ३७६
शत्रुभिस्संगृहीता चेत् स्थितस्यैवानुरूपतः
संपाद्य चेतरं तस्य प्रतिष्ठां च समाप्य च  ३७७
कल्याणं कारयेदन्ते विधिना देशिकोत्तमः
स्थापनान्ते तु बेरमाद्यमानीतं चेत्तदन्तिके  ३७८
देशे संस्थाप्य विधिना पूजयेन्नित्यमादरात्
पीठं चेत् सन्त्यजेल्लिङ्गं नाथवान्येन योजयेत्  ३७९
प्रासादस्स्फुटितः पूर्वे यदि राज्ञो भयं भवेत्
आग्नेय्यामग्निदाहः स्याद्दक्षिणे कलहो भवेत्  ३८०
नैरृत्यं धननाशस्स्याद्वारुण्यां भृत्यनाशनम्
वायव्यां शत्रुवृद्धिस्स्यादुत्तरे पुत्रनाशनम्  ३८१
ऐशान्यां दुःखभाग्राजाक्रमेणैवं फलं मतम्
उत्तमादि विभेदेन कृत्वा शान्तिं पुरोदिताम्  ३८२
शान्तिहोमयुतामन्ते सन्धानं धाम्न आचरेत्
प्रासादमनुकर्मोक्त्या कारयेद्वा यथाविधि  ३८३
स्वल्पभेदादियुक्तश्चेच्छान्तिहोमं समाचरेत्

प्रासादार्धे त्रिपादे वा पादेऽष्टांशेऽथ भग्नके ३८४
कुर्याद्धाम्नोऽथ सन्धानं षट्पञ्चयुगवह्निजम्
प्रायश्चित्तं प्रकर्तव्यं पूर्वोक्तं भावितात्मभिः ३८५
स्थूप्याद्यवयवच्छिन्नेऽप्येतदेकाहमाचरेत्
स्थलाधो जलनिःस्रावे जलेऽधः पतितेऽपिवा ३८६
तदङ्गे वा निभग्ने तु भूमौ दोषः प्रजायते
शान्तिहोमं तदाकुर्यात् सलिले पतिते त्र्यहम् ३८७
कुम्भस्थं वा देवेशं कृत्वा कुर्यात् स्थलक्रियाम्
प्रोक्षयेद्वास्त्रतोयेन स्नानार्थं प्रतिसन्ध्यकम् ३८८
पुरायाहप्रोक्षणोपेतं शिल्पिभिः कारितेस्थले
ततस्संप्रोक्षणं कुर्यात् स्थलकर्मावसानके ३८९
पिरिडका पतिताऽधश्चेत् स्वस्थानान्मुनिपुङ्गवाः
पीडारिभिर्भवेत् कुम्भवर्धन्योश्च शिवं शिवाम् ३९०
सविघ्नेशं समावाह्य पिराडीं स्थानगतां नयेत्
नयेत्तुत्रिदिनं शान्तिं मन्त्रन्यासपुरस्सरम् ३९१
ततस्संप्रोक्षमं कुर्याच्छिल्प्यादिस्पर्शनं यदि
परिवार विहीनेतु भृत्यवर्गस्यनाशनम् ३९२
परिवारं समापाद्य प्रतिष्ठां कारयेत्ततः
बलिपीठे विहीने तु सर्वदोषावहं भवेत् ३९३
संकल्प्य पूर्ववत्पीठं ततस्तत्स्थापनं नयेत्
तज्जीर्णे स्फुटिते दाहे पतनादौ सति द्विजाः ३९४
शान्तिहोमं तदा कृत्वा संप्रोक्षणमथाचरेत्
प्राकारे गोपुरे जीर्णे पतिते स्फोटनादिके ३९५
राज्ञो भयकरं प्रोक्तं शान्तिहोमं तदा नयेत्
ततस्संप्रोक्षणं कुर्यात् सन्धानं स्फोटनादिषु ३९६
कृत्वा गव्येन संप्रोक्ष्य शान्तिमेकाहमाचरेत्

कपि कुक्कुटकाद्यैर्वा कपोतैस्सूकरैःश्वभिः ३९७
उलूकगृध्रकाकैश्च ऋतुस्त्रीचोर गर्दभैः
पतितैः प्रेतकैर्वापि पातकैस्सूतकैरथ ३९८
गूढजैः पापरोगार्त्तैर्व्रात्यैर्वा प्रति लोमजैः
गुर्वादिद्रोह संयुक्तैर्दीक्षाहीनैर्द्विजादिभिः ३९९
चतुष्पादैरथान्यैश्च पक्षिभिर्वा सरीसृपैः
हीनजातिभिरन्यैर्वा नरैर्दीक्षान्तरस्थितैः ४००
शिल्पिभिः पाणचण्डालरजकाद्यैरथापिवा
स्पृष्टे पीठेऽथ लिङ्गे वा बेरादौ तत्रवासिनः ४०१
राष्ट्रे शत्रु जनैर्मर्त्याः पीडयन्ते सर्व एव ते
मृत्भाण्डांस्तु त्यजेदेतैः स्पृष्टानासन्नकानपि ४०२
गोमयालेपने कृत्वा पुण्याहं च गुरूत्तमः
गव्येन स्नपनं कृत्वा संप्रोक्षनमथाचरेत् ४०३
ऋतुस्त्रीपातकाशौचकारकैः स्पर्शितेसति
शान्तिहोमादिकं कार्यं प्रागुक्तं रजकैरपि ४०४
चण्डालपाणकाद्यैश्चेच्छान्तिकर्मादिकं नयेत्
गर्भगेहे प्रविष्टे तु स्नपनं शान्तिहोमयुक् ४०५
संप्रोक्षणं विनाकुर्यात् कपिकुक्कुटकादिभिः
ऋतुस्त्रीपातकाद्यैश्चेत् प्रविष्टं गर्भगेहकम् ४०६
तदा संप्रोक्षणं कुर्यात् केवलं प्राक् प्रचोदितम्
चण्डालरजकाद्यैश्चेच्छान्ति होमसमायुतम् ४०७
संप्रोक्षणं विधातव्यं क्रमादेवं त्रिधा मतम्
शान्तिकर्मदिशाहोमं क्रमात्संप्रोक्षणं नयेत् ४०८
त्रिप्रकारैः क्रमादर्धमण्डपस्य प्रवेशने
प्रथमे च द्वितीये च चण्डालविहितं तु यत् ४०९
प्रायश्चित्तमृतुस्त्रीणां स्पर्शनादौ विधीयताम्

प्रतिमा मराडपावेशे त्रिप्रकारैः क्रमेण वै ४१०
शान्तिहोमं च मूर्त्याख्यं दिशाहोमं क्रमान्नयेत्
दीक्षाहीनान् द्विजातींश्च हित्वा दीक्षान्तरानपि ४११
परिवारालयावेशेऽप्येतदेव समीरितम्
कपोतकाकसर्पादि प्रवेशो नात्र दोषभाक् ४१२
चराडालरजकाद्यैश्चेदन्तर्मराडल वेशनम्
कृतं चेन्मूर्तिहोमस्स्याच्छान्तिहोमो द्वितीयके ४१३
गोमयालोपनाद्यं च समानं सर्वकर्मसु
परिवारालयोक्तं प्रायश्चित्तं महानसे ४१४
महानससमा ज्ञेया बलिपीठेषु निष्कृतिः
निर्वाण दीक्षया हीनाश्शूद्राद्यास्समयस्थिताः ४१५
परार्थं स्थापितं लिङ्गं सुस्थिरं संस्पृशन्ति चेत्
कर्तव्यं स्नपनं शान्तिहोमो गर्भ प्रवेशने ४१६
अर्धमराडपवेशादौ तस्य दोषो न विद्यते
अन्तर्मराडलसालादौ मालिकादौ च मराडपे ४१७
चिरं चेदुषितं मर्त्यैरशुचिक्षेपणं तु वा
कृतं संशोध्य भूमिं तु क्षालयेद्गोमयादिभिः ४१८
उपधातानुरूपेण पुरायाहं शान्तिमाचरेत्
गर्भेऽर्धमराडपे बेरमराडपे बाह्यतः क्रमात् ४१९
विष्ठाख्य प्रस्रवोद्गार श्लेष्म मध्यादि सेचने
संप्रोक्षणं दिशाहोमं मूर्त्याख्यं शान्तिहोमकम् ४२०
कुर्याद्गोमयशुद्ध्यादि पूर्ववत् कथितं द्विजाः
आशौचिनां त्रिवर्णानामन्तर्मराडलवेशनम् ४२१
दीक्षितानां न दोषाय भवेदेवं मुनीश्वराः
ततोन्येषां प्रवेशे तु पञ्चगव्येन सेचयेत् ४२२
तत् बहिर्वेशनं तेषां नदोषाय प्रकल्पते

मच्चिन्ह धारिणो वाथ शूद्रा वा येऽनुलोमिनः ४२३
दीक्षिता वा त्रिवर्णैश्च सदृशास्स्युरदीक्षितैः
दीक्षिता मन्त्रहीना वा रुद्रकन्यासमा मताः ४२४
पञ्चाचार्याश्च विप्राद्यैर्दीक्षिताश्चेद्दीक्षितैः
प्रासादे गर्भगेहेर्धे प्रतिमा मण्डपादिके ४२५
साले वा मालिकायुक्ते केवले गोपुरेऽङ्कणे
बेरे पीठे वृषादौ वा तद्धाम्नि बलिपीठके ४२६
परिवारालये कूपे पचनालय एव वा
आस्थानमण्डपेऽन्यस्मिन् नृपवेश्मनि वा गृहे ४२७
सभायां चूलिकायां वा वाल्मीके समुपस्थिते
शिथिली सम्भवे वाथ मधुपञ्जर सम्भवे ४२८
बृहत् पिपीलिका क्षुद्रारक्तस्त्रीक्षुद्रजन्तवः
समुत्थिताश्चेद्भूम्यादौ सर्वदोषावहो नृणाम् ४२९
पूर्वादितः क्रमेणैषां फलं च शृणुत द्विजाः
रोगो भयं वह्निदाहो बन्धुनाशो धनागमः ४३०
पुत्रनाशस्सुहृत्प्राप्तिर्धान्यमर्थविनाशनम्
मध्यादीशानपर्यन्तं वल्मीकस्य च दर्शने ४३१
शिथिली सम्भवे मध्ये उत्पद्यन्ते सुखं भवेत्
तदूर्ध्वं प्राणिनाशस्स्यादिन्द्रभागे भयं भवेत् ४३२
सुहृदागमनं वह्नौ भवेदादौ द्विजोत्तमाः
राजक्षोभस्तदूर्ध्वं स्यादर्थलाभो यमे भवेत् ४३३
तदूर्ध्वं चैव भार्याया मरणं स्वामिनो भवेत्
वृद्धिर्निरृतिकाष्ठायामनर्थं स्यात्तदूर्ध्वतः ४३४
वारुण्यां धनलाभस्यादादौ चोरभयं पुनः
वायु दिक्स्था तु कन्यायाः सोमे स्याच्छत्रुभिर्भयम् ४३५
तदूर्ध्वं धान्यलाभस्स्यादीशाने स्यान्महाभयम्

गृहनाशो भवेद्द्वारे शयनस्थानके मृतिः ४३६
तैलाज्यहविषः स्थाने चतुष्पान्नाशनं भवेत्
द्वारनाले भवेद्भार्यामरणं भृत्यहारिणी ४३७
तिलस्थानगता गोऽजमहिषाद्यालयाश्रिताः
दृष्टिरोगो भवेद्ग्राममध्यो देवालयादिके ४३८
तदङ्गभूत राष्ट्रस्य भयं लिङ्गे नृपस्य तु
सभायां चैत्यवृक्षे वा महावीथ्यां मठेऽपि वा ४३९
प्रपारामादिके कूपे वाथ राष्ट्रस्य दुःस्थितिः
लिङ्गमूले तु जाताश्चेन्नृपतेर्भयमादिशेत् ४४०
मधुनीडसमुत्पत्तावेवमेव फलं भवेत्
वल्मीकदर्शनेऽप्येवं द्वारादावीरितं फलम् ४४१
खातयोग्यं खनित्वादावापूर्य लवणादिभिः
शुद्धमृत्खण्ड सहितैर्न यथा पुनरुद्भवः ४४२
पुण्याहप्रोक्षणं कृत्वा प्रोक्षयेत् पञ्चगव्यतः
संस्थाप्य कलशैर्देवं मूर्तिहोमं समाचरेत् ४४३
बाललिङ्गादिके लिङ्गे बेरे पीठेऽथ धाम्नि वा
गर्भगेहेऽथवा द्वारि सप्ताहं चैवमाचरेत् ४४४
जातेर्धमण्डपे बेरमण्डपे त्रिदिनं नयेत्
कुर्यादन्यत्र मूर्त्याख्यं शान्तिहोममथैकहम् ४४५
राजधाम्नि दिशाहोमं द्विसप्ताहं समाचरेत्
मधुनीडं तु चेत्तत्स्थं मधुनीडं विसर्जयेत् ४४६
संशोध्य गोमयाम्भोभिस्संप्रोक्ष्यास्त्रजवारिणा
देवेश स्नपनं कृत्वा दिशाहोमं तदा नयेत् ४४७
वल्मीकस्य पुरा प्रोक्तदिनसंख्यावशेन तु
नित्ये नैमित्तिके काम्ये लुप्ते स्नपनकर्मणि ४४८
महाव्याधिर्भवेत् कर्तुश्शान्तिहोमं तदा नयेत्

पुनश्च स्नपनं कुर्यादिष्टकाले पुरोक्तवत् ४४९
वैकल्ये वा तदङ्गस्य राष्ट्रं पापरतं भवेत्
अघोरं त्रिशतं जप्त्वा संपूर्णस्नपनं नयेत् ४५०
विहीने स्थण्डिलाङ्गे वा दुःस्थितिर्भुविजायते
हुत्वाऽघोरं सहस्रं तु यथोक्तं स्थण्डिलं नयेत् ४५१
कुम्भादयो विहीनाश्चेत् प्रमाणविहिताश्च वा
जायते कलहो राष्ट्रे जप्त्वाघोरं सहस्रकम् ४५२
पुनश्च स्नपनं कुर्यात् कुम्भास्त्रकरकेतरैः
इति तन्मात्रकैरेवं द्विगुणद्रव्य संयुतैः ४५३
यदा मनोज्झिताः कुम्भाः पूर्वाघोरशतत्रयम्
द्विशतं च शतं कुम्भे वर्धन्यां कलशेषु च ४५४
क्रमाज्जपेत् गुरुर्मन्त्री तेषां मान प्रसिद्धयृस
स्थापितश्शिवकुम्भो वा वर्धनी कलशोऽथवा ४५५
भेदादि सहितोऽदत्तपृष्ठो वा यदि जायते
तदा राज्ञो महिष्याश्च कर्मिणां दोषदो भवेत् ४५६
तदा पञ्चशतं मन्त्री द्विशतं च शतं क्रमात्
जपेदघोर मन्त्रेण सदैव द्विगुणं जपेत् ४५७
कुम्भाद्यमन्यमादाय तत्तत्द्रव्ययुतं न्यसेत्
शरावशङ्खहैमादिपात्रे वा ब्रह्मवृक्षजे ४५८
संस्थाप्य स्नापयेद्देवं शतघोरजपान्वितम्
सूत्रैरवेष्टिताः कुम्भपूर्वाश्चेच्छत्रुवर्धनम् ४५९
अघोरेणजपः पश्चात् कर्तव्यश्शतसंख्यया
तथैव वेष्टितास्स्वल्पतन्तुना निष्कृतिर्मता ४६०
पिधानलोपे घोरेण शतसंख्यं जपेद्गुरुः
कूर्चे विहीने देवानां सन्निधिर्नात्र विद्यते ४६१
उत्कूर्चादि विपर्यासे तद्वदेव फलं मतम्

तदा हृदा जपेन्मन्त्री द्विशतं त्रिशतं तु वा ४६२
रत्नहेमाद्यभावे तु निर्धनः स्थपतिर्भवेत्
तथैव वस्त्रलोपे च सहस्त्रं तु जपेधृदा ४६३
पुनश्च स्नपनं कुर्यादुक्तरत्नाभिर्यथा
गव्यादि द्रव्य लोपे तु राष्ट्रेकलहमादिशेत् ४६४
तदाघोरशतं जप्त्वा तद्द्रव्यं योजयेच्छिवे
पुरयाह प्रोज्ञरणेहीन जपेद्धोरशतं पुनः ४६५
कुम्भादावकृतेज्या चेदकृतं स्नपनं भवेत्
शान्तिहोमं तदा कुर्यान्मन्त्रन्यासेऽकृते यदि ४६६
जपेद्धोरशतं मन्त्री देवसन्निधिहेतवे
आषाढादिषु मासेषु कृत्तिकान्तेषु पञ्चसु ४६७
पवित्रारोहणे हीने वर्तन्ते तत्य याः क्रियाः
तास्सर्वा निष्फला एव प्रासादे वा गृहादिके ४६८
देवं संपूज्य विधिवत् दिशाहोमं तु कारयेत्
इष्टमासे ततः कुर्यात् पवित्रारोहणं परम् ४६९
दमनारोहणेऽप्येवं कीर्तितो विधिरग्रजाः
दीपावलिर्विहीना चेत् पीडयन्ते शत्रुभिर्नराः ४७०
मूर्तिहोमं तदा कृत्वा नयेत्तां लब्धमासके
राष्ट्रक्षोभेऽरिचोराद्यैः परस्परविरोधतः ४७१
बेरादि बाध शङ्कायां गुहायां वा जलेऽपि वा
भूमौ वा रक्षयेत्तस्मिन् क्रियामेनां विधाय च ४७२
संपूज्य बेरं गन्धाद्यैस्तदग्रे स्थरिडले कृते
कुम्भं च वर्धनीयुक्तं कलशैरावृतं न वा ४७३
सूत्रादि सहितं न्यस्त्वावाह्य सोमं महेश्वरम्
विद्येश्वरसमोपेतं स्वस्वमन्त्रैस्समर्चयेत् ४७४
तत्पूर्वे स्थरिडलं कृत्वा शिवाग्निं शिवमन्त्रतः

शतमर्धं मनोन्मन्या ब्रह्मभिस्त्वङ्गसंयुतैः ४७५
विद्येश्वर समायुक्तं प्रत्येकं शतहोमयुक्
समिदाज्यान्नसंयुक्तमन्ते पूर्णाहुतिं नयेत् ४७६
कुम्भे च करके पीठे मृदादिपरिकल्पिते
इष्टकारचिते पीठे लिङ्गे वा विन्यसेन्मनुम् ४७७
तत्कुम्भस्थजलेनैव पीठाद्यं स्नापयेद्गुरुः
पीठस्याद्यः स्थले देवी पिण्डिकायां तु वा न्यसेत् ४७८
तदर्थं प्रत्यहं पूजां लिङ्गे पीठेऽथवा नयेत्
एतद्विधानं बेराणां भवेत्सन्निधिकारणम् ४७९
पुष्पशून्यशिरोलिङ्गं यस्य राष्ट्रे व्यवस्थितम्
क्षयं तस्यावहेन्नित्यं वृष्टिवातातपादिभिः ४८०
सेवितं भग्नधामस्थं मृगपक्षि सरीसृपैः
पशुभिर्बाधितं लिङ्गं देवतान्तरबाधितम् ४८१
कर्तारं बाधते नित्यं शक्तानपि च बाधते
तस्मात्प्रोक्षण कर्माद्यमचिरात्कारयेन्नृपः ४८२
ततः प्रभृति पूजां च कारयेत्स्वस्य वृद्धये
उत्तमां मध्यमां हीनां कनिष्ठामथवा द्विजाः ४८३
एककालं द्विकालं वा त्रिकालं जपसंयुतम्
गन्धोपेतं विशिष्टं स्यात् सधूपं तत्परं मतम् ४८४
सदीपं चेत् ततश्शिष्टं सनैवेद्यं ततस्तथा
सताम्बूलं ततःश्रेष्ठं सबलिश्शस्यते मतः ४८५
साग्निकार्यं ततःपूज्यं सोत्सवेज्या ततो वरा
स सौख्य तत उत्कृष्टा ज्ञात्वैवं प्रत्यहं नयेत् ४८६
जलं पुष्पं च पत्रं वा प्रत्यहं परिकल्पयेत्
वृष्ट्यादि बाधिते लिङ्गे तस्यप्रासादमाचरेत् ४८७
भग्ने धाम्नि नवीकुर्यान्मृगाद्यैर्बाधितेऽपि च

कवाटार्गलयोगाद्यैस्तस्य रक्षां समाचरेत्  ४८८
पूर्वस्थितस्य लिङ्गादेर्बाधके स्थापितं यदि
ब्रह्मादि बेरं तत्तस्मादन्यत्र स्थापयेत्सुधीः  ४८९
शिवक्षेत्रे शिवारामे शिवाग्रामे द्विजोत्तमाः
विष्णुर्विरिञ्चिश्शक्रश्च बुद्धस्त्वार्हत एव वा  ४९०
अन्येदेवादयो ये च स्वप्रधाना द्विजोत्तमाः
नस्थाप्याः स्थापितांश्चापि दूरदेशे निवेशयेत्  ४९१
तेन राज्ञो भवेच्छान्ति राष्ट्रस्यापि जनस्य च
व्यतिरिक्तं शिवक्षेत्रात् स्थापयेद्वैष्णवादिकम्  ४९२
ततस्थानं देवदेवस्य शिवस्यामिततेजसः
योग्यमेवेति निर्दिष्टं शिवस्सर्वाधिपो यतः  ४९३
वैष्णवं वाथ वैरिञ्च बौद्ध मार्हतकं तथा
सौरं वा शाक्रमेवं वा वह्नेः स्थानं यमस्य वा  ४९४
निरृतेर्वरुणस्यापि वायोर्वैक्षवणस्य वा
पार्वत्या वाथ दुर्गायाः क्षेत्रपस्येन्दुमूर्तिनः  ४९५
ज्येष्ठायाश्च श्रियश्चैव भूम्या वा च स्मरस्य च
गणपस्कन्दनन्दीश वसूनां नागपस्य च  ४९६
मुनीनां च मनुष्याणामसुराणां द्विजोत्तमाः
कल्पितं स्थानमीशस्य योग्यमेव न संशयः  ४९७
सर्वस्मादधिकं येन प्रवदन्ति पिनाकिनम्
साधारणं स्मरन्त्येनं ते यान्ति नरकार्णवम्  ४९८
ब्रह्माच भगवान् विष्णू रुद्रश्चेति समा इति
ते तु दुर्मतयः प्रोक्तास्सुचिरं संचरन्त्यलम्  ४९९
रौरवादिषु नैतेषां मोक्षस्सर्वात्मना मतः
मदैक शरणा ये तु तैः पूज्योहं न चापरैः  ५००
अशीतेरूर्ध्ववर्षो वा बालो वाप्यूनषोडशः

प्रायश्चित्तार्धमर्हन्ति स्त्रियो वा व्याधि पीडिताः ५०१
तत्रापि च परिक्लेशं ज्ञात्वार्धार्धं प्रयोजयेत्
सुदुष्करं स्वयं कर्तुमक्षमो द्विगुणोन्यतः ५०२
देशं कालं वयश्शक्तिं जातिं भक्तिं क्रियाक्रमम्
सुविचार्य प्रदातव्यं नोपवासो रुजान्विते ५०३
प्रायश्चित्ता समर्थस्य पितृभ्रात्रादि बान्धवै
तद्विभज्य विधातव्यं द्विगुणं च परैर्जनैः ५०४
बालाबलानां बद्धानामातुराणां च पादतः
प्रायश्चित्तं प्रदातव्यं यदि भक्तास्सदाशिवे ५०५
ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च
प्रायश्चित्तं चेरद्भ्राता पिता वान्यत् सुहृज्जनः ५०६
अतो बालनरस्यास्य नापराधो न पातकम्
राजदण्डो न चैवास्ति प्रायश्चित्तं न विद्यते ५०७
देश आदिश्यते येन दिशिकस्त्विति कथ्यते
देशाश्च बहवश्शास्त्रे मुक्तिस्थानं परं मतम् ५०८
भोगस्थानं च देहस्यात्तथा स्थानान्तराणि च
हृत्कण्ठतालु भूमध्य ब्रह्मरन्ध्रं क्रमाद्भवेत् ५०९
नाभिर्मेढ्रस्य मूलस्य स्थानं देशोऽत्र कथ्यते
सकृत्सन्ध्या विलोपे तु सद्योजातं शतं जपेत् ५१०
प्रतिसन्ध्यं शतं ध्यातुः सन्ध्यालोपे त्वकामतः
कामतस्तूपवासश्च लुप्ते देवार्चने यदा ५११
एककालार्चके वापि द्विकालाद्यर्चकेपि वा
एकाह्नेऽघोर साहस्रजपस्तु ज्ञानतो भवेत् ५१२
उपवासोऽपि विज्ञेयः कामतस्त्वननुष्ठिते
बहुकालार्चकस्यापि द्विकालादि विलोपने ५१३
लुप्तसंख्यावशेनैव प्रायश्चित्तं समाचरेत्

द्विदिनादि विलोपे तु बहुरूपसहस्रतः ५१४
प्रत्यहं त्रिशतार्धं स्यात् पक्षपूजाविलोपने
अयुताघोर जापस्यात्तद्वृद्ध्या प्रतिमासकम् ५१५
संवत्सरात्तदूर्ध्वे तु दीक्षयाश्शुद्धिरिष्यते
स्वेष्टलिङ्गे परिभ्रष्टे नेष्टदग्धे हृतेऽपि वा ५१६
नरवानरकाकाद्यैः स्पृष्टेऽघोर जपात्ततः
लिङ्गान्तरं प्रतिष्ठाप्य भवेच्छुद्धो न संशयः ५१७
हस्तादेः पतिते लिङ्गे त्वङ्गुलात्तु द्विवृद्धितः
सहस्राघोर वृद्धिस्यात् सहस्रात् प्रभृति क्रमात् ५१८
साधारे पतिते लिङ्गे ताले तालेऽयुतं जपेत्
द्विगुणं तु निराधारे कल्पनीयं गुरूत्तमैः ५१९
एकहस्तात् द्विहस्तान्तं पतने त्वेवमीरितम्
जप्त्वा दश सहस्रादि पञ्चगव्यामृतादिना ५२०
संस्नाप्य पूजयेद्देवं विशेषेणार्चयेद्बुधः
अव्यङ्गत्वे तदुद्दिष्टं लिङ्गादौ द्विजसत्तमाः ५२१
द्विहस्तादूर्ध्वतः पाते त्वव्यङ्गे लक्षजापतः
संस्कारेण विशुद्धिःस्यात् प्रतिष्ठा वात्र संमता ५२२
अकामतो यदालिङ्गं विशीर्णं पिण्डिकाथवा
प्रागुक्तद्विगुणं कुर्यात् कामतो निष्कृतिर्नहि ५२३
ब्राह्मणाद्यैस्तु संस्पृष्टे शिवसंस्कारवर्जितैः
क्रमाज्जपेदघोरस्य शतवृद्ध्या नरोत्तमः ५२४
लिङ्गे पादेन संस्पृष्टे लिङ्घिते वायुतद्वयम्
पादलग्नरजःस्पृष्टे बहुरूपायुतं जपेत् ५२५
श्लेष्माद्युपगते लिङ्गे तत्तद्युक्तोदकादिभिः
त्र्ययुतं द्वययुतं कुर्यात् बहुरूपं नरोत्तमः ५२६
मूत्रोदकेन संस्पृष्टे जपेत् सार्धायुतद्वयम्

रक्तमूत्ररजश्शुक्लदूषितेऽयुतपञ्चकम् ५२७
तत्संयुक्तोदकस्पर्शात् पादहीनं जपेदिदम्
विष्ठास्पर्शेतु लक्षं स्यात् पादहीनं तदम्भसा ५२८
तद्वन्निर्माल्यगर्ते तु पतनाच्छुद्धिमादिशेत्
विष्ठादिगर्तपाते तु लक्षमर्धाधिकं जपेत् ५२९
स्पृष्टेऽनुलोमजैर्लिङ्गे कुर्यान्मात्रं कुलोचितम्
प्रतिलोमादिभिः स्पृष्टे लक्षमावर्त्य शुद्ध्यति ५३०
वामदक्षादि मार्गस्थिश्रः स्पृष्टे लिङ्गेऽयुतं जपेत्
चण्डालपाणकाद्यैश्च स्पृष्टे शुद्धिः प्रतिष्ठया ५३१
लक्षेणस्थिरमुनमूल्य स्थापयेच्च तदेव हि
नित्यहोमे विलोपे च प्रायश्चित्तं तु नित्यवत् ५३२
अष्टम्यां वा चतुर्दश्यां पर्वण्ययनयोऽरपि
विषुग्रहणयोर्नित्यलोपे कुर्याच्चतुर्गुणम् ५३३
अन्यपुण्यदिनेष्वेवं तच्चतुर्गुणमाचरेत्
प्रागुकनिष्कृतिं वह्नि निर्माणि तां समाचरेत् ५३४
अदत्ते च बलौ कुर्याच्छिवस्याष्टाधिकं शतम्
व्रतस्यान्य क्रियायाश्च नियमस्य च लोपने ५३५
गायत्र्यष्टशतेनैव विशुद्धिमधिगच्छति
अविधाय पवित्रं तदाषाढादिषु पञ्चसु ५३६
लक्षत्रयमघोरस्य जप्त्वा चान्द्रायणं चरेत्
पवित्रारोहणत्यागे प्रायश्चित्तमिदं मतम् ५३७
अन्यमासे कृते तस्मिञ्जपमत्रं विधीयते
जपोऽपि लक्षमात्रं चान्द्रायणं मतम् ५३८
शतद्वय जपाच्छुद्धिरर्घ्यपात्रे विसर्जिते
सहस्रेण विनाशे तु तदर्धात् परिवर्तिते ५३९
स्फोटे वा त्वक्षसूत्रस्य शुद्धिर्लिङ्गोक्तपादतः

नवसूत्रस्य विच्छेदे सहस्रं जपमाचरेत्  ५४०
शतं स्याज्जीर्णसूत्रस्य हस्तपातात्तथा मतम्
अक्षमालां कराद्भ्रष्टां क्षालयेद्गन्धवारिणा  ५४१
गायत्र्याः शतजापोऽपि सैव प्रागुक्त कर्मणि
घण्टादोषे तु लिङ्गोक्तादष्टमांशाच्छुचिर्भवेत्  ५४२
पूजोपकरणं पद्भ्यां स्पृष्टं पीठदिकं यदा
शतद्वयमघोरस्य कामतस्त्वयुतं जपेत्  ५४३
प्रण्यङ्गधूपदाने च पञ्चमस्य शतं जपेत्
केशामांशास्थिकीटादिदुष्टनैवेद्यदर्शने  ५४४
अघोरस्यायुतं कामादकामात्तु शतं जपेत्
नित्य नैवेद्यमानस्य ह्रासे नैमित्तिकस्य वा  ५४५
अयुतं घोरमन्त्रस्य जप्त्वा शुद्धिमवाप्नुयात्
पादेनाकामतः स्पृष्ट्वा गुरुं देवं शिवागमम्  ५४६
द्वयुतं घोरमन्त्रस्य कामतष्षड्गुणं जपेत्
महेशगुरु चण्डाज्ञाभङ्गे लक्षेण शुद्ध्यति  ५४७
एतदर्थार्जितद्रव्यभक्षणात् पादवर्जितम्
निर्माल्य भक्षणे घोरं प्रमादादयुतं जपेत्  ५४८
भक्षणेन समं दानं स्यात् तदर्धमुपेक्षने
अथवा भक्षणेऽकामात् प्रजपेत्ब्रह्मपञ्चकम्  ५४९
यावत्सहस्रमध्यर्धं कामतो दीक्षया सुचिः
निर्माल्य लङ्घनं कृत्वा दक्षिणार्धायुतं जपेत्  ५५०
लङ्घनेन समं स्पर्शे समं विक्रयभक्षणे
देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितम्  ५५१
चण्डद्रव्यं च निर्माल्यं षड्विधं स्मृतम्
ग्रामदीशस्य देवस्वं देवद्रव्यं पटादिकम्  ५५२
नैवेद्यं कल्पितं तस्मै देवोच्छिष्टं निवेदितम्

चराडद्रव्यं तु तद्दत्तं निर्माल्यं प्रेरितं बहिः ५५३
पिरिडकास्थं न निर्माल्यमपि देवे विसर्जिते
क्रव्यादो जायते दानान्मातङ्गस्तस्य भन्नणात् ५५४
लङ्घने सिद्धिहानिश्च विक्रये शबरो भवेत्
स्पर्शने जायते स्त्रीत्वं निर्माल्यस्य न संशयः ५५५
यन्निर्माल्येन संस्पृष्टं तद्भुजा पुरुषेण वा
पादोनं तत्र पूर्वोक्तं स्पर्शलङ्घन भन्नणैः ५५६
भन्नणं द्विविधं प्रोक्तमनिवेद्य तदन्यथा
देवदेवाय तत्राद्यं देवग्रामादि सम्भवम् ५५७
व्रीह्यादि येन केनैवोपाधिनादाय भन्नणम्
करोति यस्य संमूढा मद्धनस्तेयकृन्मतः ५५८
मदर्थं कल्पितं वाथ तराडुलं चौदनं तु वा
यः प्रयच्छति वा भुङ्क्ते सोऽपि स्तेयकृदुच्यते ५५९
त एवातीत दुष्टामद्भन्नितादपि सोषदाः
तथैवेति चतुष्काष्ठा मद्भुक्तिस्त्वति दोषदा ५६०
नैवेद्यं कल्पयित्वा तु शिवायेति तदूर्ध्वतः
निवेद्य मह्यं तच्छिष्टं भुङ्क्ते प्रत्यहमादरात् ५६१
सोऽयं मत्सदृशः प्रोक्तश्चरुभुग्यस्तथा भवेत्
मद्भुक्तं चराडभुक्तं वायो लोभाद्भन्नयेन्नरः ५६२
स पापी दुर्मतिः प्रोक्तः पूर्वाभ्यां नातिरिच्यते
भन्नयेद्यो नरो भक्त्या पवित्रमिति शंसितम् ५६३
शुद्धात्मा ब्राह्मणस्तस्य पापं न्निप्रं विनश्यति
अशुद्धात्मा शुचिर्लोभान्मद्भुक्तं पावनं नरः ५६४
भन्नणे नाशमायाति रसभोक्ता यथा द्विजाः
मद्देहधारिणो लोके देशिका मत्परायणाः ५६५
मदैकशरणास्तेषु योग्यं नैवान्यजन्तषु

तस्मान्मदीयं निर्माल्यं भुक्त्वा निष्कृतिमाचरेत्  ५६६
सर्वेषां देशिकादीनां चतुर्वर्णोद्भवात्मनाम्
प्रायश्चित्तमहं वक्ष्ये श्रूयतां द्विजसत्तमाः  ५६७
मौनं त्रिषवणस्नानं शिवाग्नि गुरुपूजनम्
अघोरायुत जापश्च गोमयालिप्तमण्डले  ५६८
पञ्चगव्यं चरुं दन्तधावनं च क्रमाद्भजेत्
प्रतिरात्रं चरेदेतद्व्रतं पाप विशुद्धये  ५६९
अग्निकार्यां विना वाऽपि जपमात्रं विधीयताम्
एतद्व्रतं समाख्यातं दशवृद्ध मनुव्रतम्  ५७०
उपव्रतं तथा तस्माद्दशवृद्धं महाव्रतम्
महापातकिनां प्रोक्तं महाव्रतमिहागमे  ५७१
अन्वादि पातकानां तु व्रतमन्वाद्यमीरितम्
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः  ५७२
महान्ति पातकान्यत्र तत्संयोगेन पञ्चमः
कामस्त्वेवमाख्यातमज्ञानदर्धमिष्यते  ५७३
ब्रह्मघ्न व्रतपादं तु क्षत्रियस्य वधे कृते
तदर्धं वैश्यजातेस्तु तदर्धं शूद्र इष्यते  ५७४
अनुलोमेषु सर्वेषु मातृप्रोक्तं समाचरेत्
गूढजेषु च तेष्वर्धं तदर्धं प्रतिलोमेषु  ५७५
दीक्षितेषु च सर्वेषु द्विगुणं समुदाहृतम्
अभिषिक्तस्य हनने दीक्षितोक्तं व्रतं मतम्  ५७६
पानसं द्राक्षामाधूके खार्जूरं गौलमैक्षवम्
माध्वी खण्टकमृद्वीकमैरेयं नालिकेरजम्  ५७७
सामान्यानि विजानीयाद् मद्यान्येकादशैव तु
द्वादश्येव सुरा पैष्टिस्सर्वेषामधमा स्मृता  ५७८
पीत्वा पैष्टीं सुरां विप्रो महाव्रतमथाचरेत्

एकादशसुरापाने कुर्याद्व्रतदशांशकम् ५७९
सकृत्पैष्टिं प्रमादेन पीत्वा विप्रो द्विजोत्तमाः
गोमूत्रयवकाहारो दशरात्रेण शुद्ध्यति ५८०
द्वि वारादि प्रयोगेण दिनवृद्धिः प्रशस्यते
सर्वेषां क्षत्रियादीनां पूर्वोक्तन्याय ईरितः ५८१
सुवर्णस्यापहारेण शतादभ्याधिके वधः
क्षत्रियादिषु संप्रोक्तो विप्रस्य न वधः क्वचित् ५८२
निष्कस्तेयेऽयुतं पञ्च निष्कान्तं लक्षमीरितम्
दश लक्षं जपान्तं तु तदूर्ध्वं दशवृद्धितः ५८३
शतलक्षान्तमुद्दिष्टं ब्राह्मणे क्षत्रियादिषु
शतमर्धार्धह्रासेन स्वर्णस्तेये समीरितम् ५८४
रजतस्यापहरणे धान्यस्य द्विगुणं मतम्
सुवर्णे रजते धान्ये शतमेकादशोत्तरम् ५८५
दरिद्रस्यानुरूपेण द्विगुणाधिकमेव हि
गुरुतल्पं विहायान्यस्त्रीयोगे नैव पातकम् ५८६
याजनं योनि संबन्धं स्वाध्यायं सहभोजनम्
पातकैस्सह चेत् कुर्यात् सोऽपि तत्सम इष्यते ५८७
वत्सरान्तं तदर्वाक् चेदर्थं पादं समाचरेत्
अनुपातकशुद्ध्यर्थमनुव्रतमुदाहृतम् ५८८
मातृष्वसा च भगिनी स्वसुता च पितृष्वसा
आसां च गमनं विप्रास्त्वनुपातकमीरितम् ५८९
विप्रस्त्रीगमनं बन्धोराश्रित्य च यो वधः
चण्डालपाण रजकोच्छिष्ट भोगेऽनुपातकम् ५९०
लिङ्गस्य पिण्डिकायाश्च प्रतिमादेर्द्विजोत्तमाः
द्वेषेणोत्पाटनम् कृत्वा पातकादधिको भवेत् ५९१
तदुक्तं द्विगुणं कुर्याद्राजचोरभयादिषु

दुःस्थाननिम्नदोषादौ परिहर्तुं तदुद्धृतम्  ५९२
संस्थाप्य विधिनाघोरं लक्षामावर्त्य शुद्ध्यति
देवक्षेत्रापहरणं देवोपहरणाहृतिः  ५९३
शिवागमापहारश्च शिवलिङ्गापहारणम्
शैवादीनां चतुर्णां तु दण्डनिर्णय एव च  ५९४
उपपातक शुद्ध्यर्थमुपव्रतमुदाहृतम्
पितृव्यसखि शिष्यस्त्री स्नुषाश्च शरणागताः  ५९५
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या
सगोत्रा मातुलानीं च समान प्रवरा च या  ५९६
तासां संगमनं चोपपातकं समुदाहृतम्
परिवित्तिः परिवेत्ता तयोर्याजनमेव च  ५९७
तयोर्दानं च कन्यायाः शिवाग्नयागमनिन्दनम्
गुरोश्च प्रतिकूलत्वं तथा निक्षिप्त संग्रहः  ५९८
पितृमातृगुरुत्यागः कूटसाक्ष्याभि शापने
उक्तित्वं पतितश्चेति तद्धीनं वाथ तद्युतम्  ५९९
भूवेश्मरत्नवापीनां कुजानामपहर्तृता
वापीकूपतटाकादेर्हरणं तूपपातकम्  ६००
गजाश्वनरनार्युष्ट्रमहिषाणां खरोक्षयोः
उपव्रतं वधे कुर्यात्तदर्धं हरणे भवेत्  ६०१
तन्मांसभक्षणेऽर्धं स्यात्तद्विष्ठास्पृष्टिभक्षणे
तत्पादं स्यात्तदालीढस्पर्शादौ स्नानमाचरेत्  ६०२
तदालीढान्नमुक्तौ च विष्ठास्पृष्ट्यर्धमाचरेत्
तद्रोमास्थ्यादि संस्पर्शे स्नानमेव विधीयते  ६०३
उपव्रतस्य द्विगुणं गोघ्नः कुर्यात्तदर्धकम्
गोहर्त्ता तस्य मांसाशी तत्समानं समाचरेत्  ६०४
गोष्ठे वसन् गोऽनुगामी गोप्रदानेन शुद्ध्यति

गवामभावे तन्मूल्यं दातव्यं पुष्कलं तथा ६०५
गर्भिणीं कपिलाघ्र दोग्घ्रीहोमधेनुं च सुव्रताम्
रोधादिना सादयित्वा द्विगुणं व्रतमाचरेत् ६०६
पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत्
याजने पादहीनं स्याच्चरेत् सर्वं निपातने ६०७
औषधं लवणं चैव स्नेहपिण्याहभोजनम्
अतिरिक्तं न दातव्यं काले स्वल्पं तु दापयेत् ६०८
न नालिकेर रज्ज्वा च न च मौञ्जेनबन्धयेत्
बलाभावाद्विपद्येत गौश्चरन्ती कथंचन ६०९
जलेवा पल्वले मग्ना मेघविद्युद्धतापि वा
श्वभ्रे वा पतिताऽकस्माच्छ्व पचेनापि भक्षिता ६१०
शीतवातहता चेत्स्यात्बन्धनेन मृतापि वा
शून्यागारे त्वटव्यां वा गृहदाहेऽपि पादपात् ६११
उपेक्षाद्यैस्तु तद्विष्ठा भक्षणाद्यं परं मतम्
कन्यानां दूषणं चैव परभार्यात्मविक्रयौ ६१२
नास्तिक्यमभिचारश्चायाज्य याजनमेव च
नीचलोमान्त्यजोच्छिष्ट भोजनं चोपपातकम् ६१३
मद्यभाण्डस्थितं द्रव्यं मद्यस्पृष्टं तु वा भवेत्
तस्य पानादिना विप्रास्त्वेतद्द्विगुणमाचरेत् ६१४
भुक्त्वा शूद्रस्य वाशौचे विप्रस्तूपव्रतार्धभाक्
वैश्याशौचेऽर्धभाग्विप्रः क्षत्राशौचे तदर्धभाक् ६१५
नृपशूद्रविडाशौचे भुक्त्वा विप्रोऽर्धमाचरेत्
वैश्यशूद्रगृहे भुक्त्वा क्षत्रियोक्तार्धमाचरेत् ६१६
स्वाशौच भोजने कृत्यमन्त्येष्टावेव कीर्तितम्
स्वोत्कृष्टाशौच भुक्त्या तु स्वगृहाशौच भुक्तितः ६१७
पादोनं च द्विपादोनं त्रिपादोनं क्रमाच्चरेत्

शूद्रस्त्वेवं तदन्यौ चेत् कुर्यात्तां विधिनामुना ६१८
विरामूत्र भक्षणे विप्रः कुर्यादेतदुपव्रतम्
रजस्वलामुखास्वादे तथा चराडालयोषिताम् ६१९
रजकादेश्च पैशून्यं कृत्वा तद्वदुपव्रतम्
विप्रपातक शुद्ध्यर्थं व्रतमत्र समीरितम् ६२०
चराडाल पाणरजकस्त्रीगमे द्विगुणं मतम्
व्रतमात्रमुदख्यास्तु शुद्ध्यर्थं विप्र ग्राचरेत् ६२१
विप्रस्त्रीगमने चैवोपव्रतंतु समाचरेत्
पादपादविहीनं तु क्षत्रादि त्रितयं चरेत् ६२२
ब्राह्मणी शूद्रसंयुक्ता पतिता सप्रजायदि
विप्रजोपव्रतार्धं तु सकृदागमने चरेत् ६२३
उपव्रतं तु मासोर्ध्वे षरामासोर्ध्वमनुव्रतम्
महाव्रतं समोर्ध्वं स्यात्त्र्यब्दोर्ध्वं पतितैव सा ६२४
एतदर्धं तु राज्ञी चेद्वैश्यस्त्री चेत्तदर्धकम्
शूद्रस्त्री शूद्रसंयोगात् तदर्धं तु समाचरेत् ६२५
शूद्रश्चैव तथा कुर्यात् प्रायश्चित्तं विशुद्धये
कन्यासंगमने कुर्यात् प्रागुक्तं द्विगुणं द्विजाः ६२६
वैश्यश्चेदर्धभाक्तस्मादर्धभाक् क्षत्रियो यर्दिम्
तदर्ध भाग् द्विजः प्रोक्तो विप्रादि स्त्रीसमागमे ६२७
ग्रनुलोमाः स्वमात्रुक्तमाचरेयुः स्वशुद्धये
प्रतिलोमिषु निर्दिष्टं शूद्रोक्त द्विगुणं व्रतम् ६२८
ग्रमानुषीषु पुरुषः प्रतिलोमिष्वयोनिषु
रेतस्सित्वा जलेवापि व्रतमब्दं समाचरेत् ६२९
नदीशैलूषिकी वेणुजीवनी गमने व्रतम्
पतितान्यस्त्रियं गत्वा चराडालस्यार्धमाचरेत् ६३०
ग्रन्तर्वत्नी भवेत् स्त्री चेत् प्रायश्चित्तमशक्यतः

गर्भे विनिःसृते कुर्यात् द्विगुणं प्रागुदीरितम् ६३१
न प्रचारं गृहे कुर्यान्न चान्नादि प्रसाधनम्
न शयीत समं भर्त्रा न च भुञ्जीत बन्धुभिः ६३२
न च स्नात्वा च भुक्त्वा च गत्वाचैव दिवा स्त्रियम्
शेफं बध्वायसाद्यैश्च व्रतमेतत्समाचरेत् ६३३
उच्छिष्टं प्रतिलोमानां भुक्त्वा कुर्याद्व्रतं द्विजाः
उच्छिष्टं तु समानानां भुक्त्वोपोष्य विशुद्ध्यति ६३४
सहस्रमयुतं चैव जपो मध्यमहीनयोः
द्वित्रिरात्रोपवासश्च सवर्णोच्छिष्ट भोजने ६३५
जघन्योच्छिष्ट संपर्कादेवं शतगुणं भवेत्
जपोपवासवृद्धिः स्योदेकरात्रादितः क्रमात् ६३६
शैवब्राह्मणयोर्निन्दा मद्यपस्त्रीनिषेवणम्
स्त्रीहिंसौषधजीवा च वार्द्धुष्यं मूल्यकर्म च ६३७
सर्वकार्येष्वधिकारो महायन्त्र प्रवर्तनम्
स्वाध्यायाग्नि सुतानां च परित्यागश्च पातकम् ६३८
तिलब्रीहिकुलुत्थानां शालीनां मुद्गमाषयोः
निष्पावाढक शिम्बानां सर्षपस्य यवस्य च ६३९
कुङ्कु प्रियङ्गुनीवारकोद्रवादेर्द्विजोत्तमाः
सत्वचां वित्वचां वापि हरणेऽर्धं व्रतस्य च ६४०
यनश्य्यासनानां च कांस्यरीतिशिलायसाम्
त्रपुसीसकताम्रादेर्वस्त्रस्य हरणे कृते ६४१
व्रतमात्रं समुद्दिष्टं त्रिगुणं स्तेयमोच्चणाम्
वानरश्वमृगाणां च विष्ठाशनवराहयोः ६४२
दुष्टादुष्टमृगाणां च शिवाय वा वधेकृते
शशस्य शिंशुमारस्य शङ्खस्य मकरस्य वा ६४३
हनने च व्रतं कुर्यात् तत्पापस्य विशुद्धये

उलूककङ्क गृध्राणां काकस्य जलबर्हिणः ६४४
कुक्कुटश्येन भासानामथ हंसमयूरयोः
पिङ्गलरत्ननेत्रयोश्च सरटाशत पत्रयोः ६४५
कपोतस्य बकस्याथ टिट्टिभस्य जराङ्गिणः
पिङ्गल्याश्चक्रवाकस्य कौशिकस्य शुकस्य च ६४६
मण्डूको गौश्च गौधा च कृकलासश्च मूषिकः
नागश्चुचुन्दरी मत्स्यः कूर्मः कर्कटकाह्वयः ६४७
वृश्चिकश्चैव शम्बूकश्शलभो मक्षिका तथा
पिपीलिका च भूनागो लूताद्या ये च कीर्तिताः ६४८
भूगता जलजा वाथ ये चान्ये त्वन्तरिक्षगाः
तेषां कृत्वा वधं विप्रो व्रतपादं समाचरेत् ६४९
अनस्थिमत्सु चैतेषु शताघोरजपोमतः
अन्येनापि प्रकारेण प्रायश्चित्तमिहोच्यते ६५०
हत्वा कामात् द्विजस्सद्यो गवां गोष्ठे जपेत्तदा
पीत्वाकामात् सुरां वाश्रमं शिवहर्म्येजपेत्तदा ६५१
कृत्वास्तेयकामाश्च घोरं पितृवने जपेत्
गुरुस्त्रीगमने वक्त्रमकामात्तु जपेद्वने ६५२
योगंकृत्वा समस्तैस्तु नगाग्रे पञ्चमं जपेत्
प्रकाशे कामतस्तस्मिल्लभ मावर्त्य शुद्ध्यति ६५३
अकामाद्वा रहस्ये च सहस्राच्छुद्धिरिष्यते
कामतस्सरहस्ये च जपेत्तत्रायुतं द्विजाः ६५४
अकामतः प्रकाशे च तत्राप्ययुतकद्वयम्
गुरुद्रोहादृते शुद्धिः कामतोऽपि भवेदिह ६५५
तद्याद्वा देशिकस्तस्य तदाकृच्छ्र पुरस्सरम्
पुनर्यागः प्रकर्तव्यस्शुद्धिस्तस्यान्यथान हि ६५६
पातकत्रय संयोगस्सामान्यो ब्राह्मणादितः

मद्यपानं यदा शूद्रेऽदीक्षिते स्वल्पकं भवेत् ६५७
निषेधाभावतस्तस्य दोषस्तत्र न जायते
नियमाद्घोर जापस्य प्रकर्तव्यं शतं त्रिकम् ६५८
गुरुस्त्रीगमनं यच्छ चतुर्णां सदृशं भवेत्
गुरुद्रोहः शिवद्रोहस्तस्मात्तत् पातकं भवेत् ६५९
काष्ठादि पार्थिवस्तेये तेजोद्रव्यं विना द्विजाः
सद्योजातजपाच्छुद्धिरकामादिह कथ्यते ६६०
पञ्चविंशतिकोजापः कर्तव्योऽकामतश्शतम्
घृतं वापि गृहीत्वा तु लवणं शर्करादिकम् ६६१
कामतोऽकामतोवाऽपि जपेद्वामं तु पूर्वत्
रीतिकेतरकांस्यादि गृहीत्वा तैजसं च ६६२
धेनुं वा घृतवच्छुद्धिः कामाकामात्तु पूर्ववत्
पुष्पं गन्धादिकं हृत्वा पुरुषं स्त्रियमेव वा ६६३
अनड्वाहं गजाश्वादि वस्तुजातं तु पूर्ववत्
क्षीरं जलं वा शस्त्रं वा हुत्वेशं पूर्वज्ञपेत् ६६४
अभक्ष्य भक्षणे जाते गुह्यकस्य शतंजपेत्
अकामात् त्रिशशं कमाज्ञपेन्मद्यादि वर्जितान् ६६५
उदक्यान्नाशने मोहाज्ञपेत् गृह्यायुतं बुधः
दशोर्ध्वं त्रिशतादर्वाक जप्त्वा स्नानेन शुद्ध्यति ६६६
तदूर्ध्वं पञ्चकं यावच्छतं नक्तं विधीयते
तदूर्ध्वमुपवासस्यात् त्रिरात्रमयुतोर्ध्वतः ६६७
स्वजाति दीक्षितं स्पृष्ट्वा तदाचम्य विशुद्ध्यति
आचम्यादीक्षितेनापि सजातीशशतं जपेत् ६६८
सदीक्षदीक्षितस्पर्शात् प्रायश्चित्तं तु पूर्ववत्
तस्मिन्नदीक्षिते स्पृष्टे जपेत् स्नात्वा शतद्वयम् ६६९
इदमेवान्तरस्पर्शाद्दीक्षितस्येतरस्य तु

शतत्रिकं जपेत् स्पर्शात् सोपवासः शुचिर्भवेत्  ६७०
भवेत्तदेव शूद्रस्य स्पर्शनाद्दीक्षितस्य तु
स्पर्शनाद्दीक्षितस्यापि शतं पञ्चाप्युपोषितम्  ६७१
इतरे पादहीनं तु कुर्वीरन्नात्मशुद्धये
त्रिरात्रमन्त्यजस्पर्शात्सहस्राणि दशिश्रव तु  ६७२
पञ्चमस्य तु मन्त्रस्य जपेत्तत्राविचारतः
घोर जपः कार्योऽयुतं चण्डालसङ्गमात्  ६७३
गृहादौ पातकावेशे त्यक्त्वा भाण्डान् प्रलिप्य च
कृच्छ्राच्छुद्धिर्भवेत् भुक्तौ तप्तकृच्छ्रं समाचरेत्  ६७४
ज्ञात्वा भुक्त्वातु पादेन तदासौ तत्समो भवेत्
रजकादि प्रवेशादावयुतार्धमजानतः  ६७५
बहुदेवलकैर्योगे कृच्छ्रचान्द्रायणाच्छुचिः
हेमरुप्यादिपात्राणां वारिणा शुद्धिरिष्यते  ६७६
शङ्खादीनां भवेच्छुद्धिस्तुषौर्वा मथितेन वा
भस्मना कांस्यशुद्धिः स्यात् ताम्रमाम्लेन शुद्ध्यति  ६७७
उच्छिष्टलिप्तपात्राणां शुद्धिरेषा प्रकीर्तिता
प्रोक्ष्य शुद्ध्यत्यसन्देहादुच्छिष्टस्पृष्टभाजनम्  ६७८
तुम्ब्यादि वेणुपात्राणां गोवालैस्तोयघर्षणात्
दारवं लोहजोत्कृष्टं वारिणा तद्विशुद्ध्यति  ६७९
चर्मणां रज्जुवस्त्राणां शुद्धिःस्यात् क्षारवारिणा
शुद्धिश्चोदक भाण्डानां पर्यग्निकरणात्मिका  ६८०
तृणादिकं च यत् किञ्चित् काष्ठं वा प्रोक्षितंशुचिः
उल्लेखात् भूमिशुद्धिः स्यात् तथा गोमय घर्षणात्  ६८१
विष्ठाद्युपगतं भाण्डं त्याज्यं स्याद्वेणुमृण्मयम्
तद्वन्निर्माल्यसंस्पृष्टं रजसा स्त्री विशुद्ध्यति  ६८२
शेषस्य पूर्ववच्छुद्धिः वस्त्रशुद्धिर्जलाद्भवेत्

शरावपत्र पुटक प्रभृतीनां च भोजने ६८३
शुद्धि रत्रोपयुक्तानां परित्यागो विधीयते
सत्यन् मनसश्शुद्धिरिन्द्रियाणां यमादिभिः ६८४
गर्वस्य शमता दृष्टा शुद्ध्यर्थमविचारतः
बुद्धेरपि मुनिव्याघ्रास्सङ्गत्यागात् प्रकीर्तिताः ६८५
प्राणाश्शुद्ध्यन्ति विधिवत् प्राणायामबलात्सदा
ध्यानाच्छुद्धिस्समुद्दिष्टा प्रधानस्य गुणात्मनः ६८६
विवेकाच्छुध्यते ह्यात्मा नात्र कार्या विचारणा
श्वमार्जाररवरादीनां विलेहे स्नानमाचरेत् ६८७
नाभेरूर्ध्वमधस्ताद्वा मृद्भिश्शुद्ध्यति सप्तभिः
उत्तमाङ्ग विधानेन स्नात्वा विद्याङ्ग पञ्चकम् ६८८
जप्तव्यं शतमेकं स्याद्विगुणं मन्त्रवादिना
अदीक्षितेन संस्पृष्टे स्नानमाग्नेयमाचरेत् ६८९
निर्माल्यसंकरे कामात् संपूज्यश्चण्डनायकः
तस्यैव देवदेवस्य जपस्साङ्गस्य वै शतम् ६९०
अकामतोवा संपर्कात् केवलस्य शतं भवेत्
वारिणा त्वश्मजातीनां मथितेनाश्च मस्तुना ६९१
जलजानां च सर्वेषां वैणवानां तथाम्भसा
स्निग्धानां रूक्षणाच्छुद्धिः पात्राणां परिकीर्तिता ६९२
शुद्धिः स्यादप्यशुद्धानां प्रोक्षणादेव केवलात्
मधुनः पाकतश्शुद्धिस्तथैवेक्षुरसस्य च ६९३
फलानां क्षालनाच्छुद्धिर्दघ्नश्चैव निरीक्षणात्
क्वथितं शुद्ध्यते क्षीरं पक्वानां प्रोक्षणादपि ६९४
अथ शैव गुरोरस्य शुद्धिर्वाचा विधीयते
परेभ्यो दुःखमापाद्य वाङ्मनःकायकर्मभिः ६९५
प्रमादतः परिज्ञाय शुद्धिश्शक्ति जपात्सदा

समयानां प्रमादे तु शक्तिजापः प्रशस्यते ६९६
वस्त्रशय्यासनादीनां स्तेये गायत्रिकाशतम्
गुरुदेवाग्निकार्येषु गर्हितस्य निवेदनात् ६९७
शुध्यते नीयमानस्य त्वन्यायान्मुनिपुङ्गवाः
म्लानेभ्यो व्याधितेभ्यो वा यतिभ्यः किञ्चिदौषधम् ६९८
सर्वेभ्यस्सर्वदा ग्राह्यं न दोषो ह्यत्र शासने
पुनः पाकेन संशुद्धिर्लवणस्य सहाम्भसा ६९९
अन्यायेन गृहीतस्तु न्यायमर्थयते तु यः
यमुद्दिश्य त्यजेत्प्राणान् ब्रह्महा सतु कीतर्यते ७००
देवार्थं गुरुपित्रर्थमात्मार्थमथवा तु यः
यमुद्दिश्य त्यजेत्प्राणान् ब्रह्महा स च कीर्त्यते ७०१
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः
क्षेत्रदारहरश्चैव षडेते आततायिनः ७०२
आततायिनमायान्तमपि शस्त्रान्तगं रणे
जिघांसन्तं जिघांसेत्तु न तेन भ्रूणहा भवेत् ७०३
युवानां बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्
आततायिनमायान्तं हन्यादेवा विचारतः ७०४
असूर्या नाम ये लोका अन्धेन तमसावृताः
तांस्ते प्रेत्याधिगच्छन्ति ये चात्महननाज्ञानाः ७०५
न च दुःखसमुत्पत्तौ कामतो देहमुत्सृजेत्
यदा निर्वेदमायातः प्राप्तभोगोऽथवा पुनः ७०६
ध्यानधारणायोदेन शिवलीनमनास्त्यजेत्
शिवादित्रय निन्दास्तु श्रुत्वा देहं स्वकं त्यजेत् ७०७
तं वा हन्यान्न दोषस्स्याच्छिवत्वं च समाप्नुयात्
शैवं पाशुपतं कालामुखं कापालधारिणम् ७०८
यदि हन्याज्जगत्सर्वं हतं तेन दुरात्मना

ब्रह्मघ्नश्च कृतघ्नश्च विशुद्धावपि कर्मतः ७०९
शरणागतहन्ता च योषिद्धनश्चापि पापिनौ
तथा चागमविप्लावी स्वर्णस्तेयसमो भवेत् ७१०
अश्वरत्न मनुष्यस्त्रीभू धेनुहरणं तथा
निक्षेपस्य च सर्वं हि स्वर्णस्तेयं समं भवेत् ७११
देवब्राह्मणहत्तिश्च कूटसाक्ष्यं सुहृद्वधः
तथैवेह समुद्दिष्टमभिशापो महात्मनि ७१२
औषधं स्नेहमाहारं ददतो बन्धकस्य च
प्राणिनां प्राणवृत्त्यर्थं तत्रदोषो न विद्यते ७१३
प्रतिसंवत्सरं मासं तिथियुक्तं तु तीर्थभम्
निश्चित्य वर्तते पूर्वमुत्सवो यैर्दिनैःपुरा ७१४
नवाहाद्यैर्युतो भेरीताडनादिपुरस्सरः
तद्दिनत्रिगुणे वापि द्विगुणे वाथ तद्दिने ७१५
तदन्यथाकृते राष्ट्रराज्ञोदोषावहो भवेत्
तत्र शान्तिर्विधेयादौ प्राग्वदुत्सवमाचरेत् ७१६
किं तु मासान्तरे तु स्यात् तस्मिन्मासेऽथवा भवेत्
द्विगुणे तद्दिने वाथ मूर्तिहोमं दिशाहुतिम् ७१७
क्रमाद्विधाय कर्तव्यमुत्सवं तद्विधानतः
ध्वजारोहण पूर्वेत्तु त्रिगुणाह प्रकल्पिते ७१८
विधानमेतदाख्यातं द्विगुणेप्येवमूह्यताम्
लिङ्गं स्वायम्भुवं चेत्तु विधानमिदमीरितम् ७१९
मानुषे बाणलिङ्गादौ दैविके वार्षकेपिवा
मासभं तीर्थनक्षत्रमन्यथा वा नयेत्पुनः ७२०
उत्सवो यो दिनैर्हीनस्तस्य वृद्धिः फलप्रदा
राष्ट्रक्षोभे च दुर्भिक्षे राजचोरभयादिषु ७२१
वित्ताऽभावेन्यहेतुभ्यः प्राग्वत्कर्तुमशक्यता

यदि जायेत तत्रापि शान्तिं पूर्वं विदाय च ७२२
दिनहीनं तु वा कुर्यादुत्सवं पूर्वमार्गतः
सर्व लोपात् प्रशस्तस्स्यादल्पाहै निर्मितोत्सवः ७२३
सर्वलोपेकृते तस्य महादोषः प्रजायते
शान्तिं च शान्तिहोमं च मूर्तिहोमं तदा नयेत् ७२४
अनेन विधिना येन सर्वैर्नैमित्तिकादितः
विघ्नाद्यरुत्सवो हीनः प्रारब्धोराष्ट्रनाशनः ७२५
शान्तिहोमं तदा कुर्यात् पुन्रुत्सवमाचरेत्
वृषाधिवासने हीने ध्वजे वारोपिते सति ७२६
गावो नश्यन्ति तत्कुर्याच्छान्तिहोमं तदुक्तवत्
वृषयागं नयेत्तत्र ध्वजदगडस्य मूलतः ७२७
किन्तूर्ध्वस्थध्वजे मन्त्रन्यासाद्यं मनसाचरेत्
ध्वजारोपे विहीने तु नृपतेर्भङ्गमादिशेत् ७२८
शान्ति कृत्वा तदामन्त्री पुनरारेपयेत् ध्वजम्
ध्वजस्य भ्रमणेहीने ग्रामादावशुभावहः ७२९
शान्तिहोमं तदा कुर्यात् सर्वदोषनिवृत्तये
वेदी विहीना वा हीनलक्षणा वाशुभप्रदा ७३०
शान्तिहोमं तदा कृत्वा वेदीं कुर्यात्सलक्षणाम्
दगडोलक्षणहीनश्चेत् प्रधानस्याशुभावहः ७३१
मूर्तिहोमं तदा कुर्याच्छान्तिहोममथापि वा
स्वलक्षण विहीनश्चेदुपदगडो भयप्रदः ७३२
स्कन्धमानस्य वै हानौ शान्तिहोमं तदानयेत्
दगडोपदगडस्कन्धादेर्भेद भङ्गादि संभवे ७३३
शान्तिहोमं तदाकुर्याद्धग्रे शान्त्यन्तरं नयेत्
ध्वजो लक्षणहीनश्चेद्राष्ट्रस्यास्य भयंकरः ७३४
सलक्षणं ध्वजं चान्यं रोहणार्थं समाहरेत्

शान्तिकर्म नयेद्धीमाल्लक्षणध्वजरोहणम् ७३५
एवमेव वृषे कुर्यान्निष्कृतिं दोषहानयेत्
ऊर्ध्ववेत्रविहीनश्चेत् ध्वजस्येशं शतं जपेत् ७३६
अधोवेत्रविहीनश्चेन्नैवः दोषाय कल्पते
रज्जुछेदेऽरिभिर्बाधा शान्तिहोमं समाचरेत् ७३७
आख्वादिदष्टे वस्त्राद्ये शान्तिहोमं तदाचरेत्
पताका पतितौ भूमौ यदिराष्ट्रस्य दुःस्थितिः ७३८
शान्तिहोमं तदा कृत्वा विधिनारोपयेत् ध्वजम्
ध्वजे भेदादि संयुक्ते शान्तिकर्म तदाचरेत् ७३९
पताकां रोपयेदन्यां सप्ताहाभ्यन्तरे द्विजाः
पूर्वं पूर्वं प्रशस्तं स्यादल्पहानिर्यादि द्विजाः ७४०
मूर्तिहोमं तदाकुर्याच्छान्तिहोममथापि वा
केतावारुह्यमाणेऽस्मिन्यष्ट्याद्यभिभेवेन च ७४१
लम्बिते दोषदश्शान्त्यै शान्तिहोमं समाचरेत्
दर्भमाला विहीना चेच्छान्तिहोमं तदाचरेत् ७४२
दण्डं सलक्षण दर्भमालया वेष्टयेत्ततः
रज्जुर्वा दर्भमाला वा प्रदक्षिण विधानतः ७४३
दण्डेऽसुयोजिता सा चेज्जप्त्वाघोरं सहस्रशः
प्रदक्षिणक्रमादग्रार्द्दमालादिकां नयेत् ७४४
उपदण्डो विकूर्चश्चेज्जपेद्धोरं शतत्रयम्
ध्वजघण्टा विहीना चेन्न स्याद्वृषभसन्निधिः ७४५
आवर्तयेदघोरेण त्रिशतं देशिकस्तदा
घण्टायाः पतने भूमौ दक्षिणं त्रिशतं जपेत् ७४६
आरुह्य बन्धनं नेष्टं दण्डनाथश्शिवो यथा
ध्वजारोहणकाले तु कुम्भन्यासो न चेत्कृतः ७४७
वृषकुम्भविभेदादिकारणात् केतुरोहणम्

कृत्वान्ते शान्तिहोमं च कुम्भं संस्थाप्य पूर्ववत् ७४८
मन्त्रन्यासं ततःकुर्यात् मनसोद्वं हृदम्बुजे
तदावरणकुम्भाम्भोऽभिषेको न कृतो यदि ७४९
एकैकं स्वस्वमन्त्रैस्तु जपं कुर्याच्छतं शतम्
आरोपिते ध्वजे तस्मिन् वलयादवलम्बिते ७५०
एकद्वित्रिचतुर्मात्रैर्न दोषाय प्रकल्पितः
ततोऽधो रविमात्रान्तघोरं त्रिशतं जपेत् ७५१
तदधो लम्बिते केतौ शान्तिहोमं विधाय च
आरोपयेत् ध्वजं पश्चात् वृषभार्चन संयुतम् ७५२
भेरीसंताडने हीने लोको मूकः प्रजायते
शान्तिहोमं तदा कृत्वा भेरीसंताडयेत्ततः ७५३
उत्सवारम्भतःपूर्वं देवताह्वान संयुतम्
देवतावाहने हीने देवादीनामसन्निधिः ७५४
शान्तिहोमं नयेत्प्राग्वद्देवताह्वानमाचरेत्
ईशाम्बस्कन्दविघ्नेशभानुचण्डेश्वरादयः ७५५
अनाहूतास्तदा दोषो नान्यानाहूतिरापदि
पताकारोपणोपेते देवानावाहयेन्न वा ७५६
भेरीताडनकार्यं तु तद्वदेव समाचरेत्
भेरीचर्मादि भेदादौ कोणच्छेदादि संभवे ७५७
अघोरं त्रिशतं जप्त्वा भेरीमन्यामथाहरेत्
तथैव कोणमन्यं च गृहीत्वा प्राग्वदाचरेत् ७५८
कोणे वा पतिते भूमावघोरं त्रिशतं जपेत्
तत्काले बलिकाले वा वादके पतिते भुवि ७५९
शान्तिहोमं तदा कुर्याद्राष्ट्रदुःस्थितिहानये
भेरिकापतने भूमौ भवेद्राज्ञो भयं महत् ७६०
शान्तिहोमं तदा कृत्वा भेरीं संपूजयेद्बुदा

यागशालाग्निदग्धा वा विहीना लक्षणैस्तु वा ७६१
विमानं कुण्डवेदी वा राष्ट्रदुःस्थितिमावहेत्
कुर्याद्यथावत्तत्सर्वमुत्सवं तूत्सवे यदि ७६२
प्रत्यहं शान्तिहोमस्स्याद्यावत्तीर्थ दिनं भवेत्
ज्ञात्वा चेदुत्सवान्ते च यागशालां विलक्षणाम् ७६३
शान्तिं कुर्यात्तदेकाहं तद्दोष विनिवृत्तये
विधानमेतत्सामान्यं प्रतिष्ठायां च निष्कृतौ ७६४
स्नपने प्रोक्षणे मासपूजादौ सूत्ररोपणे
उत्सवाङ्गे च वान्यस्मिञ्जीर्णोद्धारेष्टकाविधौ ७६५
नित्ये नैमित्तिके काम्ये कर्मण्यन्यत्र योज्यताम्
यागोपकरणेऽप्येवं किं तु यागावसानके ७६६
शान्तिहोमो विधेयस्स्यादेकाहमुत्सवेऽपि च
प्रधानाधममध्यानां करणानां विलोपने ७६७
शान्तिहोममघोराणां द्विशतं त्रिशतं जपेत्
विहीने स्थण्डिलेऽङ्गे वा शान्तिहोमं तदाचरेत् ७६८
पूर्ववत्स्थण्डिलं कुर्यात् सस्यनाशनिवृत्तये
शिवकुंभेषुवर्धन्यावृतेषु घटेषु वा ७६९
उत्सवाङ्गेषु चान्येषु कलशेषु यदा भवेत्
भेदो वा सुषुरच्छेदो वैलक्षण्यं क्रमेण तु ७७०
शान्तिहोममघोराणुजपं पञ्चशतं चतुः
शतं त्रिशतमित्येवं कुर्याद्दोषापनुत्तये ७७१
कुम्भाद्यं नवमानीय प्राग्वत् संस्थापनं नयेत्
वर्धनी वाथ कुम्भो वा घटा विद्येश्वराधिपाः ७७२
स्वर्णाम्बुजविहीना वा स्वल्पस्वर्ण समन्विताः
कुर्युः कर्तुस्च दारिद्र्यं जप्त्वाघोरं सहस्रकम् ७७३
शास्त्रसिद्धं पुनर्दद्यात् तद्दोषविनिवृत्तये

कुम्भाद्या वस्त्रहीनाश्चेद्वातरोगो भवेन्नृणाम् ७७४
जप्त्वाघोर सहस्त्रं तु दद्याद्वस्त्रं पुनर्गुरुः
पञ्चरत्नादि वैकल्येऽप्येवमेव समाचरेत् ७७५
सूत्रकूर्चपिधानादेरभावेऽप्येवमाचरेत्
हीने कौतुकबन्धेतु तदङ्गे वा पुरोदिते ७७६
स यागो निष्फलः प्रोक्तस्तस्मात्तद्दोषहानये
शान्तिहोमं तदाकुर्यात् कौतुकं बन्धयेत्ततः ७७७
जपेद्घोरं त्रिशतं तदङ्गानां विलोपने
तद्वदह्निकृते तस्मिन् कृत्वा सद्योऽधिवासनम् ७७८
पूर्वस्थानस्थिते देवे प्रोक्तं कौतुक बन्धनम्
आनीते मण्टपादौ वा जप्त्वाघोरं शतार्धकम् ७७९
बलितालाद्यभावे तु सहस्त्रं दक्षिणं जपेत्
त्रिशतं दीपहानौ च द्विगुणं दीपमाचरेत् ७८०
उत्सवो यानहीनश्चेत् सर्वदोषावहो नृणाम्
स्नपनं शान्तिहोमं च प्रतियानं समाचरेत् ७८१
वृषिकाले महावाते राष्ट्रक्षोभे महाभये
ग्रामप्रदक्षिणं नेष्टमिष्टं धामप्रदक्षिणम् ७८२
स्नपनं शान्तिहोमं च तदा कार्यं द्विजोत्तमाः
एकवास्तुनि विप्रेन्द्रा वर्तमाने शिवोत्सवे ७८३
अन्यदेवोत्सवस्तत्र कृतश्चेत् ग्राम विभ्रमः
तद्दोषविनिवृत्यर्थं शान्तिहोमं समाचरेत् ७८४
तथैव मातृशान्तौ च प्रायश्चित्तं समाचरेत्
अङ्गारकबलिश्चैव यामलोक्तो नदोषदः ७८५
वामभैरवसिद्धश्चेद्बलिर्ग्रामक्षयो भवेत्
बलिः प्रमादाद्दत्तश्चेच्छान्तिहोमं समाचरेत् ७८६
तथैव मातृशान्तौ च प्रायश्चित्तं समाचरेत्

शून्यग्रामं समाश्रित्य बलियाने प्रकल्पिते ७८७
तदा राष्ट्रक्षयं विद्यात् कृतं चेच्छान्तिमाचरेत्
आलये बलियाने वा तस्यां देवालयावृतौ ७८८
देवाङ्गवास्तौ शस्तस्स्यात् परवास्तोर्विशेषतः
तथैवासन्नवास्तुश्च दूरवास्तौ द्विजोत्तमाः ७८९
नानावृक्ष समायुक्तोऽनेकवेश्म समन्वितः
इतरस्मात् प्रशस्तस्स्याद्विपरीते विपत्करम् ७९०
ब्रह्मक्षत्रविशां वास्तुः श्रेष्ठ इत्यभिधीयते
अनुकल्पो ह्यशक्तानामन्यत्रैव समाचरेत् ७९१
अनुलोमाधिवासो वा शौद्रो वा मध्यमौ मतो
तद्विनाधिष्ठितो वास्तुर्हीन इत्यभिधीयते ७९२
अन्तर्वातोर्वि शिष्टस्स्याद्बहिर्वास्तु बलिभ्रमः
एकत्र बलियाने च श्रेष्ठमित्यभिधीयते ७९३
अनुकल्पो ह्यशक्तानामन्यत्रैवं समाचरेत्
अनुकल्पप्रवृत्तानां शान्तिहोमो जपोऽथवा ७९४
हीनेविताने घोरणोः शतसंख्यं जपं नयेत्
ध्वेज विहीनेऽप्येवं स्याज्जपोऽत्र शतसंख्यया ७९५
ध्वजे विहीने रात्रौतु दोषो नास्ति द्विजोत्तमाः
बलिद्रव्ये विहीने तु क्षुद्बाधा जायते नृणाम् ७९६
तद्दिनाधिपमन्त्रेण जपेतद्विशतसंख्यया
बलिद्रव्य समायुक्तं दापयेदन्यसन्धिके ७९७
बलिदाने विहीने च क्षुद्बाधा जायते नृणाम्
मूर्तिहोमं ततः कृत्वा यानान्ते वा बलिं नयेत् ७९८
देवालये बलिर्हीनो यदाघोरं शतं जपेत्
यस्सां दिशि बलिर्हीनो ग्रामादौ संहिताहुतिम् ७९९
तत्तद्दिशापतेर्मन्त्रं शतजापसमन्वितम्

विधाय यानकाले वातदन्ते वा बलिं नयेत्  ८००
अन्नलिङ्गे विहिने तु दुर्भिक्षं जायते भुवि
शान्तिहोमं ततःकृत्वा सान्नलिङ्गं बलिं नयेत्  ८०१
तच्छेदभेदपातादौ तथैव फलमादिशेत्
तल्लिङ्गं सुदृढं कृत्वा यजेदस्त्रं तु तद्गतम्  ८०२
विधाय संहिताहोमं तस्मिन्स्थानेऽप्यनन्तरम्
नयेदारभ्य तल्लिङ्ग पातस्थानात्प्रदक्षिणम्  ८०३
पतितं चेत्यजेदन्नं संपाद्यान्नं समाचरेत्
समाप्य पूर्ववद्यानं संहिताहोममाचरेत्  ८०४
बलिपात्रेषु पतिते त्वघोरेण शतं जपेत्
भेदादावन्यदादाय बलिद्रव्यं तु निक्षिपेत्  ८०५
दशायुधानि वा भूमौ संभूतानि पतन्तिचेत्
निर्वाणानि तदा कुर्याच्छान्ति होमं तदा नयेत्  ८०६
च्छेदभेदादियुक्तानि यदि दारुमयानि वा
तथान्यानि समापाद्य संभूतानीतराणि वा  ८०७
संस्कृत्य स्वस्वमन्त्रैस्तु सावशेषं समापयेत्
लोहजान्यनुकर्मोक्तया नीत्वान्ते स्थापनं नयेत्  ८०८
शूलास्त्रे पतिते राज्ञो भयं भवति तत्र च
धामादौ वा दिशाहोमं नयेदस्त्रार्चनान्वितम्  ८०९
च्छेदभेदादिके जाते त्वापाद्यैवानुकर्मवत्
उत्सवं पूर्ववत् कुर्यादन्येनास्त्रेण वा द्विजाः  ८१०
समाप्योत्सवकार्यं तु तत्संधायानुकर्मवत्
संप्रोक्षणं ततः कुर्यादस्त्रराजप्रतिष्ठया  ८११
यानकालेऽन्यकाले वा बेरादौ पतिते सति
राजा मरणमाप्नोति सद्यः कुर्यात् प्रतिक्रियाम्  ८१२
अव्यङ्गे पतिते बेरे पतिते वा करादधः

द्विकरात् त्रिकराद्वापि तदूर्ध्वं च क्रमान्नयेत् ८१३
संहिताशान्तिहोमौ च शान्तिं मूर्तिदिशाहुती
स्नपनं च जपेत् घोरमन्त्रेण शतसहस्रकम् ८१४
नैवेद्यमपि सामान्यमुत्सवं शेषमाचरेत्
अङ्गहीने ऽनुकर्मोक्त्या सन्धानाद्यं च निष्कृतिम् ८१५
अधिवासादिकं कर्म सद्य एव समाचरेत्
मासर्त्त तिथिवारादि प्रेक्षां हित्वैव देशिकः ८१६
पुनश्च कौतुकं बध्वा उत्सवाद्यं प्रकल्पयेत्
उत्तमाङ्गादिहीने चानुकर्मोक्त्या समाचरेत् ८१७
तत्राप्यन्येन बेरेण सन्धानान्तं हि चोत्सवम्
कारयेद्देशिको धीमान् प्रत्यहं शान्तिहोमयुक् ८१८
धामान्तरगतेनाथ कर्तव्यो वा द्विजोत्तमाः
गर्भद्वारादिमानेष्टमानयुक्तेन नान्यथा ८१९
ततो बेरं समापाद्यानुकर्मोक्त्या तदेव हि
प्रतिष्ठा च विधायान्ते चाङ्कुरार्पण पूर्वकम् ८२०
उत्सवं कारयेद्देवं नवाहाद्युत्सवेषु च
लिङ्गेऽप्येवं समानं दर्म हे शिवदीक्षिताः ८२१
उत्सवे ग्रामबाह्ये तु बद्धप्रतिसरे द्विजाः
बेरेऽतिनिन्दिते दोषो राज्ञो भवति शान्तये ८२२
शान्तिहोमं तदा कुर्यात् संहिताहोममेव वा
कुर्वाणश्चेत् क्रियांभूमौ पतितो देशिकस्तदा ८२३
ग्रामानवस्थितिर्ज्ञेया तदर्थं बहुरूपिणम्
जपेत् पञ्चशतं मन्त्री पतितेऽप्येवमेव हि ८२४
बलिदातरि तत्काले पतिते तं शतं जपेत्
आयुधास्त्रान्नलिङ्गेशवाहने पतिते भुवि ८२५
गुरुश्शतं जपेद्घोरं द्विगुणं शकरास्त्रयोः

पूजायाश्चैव सन्ध्यादिविभिन्नाया विलोपने ८२६
पाद्यादीनां च गन्धस्य पुष्पाणां धूपदीपयोः
अनिर्वाण प्रदीपस्य नैवद्यादेर्विलोपने ८२७
प्रागुक्तविधिना कुर्यात् प्रायश्चित्तं गुरुत्तमाः
विलुप्ते वह्निकार्ये वा होमद्रव्यविलोपने ८२८
निर्वाणेऽग्नौ शिवोपेतेऽप्यशिवे वाथ पूर्ववत्
रथारोहो विहीनश्चेन्नीचास्स्युर्मनुजा भुवि ८२९
शान्तिहोमं तदा कृत्वा रथारोहणमाचरेत्
यानकाले रथादीनां भङ्गे भङ्गो भुवो भवेत् ८३०
सन्धानयोग्यं सन्धानं कृत्वा शान्तिं समाचरेत्
तद्देश धाम्नि वा कुर्याद्यानादौ दोषशान्तये ८३१
सन्धानकर्मायोग्यश्चेद्रथान्तरमथानयेत्
आनीय शिविकाद्यं वा तत्रारोप्य महेश्वरम् ८३२
पूर्ववत् देवदेवेशं स्वालये विनिवेशयेत्
विनोद दर्शन काले जातश्चेत् कलहो महान् ८३३
शान्तिहोमं तदा कुर्यादघोरस्यायुतं जपेत्
विनोददर्शने हीने संहिताहोममाचरेत् ८३४
नीराजनविधौ हीने प्रायश्चित्तं तु पूर्ववत्
यानान्तस्नस्नपने हीने शान्तिहोमविलोपिते ८३५
देवसनिधि वैकल्यं मूर्ति होमः प्रतिक्रिया
स्नपनं शान्तिहोमं च नयेत् सन्निधि सिद्धये ८३६
हीनाधिष्ठितदेशे वा देवयाने प्रवर्तिते
प्रचुरस्नपनं कुर्याच्छान्तिहोमं महत्तरम् ८३७
तैलाभ्यङ्गे विहीने तु शिरोरोगो नृणामिह
शान्तिहोमं तदा कृत्वा तैलाभ्यङ्गं समाचरेत् ८३८
नृत्तमूर्त्युत्सवे हीने पूर्वसंकल्पिते नराः

भवन्ति पापिनस्सर्वे तदर्थं शान्तिमाचरेत् ८३९
नटेशभ्रमणं पश्चादिष्टकाले समाचरेत्
यात्रादानस्य विच्छेदे सा यात्रा निष्फला भवेत् ८४०
शान्तिहोमं तदा कृत्वा पूर्ववद्दानमाचरेत्
मृगयायास्तु वैकल्ये नृपस्यापजयो भवेत् ८४१
शान्तिहोमं तदा कृत्वा मृगयामिष्टभे नयेत्
हीने कौतुकतीर्थे स्यान्नैव गङ्गादिसन्निधिः ८४२
तद्वत्सूर्योदयात् पश्चात् तीर्थकार्ये कृते सति
निष्कृतिस्स्यात् क्रमाच्छान्तिहोमो वा संहिताहुतिः ८४३
एतत् कौतुकतीर्थे स्यात् ध्वजारोहे कृते सति
अन्यत्रकौतुक स्नानं कल्पयेद्वर्जयेत्तुवा ८४४
चूर्णोत्सवे तदङ्गे वा हीने स्याद्रोगपीडनम्
शान्तिहोमो भवेदङ्गिन्यङ्गे स्यात्संहिताहुतिः ८४५
विलुप्ते धाम्नि वा स स्यात्तीर्थस्नानेऽथवा पुनः
चूर्णोत्सवभ्रमे हीने संहिताहोममाचरेत् ८४६
महातीर्थ विलुप्तस्यात्स यागो निष्फलो निष्फलो द्विजाः
शान्तिं कृत्वा तदर्थं तु तीर्थकार्यं ततो नयेत् ८४७
पूर्वं नद्यादिके तस्मिन्वर्तमाने तदन्यथा
कृते तद्दोष शान्त्यर्थं शान्तिहोमं तदाचरेत् ८४८
तीर्थाङ्ग लोपे कर्तव्यस्संहिताहोम इष्टदः
प्रासादे मनुजे जाते मृते राजो भयं महत् ८४९
मृतादि तत्प्रोदेशांत्तु विसृज्य च बहिस्ततः
प्रोक्षयेत् गोमयाम्भोभिर्येन देशेन ते गताः ८५०
तद्देशे तु ततः कुर्यात् पुण्याह प्रोक्षणं च वै
मृतप्रसूतदेशं तु खानयोग्यं खनेत्तदा ८५१
परित्यज्य मृदोऽशुद्धा मृद्भिश्च परिपूरयेत्

प्रक्षाल्यासन्नकुडद्याद्यं गोमयालेपनं स्थले ८५२
पुण्याहं तत्र गव्येन प्रोक्षणं च क्रमान्नयेत्
शैव संभोजनं चान्ते जलसंप्रोक्षणं नयेत् ८५३
स्नपनं शान्तिहोमं च यदिगर्भगृहे भवेत्
शान्तिहोमोज्झितं कुर्यादर्धमण्डपके सति ८५४
प्रतिमामण्डपे शान्तिहोमं च स्नपनं विना
अन्तस्सालान्तरे चेद्धि जलसंप्रोक्षणं नयेत् ८५५
अन्तस्सालस्थ देवानां स्नपनं शान्तिहोमवत्
गव्येन प्रोक्षयेत्तत्स्थपीठान्यपि विशुद्धये ८५६
त्यजेन्मार्दानि भाण्डानि क्षालयेद्दारवं जलैः
अन्तस्सालस्य बाह्ये चेत् स्नपनेन दिशाहुतिः ८५७
पाकस्थानादि देशेषु मरणादौ च संभवे
पूर्वच्छुद्धिमापाद्य पर्यग्निकरणं नयेत् ८५८
शान्तिहोमं ततः कुर्यान्मूर्तिहोममथापि वा
प्राकारद्वय बाह्ये चेच्छान्तिहोमं समाचरेत् ८५९
धाम्नो द्वादशदण्डान्तवास्तौ मर्त्यो मृतो यदि
परित्यज्यैव तत् कुर्यान्नित्यनैमित्तिकादिकम् ८६०
कृतश्चेद् ग्रामनाशस्स्यात् तदर्थं स्नपनं नयेत्
सूतावापि मृता धाम्नि पक्षिणः पशवोः मृगाः ८६१
सर्पो वा जायते राष्ट्रनराणामिह दुःस्थितिः
गोमयालेपनं तत्र प्रोक्षयेत् पञ्यगव्यतः ८६२
स्नपनं गर्भगेहे चेच्छान्तिहोमं च कारयेत्
केवलस्नपनं चार्धमण्डपे परिकल्पयेत् ८६३
देवतामण्डपे तत्स्थदेवान् संप्रोक्ष्य गव्यतः
संपूज्य गन्धपुष्पाद्यैश्शान्तिहोमं च कारयेत् ८६४
एतत्सर्वं तु सामान्यमुत्सवेऽनुत्सवेऽपि च

उष्णीषमुत्तरीयं वा वसनं यज्ञसूत्रकम् ८६५
शिरो वा वह्निना दग्धं स्यादाचार्यस्य सुव्रताः
ज्वरबाधा भवेद्ग्रामे तद्दोषशमनाय च ८६६
गुरुस्स्नात्वा शुचिर्भूत्वा शान्तिहोमं च कारयेत्
एवमेव भवेत् कर्तृहोत्रादीनां मुनीश्वराः ८६७
वस्त्रशय्यासनादीनां दाहच्छेदादि संभवे
दष्टे वा मूषिकाद्यैस्तु क्रमात् फलमिहोच्यते ८६८
कोणे वा भोगवृद्धिस्स्यात् प्रान्तेऽनिष्टं प्रकीर्तितम्
पुत्रोत्पत्तिर्यशश्चैव दशपाशान्तमध्यमे ८६९
प्रान्तेनिष्टं समाख्यातं रोगो वा मृत्युरन्यतः
वस्त्रं वा त्रिगुणं कृत्वा ब्रह्मेन्द्रयमवह्निषु ८७०
महादोष समाख्यातो दोषो नान्यत्र कथ्यते
एवमेव नराणां च तदा स्नानं विधाय च ८७१
जप्त्वाघोर सहस्रं तु दष्टवस्त्राणि दापयेत्
नराणां शिवभक्तानां दीक्षितानां शिवाय वा ८७२
वस्त्राद्यं दैविकं चेद्धि प्रोक्ष्य गव्येन शुद्धये
कारयेत् संहिताहोमघोरं वा जपेत्तथा ८७३
अदीक्षितैश्च शूद्राद्यैः प्रविष्टे यागमण्डपे
संप्रोक्ष्यास्त्राम्बुना घोरं दशवारं जपेन्मनुम् ८७४
तत्संस्पृष्टे तु कुम्भादौ तदन्यं विनिवेशयेत्
संहिताहोमपूर्वं तु श्वादीनां च प्रवेशने ८७५
गोमयालेपनं चैव पुण्याहप्रोक्षणान्वितम्
गव्यसंप्रोक्षणोपेतं प्रतिलोमान्त्यजैर्यदि ८७६
सूतकैः प्रेतकाद्यर्वा कुम्भादींस्तद्गतांस्त्यजेत्
गोमयालेपनं कृत्वा पर्यग्निकरणं नयेत् ८७७
मूर्तिहोमं विधायान्ते कुम्भादीन् पूर्ववन्यसेत्

श्वादीनां स्पर्शनेप्येवं निष्कृतिः परिकीर्तिता ८७८
चराडालाद्यैः प्रविष्टश्चेदेवं कृत्वा तदन्तिके
स्नपनं कारयेच्छम्भोर्दिशाहोमं च कारयेत् ८७९
तैः स्पृष्टाः प्रतिमाद्याश्चेत् प्राग्वन्निष्कृतिमाचरेत्
यागशालाग्निदग्धश्चेद्धयं स्याद्राजवेश्मनि ८८०
व्यपोह्य पूर्वकुम्भादीन् संपूज्य वृषभध्वजम्
मूर्तिहोमं विधायान्ते पूर्ववद्यागमराडपम् ८८१
कृत्वा सद्योऽधिवासं तु पूर्ववत्सर्वमाचरेत्
कुम्भसंस्थापनोपेते विदग्धे यागमराडपे ८८२
महानसेऽथवा स्थानमम्डपे गोपुरादिके
विदग्धे शान्तिहोमं तु कृत्वा पूर्ववदाचरेत् ८८३
प्रपायामग्निदग्धायां संहिताहोममाचरेत्
विदग्धे गर्भगेहेऽर्धमराडपे प्रतिमादिके ८८४
अन्तस्सालान्तरे बाह्ये साले च क्रमशो भवेत्
स्नपनेन दिशाहोमो मूर्तिहोमस्तथाविधः ८८५
शान्तिश्च शान्तिहोमश्च संहिता होम एव च
दुष्टे तु लिङ्गबेरादौ तदुक्तां निष्कृतिं नयेत् ८८६
परिवालये कुर्यात् प्रतिमामराडपोक्तवत्
उत्सवेऽप्यनुत्सवेष्येतत् सामान्यं कर्म संमतम् ८८७
ग्रामादिवेश्मदाहे तु सम्हिताहोममाचरेत्
महादाहोद्भावे ग्रामे शान्तिहोमं समाचरेत् ८८८
प्रतिक्रियाह्यदत्ता चेद्वसनं चोत्तरीयकम्
सोष्णीषं देशिकद्रव्यं हैमपञ्चाङ्गभूषणम् ८८९
अङ्गुलीयकमात्रं वा तानि यानीष्टमानतः
अघोरशतमावर्त्य दद्यात्तान्यादराद्गुरोः ८९०
आचार्य संकरो राष्ट्रं राजानं नाशयत्यथ

एकाचार्येण कर्तव्यमेकदेवालयास्थितम्  ८९१
कर्मान्येन कृतं तच्छेत् तस्यादाचार्यसंकरः
ऋषय ऊचः
जलाद्याहरणं गन्धपुष्पधूपादिकल्पनम्  ८९२
दीपनैवेद्य संक्ळ्प्तिर्देवे नित्यार्चनं च यत्
सकलाराधनं यच्च परिवारार्चनादिकम्  ८९३
नित्योत्सवश्च गानाद्यं स्नपनाद्यङ्गकल्पनम्
उत्सवाद्यङ्गक्ळ्प्तिर्वा देवतावाहनादिकम्  ८९४
तत्काले मूललिङ्गादिपूजनं नित्यहोमकम्
अनेक नरनिर्वत्य कथमेकः करोत्यहो  ८९५
शिवः -
साधवास्ते महाप्राज्ञाः समाधिं कथयाम्यहम्
नित्ये नैमित्तिके काम्ये यत्कर्मैकालये स्थितम्  ८९६
एकाचार्येण कर्तव्यमिति साधूदितं मवा
देशिकस्यास्य पुत्रोवा पौत्रो वा तस्य बान्धवाः  ८९७
तद्दीक्षितास्तदादेश समाविष्टाश्च ये नराः
आदिशैव कुलेजाता ब्राह्मणाः क्षत्रिया विशः  ८९८
शूद्रा वा येऽनुलोमास्ते गन्धर्वा नर्तकादयः
रुद्रकन्याश्च पद्दास्यस्तदाज्ञापालका यदि  ८९९
तैरप्यनुष्ठितं कर्म देशिकेनानुष्ठितं भवेत्
यथा राज्ञा नियुक्तैस्तु सामन्त प्रमुखैरपि  ९००
यत्कृतं राजकार्यं स्यात्तथैवापि संमतम्
अन्यथा सति कर्तव्ये शान्ति तत्र समाचरेत्  ९०१
तत्र संकरदोषोऽपि फलमेवं च निष्कृतिः
क्रिया या वर्तते पूर्वं शास्त्रसिद्धा पुनः पुनः  ९०२
सर्वत्र क्रिया प्रकर्तव्याशास्त्रसिद्धां परित्यजेत्

अन्यथा सति कर्तव्ये राज्ञो ध्वंस उदाहृतः ९०३
शान्तिस्तदर्थं कर्तव्या तद्दोषनिवृत्तये
शास्त्रसिद्धैव पूर्वापि ततो ततो वृद्धिस्सुखप्रदा ९०४
तस्मात्सर्वप्रयत्नेन पूर्वमप्यधिकं चरेत् ९०५
इति ऊत्तरकामिकाख्येमहातन्त्रे प्रायश्चित्तविधिःत्रिंशतितमः पटलः

प्रणवासनमारूढं दुराधर्पं महाबलम्
पञ्चास्यं दशकर्णश्च प्रतिवक्त्रं त्रिलोचनम्
दंष्ट्राकरालमत्युग्रं मुक्तनादं सदुर्जयम्
कपाल मालाभरणं चन्द्रार्धकृतशेखरम्
केकराद्मं महामाला नागाभरण लेलिहम्
सूर्यकोटय्ययुताभं च विघ्नसंघातमर्दकम्
भुजैर्दशभिरत्युग्रैः भैरवास्त्रौस्समन्वितम्
खड्गचापमहाशूलाभय पाशांश्च दक्षिणे
खेट वाण कपालांश्च वरप्रासौ च वामतः
पिङ्गाभस्मश्रुभ्रू युक्तं तथा विधशिरोरुहम्
ध्यात्वैवं उच्चरन् मन्त्रमावाह्यार्चन मारभेत्

सिंहवक्त्रोग्रदंष्ट्राग्नि सप्रभोर्ध्वं शिखान्विताम्
कृष्णाञ्जननिभां वृत्तरक्तनेत्र त्रयान्विताम्
वहन्तीं सव्यहस्ताभ्यां शूलं डमरुकं वहन्
वहन्तीं वाम हस्ताभ्यां मुराडं शेषे पल्लवम्
कृष्णाम्बर धरां सास्त्रमां सास्यां नर्तने रताम्
मौक्तिकाभारणैर्युक्तां सर्वावय भूषणाम्
अट्टहासरवोपेतं कृष्णाजिन समन्वितम्

ध्यायेत् सूर्यसहस्राभं अघोरास्त्रं अरिन्दमम्
प्रदीप्तदशनप्रान्तं प्रकाशमुखकन्दरम्
त्र्यक्षं तटिल्लताजिह्वं दीप्तभ्रूश्मश्रुमूर्धजम्
सर्वोपवीतं शूलासि शक्तिमुद्गर धारिणम्
चतुर्भुजं चतुर्वक्त्रं स्फुरच्चन्द्रार्धशेखरम्
नृत्यमानं महाकार्यं नागाभरणभूषितम्
देवदानव दैत्यानां दर्पितानां विमर्दकम्

एकत्रिंशत्तमे पटले अद्भुत शान्ति विधिः

वक्ष्येऽद्भुतानां शान्तिं तु सर्वारिष्ट निवारिणीम्
रजन्यां दर्शनं भानोः परराज भयं भवेत् १
विप्र भोजन संयुक्तां तत्र शान्तिं समाचरेत्
दर्शे चाभ्युदिते चन्द्रे परो राजा भविष्यति २
पूर्ववत् कल्पयेत् शान्तिं मध्यमेनाधमेन वा
संभवे भूमि कंपेतु नृप भङ्गो भवेद् ध्रुवम् ३
मधुक्षीर घृतस्स्नानं सहस्रप्रस्थ संमितैः
तदर्धे वा तदर्धे वा शतप्रस्थैः तदर्धतः ४
स्नपनोक्ता शिवे कुर्यात् त्रिसप्ताहं द्विसप्तमम्
सप्ताहं वा धृतक्षौद्रैः श्रेष्ठ मार्गेण कारयेत् ५
प्रसाद मण्डपाद्यादि भ्रमणेप्येवमाचरेत्
नदी तटाक कूपादि क्षोभे दुर्भिक्षता भवेत् ६
तत्तीरे मण्डपं कृत्वा तन्मध्ये स्थण्डिले शिवम्
सांबं कुंभे च वर्धन्यां परितोष्ठ घटेषु च ७
स सूत्रांबरहैमेषु सप्ततीर्थं च कन्यया
पूजयेत् गन्धपुष्पाद्यैः दिशाहोमं समाचरेत् ८
कुंभांभः प्रक्षिपेत्तेषु पञ्चाहं ह्येवमाचरेत्

प्रतिमारोदनेस्वेदे नृपस्य मृतिमाचरेत् ९
सर्वेषां प्राणिनां नाशं सद्यः कुर्यात्प्रतिक्रियाम्
कृत्वातु प्रतिमा शुद्धिं श्रेष्ठां शान्तिं समाचरेत् १०
शान्ति होमं च विप्राणां भोजनं नित्यमाचरेत्
तदन्ते चोत्सवं कुर्यात् यथा वित्तं मुनीश्वराः ११
जाते शोणित वर्षेतु सर्वेषां नाशनं भवेत्
प्रासाद मण्डपादीनि रुधिराक्तानि शोधयेत् १२
गोमयालेपनं कृत्वा पर्यग्निकरणं नयेत्
पुण्याहं वाचयित्वातु मध्वाद्यैः स्नपनं नयेत् १३
भूमिकम्पोक्तमार्गेण शान्ति होमं च कारयेत्
सप्ताहमेवं कुर्याद्वा द्वित्रि सप्ताह मेव वा १४
मधु क्षीराद्य वृष्ट्यादौ राष्ट्र क्षोभं समादिशेत्
मृत्तैलाश्मासृगाद्यैर्वा वर्षश्चेत्तद्वदेवहि १५
तद्द्रव्य स्नपनं कुर्यात् भूमिकंपोक्तमार्गतः
विशेषाच्छिवमभ्यर्च्य भूरि नैवेद्य संयुतम् १६
शैवान् संभोजयेत् प्रश्चादेवं सप्ताहमाचरेत्
लोके मृदादि वृष्टिश्चेत् क्षीर स्नपन सम्युतम् १७
लिङ्ग बेरद्रुमादिभ्यः शोणितादेः समुद्भवे
संपूज्य गन्ध प्रमुखैः वस्त्रयुग्मेन वेष्टयेत् १८
दिशाहोमं नयेत्तेषु शैवान् संभोजयेत्ततः
पर चक्राद्भयं ज्ञेयं तद्भीतेर्विनिवृत्तये १९
लिङ्ग बेर द्रुमाद्यङ्गं शोधयेदस्त्रवारिणा
वास्तुं संपूजयेत्पश्चात् तदन्ते स्नापयेच्छिवम् २०
शान्ति कर्मोक्त नक्षत्र वशादेतत्समाचरेत्
अकस्मात्पतितं धाम मूलादामस्तकं यदि २१
नृप भङ्गो भवेत्तेन मूर्तिहोमं तु कारयेत्

स्नपनं च शिवे नृत्यं कुर्याद्वित्तानु सारतः २२
शान्त्युक्त दिन संख्यया वशेनैतत्समाचरेत्
प्रासाद मनुकर्मोक्त्या श्राद्येष्टकादि युतं नयेत् २३
त्रिपादेऽर्धे तथा पादे तदर्धे वाथभग्नके
कुर्याद्धाम्नोऽथ सन्धानं सप्तपृष्ट पञ्च वेदभम् २४
प्रायश्चित्तं प्रकर्तव्यं प्रागुक्तं भावितात्मभिः
स्थूयाद्यवयवे छीन्नेऽप्येत देकाहमाचरेत् २५
नादिकाद्यङ्ग वैकल्ये सन्धानं संयगाचरेत्
श्रकस्माद्धामभेदादौ फलमिन्द्रादि दिग्वशात् २६
निष्कृतिश्च पुरा प्रोक्ता ततस्तद्वत्समाचरेत्
धामान्तरस्थ देवानां भग्नादौ समुपस्थिते २७
श्रनुकर्मविधोनोक्तं कुर्यात्कर्म गुरुस्तदा
मराडपादि निपाते च शान्तिमेकाहमाचरेत् २८
धाम स्थानान्तरं प्राप्तं यदिलिंगादिसंयुतम्
नृपतेरादिशेद्भङ्गं तेन वैदेशिकोत्तमः २९
संपूज्य देवं गन्धाद्यैः श्रेष्ठशान्तिं समाचरेत्
शैव संभोजनोपेतां विप्रभुक्ति समन्वितम् ३०
लिङ्गान्तरं प्रतिष्ठाय पूर्वमान समं यथा
बाणलिंगादिकं वाथ प्रासादेन समन्वितम् ३१
श्रथवा पूर्वलिंगं चेत् तत्प्रासाद समन्वितम्
श्रनुकर्मविधानेन पूर्वस्थाने समं नयेत् ३२
हीनं प्रासादमात्र स्यात् पूर्वस्थाने समाचरेत्
स्थानानन्तर गतं लिंगं उदक् पूर्वत्र विन्यसेत् ३३
तत्स्थाने धाम वा कार्यमनुकर्मोक्त वर्त्मना
वृक्षे स्थानान्तरं प्राप्ते सस्यनाशो भविष्यति ३४
तद् वृक्ष जाति संभूत समिद्भिर्मूर्ति होमकम्

समाचरेद् द्विसप्ताहं शैव भोजनं संयुतम्  ३५
तत्समीपे स्थिते लिंगे स्वयं भूतादिके परम्
स्नपनं कारयेन्नित्यं प्रभूत हविषान्वितम्  ३६
स्थापयेत् पूर्वदेशेऽन्य वृक्षं तज्जाति संभवम्
तदन्य कुसुमे जाते तदन्य फल संभवे  ३७
संवत्सरत्रयादर्वाक् वृक्षे पुष्पफलोद्भवे
सप्ताहं वा नवाहं वा पञ्चाहं शान्तिमाचरेत्  ३८
तन्मूले शान्ति होमं च प्रत्यहं गुरुराचरेत्
शिवलिङ्गे च बेरे वा पीठे वोष्णादि संभवे  ३९
सर्वे ज्वरादि भूतास्तु नश्यन्ति मनुजा ध्रुवम्
गन्धोदै र्नालिकेराद्यैः विन्यस्तैः स्नपनोक्तितः  ४०
स्नापयेत् परमेशानं पञ्चामृत समन्वितम्
अथवाक्षीर मध्वाज्यैः प्रस्थैस्संस्नापयेच्छिवम्  ४१
सहस्रादि चतुष्प्रान्तैः आढकादि समन्वितैः
चन्दनागरु कर्पूरोशीर कुंकुम संयुतम्  ४२
गन्धं महत् समालभ्य पुष्पाद्यैर्पुष्कलैर्यजेत्
दिशाहोम्रं ततः कुर्यात् यावदौष्णं निवर्तते  ४३
शीतकुंभोऽपि कर्तव्यश्शान्ति मिच्छन्नरैस्तदा
नरा मृगाश्च पशवः पक्षिणो वा सरीसृपाः  ४४
जनयन्तिस्वजात्यन्यं यदि क्षोभो भवेद्भुवि
बहुशीर्षक हस्तांघ्रि नासादेहादि संयुतः  ४५
स्ववर्णेतर वर्णादि भ्रूविकारादि संयुताः
स्पष्ट वर्णायुता अश्वादयो जातायति द्विजाः  ४६
तथाभूतान्परित्यज्य सद्यः कुर्यात्प्रतिक्रियाम्
शिवं संपूज्य विधिवत् दिशाहोमं समाचरेत्  ४७
शैवान्संपूज्य विधिवत् शान्तिहोमं समाचरेत्

शिवान्संभोजये देवं नयेद्वा सप्तपञ्चमम् ४८
निष्कृतौ गोगजाश्वानां सत्यां तेषां निकेतने
नित्यं वास्तुबलिं शान्ति होमं न्तेत्रेश्वरेज्यया ४९
युद्धे वा पर्वतादीनां राज्ञो युद्धभयं भवेत्
शिवं संपूज्य विधिवत् दिशा होमन्तु कारयेत् ५०
स्नापयेत् परमेशानं नव सप्ताह माचरेत्
लिङ्गे बेरे च पीठे वा स्वेदो राष्ट्र भयं भवेत् ५१
प्रन्नाल्यास्त्रांबुनाभ्यर्च्य शान्तिं सप्ताहमाचरेत्
लिंगे बेरे विमाने वा मराडपे गोपुरादिषु ५२
परिवारालये साले देवेशास्थानमराडपे ५२ १-२
सभास्वशनिपाते च राज्ञो व्याधिं समादिशेत्
नव प्राकार मार्गेण क्रमाच्छान्तिं समाचरेत् ५३ १-२
तत्र लिंगे च पिठे च बेरे वायं विधिर्भवेत्
दिशाहोमं ततः कृत्वा महा स्नपन संयुतम् ५४ १-२
अष्टोत्तरशत स्नानं युतं पञ्चामृतान्वितम्
पञ्चगव्य समोपेतं मधुन्तीरं घृतैरपि ५५ १-२
सहस्रादि चतुष्प्रान्तैः प्रस्थमानैर्महेश्वरम्
स्नापयित्वार्चये द्विप्रान् भोजयेच्शान्ति होमयुक् ५६ १-२
एवं कृतेतु सप्ताहं अन्ते चोत्सव माचरेत्
प्रासादे सर्वधाभिन्ने प्राग्वदेवमुनीश्वराः ५७ १-२
अकस्मात्पतिते धाम्नि यदुक्तं तद्वदाचरेत्
प्रायश्चित्तं तथैवास्यां मराडपादौ शिवाग्रजाः ५८ १-२
शैवान् संभोजयेन्नित्यं शिवशास्त्र विशारदान्
प्रादादे निष्कृतिः प्रोक्ता यासानृपति केतने ५९ १-२
शैत्य वृन्तेथवाश्वत्थे चान्यस्मिन् देवतात्मके
सप्ताहं शान्तिः कर्तव्या महा शान्ति निपातिते ६० १-२

प्रत्यहं शान्ति होमं च कृत्वा तत् वृत्त पूर्वतः
तत्रैव तत् समीपे वा तज्जातीयन्तरुन्यसेत्  ६१ १-२
ग्रहे कूपे तटाके वा नद्यां वा शान्तिरेकहम्
करिणी मदयुक्ताचेत् वाहनानां त्तयो भवेत्  ६२ १-२
सप्ताहं शान्तिः कर्तव्या शान्ति होमं च तत् गृहे
महा वात प्रकोपेतु राष्ट्र त्तोभो भविष्यति  ६३ १-२
पञ्चाहं त्रिदिनं वैक दिनं वा शान्तिमाचरेत्
धूमे समुद्भवे चाग्नौ करोति स्वामिनो भयम्  ६४ १-२
गव्येन प्रोत्तयेत्तत्र धारयाथ खनेद्ध्रुवम्
शुद्ध मृद्भिश्च पूर्याथ पञ्चमृद्भिश्चलेपयेत्  ६५ १-२
पुरायाहप्रोत्तरान्तत्र ब्राह्मणांस्तत्र भोजनम्
शान्तिस्तत्र विधातव्या नव भेद विभेदिनी  ६६ १-२
लिङ्ग बेरासने धूमे दुष्टे त्वेतच्चकारयेत्
त्तीर प्रस्थ सहस्रैर्वातदर्धे स्नापयेच्छिवम्  ६७ १-२
तदर्धैवा तदर्धैवा शीत कुंभ स्तदन्तिके
लिङ्ग बेरे च पीठादौ वर्णान्तर गते सति  ६८ १-२
राज्ञो व्याधिं विजानीयात् त्तालयेन्निर्मलं तथा
पिष्टमृत् बिल्व दर्भैश्च रजन्या मलवारिभिः  ६९ १-२
शान्तिरेवं प्रकर्तव्या ज्येष्ठ मध्यादि भदतः
चन्दनो शीर कर्पूर कुंकुमा गरु संयुतम्  ७० १-२
पुष्कलं गन्धमापाद्य लेपयेत् गन्धमादरात्
संपूज्य गन्ध पुष्पाद्यः प्रार्थयेद् दुरितत्तयम्  ७१ १-२
शैवान् संभोजयेन्नित्यं सामान्यान् ब्राह्मणानपि
भेर्यादीनां स्वयं घोषे महा मारी प्रवर्तते  ७२ १-२
संप्रोत्त्यस्त्रांबुना भेरी प्रमुखान् गन्धपुष्पकैः
अभ्यर्च्य देव देवेशं शान्तिमिष्टां समाचरेत्  ७३ १-२

प्रति सूर्योदयेवापि प्रतिचन्द्रप्रदर्शने
जायते भूपति स्त्वन्यो यत्र राष्ट्रे भवेदिदम्  ७४ १-२
नवाहाद्येकरात्रान्तं शान्तिमिष्टां समाचरेत्
रात्राविंद्र धनुर्दृष्टे पर चक्राद्भयं भवेत्  ७५ १-२
शुक्रादिका गृहं त्यक्त्वा दिवातारक दर्शने
अनावृष्टि र्ध्रुवं लोके गृहनक्षत्रपातने  ७६ १-२
वाहनानां क्षयं विधात् तदर्थं शान्तिमाचरेत्   ७७
नवाहाद्येकरात्रान्तं विभवस्यानुरूपतः
अग्निनक्षत्र पाते च जपेत् घोरं शतत्रयम्  ७८
प्रत्यहं षट्दिनादूर्ध्वमशनेः पातने सति
राज्ञो दोषः प्रजायेत तदर्थं तु दिशाहुतिम्  ७९
सप्ताहं वाथ पञ्चाहं तत् पात दिन संख्यकम्   ७९ १-२
स्नपनेन समोपेतं राज्ञोदोषनिवृत्तये
क्षीराद्यैः स्नपनं कुर्यात् सप्ताहाशनि संभवे  ८० १-२
चन्द्रार्क मण्डले पञ्च दिनोर्ध्वं परिवेष्टते
तन्मण्डलाधिपो राजा शत्रुभिश्चाभिभूयते  ८१ १-२
शान्तिं कुर्याद्विशेषेण ज्येष्ठमध्यादि भेदिनीम्
वह्नि दाहेदिशां जाते दुर्भिक्षं भुविजायते  ८२ १-२
क्षीराभिषेचनं देवे स्नपनोक्त्या ततो नयेत्
तदन्ते शान्ति होमं च पञ्चाहं ह्यैव माचरेत्  ८३ १-२
लिङ्गादावर्चिते गन्ध पुष्पाद्यै त्वन्यवर्णके
सर्वेषामपि वर्णानां म्सूरी रोग मादिशेत्  ८४ १-२
शिवं संपूज्य विधिवत् दिशाहोमन्तु कारयेत्
पञ्चाहं त्रिदिनं वापि प्रभूतं तु हविर्निवेत्  ८५ १-२
अकस्माच्चैत्य वृक्षे तु पतिते बोधिसंज्ञिके
समूले नृपतेर्व्याधि मादिशेन्मृति सूचनम्  ८६ १-२

शिवं संपूज्य विधिवत् श्रेष्ठां शान्तिं समाचरेत्
तद्देशे शान्ति च यद्देशे पतितिस्तरुः ८७ १-२
तज्जातीयं तरुं तत्र न्यसेद्वा तत्समीपके
तच्छारवाः पतिताश्चेद्धि राष्ट्रक्षोभो महान्भवेत् ८८ १-२
शान्तिं श्रेष्ठस्य मध्यं तु दिशा होमं तु कारयेत्
तदेक शाखा पतने कलहो भुवि जायते ८९ १-२
शान्तिं श्रेष्ठाधमां कुर्यात् क्रमादेवं त्रिधा मतम्
द्वि सप्ताहं नवाहं वा सप्त पञ्चाग्निभिं तथा ९०१-१
शान्तिं समाचरेद्वाथ पक्षेषु त्रिषुवाग्रजाः
एवमेवान्यवृक्षाणां प्रधानानां समाचरेत् ९१ १-२
शलभादि समुत्पन्ने दुर्भिक्षं जायते भुवि
मूर्ति होमं त्रिसप्ताहं कारयेच्छैव भुक्तियुक् ९२ १-२
नरा मृगाश्च पशवः पक्षिणो वा सरीसृपाः
उन्मत्ताश्चे त्तु सप्ताहं दिशाहोमं त्र्यहं तु वा ९३ १-२
कारयेत् त्रिदिनं वाथ गजाश्वमरणोद्भवे
अतिवृष्टि समुत्पत्तौ भुवौ दुर्भिक्षतां वदेत् ९४ १-२
सक्तु प्रस्थ सहस्रैश्च रात्रि चूर्णै स्तथामतैः
तदर्धै र्वा तदर्धर्धै र्वा शतप्रस्थै स्तदर्धतः ९५ १-२
अर्धैर्वा स्नापयेद्देवं स्नपनोक्त प्रकारतः
आलोढ्य रजनीं पश्चात् कर्पूरेण विमिश्रिताम् ९६ १-२
षड्वेद नेत्रमात्रं तु वेष्टयेत् लिंग पिण्डिके
बेरं वाऽगरु कर्पुर वर्ति दीपान नेकशः ९७ १-२
मुद्गान्नं तापयेत्पश्चात् शान्तिहोमं तु कारयेत्
एवं कुर्यात्तु सप्ताहं पञ्चाहं त्रिदिनं तु वा ९८ १-२
राज्ञ प्रधान महिषी प्रधानाश्वो गजोथ वा
गुरुः पुरोहितो वाथ मृतश्चे न्नृपते र्भयम् ९९ १-२

संपूज्य देव देवेशं सप्ताहं शान्ति माचरेत्
पञ्चाहं त्रिदिनं वाथ गजाश्व मरणे नयेत् १०० १-२
मृत्युजिन्मनुना साष्ठ सहस्रालब्धकेन तु
तोयेन सेचयेद्राज्ञो मस्तके तं मनुं स्मरन् १०१ १-२
शेषोदं स्नानपानार्थं दद्यादायुष्यसिद्धये
प्रत्यहं होमरक्षां च देव देव प्रसादजम् १०२ १-२
भस्मापि नेयमाचार्यैश्शैव सिद्धान्त पारगैः
सप्ताहाभ्यन्तरे तां च वरयेत् मतिमान्नृपः १०३ १-२
गुरुं पुरोहितं वाथ महिषीं गजमेव च
वाजिनं वा तदप्येवं राजराजाङ्ग माहरेत् १०४ १-२
प्रासादे मण्डपादौ वा प्राकारे गोपुरेथवा
परिवारालयोर्ध्वे वा नृपस्य भवनोपरि १०५ १-२
ग्रहेषु मालिकादौ वा श्वारोहस्तस्य रोदनम्
मार्जार प्रमुखानां रोदनं यदि जायते १०६ १-२
स्थान भ्रंशं तदा मर्त्याः प्राप्नुयुस्तन्निवृत्तये
तं हत्वाथ ततस्त्यक्त्वा पुण्याहं वाचयेत्ततः १०७ १-२
शान्तिं तत्र नयेदिष्टां रोहणे रोदनेऽपि च
शान्ति होमोऽथवा घोर जपो मार्जाररोदने १०८ १-२
शिवारोहे विशेषेण शान्ति मेकाहमाचरेत्
अश्वालयेऽग्नौ संजाते सप्ताहं शान्तिमाचरेत् १०९ १-२
लिंगे बेरे च पीठादौ खद्योतारोहणे सति
राज्ञी वा तन्महिष्यादौ चान्यस्मिन् पुरुषेथ वा ११० १-२
तेषां दोषं विजानीयात् देवेचेद्राज दोषदम्
तं हत्वा तांश्च संस्नाप्य शान्ति होमं समाचरेत् १११ १-२
स्नपनञ्चशिवेकुर्यादेकाहं त्रिदिनन्तु वा
नृपतेश्च मनुष्याणान्देहे घोरं जपेत्तु वा ११२ १-२

लिंगमूले च पीठे वा बेरे वा गर्भगेहके
परिवारेऽथ जायेरञ्जन्तवो वाथ मक्षिकाः ११३ १-२
प्रचुराश्चेत् भुवः क्षोभो भवेत्तद्दोष शान्तये
तत्स्थानं शोधयित्वाष्ट बन्धाद्यैर्बन्धयेत्तथा ११४ १-२
पुरायाहं वाचयित्वान्ते शान्ति युक्त्या समाचरेत्
कवाटोद्घाटनेवाथ पिधाने स्वयमेव च ११५ १-२
संजाते राष्ट्र विक्षोभ शान्तिं सप्ताहमाचरेत्
चरन्ति केतवे व्योम्नि नानारूपास्समन्ततः ११६ १-२
सूर्येवास्तंगते तस्मिन् उदयात् पूर्वमेव वा
दृश्यन्ते श्वेत रक्तादि वर्णा नक्षत्र सन्निभाः ११७ १-२
दीर्घपुच्छायथाविद्यात् राष्ट्रक्षोभं महत्तरम्
शान्तिं कुर्यात्तदा श्रेष्ठ मध्यमाधममार्गतः ११८ १-२

इति उत्तरकामिकाख्ये महातन्त्रे अद्भुतशान्ति विधिः
एकत्रिंशतितमः
पटलः

द्वात्रिंशत्तमे पटले अनुकर्मविधिः

अनुकर्मविधिंवक्ष्ये सर्वेषां च सनातनम्
प्रासादे पतिते भिन्ने वक्त्रे जीर्णे च दिग् भ्रमे १
हीने जात्यादि संस्थानेमानोन्मानादि हीनए
तत्तद् द्रव्यैरथोत्कृष्टैः मानयुक्तं तथा नयेत् २
मानयुक्तं तु यद्वस्तु तत्सर्वं पूर्ववत् नयेत्
मानयुक्तमधिष्ठानाद्यङ्गंयद्विपरीतजम् ३
तदप्यलक्षणं तस्याप्यन्यथाभाव इष्यते
स्वायम्भुवादि लिङ्गेषु कल्पितं पूर्ववन्नयेत् ४
शास्त्रोक्तं वाथतन्नेयं तत्रदोषो न विद्यते

अथवाश्ममयं बाह्येऽबाह्ये स्यादिष्टकामयम् ५
मानयेन्मानवे धाम्नि कूट पञ्जरकोष्टकाः
अस्थानस्था विधातव्याः स्वस्थानस्था विशेषतः ६
नागरे नागरं कुर्याद्विसरे वेसरं मतम्
द्राविडे च तथा कार्यं वराटादौ तथा मतम् ७
घनेऽघने विमाने तु तथा भवनमिष्यते
भवनं जीर्ण मन्यस्मिन् कुर्वन्दिक्षुचकारयेत् ८
पूर्वस्मिन्नुत्तरे वापि कुर्यात्कोणेषुबुद्धिमान्
द्वारं पूर्ववदिष्टं स्यात्पश्चिमद्वारमेव वा ९
नष्टे संस्थापयेद् गर्भं तथाचाद्येष्टकामपि
नासिकाद्यङ्गहीनेतु पुनस्तद्वत्समाचरेत् १०
अप्रमाणेऽन्यथाचेद्धि सप्रमाणं यथा नयेत्
सुस्थितंदुस्थितं वापि शिवलिङ्गं न चालयेत् ११
जीर्णादिदोषसम्युक्तं पूजायुक्तं तु सुस्थितम्
जीर्णादिदोषरहितं पूजाहीनन्तु दुस्थितम् १२
जीर्णोद्धारे कृतेकर्तुर्मौलिकं फलमिष्यते
जीर्णाद्यं पूजितं हन्ति निहन्ति तदपूजितम् १३
तस्मात्समुद्धरेज्जीर्णं यथा शास्त्रं सुखाय च
जीर्णं दग्धं कृशं स्थूलं हीनं मानाधिकं तथा १४
भग्नं च सक्षतं लिङ्गमसमं यच्च दृश्यते
लक्ष्मोज्झितंवज्रहतं संपुटं स्फुटितं तथा १५
आभीचारकं गर्भाढ्यं व्यङ्गाङ्गयेति कीर्तितम्
त्याज्यानि सर्वथैतानि लिङ्गानि षोडशैव तत् १६
जीर्णाद्यैस्संयुतंत्याज्यं पीठं वा कशिला वृषः
अत्युच्चनिम्नादिङ्मूढमध्यस्थं विषमस्थितम् १७
चलितं चालितं लिङ्गं पतितं पातितं तथा

अज्ञेनस्थापितं लिङ्गं तथामन्त्रक्रियेतरम् १८
परित्यक्त शिलायोगमपि न स्थापितं भवेत्
तथैव स्थापनीयानि यद्येतान्यव्रणानि हि १९
असुरैर्मुनिभिर्देवैः तत्वविद्भिः प्रतिष्ठितम्
जीर्णं वाप्यथवा भग्नं विधिनापि न चालयेत् २०
नृपतस्करवह्निभ्यो भयादन्यत्र धारयेत्
ह्रियमाणं जलेन हृतं तेन च यद्भवेत् २१
न विरोधोऽस्ति लिङ्गस्यलक्षार्धजपतश्शुचिः
स्थापनं तेषु वान्यत्र कर्तव्यं पूर्ववन्मुखम् २२
शतदन्डान्तरेस्थाप्यं जलबाधा समन्वितम्
सहस्रकार्मुकान्तं वा स्थापयेल्लिङ्गं मादरात् २३
बेरेऽप्येतत्समानं स्यांदुष्टे त्वन्यत्प्रयोजयेत्
बेरे शिलामयेमार्देपक्वे वार्क्षेऽथ रत्नजे २४
पद्म भ्रुवास्यरेखादिहीने तु परिवर्जयेत्
अङ्गहीने तु तत्त्याज्य मित्यत्रज विचारणा २५
लोहजे मृरामये मृरामये बेरे हस्त नास्यङ्घ्रि भूषरौः
कर्णदन्तादिभिर्हीने तत्तद्व्यर्दृढं नयेत् २६
उत्तमाङ्गविहीनेतु त्यक्त्वान्यद्योजयेन्नवम्
पद्बाहुहीनेत्याज्यं वा सन्धानं वासमाचरेत् २७
उपाङ्गमङ्गं प्रत्यङ्गं शरीराङ्गं त्रिधास्मृतम्
अङ्गं प्रधानशूलं स्यात् ब्रह्मदराडस्तु कथ्यते २८
वक्षोदराड कटिस्थश्च बाहुकूर्परकोष्ठगाः
ऊरुस्थेजानुजङ्घे च उपाङ्गान्युदितारिण च २९
शेषं दराडाद्विजानीयात् प्रत्यङ्गानीतिबुद्धिमान्
ब्रह्मदराडविहीने तु शूलस्थापनमारभेत् ३०
प्रत्यङ्गो पाङ्ग हीने तु पुनस्सन्धानमाचरेत्

पूर्वसंस्थापितो ब्रह्मदराडश्चेल्लन्नणान्वितः ३१
तमेव स्थापयेत्तत्र पुनरापादनं विना
भङ्गादीनां समुत्पत्तौ पुनस्संस्थापनं नयेत् ३२
शैलंवामृरामयं पक्वमगाधेऽम्भसिनिन्निपेत्
रत्नजं च परित्याज्यं ग्राह्यं वा घटनाय च ३३
वार्न्नं शिवाग्नौ निन्निप्य भूमौवानिरवनेज्जले
लोहं द्रवीकृतं तत्र योजयेद्वेरकर्मणि ३४
तत्प्रभां पीठीकां वापि तत्र वान्यत्र योजयेत्
अप्रतिष्ठित देवश्चेत् तत्पीठादौनियोजयोत् ३५
तस्योपकरणार्थं वा योज्यं देवान्तरेऽपिवा
सलन्नणातु पीठी चेत् तद्वत् ब्रह्मशिलावृषः ३६
ते सर्वत्र प्रयोज्यास्स्युत्त्याज्यावामुनि पुङ्गवाः
शैलपीठस्य चोद्धारं कृत्वाशैलं तु योजयेत् ३७
अलाभे चेष्टकाभिश्च तथापीठं सुयोजयेत्
पश्चात् शैलं समायोज्यमाकृति पूर्ववद्भवेत् ३८
चतुरश्रेतु वृत्तं वा नवृत्ते चतुरश्रकम्ज्
मराडपे परिवारे च परिवारालयेऽप्यथा ३९
अनुकर्मविधिं प्राग्वद्विधिना कल्पयेत्ततः
अन्तर्मराडलसालाद्यं पूर्ववत्परिकल्पयेत् ४०
ततो वृद्धिर्न्नयौ वास्तोर्नृपते र्विपदाकरौ
सप्रमाणे यथा शास्त्रं विहितालंकृतान्विते ४१
अप्रमाणेऽन्यथाचेत्तु तत्र दोषो न विद्यते
प्रशस्ता प्रागुदग् वृद्धिः प्रतीच्छ्यांरिपुभिः न्नयः ४२
दन्निणे मरणं कर्तुस्तस्माद्वृद्धिर्नचेष्यते
तद्वास्तु परितोवृद्धिः समावाविषमापि वा ४३
गोपुरेऽप्यनुकर्मैवं प्रासादोक्तवदाचरेत्

ग्रामादीनां गृहादीनां शालानां च विशेषतः ४४
आरभ्यव्यासदीर्घाभ्यां हीनं नेष्टं मुनिश्वराः
समं वा योजयेत्तस्मादधिकं वापि योजयेत् ४५
युक्तिततः परितो वापि प्रागुदग् दिशिवर्धयेत्
गृहमालिकयोर्भूमिं संख्ययापरिकल्पयेत् ४६
सर्वथानोचितं हीनं कुर्यादुक्तक्रमेण तु
उक्तानामपि सर्वेषा विशेषः कश्चिदिष्यते ४७
हीनं कुर्याद्वरद्रव्यैस्समं वा तत्र पूर्ववत्
जीर्णेपिधाने धामाद्यमासनस्थादिभिः समम् ४८
किन्तु खट्गमये मन्त्राविन्यस्यापरमाहरेत्
लिङ्गादौ च घटे पूर्णे पीठे वा प्रत्यहं यजेत् ४९
स्थापयेदपरं यद्वा विसर्जन पुरस्सरम्
यद्रूपं यत् प्रमाणञ्च यन्मयं यदनुद्धतम् ५०
सर्वेषामपि चैतेषामुद्धारव्धिरुच्यते
तदग्रे मण्डपं कुर्याद्द्वे वैऽसानकोणके ५१
पूर्वद्वारसमोपेत मेकतोरण संयुतम्
सर्वालंकार संयुक्तन्तर्भामालादि संयुतम् ५२
तत्रापि द्वारपूजादि स्थण्डिले तु शिवार्चनम्
मन्त्रसन्तर्पणं कृत्वा वह्नौ कुण्डादि कल्पिते ५३
समिदाज्यतिलोपेतं हविषा च समन्वितम्
वास्त्वन्तदिक् बलिं समाचम्य गुरुत्तमः ५४
सकलीकरणं कृत्वा भोजयेच्शिवलिङ्गीनः
ततो विज्ञापयेद्देवं प्रभोदोषावहं त्विदम् ५५
अस्योद्धारे कृते शान्तिर्भवतीति भवद्वचः
अस्योद्धारायमान्त स्मादधितिष्ठस्सदाशिवः ५६
एवं कर्मकिलोक्तेशश्शान्तिहोमं समाचरेत्

च्चीराज्यमधुदुर्वाभि श्शिवेनाष्टसहस्रकम् ५७
गत्वात दन्तिकं मंत्री हृदास्नाप्य प्रपूजयेत्
व्यापकेश्वरशब्दन्तु चतुर्थ्यन्तं प्रयोजयेत् ५८
प्रणवादि नमोन्तन्तु मूलमन्त्रोयमीरितः
व्यापकेश्वर शब्दन्तुहृदयादिपदं ततः ५९
चतुर्थ्यन्तं प्रयोक्तव्यं प्रणवादि समन्वितम् ५९ १-२
नमस्कारान्त संयुक्तं हृदयाद्यंग पञ्चकम्
न बीजं योजयेत्तैस्तु लिङ्गञ्ज प्रणवासने ६० १-२
स्थण्डिलस्थं यजेन्मन्त्रीं गन्धपुष्पसृगादिभिः
ततस्तदाश्रितं सत्वं श्रावये दस्त्र मुच्चरन् ६१ १-२
सत्वं कोपीह यः कश्चिदिदमाश्रित्य तिष्ठति
लिङ्गन्त्यक्त्वा शिवाज्ञाभिर्यथेष्टं तत्र गच्छतु ६२ १-२
विद्याविद्येश्वरैर्युक्तश्शंभुरत्रभविष्यति
एवमुक्त्वा महास्त्रेण दत्वार्घ्यन्तु पराङ्मुखम् ६३ १-२
तस्माद्देवं समावाह्यकुंभे संस्थापयेत् गुरुः
अग्रस्थण्डिलसंयुक्तेस्वर्ण वस्त्र समन्विते ६४ १-२
सकूर्च्चे सापिधाने च ससूत्रेपल्लवान्विते
तथा विधायां वर्द्धन्यामम्बिकां स्थापयेत् गुरुः ६५ १-२
संपूज्य गन्धपुष्पाद्यैस्त्वनुगुप्तन्निधापयेत्
प्रत्यहं चार्चनं कार्यं शान्तिहोमसमन्वितम् ६६ १-२
ततः पाशुपतास्त्रेण प्रतिभागं सहस्त्रकम्
हुत्वाशान्त्यं भसाप्रोन्द्यकुशैःस्पृष्ट्वाजपेत् गुरुः ६७ १-२
विलोमार्घ्यन्ततो दत्वा विसृजेत्तत्वतत्वपान्
तदन्ते मूर्तिमूर्तीशान् लिङ्गपिण्ड्यादि संस्थितान् ६८ १-२
सुवर्णान्तररज्वा वा वृषभेण प्रचालयेत्
शिवमस्तु गृणन् लोकैः प्रिक्षिपेत्तुजलेगुरुः ६९ १-२

भूयः पुष्ट्यर्थकं कृगादिक् पतीनां प्रतर्पणम्
प्रासादवास्तुशुद्ध्यर्थं होतव्यन्तु शतं शतम्  ७० १-२
महापाशुपतास्त्रेण प्रासादन्तत्ररक्षयेत्
तन्मानमपरञ्चात्र स्थापयेद्देशिकोत्तमः  ७१ १-२
स्वयमुत्भूत् लिङ्गानान्दैविकेवार्षिकेपिवा
गाणवे लोहजे चैव नदीप्रस्त्रवणादिषु  ७२ १-२
एवमादिष्टलिङ्गेषुनैवकार्या घटस्थितिः
मानुषाणाञ्च लिङ्गानां घटकार्यन्तदुच्यते  ७३ १-२
सप्ताहान्तञ्च पक्षान्तं मासान्तञ्चेत् घटस्थितिः
तदूर्ध्वं कुम्भसंस्थश्चेद्देवेशस्सर्वदोषकृत्  ७४ १-२
तस्मात् सर्वप्रयत्नेन मासान्ते वाथ पूर्वके
संस्थाप्यबाललिङ्गाद्यं तन्मध्येविन्यसेन्मनुम्  ७५ १-२
मासादिद्वादशाब्दान्त न्तदन्तरदिनेष्वथ
तस्मादादायदेवेशं मूललिङ्गेनिवेशयेत्  ७६ १-२
मूललिंगन्नलब्धञ्चेद्देशकालानुरोधतः
षट्त्रिंशदब्दापर्यन्ते मूललिङ्गेनिवेशयेत्  ७७ १-२
बाललिङ्गप्रतिष्ठोक्तदिन पक्षादि होमकम्
द्विगुणं त्रिगुणन्तस्य चतुर्विंशतिवत्सरे  ७८ १-२
कृतञ्चेत् द्विगुणंहोममाचरेद्देशिकोत्तमः
षट्त्रिंशद्वत्सरोर्द्ध्वन्तु मूलस्थानन्तदेवहि  ७९ १-२
तत्र स्थं बाललिंगाद्यं त्यक्त्वामूलन्तुविन्यसेत्
सकलेप्येवमेवं स्याद्विशेषः कश्चिदिष्यते  ८० १-२
द्वादशाब्दान्तरेऽवश्यन्मूलस्थानेनिवेशयेत्
नोचेत्तत्रैव संस्थाप्यमूल बेरं विशेषतः  ८१ १-२
एष एव विधिः प्रोक्तः प्रासादादौ शिवद्विजाः
किन्तु खड्गेऽमले मन्त्रान् विन्यस्यापरमारभेत्  ८२ १-२

परिवारमरानेवं घटस्थान् स्थापयेत् गुरुः
शिवलिङ्गादियद्वस्तु यदज्ञेन प्रतिष्ठितम् ८३ १-२
दैवज्ञै श्शिलिनान्यैर्वा शिवदीक्षाविवर्जितैः
भूयोपि तस्य संस्कारं कुर्यात् पूर्वोक्तवत् गुरुः ८४ १-२
शिव सिद्धान्तमार्गस्थादन्ये पाशुपतादयः
तैरपिस्थापि तं लिङ्गं पुनस्संस्कृत्य पूजयेत् ८५ १-२
आदौ पाशुपताः प्रोक्ता स्सोमसिद्धान्तकाः परे
लाकुलास्त्वपरेज्ञेयाः प्रत्येकं त्रिविधास्मृताः ८६ १-२
वामदक्षिणसिद्धान्तभेदेन नव भेदिनः
शैवाश्चतुर्विधास्त्वन्ये मन्त्रतन्त्रव्यवस्थिताः ८७ १-२
गारूढाभैरवावाम भूततन्त्रव्यवस्थिताः
प्रत्येकं त्रित्रिभेदेन पूर्ववत् संव्यवस्थिताः ८८ १-२
तैरपि स्थापितं लिंगं मादिशैवस्समर्चयेत्
यामलत्व परंज्ञेयं तच्चमिश्रमिहोच्यते ८९ १-२
वामदक्षिणसिद्धन्त भेदेन त्रिविधं मतम्
वामं पार शिवार्हं स्यात् दक्षिणं भैरवार्हकम् ९० १-२
सिद्धान्तं यामलं सर्व मादिशैवार्हकं विदुः
व्यतिरिक्तन्तु सिद्धान्ताद्रौद्रं सर्वमुदीरितम् ९१ १-२
वामदक्षिणमिश्रादिभेदेन बहुभेदिकम्
लौकिकं वौदिकञ्चान्य दध्यात्ममतिमार्गकम् ९२ १-२
तथापाशुपतं सोम सिद्धान्ताख्यञ्चलाकुलम्
गारुढं भैरवं वामं भूततन्त्रञ्चयामलम् ९३ १-२
कापालं पाञ्चरात्रञ्च बौद्धमार्हमतन्तथा
बृहस्पतिमतं सांख्यं योगंवैखानसन्तथा ९४ १-२
वेदान्ताख्यञ्च मीमांस पुराणन्धर्म शास्त्रकम्
वास्तुशास्त्रन्तथासौत्रं षडङ्गमितिहासकम् ९५ १-२

तथा वेदाश्च चत्वारोयत्तत्र परिचोदितम्
सर्वं रौद्रं समादिष्टं सिद्धान्तं सौम्यमिष्यते ९६ १-२
रुद्रैश्च स्थापितं यश्च विष्णवादि प्रतिमादिकम्
तत्सर्वं शैवमापाद्य शैवस्सर्वं समर्चयेत् ९७ १-२
लिंगाद्यमादिशैवेन स्थापितं पूजितन्तुवा
तद्रूपं पूजितन्तैश्चे द्राष्टं राजान मेव च ९८ १-२
तत्र ग्रामं ग्रामसंस्थांश्च सर्वान्हन्तिनसंशयः
तैस्तु संस्थापितं पूर्वमादि शैवेन पूजितम् ९९ १-२
यदितैः पूजितं पश्चात् सेनानिं सेनया सह
अमात्यं मन्त्रिणं विप्रान् क्षत्रियं वैश्यमेव च १०० १-२
शूद्रान्तरजनान् सर्वान्नचिरान्नाशयिष्यति
तस्माद्राजा प्रयत्नेन वारयेदचिरेण तान् १०१ १-२
तैस्तु संस्थापितं पूर्व मादिशवेन पूजितम्
राज्ञो विजयदश्चायुर्वृद्धिदं पलदं सदा १०२ १-२
शान्तत्वाच्छैवमन्त्राणां सर्वेषां शुभदामताः
आभिचारकलिङ्गाद्यं रोद्रैश्च स्थापितञ्चयत् १०३ १-२
तन्त्रेणो द्धारणं वक्ष्ये श्रूयतां द्विजसत्तमाः
तत् स्थानं संप्रविश्याथ मृद्धाण्डांश्च विवर्जयेत् १०४ १-२
शैलं लोहञ्चदारुत्थं संशोद्धय च पुनः पुनः
कुड्याद्यं सुधायालिप्य स्थलं गोमयवारिणा १०५ १-२
पुण्याहं वाचयित्वातु वास्तुहोमञ्चकारयेत्
पर्यग्निकरणं कृत्वा पुनः पुण्याह माचरेत् १०६ १-२
अस्त्रतोयेन संप्रोक्ष्य पञ्चगव्येन शोधयेत्
कर्षणादि प्रतिष्ठान्त क्रियायां ये निवेशिताः १०७ १-२
मन्त्रांस्तानुद्धरेन्मन्त्री महापाशुपतेन च
महाजालप्रयोगेण सर्वमन्त्राश्च संहरेत् १०८ १-२

ओं हूं हां हं पुनर्हां हूं जालमुद्रा च संहतिः
तल्लिङ्गाद्यं च संशोध्य कुशभस्ममृदाम्भसा १०९ १-२
कषायोदकसंयुक्तं गोमूत्रेणोदकान्तरम् ११०
पञ्चगव्येन संस्नाप्य गन्धपुष्पादिभिर्यजेत्
लिङ्गस्थशम्बरे ज्ञाते पूर्ववन्मन्त्रसंहृतिः १११
अविज्ञाते च तन्मन्त्रे प्रणवं योजयेद्गुरुः
जन्तुकल्पद्रवार्थं तु मन्त्रमस्त्रं नियोजयेत् ११२
एकी भूतांस्तु दीपेन मन्त्रांस्तल्लिङ्गसंस्थितान्
स्मरन् समुद्धरेद्दिपं तल्लिङ्गाणुभिरन्वितम् ११३
पूर्वमन्त्रेण संहृत्य मुद्रयासंहरेत् गुरुः
पुनस्संशोद्धयतं लिङ्गं पूर्वद्रव्यै श्शरेण च ११४
कर्षणादि प्रतिष्ठान्त माचरेन्मानसीं क्रियाम्
स्वस्वमन्त्रसमोपेतं स्वस्व होम समन्वितम् ११५
लिंगसंस्थापनोक्तेन प्रतिष्ठा माचरेत् गुरुः
लक्षणोद्धारणन्नेष्टं जलेचैवाधिवासनम् ११६
शयनं स्थापनं चैवहित्वान्यत्सर्वमाचरेत्
गर्भगेहेथ तत्सर्वं मराडपे वा समाचरेत् ११७
देवाग्रे तत्र कुराडेवा स्थरािडलेवाथ होमयेत्
स्वयं भूर्दैविके बाणे चार्षे गाणाधिपे तथा ११८
च्छिन्ने वा स्फुटितेभिन्ने तत्र शान्तिर्विधीयते
दिशाहोमन्ततः कुर्यादृगाद्यद्धयनन्तथा ११९
अष्टोत्तर शतप्रस्थैः कुर्यात्क्षीराभिषेचनम्
शान्तिहोमन्ततः कृत्वा स्नपनं कारयेत्ततः १२०
ब्राह्मणान् भोजयेत् पश्चात् शैवान् संभोजयेत्ततः
प्रभूतहविषं दत्वा ताम्बूलन्दापयेत्ततः १२१
मध्यरात्रौ बलिन्दद्यात् ग्रामेवानगरेथवा

मुत्गान्नं पायसं गौलं कदलीफलसंयुतम्  १२२
सप्ताहमेवं कर्तव्यं सर्वदोषानुत्तये
आचार्यं पूजयेन्नित्यं स्वर्णवस्त्रादिभिस्ततः  १२३
तदन्ते स्नपनं कुर्यात् प्रभूतन्तु हविर्ददेत्
सर्वैरंगैर्विशीर्णञ्चेत् पुनस्संस्थापयेन्नवम्  १२४
लिङ्गे स्वायंभुवादौ तु जीर्णादौ शान्तिरीरितः
सर्वलक्षण संयुक्त मल्पदोषन्तुवा भवेत्  १२५
प्रासादस्यतु विस्तारे रसमात्रान्नदुष्यते
उत्सेधेरविमात्रान्तंक्षन्तव्यञ्चाङ्गुलादिकम्  १२६
द्विमात्रन्तु स्थले प्रोक्तं स्तं भाद्यंगेषुमात्रकम्
ग्रामखेटपुरादौतुदंडान्तं परिकीर्तितम्  १२७
सालेषु हस्तमानान्तं यवान्तं लिङ्गमानके
चतुर्यवान्त मर्चासु मात्रान्तं पीठकल्पने  १२८
द्वाराद्यंगेषु मात्रान्तं वालाग्रं ब्रह्मसूत्रके
तदप्यकार्यं लिङ्गाग्रेक्षन्तव्यं मानमीरितम्  १२९

इति उत्तरकामिकाख्ये महातन्त्रे अनुकर्मविधिः द्वात्रिंशतितमः पटलः

## त्रयस्त्रिंशत्तमे पटले काम्ययोगविधानविधिः

काम्ययोग विधानंतु प्रवक्ष्यामि समासतः
काम्यसिद्धिश्च मन्त्रैस्स्यान्मन्त्राश्च बहवो मताः  १
सर्वे मन्त्रास्समर्थास्स्युस्सर्वे चेष्टफलप्रदाः
तेष्वघोराणुरत्यन्तदोषघ्नः किष्णवर्णभाक्  २
व्यालबद्धजटाचूटः कपालदलमण्डितः
सुरपिङ्गेक्षणोऽत्यन्त श्वेतदंष्ट्रा समन्वितः  ३
चन्द्रचूडो विशालास्यो नागयज्ञोपवीतवान्

महाकायो महादंष्ट्री किङ्किणीरवसंयुतः ४
महाशूलाग्र संप्रोत महासुर विनाशनः
खड्गखेटधनुर्बाणमुण्डकः कालशक्तिधृत् ५
वराभयकपालाहि पाशप्रासगदायकरः
दंष्ट्रे द्वे कीलनिर्याते वक्त्राग्रे भीषणे सिते ६
स्वसेना रक्षको नित्यं परसेनाभयंकरः
वैरिप्रयुक्तकर्मघ्नस्सर्वव्याधिनिवारकः ७
सर्वदोष विनाशे तु समर्थो भक्तवत्सलः
असिताङ्गादिभिन्नित्यमावृतो वा निरावृतः ८
आसिताङ्गो रुरुश्चण्डः क्रोधश्चोन्मत्तभैरवः
कपाली भिषणश्चैव संहारश्चाष्टमस्स्मृतः ९
चतुर्भुजास्त्रिणेत्राश्च कृष्णवर्णा महाबलाः
त्रिशूलमुण्डसंयुक्ता हृदयाञ्जलि संयुताः १०
सुदंष्ट्रा भीम वक्त्राश्च स्वामिचेष्टा समन्विताः
ओं जुंसः इति मन्त्रोऽयं देवो मृत्युञ्जिदाह्वयः ११
एष एवामृतेशस्स्यादादौ कूटयुतो न वा
रसादिशुक्लपर्यन्तधातु सप्ताक्षरान्वितम् १२
हकारेण शरीरं तु रसमित्यादितः पठेत्
अन्ते च रक्ष रक्षेति वीप्सितं च पदं पठेत् १३
आदौ स्याद्देवदेवेशेति पदं समुद्धरेत्
प्राणं च देवदत्तस्य मूलमन्त्रं नियोजयेत् १४
पीठं जुंकारकॢप्तंस्यान्मूर्तिरों जुंसतो भवेत्
मध्ये निवेशयेत्कूटं प्रासादं वा नवात्मकम् १५
कण्ठोष्ठ्यं वाहकाराद्यं ब्रह्मण्यङ्गानि कल्पयेत्
अनेन सदृशो नास्ति मन्त्रो मृत्युञ्जयो द्विजाः १६
सुधाकलशमध्यस्थः श्वेतपद्मासनस्थितः

चतुर्भुजस्त्रिणेत्रश्च जटाखण्डेन्दुमण्डितः १७
व्याघ्रचर्मपरीधानो नागेन्द्रोरोविभूषणः
त्रिशूलं चाभ्यं चोर्ध्वे सुधाकलशमध्ययोः १८
दधानष्षड्भुजश्चेत् स त्रिशूलं चाक्षमालिकाम्
कपालं कुण्डिकां वामे योगमुद्रां करद्वये १९
अनेन सदृशो मन्त्रो नास्ति प्राणादिरक्षणे
न भविष्यति भूतश्च सत्यमेतदुदाहृतम् २०
भोजनं चापि कर्तव्यं त्र्यक्षरेणामृतीकृतम्
तेनामृतं भवत्याशु स्वादितं मृत्युजिद्भवेत् २१
अमृतेशेन देवेन जलं संग्राह्य यत्नतः
शतजप्तं पिबेत्तोयममृती भवति ध्रुवम् २२
क्षीरेण सहसंपृक्तदूर्वाकाण्डमखण्डितम्
ब्रह्मवृक्षेन्धनैर्दीप्ते वह्नौ जुह्वन्न मृत्युभाक् २३
देवं तूपासने यस्य नित्यं मृत्युञ्जयात्मकम्
नाचिरेणैव कालेन मृत्युस्तस्य भविष्यति २४
मासाद्वर्षशतं प्रोक्तं द्विमासादिद्वशतं भवेत्
प्रतिमास प्रयोगेण चाब्देनैकेन सुव्रताः २५
कालः प्रदक्षिणं कृत्वा स्तुत्वा संपूज्य साधकम्
गच्छत्यत्र न सन्देहस्सत्यं विप्रा मयोदितम् २६
स पुनाति दृशा वाचा चरणेन करेण च
नदीजनपदोद्यान पुरादीनि न संशस्यः २७
किं पुनः प्राणिनं भीतं स्वात्मानं स्वाश्रयं च वा
अघोरास्त्रमतो वक्ष्ये बीजमालात्मकं द्विजाः २८
रक्तवस्त्रधरं देवं भिन्नाञ्जन समप्रभम्
भुजाष्टकसमोपेतमूर्ध्वकेशं सुदंष्ट्रिणम् २९
स्पष्टदंष्ट्राधरोष्ठं च दीप्ताग्नि समलोचनम्

किङ्किणीमालया भ्राजत् पादनूपुर संयुतम् ३०
सप्तायुध समायुक्तं सर्वाभरणभूषितम्
शुक्लयज्ञोपवीतं च रक्तपुष्पोपशोभितम् ३१
धूतवृश्चिक संयुक्तं कण्ठाभरणभूषितम्
मेखलोदरकण्ठेषु कर्णहृत्करबाहुषु ३२
पादयोर्हस्तयोर्नागैश्चतुर्दशाभिरुज्ज्वलम्
पङ्कजासन मध्यस्थं त्रिणेत्रं रौद्ररूपिणम् ३३
शूलमूलं च वेतालं खड्गं डमरुकं शुभम्
दधानं दक्षगैर्हस्तैर्वामगैश्शूलमध्यमम् ३४
घण्टां खेटं कपालं च शत्रुसंक्षय संमुखम्
अग्रस्थवामपादं च ध्यात्वाघोरास्त्रमर्चयेत् ३५
अन्यथाप्युच्यते ध्यानं यथावच्छृणुत द्विजाः
ध्यायेत्सूर्य सहस्राभमघोरास्त्रमरिंदमम् ३६
प्रदीप्तदशनप्रान्तं प्रकाशमुखकन्दरम्
त्र्यक्षं तटिल्लताजिह्वं दीप्तभ्रूश्मश्रुमूर्धजम् ३७
सर्पोपवीतं शूलसिशक्तिमुद्गर धारिणम्
चतुर्भुजं चतुर्वक्त्रं स्फुरच्चन्द्रार्घशेखरम् ३८
नृत्यमानं महाकायं नागाभरणभूषितम्
देवदानव दैत्यानां दर्पितानां विमर्दकम् ३९
प्रस्फुर स्फुर इत्येवं हृदयं परिकीर्तितम्
घोरघोरतरेत्येतत् तच्छिरस्संप्रकीर्तितम् ४०
ततश्च तनुरूपेति शिखामन्त्रः प्रकीर्तितः
चटप्रचटशब्दं तु वीप्सितं कवचं भवेत् ४१
ततः कह कहत्युक्त्वा वम मन्दयेति स्मरेत्
घातयेति द्विरुच्चार्य पञ्चमाङ्गं प्रकीर्तितम् ४२
प्रान्ते स्यादूहुंफडित्येवं चतुर्थ्यन्तं हृदादिकम्

नमस्कारादि संयुक्तमादौ प्रणवसंयुतम्  ४३
परचक्रप्रथमने महाव्याधि प्रकोपने
शान्तिके पौष्टिके वश्ये प्रायश्चित्ते विचिन्ययेत्  ४४
किमनेन बहूक्तेन भयकालेऽप्युपस्थिते
मन्त्रेणानेन नश्यन्ति ज्वरग्रहविषादयः  ४५
परैर्यदभिचारादि कर्म मन्त्रौषधादिकम्
मन्त्राणि योगयुक्तानि पावके शलभा यथा  ४६
तथा पाशुपतास्त्रं च शिवास्त्रं क्षुरिकास्त्रकम्
अनेनैव प्रकारेण ध्यात्वा संपूजयेद् गुरुः  ४७
अघोरमर्चयित्वाथ तदग्रेऽस्त्रं समर्चयेत्
दक्षिणेऽघोरदेवस्य मध्ये देवं सदाशिवम्  ४८
विशेषाद्दक्षिणे वक्त्रेऽघोरदेवं समर्चयेत्
चतुर्दिक्षु यजेदस्त्रचतुष्कं शिवपूर्वकम्  ४९
अघोरपूर्वकं पाशुपताश्त्रं क्षुरिकास्त्रकम्
एवमभ्यन्तरेष्विष्ट्वा तज्ञातीन् परितो यजेत्  ५०
हित्वा शिवास्त्रं तत्रैव यजेत् प्रत्यङ्गिरां पराम्
संग्रामविजयं वाथ क्षुरिकास्थानपमध्यमे  ५१
एवमभ्यर्चयेद्वोऽसौ सोऽयंमत्सदृशोमतः
तेन नासाध्यमस्तीह लोके त्रिभुवने द्विजाः  ५२
सत्यमेतत्समुद्दिष्टं गोपनीयं प्रयत्नतः
पालनीयोविशेषेण साधकाधिपतिस्सदा  ५३
दक्षिणामूर्तिमन्त्रस्योद्धारस्त्वत्रनिगद्यते
वाक्सिद्धिस्तेन मन्त्रेण जयोत्पादे च शस्यते  ५४
फलान्यन्यानि सर्वाणि तत्प्रसादात् भवन्ति हि
ओं नमो भगवच्छब्दं संबुद्धयन्तं नियोजयेत्  ५५
दक्षिणामूर्तिशब्दं च तथैव विनियोजयेत्

मेधां प्रयच्छ स्वाहेति मूलमन्त्र उदाहृतः ५६
स्वरेषु हृदयादीनामुद्धारः परिकीर्तितः
नमस्वाहावषठुं च फडित्यन्ते नियोजयेत् ५७
शुद्धस्फटिकसंकाशं प्रसन्नवदनान्वितम्
गङ्गाचन्द्रसमोपेतं कुण्डलीकृतमूर्धजम् ५८
व्याघ्रचर्मपरीधानं चतुर्बाहुसमन्वितम्
शुद्धस्फटिकमालां च ज्ञानमुद्रां च दक्षिणे ५९
वामे पद्मं च वह्निं च वरदाभयदं तु वा
पुस्तकेन युतंवाथ दधानं नयनत्रयम् ६०
महावृषभसंयुक्तमनिसंघैस्समावृतम्
ध्यात्वैवं देव देवेशं सर्वकार्याणि साधयेत् ६१
यान्तारूढं हकारं च षष्ठस्वरसमन्वितम्
चतुर्दशस्वरोपेतं बिन्दुनादविभूषितम् ६२
अथवान्य प्रकारेण भैरवं विकृताननम्
ऊर्ध्वरेफसमायुक्तं भैरवं बीजमुत्तमम् ६३
संग्राम विजयो नाम्ना मन्त्रोऽयं परिकीर्तितः
अस्यमन्त्र प्रभावेण त्रैलोक्यविजयी भवेत् ६४
यत् किंचित् क्रियते कर्म त्रैलोक्ये येन केनचित्
रहितो मन्त्रराजेन नैव सिध्यति साधकः ६५
आरूढाब्जं सशक्तिं हृदयकमलजं भास्करं पधस्तम्
वक्त्रैर्युक्तं चतुर्भिः परमरुणचतुश्शक्तिभिर्व्याप्तदिक्कम्
कायार्धारूढकान्तं शिवमभयवरं साक्षमालाकपालं
भूत्यै पाशाङ्कुशाभ्यां ग्रहगणनमितं नौमिखट्वाङ्ग हस्तम् ६६
ब्रह्माणि च षडङ्गानि क्रमेणैव समुद्धरेत्
विस्तारादि चतुश्शत्कीश्चतुर्वक्त्रेषु पूजयेत् ६७
भोगाङ्गं पूजयेत्पश्चाद् धृतादीनग्निकोणतः

नेत्रं दक्षिणादिग्भागे गर्भावरण ईरितः ६८
दीप्तयादिशक्तयो बाह्ये ग्रहास्तद्बाह्यमार्गतः
तद्बहिर्लोकपालास्युः क्रमेणाभ्यर्चयेद्गुरुः ६९
कामाचररतो वापि भावयेद्भास्करं सदा
वक्ष्ये प्रत्यङ्गिरोद्धारं समासाद् द्विजसत्तमाः ७०
सर्वभक्तिप्रदं सर्वव्याधिविध्वंसनं परम्
ज्वारापस्मारमारीणां नाशनं क्षयनाशनम् ७१
शत्रुकृत्यादि संभूतरोगानीक विनाशनम्
चतुरङ्ग बलोपेत शत्रुक्षयकरं परम् ७२
स्वसेनारक्षकं नित्यं समर्थं सर्वकर्मसु
ओं ह्रींकारं समुद्धृत्य तदन्ते कृष्णवाससे ७३
ततश्च सिंहवदने महावदन इत्यपि
महाभैरविवर्णेच सर्वशत्रुपदं तथा ७४
कर्मविध्वंसिनीत्येवं परमन्त्र पदं ततः
छेदिनीत्युद्धरेत्पश्चात्सर्वभूतदमन्यपि ७५
सर्वभूतांस्ततो बन्धबन्धेति पदमुद्धरेत्
सर्व विघ्नानिति पदं छिन्धिछिन्धीतियत्पदम् ७६
सर्वव्याधिं निकृन्तेति निकृन्तेति पदं च यत् ७६ १-२
ज्वालाजिह्वे करालेति पदं दंष्ट्रे पदं पुनः ७७ १-२
प्रत्यंगिरे पदं ह्रीञ्च नमोस्त्विवति पदं ततः
तेस्वाहेत्युद्धरेदेष मन्त्रः प्रत्यंगिरात्मकः ७८ १-२
प्रत्यंगिरेयं विख्यात श्शतवर्ण स्वरूपिणी
आद्यसप्ताक्षरं हृत् स्यात् शिरः पञ्चदशाक्षरम् ७९ १-२
दशाक्षरम् शिखातस्मात् कवचं सप्तवर्णकम्
तथैवतस्मान्नेत्राणुश्चतुस्त्रिशत्भिरस्त्रकम् ८० १-२
त्रयोदशाणुर्गायत्रीसावित्रीसप्तवर्णतः

नमस्वाहावषड्वौषट् हुंपटच्युक्ता हृदादयः ८१ १-२
सिम्हावक्त्रोग्रदंष्ट्राग्नि सप्रभोर्ध्व शिखान्विताम्
कृष्णाञ्जन निभांवृत्त रक्तनेत्रत्रयान्विताम् ८२ १-२
वहन्ती सव्यहस्ताभ्यां शूलं डमरुकं परम्
वहन्तीं वामहस्ताभ्यां मुराडं शेषेतु पल्लवम् ८३ १-२
अ्रट्टहासादि शब्दैस्तु गर्जितामुदितामपि
कृष्णांबर धरां सासृक् मांसास्यां नर्तनेरताम् ८४ १-२
मौक्तिकामरणैयोग्यैस्सर्वावयव भूषिताम्
कृष्णाजिनघटान्नाम्ना भैरवीमर्चितां सुरैः ८५ १-२
देवींध्यात्वैकचित्तस्तुसर्वशत्रून् विनाशयेत्
ध्वंसयेत् सर्वरोगांश्च परमन्त्रान्निवारयेत् ८६ १-२
विद्याधरत्वलाभाय कृष्णागरुयुतं परम्
अ्रथवा नाभिकंजल्कं जुहुयात् साधकोत्तमः ८७ १-२
कदंबकलिकाहोमाद्यत्तिणीसिद्धयति ध्रुवम्
प्रियंगु कदलीपुष्पारयादृतोजुहुयात् बुधः ८८ १-२
करवीरस्य पुष्पाणि घृतं च मधुसम्युतम्
खादिरादि समिञ्चैवत्तिप्रमातुष्टिकारिका ८९ १-२
सिद्धार्थञ्चैव मुक्तां च अ्रश्वमांसी समन्वितम्
पायसं पयसायुक्तं तत्त्तणात् त्तणिकं व्रजेत् ९० १-२
धुर्तूरपुष्पसंयुक्तं खदिरोर्ध्व समन्वितम्
कृष्णानीलं घृतं चैव स्तंभयेदभिचारतः ९१ १-२
रक्तपङ्कजपुष्पञ्चतत्समं रक्तचन्दनम्
कपिलाघृतसम्युक्तं कपिलात्तीर सम्युतम् ९२ १-२
होमयेद्दशसाहस्रं त्तिप्रं होमयति ध्रुवम्
महिषोत्भूतमर्कञ्च गर्दभं त्तीरमेव च ९३ १-२
गिरिकायाश्चतत्पुष्पमङ्गिरास्थिसमन्वितम्

जुहुयात् शत साहस्त्रं तत्कुलोत्साधनं भवेत्  ९४ १-२
कुंकुमारोचनाश्चैव कार्पास फल गुग्गुलुः
वेणुनाभेदनं सद्यो भवेदेव न संशयः  ९५ १-२
निम्बपुष्पं तथाब्रीहिं निंबतैलसमायुतम्
अर्कक्षीर समायुक्तं होमयेदपिपारतम्  ९६ १-२
राजयक्ष्मादि रोगाणां शान्तयेजुहुयाद्गुरुः
घृताक्तेन तिलेनैव दूर्वया घृतसिक्तया  ९७ १-२
दुकूल चरुलाजांश्च मधुत्रय समन्वितान्
औदराणां च रोगाणां शुद्धीपत्थ्यामरीचिभिः  ९८ १-२
जुहुयादग्निसिद्ध्यर्थमग्निबीज पुरस्सरम्
अक्षिरोगादि रोगाणां क्षीरेण च घृतेन च  ९९ १-२
मधुनाहोमयेत्सर्वं नेत्र मन्त्रेणमन्त्रवित्
विषमज्वर नाशाय चूतपत्राणि होमयेत्  १०० १-२
घृतेन सहसार्द्राणि प्लुतमृत्युंजिता तथा यथा
सर्वोपद्रव नाशय रुद्र शान्त्या खिलादिभिः  १०१ १-२
वस्त्राद्यर्वातशान्त्यर्थं सर्षपश्लेष्मशान्तये
पित्ताशान्त्यै च जुहुयात् चन्दनाद्यैस्सुशीतलैः  १०२ १-२
सहस्त्रमयुतं वाथ लक्षन्तत्रिगुणंन्तु वा   १०३

इति उत्तरकामिकाख्ये महातन्त्रे काम्ययोगविधानविधिः
त्रयस्त्रिंशतितमः पटलः

रक्त वस्त्रधरं देवं भिन्नाञ्जन समप्रभम्
भुजाष्टक समोपेतं उर्ध्वकेशं सुदंष्ट्रिणम्
स्पष्टदंष्ट्राधरोष्ठं च दीप्ताग्नि समलोचनम्
किंकिणीमालया भ्राजात् पादनुपूरसंयुतम्
सप्तायुध समायुक्तं सर्वाभरण भूषितम्

शुक्लयज्ञोपवीतं च रक्तपुष्पोपशोभितम्
धृतवृश्चिकसंयुक्तं कराठाभरण भूषितम्
मेखलोदरकराठेषु कर्णहृत्कर बाहुषु
पादयोर्हस्तयोर्नागैः चतुर्दशभिरुज्ज्वलम्
पङ्कजासनमध्यस्थं त्रिरोत्रं रौद्ररूपिराम्
शूलमूलं च वेतालं खङ्गं हमरुगं शुभम्
दधानं दक्षरौः हस्तैः वामगैश्शूलमध्यमम्
घराटां खेटं कपालं च शत्रुसक्षय संमुखम्
अग्रस्थ वामपादञ्च ध्यात्वाघोरास्त्रं अर्चयेत्

तेष्वघोराणुरत्यन्त दोषघ्नः कृष्णवर्णभाक्
व्यालबद्धजटाचूटः कपालदलमरािडतः
सुरपिंगेक्षणोत्यन्तं श्वेतदंष्ट्रा समन्वितः
चन्द्र चूडो विशालास्यो नागयज्ञोपवीतवान्
माकायो माहदंष्ट्री किंकिणीरवसंयुतः
महाशूलाग्रसंप्रोत महासुर विनाशनः
खड्गखेट धनुर्बाण मुराडकः कालशक्तिधृत्
वराभयकपालाहि पाश प्रासगदाकरः
दंष्ट्रे द्वे कील निर्याते वक्त्राग्रे भीषणोसिते

चतुर्वक्त्रं ज्वलत्केशं विद्युत्पुञ्जसमप्रभम्
चन्द्रखराड समूर्धानं स चतुष्कर पल्लवम्
अशनि ध्वनि संयुक्तमसह्यं भीमविक्रमम्
द्वादशाक्षमहाशक्ति शूलाभव वरान्वितम्
ध्यात्वैवं गन्धपुष्पाद्यैः शिवास्त्रं स्वाणुना यजेत्

सुधाकलश मध्यस्थः श्वेतपद्मासनस्थितः
चतुर्भुजस्त्रित्रश्च जटाखण्डेन्दु मण्डितः
व्याघ्रचर्म परीधानो नोगेन्द्रोरो विभूषणः
त्रिशूलं चाभयं डमरुं चोर्ध्वे सुधाकलशमध्ययोः

दधानः षड्भुजश्चेत् स त्रिशूलं चाक्षमालिकाम्
कपालं कुण्डिकां वामे योगमुद्रां करद्वये
अनेन सदृशो मन्त्रो नास्ति प्राणादि रक्षणे

आरूढाब्जं स शक्तिं हृदयकमलजं भास्करं पद्महस्तम्
वक्त्रैर्युक्तं चतुर्भिः परमरुणचतुश्शक्तिभिर्व्याप्त दिक्कम्
कायार्धारूढकान्तं शिवमभयवरं साक्षमालाकपालम्
भूत्यै पाशाङ्कुशाभ्यां ग्रहणनमितं नैमि खड्वाङ्ग हस्तम्

चतुस्त्रिंशत्तमे पटले संप्रोक्षण विधिः

संप्रोक्षणविधिं वक्ष्ये सर्वदोष निकृन्तनम्
आवर्तंचेत्यनावर्तं पुनरावर्तनन्तथा १
ततोन्तरितकञ्चेति प्रोक्षणन्तु चतुर्विधम्
मूलबालाग्रहाम्मूल स्थानेयत्स्थापनं मतम् २
तदावर्तमिति प्रोक्त मनावर्तन्ततोच्यते
पतितैः पातकैस्पृष्टे चण्डालैरन्यजैस्तथा ३
मासोर्ध्वपूजाहीने च विश्लिष्टे स्थलकर्मणि
लिङ्गे पीठे च चलिते अनावर्तमिति स्मृतम् ४
मूलास्यात्समादाय स्थाप्य बालालये पुनः
तस्मात्संस्थापनं मूले पुनरावर्तनं स्मृतम् ५
प्रतिमानां च मिश्राणां शक्तिनामायुधादिभिः

स्फोटने वर्णहीने च अङ्गोपाङ्गविहीनके ६
चर्मच्छेदेऽहीने च भूषणादि विहीनके
अम्बुजासनहीने च स्थलकर्मविहीनके ७
विश्लिष्टे पीठबन्धेतु तदन्तरित मुच्यते
यात्राहोमयुगावर्तमन्ये स्युस्तद्विहीनकाः ८
आवर्तेतुद्विजास्सर्वान् मासपक्षर्क्षकादिकान्
लिङ्गसंस्थापनस्योक्त मार्गेणैव समाचरेत् ९
न तिथिर्न च नक्षत्रं न वाराद्यंशकादिकाः
कालापेक्षां विना कुर्याच्छेषाण्यन्यानि सुव्रताः १०
आवर्तवदनावर्तं कुर्यादेभिर्विहीनकम्
लक्षणोद्धारणं तोयाधिवासः शयनं तथा ११
अनावर्तमिति ज्ञेयं पुनरावर्तनं त्विह
सर्वमावर्त वत्कुर्यात् किं तु मूलद्वयान्वितम् १२
ततोऽन्तरितकं विप्रास्संक्षेपेण वदाम्यहम्
रत्नन्यासाक्षिमोक्षौच जले चैवाधिवासनम् १३
शय्याधिवासनं विप्रा विना व बेरकर्मणि
नववस्त्रेण संवेष्ट्य बेरस्य सकलाङ्गकम् १४
प्रागुक्तविधिना कुम्भन्यासं होमं च कारयेत्
स्नपनं कारयेदन्ते चान्यत्सर्वं समानकम् १५
एवं यः कारयेन्मर्त्य पुण्यां गतिमाप्नुयात् १५ १-२

इति उत्तरकामिकाख्ये महातन्त्रे संप्रोक्षण विधिः चतुस्त्रिंशतिमः पटलः

## पञ्चत्रिंशत्तमे पटले पीठप्रतिष्ठां विधिः

पीठ संस्थापनं वक्ष्ये तल्लक्षण पुरस्सरम्
लिङ्गायाम विशालं तु पीठं सर्वार्थ साधकम् १

विष्णवंश समतुङ्गं च छाया दोष विवर्जितम्
पूजांशस्योदया प्रान्त पीठ निर्गमनान्वितम्  २
ईदृशं पीठमापाद्य कोन सिद्ध्येत मानवः
लिङ्गायामसमं वापि लिङ्गायामार्धमेव वा  ३
सप्तविंशतिमानानि षड्विंशत्यंश मानकम्
लिङ्गास्यतारत्रिगुणं भवेत्पञ्चगुणं तु वा  ४
तदन्तरे तथा भक्ते सप्तविंशति मानकम्
लिङ्गमानवशात्पीठ विस्तारं परिकीर्तितम्  ५
तिथ्यङ्गुलं समारभ्य व्योमाङ्गुल विवृद्धितः
षोडशाङ्गुल सम्युक्त विंशकाङ्कुलकावधि  ६
हस्तादि नवहस्तान्तं लिङ्गानां पीठविस्तृतिः
लिङ्गानामाधिकः वीठविस्तारोनेष्यते द्विजाः  ७
अग्रं मूलसमं वास्य हीनमूलं तु नेष्यते
षडंशात् षोडशांशान्तं कृत्वा मूलविशालकम्  ८
एकांशेननाग्रविस्तारं पीठं वा परिकीर्तितम्
विष्णवंशोत्सेधतुङ्गस्य पीठस्य ब्रह्म भागकए  ९
चतुर्भागे त्रिभागांशाधिकं वा पीठतुङ्गकम्
तयोर्मध्येऽष्टधा भक्ते नवमानमुदीरितम्  १०
नन्धावर्तशिला चाल्पे वर्जनीयाद्विजोत्तमाः
मानुषे पीठमानं स्यात्स्वयंभूतादिकेऽपि च  ११
चललिङ्गेऽपि सामान्यं विधानं किंचिदुच्यते
लिङ्गमानसमं वार्ध द्विगुणं पीठ मिथ्यते  १२
विस्तारमध्यसप्तांशे मानं सप्तदशैव हि
मूलं प्रोक्त प्रमाणं च संग्राह्यं द्विजसत्तमाः  १३
विस्तारार्धसमंतुङ्गं समं वाधाधिकं तु वा
प्रत्येकं सप्तधा भक्ते मानं सप्तदश द्विजाः  १४

स्वायं भुवादि लिङ्गेषु लिङ्गायामादि विस्तरः
पीठस्य तु न दोषस्स्याज्ज्ञात्वैवं पीठमाचरेत् १५
वेदाश्रमं वर्तुलं वाथ संमतं पीठ रूपकम्
लोहजे रत्नलिङ्गे वा बाणालिङ्गेऽपि वा मतम् १६
बेरायामत्रिपादं वा तच्चचुर्थांशमेव वा
कल्पयेत्पीठ विस्तारं मध्यमे षोडशांशकम् १७
मानं सप्तदशाख्यातं समाश्रं वायतं तु वा
द्विगुणावधितन्मध्ये कृते प्राग्वत्तथा मतम् १८
पीठायामं समाख्यातं तस्योत्सेधश्च कथ्यते
विस्तारसममुत्सेधस्तदर्धो वा तदन्ते १९
विकारांशं भवेत्सप्तदशमानं द्विजोत्तमाः
पादाधिकं तथोत्सेधं विस्तरात् परिकल्पयेत् २०
वसुधाभाजितेमध्ये नवमानमिति स्मृतम्
बिंबोत्सेधचतुर्भागं पद्मोत्तुङ्गं परं मतम् २१
बेरायामाष्टभागैकमपरं परिकीर्तितम्
अष्टधा मध्यमं भक्त्या नवमानं प्रकल्पयेत् २२
स्थानकेवातलायामादेकैकाङ्गुलवृद्धितः
द्वादशाङ्गुलपर्यन्तं पङ्कजस्याग्र विस्तरः २३
आसने पद्मविस्तारस्त्रयोविंशति मात्रतः
अर्धाङ्गुलाद्यं षट्त्रिंशत्करजावधिमानकम् २४
त्रिभागैकधिकोमूलविस्तारः श्रेष्ठः उच्यते
द्वादशांश विहीनेऽथ मध्ये षोडशधाकृते २५
विस्तारस्सप्तसम्युक्तो दशधा परिकीर्तितः
विस्तारसदृशस्त्वायो द्विगुणो वाथ मध्यमे २६
वसुधा भाजितेदैर्घ्यं नवधा परिकीर्तितम्
त्रिभागाद्रुद भागान्तं तदुत्सेधे विभाजिते २७

एकद्वित्रिचतुष्पञ्चभागैरूर्ध्वस्थपङ्कजम्
शेषांशैस्स्यादधः पद्मं हीनं वोर्ध्वदलैस्तुवा २८
चतुरष्टदलोपेतं विकारार्क दलं तु वा
विपुलं तुङ्गमायुक्तं स्थानके पीठमुच्यते २९
अधिकोत्तुङ्गसंयुक्तमासनोपरि कल्पयेत्
त्रिभागाद्रुद्र भागान्तं दैर्घ्यविस्तारमेव वा ३०
विभज्य पार्श्वयोरेकद्वित्रिभागमथापि वा
संस्थाप्य शेषभागैस्तु मध्ये भद्रं प्रकल्पयेत् ३१
सभद्रंवाविभद्रं वा पीठं सर्वत्र कारयेत्
एकपीठमनेकेषां यदि शोभावशान्नयेत् ३२
वृत्तावायतवृत्तापि अर्धचन्द्राकृतिस्तु वा
पद्माकृतिं प्रकर्तव्या तत्रासीनेऽर्धचन्द्रकम् ३३
अलङ्कारमतोवक्ष्ये लिङ्गानां पीठतुङ्गने
षोडशांशे तु मानेन पादुकं परिकीर्तितम् ३४
वेदांशा जगती प्रोक्ता गुणांशः कुमुदो भवेत्
वस्वश्रपद्ममेकेन वहन्यंशः कर्ण उच्यते ३५
षोडशांशे तदुत्सेधे द्विभागं पादुकं भवेत्
शरांशं पद्ममानं स्याद् द्विभागं वृत्तमुच्यते ३६
वेदांशमूर्ध्वपद्मस्यादश्विन्यशेन पट्टिका
घृतवार्यं शमानं स्यात् पद्मपीठमदं मतम् ३७
एकविंशतिभागेऽग्निभागैः पादुकमूर्ध्वतः
पञ्चभिः पङ्कजं कम्पस्त्वेकेनोर्ध्वं त्रिभागतः ३८
कर्णस्त्वेकेनकंपः स्याद् भूतांशैरूर्ध्वपङ्कजम्
द्वाभ्यां पङ्क्ती भवेदूर्ध्वे घृतवायैक भागतः ३९
षोडशांशेतदुत्सेधे पादुक सार्ध भागभाक्
जगतीबन्ध भागेन गुणार्धं पद्मतुङ्गकम् ४०

षोडशांशेतदुत्सेधे पादुक सार्ध भागभाक्
जगतीबन्ध भागेन गुणार्धं पद्मतुङ्गकम् ४१
व्योमांश मूर्ध्वकंपं तु द्वाभ्यां कुमुद उच्यते
वृत्ताकारस्तदूर्ध्वैतु पट्टिका भागमानतः ४२
द्वाभ्यां कर्णस्तुपदमूंस्यादर्धेननांशेन पट्टिका
शेषेण घृतवारीतु श्रीकरं पीठमीर्तितम् ४३
पञ्चविंशति भागेतु व्योमांश पादुकं भवेत्
पद्ममेकेन भागे तु व्योमांश पादुकं भवेत् ४४
जगती चतुरंशं स्यात्पद्मतुण्डं त्रिभागतः
गलमर्धत्रिभागेन पद्मं द्वयंशेन वृत्तकम् ४५
कुमुदं पद्मभागेन वाजनं व्योम भागतः
भागाभ्यां कर्ण- इत्युक्तस्स्यादेकेनैव वाजनम् ४६
कञ्चमेकेन भागाभ्यां महावाजनमीर्तितम्
एकेनकंपमर्धेन घृतवार्यभिधीयते ४७
पीठं शांभवमाख्यातमन्यथान्यद्विधीयते
एकविंशति भागं तु पीठोत्तुङ्गं विभज्य च ४८
भागेन पादुकं वेद भागेन जगतीमता
एकेन कर्णस्त्वेकेन पद्मं स्यात् गुणभागतः ४९
कुमुदं पद्मंशेन वाजननत्वेक भागतः
कर्णो द्विभाग भागेन वाजनं पद्ममंशतः ५०
द्विभागानु महापट्टी पद्मंशेन भागतः
कंपस्स्यात् घृतवार्यूर्ध्वे विजयाख्यमिदं मतम् ५१
अष्टादश विभागेतु व्योमांशं पादुकं भवेत्
अद्धच्यर्धं पद्ममित्युक्तं कंपमेकांशतो भवेत् ५२
जगतीवेद भागेन गुणांशः कुमुदं भवेत्
कंपमेकेन कर्णस्यात् द्विभागं कंपमेकतः ५३

महापट्टी द्विभागेन वाजनञ्चैक भागतः
अर्द्धेन घृतवार्युक्त मुमापीठ मिदं मतम् ५४
विकारांशे तदुत्सेधे पादुकं भागमानकम्
पद्ममंश मिमंबंध भागेन जगती भवेत् ५५
भागाभ्यां पंकजात् ग्रीवाचार्द्धार्धे नोर्ध्वे पंकजम्
कुमुदं स्यात् द्विभागेन पद्ममर्द्धेन चार्धतः ५६
कंपंकर्णस्तु चार्द्धेनार्धेनकंपञ्चवारिजम्
भागार्द्धेन महापट्टी सार्धेनां शेनमूर्द्धनि ५७
घृतवारिसमाख्यातं संपत्करमिहोदितम्
रुद्रभागेतु तत्तुंगे व्योमांशं पादुकं भवेत् ५८
गुणांशं जगतीकंप मेकं कर्णोद्विभागतः
एकांशो वाजनं प्रोक्तो महापट्टी द्विभागतः ५९
घृतवार्येकभागेन नन्दिकावृत्तमीरितम्
तिथ्यशं विभजेत्तुंग मद्ध्यर्धं पादुकं भवेत् ६०
अर्द्धेन कंपपद्मं स्यात् गुणांशं गलमर्द्धतः
पद्ममंशेन भागाभ्यां कुमुदं पद्ममंशतः ६१
अर्द्धं गलं त्रिभागेन पद्मं सार्द्धेन पट्टिका
अर्द्धांश घृत वार्युक्तं स्वस्तिकञ्चेदमीरितम् ६२
तुंगाष्टदशभागेतु द्विपादं पादुकं भवेत्
पंकजन्तु त्रिभागेन पट्टिकैकांशनिर्मिता ६३
षट्भागैः कर्ण- इत्युक्तो वाजनं चैक भागतः
अब्जं द्विभागतः प्रोक्तं द्वाभ्यां वाजन मिष्यते ६४
घृतवार्येक भागेन पूर्णचन्द्र मिदं भवेत्
कलांशं विभजेत्तुंगं व्योभागेन पादुका ६५
द्वाभ्यां पद्ममथैकेन कंष्षट्भागतोगलम्
भागेन कंपं स्यात् द्विभागेन द्विभागतः ६६

महापटच्चंश मानैक घृतवायूर्ध्वतो भवेत्
स्थंरिडलं पीठमेवं स्यात् पुनरन्य मिहोच्यते ६७
त्रिषडंशेतदुत्सेधे द्विभागं पादुकं भवेत्
व्योमांशं कंपमित्युक्तं द्विभागं पद्ममुच्यते ६८
भागेन कंपमित्युक्तं शेषं पूर्ववदेवहि
एकोनविंशत्यंशे तु द्विभागं पादुकं भवेत् ६९
कंपमंशेन भागेन पुनः कंपं द्विभागतः
पद्ममंशेन कंस्स्यात् शेषं पूर्ववदीरितम् ७०
स्वायंभुवमिदं प्रोक्तमधिष्ठानानियानि च
उपपीठानि तान्यत्र योज्यानी हाग्रजोत्तमाः ७१
घृतवारि तदूर्ध्वेस्यादेकभागेन सार्द्धतः
द्विभागेनाथ कर्तव्यं भक्त्याभीष्टाशतुं गमे ७२
महापट्टि विनिष्क्राम समनिष्क्रम संयुतम्
घृत वारि विधेयं वा वृत्तं वा चतुरश्रकम् ७३
अ्रधिष्टानेक तोपेत मथवा परिकल्पयेत्
कर्णमानञ्च संग्राह्य कंपादौ विनियोजयेत् ७४
तन्मान मथकर्णेतु यावदेक यवेन च
वृद्ध्याष्ट मात्रपर्यन्तं वृद्धिहानिं प्रयोजयेत् ७५
सर्वेष्वंगेषु पीठानां सकले निष्कलेपि च
चलेवाप्यचले लोहे रत्नजे बाणालिङ्गके ७६
शलेदारुमये वापि मृरमयेन्य मयेपिवा
निष्कलेतु प्रमाणं स्यात् तन्मान मधुनोच्यते ७७
पीठतारं त्रिभागं स्यात् प्रणालो मूलविस्तरः
तदर्द्धेणाग्र विस्तार स्सर्वलिंगेषु योग्यकः ७८
पीठार्द्धमानः पादोवा मध्यमे षोडशांशके
मानं सप्तदशं ख्यातं नालायामं द्विजोत्तमाः ७९

तत्समंवा सपादं वा त्रिपादं वाथ मध्यमे
तथा विभक्ते संग्राह्य मानं सप्तदशैव च  ८०
प्रणालमूलदेशेतु गदग्रं तेन मानतः
त्रिपाद मर्द्ध पादोनं पञ्चत्रित्य्त्रंश मेववा  ८१
सप्तांशे भूतवेदाग्नि भागं वाग्रे प्रकल्पयेत्
वारि वाहस्तथा प्रोक्ता वागाम्भीर्या द्विस्तरेण वा  ८२
मूलकंपं तदूर्ध्वन्तु पद्मं पार्श्व द्वयोरपि
तदूर्ध्वेकंपमेकद्वि व्योमभागैस्तथा क्रमात्  ८३
तन्मान मधुनोच्यते
कर्णार्द्धमाश्रं तन्मानं पीठोत्सेधं विभज्य च  ८४
त्रिसप्तमानं वेदांशा देकभागविवृद्धितः
दशभागावसानन्तु पीठनाल घनं तुवा  ८५
समानयोनिजंश्रेष्ठं तदभावे विभिन्नजम्
अभिन्नपिण्डकं लिङ्गं नेष्टं भुक्त्यर्थिनामिह  ८६
तदन्यमिष्टं श्रेष्ठं स्याद्रत्नजं स्पष्टिकादिकम्
अखण्डशैलमिष्टं स्यात् तदभावे सखण्डकम्  ८७
खण्डंत्वंगावसानं स्यादूर्ध्व खण्डमखण्डजम्
प्रणालयुक्तमिष्टं स्यात् तदधः खण्डनेपि च  ८८
नदोषाढ्याादिवस्त्वन्ताः खण्डाः पीठाः प्रकीर्तिताः
सकलानामनालं स्यात् सनालमथपीठकम्  ८९
घृतवारिविहीनं वा सहितं वा प्रकल्प्यते
बाणलिंगादि लिंगानां चतुरश्राय ताश्रकम्  ९०
कृत्वा तदूर्ध्वेतु पीठं वा परिकल्पयेत्
पीठलग्नां प्रभां कुर्यात् भिन्नां वा भिन्नयोगिकाम्  ९१
नाना वाजन पीठं संयुक्तां मुक्तादामावलि क्रियाम्
नाना पुष्पावलीप्रोतां नाना वह्नि शिखान्वितम्  ९२

सर्वालंकारसंयुक्तामिष्टास्य घन संयुताम्
सतोरणं वा वृत्तं वा सायतं वा प्रमाणतः ९३
बेरलिङ्गवशात् कळ्साम्ष्टमान समन्वितम्
एवं लक्षण माख्यातं स्थापनं चाधुनोच्यते ९४
पिण्डिकायामुमादेवीलिङ्गे स्याच्च सदाशिवः
तयोर्यः क्रियते योगस्सा प्रतिष्ठेति गद्यते ९५
योगश्च द्विविधोज्ञेयः त्वाद्यः पश्चाद्भवस्त्विति
आद्यः प्रागेव कथितो लिङ्गस्थापनकर्मणि ९६
द्वितीयः कथ्यते विप्राः पूर्वं तस्याः यदा कृतिः
तथैव च पुनः कुर्यादन्यथा दोषकारकम् ९७
मानवे पीठ संकल्पपिधानं परिकीर्तितम्
चतुरश्रेऽथ वृत्ते वा रूपान्तरयुतेऽपि वा ९८
दैविके चार्षकेबाणेलिङ्गेस्वायम्भुवे तथा
वृत्तं सर्वत्रकर्तव्यं पूर्वाकृतियुतं तु वा ९९
पूर्वद्रव्येण कर्तव्यमुत्कृष्टेनाथवा नयेत्
लिङ्गसंस्थापनस्योक्तावर्त्मना सकलां क्रियाम् १००
कारयेत्कथ्यते विप्राः शेषस्तदवधार्यताम्
अङ्कुरार्पणकार्यं तु प्रागुक्तविधिना नयेत् १०१
हर्म्याग्रे सौम्यदेशेऽग्नौ चैशान्यं यागमण्डपम्
प्रागुक्तविधिना मानं मण्टपे परिकीर्तितम् १०२
तन्मध्ये वेदिकां कुर्याल्लिङ्गस्थापन वर्त्मना
कुण्डानि परितः कुर्यान्नवपञ्चैक संख्यया १०३
योन्याकाराणि कुण्डानि त्रिमेखलयुतानि च
तत्पूर्वे सौम्यदेशे वा स्नानार्थं स्नानमण्डपम् १०४
एवं निष्पाद्य सर्वंतु पश्चात् कर्मसमारभेत्
विशेषयजनं कृत्वा स्तुत्वानत्वा मुहुर्मुहुः १०५

शिवं विज्ञाप्य लब्धाज्ञः क्रियामेनां समारभेत्
लिङ्गाग्रे स्थरिडलं कृत्वा शिवकुंभस्यवर्धनीम् १०६
मध्यमे स्थापयित्वातु परितोऽष्टौ घटांस्तु वा
ससूत्रान् सापिधानांश्च सकूर्चाम्बर पल्लवान् १०७
गन्धसृग्दाम धूपाद्यै सर्चयेत्तदनन्तरम्
पुरायाहं वाचयित्वातु सासनं मूर्ति संयुतम् १०८
आवाह्यलिङ्गं लिङ्गस्य शिवकुंभगतं न्यसेत्
पीठाद्देवीं समावाह्य वर्धन्यां मध्यमेन्यसेत् १०९
विद्येशान् परितोन्यस्त्वा गन्धाद्यरर्चयेत्तुतान्
नैवेद्यान्तैश्च तत्पूर्वे स्थरिडले होममाचरेत् ११०
सहस्रसंख्यं मूलेन समिदाज्यन्नलाजकैः
तिलेनापि समायुक्तं प्रत्येकं तु शतं तु वा १११
प्रायश्चित्तमघोरेण शतसंख्येन होमयेत्
अन्यत्र स्थरिडलं कृत्वा ततस्संस्थापयेदमून् ११२
नित्यपूजा प्रकर्तव्या लिङ्गे कुंभे च नित्यशः
टङ्केन हैमजातेन पीठं छित्वास्त्र मुच्चरन् ११३
अगाधेऽभसि निक्षिप्य तदुद्धृतसुधादिकम्
शान्तिहोमः प्रकर्तव्यः प्रत्यहं तु शतं तु वा ११४
ततस्संस्थापनं कुर्यात् तद्विधानमिहोच्यते
शाणाभिघर्षणं कृत्वा पञ्चमृत्पञ्चगव्यतः ११५
कषायोदकगोमूत्र गोशकृद्भिर्जलानतरे
प्रणवेनास्त्रमन्त्रेण स्नापयेत्परमेश्वरम् ११६
वस्त्रचन्दनपुष्पाद्यैरिष्ट्वामराडपमध्यमे
स्थरिडलंकल्पयित्वास्मिन् स्थापयेत्पिरिडकां ततः ११७
गन्धाद्यैरर्चयित्वा भगाङ्कं लक्ष्म लक्षयेत्
मध्वाज्याभ्यां तु सन्तर्प्यमृत्युजिन्मन्त्रामुच्चारन् ११८

ताम्रजे कांस्यजे पात्रे मध्वाज्याभ्यां समन्विते
सहैमं दर्शयेद्विद्वान् नेत्र मन्त्र मनुस्मरन् ११९
धान्यराशिंसवत्सांगांकन्यां हृदय मन्त्रतः
प्रच्छन्नपट मावर्ज्य दर्शयेद्देशिकोत्तमः १२०
प्राग्वत् संस्नाप्य देवीन्तु वस्त्र गन्धादिनार्चयेत्
प्रदक्षिणन्नयेत् ग्रामेजलतीरे निवेश्य च १२१
स्थण्डिलं तत्र निक्षिप्य स्थापयेत् तत्र पिण्डिकाम्
कलशां स्थापयेदष्टौ लोकपालाधिपान् क्रमात् १२२
देवीञ्चकलशानिष्ट्वा लंबकूर्च समन्विताम्
नव वस्त्र परिच्छन्नां फलकोर्ध्वेजलान्तरे १२३
स्थापयेदभितोष्टौ तु कलशान्सूत्रसंयुतान्
पिधानाम्बरहैमस्तान् शक्त्यधिष्ठितान् १२४
पश्चान्मण्टपमासाद्यचतुस्तोरणसंयुक्तम्
सवितानध्वजं दर्भमुक्ता पुष्पजमालया १२५
सर्वत्रज्वलितं दीप्तैर्ज्वलिद्भिः परिवारितम्
सर्वलक्षणसंपन्नं सुविसर्जित तक्षकम् १२६
ब्राह्मणान् भोजयित्वा तु गोमयेनोपलोपयेत्
पुण्याहं वाचयित्वातु वास्तु होमं च कारयेत् १२७
द्वाराण्यस्त्रेण संप्रोक्ष्य द्वाराणि द्वारपान्यजेत्
प्रविश्य सद्यद्वारेण सौम्यास्योर्ध्वस्थितस्थितिः १२८
मन्त्रकायं शिवं चान्तरिष्ट्वा हृन्नाभिबिन्दुषु
गृहीत खड्ग हस्तस्सन् पूजितात्मसमन्वितः १२९
कृतपञ्चाङ्ग भूषस्तु कुम्भास्त्राशाधिपार्चनः
कृतकुण्डाग्नि संस्कारो जलवासान्महेश्वरीम् १३०
आनीय स्नपनाख्योक्त मण्टपे स्नपनं नयेत्
मृत्कषायोदगव्याद्यैः पुष्पपत्रफलोदकैः १३१

कुशगन्धजलैः पञ्चामृतैस्संस्नापयेच्छिवाम्
आछाद्य वस्त्रयुग्मेन गन्धैरर्चयेत्तु ताम्  १३२
कृत्वा कौतुकबन्धंतु तन्नाले तद्दलेऽपि वा
शालिभिः स्थरिडलं कृत्वा वसुद्रोणसमन्वितैः  १३३
तदर्धैस्तरडुलैर्युक्तं तदर्धतिललाजकम्
दर्भै पुष्पै परिस्तीर्य चर्मजाद्यैरनु क्रमात्  १३४
ततश्शय्यां च संक्ल्प्य तदलाभेऽम्बरैर्नयेत्
आसनं तत्र संकल्प्य पिरिडकां विन्यसेद् धृदा  १३५
आच्छाद्य वस्त्रयुग्मेन तद्देशे करकं न्यसेत्
सूत्र वस्त्र परिच्छन्नं नवरत्नसमन्वितम्  १३६
सहैमपंकजं कूर्चफलपल्लव वस्त्रकम्
तन्मध्ये सासनां देवीमर्चयेद् गन्धसंमुखैः  १३७
वर्धनीरष्ट संख्याताः कूर्चवस्त्रससूत्रकाः
सहैमाः पल्लवोपेतास्सापिधानाः फलोद्वहाः  १३८
वामाद्यधिष्टिता बाह्ये परितो विनिवेशयेत्
गन्धाद्यैरर्चयित्वा तु पिरिडकां वर्धनीमपि  १३९
तत्वतत्वेशि संयुक्तां मूर्तिमूर्तीश्वरीं न्यसेत्
कर्णस्याधो गले कर्णादूर्ध्वे तत्वत्रयं न्यसेत्  १४०
क्रिया ज्ञानं तथेच्छेति त्रितत्वेशाः प्रकीर्तिताः
धारिका दीप्तिमत्युग्रा ज्योत्स्ना चेता बलोत्कटा  १४१
धात्री विभ्वीति मूर्तिभ्यः परिभाव्याः क्रमेण तु
पञ्चपक्षेऽथवा ग्राह्य त्वत्रानुक्तं तु यद्भवेत्  १४२
लिङ्गसंस्थापनप्रोक्त विधिनाखिलमाचरेत्
चन्दनाद्यै स्समभ्यर्च्य होम कर्म समारभेत्  १४३
समिदाज्यान्नलाजैश्च तिलैस्सर्षपकैर्यवैः
पलाशो दुम्बराश्वत्थन्यगोधाः पूर्वतोदिशि  १४४

शमीखदिरमायूरश्रीवृक्षा वह्निकोणतः
पलाशं तु प्रधानं स्यात्पलाशो वाखिलो मतः १४५
सहस्रं वा तदर्धं वा शतमष्टाधिकं तु वा
देव्या मूलेन होतव्यं तदङ्गैस्तद्दशांशतः १४६
शान्त्यः प्रोक्षणं दर्भस्पर्शनं च समारभेत्
तत्वतत्वेश्वराद्यैश्च होमयेत्प्रतिकुण्डकम् १४७
प्रायश्चित्तमघोरेण शतोच्चारेण होमयेत्
भूतिदर्भतिलै रक्षां कृत्वा तत्त्ववलिं तदा १४८
अन्तर्बलिं च क्षेत्रेशबलिं च प्रक्षिपेत् गुरुः
ततः प्रभाते विमले मूर्तिमद्भिर्गुरुश्शुचिः १४९
कृतनित्यविधानस्तु सामान्यार्घ्यकरो गुरुः
द्वाराणि तत्पतीनिष्ट्वा समुत्थाप्य महेश्वरीम् १५०
गन्धैः पुष्पैश्च धूपैश्च दीपैर्नवेद्यकैस्तदा
ताम्बूलान्तैश्च संपूज्य पिण्डिकां वर्धनीमपि १५१
अग्नि होमैश्च संतर्प्य प्रायश्चित्तं विधाय च
दत्वा मूलेन पूर्णां तु सर्वदोषनिकृन्तनीम् १५२
सर्वातोद्य समायुक्तं नृत्तगान समन्वितम्
धामप्रदक्षिणं नीत्वा गर्भगेहे निवेशयेत् १५३
लिङ्गसंस्हतापनप्रोक्तविधिना तांनिवेशयेत्
पिण्डिकास्थापनं बाणलिङ्गस्य यदि वर्तते १५४
तदग्रे मण्टपादौ तु तल्लिङ्गं स्थण्डिलेन्यसेत्
नव वस्त्रपरिच्छन्नं शुभाशासु शिरो यथा १५५
पीठे सुधादिकं त्यक्त्वा तस्मिन्नेव प्रदेशके
पीठं संस्थापयित्वातु तत्र लिङ्गं निवेशयेत् १५६
रत्नानि सर्वपीठस्य गर्ते संस्थाप्य सद्गुरुः
सुवर्णं वाथ निक्षिप्य प्राग्वत्सर्वं समाचरेत् १५७

अष्टबन्धं त्रिबन्धं वा योजयेत्तदनन्तरम्
पुण्याह प्रोक्षणं शान्तिकुम्भ तोयाभिषेचनम्  १५८
प्रागुक्तविधिना कृत्वा आसनाणुं ततो न्यसेत्
पीठे क्रियाख्यं विन्यस्य गुरुः प्रागुक्तवर्त्मना  १५९
लिङ्गाग्रनिहितं चापि शिवकुम्भं च वर्धनीम्
वामादि चर्धनीयुक्तां वेदिकान्तरसंस्थिताम्  १६०
देवाग्रे स्थापयित्वा तु जीवन्यासेन विन्यसे
संस्थाप्य वर्धनीं वापि वर्धन्यष्टक संयुतं  १६१
वेदिका मध्यमे न्यस्त्वा जीवन्यासार्थमारभेत्
जीवन्यासस्त्रिषु स्थानेष्वथ कार्योऽथवासने  १६२
लिङ्गादौ स्थापिते कुम्भे न्यासकाले विशेषतः
स्नपनं कारयेदन्ते पञ्चामृतविधिस्तु वा  १६३
केवलेनाम्भसा वाथ गन्धाद्यैस्सम्यगर्चयेत्
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी  १६४
तावदत्र त्वया देवि सान्निध्यं कुरु सर्वदा
लिङ्गसंस्थापन प्रोक्तं दक्षिणार्धं च दापयेत्  १६५
चतुर्दिनं त्रयं वापि द्वयमेकं च नित्यशः
विशेषपूजा कर्तव्या होमेन च समन्विता  १६६
पूर्वोक्तैरणुभिश्शक्तैः पायसैर्होममाचरेत्
चतुर्थे प्रथमे वाथ चण्डकल्पो विधीयताम्  १६७
बाणादौ स च नेष्टस्स्यादथवा परिभाव्यतम्
पीठसंस्थापनस्यापि फलं लिङ्गप्रतिष्ठया  १६८
समानं कथितं यस्मात् प्रतिष्ठैकोभयत्र च  १६८ १-२

इति उत्तरकामिकाख्ये महातन्त्रे पीठप्रतिष्ठा विधिः पञ्चत्रिंशत्तमः पटलः

अलङ्कारमतो वक्ष्ये लिङ्गानां पीठ तुङ्गके
षोडशांशे तु मानेन पादुकं परिकीर्तितम्
वेदांशा जगती प्रोक्ता गुणाशः कुमुदो भवेत्
वस्वश्च पद्ममेकेन वह्नयंशः कर्ण उच्यते
अंशेन पट्टिकाज्ञेया महापट्टी द्विभागतः
घृतवार्यंशमानेन भद्रपीठमिदं मतम्

षोदशांशे तदुत्सेधे द्विभागं पादुकं भवेत्
शरांशं पद्ममानं स्यात् द्विभागं वृत्तमुच्यते
वेदांशं ऊर्ध्वपद्मं स्यात् अश्विन्यंशेन पट्टिका
घृतवार्य शमानं स्यात् पद्मपीठमिदं मतम्

एकविंशति भागेऽपि भागैः पादुकमूर्ध्वतः
पञ्चभिः पङ्कजं कम्पस्त्वेकेनोर्ध्वं त्रिभागतः
कर्णस्त्वेकेन कम्पः स्यात् भूतांशैः ऊर्ध्वपङ्कजम्
द्वाभ्यां पङ्कि भवेदूर्ध्वे धृतवार्येक भागतः

षोडशांशे तदुत्सेधे पादुकं सार्धभागभाक्
जगती बन्ध भागेन गुणार्धं पद्मतुङ्गकम्
व्योमांशं ऊर्ध्वकम्पं तु द्वाभ्यां कुमुद उच्यते
वृत्ताकारस्तदूर्ध्वे तु पट्टिका भागमानतः
द्वाभ्यां कर्णस्तु पद्मं स्यात् अर्धेनांशेन पट्टिका
शेषेण घृतवारी तुश्रीकरं पीठमीरितम्

पञ्चविंशति भातु तु व्योमांशं पादुकं भवेत्
पद्मं एकेन तस्य ऊर्ध्वे वाजनं व्योम भागतः

जगती चतुरंशं स्यात् पद्मतुराडं त्रिभागतः
गलमर्धं त्रिभागेन पद्मं त्र्यंशेन वृत्तकम्
कुमुदं पद्मं एकेन वाजनं व्योमभागतः
भागाभ्यां कर्णं इति उक्तस्स्यात् एकेनैव वाजनम्
कञ्चं एकेन भागाभ्यां महावाजनं ईरितम्
एकेन कम्पमर्धेन घृतवार्यभिधीयते
पीठं शाम्भवमाख्यातं अन्यथान्यद्विधीयते

एकविंशति भागं तु पीठोत्तुङ्गं विभज्य च
भागेन पादुकं वेदभागेन जगती मता
एकेन कर्णस्त्वेकेन पद्मं स्यात् गुणभागतः
कुमुदं पद्ममंशेन वाजनं एक भागतः
कर्णो द्विभागो भागेन वाजनं पद्ममंशतः
द्विभागा तु महापट्टी पद्ममंशेन भागतः
कम्पस्स्यात् घृतवार्यूर्ध्वे विजयाख्यमिदं मतम्

अष्टादश विभागे तु व्योमांशे पादुकं भवेत्
अध्यर्धं पद्मं इति उक्तं कम्पं एकांशतो भवेत्
जगती वेद भागेन गुणाशः कुमुदो भवेत्
कम्पं एकेन कर्णस्स्यात् द्विभागः कम्पमेकतः
महापट्टी द्विभागेन वाजनं च एक भागतः
अर्धेन घृतवार्युक्तं उमा पीठमिदं मतम्

विकारांशे तदुत्सेधे पादुकं भागमानकम्
पद्ममंशमितं बन्धभागेन जगती भवेत्
भागाभ्यां पङ्कजाद् ग्रीवा च अर्धार्धेनोर्ध्वपङ्कजम्

कुमुदं स्यात् द्विभागेन पद्मं अर्धेन च अर्धतः
कैपं कर्णस्तु च अर्धेनार्धेन कम्पं च वारिजम्
भागार्धेन महापट्टी सार्धेन अंशेन मूर्धनि
घृतवारि समाख्यातं सम्पत्करं इहोदितम्

रुद्रभागे तु तुत्तङ्गे व्यामांशं पादुकं भवेत्
गुणांशं जगती कम्पमेकं कर्णो द्विभागतः
एकांशो वाजनः प्रोक्तो महापट्टी द्विभागतः
घृतवार्येक भागेन नन्दिकावृत मीरितम्

तिथ्यंशं विभजेत्तुङ्गं अध्यर्धं पादुकं भवेत्
अर्धेन कम्पं स्यात् गुणांशं गलमर्धतः
अर्धेन कम्पं पद्मं स्यात् गुणांशं गमर्धतः
पद्मं अंशेन भागाभ्यां कुमुदं पद्मं अंशतः
अर्धं गलं त्रिभागेन पद्मं सार्धेन पट्टिका
अर्धांशं घृतवार्युक्तं स्वस्तिकं चेदमीरितम्

तुङ्गाष्टादश भागे तु द्विभागं पादुकं भवेत्
पङ्कजं तु त्रिभागेन पट्टिकैकांशनिर्मिता
षड्भागैः कर्ण इत्युक्तो वाजनं चैक भागतः
अब्जं द्विभागतः प्रोक्तं द्वाभ्यां वाजनं इष्यते
घृतवार्येक भागेन पूर्णचन्द्रमिदं भवेत्

कलांशं विभजेत्तुगं व्योम भागेन पादुकम्
द्वाभ्यां पद्ममथैकेन कम्पंपड् भागतो गलम्
भागेन कम्पं पद्मं स्यात् द्विभागेन द्विभागतः

महापट्टत्र्यंशमानेन घृतवार्यूर्ध्वतो भवेत्
स्थण्डिलं पीठमेवं स्यात् पुनरन्यदिहोच्यते

त्रिषडंशे तदुत्सेधे द्विभागं पादुकं भवेत्
योमांशं कम्पमित्युक्तं द्विभागं पद्मं उच्यते
भागेन कम्पं इत्युक्तं कम्पं षड् भागतो गलम्
भागेन कम्पं पद्मं स्यात् द्विभागेन द्विभागतः
महापट्टी ग्रंशमानेन घृतवार्यूर्ध्वतो भवेत्

एकोन विंशति ग्रंशे तु द्विभागं पादुकं भवेत्
कम्पमंशेन भागेन पुनः कम्पं द्विभागतः
पद्ममंशेन कम्पस्स्यात् शेषं पूर्ववदीरितम्
स्वायंभुवं इदं प्रोक्तं अधिष्ठानानियानि च
उपपीठानि तान्यर योज्यानीहाग्रजोत्तमाः

षड्त्रिंशत्तमे पटले बाणलिङ्ग प्रतिष्ठा विधिः

बाणलिङ्ग प्रतिष्ठां तु वक्ष्ये संक्षेपतः क्रमात्
बाणो नामासुरः प्रोक्तस्स च सिद्ध्यर्थ मादरात् १
प्रार्थयामास पूजार्थं लिङ्गानि विविधानि च
दत्तवाल्लिंगकोटीनां चतुर्दशाः महेश्वरः २
तानि संपूज्य कालान्ते स्थानेष्वेतेषु न्यक्षिपत्
लिङ्गाद्रौ कालिकागर्ते श्रीनगे कन्यकाश्रमे ३
कन्या तीर्थे च नेपाले महेन्द्रे चामरेश्वरे
अन्यत्र च नदीमध्ये पर्वते च विशेषतः ४
माष मात्रादि हस्तान्तं तेषां मानमुदाहृतम्
पादाङ्गुल विवृद्धान्तु गृहणीयाद्वा यथेच्छया ५

विस्तार नाहमानं तु बाणलिंगस्य नेष्यते
रेखाबिन्दु कलङ्कादि रहितं युक्तमेव वा ६
सर्वेषामपि लिङ्गानां बाणलिङ्गं विशिष्यते
स्नपने यजने धूपे गन्धपुष्प निवेदने ७
अन्य कर्मणि विप्रेन्द्राः स्वायंभूतादिके तथा
प्रासाद पीठिकादीनां नियमो न च नेष्यते ८
ग्रामादि सर्व वास्तूनां बाह्ये बाह्यान्तरेऽपि वा
विमानं बाणलिङ्गस्य कल्पयेत् कल्पवित्तमः ९
शिला मृल्लोह सद् वृक्ष रत्नाद्यैः पीठिका भवेत्
एक वर्णं भवेत्पीठं सर्व कामार्थ सिद्धये १०
लिङ्गोत्सेधं त्रिभागैकं पञ्चद्व्यंशमथापि वा
विधेयं खातमानन्तु लिङ्गार्द्धमथवा द्विजाः ११
यथाभिमतमानं वा खामानमुदाहृतम्
सतित् प्रवाह संस्थं च बाणलिङ्ग समाकृतिः १२
यदन्यपि बोद्धव्यं लिङ्गं सर्व सुखावहम्
पर्वतादि समुत् भूतन्तद्वदेव समीरितम् १३
उन्नतन्तु मुखं ज्ञेयं स्थूलभागे कृशेपिवा
स्थूलं वाथ कृशं कान्तिमद्रूप मूर्ध्वगः १४
रत्नजञ्चैव माख्यातं लोहजञ्च तथामतम्
सहजं वाथभिन्नं वा लिङ्गं श्रेष्ठं सयोजितम् १५
रत्नजे लोहजेप्येवं पार्थिवेपि तथामतम्
सर्वेषामपि चैतेषां प्रतिष्ठाद्यं निगद्यते १६
शैललिंग प्रतिष्ठायां श्रेष्ठकाल उदाहृदः
चललिंग प्रतिष्ठायां प्रतिमादौ च मध्यमः १७
कालोधमस्स्यात् बाणादौ मुमुक्षोस्सर्व एव हि
मासायनर्क्षवारादि विधिस्तेषु च नेष्यते १८

तथैव बाणलिंगस्य किंतु कालोधमोथवा
विधाय वज्रबन्धाद्यं ततः स्थापन मारभेत् १९
अंकुरार्पण कार्यन्तु प्रागुक्त विधिना नयेत्
रत्नन्यासन्ततः कुर्यान्नवः पञ्चैक रत्नकम् २०
पिण्डिकावट मध्येतु हैमं वाथ विनिक्षिपेत्
लक्षणोद्धारण न्नेष्टं स्वाकारो लक्षणं भवेत् २१
विधायलिंगशुद्धिन्तु शिवेनास्त्रेण मृज्जलैः
जलाधिवासनं कुर्यान्नव पञ्चैक कुण्डकम् २२
कुर्याल्लिंगाधि वासार्थं वेदिका सहितं यथा
वेदिकारहितञ्चैत् ग्रहादौ स्थण्डिलं मतम् २३
शिल्प्युद्वासनं पुण्याहं विप्रभुक्त्युपलेपनम्
भूपरिक्षा विधेयन्तु वास्तु पूजाग्नि तर्पणम् २४
स्थण्डिले शयनं तस्य पूजनं प्राग्वदाचरेत्
जलमध्यादथानीय शुद्धिं गव्यादिभिर्नयेत् २५
अभ्यर्च्यावेष्ट्य वस्त्रेण कृत प्रतिसरं शिवम्
शय्यां मध्ये निवेश्याथ शिवकुंभं च वर्धनीम् २६
विद्येश कुंभ संयुक्तं ससूत्रं सापिधानक
सहिरण्यं सवस्त्रं च गन्धोदपरिपूरितम् २७
संस्थाप्य संयजेत्सर्वां स्तत्वतत्वेश संयुतान्
मूर्ति मूर्तिश्वरान्यस्त्वा संपाद्यैवं शिवानलम् २८
समिदाज्यान्न लाजैश्च तिलेन च समन्वितम्
जुहुयात् मूलमन्त्रेण शतमष्टोत्तरं यथा २९
मनोन्मन्यार्ध मङ्गैस्तु दशांशं द्विजसत्तमाः
तत्वतत्वेश्वरादीनां पूर्ववत् होममाचरेत् ३०
वस्त्रेणाच्छाद्य लिंगन्तु नैवेद्यं च निवेदयेत्
प्रातः स्नात्वार्चयित्वा तु मण्डपाधिप देवताः ३१

लिंगमग्नि मघोरेण जुहुयाच्चत संख्यया
संप्राप्त दक्षिणस्तुष्टः प्राप्त पञ्चाङ्गभूषणः ३२
मुहुर्ते समनुप्राप्ते मन्त्रन्यासं समाचरेत्
एकाद्या नवनिष्कान्ता भवेद्देशिक दक्षिणा ३३
संकल्प्य सासनं मूर्तिं मूलमन्त्र शिवे न्यसेत्
तज्जलैः स्थापयेद्देवं देवीं पीठ स्वरूपिणीम् ३४
स्नपनं कारयेदन्ते दद्यान्नैवेद्यमादरात्
यदनुक्तं भवेदत्र लिंग स्थापन वन्नयेत् ३५
चतुर्थहोमं चण्डेशयजनं चास्य नेष्यते
प्रत्यहं पूजयेद्देवं अर्चनोक्त विधानतः ३६
शिष्टलिंगे गतिर्नास्ति समान्यस्य गतिं क्षणात्
जीर्णादि दोष दुष्टं च विधिनापि न चालयेत् ३७
सुदृढं स्वर्णपट्टाद्यैः कृत्वाशान्तिं समाचरेत्
कुंभे वा स्थण्डिले वापि मण्डले पीठकादिके ३८
पूर्वदिक्कलिते देशे दिक्कल्प्से मण्डपादिके
संपूज्य देवदेवेश मुदग्देशे मनोन्मनीम् ३९
अष्ट विद्येश्वरोपेतं गन्धाद्यैरुपाचारकैः
पञ्चाङ्ग भूषणोपेतो यावत् कृत्यं समाप्यते ४०
अन्ते विसर्जनं कुर्यात् शान्ति होमं समाचरेत्
आदावन्ते च वा होमं प्रत्यहं होममेव वा ४१
तत्र संप्रोक्षणं नेष्टं तदर्धं होममेव वा
लिंगाग्रे स्थण्डिलं तत्र कुंभसंस्थापणं नुहि ४२
कुंभेत्वावाहनं तस्मात् कुंभमन्त्रान्निवेशयेत्
नेष्यते स्नपनं हित्वा जीर्णोद्धार विधौ द्विजाः ४३
तत्कुंभोदैरपि स्नानं केवलं प्रोक्षणं तु वा
क्रियान्ते स्नपनं कुर्यात् विशेषेणार्चयेच्छिवम् ४४

एष एव विधिः प्रोक्तो बन्धविश्लेष कर्मणि
स्थल कर्मणि विश्लेष सुधाकर्म विहीनके  ४५
च्चणमात्रे च निर्वृत्य कर्मण्यत्र न पूजनम्
होमाद्यमपि नेष्टं स्यात् कर्तुं लिंगं समर्चयेत्  ४६
गन्धाद्यरुपचारैश्च शान्ति होमन्तु वा नयेत्
मूर्तिहोमं दिशाहोमं तत् कर्म गुरुलाघवम्  ४७
पीठस्थलोप कृल्सौ चेत् स्नपनं देव पीठयोः
तयोरभ्यन्तर स्यापि दाडर्य शैथिल्य कारणात्  ४८
शुद्धिं वस्त्रादिना कृत्वा यथा निर्माल्य शोधनम्
अस्त्रांबु प्रोच्चणं तत्र स्नपनार्थं द्विजोत्तमाः  ४९
बहु दैवसिकं स्नानं भंगश्चेत् स्नपनं महत्
महाहविस्तथा प्रोक्तं राज्ञोराष्ट्रस्य शान्तये  ५०
ग्रामस्थान जनानाञ्च तत्स्थान वासिनाम्
कर्तुः कारयितुश्चापि देशिकस्य विशेषतः  ५१
प्रासादे पतिते भिन्ने त्वेत देवं समीरितम्
स्वायंभुवादि लिंगाना मेतत् सामान्यमीरितम्  ५२
शिल्प्यपेच्चमिदं कर्म कुर्यात्संप्रोच्चणान्वितम्
अन्यत् सर्व समानं स्यात् कर्मसामान्यलिंगकः  ५३
स्वायंभुवादि लिंगानां नेष्यतां मनु संकरः
अनेनैव प्रकारेण स्थापनं रत्नजे मतम्  ५४
स्वर्णादि लोहजेवापि तत् संभूतेति कीर्तितः
चलेवाप्यचलेवापि स्थापनञ्चैत दीरितम्  ५५
चलञ्च द्विविधं प्रोक्तं अङ्गं प्राधानिकं त्विति
चित्रादि प्रतिमादीनां पूजार्थं तत्तदग्रके  ५६
पूजितं त्वंगमित्युक्त मन्यत् प्राधानिकम्मतम्
अङ्गिनश्च यथा पूजा यत्काले शास्त्र चोदिता  ५७

नित्योत्सवादि संयुक्ता तथा तस्य क्रिया भवेत्
अन्यत्र शुद्धनृत्तं च तद्वन्नित्योत्सवादिकम् ५८
त्यक्त्वान्यत् प्राग्वदुद्दिष्टमात्मार्थे तद्विशिष्यते ५८ १-२
इति उत्तरमामिकाख्ये महातन्त्रे बाणलिङ्गप्रतिष्ठाविधिः
षट्त्रिंशत्तमः पटलः

सप्तत्रिंशत्तमे पटले काम्यलिंग प्रतिष्ठा विधिः
काम्यलिंग प्रतिष्ठां तु वक्ष्ये लक्षण पूर्वकाम्
काम्यानि सिद्धयो ज्ञेयाः सिद्धयो बहुधा स्मृताः १
कन्यसं मध्यमं ज्येष्ठं चेति चतुर्विधम्
प्रत्येकं त्रिविधं प्रोक्त मुत्तमादि विभेदतः २
फलं दृष्टमदृष्टं च द्विधं तत्परापरम्
कन्यसं भूपतीशत्वं मध्यमं बलसिद्धयः ३
उत्तमं खेचरत्वं च श्रेष्ठं देव समानता
भिद्यते बहुधैकैकं विद्येशत्वादि भदतः ४
विद्येशत्वं च रुद्रत्वं ब्रह्मत्वं वैष्णवम् पदम्
इत्येवमादिदैवत्वं श्रेष्ठमित्युच्यते बुधैः ५
सिद्धयश्चाणिमाद्याश्च चक्रवर्ति त्वमेव च
इत्येवमादिकं श्रेष्ठं सिद्धीनां मुनिपुंगवाः ६
गुलिकाञ्जन पाताल खड्गघण्डादि मध्यम्
अपमृत्युजयोच्चाय वश्याद्य मधमं मतम् ७
दृष्टत्वे तदनेनैव यद्देहेनोप भुज्यते
देहान्तरेण वा दृष्टं मायाकार्ये परत्र च ८
मायाकार्येऽमरेशादि रुद्रस्थाने तु यत्सुखम्
अपरं तत्परं विद्यादनन्तादि पतट्स्थितिः ९
न सिद्धिर्न च मुक्तिश्च लिंगाश्रयणमन्तरा

शिवलिंग मनादृत्य सिद्धि मुक्तयभिलाषिणाः १०
एते मूढाधियस्तीर्णाः किं भीमं भव सागरम्
भवाभीष्ट फलं प्राप्ताः सिद्धिसिद्धाः सुराः मताः ११
रत्नलिंग जपा मूढाः का युक्ति भ्रान्तः चेतसः
तस्मालिंगाश्रयात्सिद्धर्युक्त लिङ्गसमाश्रयेत् १२
विष्णवाद्या वसवो रुद्राः मुनयश्च महौजसः
विधिवल्लिंगमाराध्य फलमिष्टतमं गताः १३
स्वायंभुवं स्थापितं वा मुनिभिर्विबुधैर्गणैः
सिद्धैर्विद्याधराद्यैश्च न मानुष्यैः कदाचन १४
स्वयं वा स्थापयित्वा तु सर्वलक्षण संयुतम्
यथा शास्त्रं यथा कालं यथा देशं परीक्ष्य च १५
तत्र संसाधयेत् सिद्धि माचार्यस्साधकोऽपि वा
स्वयंन कर्तु मशक्तानां वृपतीनां हिताय च १६
देशिकस्साधयेत् सिद्धिं चतुर्णां वा हिताय च
स्वस्य वान्यस्य वाकर्तुर्हितकृद्वद्देशिकोत्तमः १७
लिंगार्थमाकरं यायात् स्वस्य कृत्यानु सारतः
शिलादि द्रव्यमादाय नयेत् कर्मानुरूपतः १८
तानि द्रव्याणि बगुधा शिलामृल्लोह दारुभिः
रत्नक्षणिक वस्तूनि कथ्यन्ते तान्यशेषतः १९
श्वेता रक्ता च पीता च कृष्णा चेति चतुर्विधा
चतुर्णामपि वर्णानां शिला धात्री च संमता २०
एताश्चतस्त्रो विप्रस्य तिस्त्रो राज्ञामुभे विशः
एका शूद्रस्य नियमाच्छिला भूम्यश्च कीर्तिताः २१
तत्तद्भूजनिता एव मृदो लिंगार्थमीरिताः
फलं लिंगानूरूपेण शिलानां समुदाहृतम् २२
पृथ्वीशत्वं फलं ज्ञेयं चतसृणां मृदामपि

श्री कामस्य सुवर्णोत्थ राज्यकामस्य राजतम् २३
आयसं मारणे लिंगमुन्मादे सांस्यजं भवेत्
उत्सादे रीतिजं ज्ञेयं त्रपुजं पुत्र वृद्धये २४
वृद्धिकामस्य ताम्रोत्थं सीसजं व्याधिनाशनम्
लोहलिंगं समाख्यातं रत्नलिंग मथोच्यते २५
वज्रलिंगं क्षितीशत्वे मौक्तमारोग्यदं भवेत्
इन्द्र नीलमयाल्लिंगात् सर्वान् कामान् समश्नुते २६
महान्नीलमयाल्लिंगात् वैष्णवं पदमाप्नुयात्
वडूर्याद् व्याधिनाशः स्यात् सौभाग्यं पुष्परागजान् २७
आरोग्यतं मरकतं प्रवालं च वशीकरम्
राजावर्तमयाल्लिंगात् महाभोगं समश्नुते २८
नैलं नागेन्द्र भोगाय शङ्खं सौभाग्यदं भवेत्
शूलाक्ष मणिजं शत्रु क्षयाय पुलकं तथा २९
सस्यकं सस्य निष्पत्यै सौरार्थं सूर्यकान्तजम्
चन्द्रकान्तं मृत्युजिते भूतिदं पद्मरागजम् ३०
स्फाटिकं सर्वसिद्ध्यर्थं भौमजं दिव्यसिद्धये
वैक्रान्तकं महावृत्तरक्तायथस्कान्दजं हितम् ३१
क्षुद्रसिद्धियुतं मन्त्रजाति संस्कार संस्कृतम्
गुणादष्टफल प्रोक्तं परासु मणिजातिषु ३२
इत्थं रत्नजमाख्यातं दारुजं कथ्यतेऽधुना
सारवद् वृक्षजं भूत्यै क्षीरद्रुमजमायुषे ३३
साधुर्यगन्ध गुणवज्ज्ञान सौभाग्य कीर्तिदम्
रक्ताह्वचन्दनाशोकं शिंशुपाशोक बिल्वजम् ३४
सर्वदुःखादि राहित्ये पिशाचज मरिच्छिदे
यद्वा साधक नक्षत्र वशाल्लिंग तु दारुजम् ३५
कारस्करं चामलकंतथोदुम्बर जम्बुकौ

खदिरः कृष्णककुभौ शिरीषाश्वत्थकौ ततः ३६
पुन्नागश्चैव न्यग्रोधः पलाशः प्लक्षकस्तथा
अम्बष्ट बिल्वार्जुन काश्शाल्मली वकुलस्तथा ३७
पिण्डी सर्जस्तथा वृक्षो वञ्जुलः पनसस्तथा
आम्रार्कौ च कदम्बश्च वह्नि निम्बौ तथैव च ३८
मधूकश्चाश्विनी पूर्वनक्षत्राणां तु पादपाः
एभि-ऋक्षैरभिरुद्धैस्तरुभिश्शान्तिकादिकम् ३९
विधाय लिंगं कर्तव्यं साध्यर्क्षे मारणादिकम्
श्वेतार्कमूलजं लिङ्गं जयार्थं विजयार्थिनाम् ४०
चन्दनं सर्ववश्यं स्याच्छ्रीकरं रक्तचन्दनम्
सरलं सर्वकाम्यार्थं खदिरं रोगनाशनम् ४१
साप्तपर्णं च सालोत्थं राजादन समुद्भवम्
विशेषात् सर्व वर्णानां सर्वकामार्थ साधनम् ४२
उदुंबर मयं पुष्टयै शान्त्यै न्यग्रोध संभवम्
वश्यायाश्वत्थजं लिङ्गं आरोग्ये खादिरं भवेत् ४३
लिंगं वैभीतकं शत्रूच्चाटनार्थं द्विजोत्तमाः
दारुजं लिंगमाख्यातं क्षणिकं लिङ्गमुच्यते ४४
संकेतं मोक्षभूत्यर्थं गोमयं रोगनाशनम्
अन्नमन्नाद्य कामस्य पैष्टं पुष्टि प्रदायकम् ४५
गौलं प्रीतिकरं प्रोक्तं फलमिष्टार्थ सिद्धये
घृतेन कल्पितं लिङ्गं ह्लाद दृदुःखिनामपि ४६
ह्लाद कृन्नवनीतं च गुणाढ्यं मृण्मयं भवेत्
विशेषाद्भस्मजं लिङ्गं सर्वव्याधि निवारणम् ४७
स्वस्ववर्णानुरूपेण पौष्पं पुष्टिप्रदायकम्
बिल्वादि पत्रजं लिंगं यत्तत्पुत्र विवर्धनम् ४८
तद्बीज जनितं लिंगं विशेषात् तृप्तिकारणम्

धान्य तराडुलजं लिंगं तत्तद्द्रव्य फलप्रदम् ४९
कन्दमूलमयं लिङ्गं ब्रह्मतत्वस्य कारणम्
रोगहृत् साक्तवं लिङ्गं तथा लाज विनिर्मितम् ५०
जलेन रचितं लिंगं प्राणिनां शान्तिपुष्टितम्
लिंगं यच्चित्रितं सद्यो विचित्रफल दायकम् ५१
कर्पूर चन्दनाद्यैस्तु लिंगं यत्तज्ज्ञरापहत्
द्रव्याणि कथितान्येवं लक्षणं च विधीयते ५२
प्रासाद गर्भमानेन लिंगं ज्येष्ठादि भेदतः
मुख्य तस्सिद्धये प्रोक्तं मुक्त्यर्थ मनुषङ्गतः ५३
हस्तादि लिंगमानानि यानि तानि विमुक्तये
भुक्तये चानु षड्गेण भवन्ति विधियोगतः ५४
गर्भार्धमधमं ज्ञेयं पञ्चत्र्यंशं वरं भवेत्
तदन्तरेऽष्टभागे तु नव लिंगानि सन्ति हि ५५
तस्मात्तस्माद् अधस्तात्तु त्रीणि भवन्ति हि
षट्त्रिंशन्मान मुद्दिष्टं गर्भमानं द्विजोत्तमाः ५६
प्रासादे वा ततो वह्नि वेदग्रह विभाजिते
द्वारिवांशं परित्यज्य सपीठाश्रा विशेषतः ५७
पूर्ववच्च प्रमाणानि लिंगानां विहितानि तु
एकाङ्गुलं समारभ्य साङ्गुलाङ्गुलवृद्धितः ५८
अष्टोत्तर शतान्तं तु त्रिविद्धाङ्गुलमानतः
एकहस्तं समारभ्य षडङ्गुलविवृद्धितः ५९
नव हस्त प्रमाणान्तं हस्तमान वशान्नयेत्
हस्तादधः स्थितं शैलं प्रासादेषु न शस्यते ६०
पादोनं दारुजं लोहमस्यार्धेनैव संमतम्
अङ्गुलादि वितस्त्यन्तं रत्नलिंगं द्विजोत्तमाः ६१
आयादि शुभसंयुक्तं नयेत् कर्मानु रूपतः

हस्तादध स्थितं शैलं योज्य मुच्चाट नादिषु ६२
लिंगायामैक भागे तु वेद भागेन विस्तरः
खराडत्रयं समं कुर्यात् सिद्धि लिङ्गेषु सर्वसु ६३
चतुरश्रं तथाष्टाश्रं कूर्चा वृत्त शिरोवहम्
अर्धचन्द्र शिरोयुक्तं स्थापयेदैन्द्र पीठके ६४
पूर्वदिक्स्वेष्टसिद्ध्यर्थं लिंगं वज्रशिरो यथा
वज्रकार्यं समायोज्य स्तंभादि परिकीर्तितम् ६५
लिंगोर्ध्वे रुद्रभागे तु शरांशैश्चतुरश्रकम्
वस्वश्रं पूर्ववत् वृत्ते सप्ताश्रं स्वां दिशं विना ६६
आग्नेय पीठे तल्लिंगं वह्निदिक् स्वाम्यसिद्धये
लिंगं शक्ति शिरोपेतं स्थाप्यं शक्त्यङ्ग पिरिडके ६७
शान्त्युग्रं तु तथा तेजो रिपुनाशो द्विषादयः
तापदाहं रिपोः कुर्याल्लिंगमाग्नेयकं द्विजाः ६८
नवांशे पञ्चभिः पूर्वापरे पार्श्वद्वयं त्रिभिः
प्रधान भुजयोर्याम्यं वृतमग्निच्युतिः क्रमात् ६९
याम्यदिक् स्वाम्यसिद्ध्यर्थं स्थापयेद्याम्यपीठके
लिंगं दराडशिरोयुक्तं स्थापयेद्विधिनामतम् ७०
गुरुदराडं तु याम्याया मायुर्वृद्धिं च पौरुषम्
रिपोर्देशे स्थितं नाशं नगरद्दक्षिणे ततः ७१
मारीं च भेदनं रोगं विधत्ते नात्र संशयः
दैर्ध्याद्वाविंशदंशे तु शरांशैश्चतुरश्रकम् ७२
अष्टाश्रं पूर्ववद्वृत्तं दशाश्र सहितं द्विजाः
स्थापयेद्राक्षसे पीठे स्वदिक् साधन सिद्धये ७३
खड्वाङ्गं पिरिडकायां तु स्थापयेदसि मस्तकम्
अरातिक्षयविद्वेषं कीलभेदेन मोहनम् ७४
तत्सैन्यध्वंसमुन्मादं रक्षोमारी प्रवर्तनम्

कुरुते नात्र सन्देहो विधिवन्मन्त्र संयुतम् ७५
उत्सेधे मनुभागे तु वेदाश्रं ब्रह्मभागकम्
चतुरश्रं तथाष्टाश्रं वृत्तं बालेन्दु मस्तकम् ७६
वारुणयां स्थापयित्वा तु तद्दिगीशत्वमाप्नुयात्
पाशमस्तक युक्तं तत् पाशकाय विधानतः ७७
प्रतिष्ठाप्य परां शान्तिं पुष्टिं श्री वृद्धि सष्टवम्
व्याधिहानिं च सौभाग्यमाप्नुयान्नात्र संशयः ७८
गायत्र्यंशे भवेद्दैश्वर्यं सप्तभागं तु विस्तरे
नवभक्ते त्रिभिर्भक्ते मध्ये षड् रस वृद्धये ७९
तदूर्ध्वे तु भवेद्वृत्तं रुद्रांशे त्रापुषं शिरः
वायव्यां तु प्रतिष्ठाप्य वायु दिक् स्वाम्य
माप्नुयात् ८०
लिंगं ध्वजशिरोयुक्तं ध्वजाङ्कायां न्यसेद्गुरुः
तेन लिंगेन मन्त्रज्ञः प्रोच्चाटोद्वेग विभ्रमान् ८१
भृशं शोषवियोगौ च शत्रोः कुर्यान्नसंशयः
पूर्वोक्तं वारुणं लिङ्गं याद्मं चोर्ध्वशिरोऽन्वितम् ८२
यद्माख्यायां प्रतिष्थाप्ययद्मदिक् स्वाम्य माप्नुयात्
गदा मस्तक लिंगं तु गदाङ्के स्थाप्य देशिकः ८३
जाम्बूनद सुख प्राप्तिमतीव बलदं मतम्
जयं धैर्यं तथा राज्य प्राप्तिं च प्रभुतामपि ८४
लभते नात्र सन्देहो मन्त्रैस्सान्निध्यमागतम्
दैर्घ्यार्धं रौद्रवत् कृत्वा रसाङ्गैः पद्मसंभवम् ८५
एका दशांशो विष्णवंशः पार्श्वे रामैस्तु वर्धनात्
अष्टाश्रं वृत्तकं रौद्रं पार्श्वमध्ये त्रिरुन्नतम् ८६
कुक्कुटाराड शिरोयुक्तं लिंगमैशान्य पीठके
स्थापयित्वा स्वदिक् साम्यं लिंगं शूलशिरोयुतम् ८७

शूलाख्यायां तु संस्था पृथीवीशत्वमवाप्नुयात्
ज्ञानविज्ञानमोक्षार्थं योगीशत्व प्रदायकयकम्  ८८
शिवप्रदायकं सौख्यं तद्वत् साम्राज्यसिद्धितम्
उत्सेधे ग्रहभक्ते तु वेदाश्रं तु शरांशकम्  ८९
वस्वश्रं पूर्ववद्वृत्तं लिंगं छत्रशिरोयुतम्
ब्राह्मं स्थापयित्वा तु स्वदिगीशत्वमाप्नुयात्  ९०
तदेवाब्जशिरः पद्मं पद्माङ्कायां प्रतिष्टितम्
खचरी शत्वमाप्नोति साम्राज्य फलसाधन्  ९१
गायग्रयंशे तु लिंगोच्चे शरांशैश्चतुरश्रकम्
पूर्ववन्मध्य वृत्ते तु मस्तकं त्रपुषोपमम्  ९२
संस्थाप्य गारुडे पीठे तद्दिक् स्वाम्यपलं भवेत्
चक्रमस्तक संयुक्तं चक्राङ्कायां तु देशिकः  ९३
व्यस्त्वा पाताल सिद्धिं च रसायनमवाप्नुयात्
लिङ्गायामे नवांशे तु ब्रह्मांशो गुणभागतः  ९४
तथा विष्णु हरश्चापि विस्ताराच्च तथैव ते
सिद्धिलिंगमिदं श्रेष्ठं विच्छायादिषपिण्डकम्  ९५
आप्यादि देवलिंगेषु लोकपालार्चितेषु वा
सहस्र लिंगं कर्तव्यं तच्च प्रागुक्त वन्नयेत्  ९६
सर्वान् कामान्ददात्येतद्वागीशी कृतलक्षणम्
अर्चांशे वेदभागे तु नाहे नक्षत्र भाजिते  ९७
अष्टोत्तरशतं लिंगं सूत्रैर्विषययोजितैः
आढ्यादि लिंगान्युत्सेधैः समखण्डानि कल्पयेत्  ९८
छत्रकुक्कुटखण्डेन्दु त्रपुषाभ शिरांसि हि
धारालिंगं तथैकाश्रं द्वित्र्यंशादिकं द्विजाः  ९९
साध्यसिद्धिस्सुतावाप्तिः पुराप्तिः काम्यलाभता
मृतिरुच्चाटन दूषशान्ती पुष्टिर्वशी कृतिः  १००

अाकर्षारोग्य रागाश्च शोषणं च धनम् सुखम्
मोहस्तं भाभिधाताभ यद्वा पैशाचराक्षसैः १०१
अासुरं पौरुषं चैव सादेशैशान भैरवम्
देवत्वं देवराजत्वं सर्वकामफलं च यत् १०२
रुद्रत्वं च फलान्येषु लिंगेष्वेकाश्रकादिषु
एवमेव हि पीठानि कल्प्यान्यश्च विभेदतः १०३
लिंगानां लक्षणं ख्यातं विविच्यन्ते शिरांसु च
अष्टांशे तु चतुर्भक्ते भाग भाग विवर्धनाअत् १०४
भवन्ति पुण्डरीकादि शिरांसि फलभेदः
पुण्डरीकाद्यशो दीप्तिर्विशाले विपुलां श्रियम् १०५
प्राप्नोति सर्वं श्रीवत्साद्विजयं शत्रुमर्दनात्
कुक्कुटाण्ड शिरस्तस्य चतुर्थांश विवर्धनात् १०६
प्रजावृद्धिकरं यस्मात् प्रजां लेभे प्रजापतिः
तत् त्रिभागैक भागेन वर्तनादिषु मस्तकम् १०७
सप्तलोक पतित्वं च सौभाग्यायुष्य सिद्धिदम्
षड्भाग वर्धनाद् भूति निमित्तं त्रपुषाकृतिः १०८
साध्याश्च ॠषयो देवा यस्माद्भूतिं परां गताः
साधारण विधावेतान्यर्चयित्वा नरोत्तमाः १०९
प्राप्तःस्वं स्वमभिप्रेतं तदन्तेपद मव्ययम्
छत्राद्विशीर्ष मालोक्यं वज्रादीनां निगद्यते ११०
अर्चनांशे वेदभागे वज्रभागे तु वर्तितम्
त्रिभागवर्तनाच्छक्तिरर्चांशे रुद्रभाजिते १११
दिक्विभक्ते त्रिभिर्दण्डं सार्धांशेन स्वरांशकम्
खड्गमस्तकमाख्यात मष्टांशे सार्धवर्धनात् ११२
पाशध्वजं शरांशेतु सपादांशाद् गदाशिरः
ग्राहांशे सार्धभागेन शूलमूर्ध्नि त्रिरुन्नतम् ११३

वसुनन्दांशके भागवर्तनाच्चक्रपङ्कजे
शिरोलक्षण माख्यातं लक्षणोद्धार उच्यते  ११४
अर्चांशे नवधा भक्ते गुणांशे लक्ष्म लक्षयेत्
लक्ष्मार्धात् पक्षरेखे द्वे तस्याग्रे गजचक्षुषी  ११५
कुर्याद्दिक् साम्यसिद्ध्यर्थं वज्राद्यं लक्ष्म मूर्धनि
वज्रं शक्तिं च दण्डं च खड्गं पाशं ध्वजं तथा  ११६
गदा त्रिशूलं चक्रं च पद्मं चेदि दशायुधम्
ब्रह्मविष्णवादि देवानां पदमिच्छन् द्विजोत्तमाः  ११७
तदस्त्राङ्कित पीठं च तदस्त्राङ्कितलक्ष्मतः
लिंगाशे नवधा भक्ते नवांश कृत लक्ष्मकम्  ११८
स्थापितं शत्रुदेशे तु नाशनं स्वस्य तस्य च
द्वितीयाच्चक्षुषोर्वेधादक्षिरोगादिकं मृतिः  ११९
तृतीयादास्य सूत्राच्च पङ्गुत्वं मरणं ध्रुवम्
ग्रीवासूत्राच्चतुर्थाच्च शत्रुबन्धविनाशनम्  १२०
पञ्चमाद्भूतवेधाच्च भवेच्छत्रो पराजयः
षष्टांशात्तु तथा वेधात् पुत्रपत्नी विनाशकम्  १२१
हृद्देशे हृद्भवा शूला कुक्ष्यार्तिः कुक्षि वेदनात्
नाभिदेशे तु शत्रूणां भवेत्सर्वात्मकं भयम्  १२२
अर्चाया नवमांशे तु लक्ष्मसूत्रफलं क्रमात्
कथितं हि तथापीह त्रिभागे रसभागके  १२३
यवस्य तु तुरीयांशं ह्रासयेद्वर्धयेत् क्रमात्
वेध दोष निवृत्यर्थं एवं लक्ष्म प्रकल्पयेत्  १२४
गायत्र्यंशे तु लिंगोच्चे लक्ष्मविस्तृतिरंशतः
शिरसो वर्तनं यद्वत्तल्लक्षण शिखा भवेत्  १२५
तदैन्द्रे वज्रसंस्थानं तीक्ष्णाग्रं कुशमध्यकम्
शक्त्याख्यमर्थ विष्कम्भ युतमुन्नत मस्तकम्   १२६

याम्य दराडाग्र संस्थानं पाशाग्रट्टङ्क पूजितम्
नैश्चाचरे सजिह्वाग्रं कौबेरे तु गदाश्रकम् १२७
शूलाश्रमैश्वरं लिंगं वायव्यां ध्वजमस्तकम्
सामान्येषु निजाकारं लक्षणं स्वार्थ साधनम् १२८
लक्ष्ममध्येऽथवा कुर्यात् वज्राद्यायुधकल्पनम्
स्तंभनादौ तु कर्तव्यं लोकपालार्चितं द्विजाः १२९
अर्चायामे नवांशे तु सप्तमे वास्त्रकल्पनम्
मणि मुक्ता प्रवालानां न कार्यम मलार्चिणाम् १३०
स्वतेजोलक्षणं लोहे बाणलिंगे तथैव च
लक्षणैर्हीन मप्येतद्विस्तारायामनाहजैः १३१
शुभलक्षण लक्ष्मं चेत् लिंग सर्वार्थ सिद्धिदम्
पीठपिरिडकयोर्वक्ष्ये लक्षणं विप्रसत्तामाः १३२
लिंगायामसमं पीठं विष्णवंशोत्सेध संयुतम्
ऐन्द्रमाग्नेयकं याम्यं राक्षसं वारुणं ततः १३३
वायव्यं याक्षमैशान्यं ब्राह्मं गारुडमेव च
प्रोक्तानि पीठमानानि त्रिपादाः पिरिडका मताः १३४
ऐन्द्रयादि संज्ञिकास्तास्युः वक्ष्ये पीठाकृतिं ततः
वेदाश्रं योनिखराडेन्दुत्र्यश्रं वृत्त षडश्रकम् १३५
पद्ममष्टाश्रकं वृत्तं कुराड लक्षणतो नयेत्
वेदाश्रेऽष्टादशांशे तु भागत्यागात्सनन्ततः १३६
निर्गमं द्विगुणं दिक्षु क्षेत्रार्धेन प्रविस्तरम्
सभद्रं गारुडं पीठं वक्ष्ये तेषां तु भूषणम् १३७
ऐन्द्रं केवल वेदाश्रं पादकराठादि वर्जितम्
योनिश्चेद्रसभागे तु भवेदेकैकशः क्रमात् १३८
पाञ्जगती कर्णिका कराठनिर्गमात् पट्टिकाद्वयम्
पीठमाग्नेयकं प्रोक्तं पिरिडका षोडशांशतः १३९

तदुत्सेधे ग्रहांशे तु चन्द्रनैत्रैक वह्निभिः
पाञ्चती कर्णिका कराठं तदूर्ध्वे पट्टिकाद्वयम्  १४०
याम्यमेवं समाख्यातं तदूर्ध्वे याम्यपिरािडका
राद्मसे समाख्यातं भक्ते एकद्वित्र्यंशकैः क्रमात्  १४१
पाञ्चगती कर्णिका कराठं राद्मसे पट्टिकाद्वयम्
तदूर्ध्वे राद्मसी पिराडी वारुणे रुद्रभाजिते  १४२
चन्द्रयुग्मैकरूपैश्च त्रिभिः पाञ्चगती धटम्
कर्णिका कराठ एव स्यान्निर्गमात्पट्टिकाद्वयम्  १४३
तदूर्ध्वे वारुणी पिरािड वायव्ये विश्वभाजिते
इन्दुतेजोऽङ्घ्र रूपाद्मि रूपयुग्मेन्दुभागकैः  १४४
पाञ्चगती कुंभवेत्रास्युः कराठश्चैकैक वेशतः
निर्गमता पट्टिकास्त्स्त्रस्तदूर्ध्वे वायवी स्मृता  १४५
आप्यालङ्कार वद्याद्मं जङ्घाकर्णिकयोः क्रमात्
षोडशद्वादश दलात् कराठादूर्ध्वे विपर्ययात्  १४६
तद्दलाष्टसमोपेतां तदूर्ध्वे पिरािडकां नयेत्
ऐश रुद्रांशकं कृत्वा रूपरामैक रामकैः  १४७
चन्द्रनेत्रांशकैश्चैव पाञ्चतगती कर्णिका गलम्
तदूर्ध्वे पिरािडका ब्राह्मी गारुडं वा तथैव च  १४८
संस्थान वर्तनाकारैः वा राद्मसं मतम्
तदूर्ध्वे पट्टिके द्वे तु पिराडीं चैशीं तदूर्ध्वतः  १४९
पङ्क्यंशे रूप नेत्रैक गुणैः पात्कुम्भकार्णिकाः
कराठं चैकेन भागाभ्यां निर्गमा त्पट्टिके ततः  १५०
तदूर्ध्वे वैष्णवी वद्त्ये पिरािडकालद्मणं द्विजाः
आग्नेयी वैष्णवी चैन्द्री पिरािडका द्विमेखला  १५१
याम्या च राद्मसी याद्मी चैशी ब्राह्मी त्रिमेखला
षरामेखला च वायव्या वारुणी पञ्चमेखला  १५२

विष्णवंश षोडशोत्सेधः पुण्डिकापीठविस्तरः
शेषः पीठोच्चमानं स्यात् खातबाह्ये तु मेखला १५३
वज्रं वज्राङ्कपीठं स्यात् वज्री वज्राङ्ग पीठिका
पीठं सहस्रलिंगस्य सालङ्कारयुगाश्रयुक् १५४
आश्मेऽश्मसंभवा पिण्डी पार्थिवे पार्थिवी तथा
दारुजे दारुजा पिण्डी धातुजे धातु संभवा १५५
रत्नजे रत्नजा श्रेष्ठा श्रेष्ठैलोहैश्च वा भवेत्
उच्छ्रयं चललिंगानां पूजांशाद् द्विगुणं भवेत् १५६
लिंगायामे भवेत्पिण्डी लिंगं च परितो यथा
कृशुषु वर्धयेद्द्रुद्रं स्थूललिंगेषु ह्रासयेत् १५७
ह्रासयेद्वर्धयेदंश मच्युतस्य हि न च्युतिः
पिण्डिकायाः समानार्थं ह्रासयेद्वर्धयेद्द्विजाः १५८
चललिङ्गेषु कर्तव्यं रत्नजानां तु तद्भवेत्
मुद्गमात्रा पर्वमात्रा पिण्डिका शोभना यथा १५९
पिण्डिका सहितोत्सेधं लिंगनाहसमं भवेत्
सौक्ष्म्ये वैको गुणो येन बलीयान् सर्वदोषजित् १६०
समस्तमणिजातीनां दीप्तिस्सान्निध्यकारणम्
मानोन्मान प्रमाणं च तेषु ग्राह्यं न वा बुधैः १६१
साधयेद्दारुजं रत्नं पार्थिवं लोहजं तथा
गन्धादि निर्मितं वाथ न च सिद्धौ मनश्शिलाम् १६२
मुक्तौ हितं च तल्लिगं बाणं सर्वार्थ सिद्धिदम्
अन्यद्वापि भवेल्लिंगं नदी प्रस्रवणोद्भवम् १६३
लिंगाकारं यथा मन्त्रैः स्थापितं वरदं भवेत्
हस्तादधस्तु रौद्रेषु द्वाभ्यां पिण्डीति भाजिते १६४
रौद्रेषु कृत्येषु यवांशः पिण्डिकाधिकः
पिण्डिका हीनमाना या शत्रुहानौ ततोऽधिका १६५

उच्चाटादौ विधेयातु व्यङ्गा व्याधिप्रकोपने
स्त्रीनाशे लक्षणाद्धीना कार्या कर्मानुरूपतः १६६
अव्यक्त मेवमाख्यातं व्यक्ताव्यक्त मथोच्यते
समलिंगे तु कर्तव्यं चतुरष्टाश्र वृत्तकम् १६७
कुर्यात्पूर्वोक्तवक्त्रे तु एकद्वित्रिचतुर्मुखम्
पञ्चमं चैववक्त्राणि चतुर्दिक्षु च मध्यमे १६८
पूर्वोक्त विधिना कुर्यात् एकत्रिचतुराननम्
द्विवक्त्रं पूर्ववत्पूर्वे पश्चिमे कल्पयेत्ततः १६९
चर्तुर्णां चैव वक्त्राणामूर्ध्वे कुर्यात्तु पञ्चमम्
प्रतिवक्त्रं जटाचूडं चन्द्रार्ध कृत शेखरम् १७०
प्रतिवक्त्रं त्रिणयनं भुजस्कन्धाद्विकं तु वा
भुक्ति मुक्ति प्रसिद्ध्यर्थं यथा शोभं द्विजोत्तमाः १७१
भद्रपीठं द्विधा कृत्वा लोहं च सुदृढं नयेत्
व्यक्ताव्यक्तमिदं ख्यातं व्यक्तलिङ्गमथोच्यते १७२
बद्ध पद्मासनासीनं शुद्धस्फटिक सन्निभम्
पञ्चास्यं दशदोर्युक्तं प्रतिवक्त्रं त्रिलोचनम् १७३
वक्त्रं प्रति जटाचूडं चन्द्रार्ध कृतशेखरम्
देह पञ्चक संयुक्तं चरमद्वय संयुतम् १७४
तस्य पूर्वमुखं सुभ्रु सुकपोलं स्मिताधरम्
जाम्बूनद प्रतीकाशं कल्पयेत्तु भुजद्वयम् १७५
दक्षहस्तेऽक्षसूत्रं तु वामे वै बीजपूरकम्
दक्षमञ्जनसङ्काशं भीषणं विवृतास्यकम् १७६
व्यालबद्धजटाचूडं कपालदलमण्डितम्
तुङ्गाग्रश्मश्रु संयुक्तं शूलधण्डा करद्वयम् १७७
उत्तरं वामवक्त्रं तु दाडिमीकुसुमप्रभम्
भूषण प्रचुरं वक्त्रं योषाच्छविसमायुतम् १७८

दक्षिणोत्पन्न हस्ताढ्यं पश्चि मं रजतप्रभम्
बालवेष समायुक्तं पुण्डरीक निभेक्षणम् १७९
वराभय करोपेतं ध्यानासक्तमिव स्थितम्
पञ्चमं स्फटिक प्रख्यं प्रशान्तं सस्मिताननम् १८०
ईशानमूर्ध्व वक्त्रं स्यात् करौ कटकभूषितौ
इत्थं वक्त्रसमायुक्तं वक्त्र वर्णानुलेपनम् १८१
कलावत्सरदेशीयं दिव्याभरणभूषितम्
सर्व कामप्रदं शान्तं द्वात्रिंशल्लक्षणान्वितम् १८२
ईशानदेहकरणं कल्पयेद्द्वारसंयुतम्
भुक्ति मुक्ति प्रसिद्ध्यर्थं मथकर्मानु रूपतः १८३
संस्थान वर्ण दिव्यास्त्र द्वारादीनि प्रकल्पयेत्
कुर्यादीशान देहं तु दशतालोत्तमेन तु १८४
पुरुष प्रमुखान्देहानीश देहार्धमानतः
कुर्यात्तदुर्ध्व कायानि नाधः कायानि देशिकः १८५
पूर्वोक्त लक्षणैर्मानैः देहैः पञ्चभिरन्वितम्
कुर्यात्सदाशिवं देवं यथा युक्तं यथाशुभम् १८६
ध्यायेदेवं विधं वापि ज्ञानरूपं सदाशिवम्
कुर्यादूर्ध्वससौम्यास्यं दशबाहुं त्रिलोचनम् १८७
जटामकुट संयुक्तं चन्द्रार्धकृतशेखरम्
व्याल यज्ञोपवीतं चा शार्दूलवसनान्वितम् १८८
नृत्यन्तं सुस्मितं देवं सर्वा भीष्टप्रदायकम्
श्री कण्ठमेवमख्यात मन्यथापि च कथ्यते १८९
त्र्यक्षं षोडश हस्ताढ्यं पादद्वय समायुतम्
जटामकुट संयुक्तं मूर्ध्निधुत्तूरपुष्पकम् १९०
नानावर्णांवरैर्युक्तं वेणिकादिभिरलंकृतम्
ऊर्ध्वस्थदक्षपादाढ्यं दिव्यायुध समन्वितम् १९१

किञ्चित्सभङ्ग वक्त्राढ्य वामपाद समन्वितम्
वृषं ध्जं च खेटं च मुराडं चाग्निं च झर्झरीम्  १९२
पिच्छं च गजहस्तं च वामे त्वष्टभुजाः स्मृताः
त्रिशूलं नागहस्तं च परशुः पाश एव च  १९३
गदा च दीपं डमरुहस्तं त्वभयं कृत्ततः
नागैराभरणैर्युक्तं कुराडलाभ्यामलंकृतम्  १९४
सर्वलन्नण संयुक्तं पादनूपुर संयुतम्
गौरीं स्कन्दं गृहीत्वा तु वामे पार्श्वे तु संस्थिताम्  १९५
एव मूर्ध्वाङ्ग नृत्यन्तं त्वन्यथापि निगद्यते
नानायुध समोपेत विंशद्धस्तयुतोऽपि वा  १९६
नाना विधायुधोपेत नवद्वय करोथवा
दन्निणं वामजङ्घान्त मुद्धृतं वामापादकम्  १९७
कुञ्चितं वामहस्तो वा दन्निणो वा प्रसारितः
इतरोऽभय हस्त स्यात् परौ टङ्कानलान्वितौ  १९८
टङ्क विहाय शूलं वा डमरुं वापरे करे
अग्निं हित्वा मृगोवाथ रुद्रोऽयं काल संज्ञितः  १९९
त्र्यन्नश्चतुर्भुजः क्रूर स्सखट्वाङ्गक पालकः
वराभय करोपेता रुद्रोयं वाम संज्ञककः  २००
एष एव हि खट्वाङ्ग रहित श्शूल संयुतः
अघोर रुद्रनामायं भीमो भव विनाशनः  २०१
त्र्यन्नश्चतुर्भुजो दंष्ट्रायुतवक्त्रान्वितश्शुचिः
अन्योऽपि नक्र संयुक्तो जटामकुट संयुतः  २०२
धनुर्बाण समोपेता मृगटङ्क समायुतङ्क
भूतोत्तमाङ्ग विन्यस्त वामपाददलान्वितः  २०३
अथवा पादुके पद्मे भक्तानां शेखरेषु वा
वामे गौरी समायुक्तश्चन्द्रार्ध कृतशेखरः  २०४

एष रुद्रो भुजङ्गेश स्सर्वाभीष्टाफलप्रदः
त्र्यक्षो द्विभुजश्शान्तो जटाखण्डेन्दुमण्डितः २०५
वरदाभय वामतः पार्वतीयुतः
आसीनो वा स्थितो वापि वरदानोद्यतः स्वयम् २०६
देवी वामोरुसंस्था वा वामबाहूर्ध्व विग्रही
तस्यास्तु दक्षिणो बाहुरीश स्कन्ध स्थितोऽथवा २०७
तस्या कटद्याश्रियो वापि देवोयं सर्वकामदः
गौरी गौरीश्वरश्चैव चतुर्भुज समन्वितौ २०८
कपालशूल संयुक्तौ वरदाभयसंयुतौ
त्रिणेत्रौ वा द्विनेत्रौ वा प्रलम्बित पदान्वितौ २०९
प्रणम्रच्छविकत्र्यक्षौ पाद मूलस्य भैरवौ
एकस्याश्चतुरास्या वा पञ्चास्या वाथ भैरवाः २१०
भैरवैरपि हीनो वा पङ्कजोपरि संस्थितौ
कालान्तकादि संयुक्तौ भक्तानामथवोपरि २११
एष रुद्रस्समाख्यातिस्त्रिशूलः सर्वसिद्धिदः
देहार्धान्वित कान्तोऽयं श्रीमान्वृषभवाहनः २१२
द्विहस्तौ च चतुर्हस्तौ वरदाभय संयुतौ
मृगटङ्कयुतो वाथ ललाटेऽपि सुलोचनः २१३
विलोचनो वा दक्षाङ्गस्थितोमादेह एव वा
अर्धनारीश्वरो नाम्ना हर्यर्धो हरिणा यदि २१४
चतुर्भुजश्चतुर्वक्त्रः त्रिणेत्रश्चन्द्रशेखरः
शूल पङ्कज युक्तो वा वरदाभय संयुतः २१५
कपालशूल संयुक्तो बद्धपद्मासने स्थितः
नीलरुद्र स्समाख्यातो नाम्ना व्याग्रोग्रऽष्टिकः २१६
चतुर्भुजस्त्रिणेत्रश्च वरदाभयसंयुतः
पिच्छ चामरसंयुक्तो भीमरुद्र स्समीरितः २१७

मृगाक्ष मालयोपेतः फलाभयकरोऽपि वा
वरदाभय हस्तो वा शान्तरूपः स्मिताननः २१८
जटामकुट संयुक्तः स्थानकादि समन्वितः
रुद्रोऽयं सर्वशर्वस्स्यात् अभीष्टफलदायकः २१९
शर्वरुद्रस्त्रिणेत्रस्तु वरदाभय संयुतः
कपाल शूल संयुक्तो बद्धपद्मासनस्थितः २२०
मृगंशूल समायुक्तश्चतुर्भुज समन्वितः
पाशमुण्डधरो वापि टङ्कपाशधरोऽपि वा २२१
वरदा संयुक्तः स्थितः पद्मासनोपरी
भवरुद्र समाख्यात स्सर्वेषां भव नाशनः २२२
कपाल शूल हस्ताश्च रुद्रा एकादश स्मृताः
वराभय करोपेता स्सदंष्ट्रा उग्रदृष्टयः २२३
अथवा मृगटङ्कायां वराभय करान्विताः
उक्षस्थाः त्रिदशाः पद्मस्थिता वा गौरमूर्तयः २२४
कपालीशादयो रुद्रास्तत्तद्दिक् पालविग्रहाः
उग्रा नानायुधोपेतास्तत्तद्दिक्पालपालकाः २२५
तत्तद्दिक्पालढ्या यद्वा रुद्रोक्त विग्रहाः
किमत्र बहुनोक्तेन ये देवा रुद्र विग्रहाः २२६
यो रुद्राश्शान्त भावाढ्या स्तत्र प्रोक्ता महेश्वराः
एवं लक्षणमाख्यातं तेषां स्थापनमुच्यते २२७
एतन्नामादि वर्णेन बिन्दु नाद युतेन तु
त्रयोदशान्त युक्तेन चतुर्थ्यन्ताख्यया युजा २२८
उद्धरेन्मूलमन्त्रं तु ब्रह्माद्यङ्गानु सारतः
रुद्राणां रुद्रमूर्तीणां शान्तानामीश्वरो मनुः २२९
अथवा तैः पुरैवोक्त विधिनात्रापि कीर्तिताः
कालोऽङ्कुरार्पणं रत्नविन्यासो नेत्रमोक्षणम् २३०

शुद्धि प्रदक्षिणं तोयाधिवासो मण्डपक्रिया
तत्रैव कुण्ड संक्लृप्तिर्नव पञ्चैक सख्यया २३१
तक्षद्वासनं विप्र भोजनं वास्तु होमकम्
पुण्याहं वास्तु होमं च बेरशुद्धिरनन्तरम् २३२
कौतुकं स्थण्डिलं तस्या शयन स्थपनं तथा
कुंभादीनां सपर्या च नैवेद्यादि निवेदनम् २३३
तत्वमूर्त्यादि विन्यास स्तदीशैश्च समन्वितः
होमं पलाशसद्बिल्व वटोदुंबर पिप्पलैः २३४
अपामार्ग सदश्वत्थ खादिरैः प्राग्दिगादितः
प्रधाने तु पलाशेन घृतेन चरुणातिलैः २३५
द्वितीयेऽह्नि ततः पूर्णां दक्षिणादनमेव च
मन्त्रन्यासश्च विधिवत् स्नपनं पुष्कलोदनम् २३६
उत्सवो योग्य देवानां सामान्यस्थापनोक्तवत्
कर्तव्य स्सर्व कर्मापि लिंग संस्थापनं यदि २३७
मुखलिंगस्य वा विप्राः तदध्यायोक्तमार्गतः
कर्तव्यः सर्वकर्मापि विशेषस्तत्र कथ्यते २३८
एकान्ता यो मनुस्स्वेष्ट फलस्स्वाण्वन्तमेव वा
लिङ्गे विन्यस्य नक्षत्रं स्वेष्ट कर्म समारभेत् २३९
स्वायंभुवादिकं लिंगं समाश्रित्य कदाचन
कार्यं कर्माभिचाराद्यं न स्याच्चेत् स्वस्य तद्भवेत्

इति उत्तरकामिकाखे महातन्त्रे काम्यलिंगप्रतिष्ठा विधिः
सप्तत्रिंशत्तमः पटलः

लिङ्गायामैक भागे तु वेद भागेन विस्तरः
खण्डत्रयं समं कुर्यात् सिद्धिलिङ्गेषु सर्वसु
चतुरश्रं तथा अष्टाश्रं कूर्चावृत्त शिरोवहम्

अर्धचन्द्रं शिरोयुक्तं स्थापयेदैन्द्र पीठके
पूर्वदिक्स्वेष्ट सिद्ध्यर्थं लिङ्गं वज्रशिरोयथा
वज्रकायं समायोज्य स्तम्भादि परिकीर्तितम्

लिङ्गोर्ध्वे रुद्रभागे तु शरांशैः चतुरश्रकम्
वस्वश्रं पूर्ववद्वृत्ते समाश्रं स्वां दिशं विना
आग्नेयपीठे तल्लिंगं वह्निदिक् स्वाम्यसिद्धये
लिङ्गं शक्ति शिरोपेतं स्थाप्यं शक्त्यङ्ग पिण्डके
शान्त्युग्रं तु तथा तेजो रिपुनाशो द्विषादयः
तापदाहं रिपो कुर्यात् लिङ्गं आग्नेयकं द्विजाः

नवांशे पञ्चभिः पूर्वापरे पार्श्वद्वयं त्रिभिः
प्रधान भुजयोः याम्यं वृत्तमग्निव्युतिः क्रमात्
याम्यदिक् स्वाम्ब सिद्ध्यर्थं स्थापयेत् याम्य पीठके
लिङ्गं दण्डशिरो युक्तं स्थापयेद्विधिनामतम्
गुरुदण्डं तु याम्यायां आयुर्वृद्धिं च पौरुषम्
रिपोर्देशे स्थितं नाशं नगराद्दक्षिणे ततः
मारीं च भेदनं रोगं विधत्ते नात्र संशयः

दैर्घ्यद्वाविंशदंशे तु शरांशैश्चतुरश्रकम्
अष्टाश्रं पूर्ववत् वृत्तं दशाश्र सहितं द्विजाः
स्थापयेद्राक्षसे पीठे स्वदिक् साधन सिद्धये
खड्वाङ्गं पिण्डकायां तु स्थापयेत् असिमस्तकम्
अरतिक्षय विद्वेषं कील भेदेन मोहनम्
तत्सैन्य ध्वंसमुन्मादं रक्षो मारी प्रवर्तनम्
कुरुते नात्र सन्देहो विधिवन्मन्त्रसंयुतम्

उत्सेधे मनु भागे तु वेदाश्रं ब्रह्म भागकम्
चतुरश्रं तथाष्टाश्रं वृत्तं बालेन्दुमस्तकम्
वारुरायां स्थापयित्वा तु तद्दिगीशत्वं आप्नुयात्
पाशमस्तक युक्तं तत् पाशकाय विधानतः
प्रतिष्ठाप्य परां शान्तिं पुष्टि श्रीवृद्धिसोष्ठवम्
व्याधिहानिञ्च सौभाग्यं आप्नुयान्नात्रसंशयाः

पूर्वोक्तं वारुणं लिङ्गं यात्तं चोर्ध्व शिरोन्वितम्
यत्ताख्यायां प्रतिष्ठाप्य यत्तदिक् स्वाम्यमाप्नुयात्
गदामस्तक लिङ्गं तु गदाङ्गे स्थाप्यदेशिकः
जाम्बूनदसुखप्राप्तिमतीव बलदं मतम्
जयं धैर्यं तथा राज्य प्राप्तिं च प्रभुतामपि
लभते नात्र सन्देहो मन्त्रैः सान्निध्यमागतम्

उत्सेधे ग्रहभक्ते तु वेदाश्रं तु शरांशकम्
वस्वस्त्रं पूर्ववत् वृत्तं लिङ्गं छत्रशिरोयुतम्
ब्राह्मयां स्थापयित्वा तु स्वादिगीशत्वमवाप्नुयात्

गायत्र्यंशो भवैद्दैर्घ्य सप्तभागां तु विस्तरे
नवभक्ते त्रिभिभक्तेमध्ये षड्रस वृद्धये
तदूर्ध्वेतु भवेद् वृत्तं रुद्रांशे त्रापुषं शिरः
वायव्यां तु प्रतिष्ठाप्य वायुदिक् स्वाम्यमाप्नुयात्
लिंगं ध्वजशिरोपेतं युक्तं ध्वजाङ्कायां न्यसेद्गुरुः
तेनलिङ्गेन मन्त्रज्ञः प्रोच्चाटोद्वेगविभ्रमान्
भृशम् शेषवियोगौ च शत्रोः कुर्यान्नसंशयः

दैर्घ्यार्धं रौद्रवत् कृत्वा रसाङ्गैः पद्मसंभवम्
एकादशांशो विष्णवंशः पार्श्वैरामैस्तु वर्धनात्
अष्टाश्र वृत्तकं रौद्रं पार्श्वमध्ये त्रिरुन्नतम्
कुक्कुडाराड शिरोयुक्तं लिङ्गमैशाख्य पीठके
स्थापयित्वा स्वादिक् साम्यं लिङ्गं शूलशिरोयुत
शूलाख्यायां तु संस्थाप्य पृथिवीशत्वं आप्नुयात्
ज्ञानविज्ञान मोक्षार्थं योगीशत्व प्रदायकम्
शिवप्रदायकं सोख्यं तद्वत् साम्राज्यसिद्धिदम्

तदेवाब्जशिरः पद्मं पद्माङ्कायां प्रतिष्ठितम्
खेचरीशत्वमाप्नोति साम्राज्य फलसाधनम्

गायत्र्यंशे तु लिंगोच्चे शरांशैश्चतुश्रकम्
पूर्ववन्मध्य वृत्ते तु मस्तक त्रपुषोपगम्
संस्थाप्य गारुडे पीठे तद्दिक् स्वाम्यफल भवेत्
चक्रमस्तकं संयुक्तं चक्राङ्कायां तु देशिकः
त्र्यक्षश्चतुर्भुजः क्रूरस्स खड्वाङ्ग कपालकः
वराभय करोपेतः रुद्रोऽयं वाम संज्ञकः
एष एव हि खड्वाङ्गरहितश्शूलसंयुतः
अघोररुद्र नामायं भीमो भयविनाशनः
शर्वरुद्र स्त्रिणेत्रस्तु वरदाभय संयुतः
कपालशूल संयुक्तो बद्धपद्मासनस्थितः
मृगशूल समायुक्त श्चतुर्भुजसमन्वितः
पाशमुराडधरो वाऽपि टङ्क पाशधरोऽपिवा
वरदाभयसंयुक्तः स्थितः पद्मासनोपरि
भवरुद्रस्समाख्यातं सर्वेषां भवनाशनः

त्र्यक्षश्चतुर्भुजो दंष्ट्रायुतवक्त्रान्वितश्शुचिः
अन्योऽपि नक्रसंयुक्तो जटामकुट संयुतः
धनुर्बाण समोपेतो मृगटङ्क समायुतः
भूतोत्तमाङ्ग विन्यस्त वामपादतलान्वितः
वामे गौरी समायुक्तः चन्द्रार्धकृतशेखरः
एषरुद्रो भुजङ्गेशः सर्वाभीष्टफलप्रदः
अव्यक्तमेवं व्याख्यातं व्यक्ताव्यक्तं अथोच्यते
समलिङ्गे तु कर्तव्यं चतुरश्राष्टवृत्तकम्
कुर्यात् पूर्वोक्तवक्त्रेतु एकद्वित्रिचतुर्मुखम्
पञ्चमं चैववक्त्राणि चतुर्दिक्षु च मध्यमे
चतुर्णां चैव वक्त्राणां उर्ध्वे कुर्यात्तुपञ्चमम्
प्रतिवक्त्रं जटाचूडं चन्द्रार्धकृतशेखरम्
प्रतिवक्त्रं त्रिणयनं भुजस्कन्धादिकं तु वा

## अष्टत्रिंशत्तमे पटले आर्षलिंग प्रासाद विधिः

लिङ्गानामार्षकाणां तु प्रासाद विधिरुच्यते
आर्षकमृषिभिस्सर्वैः कौशिकाद्यैः प्रतिष्ठितम् १
स्थूल मूलं स्थूलं मध्यस्थूलं कृशन्तु वा
विकांशं वृत्तांशं यत्फलाकारं मानसूत्र
विवर्जितम् २
मानुषेतरमित्युक्तमार्षं स्यादधुनाच्यते
पूजांश द्विगुणं पीठं त्रिगुणं गर्भगेहेकम् ३
तदर्धं भित्तिमानं स्यात् तत्समं त्र्यंशमेव वा
विस्ताराद् द्विगुणं तच्च त्रिपादाधिकमेव वा ४
अर्धाधिकं तु वा सप्तभागाधिक मथापि वा
लिंग विस्तारमानेन त्रिगुणं पीठ मुच्यते ५

गर्भगेहं ततस्तस्य त्रिभाग द्वयभित्ति युक्
प्राग्वदुत्सेध उत्तिष्ट अन्यथापि निगद्यते ६
लिंग विस्तार कर्णेन द्विगुणान्तार्ध संयुतम्
पीठ विस्तार मानेन सार्धानर्ध विवर्धनात् ७
सार्धाद्विगुणपर्यन्तं पीठ विस्तार उच्यते
द्विगुणं त्रिगुणं तेन चतुर्गुण मथापि वा ८
नालीगृह विशालं स्याद् द्विभागं स्यात् त्रिपादकम्
सार्ध द्वयांश कैकांश समं वा भित्ति विस्तरः ९
उदयं प्राग्वदेव स्याद्न्यथा च निगद्यते
लिङ्गनाहस्य कर्णेन पीठ विस्तार उच्यते १०
त्रिगुणं गर्भगेहं स्यात् प्रञ्चांशे त्रयंशमेव वा
द्व्यंशे चैकांशकं वापि भित्ति विस्तार मारभेत् ११
पूजांशोच्चद्विभागस्यात् कर्णपीठ विशालकम्
तस्माच्चतुर्गुणं नालीगेहं तत्रषडंशकैः १२
एकांशस्य विस्तार मन्यथा च प्रकथ्यते
लिंग द्विगुण विस्तार कर्णपीठ विशालकम् १३
नालीगेहं त्रिभागं तु त्रिचतुष्पञ्चभागके
एकांशं तद्द्विस्तारमन्यथा पुनरुच्यते १४
परिणाहे विकारांशे तच्चतुर्दश कर्णकम्
पिण्डिका विपुलं नाली तच्चतुगुणमुच्यते १५
तत्पादत्र्यंशमानं वा अष्टांशं भित्ति विस्तरः
विस्तार द्विगुणे कर्ण दशांशेंश विहीनकम् १६
पीठं तारं तत पञ्चगुणं नालीगृहं भवेत्
तत्पञ्च सप्तभागैकं भित्तितारार्धमारभेत् १७
हीना हीनान्तरेऽष्टांश पीठे नालीगृहे तथा
भवन्ति बहुमानानि तेष्विष्टं गृह्यतां वरैः १८

लिंगे स्वायंभुवे चैतत् प्रोक्तं तदपि गृह्यताम्
एवमेकतले प्रोक्तं द्वितलादिषु धामसु १९
साधारे वा निराधारे त्वलिन्दं भित्तिरेव च
प्रागुक्त विधिना धाम नक्षत्राद् द्वितलं नयेत् २०

इति उत्तर कामिकाख्ये महातन्त्रे आर्षलिंग प्रासाद विधिः
अष्टत्रिंशत्तमः पटलः

एकोनचत्वारिंशत्तमे पटले पौरुष लिङ्ग प्रासाद विधिः

अथ पौरुषलिङ्गस्य प्रासादविधिरुच्यते
पौरुषं भक्तियुक्तौ मनुजैः स्थापितं भवेत् १
पूर्वास्मिन्स्थापिते तस्मिन्नज्ञाते पूर्व मन्दिरे
लिङ्गमानवशेनात्र प्रासादं परिकल्पयेत् २
लिङ्गविष्कम्भमानेन त्रिगुणं पीठविस्तरः
त्रिभागंनालि गेहस्य त्रिचतुर्भाग भागतः ३
भित्तिविस्तार उद्दिष्ट उत्सेधं पूर्ववद्भवेत्
लिङ्गविष्कम्भकर्णस्य अध्यर्धादर्धवृद्धितः ४
सार्धद्विगुणकं यावत् पीठविस्तारमाहरेत्
तस्माच्चतुर्गुणं पञ्चगुणं त्रिगुणमेव वा ५
नालीगृह विशालं स्यात् पीठ विस्तार मानतः
समं वा द्विगुणं वापि अद्यर्धं पीठ विस्तृतम् ६
उदयं प्राग्देव स्यादन्यथापि चकथ्यते
पूजांशद्विगुणं पीठमुदयं तु विशालतः ७
चतुष्पञ्चगुणं नाली गेहमत्र विधीयते
ततोऽवशिष्टं तत्सर्वं पूर्ववत् परिकल्पयेत् ८
लिङ्गात् पीठं ततो गर्भं गार्भाद्भित्तिविनिश्चये
एकात्सप्तयवान्तं मात्रादेक विवृद्धितः ९

त्रिमात्रान्तं तदावृद्धिं ह्रासं च परिकल्पयेत्
पीठं गर्भे भवेदेव भवेत् प्रासादविस्तरे  १०
तदर्धं वा त्रिपादं वा कुड्यतार मुदाहृतम्
अन्तरेऽष्टांशमानं वा तत्पादं वा समाहरेत्  ११
उदयं प्राग्वदुद्दिष्टं यच्च स्वायम्भुवादिषु
तथा तदपि तद्धाम मानं पौराणपौरुषे  १२
पट्टिकाङ्गमधिष्टान मार्षके धाम्नि कीर्तितम्
उपानं जगतीकण्ठ पट्टिका कुमुदादिषु  १३
स्थलान्तं कल्पयेदेवं पूराणे धाम्नि पौरुषे
मानुषे पट्टिकान्तं च वृत्यन्तं जलनिस्त्रवम्  १४
पीठव्यासेन हर्म्यस्य नालिके भज्य युग्मयुक्
यदि तद्बाह्य भागं च युग्ममेव विधीयते  १५
युग्मंचेद्युग्ममेवस्यात् संमिश्रं तेषु नेष्यते
त्रिवर्ण पूजितं लिङ्गं पौरुषं वा विधीयते  १६

इति उत्तरकामिकाख्ये महातन्त्रे पौरुषलिङ्गप्रासादविधिः एकोन चत्वारिंशत्तमः पटलः

### चत्वारिंशत्तमे पटले लिङ्गवशात् प्रासादविधिः

अथेदानीं विशेषेण लिङ्गात् प्रासाद उच्यते
स्वायं बाणलिंगं दैवीकं चार्षकं त्विति  १
सिद्धविद्याधराद्यैश्च स्थापितं यन्महात्मभिः
तेषां लिङ्गवसाद्विद्वान् प्रासादं परिकल्पयेत्  २
पूजांश मानतो नाहात् विस्तारादुच्छ्रयादपि
एतेषां कर्णमानैश्च प्रसादं परिकल्पयेत्  ३
तत्समं द्विगुणं वापि त्रिगुणं वा चतुर्गुणम्
पञ्चषड्गुणितं वापि द्विगुणाद्यं प्रगृह्यताम्  ४

अष्टौ वा देवमानानि नवमानानि सुव्रताः
तत्तदर्धं तदर्धं स्याद् द्वात्रिंशत् कथितानि तु ५
प्रत्येकं चैवमाख्यातं पीठमानं द्विजोत्तमाः
पीठ द्विगुणमानो वा त्रिगुणो वा चतुर्गुणः ६
पञ्चषड्गुणितो वापि गर्भहेहस्य विस्तरः
अवान्तर प्रमाणानि पूर्ववत्परिकल्पयेत् ७
गर्भगेहविशाले तु द्विभागादेकभागतः
षड्गुणान्तर पर्यन्तान् भागान् कृत्वैकभागतः ८
एकभाग विवृद्ध्या तु द्विगुणान्ता विशालता
भित्तेरन्तर मानं तु पूर्ववत्परिकल्पयेत् ९
लिंगात् पीठं ततो गर्भो गर्भाद्भित्ति विनिश्चये
एकात्सप्तयवान्तं तु मात्रादेक विवृद्धितः १०
पीठ गर्भे भवेदेवं भवेत् प्रासादविस्तरे
अङ्गुलीहस्त पूर्णार्थं सप्तमात्रन्त माचरेत् ११

इति उत्तरकामिकाख्ये महातन्त्रे लिंगवशात् प्रासाद विधिः
चत्वारिंशत्तमः पटलः

एकचत्वारिंशत्तमे पटले सार्व देशिक लिंग प्रासाद विधिः

सार्वदेशिक लिंगादेस्स्थापनं सम्यगुच्यते
प्रासाद स्याथ लिंगस्य पीठस्याश्मन एव वा १
सार्वदेशिक संज्ञस्य विधिस्सर्वत्र संमतः
सात्विके राजसे देशे तामसे वा प्रकल्पयेत् २
विशेषाद्राजसे देशे राज्ञां विजयकारणम्
धर्म कामार्थ सिद्ध्यर्थं सार्व कामिकमुच्यते ३
अन्ये मोक्ष प्रदास्सर्वे कर्तुः कारयितुस्सदा
नागरं स्याद्युगे कार्ते त्रेते द्राविड मिष्यते ४

द्वापरे वेसरं कार्यं सार्वदेश्यं कलौ युगे
वराटं चैव सालिंगं सर्वत्रापि च संमतम् ५
नागराद्द्राविडाच्चापि कालिङ्गाद्वेसरादपि
वराटाख्यं विशिष्टं स्यात्सार्वदेश्यं मुनीश्वराः ६
सार्व देशिक मित्युक्तं फलं तस्य विशिष्यते
स्वायंभुवं च बाणं च दैविकं चार्षकं तथा ७
यथा विशिष्टं विप्रेन्द्राः दाहृतम्
मानुषे त्वेव लिंगादौ फल वैशिष्य मिष्यते ८
तस्माच्छ्रेयोऽर्थिभिः कार्यं सार्वदेशिक संज्ञितम्
तन्त्र संकर दोषोऽपि मन्त्र संकर एव वा ९
आचार्य संकरो वापि देशसंकर एव वा
काल संकर दोषश्च युगसंकर एव वा १०
अन्येषां संकरो वापि यतो नातो विशिष्यते
सार्वदेशिक धाम्नस्तु मानोन्मानं विधीयते ११
त्रिचतुर्हस्तमारभ्य द्विद्विहस्त विवर्धनात्
पञ्चाशद्धस्तपर्यन्तं मानं स्यात् सार्वदेशिकम् १२
सार्व देशिक धामादौ शान्तिकाद्युच्छ्रयास्तु ये
तारद्विभागे त्र्यंशाद्याः सप्तान्ताः शान्तिकादयः १३
अध्यर्ध त्रिगुणान्ताश्च संग्राह्या देशिकोत्तमैः
एक द्वित्रिकरैर्युक्तमानाद्धीनं तु वाधिकम् १४
आयाद्यं सकले नेति नियमान्नेष्यते द्विजाः
विस्ताराद्च्छ्रयाद्वाथ विस्तार स्योच्छ्रयेण वा १५
विस्तारायामतो वाथ नाहेनाथ परीक्षयेत्
प्रसङ्गेन च कथ्यन्ते लेशादाया दयोऽपि ये १६
गुणयेदिष्टमानं तु नवनागरसैः क्रमात्
रुद्रभानु शरिर्हन्याच्छेषमायं विनिर्दिशेत् १७

गुणाष्टरन्ध्र दशभिः मनुषड् वसु सप्तभिः
गुणयेत् क्षपये द्वापि तच्छेषं व्ययमादिशेत् १८
भानु नाडि रसैर्वृद्धनक्षत्रैः क्षपयेद्दिनम्
नृप कर्तृ दिना द्वास्तु लिंगाद्युक्त दिनान्तकम् १९
गुणयेल्लब्ध नक्षत्रे जन्माद्यानि यथा क्रमम्
तुष्टिस्सम्पद्विपत्क्षेम प्रत्यरं साधको वधः २०
मैत्रं परममैत्रं कलहः प्रथमक्रमे
द्वितीये संपदाद्यास्तु पूर्ववत्समुदाहृदम् २१
शुभं तृतीय जन्मर्क्षं मृतमष्टमराशिकम्
वैनाशिकं च त्यक्त्वा तु तृतीये वा विपर्यये २२
शेषं शुभमिति ज्ञेयमेवं ज्ञात्वा प्रयोजयेत्
वियोगाद्यशुभं योगं गणं चासुर मानुषम् २३
वर्जयेत्सिद्धिकामस्तु मुक्तिकामो यथेच्छया
सप्तर्तुर्भूत वेदाग्नि नवभिः क्षपितं तु यत् २४
तस्कराद्यंशकं ज्ञेयं नाम्ना तेषां फलं भवेत्
रुद्र रन्ध्रगुणैवृद्धिं योनिभिः क्षपयेद्गुरुः २५
ध्वजाद्या योनयश्चाष्टौ षट्जाद्यास्सप्तयोनयः
पृथ्व्याद्याः पञ्च संख्या वा
दक्षिणाद्यास्त्रयोऽग्नयः २६
चतुष्प्रकाराद्विज्ञेया ध्वजाद्याः पूर्ववन्मताः
षड्जो वृषभगान्धारौ पञ्चमो मध्यमस्तथा २७
निषादो धैवतस्सप्त योनयस्तासु शस्यते
षड्जच वृषभो मध्ये भूतेषु पृथिवी जलम् २८
गार्हपत्यस्तथैवाहनीयोऽग्निषु शस्यते
पृथ्व्याद्याः प्रथिताः पञ्च दक्षिणाद्यास्तथाग्नयः २९
वृद्धं नवाष्टकरसैर्हरेद्वारं तु सप्तभिः

निन्दिता रविसौराराश्शुभयोगे शुभप्रदाः ३०
प्रासादे मराडपे चैव प्राकारे गोपुरे तथा
लिंग बेरादिके चैव मायाद्यं कल्पयेद्विजाः ३१
किं तु लिंगे च बेरे च तुड्गे नैव निरीन्नयेत्
धाम्नस्त्र्यंशं चतुस्त्र्यंशं पञ्चत्र्यंश द्रिभागिकम् ३२
षडंशे चतुरंशं वा सप्तभागे तु पञ्चभिः
चतुर्भिर्वा त्रिभागैर्वा गर्भगेहं पकल्पयेत् ३३
अष्टांशे त्रिचतुष्पञ्चषड्भागैर्गर्भ इष्यते
नवांशे त्रिचतुष्पञ्चषड् सप्तांशैस्तु नालिकाम् ३४
मिश्रं वा योजयेद्भित्तिं युग्मायुग्मकरेषु च
त्र्यंशैकं तदूद्व्यांशं वा पञ्चांशे त्र्यंशमेव वा ३५
षडंशे चतुरंशं वा सप्तांशे त्र्यंशमेव वा
चतुरंशं तु वा मध्ये षडंशं पञ्च भागिकम् ३६
अष्टांशे तु कृते व्यासे नवांशे पञ्च भागिकम्
चतुरंशेन वा भद्रं मध्यमे परिकल्पयेत् ३७
पादं वार्ध त्रिपादं वा कुर्याद्द्व्यंशं तु निर्गमः
भद्रस्य युग्मपार्श्वस्थ रुद्र रूपादिरेव वा ३८
तले तले तु चैवं वा कल्पयेद्देशिकोत्तमः
सार्व देशिक लिंगानि कथ्यन्ते गर्भमानतः ३९
प्रसादगर्भमाने तु पञ्चाशे त्रिभिरुत्तमम्
नवांशे पञ्चभिर्मध्यं भवत्यर्धेन कन्यसम् ४०
तदवान्तरभेदेन भवन्त्यन्यानि षद्पुनः
तत्तदन्तरमानेन त्रयस्त्रिंशत्प्रमाराकम् ४१
विंशत्यंशे कृते गर्भे दशांशमधमं भवेत्
एकादशांशैर्मध्यं स्यात् भागैर्द्वादशभिर्वरम् ४२
मध्यमेष्ट विभागे तु नव लिंगादयस्तु वा

गर्भन्तु नवधा कृत्वा नवलिंगोच्छ्रयस्तु वा ४३
अधमं गर्भपादं वा त्रिपादं चोत्तमं भवेत्
मध्यमेऽष्ट विभागे तु तत्तदन्तभेदतः ४४
त्रयस्त्रिंशत्प्रमाणानि लिंगानां कथितानि च
अथवा गर्भ गेहस्य त्र्यंशैकमधमं भवेत् ४५
गर्भार्धं मध्यमं ज्ञेयं पञ्च त्र्यंशं वरं मतम्
पूर्ववन्मध्यमं कृत्वा त्रयस्त्रिंशत्प्रमाणकम् ४६
लिंगायामे विकारांशे चतुर्भूतरसैर्हितम्
एकहस्तं समारभ्य चेकैकाङ्गुल वर्धनात् ४७
नवहस्त प्रमाणान्तं मानं स्याल्लिंग दर्ध्यके
एक विंशति भागेन गर्भगेहे विभाजिते ४८
त्रयोदशांशकं श्रेष्ठं दशांश मधमं भवेत्
पूर्ववन्मध्यमं कृत्वा त्रयस्त्रिंशत्प्रमाणकम् ४९
लिंगायामे विकारांशे चतुर्भूत रसैर्हितम्
सत्रिभागैश्शरैर्लिंग विस्ताराः परिकीर्तितः ५०
गायत्र्यंशे तु लिंगोच्चे पञ्चभिर्वाथ विस्तरः
अथवाष्ट दशांशे च लिंगोच्चे पञ्चभागिके ५१
चतुर्भागोथवा लिंगविस्तारः परिकीर्तितः
दैर्घ्यं त्रिसप्तधा कृत्वा रसभूताब्धि भागतः ५२
कथितश्शास्त्रे लिंगानां मुनिपुंगवाः
द्वार स्तम्भादिभिश्चैव मानं लिंगे समूह्यताम् ५३
भागेन वाथ लिंगानि विभजेत्तानि चाङ्गुलैः
आयादि शुभसिद्ध्यर्थं अंशैर्वा विभजेद्यथा ५४
षोडशांशं समारभ्य चतुर्विंशति संयुतम्
शतांशं विभजेत्तत्र त्वेकांश योजयेद्गुरुः ५५
तैर्वा निरीक्षये ल्लिंगं बेराद्यायादिकं गुरुः

समखराडं वर्धमानं शैवाधिक्यं त्रिराशिकम्  ५६
स्वस्तिकं च सहस्त्रख्यं धारालिंगमिति द्विजाः
इयत्तया समुद्देश क्रमेरौष विधीयते  ५७
त्रिधा विभज्य लिंगोच्चं कुर्याद्भागत्रयं क्रमात्
तद्भाग सदृशस्तारस्समखराडोऽयमीरितः  ५८
पूर्वोक्त तारयुक्तो वा समखराडो मुनीश्वराः
पञ्चस्मृत्येक विंशांशं गायत्र्यंशे शिवायते  ५९
चतुष्पञ्चर्तुसप्तांशा ब्रह्मभागे समीरिताः
भाग भाग विवृद्धया स्यात् तस्मात्तस्माद्धरीशयोः  ६०
वर्धमानानि चत्वारि ब्राह्मणादिष्वनुक्रमात्
अथवान्यप्रकारेण वर्धमानं विधीयते  ६१
एक हस्तेऽङ्गुलं ह्येकं द्वित्रिहस्ते त्रिमात्रकम्
चतुष्पञ्चकरे पञ्च षड् सप्तसु च सप्तकम्  ६२
नवाङ्गुलं तु विज्ञेयं लिंगयोर्वसरन्ध्रयोः
एकद्वित्रिक्रमाद्द्याधिके ऋतुवत्कृते  ६३
ब्रह्मविष्णुहरांशे तु हास्तिकोपि ह्यतो विधिः
सप्तसप्ताष्ट भागं तु पञ्च पञ्च षडंशकम्  ६४
चतुश्चतुश्शरांशं तु वह्नि वह्नि युगांशकम्
एवं शिवाधिकं लिंगं ब्राह्माद्यादिष्वनुक्रमात्  ६५
लिंगोच्चं नवधा कृत्वा ब्रह्माद्यास्त्रिस्त्रिभागतः
षड्सप्ताष्ट विभागैस्तु नाहो रुद्रादिषु क्रमात्  ६६
त्रैरशिकमिदं लिंगंशुद्राणां तत् प्रशस्यते
नवधा लिंगमानेन त्रिचतुर्भिरजादयः  ६७
स्वस्तिकं लिंगमाख्यातमन्यथा च निगद्यते
त्रिंशद्भागे शिवायामे नवदिग्रुद्रभागतः  ६८
ब्रह्माद्यास्त्वथवा तेभ्यो भाग भागाद्यनुक्रमात्

त्रयस्त्रिंशत्कृते लिंगे स्वस्थिकं शूद्रयोग्यकम् ६९
सहस्राख्यं च धाराख्यं पूर्वोक्त्यात्रापि गृह्यताम्
मुख लिंगं च पूर्वोक्त विधिनात्रापि भाव्यते ७०
शिरोवर्तनमेतैषां पूर्वोक्तविधिना नयेत्
लिंगानामधिकं दद्याच्छिरसो वर्तनांशकम् ७१
समस्तमथवा त्र्यंशमधिकं वर्तनांशतः
शिवलिंगप्रतिष्ठोक्तविधिना लक्षणं नयेत् ७२
यावल्लिंगस्य विस्तार स्तावत् पीठस्य विस्तृतिः
लिंगविष्कम्भमानेन त्रिगुणा वाथ विस्तृतिः ७३
चतुष्पञ्च गुणा वापि द्विगुणा वाथ विस्तृतिः
पूजांश द्विगुणा वाथ त्रिगुणा वा चतुर्गुणा ७४
तत्तत्कर्णप्रमाणा वा नाहेन सदृशापि वा
नाह द्विगुण माना वा पीठ विस्तृति रुच्यते ७५
तत्तदन्तर मानानि पीठानां कथितानि च
गर्भगेह त्रिभागैकश्चतुर्भागैक एव वा ७६
गर्भार्धोवाविशालस्स्यात् पीठस्य मुनिपुङ्गवाः
विष्णुभाग समोत्तुङ्ग पादार्ध सहितोऽथवा ७७
ब्रह्मांशमष्टधा कृत्वा व्योम भाग विवर्धनात्
पञ्चांशोच्चं तदुच्चं वा विष्णवंशोत्तुङ्गतोऽधिकः ७८
पीठ स्थापनरीत्यैव तस्यालङ्कार माचरेत्
लिंग विष्कम्भमानेन द्विगुणं त्रिगुणं तु वा ७९
चतुष्पञ्च गुणं कूर्म शैलं प्रकल्पयेत्
तत्तदन्तर मानानि नवधापरिकल्पयेत् ८०
लिंगायाम समं वापि लिंगनाहसमं तु वा
पीठ विस्तार सदृशं ब्रह्मशैलं प्रकल्पयेत् ८१
तद्विशाल समं वाथ त्रिपादं त्वर्धमेव वा

तत्पादं वा समुत्सेधं ब्रह्मशैलस्य कल्पयेत् ८२
तद्वन्मध्यं चतुर्भक्त्वायुज्याद्वा कशिलोच्छ्रयम्
लिंग विष्कंभ मानं तु विकारांश समं भवेत् ८३
भागादेक विवृद्ध्या तु चतुर्भागावसानकम्
ब्रह्मशैलावटं कुर्यात् उत्सेधाद्विस्तरात् पुरः ८४
एकैकयाविवृद्ध्या तु द्व्यङ्गुलान्तं प्रकल्पयेत्
कश्चिदस्ति विशेषोऽस्मिन् यावत्पूजांश दैर्घ्यकम् ८५
तावन्निर्गमसंयुक्तं पीठिका यदि कल्पिताः
छायादोषो यथा नस्यात् लिंगपीठिकयोर्द्विजाः ८६
देशस्य देशनाथस्य कर्तुः कारयितुस्तथा
आवहेदुत्तमां सिद्धिं सर्व लिंगेष्वयं विधिः ८७
तथैव पूजा भागार्धा दधश्चेल्लक्षणं कृतम्
अर्चांशादधिकं पीठं पार्श्वतो न्यूनमेव वा ८८
कल्पितं पीठमेवं वा पीठलिंगं तु मुक्तिदम्
सिद्ध्यै विगर्हितं तत्स्यात् समं चेत् सिद्धिदं द्वयम् ८९
शान्तिकाद्युछ्र्याद्यं च प्रोक्तं प्रासाद कल्पने
गण्यं तदनु रोधेन नाद्यन्तमिह कथ्यते ९०
तत्संग्रहेऽपि नात्यन्त दोषस्स्यात् सार्वदेशिके
स्वयम्भु दैविके बाणे गाणे मौने विशेषतः ९१
लक्षणं नेष्यते तेषां विस्तारेणोच्छ्रयेण वा
तथा ब्रह्मादिभिर्भागै श्शिरोलक्षण भेदतः ९२
ब्रह्मनन्दि शिलाभिश्च स्वाकारो लक्षणं यतः
त्रिभिर्ब्रह्मादिभिर्भागैर्द्वाभ्यामेकेन वा युतम् ९३
यदाकार विशिष्टं तद्रूपं तस्य तदेव हि
प्रासाद पीठिके तेषां गर्भमानादिकं च यत् ९४
सार्व देशिकमेवेष्टं यतस्ते सार्वदेशिकाः

प्रासाद पीठिकादीनां जीर्णादौ समुपस्थिते ९५
जीर्णोद्धार विधानेन पीठप्रासाद माचरेत्
परित्यक्त शिलायोगे शिलायोगश्च कथ्यते ९६
स्वायम्भुवादि लिंगानां दृश्यभागादधः स्थितम्
दर्शयेत् खननाद्यैश्चेद्घोर दुःखावहं नृणाम् ९७
दृश्य भागमिति ज्ञेयं ब्रह्मविष्णुहरांशकम्
तस्मादधः स्थितं लिंगं मूलेनैव परीक्षयेत् ९८
अज्ञानाच्छोधने कर्तुर्मृत्युरेव न संशयः
सार्वदेशिकलिंगानामित्थं लक्षण मीरितम् ९९
प्रतिष्ठाया विधानं यत् पूर्वोक्त विधिनोच्यते ९९ १-२

इति उत्तर कामिकाख्ये महातन्त्रे सार्वदेशिकलिंग प्रासाद विधिः
एक
चत्वारिंशत्तमः पटलः

द्विचत्वारिंशत्तमे पटले अङ्गलिङ्ग प्रतिष्ठा विधिः

अङ्गलिङ्गप्रतिष्ठान्तु प्रवक्ष्यामि समासतः
प्रधानमङ्गमित्येवं द्विधं लिङ्गमुच्यते १
मण्डपाः परिवारा वा प्राकारा गोपुरादयः
यस्य लिङ्गस्य विद्यन्ते तत् प्रधानमिति स्मृतम् २
यत् प्रधानाविरोधेन पञ्चप्राकार मध्यमे
तदङ्गमिति विख्यातं परिवारैर्विनाकृतम् ३
शुभाशासंस्थितं भुक्त्यै मुक्त्यै सर्वासुदिक्षु च
पश्चिमोत्तरपूर्वाशाश्शुभाशास्संप्रकीर्तिताः ४
कुर्यात्तेषां विमानाद्यं मूल धामोनमानकम्
तत्रसंस्थापयेल्लिङ्गं प्रतिमां वोभयात्मिकाम् ५
प्राकारत्रयबाह्ये तु यदि देवाः प्रकीर्तिताः

परिवारादिकं तत्र कुर्याद्वा लेशमार्गतः ६
नित्योत्सवादिकं तत्र विरोधाय न कल्पते
अङ्गलिङ्गाद्यकं शुद्धशैव मार्गेण कारयेत् ७
नैव पाशुपतेनापि न महाव्रतिना क्वचित्
न बौद्धार्हतकापालपाञ्चरात्रादिकैर्न च ८
अन्यैरपि न कर्तव्यं दर्शनान्तरसंस्थितैः
प्रमादत्तैः कृते तच्च शैवं संपादयेत् चणात् ९
एकहस्तात्त्रिहस्तान्तमङ्गलिङ्गप्रमाणकम्
अत ऊर्ध्वं न कर्तव्यं कृतं चेत् सर्वदोडकृत् १०
पञ्चादशकरादूर्ध्वं प्रासादं नैव कारयेत्
स्वधामगर्भमानाद्वा कुर्यादङ्गुलमानतः ११
सार्वदेशिकमेवेष्टं प्रासादं लिङ्गमेव च
कर्षणादिकमेतेषां कर्तव्यं वा न वा पृथक् १२
आद्येष्टकादिकं कर्म तावदस्य समाचरेत्
एवं लिङ्ग विमानाद्यं कृत्वा संस्थापयेत् सुधीः १३
प्रागेव विहितं यस्मात् प्रतिष्ठा तेन चोच्यते
मूर्धेष्टकादिकं कर्म जीर्णोद्धारादिकं च यत् १४
पूर्वोक्त विधिना सर्व कर्तव्यं चोदितं तथा
क्रियमाणेऽपि मूलस्य पवित्रारोहणादिके १५
तस्मिन्कालेऽङ्गलिङ्गादेः पवित्रारोहण न वा
पृथग्वा करणीयं तद्यथाशास्त्रं द्विजोत्तमाः १६
एवंयः कारयेदङ्गलिङ्गादेः स्थापनं नरः
आयुः श्रीकीर्तिसौभाग्यारोग्यभोग्यबुहुप्रजाः १७
संलब्धकामो देहान्ते शिवेन सह मोदते
एकाद्येकैकवृद्ध्या तु रुद्रसंख्यावसानकम् १८
अष्टोत्तरशतं वाथ तदर्धं वा तदर्धकम्

शतं वार्धं तदर्धं वा शतोर्ध्वमपि पुष्कलम् १९
एवं यः कारयेत् कर्ता स एवाहं न संशयः १९ १-२
इति उत्तरकामिक महातन्त्रे अङ्गलिङ्गप्रतिष्ठाविधिः द्वित्वारिंशत्तमः पटलः

त्रिचत्वारिंशत्तमे पटले सदाशिवस्थापन विधिः
सदेशस्थापनं वक्ष्ये तल्लक्षणपुरस्सरम्
द्रव्यैश्शिलादिभिः कुर्यात् पूर्वोक्तैस्तं विशेषतः १
बद्धपद्मासनं श्वेतं स्थितं पञ्चास्यसंयुतम्
पिङ्गलाभं जटाचूडं दशदोर्दण्डमण्डितम् २
अभयं च प्रसादं च तथा शक्तिं त्रिशूलकम्
खट्वाङ्गं दक्षभागस्थैर्वहन्तं करपल्लवैः ३
बुजङ्गं चाक्षमालं च डमरुं नीलपङ्कजम्
बीजापूरं च वामस्थैर्वहन्तं सुप्रसन्नकम् ४
अर्चनाध्यायसंसिद्धध्यानान्तरयुतं तु वा
इच्छाज्ञानक्रियाशक्तित्रयसंक्ल्प्तलोचनम् ५
ज्ञानचन्द्रकलायुक्तं कलावर्षोपलक्षितम्
ब्रह्मसूत्रादिकं कार्यं सुखेश प्रतिमोदितम् ६
एवं सदाशिवः कार्यो मनोन्मना समन्वितम्
इत्थं लक्षणमाख्यातं प्रतिष्ठाविधिरुच्यते ७
वाराद्यं पूर्ववद्बाह्यमङ्कुराणां समर्पणम्
तदन्ते रत्नविन्यासं दृष्ट्युन्मीलनमेव च ८
बेरशुद्धिं पुरादीनां प्रदक्षिणमथाचरेत्
जलाधिवासनं पश्चान्मण्टपं पूर्ववन्नयेत् ९
मण्टपे कुण्डक्ल्प्तिं च ग्रहभूतैकसंख्यया
तानि कुण्डानि वृत्तानि तद्दिगश्राणि वा भवेत् १०

पश्चाच्छिल्पिविमोन्तं च द्विजानां भोजनं तथा
पुरायाहं वास्तुहोमं च भूपरिग्रहमेव च  ११
वेद्यूर्ध्वे स्थरिडलं शय्याक्ळिप्तं पूर्ववदाचरेत्
प्रतिमाशोधनं कृत्वा कौतुकं बन्धयेत्ततः  १२
शय्यायां शाययेद्देवं प्राक्शिरश्चोर्ध्ववक्त्रकम्
शिरःप्रदेशे देवस्य सदाशिवघटं न्यसेत्  १३
सर्वलन्तरणसपन्नं यजेत् कुम्भे सदाशिवम्
वर्धनीमुत्तरे न्यस्य यजेत्तस्यां मनोन्मनीम्  १४
परितोऽष्टौ घटान्नयस्य विद्येशांस्तेषु पूजयेत्
तत्त्वमूर्त्यादिविन्यासं कृत्वा होमं समाचरेत्  १५
संस्कृत्य कुराडं वह्निं च समिदाज्यचरूंस्तिलान्
यवा-लाजांश्च हुत्वान्ते सिद्धार्थं च पयांस्तथा  १६
ग्रश्वत्थोदुम्बरप्लन्तवटाः पूर्वादिदिन्तु च
शमीरवदिरमायूरबिल्वास्युः वह्निकोरणतः  १७
प्रधानस्य पलाशस्स्यात् स च सर्वत्र वा मतः
प्रत्येकं पूर्ववद्धुत्वा द्वितीये देशिकश्शुचिः  १८
उद्धृत्य प्रतिमामिष्ट्वा कुम्भानग्निं च पूर्ववत्
देशिकादींश्च संपूज्य दन्तिरणां दापयेत्ततः  १९
ततो महूर्ते संप्राप्ते कुम्भाद्बीजं पुरो न्यसेत्
कुम्भाद्बीजं समादाय सदेशहृदि विन्यसेत्  २०
वर्धन्या बीजमादाय तस्य पीठे तु विन्यसेत्
सहजा यदि सा देवी तस्यास्तु हृदि विन्यसेत्  २१
ग्रन्येभ्यो बीजमादाय पीठस्य परितो न्यसेत्
तत्तद्धटोदकैश्चैव तत्तद्देशेऽभिषेचयेत्  २२
स्नपनं भूरि नैवेद्यं पूजामुत्सवमारभेत्
देव्याश्च स्नपनं कृत्वा कल्याणं कारयेत्ततः  २३

अनुक्तमत्र यत्कुर्यात् सामान्यस्थापनोक्तवत्
नित्यार्चनादिकं सर्वं प्राग्वदेव समाचरेत्  २४
सदाशिव प्रतिष्ठां तु कुर्यादेवं हि यो नरः
इहैव भोगान् भुक्त्वेष्टान् सोऽन्ते यायाच्छिवं परम्  २५

इति उत्तरकामिकाख्ये महातन्त्रे सदाशिवस्थापन विधिः
त्रिचत्वारिंशत्तमः पटलः

## चतुश्चत्वारिंशत्तमे पटले देवी स्थापन विधिः

देव्यास्संस्थापनं वक्ष्ये तल्लक्षण पुरस्सरम्
शिलादिद्रव्यमापाद्य तैः कुर्यात् प्रतिमां ततः  १
ग्रामादौ शिवहर्म्ये तु अष्टदिक्ष्वन्तरालके
गौरीप्रतिष्ठा कर्तव्या इष्ट देशे मनोरमे  २
त्रिहस्ताद्येकपञ्चाशद्धस्तविस्तार संयुतम्
तस्या धाम विधातव्यमुत्सेधाद्यं तु पूर्ववत्  ३
वलभ्याकारमिष्ट स्यादनुरूपयुतं तु वा
वलभ्याकारमिष्टं चेच्चतुर्धा विभजेत्ततिम्  ४
दैर्घ्यं त्वेककांशवृद्ध्या तु षड्भिर्भगर्भो भवेत्पदैः
एकेन भित्तिरुद्दिष्टा त्रिधा वा विभजेत्ततिम्  ५
द्वाभ्यां गर्भो भवेद्भित्तिस्समन्तादेकभागतः
चतुर्धा भाजिते तारे षड्भिर्दैर्घ्यमथापि वा  ६
गर्भस्त्वष्टपदैः ख्यातस्त्वन्यथा च निगद्यते
पञ्चधा भाजिते तारे दैर्घ्यं षड्भिरथापि वा  ७
सप्तभिस्त्वष्टभिर्वाथ नवभिर्दशभिस्तथा  ८
षड्भागे त्वेकभागादि वृद्ध्या द्विगुणामानतः
आयामं गर्भभित्योश्च पूर्ववत्परिकल्पयेत्  ९
एवं विंशति भागान्तं विस्तारे परिकल्पिते

तत्तद्विगुणमानान्तमायामं परिकल्पयेत्  १०
द्वितलादितलेऽलिन्दान् भित्तिं च बहुसंख्यया
पादेन वार्धभागेन त्रिपादेन समन्ततः  ११
सार्धेन सत्रिपादेन द्विभागेनाथ कल्पयेत्
हित्वालिन्दं बहिर्भागाद्धनं वा सर्वमिष्यते  १२
अधिष्ठानादि षड्वर्गं पूर्ववत् परिकल्पयेत्
शालाकारम् सभाकारं प्रासादाकारमेव च  १३
मस्तकस्थूपिसंख्या स्यादेकादेकाद शान्तिका
दिग्देवतासु देव्यास्तु रूपभेदाः प्रकीर्तिताः  १४
शिवायतनदेवा वा गणपः षरामुखोऽपि वा
सिंहा वा वृषभो वापि वाहनं परिकीर्तितम्  १५
शुका वा कोणदेशे स्युरन्यत् प्रागुक्तवन्नयेत्
पूर्वास्यं पश्चिमास्यं वा दक्षिणास्यं समीरितम्  १६
उत्तरास्यं तु वा कुर्यात्सर्वं तत्सम्पदां पदम्
कृता चेद्गर्भमानेन तद्विस्तारो विशिष्यते  १७
आयामो वाथ संग्राह्याः प्रतिमालक्षणोक्तितः
धाम्नि दिग्देवताः स्थाप्यास्तद्देवीरूप विग्रहाः  १८
रुद्रस्कन्दगणेशा वा द्वादशान्ततलान्विते
हर्म्य कोणेषु विषभं सिंहं वा परिकल्पयेत्  १९
प्रासादभित्तिदेवानामशेषाणामपि प्रभोः
प्रासादस्य प्रतिष्ठायां प्रतिष्ठा परिकीर्तिता  २०
रुद्रावतारक्रीडासु प्रतिष्ठा नैव कीर्तिता
प्राकारपरिवारांश्च मराटपादींश्च कल्पयेत्  २१
वामाद्याश्शक्यो वापि परिवारे व्यवस्थिताः
श्रीर्दुर्गा क्षमा शशिन्या च गायत्री चाप्युषा तथा  २२
सन्ध्यां सरस्वतीत्येताः स्थाप्या वा मुनिपुङ्गवाः

प्रज्ञा मेधा श्रुतिश्चैव स्मृतिः स्वाहा वषट् च वै २३
धृतिमतिश्च पूर्वादिक्रमाद्देव्यः प्रकीर्तिताः
अथवा ज्येष्ठयोपेतास्सप्त मातर - ईरिताः २४
देहली पेषणी चुल्की खणडनोलूखली तथा
मुसली मुद्गरी देवी वर्धमानी च वा मताः २५
चतुर्द्विहस्ता इष्टास्त्राः पद्महस्तास्तु वा मताः
वृषो गणाधिपः स्कन्दो महाशास्ता धनेश्वरः २६
वीरश्च क्षेत्रपालश्च भास्करः पूर्वतो दिशि
नै -ऋते वाग्निदेशे वा विघ्नेशं संप्रकल्पयेत् २७
इन्द्रादीन्वा तदस्त्राणि कल्पयेत् पूर्वतो दिशि
निर्माल्यधारिणीं देवीमशनीमीशगोचरे २८
पूर्वोक्त परिवारान्वा कल्पयेद्देशिकोत्तमाः
महापिठे विशेषेण सर्वाश्चापसरसः स्थिताः २९
देव्या मानं त्रिधा प्रोक्तं शिवलिङ्गानुरूपतः
पूजाशसदृशं वाथ द्विगुणं त्रिगुणं तु वा ३०
चतुष्पञ्चगुणं वापि पूजांशोच्चत्रिपादकम्
अर्धं तदन्तरेष्टंशे नवमानं च वा भवेत् ३१
पूजांशोच्चं चतुर्विंशच्छतं वाथ विभज्य च
भ्रूदृग्घ्राणास्यकर्णान्तं बाहुकक्षस्तनान्तकम् ३२
लिङ्गमानवशाद्देवीमानं निष्कल संज्ञके
प्रतिमामानतस्तस्या मानमेवं समीरिश्रोतम् ३३
मात्राङ्गुले गृहार्चायां यवैर्वा परिकल्पयेत्
ततश्चेयं प्रकर्तव्या देवी प्रोक्तप्रमाणतः ३४
चतुर्भुजा त्रिणेत्रा च सुप्रसन्नैकवक्त्रका
दुकूलवसना देवी करन्डमकुटान्विता ३५
वरदाभय संयुक्ता पाशाङ्कुशकरान्विता

द्विभुजा वा द्विनेत्रा वा प्रलम्बितकरान्विता ३६
पद्महस्ताति शान्ता च सादेवी कनकप्रभा
शुकोत्पलकरा वापि शूलपाशकरापि वा ३७
यथेष्टास्त्रापि वा शङ्खचक्रहस्ता तु षड्भुजा
दंष्ट्राकरालवदना पञ्चास्या दशदोर्युता ३८
देवोक्तास्त्रासना वापि देवालिङ्गनतत्परा
देवोरुसंस्थिता वापि स्थानकासनसंयुता ३९
प्रलम्बवामपादा वा लम्बितापरपादिका
देवेन सहिता वापि केवला वा प्रकीर्तिता ४०
श्यामा श्वेताथवा रक्ता साधकेच्छानुरूपतः
ऋृज्वाकारयुता वापि द्विभङ्ग सहिताथवा ४१
नासाग्राल्लम्बयेत्सूत्र दक्षिणास्थितपात्तले
गुल्पमध्ये स्थितं सूत्रं शिवसूत्रमिति स्मृतम् ४२
तत्सूत्राद्वामभागस्थस्तनमध्यं गुणाङ्गुलम्
तत्सूत्रं नाभिमध्यं यदेकाङ्गुलमिति स्मृतम् ४३
सूत्रयोरन्तरं वेदमात्रमित्यभिधीयते
जानुसूत्रान्तरं प्रोक्तं गुणाङ्गुलमिति द्विजाः ४४
द्वयोरङ्गुष्ठयोर्मध्यं सार्धविश्वाङ्गुलं मतम्
तत्त्रिभागैकभागं तु पार्ष्णयोरन्तरकं स्मृतम् ४५
कटकाग्रस्य चोत्सेधः स्तनाक्षस्य समो भवेत्
नाभेस्तु मणिबन्धः स्यात् सार्धविश्वाङ्गुलोद्विजाः ४६
पार्श्वमध्यमबाह्वोश्च मध्यमं पर्वताङ्गुलम्
प्रलम्बितकरस्याग्राद्ूर्वग्रं तु षडङ्गुलम् ४८
जानोस्तु मणिबन्धाच्च मध्यमं चतुरङ्गुलम्
पार्श्वमध्यमबाह्वोश्च मध्यमं तु षडङ्गुलम् ४९
दृष्टान्तमात्रमेतत्स्यात् सूत्रे तु नियमो न हि

स्वतन्त्रे द्विविधं देव्या मानं शास्त्रे प्रचोदितम् ५०
मूलदेव्याः प्रमाणं तु पूर्वमुक्तं द्विजोत्तमाः
उत्सवाद्यङ्गदेवीनां मानं यन्मूलबेरजाम् ५१
लिङ्गमानवशात् प्रोक्तं मूलदेवीवशात्तथा
अङ्गेषु मानं सग्राह्यं जानूरूसममेव वा ५२
एवं देवी प्रकर्तव्या तस्याः संज्ञा द्विधा मता
मनोन्मनीति गौरीति लक्ष्मभेदस्तु नानयोः ५३
मूर्तिस्सादाशिवी यत्र कल्प्यते तत्र कल्प्यताम्
तदा मनोन्मनीसंज्ञां लभते विप्रसत्तमाः ५४
नृत्तमूर्त्यादिभेदेषु गौर्याद्याख्यां समश्नुते
कृत्वा सलक्षणां देवीं मन्त्रैस्संस्थापयेत्ततः ५५
सान्तरेफ महामाया बिन्दुनाद समन्विता
मनोन्मन्या मनुश्चायं हस्थाने खान्तयुग्यदि ५६
गौरीमन्त्र इति प्रोक्तः सविरगौं तु वा मतौ
वान्तरेफ महामाया विष्णवंशाभ्यां युतो मनुः ५७
अष्टवर्गतृतीयं तु चतुर्थस्वर संयुतम्
बिन्दुनाद शिखामात्रं देवीबीजमिदं तु वा ५८
ऐंकारं क्लीं समायुक्तः सौकारो बिन्दुनादयुक्
मन्त्रोऽयं हंससंयुक्तः श्रीबीजं वा मनुर्भवेत् ५९
एवं चतुर्मनुर्देव्यास्सनातन इति स्मृतः
एवं मूलमनुः प्रोक्तस्तस्मिन् ब्रह्माङ्गकल्पना ६०
हृत्पुटौ जातिमूलौ तु मूर्तिविद्यमनू स्मृतौ
आदिशक्तिमनुर्वापि मूलमन्त्र इति स्मृतः ६१
एवं मन्त्रस्समादिष्टः प्रतिष्ठा तत उच्यते
कालश्च पूर्ववद्ग्राह्यस्त्वङ्कुरार्पणमेव च ६२
मण्डपे स्थण्डिले पूर्वमुखां संस्थाप्य विन्यसेत्

तत्पीठे मध्यमे हैमं पूर्वतश्चेन्द्रनीलकम्  ६३
वैडूर्यं च प्रवालं च मुक्तावज्रं तथैव च
पुष्परागं च गोमेदं तथा मरकतं द्विजाः  ६४
हृदा वामादिमन्त्रैश्च हैमं सर्वत्र वा मतम्
अक्षिमोक्षं तु सौवर्णनखविन्यासमाचरेत्  ६५
तर्पणं मधुपूर्वैस्तु प्रच्छन्नपटवेशनम्
गोद्विजालोकनं धान्यमर्त्यानां चैव पूर्ववत्  ६६
आचार्यशिल्पिपूजा च मृदाद्यैर्बेरशोधनम्
ग्रामप्रदक्षिणं कृत्वा जले चैवाधिवासयेत्  ६७
परितः कलशास्तस्य न्यसेद्वामाद्यधिष्ठितान्
प्रसादस्य चतुर्दिक्षु वह्नावीशेऽथ मण्टपाः  ६८
योन्याभवनपञ्चैक ऋक् संख्याकुण्डकल्पनम्
तत्सौम्ये कल्पयेत् सम्यक् स्नानवेदीं च पूर्ववत्  ६९
तक्षकोद्वासनं विप्रभुक्तिर्गोमय लेपनम्
पुण्योदसेचनं वास्तुदेवतानां च पूजनम्  ७०
होमं च स्थण्डिलेवेद्यां पूर्ववच्छयनं नयेत्
जलादानीय तां देवीं स्नपनं पूर्ववन्नयेत्  ७१
गन्धपुष्पादिनाभ्यर्च्य कौतुकं बन्धयेद्धृदा
शयने शाययेद्देवीं प्राङ्मस्तक समन्वितम्  ७२
रक्तवस्त्रेण संवेष्टय गन्धपुष्पादिना यजेत्
देव्याः शिरःप्रदेशे तु घटं प्राधानिकं न्यसेत्  ७३
लक्षणोदितरूपं तद्ध्यात्वा गन्धादिनार्चयेत्
परितोऽष्टौ घटान्नयस्त्वा वामादिभिरधिष्ठितान्  ७४
वस्त्रहेमादि संयुक्तान् घटान् सर्वांश्च संमतान्
आत्मविद्याशिवाख्यं च जानुकण्ठशिरोऽवधि  ७५
मायां सदेशशक्त्यन्तव्यापनीं विन्यसेद्गुरुः

क्रिया ज्ञानं तथेच्छा च त्रितत्त्वाधीश्वरी मता ७६
धारिका दीप्तिमत्युग्रा ज्योत्स्ना चेता बलोत्कटा
धात्री विभ्वती मूर्तीश्वरियुक्ता मूर्तीस्ततो न्यसेत् ७७
पञ्चमूर्त्यात्मके न्यासे वामाद्या मूर्तिपा मताः
गन्धपुष्पादिभिः पश्चान्नैवोद्यान्तैः क्रमाद्यजेत् ७८
मूर्तिमन्त्रं च ब्रह्माङ्गं मूल देवीं मनुं न्यसेत्
गुरुर्मूर्तिधरैस्सार्धं होम कर्म समारभेत् ७९
पूर्वोक्त लक्षणोपेतस्त्वादिशैव कुलोद्भवः
वेदपाठश्चतुर्दिक्षु कोणे मन्त्रजपो भवेत् ८०
संस्कृत्य कुण्डं वह्निं च तर्पयेत्समिदादिभिः
समाद्धृतान्नलाजैश्च तिलैस्सर्षपकैर्यवैः ८१
पलाशोदुम्बरप्लक्षवटाः पूर्वादिदिक्षु च
शमीखदिरमायूर श्री वृक्षा वह्निकोणतः ८२
पलाशस्तु प्रधानेऽपि स च सर्वत्र वा मतः
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ८३
गुरुर्मूलेन जुहुयात् तत्समं वा तदर्धकम्
मूर्तिपाहुतिरुद्दिष्टा ब्रह्माङ्गैरष्टदिक्षु च ८४
मूर्तिमूर्तीश्वरीश्चैव तत्तत्कुण्डेषु तर्पयेत्
सर्वैर्देवैस्समोपेतं प्रधाने तर्पयेद्गुरुः ८५
शान्त्यंभः प्रोक्षणं स्वस्वमन्त्राणां जपमारभेत्
दर्भैस्संस्पर्शनंचैव प्रतिभागं समाचरेत् ८६
ततः प्रभाते शुद्धस्तु मूर्तिपैस्सह देशिकः
उत्थाप्य देवीं कुंभांश्च प्राग्वद्वह्निं च तर्पयेत् ८७
दत्वा पूर्णाहुतिं पश्चात् प्रविशेद्भवनं ततः
मानुषे दैविके वापि प्राग्वत् संस्कृत्य विन्यसेत् ८८
कशिलां पूर्वमन्त्रेण रत्नहेमादि गर्भिताम्

प्राग्वद्धाम्नीश्वरीं नीत्वा मूलमुच्चार्यविन्यसेत् ८९
सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं च कारयेत्
चलाचेत् स्नानवेद्यां तु मन्त्रन्यासं समाचरेत् ९०
देव्यग्रे तु घटान्नयस्य कुंभाद्बीजं तुतद्धृदि
विन्यसेदनुकुंभेभ्यः पीठस्य परितो मनून् ९१
तत्त्वमूर्त्यादि विन्यासं पूर्ववत्कारयेत्ततः
तत्तत्कुंभोदकैश्चैव तत्तद्देशेऽभिषेचयेत् ९२
स्नपनं कारयेदन्ते नैवेद्यं चोत्सवं गुरुः
स्तुत्वा नेक विधैः स्तोत्रैरमुं श्लोकं पठेत्ततः ९३
यावच्चन्द्रश्चसूर्यश्च यावत्तिष्ठति मेदिनी
तावदत्र त्वया देवी स्थातव्यमिह मन्दिरे ९४
संपूज्य देशिकादींश्च दक्षिणां दापयेत्ततः
उत्तमादि विभिन्नां तु लिङ्गस्थापन चोदिताम् ९५
ततः कल्याणकर्मास्याश्चतुर्थे कर्मवित्ततः
देव्याः स्वयं प्रधानायास्सहजायाश्च वर्जयेत् ९६
कर्म वैवाहिकं विप्राः प्रतिष्ठैवं समीरिता
इत्थं यः कुरुते मर्त्यस्स पुण्यां गतिमाप्नुयात् ९७
एवं यः कारयेन्मर्त्यः प्रतिष्ठां भावनायुतः
भक्त्वेह भोगान् स्वस्येष्टान् सोऽन्ते यायाच्छिवंपदम् ९८
पित्रोर्दिवि च संस्थाप्य कुलानामेकविंशतिम्
शृणु ध्वमथ विप्रेन्द्रा देव्या नित्यार्चनादिकम् ९९
शौचमाचमनं स्नानं सन्ध्योपासनतर्पणे
प्रागुक्त विधिना कृत्वा प्रविशेदालयं प्रति १००
प्रक्षलिताङ्घ्रिहस्तस्तु समाचम्य विधानतः
सकलीकृतदेहस्तु समान्यर्घ्यं प्रकल्प्य च १०१
द्वारं तदम्भसा प्रोक्ष्य पूजयेद्द्वारनायिकाः

द्वारस्य पार्श्वयोश्चैव शंख पद्मनिधी तथा १०२
द्वारपालौ तु कर्तव्यौ खड्ग खेटक हस्तकौ
चूडामकुटसंयुक्तौ रत्नश्यामौ विभीषणौ १०३
सर्वाभरण संपन्नौ सर्वरत्न विभूषितौ
ऊर्ध्वोदुम्बरमध्यस्थ वाणी मभ्यर्च्य शाखयोः १०४
गङ्गां च यमुनामिष्ट्वा देव्यस्त्रं देहलीगतम्
अन्यथा वा विशालाक्षीं जटिला मूर्ध्वगां यजेत् १०५
समृद्धिं च धृतिं दक्षे वामशाखागतां यजेत्
सरस्वतीं च गङ्गां च शुक्ल वर्ण निभे मते १०६
अन्याश्च श्यामलास्सर्वा स्सर्वाभरण भूषिताः
खड्गखेटक धारिण्यो द्विभुजा वा चतुर्भुजाः १०७
देवोक्तद्वार पालान्वा विमलं च सुबाहुकम्
कवाटयोस्समभ्यर्च्य प्रविशेद्दक्षवामयोः १०८
वास्तोष्पतिं च सम्पूज्य स्वासनस्थ उदङ्मुखः
शक्तिस्थं स्वं समायोज्य भूतशुद्धिं च पूर्ववत् १०९
सुधासंप्लावनं चात्मावाहनं चामृति कृतम्
करन्यासं च तैर्मन्त्रैर्देहन्यासं च कारयेत् ११०
अष्टत्रिंशत्कलान्यासं प्रणवेन समन्वितम्
पञ्चमूर्धास्ययुग्देव्याः पूजायां संप्रकल्पयेत् १११
एकत्रिंशत्कलान्यास मेकास्ये परिकल्पयेत्
शशिन्यादय एवोक्ताः केवलास्तु कला इति ११२
अथवा शिवमन्त्रैस्तु शैवमापाद्य विग्रहम्
देवी स्कन्द गणेशादीन् सर्वान् संपूजयेत्तु वा ११३
सकलीकृतदेहस्सन्नन्तर्यागं समाचरेत्
हृदयेऽर्चाविधानं तु ना भौ होमं प्रकल्पयेत् ११४
ललाटे चेश्वरीं ध्यायेद्वरदां सर्वतोमुखीम्

स्थानशुद्धिं ततः कृत्वा विशेषार्घ्यं च कारयेत्  ११५
गन्धपुष्पाक्षतोपेतं तेन द्रव्यगणं हृदा
संशोध्यात्मानमभ्यर्च्य मन्त्रशुद्धिं समाचरेत्  ११६
बेरशुद्धिं ततः कुर्यात् पूजां पर्युषितामपि
गणाम्बिकायै विद्महे महातपायै धीमहि  ११७
इत्युक्त्वादौ तदन्ते तु तन्नो देवी प्रचोदयात्
इति मन्त्रं समुच्चार्य समभ्यर्च्य निवेदयेत्  ११८
देव्यै निर्माल्य धारिण्यै त्यजेद्वा पूजकोत्तमः
देव्यस्त्रमुच्चरन्मन्त्री बेरशुद्धिं विधाय च  ११९
बेरं चेल्लोहजं कुर्यात्स्नानं पर्वणि पर्वणि
सुधाचित्रादिकं चेत्तु कर्मार्चा शुद्धिरिष्यते  १२०
अथवा स्त्राणुनालब्ध तालवृन्तज वायुना
तत्रैवाम्लान माला स्याद निर्वाण प्रदीपकम्  १२१
प्रत्यहं त्वर्चनं नेष्टं किन्त्वेवं वत्सरे मतम्
अथवोपलमूर्तिश्चेत् क्षालनं तत्र कीर्त्यते  १२२
कल्पयेदासनं मध्ये शक्तिमाधाररूपिणीम्
अनन्त धर्म पूर्वांश्च दिक्ष्वनन्तादि संहितम्  १२३
ऊर्ध्वाधश्छदने पद्मकर्णिके शक्तिमण्डलम्
वामाद्यं मण्डलानीकं क्रियेच्छाज्ञान शक्तिभैः  १२४
ततो देव्यासनायेति पूजयेदनुपूर्वशः
मूर्तिं तद्ब्रह्मभिः कृत्वा तत्कलाः प्राग्वदाचरेत्  १२५
विद्यादेहं च संपाद्य पूजाबेर स्वरूपकम्
प्रणवाअत्तत्र देवेशी माविष्कुर्यात् प्रसादतः  १२६
हृदयानुगतेनैव पुष्पपूरित सत्करः
आवाह्यमूलमन्त्रेण देव्यास्संस्थापयेद् धृदा  १२७
सन्निधाननिरोधेन हृदा कृत्वावकुण्ठनम्

हृदादि न्यासतः कृत्वा महामुद्रां प्रदर्शयेत् १२८
अर्घ्यपात्रं समुत्क्षिप्य पादे पाद्यं हृदा नयेत्
वक्त्रेचाचमनं दद्यात् अर्घ्यं मीशान मन्त्रतः १२९
पाद्याद्यं पूर्ववद्वापि पृथक् कृत्वा निवेदयेत्
गन्धपुष्प समोपेतं धूपं दद्याद् धृताणुना १३०
पञ्चामृतादि युक्तं वा वियुक्तं स्नानमाचरेत्
उन्मृज्य वाससा पश्चाद्वासमा परिवेष्टयेत् १३१
गुह्येनाचमनं दद्याद्गन्धपुष्पं सधूपकम्
दीपं मूलाणुना दत्वा नैवेद्यं विनिवेदयेत् १३२
आमन्त्र हविषोपेतं केवलं वा द्विजोत्तमाः
पूजयेदावृत्तिं पश्चाद् हृदयं वह्निगोचरे १३३
शार्वे शिरश्शिखां रक्षोदिशि वायौ तदुच्छदम्
अस्त्रं दिक्ष्वथ सम्पूज्य वामाद्या वाथ पूर्वतः १३४
गणविघ्नेशलोकेशतदस्त्रान् परितो यजेत्
एकद्वित्रिचतुर्भिर्वावरणैस्तां समर्चयेत् १३५
पुनर्धूपं च दीपं च मन्त्र गाणाद्य मेव च
नैवेद्यं बलिहोमाश्च कृत्वा नित्योत्सवं नयेत् १३६
देवी तदर्थं कर्तव्या ह्येकवक्त्रा चतुर्भुजा
वरदाभयहस्ता च शंख चक्र करा परा १३७
पद्मासनस्था तस्यांतु यजेद्देवीं मनोन्मनीम्
पुष्पान्नाक्षत लिङ्गेषु मेधां प्रज्ञामुषां यजेत् १३८
पूर्वोक्त विधिना कृत्वा प्रासादस्य प्रदक्षिणम्
पादुकार्चनयुक्तं वा प्रविशेदालयं प्रति १३९
नित्योत्सवाय बेराणि कल्पितानि बहूनि चेत्
तदर्थं कल्पयेत्तेषु यथेष्टं बेरमुत्तमम् १४०
एकाकालं द्विकां वा त्रिचतुष्पञ्चकालकम्

षट्सप्तवसुकालं वा सर्वदा त्वर्चयेच्छिवाम्  १४१
नित्योत्सवस्समादिष्ट स्सर्वाभीष्ट फलप्रदः
उत्सवं स्नपनं चैव दमनारोहणक्रियाम्  १४२
पवित्रारोहं सम्यक् कृत्तिकादीपमेव च
संवत्सादिखेलां च वसन्ताख्यं तदुत्सवम्  १४३
मासोत्सवं तथा मासे नव नैवेद्यकं तथा
विशेषात् पूरकर्मापि प्रायश्चित्तं द्विजोत्तमाः  १४४
जीर्णानामुद्धृतिं चान्यत् पूर्ववत् परिकल्पयेत्
किं तूत्सवे ध्वजे सिंहं वृषभं वा समालिखेत्  १४५
पूर्व फल्गुनी नक्षत्रे तीर्थ कर्म विशेषतः
शिवोत्सवेऽपि देव्यास्तु प्रत्यहं चोत्सवो मतः  १४६
ध्वजहोमबलिं हित्वा केवलं यानमेव च
चक्रास्त्रं वा त्रिशूलं वा देव्यस्त्र परिगृह्यताम्  १४७
उत्सव प्रतिमा कार्या पूर्वलक्षणलक्षिता
कृतकौतुक देव्यास्तु तद्ग्रामान्निर्मगो नहि  १४८
यत्रैव बलिं दानं स्यात् तत्रावश्यं हि यानकम्
अन्यत्रापि च यानं वा धाम्नि सर्वं तु वा मतम्  १४९
एकादि साल युक्तं चेत् बहिः श्रेष्ठं प्रकीर्तितम्
सर्व देवेषु सामान्यं विधानमिदमग्रजाः  १५०
धाममूर्धेष्टकास्तूपिस्थापनं पूर्ववन्नयेत्
दिग्देव मूर्तिसंयुक्तं मध्ये कुंभ समन्वितम्  १५१
धामसंस्थापनं कुर्यात् प्रागुक्त विधिना सह
अस्याः प्रतिष्ठा सर्वत्र बालस्थानान्विता न वा  १५२
देव्यनुग्रहत स्सार्वभौमत्वं नृपतेर्भवेत्
तस्माद्देव्यग्रतः कुर्यात् त्वभिषेकं नृपस्यतु  १५३
एवं सम्यक् समाख्यातं देव्यास्संस्थापनादिकम्

# इति कामिकाख्ये महातन्त्रे देवी स्थापन विधिः चतुश्चत्वारिंशत्तमः पटलः

द्विभुजा वा द्विनेत्रा वा प्रलम्बितकरान्विता
पद्महस्तातिशान्ताद्य सादेवीकनकप्रभा
चतुर्भुजा त्रिणेत्रा च सुप्रसन्नैक वक्त्रका
दुकूल वसनो देवी करण्टममुटान्विता
वरदाभय संयुक्ता शूलपाशकरान्विता
चतुर्भुजात्रिणेत्रा च सुप्रसन्नैकवक्त्रका
दुकूल वसना देवी करण्टमकुटान्विता
वरदाभय संयुक्ता पाशाङ्कुशकरान्विता
चतुर्भुजात्रिणेत्राच सुप्रसन्नैकवक्त्रका
दुकूल वसनादेवी करण्ट मकुटान्विता
वरदा संयुक्ता पाशाङ्कुश करान्विता
चतुर्भुजा त्रिणेत्रा च सुप्रसन्नैक वक्त्रका
दुकूल वसनो देवी करण्टमकुटान्विता
वरदाभय संयुक्ता शूलपाशकरान्विता
चतुर्भुजा त्रिणेत्रा च सुप्रसन्नैक वक्त्रका
दुकूल वसना देवी करण्टमकुटान्विता
वरदाभय संयुक्ता शूलपाशकरावपि
दुकूलवसना देवी करण्डमकुटान्विता
वरदाभयसंयुक्ता पाशाङ्कुश करान्विता
यथेष्टस्त्रापि शङ्ख चक्र हस्ता तु षड्भुजा
दुकूल वसनादेवी करण्डमकुटान्विता
वददाभयसंयुक्ता शुकोत्पल करावपि
यथेष्टास्त्रापि शङ्खचक्रहस्तातु षड्भुजा

## पञ्चचत्वारिंशत्तमे पटले विघ्नेश प्रतिष्ठाविधिः

विघ्नेश स्थानं वक्ष्ये लक्षणादि पुरस्सरम्
पुरादावष्टदिक्ष्वन्त वान्तराले तदालयः १
शिवधाम्नयष्टदिक्ष्विष्टस्तद्देशे मण्डपादिषु
चैत्यवृक्षादि देशेषु तन्मूले वाखिलालये २
आपणे वाथ रथ्यायां गृहे वा यत्र कुत्रचित्
यथेष्टदिशि वक्त्रं स्याद्विघ्नेशस्य हि कीर्तितम् ३
अथैकादित्रयस्त्रिंशद्धस्तविस्तार संयुतः
एकादि नवभूम्यन्तभूमिभाग समन्वितम् ४
विशेषाद्गजपृष्ठा भस्त्वन्यरूपयुतोऽथवा
दिक्षु विघ्नेश्वरोपेतः कोणे मूषिकसंयुतः ५
गणो वा स्कन्दरूपाढ्यस्त्वधमालय ईरितः
पूर्ववत्कृतसद्गर्भः प्रथमेष्टकयान्वितः ६
दिग्देवमूर्तिसंयुक्तो मध्यकुम्भयुतो न वा
धाम्नस्संस्थापनेनापि युक्तः प्रागुक्तवर्त्मना ७
प्राकारमण्टपोपेतो मण्टपाद्यैश्च मण्डितः
मण्टपो वालयस्तस्य कूटाद्याकार एव वा ८
परितः परिवारोक्तः प्रसंगात् स च कथ्यते
विश्वरूपं विशालाक्षमक्षयं मदविभ्रमम् ९
उन्मत्तं ललितं भीमं तीक्ष्णदंष्ट्रं यथाक्रमम्
अस्याष्टमूर्तीशान्वाष्टपीठानिद्राद्यधिष्ठितान् १०
कल्पयेत् पूर्वत् सम्यगू द्वाराग्रे मूषिकं च वै
द्वारपौ कल्पयेद्द्वारि विकटं भीममेव च ११
कुम्भोदरं तथैशान्यां न्यसेन्निर्माल्यधारिणम्
आमोदश्च प्रमोदश्च सुमुखो दुर्मुखस्तथा १२
अविघ्नो विघ्नराजश्च भक्ष्याशी पञ्चहस्तकः

एतेऽष्टमूर्तिपाः ख्यातास्त्वन्यथा च निगद्यते १३
हस्तिवक्त्रः प्रलम्बोष्ठो विघ्नेशश्च गणाधिपः
विनायकैकदन्तौ च भक्ष्यप्रियोऽहि मेखलः १४
विघ्नेश्वरनिभा एते विघ्नेशस्याष्टमूर्तिपाः
द्वारस्थौ द्वारपौ कार्यौ भूतरूपौ द्विबाहुकौ १५
हलपल्लवहस्ताढ्यौ दक्षिणे दण्डधारकौ
उग्रदंष्ट्रान्वितौ सिंहकन्धरस्थैकपादकौ १६
रक्तवर्णनिभौ रौद्रौ द्वारपौ विकृताननौ
धूम्रवर्णस्तथा चाखू रक्तनेत्रस्सुदंष्ट्रवान् १७
तीक्ष्णपुच्छश्चतुष्पादः किङ्किणीदामभूषितः
कुम्भोदरश्चतुर्हस्तष्टङ्कशूलासिदण्डधृक् १८
रक्तवर्णो महादीप्तो भद्रपीठोपरि स्थितः
श्वेतवर्णा बृहत्काया उग्राश्चिराम्बरान्विताः १९
पाशाङ्कुशोरुसंसिक्तस्वदन्तयुतबाहवः
परिवारा इति ख्याता गणेशाभिमुखस्थिताः २०
परिवारान्तरे सर्वे क्षेत्रपाः परिकीर्तिताः
बलिपीठं महापीठं पूर्ववत् परिकल्पयेत् २१
पीठस्याष्टदलेषूक्ता आमोदाद्यष्टमूर्तयः
भूतेशः कर्णिकायां च लोकपास्त्राणि बाह्यतः २२
लक्षणं तस्य संक्षेपाच्छृणुध्वं विप्रसत्तमाः
द्रव्यैश्शिलादिभिः कुर्यात् पञ्चतालोत्तमेन तु २३
पञ्चाशद्भाजिते गर्हे पञ्चंशादेकवृद्धितः
त्रिंशद्भगावसानान्तं गर्भमानमुदाहृतम् २४
स्तम्भद्वारोदयादेवं मानमप्यत्र भाव्यताम्
प्रतिमालक्षणप्रोक्तमानं लिङ्गादिजं तु वा २५
केशादिपादपर्यन्तं चतुष्षट्यंशतो भजेत्

उष्णीषमेकमात्रेण तत्केशं द्वयङ्गुलेन तु २६
अर्काङ्गुलेन वक्त्रं स्याद्द्वाभ्यां कण्ठ इहेरितः
ततो हृदयपर्यन्तं रुद्राङ्गुलमिति स्मृतम् २७
अर्काङ्गुलं तु नाभ्यन्तं मेढ्रान्तं कौशिकाङ्गुलम्
तथैव तस्माज्जान्वन्तं जान्वायामं गुणाङ्गुलम् २८
जङ्घा चोरुसमा ज्ञेया तलोत्सेधं द्विमात्रकम्
केशान्तादक्षिसूत्रान्तं चतुरङ्गुलमिष्यते - मुच्यते २९
दन्तमूलान्तु जान्वन्तं गजहस्तस्य दैर्घ्यकम्
दन्तायामाचतुर्मात्रं मूलनाहं तथैव च ३०
दक्षिणेऽदक्षिणे वापि दन्तमेकं प्रकल्पयेत्
मस्तके कुम्भविस्तारं प्रत्येकं तु गुणाङ्गुलम् ३१
नेत्रं तु कर्णमूलान्तं चतुरङ्गुलमुच्यते
कर्णौ च दशमात्रौ स्यात् तत्तारं नन्दमानकम् ३२
कक्षयोरन्तरं पूर्वे प्रोक्तं पञ्चदशाङ्गुलम्
कक्षात्तु चोर्ध्वबाह्वन्तं षडङ्गुलमिति स्मृतम् ३३
मध्यकायस्य विस्तारं मन्वङ्गुलमुदाहृतम्
हृदयान्नाभिसीमान्तं दशाङ्गुलमिहोच्यते ३४
नाभेरधस्तान्मेढ्रान्तं वस्वङ्गुलमुदाहृतम्
अष्टाङ्गुलं द्वयोरूर्वोर्जानुनी चाङ्गुलत्रये ३५
जङ्घे द्वे तलपर्यन्ते वस्वङ्गुलविनिर्मिते
जगवक्त्रो गणाधीशो भूतरूपो महोदरः ३६
नागयज्ञोपवीतस्तु धनपिण्डोरुजानुकः
नीलनीररुहाभस्तु चतुर्दोर्दण्डमण्डितः ३७
अवामवामावर्तेभहस्तः पद्मासनस्थितः
स्वदन्तं परशुं कुर्यात् स्वदक्षिणकरद्वये ३८
लड्डुकं चाक्षमालां च वामपाणावथोत्पलम्

रक्तवस्त्रधरं वाथ श्यामाभं कनकप्रभम् ३९
पीतकञ्चुकसछन्नं किरीटमकुटोज्ज्वलम्
शुक्लयज्ञोपवीतं च सर्वाभरणभूषितम् ४०
स्वशङ्गं वाङ्कुशं दत्ते वामे पाशं च लड्डुक
स्थानकं वासनं वाथ गणेशं कारयेत्ततः ४१
त्रिभिर्विराजितं नेत्रैर्नेत्राभ्यामथवा द्विजाः
पद्मस्थं वापि पीठस्थं मूषिकस्थमथापि वा ४२
इष्टासनस्थितो वापि प्रभादिपरिमण्डितः
एवं स्यात् केवलो विघ्नराजश्शक्त्यान्वितोऽथवा ४३
गणेशो भारती श्रीभ्यां वामेऽवामे युतोऽथवा
शक्त्यैकया युतो देवो यदि तल्लक्ष्म कथ्यते ४४
आसीनमासने रत्नमकुटादिविभूषिताम्
श्यामवर्णां तथा शक्तिं धारयन्तं दिगम्बरम् ४५
उत्सङ्गे निहितां देवीं सर्वाभरणभूषितम्
दिगम्बरां सुवदनां भुजद्वय समन्विताम् ४६
विघ्नेश्वरीति विख्यातां सर्वावयवसुन्दरीम्
पाशहस्तां तथा गुह्यं दक्षिणेन करेण तु ४७
स्पृशन्तीं देवमप्येवं चिन्तयेन्मन्त्रनायकम्
चतुर्भुजं त्रिणेत्रं च पाशाङ्कुशधरं प्रभुम् ४८
इक्षुखण्डकरोपेतं वामेन देविगुह्यकम्
स्पृशन्तं पुष्करेणापि खण्डमिक्षोस्तु हे द्विजाः ४९
एवं संपाद्य तन्मन्त्रैः प्रतिष्ठामारभेद्द्विजाः
द्वितीयस्य तृतीयं यदाद्यस्वरसमन्वितम् ५०
बिन्दुनादसमायुक्तं बीजं विघ्नेश्वरस्य तु
त्रयोदशान्तसंपन्नमथवा परिकल्पयेत् ५१
कवर्गस्य तृतीयं तु वह्निमाया समन्वितम्

हृल्लेखासंपुटोपेतं बीजं स्यात् त्र्यक्षरं द्विजाः  ५२
श्रीवाग्बीजसमायुक्तमथवा परिकल्पयेत्
पञ्चब्रह्मषडङ्गानि मूलमन्त्रवशान्नयेत्  ५३
वक्रतुण्डाय हुं वर्णैरुद्धरेत्तु षडक्षरम्
नमः स्वाहा वषट्कार हुं वौषड्भिर्हृदादयः  ५४
फट्कारेण च संयुक्ताः प्रोक्ताः स्युर्मुनिपुङ्गवाः
द्वितीयस्य तृतीयं तु षष्ठवर्गान्तमेव च  ५५
सप्तमस्य तृतीयं तु तद्वर्गस्य चतुर्थयुक्
तस्य द्वितीयमाद्यं च सचतुर्दशवर्णकम्  ५६
बिन्दुनाद समायुक्तं बीजमेतद्दशाक्षरम्
द्वितीयस्य तृतीयं तु ब्रह्माण्यङ्गानि चोद्धरेत्  ५७
विरिशब्दं त्रिरुच्चार्य ततो गणपतिं पुनः
वरदं तु समुच्चार्य वरदद्वितयं वदेत्  ५८
सर्वलोकवशं पश्चादानयेति पदं ततः
स्वाहापदं ततस्त्विष्टं मन्त्रः शक्त्यन्वितस्य हि  ५९
ओंकारादिपदैर्मन्त्रैर्हृदयादय ईरिताः
हृल्लेखासंपुटो मन्त्रस्त्वथ कारणकार्ययुक्  ६०
गणेशादिपदोपेतस्त्वेष प्राधानिको मनुः
इक्षूदधिस्ततः स्वर्णद्वीपं कल्पद्रुमस्ततः  ६१
सिंहासनं च मन्त्रास्स्युः शक्तिविघ्नेश्वरासने
दक्षहस्तस्य मूलं तु नासायामूर्ध्नि विन्यसेत्  ६२
कुञ्चयेदग्रमेतस्य मुद्रैषा तु गणेश्वरी
अपरा मूलमुद्राख्या मध्यमां तु प्रसारयेत्  ६३
अनामिकामथाकुञ्च तर्जनीमपि चानयेत्
अङ्गुष्ठं शृङ्गवत्कृत्वा मुद्रैषा मूलसंज्ञिता  ६४
अनया मुद्रया सर्वं कर्म कुर्याद्गुरूत्तमः

ततः प्रतिष्ठा कर्तव्या चाङ्कुरार्पणपूर्विका ६५
पूर्वोक्तकाले रत्नानि न्यसेत्पीठे च नैव वा
पञ्च तत्संख्यहेम्नाथ हैमसूचि समन्वितम् ६६
पूर्वोदित प्रकारेण न्सेदिन्द्रादि संस्मरन्
कृत्वा पद्मस्य संघातं नेत्रमोक्षणमाचरेत् ६७
मध्वाज्याभ्यां सहेमाभ्यां पात्रस्थाभ्यां हृदाणुना
सुवर्णनखधान्यौधप्रच्छन्नपटकादिभिः ६८
यदि देवीयुतो विघ्नः पृथक् तस्यां च कारयेत्
बेरशुद्धिं ततः कृत्वा ग्रामादीनां प्रदक्षिणम् ६९
तोयेऽधिवासयेद्देवं लम्बकूर्चयुतं हृदा
परितोऽष्टौ न्यसेत् कुम्भानाशेशैरप्यधिष्ठितान् ७०
यागार्थं मण्टपं कुर्याद्धाम्नोग्रे तस्य पार्श्वयोः
यमाप्येन्दुषु वा पद्मनिभकुण्डादिमण्डितम् ७१
कुण्डानि नव पञ्चैक संख्यया कथितानि तु
तानि वृत्तानि चाश्राणि दिगश्राणि मुनीश्वराः ७२
प्रधानकुण्डं सर्वत्र वृत्तमेव प्रकीर्तितम्
मण्डपं कल्पयित्वैवं प्रागुक्तेन च वर्त्मना ७३
उद्धास्य शिल्पिनं पश्चाद्द्विजान् संभोजयेत्ततः
पुण्याहप्रोक्षणं कृत्वा वास्तुहोमं तु कारयेत् ७४
भुवः परिग्रहं वापि प्रागुक्तविधिना नयेत्
जलादानीय विघ्नेशं स्नानवेद्यां तु विन्यसेत् ७५
मण्टपे चोत्तरस्थे च स्नपनं प्राग्वदाचरेत्
कौतुकं बन्धयित्वान्ते मन्त्रं सर्वात्मकं पठन् ७६
संकल्प्य शयनं वेद्यां स्थण्डिलोर्ध्वेऽण्डजादिभिः
अवस्त्रैर्वा पञ्चभिश्शुद्धैस्तस्मिंस्तं शाययेद्धृदा ७७
आवेष्ट्य रक्तवासोभ्यां कुम्भन्यासं समाचरेत्

विनायकशिरोदेशे सूत्रकूर्चसमन्वितम् ७८
कुम्भं सद्वस्त्रापनस चूताश्वत्थदलान्वितम्
पञ्चरत्नोदकं वाथ हेममाषोदकं तु वा ७९
बीजपूरफलाद्याढ्यं परितोऽष्टौ घटान्यसेत्
वस्त्रहेमादि सम्युक्तान् पूजयेद्गन्धपुष्पकैः ८०
सासनेन सदेहेन गणेशेनाप्यधिष्ठितम्
कुम्भमिष्ट्व तु पूर्वोक्तध्यानयुग्गन्धपुष्पकैः ८१
परिवारघटेष्वेवं हस्तिवक्त्रादिकं नयेत्
आमोदप्रमुखान्वापि नैवेद्यान्तैर्गुरुत्तमाः ८२
देवीद्वययुतं चेदि्द्वपार्श्वयोर्वर्धनीद्वयम्
सैका चेदुत्तरे न्यस्य तत्र तामर्चयेत् पुनः ८३
शिवविद्यात्मतत्त्वानि सदेशान्तगतानि च
न्यस्य गन्धादिभिश्चेष्ट्वा तदीशांश्च क्रमाद्यजेत् ८४
गणेशात्मकतत्वेशं चतुर्थ्यन्तं नमोऽन्तकम्
उक्त्वा तेनैव मार्गेण शिवविद्येश्वरान्न्यसेत् ८५
मूर्तिमूर्तीश्वराश्चैव मूर्तयः पूर्वन्मताः
इन्द्राद्या हस्तिवक्त्राद्या आमोदाद्यास्तु वाधिपाः ८६
पञ्चपक्षे तु मूर्तीशाः पञ्चाष्टस्वादितो मताः
मूर्तिब्रह्मषडङ्गानि विद्यादेहं च मूलकम् ८७
विन्यस्य गन्धपुष्पादद्यैरिष्ट्वा होमं समाचरेत्
पूर्वोक्त भूषणोपेतश्शिवविप्र कुलोद्भवः ८८
गुरुमूर्तिधरैस्सार्धं होमकर्म समाचरेत्
वेदपाठश्चतुर्दिक्षु कोणे मूलजपो भवेत् ८९
संस्कृत्य वह्निं कुण्डं च वन्हिकार्योक्तमार्गतः
दिक्षु तत्पुरुषादींश्च कोणेषु हृदयाद्यणून् ९०
ईशं प्रधाने सर्वैश्च मूर्तिमूर्तीश्वरैर्युतम्

आवाह्याभ्यर्च्य गन्धाद्यैर्द्रव्यैरेभिश्च तर्पयेत् ९१
समिद्घृतान्नलाजैश्च तिलापूपगुलैर्यवैः
तत्त्वतत्त्वेशहोमं च मूर्तिमूर्तीश्वरैर्नयेत् ९२
शान्त्यम्भः प्रोक्षणं स्वस्वमन्त्राणां च जपक्रियाम्
दर्भसंस्पर्शनं चेत्थं प्रतिभागं समाचरेत् ९३
ततः प्रभाते शुद्धस्तु मूर्तिपैस्सह देशिकः
उद्धृत्य विघ्नराजानं कुम्भानग्निं च तर्पयेत् ९४
प्रायश्चित्तनिमित्तं तु घोराहुतिशतं नयेत्
दत्वा पूर्णाहुतिं पश्चात् प्रविशेद्भवनं गुरुः ९५
मानुषे दैविके वापि प्राग्वत् संस्कृत्य विन्यसेत्
कशिलां पूर्वमन्त्रेण रत्नौषध्यादिगर्भिताम् ९६
अथ ब्रह्मशिलोपेतं स्थापयेच्च गणाधिपम्
प्राग्वन्नयस्य गणेशानं मूलमन्त्रं समुच्चरन् ९७
सौमुहूर्ते सुलग्ने तु मन्त्रन्यासं समाचरेत्
चलं चेत् स्नपनवेद्यां मन्त्रन्यासो भवेद्द्विजाः ९८
द्वेग्रे तु घटान्नयस्य कुम्भाद्बीजं तु तद्धृदि
विन्यसेदन्यकुम्भेभ्यः पीठस्य परितो मनून् ९९
तत्तत् कुम्भोदकैश्चैव तत्तद्देशेऽभिषेचयेत्
तत्त्वमूर्त्यादिविन्यासं पूर्ववत् कारयेत्ततः १००
स्नपनं कारयेदन्ते नैवेद्यं चोत्सवं नयेत्
गणेशो भारती श्रीभ्यां युतो यदि मुनीश्वराः १०१
तदुक्तवत् तयोः कुर्यात् प्रतिष्ठां हि गुरुत्तमाः
विघ्नेश्वरीयुतश्चेद्धि तन्नाम्ना स्थापयेत्तु ताम् १०२
विन्यसेत् कुम्भपार्श्वस्थकरकान्मन्त्रमुत्तमम्
तासां हृदि विशेषेण ततः स्थापनमाचरेत् १०३
विघ्नेशस्थापनं ह्येवं यः कुर्याद्बुद्धिमान् स चेत्

आयुष्कामो लभेदार्धनार्थि चेद्धनानि च १०४
विद्याकामोऽमलां विद्यां रतिकामो वरस्त्रियम्
पुत्रान् सौभाग्यमारोग्यं यशोवीर्यं श्रियं शुभमं १०५
लभेत् परत्र मोक्षं च विघ्नेशस्थापनेन तु
तस्यार्चनं च संक्षोपाछृणुध्वं मुनिपुङ्गवाः १०६
उत्थाय प्रातरावश्यं शौचं स्नानं समाप्य च
सन्ध्याया वन्दनं मन्त्रतर्पणं प्राग्वदेव तु १०७
कृत्वालयं विशेत् पश्चान्निर्णिक्ताङ्घ्रिकरद्वयं
आचान्तस्सकलीकृत्य सामान्यार्घ्यकरो गुरुः १०८
द्वारं तदम्भसा प्रोक्ष्य विकटं भीममर्चयेत्
देवोक्तान्वा सुबाहुं च विमलं तल्पयोर्यजेत् १०९
प्रविश्य हेतिं देहल्यां दक्षस्थचरणेन तु
वास्त्वीशं च समभ्यर्च्य स्वासनस्थ उदङ्मुखः ११०
संयोज्य शक्तावात्मानं रक्षयेद्धवंसितास्थितिः
तदुद्भूतामृतेनार्द्रीकृतकाय समन्वितः १११
अस्त्रेण हस्तौ संशोध्य चन्दनेनापि चर्चितौ
ईशास्यघोरवामाजान् करजेषु तले दृशाम् ११२
मूलं च हृच्छिरश्चूडावर्महेतीन्नयसेत् क्रमात्
ज्येष्ठादिषु कराग्रेषु पुनर्मूलं च भावयेत् ११३
देहन्यासं च तन्मन्त्रैर्मूलब्रह्मान्वितैस्तु वा
एकत्रिंशत्कलान्यासं देववत् परिकल्पयेत् ११४
आपाद्यैवं तनुं मन्त्री लिपिन्यासान्वितां न वा
गणेशानवदात्मानं ध्यात्वान्तर्यजनं नयेत् ११५
अथवा शिवमन्त्रैस्तु शैवीकृत्वा निजां तनुम्
इष्ट्वा हुत्वा गणेशानं ध्यात्वा हृन्नाभिबिन्दुषु ११६
स्थानशुद्धिं ततः कृत्वा विशेषार्घ्यं च कल्पयेत्

गन्धपुष्पाद्धतोपेतं पूर्वद्रव्ययुतं न वा ११७
पाद्यमाचमनं तद्वदर्घ्यं केवलमेव वा
संप्रोक्ष्याघ्र्यजलेनैव प्रत्येकं द्रव्यसंहितम् ११८
हृदाभिमन्त्र्य स्वात्मानमिष्ट्वा सर्वात्मकं स्मरन्
मन्त्रशुद्धिं ततः कृत्वा बेरशुद्धिं ततो नयेत् ११९
इष्ट्वा पर्युषितां पूजां वक्रतुराडाय विद्महे
इत्युक्त्वा हस्तिवक्त्राय धीमहीति पदं ततः १२०
तन्नो दन्तिपदं पश्चात् पदमुक्त्वा प्रचोदयात्
इत्युच्चरंस्ततोऽर्घ्येण सामान्यार्घ्येण वार्चयेत् १२१
हृदापनीयातां बाह्ये दद्यान्निर्माल्यधारिणे
त्यजेद्वाबेरसंशुद्धिं कारयेदुक्तवर्तमना १२२
लोहजं यदि तद्बेरं स्नानं पर्वणि पर्वणि
चित्रादिकं चेत् कर्मार्चाशुद्ध्या शुद्धिर्मता द्विजाः १२३
मन्दानिलेनास्त्रलब्धतालवृन्तोत्थितेन वा
कृत्वेत्थमात्मभूद्रव्यमन्त्रबिम्बविशोधनम् १२४
कल्पयेदासनं मध्ये प्रणवं धर्मसंमुखान्
अधर्मादीनधश्चोर्ध्वच्छदने पद्ममन्तरा १२५
प्रणवाम्भसि संभूतं पीतकर्णिकया युतम्
शक्त्यन्वितश्चेत्तस्योक्तमार्गेणासनमाचरेत् १२६
ततो गणासनायेति पूजयेदनुपूर्वशः
मूर्तिमावाह्य तां प्राग्वद्देहं संक्ल्प्य मन्त्रकैः १२७
प्रणवात्तत्र विघ्नेशमाविष्कुर्यात् प्रसादतः
हृदयानुगतेनैव पुष्पापूरितसत्करः १२८
निष्ठुरां सन्निधानाद्यं हृदा कृत्वावकुराठयेत्
हृदाद्यणुभिरस्त्रान्तैर्महामुद्रां प्रदर्शयेत् १२९
हृदा पाद्यं पदोर्दत्वा वक्त्रेणाचमनं नयेत्

अर्घ्यमीशं स्मरन्दत्वा गन्धपुष्पं सधूपकम्  १३०
हृदा पञ्चामृताढ्यं च वियुक्तं स्नापयेत्तु वा
उन्मृज्य वाससा पश्चाद्वाससा परिधापयेत्  १३१
वक्त्रेणाचमनं दत्वा चन्दनागरुकुष्ठकान्
पिष्ट्वा कर्पूरसंयुक्तान् केवलं चन्दनं तु वा  १३२
दत्वा कृष्णागरूपेतं धूपं दद्याद्धृदाणुना
लघुचन्दननिर्यासकर्पूरैर्धूपमेव वा  १३३
सुरभीणि विचित्राणि सर्वर्तुप्रसवानि तु
तत्क्षणप्रतिबुद्धानि प्राग्वत् पुष्पाणि दापयेत्  १३४
तैलाज्यदीपितान्दीपान्दापयेद्धृदयाणुना
नैवेद्यं दापयेत्पश्चान्मुद्गान्नादियुतं न वा  १३५
गन्धादीनां प्रमाणानि पश्चिमास्यार्चनोक्तवत्
पूजयेदावृतिं पश्चाद्धूपदानावसानके  १३६
अग्नौ च रक्षोवाय्वीशदिक्षु दिक्षु हृदाद्यणून्
तद्बाह्ये हस्तिवक्त्रादीनामोदप्रमुखानथ  १३७
इन्द्रादींश्च तदस्त्राणि तद्बाह्ये सम्यगर्चयेत्
एकेन वा यजेद्द्वाभ्यां त्रिभिर्वावरणैर्गणम्  १३८
पुनर्धूपं च दीपं च मन्त्रगानाद्यमेव च
नैवेद्यबलिहोमांश्च कारयेत् पूर्ववर्त्मना  १३९
पलाशसमिदाज्यान्नलाजान् पृथुकसंयुतान्
मूलेन शतपञ्चाशद्दशसंख्येन वा गुरुः  १४०
मूलाद्दशांशसंख्यैस्तैरङ्गैर्होमं समाचरेत्
नित्योत्सवं ततः कुर्याद्गणबेरेण वर्त्मना  १४१
पूर्वोक्तमानयुक्तेन तस्मिन्नभ्यर्चयेद्गणम्
पुष्पान्नाक्षतलिङ्गेषु गणास्त्रं हेतिना यजेत्  १४२
नित्योत्सवोऽयं कर्तव्यो बेरयुक्तोऽथवा न वा

पूर्वोक्तविधिना कृत्वा प्रासादस्य प्रदक्षिणम् १४३
पादुकार्चनयुक्तं वा प्रविशेदालयं प्रति
एककालं द्विकालम् वा त्रिचतुष्पञ्चकालकम् १४४
षट्सप्तवसुकालं वा सर्वदा वार्चयेद्गणम्
ज्ञात्वैवं पूजयेन्नित्यमर्चनाङ्गैर्गणेश्वरम् १४५
नित्येज्यैवं समादिष्टा भुक्तिमुक्तिफलप्रदा
विशेषयजनं कुर्याच्चतुर्थ्यामिष्टसिद्धये १४६
नानाभक्ष्यसमोपेतं स्नपनादिसमन्वितम्
स्नपनं पूर्ववत् किं तु मध्यकुम्भे गणेश्वरम् १४७
आमोदाद्यादिक दिक्षु चत्वारः पञ्चकल्पने
अष्टौ च नवसंख्ये स्युः पञ्चविंऽसतिसंख्यके १४८
लोकपा विऽस्वरूपाद्या वसुदिक्ष्वन्तरालके
लोकपास्त्रान् वसूनाद्यानष्टकं वास्तु संस्थितो १४९
पूर्वत्रयात्रयं पूज्यं त्वष्टकेषु त्रिषुक्रमात्
एकोनपञ्चाशत्संख्यकलशे देवता मताः १५०
गणसहस्रनामोक्तशताद्यास्स्युश्शताष्टके
अष्टाधिकसहस्रे तु सर्वदेवाः प्रकीर्तिताः १५१
अथ सर्वत्र विघ्नेशः पूज्यो वा मुनिपुङ्गवाः
वाक्श्रीयुतो गणेशश्चेद्वर्धनीद्वितयं न्यसेत् १५२
शक्त्यैकया युतश्चेत्तु वर्धनीमूत्तरे न्यसेत्
अनुक्तं स्नपनेयत्तु प्राग्वदेव समाचरेत् १५३
उत्सवं दमनारोहं पवित्रारोहणक्रिया
दीपावलि वसन्तेज्या मासे मासोत्सवं तु वा १५४
नवनैवेद्यकर्मापि प्रायश्चित्तं विशेषतः
जीर्णानामुद्धृतिं चान्यत् पूर्ववत् परिकल्पयेत् १५५
किंतु तस्य ध्वजे मूषं वा समालिखेत्

शिवोत्स्वएऽपि नित्यं तु विघ्नेशस्योत्सवं तु वा १५६
ध्वजहोमबलीन् हित्वा केवलं यानमेव च
चक्रास्त्रं वा त्रिशूलास्त्रं विघ्नेशास्त्रं प्रगृह्यताम् १५७
उत्सवप्रतिमा कार्या पूर्वलक्षणलक्षिता
उत्सवे तु बलिद्रव्यहोमद्रव्यादयोऽपि ये १५८
अत्रानुक्तास्तु ते सर्वे शिवस्योक्तवदीरिताः
वश्योच्चाटनविध्वेषमारणानि च पौष्टिकम् १५९
शान्तिस्तम्भनपूर्वाणि मन्त्रेणानेन कारयेत्
सर्वव्याधिसमुत्पत्तौ मन्त्रेणानेन शान्तयेत् १६०
अस्य प्रतिष्ठा सर्वत्र बालस्थानान्विता न वा
विघ्नेशं स्थापयेद्वादौ शिवधामप्रकल्पनात् १६१

इति उत्तरकामिकाख्ये महातन्त्रे विघ्नेशप्रतिष्ठाविधिः
पञ्चचत्वारिंशत्तमः पटलः

गजवक्त्रो गणाधीशो भूरूपो महोदरः
जागयज्ञोपवीतस्तु घनपिण्डोरुजानुकः
नीलनीररुहाभस्तु चतुर्दोर्दण्डमण्डितः
अवामावामवर्तेभ हस्तः पद्मासनस्थितः
स्वदन्तं परशुं कुर्यात् स्वदक्षिणकरद्वये
लड्डुकं चाक्षमालां च वामपाणावथोत्पलम्
स्थानकं वासनं वाथ गणेशं कारयेत्ततः

रक्तवस्त्रधरं वाथ श्यामाभं कनकप्रभम्
पीतकञ्चुकसंछन्नं किरीट मकुटोज्ज्वलम्
शुक्लयज्ञोपवीतञ्च सर्वाभरणभूषितम्
स्वशृङ्गं वाङ्कुशं दक्षे वामे पाशञ्च लड्डुकम्

अवामावामवर्तेभ हस्तः पद्मासनस्थितः
स्थानकं वासनं वाथ गणेशं कारयेत्ततः

श्याम वर्णां तथा शक्तिं धारयन्तां दिगम्बरम्
उत्सङ्गे निहितां देवीं सर्वाभरण भूषिताम्
दिगम्बरां सुवदनां भुजद्वय समन्विताम्
विघ्नेश्वरीति विध्यातां सर्वावयव सुन्दरीम्
पाशहस्तां तथा गुह्यं दक्षिणेन करेण तु
स्पृशन्तीं देवमप्येवं चिन्तयेन्मन्त्र नायकम्
चतुर्भुजं त्रिणेत्रञ्च पाशाङ्कुशधरं प्रभुम्
इक्षु खण्डकरोपेतं वामेन देवि गुह्यकम्
स्पृशन्तं पुष्करेणापि खण्डमिक्षोस्तु हे द्विजाः

गजवक्त्रो गणाधीशो भूतरूपो महोदरः
नागयज्ञोपवीतस्तु घनपिण्डोरु जानुकः
नीलनीररुहाभस्तु चतुर्दोर्दण्ड मण्डितः
अवामावामवर्तेभ हस्तः पद्मासनस्थितः
स्वशृङ्गं वाङ्कुशं दक्षे वामेपाशञ्च लड्डुकम्
स्थानकं वासनं वाथ गणेशं कारयेत्ततः
गणेशो भारती श्रीभ्यां वामेऽवामे युतोऽथवा
आसीनमासने रत्नमकुटादि विभूषितम्

षट्चत्वारिंशत्तमे पटले नृत्तमूर्ति स्थापन विधिः

नृत्तमूर्ति प्रतिष्ठां तु वक्ष्ये तल्लक्षणान्विताम्
चतुर्भुजास्त्रिणेत्रश्च संविकीर्ण जटायुतः १
जटामकुटसंयुक्तो वक्रनागफणावृतः

पृष्ठगाः पार्श्वगास्तास्स्युः पञ्चाद्यैककवृद्धितः २
त्रिंशत्संख्यावसानास्स्युः जटास्तास्सान्तरालकाः
धुत्तूरारग्वधार्कादि पुष्पयुक्तास्सपिङ्गलाः ३
कृत्वाञ्जलिपुटोपेत जाह्नव्या दक्षिणस्थया
वालचन्द्रेण संयुक्तो वामपार्श्वस्थितेन च ४
युक्तोवकुलमालाभिर्मुक्ता दामोरगादिभिः
व्याघ्राजिनाम्बरो दीप्तस्सर्वाभरण भूषितः ५
वामदोर्मूल मालम्बि द्वीपिचर्माम्बरान्वितः
दिव्याम्बरान्वितो वापि मृगाजिनयुतोपि वा ६
कस्थ ब्रह्मकपालेन नानापुष्पैरलंकृतः
धृत वाराहदन्ताग्र शार्दूलनखकच्छपैः ७
शाङ्खिकैर्मणिभिः प्रोतमालया हृदिभूषितः
स्थितो दक्षिणपादेन वामेनोपरिवर्तिना ८
कुञ्चितावर्तमानाङ्घ्रिः सुरसारितत्करः
अम्बिकामुखबिंबाब्ज भ्रमरीकृतलोचनः ९
आबद्धकिंकिणीयुक्तः तद्वन्नूपुरशोभितः
वामदक्षिणकर्णाढ्य पत्रिका नक्रकुण्डलः १०
दक्षाभयकरस्थेन भुजङ्गेनोत्फणेन च
वामापरकरस्थेन वह्निना दक्षकेन तु ११
डिन्डिमेन समायुक्त उपवीतेन संयुतः
गोक्षीरधवलप्रख्य आदित्याङ्गुलभङ्गयुक् १२
नानासर्पसमायुक्तस्त्वपस्मारोपि स्थितः
मूर्ध्नो ललाटदक्षस्थं नासादक्षपुटस्थितम् १३
नाभेर्दक्षिणतो गुल्फे मध्येसूत्रं प्रसारयेत्
ललाट मध्य सूत्रात्तु द्विमात्रमितिकीर्तितम् १४
हिक्कासूत्रद्वयोर्मध्ये त्रिमात्रमिति कीर्तितम्

श्रोणीवामोरुसंस्पृष्टं तत्सूत्रमिहसंमतम् १५
सूत्रगुल्फद्वयोर्मध्यं एकाङ्गुलमिति स्मृतम्
सूत्राद्धि नतजान्वन्तं भानुदिग्नन्दमात्रकम् १६
तत्सूत्राद्वामपृष्ठान्तं सप्ताधिकदशाङ्गुलम्
तत्सूत्राद्वामजान्वके चत्वारिंशद्दशाङ्गुलम् १७
सूत्राद्दक्षिणतः कुक्षिरष्टाङ्गुल उदाहृतः
सूत्रात्तु सव्यकुक्षिस्तु रव्यङ्गुल उदाहृतः १८
ऊर्वोर्द्दक्षिण तत्सूत्रं सप्ताधिकदशाङ्गुलम्
सूत्रात्तद्वामभागेतु नवमात्रमुदीरितम् १९
सूत्रात्तु वाममण्ठस्तु पञ्चाङ्गुल उदाहृतः
सूत्रात्तु दक्षिणः कण्ठो भाग इत्यभिधीयते २०
सूत्रात्तु वामबाह्वन्तं त्र्यङ्गुलक्षयसंयुतम्
अथवान्यप्रकारेण सूत्रपातोभिधीयते २१
कनीनिकान्तं तन्मूर्ध्नस्तदूर्न्नासापुटान्ततः
नाभेश्च दक्षमात्रान्तं स्थिताङ्घ्रेर्गुल्फमध्यमम् २२
स्पृष्ट्वा यत्पातितं सूत्रं मध्यसूत्रमुदाहृतम्
सूत्राद्वामे मुखं पञ्चमात्रं कण्ठ त्रिमात्रकम् २३
बाह्वन्ते तिथिमात्रं स्यात् नवमात्रं तु कक्षगम्
मध्योदरेऽष्टमात्रं स्याच्छ्रोणी विश्वाङ्गुलेन च २४
कटिस्तिथ्यङ्गुलेन स्यात् अन्यत्रषष्टिमात्रकम्
नवमात्रं तदूरुःस्यात् पार्ष्णयन्तं वेदतुङ्गकम् २५
सप्ताङ्गुलं मुखेन्यत्र कण्ठः स्याद्रसमात्रकम्
बाह्वन्ते तु त्रिमात्रं स्यात् कक्षान्ते विश्वमात्रकम् २६
मन्वङ्गुलं भवेत् कुक्षौ श्रोण्यां स्याद्युगमात्रकम्
कट्यां च वेदमात्र स्याज्जानुरष्टाङ्गुलं भवेत् २७
पादाग्रेमुखमात्रंस्यात् एवं बुध्वा समाचरेत्

स्थितजानुसमं विद्यात् वर्तिताङ्घ्रे समुच्छ्रयः २८
तत्पार्ष्णिजान्वोर्द्विमुखं द्व्यन्तरं परिकीर्तितम्
श्रोणीसमुच्छरयं वामाजानोरुद्धरणं मतम् २९
तदूरुमध्यान्नाभेश्च द्व्यन्तरं नवमात्रकम्
तज्जानोर्दण्डहस्तस्य मणि बन्धान्तरं मनुः ३०
तस्मादभयहस्तस्य मणिबन्धो रसाङ्गुलः
तस्य चाङ्गुष्ठमूलान्तात् स्तनाद्वाद्द्व्यन्तरं मुखम् ३१
तद्दोस्समं तलोच्चं स्यात्तद् बाह्वोर्मध्यमात् पुनः
सप्तदशाङ्गुलं विद्याद्दण्डहस्तस्य कोर्परम् ३२
भुजान्तं साग्निहस्तोच्चं सोऽग्निः पञ्चाङ्गोलोच्छ्रयः
विस्तारः कोलकस्तस्य शिखाभिस्तिसृभिर्युतः ३३
धृतडामरुको हस्तः कर्णोच्चो वाङ्गुलाधिकः
धातुर्डमरुकायामो भूतैस्तु मुखविस्तृतिः ३४
कोलको मध्यविस्तारः परितस्सूत्रयन्त्रितः
एक जिह्वासमायुक्तो गम्भीर ध्वनि संयुतः ३५
बाह्वोस्तु मणिबन्धान्तं चतुर्स्त्रिंशत्तथापरम्
अपस्मारोच्छ्रयं भानुरुद्र नन्दाष्ट मात्रकम् ३६
देवस्य वक्त्रमानेन स्यादपस्मारमानकम्
वक्त्रद्वयं समारभ्य पञ्चवक्त्रावसानकम् ३७
वक्त्रार्ध मान बुद्ध्यातु सप्तमानमुदाहृतम्
चतुस्तालेन कर्तव्यमपस्मारो द्विजोत्तमाः ३८
उष्णीषात् पादपर्यन्तं षड्ष्टांशं विभाजयेत्
उष्णीषात् केशपर्यन्तं कोलकं चेति कीर्तितम् ३९
केशान्ताद्धनुपर्यन्तं अष्टभागमितिस्मृतम्
गलमर्धाङ्गुलं प्रोक्त मध्यर्धं कर्ण उच्यते ४०
षडङ्गुल इति प्रोक्तो हिक्कादि हृदयान्ततः

तथैव तस्मान्नाभ्यन्तं षडङ्गुलमिति स्मृतम् ४१
तस्मात्तु मेद्रमूलान्तं कौशिकाङ्गुलमुच्यते
ऊर्वायामं तु सप्तांशं जानूत्सेधो द्विमात्रकः ४२
जङ्घयामस्तु सप्तांशः पादोत्सेधो द्विमात्रकः
द्विभुजश्च द्विनेत्रश्च ऊर्ध्वकायस्त्वधोमुखः ४३
व्यालं वै वामहस्ते तु तस्यमूर्धा तु दक्षिणे
आवृतालंकृताभङ्गी सव्यपार्श्वशिरोयुतः ४४
देवस्य वक्त्रमानेन जाह्नव्यायाम उच्यते
द्विभुजाच त्रिणेत्रा च करण्डमकुटान्विता ४५
सर्वाभरणसंयुक्ता कृताञ्जलिपुटान्विता
ऊर्ध्वभागादधोभागं तोयकारेण कारयेत् ४६
गङ्गा देव्यानया देवस्संयुक्तो वा विवर्जितः
प्रभावकाशविस्तारो दशाधिकतशताङ्गुलम् ४७
सप्तत्रिंशच्छतायामतद्दण्डो भाग विस्तरः
एकादि दशपर्यन्त मात्रैरूणाधि कापि वा ४८
द्व्यङ्गुलादङ्गुलार्धात्तु बालचन्द्रस्तु सप्तधा
तद्वशात् पार्श्वगां देवीं कल्पयेत्तद्विधानतः ४९
कुर्याद् भृङ्गिरटिं वाथ भद्रकाली मथापि वा
भुजङ्गात्रास आख्यातो भुजङ्गललितस्ततः ५०
भुजङ्गत्रासवत्सर्वं विशेषः कश्चिदस्ति हि
उद्धृतस्य तलं कुर्यात् स्थितजानुर्ध्वतः क्रमात् ५१
द्विमात्रं वा त्रिमात्रं वा चतुर्मात्रमथापि च
भुजङ्गललितः ख्यातस्तद्भैरव इहोच्यते ५२
भुजङ्गत्रासवत्सर्वं विशेषस्तत्र चोच्यते
उद्धृतं दक्षिणं पादं वामपादं तु वा नयेत् ५३
सपादो देहमध्यस्थश्चोर्ध्वपादतलान्वितः

चतुर्भुजोऽष्टहस्तो वा नानादिव्यास्त्रभूषितः ५४
शिलादि द्रव्यामासाद्य कुर्यादेवं नटेश्वरम्
इत्थं लक्षणमाख्यातं प्रतिष्ठा तत उच्यते ५५
कालोपि पूर्ववत्प्रोक्तस्तद्वदेवाङ्कुरार्पणम्
रत्नन्यासाक्षिमोक्षौ च पूर्ववत्सम्यगाचरेत् ५६
बेरशुद्धिं ततः कुर्यान्नगरादि प्रदक्षिणम्
जलाधिवासनं पश्चान्मण्डपं पूर्ववन्नयेत् ५७
कुण्ठानि परितः पश्चान्नवपञ्चैक संख्यया
चतुरश्राणि वृत्तानि तद्दिगश्राणि वा नयेत् ५८
मण्डपे भोजयेद्विप्रान् सहस्रान्तान्दशाधिकान्
पुण्याहं वाचयेत्पश्चन्मण्डापस्य विशुद्धये ५९
समरीचिपदे कुर्यात् वास्तुहोमं विधानतः
वास्तुहोमं विना वापि भूपरिग्रहमाचरेत् ६०
पुण्याहं वाचयित्वा तु वेद्युर्ध्वे स्थण्डिलं नयेत्
शयनं कल्पयेदूर्ध्वे प्रतिमां शोधयत्ततः ६१
कृत्वा कौतुक बन्धं तु शाययेच्छयनोपरि
शिरप्रदेशे देवस्य शिवास्यं तु धटं न्यसेत् ६२
वर्धनीमुत्तरे न्यस्य तस्यां गौरीं च विन्यसेत्
लक्षणोदित रूपं तु ध्यात्वा गन्धादिभिर्यजेत् ६३
ध्यायेद्देवीं त्रिणेत्रां शिशिनिभवदनां वेदहस्तान् धानां
सव्ये पद्मं वरदमपरे चाभ्यं चाक्षमालां
दिव्यैराभरणैर्विभूषिततनुं ब्रह्मादिभिः पूजितां
देवैरेव मनोन्मनीं प्रतिदिनं कामार्थदात्रीं शुभां
अभितः कलशानष्टौ विद्येशाधिष्टितान्नयेत्
अर्चयेद् गन्धपुष्पाद्यैः नैवेद्यान्तं गुरुत्तमः ६४
तत्वतत्वे श्वरान्मूर्तिमूर्तीशानपि विन्यसेत्

होमं समारभेत् काले मूर्तिपैस्सह देशिकः ६५
कृत्वा कुण्डाग्निसंस्कारं अग्निकार्योक्तमाचरेत्
समिदाज्य चरून् लाजान् सर्षपं च यवं तिलम् ६६
प्रियङ्गुशालिमुद्गांश्च जुहुयात् क्रमतो गुरुः
ऊदुंबरवटाश्वत्थ प्लक्षाःपूर्वादिदिक्षु च ६७
शम्यपामार्ग बिल्वाश्च खादिरश्चाग्निकोणतः
प्रधानस्य पलाशस्तु समिधश्चैवमीर्तिताः ६८
ऋगाद्यध्ययनं मन्त्रजपं च विधिवन्नयेत्
गेयनृत्तयुतैस्तोत्र वेदघोषैर्व्यपोह्य च ६९
रात्रि शेषं ततः प्रातः स्मृत्वा शान्तं सदाशिवम्
समूर्तिपोगुरुःस्नातो मन्त्रसंशुद्धदेहयुक् ७०
उद्धृत्य प्रतिमां पूर्वमुखां सर्वात्मना गुरुः
व्यपोह्य वस्त्रकूर्चादीन् पूजयेत् गन्धपुष्पकैः ७१
कुंभांश्च कुण्डेष्वग्नींश्च तर्पयेश्च गुरूत्तमः
पूर्णाहुतिं ततो दद्यात् वौषडन्त शिवेन तु ७२
वस्त्रहेमाङ्गुलीयाद्यैराचार्यं पूजयेत्ततः
दक्षिणा पूर्ववत्प्रोक्ता ततः स्थापनमारभेत् ७३
ततो वेद्यास्समुद्धृत्य स्नानश्वभ्रे तु विन्यसेत्
चलं प्रासादमध्ये तु स्थापयेदचलं गुरुः ७४
ततः कुंभान्समुद्धृत्य सर्वातोद्य समाकुलम्
हर्म्यं प्रदक्षिणं कृत्वा प्रतिमाग्रं नयेद्बुधः ७५
कुंभाद्बीजं समादाय महेऽसस्य हृदि न्यसेत्
वर्धन्या बीजमादाय तत्पीठाब्जे तु विन्यसेत् ७६
विद्येशान् पीठ पद्मेषु तत्तद्देशेऽभिषेचयेत्
देवीयागोक्तमार्गेण देवीं च स्थापयेद् गुरुः ७७
तदन्ते कारयेद्धिमान् कल्याणमपि देशिकः

उत्सवं कारयेत्पश्चात् तथा वितानुसारतः  ७८
अनुक्तमत्र सामान्यस्थापनोदित माचरेत्
एवं यः कुरुते मर्त्यः प्रतिष्ठां भावनायुतः  ७९
स यायात् पदमैशानं भुक्त्वा भोगानिहैव तु  ७९ १-२
इति उत्तरकामिकाख्ये महातन्त्रे नृत्तमूर्ति स्थापनविधिः
षट्चत्वारिंशत्तमः पटलः

चतुर्भुजस्त्रिणेत्रश्च संविकीर्ण जटायुतः
जटामकुट संयुक्तो वक्रनाग फणावृतः
कृताञ्जलिपुटोपेत जाह्नव्या दक्षिणस्थया
बालचन्द्रेण संयुक्तो वामपार्श्व स्थिते न च
व्याघ्राजिनाम्बरो दीप्त स्सर्वाभरणभूषितः
वामदोर्मूल मालम्बि द्वीपि चर्माम्बरान्वितः
स्थितो दक्षिणपादेन वामेनोपरि वर्तिना
कुञ्चितावर्तमानाघ्रिः सुप्रसारित तत्करः
आबद्ध किङ्किनीयुक्तः तद्वन्नूपुर शोभितः
वाम दक्षिण कर्णाढ्य पत्रिका नक्र कुण्डलः
दक्षाभयकरस्थेन वह्निना दक्षके न तु
डिण्डिमेन समायुक्त उपवीतेन संयुतः
गोक्षीर धवलप्रख्य आदित्याङ्गुल भङ्गयुक्
नाना सर्पसमायुक्तस्त्वपस्मारो परिस्थितः

सप्तचत्वारिंशत्तमे पटले सोमास्कन्द स्थापन विधिः
वक्ष्यामि सोमास्कन्द सुखेशस्थापनं परम्
तल्लक्षण समायुक्तं तच्चेदानीं प्रकथ्यते  १
चतुर्भुजस्त्रिणेश्च जटामकुटमण्डितः

सर्वाभरण संयुक्तो वरदाभयहस्तकः २
कृष्णापरशु युक्तोर्ध्व वामेतरकरान्वितः
असव्यसव्यकर्णस्थ पत्रिकानक्रकुण्डलः ३
सोपवीतः प्रसन्नात्मा शयितासव्यपात्तलः
सालम्बदक्षपादेन वामेगौर्या च संयुतः ४
सर्वलक्षणसंयुक्त स्सर्वाभरणभूषितः
ललाट नासिकानाभिमेन्द्रपाद्गुल्पमध्यमे ५
श्रोणिस्पृक् संस्थितं सूत्रं मध्यसूत्रमितिस्मृतम्
मुखान्तात् पिप्पलीमूलात् ग्रीवापार्श्वात्तथैव च ६
चूचुकस्याथमध्यात्तु कटिस्थं पार्श्वगं मतम्
उष्णीषात्तुककुद्वंश कण्ठस्फिक् मध्यमाद्गतम् ७
पृष्ठसूत्रमितिप्रोक्तं पार्श्वस्थात् सार्धमात्रकम्
हित्वापार्श्वद्वयोश्चैव ततस्स्या दूरुदैर्घ्यकम् ८
जानुः पक्षांगुलं वामे लम्बितस्य गुणाङ्गुलम्
सूत्रात्तुवामजन्वान्तं मूर्ध्वकायार्धमानकम् ९
ऊरूमूलात्तु षण्मात्रन्नालकान्तं द्विजोत्तमाः
तलाग्रादूरुमध्याच्च द्वयन्तरन्तु गुणांगुलम् १०
सूत्राल्लम्बाङ्घ्रिपार्ष्णयन्तं सार्धविश्वाङ्गुलं भवेत्
कटकान्मणिबन्धाधोदेशे कटयग्रसीमगम् ११
नाभेस्तु मणिबन्धान्तं षोडशाङ्गुलमीरितम्
वरदं चेत्तु तत्पृष्ठान्नाभ्यन्तसममिष्यते १२
वामदेव्या समायुक्तस्तदध्यायप्रसिद्धया
ससोमस्सोम एव स्यात् सोमास्कन्त विधिर्भवेत् १३
देवोच्चदशभागैक भागेनाभद्विभागतः
त्रिवेदभागैर्वा कुर्यात् स्कन्दं तन्मध्यमे गुरुः १४
द्विनेत्रस्य द्विबाहुश्च करण्डमकुटान्वितः

कर्णयोर्नक्रपिण्डौ तु सर्वाभरणभूषितः १५
दक्षभागकरस्थाब्जः प्रसारितकरोऽपरः
द्विहस्तपङ्कजो वाथ वृत्तरूपयुतोऽथवा १६
देव्यूरुसंस्थितो वापि निष्पङ्कजकरोऽथवा
आसीनो वा स्थितो वापि स्कन्दस्त्वेवं प्रकीर्तितः १७
स्कन्दोमारहितस्त्वेष एवं स्यात्तु सुखासनः
सोमे च सोमास्कन्दे च सुखेशे लक्षणं मतम् १८
प्रतिष्ठैषां प्रकर्तव्या सुकालेऽङ्कुरपूर्विका
रत्नन्यासं ततः कुर्याद्देवदेव्योश्च वै गुहे १९
हेमाब्जं हेममायूरं देव्यां स्कन्देऽथवा न्यसेत्
तत्तत्प्रतिष्ठाध्यायोक्तमन्त्रैरपि समन्वितम् २०
तत्तपीठाम्बुजेष्वेव सुस्निग्धान्तं गुरुर्न्यसेत्
दृशामुन्मोक्षणं कृत्वा बेरशुद्धिं प्रदक्षिणम् २१
जलाधिवासनं प्राग्वत् भवेन्मण्डपमाचरेत्
दिगराण्याभवृत्तानि वेदाश्राणि च वानयेत् २२
कुण्डानि नवपञ्चैक संख्यया कुट्टिमाद्बहिः
शिल्पिनं च विसृज्याथ विप्रान् संभोजयेत्ततः २३
पुण्याहं प्रक्षणं वास्तुहोमं स्थण्डिलकल्पनम्
शयनं कल्पयेन्मध्ये स्नपनं कारयेत्ततः २४
कौतुकत्रितयं बध्वा त्रिषु ताञ्शाययेत्ततः
वस्त्रैश्च पृथगावेष्ट्य कुम्भान् संस्थापयेत्ततः २५
शिवकुम्भं शिरोदेशे श्वस्य च तदुत्तरे
विन्यस्य वर्धनीं सोमास्कन्दश्चेद्दक्षिणेघटम् २६
स्कन्देनाधिष्ठितं न्यस्य गन्धाद्यैरर्चयोत्ततः
लक्षणोदितरूपाभिध्यानाधिकृतधीर्गुरुः २७
परितोऽष्टौ घटान्नयस्य विद्येशैरप्यधिष्ठितान्

तत्तदध्यायमार्गेण तत्त्वमूर्त्यादिकं नयेत्  २८
कृत्वा कुण्डाग्निसंस्कारं समिदाज्यान्नलाजकैः
तिलसस्येन्द्रमुद्गैश्च होमं च विधिना नयेत्  २९
पलाशोदुम्बराश्वत्थवटादिक्षु विदिक्षु च
शमीखदिरमायूर श्रीवृक्षोत्था इहेरिताः  ३०
प्रधानेऽप्यादिमः प्रोक्तः पूर्णान्तं कर्म कारयेत्
षण्मुखं च देवीं प्रधाने तर्पयेद्गुरुः  ३१
एते विभीन्नपीठाश्चेत् पृथङ्मण्टपमाचरेत्
द्वितीये देवकुम्भाग्नींस्तर्पयेत् पूर्ववर्त्मना  ३२
संप्राप्तदशनिष्कादिदक्षिणो मूर्तिपादिभिः
वस्त्रहेमाङ्गुलीयादिपूजितो गुरुरादरात्  ३३
कुम्भाद्बीजं महेशानहृदि न्यसेत्
वर्धन्यास्तत उद्धृत्य तस्य पीठे तु विन्यसेत्  ३४
सहजा यदि सा देवी तस्यास्तु हृदि विन्यसेत्
गुहकुम्भाद्गुहार्णं तं गुहस्य हृदि विन्यसेत्  ३५
अन्येभ्यः परितः पीठे न्यस्य तानभिषेचयेत्
एते विभिन्नपीठाश्चेत् पृथङ्मण्टपमाचरेत्  ३६
कल्याणकर्म कर्तव्यं यथाविधि विशेषतः
अनुक्तमत्र यत् कुर्यात्सामान्यस्थापनोक्तवत्  ३७
इत्थमेषां प्रतिष्ठां तु यः कुर्यान्नरसत्तमः
स यास्यति विवेनैक्यमिह सिद्धिं च सोऽश्नुते  ३८

इति उत्तरकामिकाख्ये महातन्त्रे सोमास्कन्द स्थापन विधिः
सप्तचत्वारिंशत्तमः पटलः

चतुर्भुजास्त्रिणेत्रश्च जटामकुटमण्डितः
सर्वभरणसंयुक्तः वरदाभयहस्तकः

कृष्णापरशुयुक्तोर्ध्व वामेतरकरान्वितः
असव्यसव्यकर्णस्थ पत्रिका नक्रकुण्डलः
सोपवीतं प्रसन्नात्मा शयिता सव्यपात्तलः
सालम्ब दक्षपादेन एवं स्यात्तु सुखामनः

चतुर्भुजस्त्रिणेत्रश्च जटामकुट मण्डितः
सर्वभरण संयुक्तो वरदाभयहस्तकः
कृष्णापरशुयुक्तोर्ध्व वामेतरकरान्वितः
असव्यसव्यकर्णस्थ पत्रिकानक्र कुण्डलः
सोपवीतः प्रसन्नात्मा शयिता सव्यपात्तलः
सालम्ब दक्षपादेन वामे गौर्या च संयुतः
सर्वलक्षण संयुक्तस्सर्वाभरण भूषितः
वामे देव्या समायुक्तस्तदध्याय प्रसिद्धया
स सोमस्सोम एव स्यात् सोमास्कन्दविधिर्भवेत्

चतुर्भुजस्त्रिणेत्रश्च जटामकुट मण्डितः
सर्वाभरण संयुक्तो वरदाभयहस्तकः
कृष्णापरशुयुक्तोर्ध्व वामेतरकरान्वितः
असव्यसव्यकर्णस्थ पत्रिकानक्र कुण्डलः
सोपवीतः प्रसनात्मा शयिता सव्यपात्तलः
सालम्ब दक्षपादेन वामे गौर्या च संयुतः
देवोच्चदशभागैक भगेनाथ द्विभागतः
त्रिवेद भागैर्वा कुर्यात् स्कन्दं तन्मध्यमे गुरुः
द्विनेत्रस्सद्विबाहुश्च करण्टमकुटान्वितः
कर्णयोर्नक्रपिण्डौ च सर्वाभरण भूषितः
देव्यूरुसंस्थिता वापि निष्पंकजकरोऽथवा

चतुर्भुजस्त्रिणेत्रश्च जटामकुटमण्डितः
सर्वाभरण संयुक्तो वरदाभयहस्तकः
कृष्णा परशुयुक्तोर्ध्व वामेतर करान्वितः
असव्यसव्यकर्णस्थ पत्रिकानक्रकुण्डलः
सोपवीतः प्रसन्नात्मा शयिता सव्यपात्तलः
सालम्बदक्षपादेन वामे गौर्या च संयुतः
सर्वलक्षणसंयुक्तस्सर्वाभरणभूषितः
वामे देव्या समायुक्तस्तदध्याय प्रसिद्धया
ससोमस्सोम एव स्यात् सोमास्कन्दविधिर्भवेत्
देवोच्चदशभागैक भागेनाथद्विभागतः
त्रिवेदभागैर्वा कुर्यात् स्कन्दं तन्मध्यमेगुरुः
द्विनेत्रस्सद्विबाहुश्च करण्डमकुटान्वितः
द्विहस्त पङ्कजोवाथ नृत्तरूपयुतोऽथवा

चतुर्भुजास्त्रिणेश्च जटामकुटामण्डितः
सर्वाभरणसंयुक्तः वरदाभयहस्तकः
कृष्णापरशुयुक्तोर्ध्व वामेतरकरान्वितः
असव्यसव्यकर्णस्थ पत्रिका नक्रकुण्डलः
सोपवीतः प्रसनात्मा शयिता सव्यपात्तलः
सालम्बदक्षपादेन वामे गौर्याच संयुतः
देवोच्चदशभागैक भागेनाथ द्विभागतः
त्रिवेदभागैर्वा कुर्यात् स्कन्दं तन्मध्यमे गुरुः
द्विनेत्रस्सद्विबाहुश्च करण्डमकुटान्वितः
कर्णयोर्नक्र पिण्डौ च सर्वाभरण भूषितः
देव्यूरुसंस्थिता वापि निष्पङ्कजकरोऽथवा

चतुर्भुजास्त्रिणेत्रश्च जटामकुटमरिडतः
सर्वाभरणसंयुक्तः वरदाभयहस्तकः
कृष्णापरशुयुक्तोर्ध्व वामेतरकरान्वितः
असव्यसव्यकर्णस्थ पत्रिका नक्रकुराडलः
सोपवीतं प्रसन्नात्मा शयिता सव्यपात्तलः
सालम्बदक्षपादेन वामे गौर्या च संयुतः
सर्वलक्षणसंयुक्तः सर्वाभरण भूषितः
देवोच्चदशभागैक भागेनाथ द्विभागतः
त्रिवेदभागैर्वा कुर्यात् स्कन्दं तन्मध्ये गुरुः
द्विनेत्रस्सद्विबाहुश्च कररडमकुटान्वितः
कर्मयोर्नक्र पिराडौ च सर्वाभरण भूषितः
दक्षभाग करस्थाब्जः प्रसारितकरोऽपरः

अष्टचत्वारिंशत्तमे पटले चन्द्रशेखर स्थापन विधिः

इन्दुमौलि प्रतिष्ठां तु वक्ष्ये लक्षण पूर्विकाम्
आपाद्य च शिलादीनि तैः कुर्यात् प्रतिमां गुरुः १
चतुर्भुजस्त्रिणेत्रश्च समपात स्थानके स्थितः
वराभय समायुक्तः पूर्वस्थ कर पल्लवः २
वरदं वाम हस्ते स्यात् अभयं दक्षिणे करे
वरदं यदि तं कुर्यात् अथान्यः सिंहकर्णकः ३
ऊरुस्पृष्ठकरो वापि कटको वा विधीयते
मृगटङ्क करावन्यौ दोस्सीमान्तं व्यवस्थितौ ४
मृगटङ्कौ तु कर्णान्तौ कर्तरी सव्यवस्थिता
पराङ्मुखौ संमुखौ चा मृगटङ्कौ समीरितौ ५
दिङ्मात्रं कर्तरी बाहु मध्यमं परिकीर्तितम्
हिक्कायाः कर्तरी मध्यमेक त्रिंशद्थाङ्गुलम् ६

मणिबन्धक बाह्वोस्तु मध्यमं द्वादशाङ्गुलम्
श्रोण्यन्तात् कूर्परा दर्वागन्तरं पूर्वहस्तयोः ७
शरैर्वा कौशिकैर्वापि सार्धाङ्गुल हसैस्तु वा
स्तनान्तमभयान्तोच्चं नाभ्यूर्ध्वे पुष्करोदयः ८
नाभेरभय हस्तान्तं गुणाङ्गुलमिति स्मृतम्
स्तनान्ता दभयाग्रान्तं द्वादशाङ्गुलमिष्यते ९
कटकाधः प्रदेशं तु मेद्र मूल समं भवेत्
ऊरुमूले कटकान्तं स्पृष्तं वाथ गुणान्तरम् १०
सार्ध भाग द्वयेनाथ भागाभ्यां वाथ कल्पयेत्
ऊर्वादि मध्य मात्राणां जान्वोरप्यन्तरं क्रमात् ११
एकेनार्धेन सार्धाभ्यां त्रिभिश्च परिकल्पयेत्
अथवा जानुमध्यात्तु सार्धाङ्गुलमिति स्मृतम् १२
जङ्घयोर्मूल मध्याग्रं वेदभूतरसान्तकम्
अङ्गुष्ठेयोर्द्वयोर्मध्यं विद्येशङ्गुल मीरित्तम् १३
भागं पार्ष्णयन्तर प्रोक्तं ततसूत्राणि लम्बयेत्
तत्पार्ऽस्वयोस्त्रिसूत्राणि मुखकर्ण भुजावधि १४
पुरः पृष्ठे च मध्ये च नव तान्य वलम्बयेत्
प्रलम्बफलकामूध्नि स्थापयित्वा वलम्बयेत् १५
ललाट घ्राण हृन्नाभिमेढ्राङ्घ्रि युगमध्यमे
सूत्रं पुरस्थितं नासाकुच्चिस्पर्शं यथा भवेत् १६
मुखान्तपिप्पली कर्ण मूल चूचुकपात्तले
कर्ण कराठ स्तनानां तु बाह्ये श्रोणिस्पृगेव च १७
मुखान्मूलान्तरं नीत्वा दोस्स्पृश्यमपरं मतम्
एवं पार्श्वे त्रिसूत्राणि लम्बयेत् देशिकोत्तमः १८
कृकाटिकाककुत्कर्णस्फिक्पार्ष्णीनां तु मध्यमे
मस्तकाल्लम्बनीयं स्याद्यथा पृष्टककुद्गतम् १९

देहस्यान्तर्गतं मध्य सूत्रं स्यान्मुनिपुङ्गवाः
उष्णीष भूषणं कुर्यात् त्रिमात्रेण विशेषतः २०
पार्श्वयोः पुरतः पृष्ठे चतुष्पूरि समन्वितम्
मध्ये मकरकूटं स्यात् सप्तकोटर संयुतम् २१
पार्ऽस्वयोः पत्रकूटं स्यात् पृष्टे स्याद्रत्न कूटकम्
अग्रे दशांगुलं तस्य मूले तु मुखविस्तरम् २२
तत्तत् त्रिगुण नाहं तु वामेऽवामेर्ध चन्द्रकम्
वामे महाफणिं तस्य सर्वालंकार भूषितम् २३
जटाभिः पञ्चभिः ग्रन्थिं त्रिमात्रेण विशेषतः
एकधा तु त्रिधावृत्या शेषाभिः पार्श्वलम्बनम् २४
जटामकुटमेतद्धि सर्वालङ्कार मीरितम्
रत्न पत्रिकया वापि शङ्ख पत्रिकयापि वा २५
पद्म पत्रिकया वापि शोभितं वामकर्णकम्
सव्यं मकर सिंहाख्य पत्र कुराडलकैर्युतम् २६
पृष्टः कर्णपर्यन्तं केशावर्ति विलम्बनम्
पार्श्वयोबागुमूलान्त जटाग्राणां विलम्बनम् २७
हारयुग्रीव संयुक्तं तथा कर्णिकयान्वितम्
वक्षस्थलं प्रकर्तव्यं भुजाः केयूर संयुताः २८
सुपत्र वलयोपेतास्सर्व रत्नोपशोभिताः
मुक्ता दाम विलम्बाश्च तदग्रे मणिभूषणम् २९
कराग्रं कटको पेत मङ्गुल्यो मुद्रिकान्विताः
छन्नवीरोत्तरीयोपवीतैस्सोदर बन्धनः ३०
समस्त रन्त पाशाढ्य कृत्रिमानन दमाभिः
संयुक्तकटिसूत्रोऽन्तः पादजालक संयुतः ३१
चन्द्रशेखर एवं स्यात् देव्या च सहितो न वा
सापीठ भिन्नपीठा वा देवेनालिङ्गिताथवा ३२

तयालिङ्गित देवो वा अन्योन्या लिंगितस्तु वा
आलिंगन युतो वा स्यान्निराभङ्गोऽथवा मत्रः ३३
एवं लक्षणमाख्यातं प्रतिष्ठाद्यं निगद्यते
कालोऽपि प्राग्वदुद्दिष्ट स्तद्वदेवाङ्कुरार्पणम् ३४
रत्नन्यासं दृशा मोक्षं बेरशुद्धिं प्रदक्षिणम्
जलाधिवासनं पश्चात् मण्डपं पूर्ववन्नयेत् ३५
कुण्डानि परितः कुर्यान्नवपञ्चैक संख्यया
तद्दिगस्त्राणि वृत्तानि कुण्डान्यश्राणि वा नयेत् ३६
विप्रान् संभोजयेत्पश्चात् पुण्याहं वाचयेत्ततः
समरीचपदे वास्तु होमः कार्यो द्विजोत्तमाः ३७
पुण्याहं वाचयित्वा तु शय्यायाः कल्पनं नयेत्
स्नपनं कौतुकं शय्यारोहणं पृथगाचरेत् ३८
ततः कुंभं शिरोदेशे वर्धनी च तदुत्तरे
लक्षणोदित रूपं च स्मरन्नभ्यर्चयेत्तयोः ३९
परितोऽष्टौ घटान्नयस्य विद्येशाधिष्ठिता न्यसेत्
न्यस्यैव तत्वमूर्त्यादीन् प्राग्वद्धोमं समाचरेत् ४०
कृत्वा कुण्डानि संस्कारं समिदाज्यान्नकैस्तिलैः
लाजसस्येन्द्रकैश्चैव वटोदुंबर संज्ञकौ ४१
अश्वत्थक पलाशौ च दिक्ष्वेवं समिधो मताः
शम्यपामार्ग श्रीवृक्ष मायूरा वह्निकोणतः ४२
प्रयेकं पूर्ववत् हुत्वा पूर्णान्ते देशिकोत्तमः
प्रभाते देवकुंभाग्नीन् अभ्यर्च्य गुरुरादरात् ४३
वस्त्रहेमाङ्गुलीयाद्यैर्मूर्तिपाद्यै स्समन्वितः
संप्राप्त दक्षिणः प्राग्वत् मन्त्रन्यासं समाचरेत् ४४
प्रतिमाग्रे घटान्नयस्य कुंभाद्बीजं तु विन्यसेत्
देवस्य हृदि तत्पीठे वर्धन्यास्तु मनुं न्यसेत् ४५

सहजा चेत्तदादेवी तस्यास्तु हृदि विन्यसेत्
अन्येभ्यो विन्यसेद्बीजं पीठस्य परितस्ततः ४६
विभिन्न पीठा देवी चेत् पृथङ्मण्डप माचरेत्
कल्याणं कारयेदन्ते स्नपनं चोत्सत्वं तथा ४७
कारयेद्भूरि नैवेद्यं दापयेत्तु नवा गुरुः
अत्रानुक्तं तु संग्राह्यं सामान्यस्थापनोदितम् ४८
चन्द्रमौलि प्रतिष्ठां तु कुर्यादेवं हि यो नरः
बब्ध्वेह सर्व कामांस्तु स चान्ते मोक्षमाप्नुयात् ४९
इति उत्तर कामिकाख्ये महातन्त्रे चन्द्रशेखर स्थापन विधिः
अष्टचत्वारिंशत्तमः पटलः

चतुर्भुजस्त्रिणेश्च समपात् स्थानकेस्थितः
वराभय समायुक्तः पूर्वस्थ करुपल्लवः
ऊरुपृष्टकरो वापि कटको वा विधीयते
मृगटङ्करावन्यौ दोस्सीमान्तं व्यवस्थितौ
मृगटङ्कौतु कर्णान्तौ कर्तरी संव्यवस्थिता
पराङ्मुखौ संमुखौ वा मृगटंकौ समीरितौ
तत्तत्रिगुणनाहं तु वामेऽवामेऽर्ध चन्द्रकम्
रत्नपत्रिकया वापि शङ्ख पत्रिकयाऽपिवा
हारयुग्रीवसंयुक्तं तथा कर्णिकयान्तितम्
वक्षस्थलं प्रकर्तव्यं भुजाः कर्णिकयान्तिकम्
वक्षस्थलं प्रकर्तव्यं भुजाः केयुर संयुताः
सुपत्रवलयोपेतः सर्वरत्नोपशोभिताः
छन्नवीरोत्तरीयोपवीतैस्सोदर बन्धनः
चतुर्भुजस्त्रिणेत्रश्च समपात स्थानकेस्थितः
वराभय समायुक्तः पूर्वस्य करपल्लवः

वरदं वाम हस्तस्यात् अभयं दक्षिणे करे
मृगटङ्ककरावन्यौ दोस्सीमान्तं व्यवस्थितौ
मृगटङ्कौतु कर्णान्तौ कर्तरी संव्यवस्थितौ
पराङ्मुखौ संमुखौ वा मृगटंकौ समीरितौ
तत्तत्रिगुणनाहं तु वामेऽवामेऽर्ध चन्द्रकम्
रत्नपत्रिकया वापि शङ्ख पत्रिकयाऽपि वा
हारयुग्रीव संयुक्तं तथा कर्णिकयान्वितम्
वक्षस्थलं प्रकर्तव्यं भुजाः केयूर संयुताः
सुपत्रवलयोपेतः सर्वरत्नोपशोभिताः
छन्नवीरोत्तरीयोपवीतैस्सोदर बन्धनः
चन्द्रशेखर एवं स्याद्देव्या च सहितो न वा
चतुर्भुजास्त्रिणेत्रश्च समपात् स्थानकेस्थितः
वराभय समायुक्तः पूर्वस्थकरपल्लवः
मृगटङ्ककरावन्यौ दोस्सीमान्तं व्यवस्थितौ
मृगटङ्कौतु कर्णान्तौ कर्तरी संव्यवस्थितौ
पराङ्मुखौ संमुखौ वा मृगटंकौ समीरितौ
तत्तत्रिगुणनाहं तु वामेऽवामेऽर्ध चन्द्रकम्
रत्नपत्रिकया वापि शङ्खपत्रिकयाऽपिवा
हारयुग्ग्रीव संयुक्तं तथाकर्णिकयान्वितम्
वक्षस्थलं प्रकर्तव्यं भुजाः केयूर संयुताः
सुपत्रवलयोपेतः सर्वरत्नोपशोभितः
छन्नवीरोत्तरीयोपवीतैस्सोदर बन्धनः
सापीहभिन्नपीठा वा देवेनालिङ्गताथवा

एकोनपञ्चाशत्तमे पटले पुरारि स्थापन विधिः

पुरारिस्थापनं वक्ष्ये तदादौलक्षणञ्च वै

चतुर्भुजस्त्रिणेत्रश्च जटामकुटसंयुतः १
समभागयुतस्सम्यक् स्थापकेन समन्वितः
सव्यकर्णस्थमकरकुण्डलेन समन्वितः २
कृष्णापरशुसंयुक्त परहस्तद्वयान्वितः
धनुर्बाणयुतोपेत वामेतरकरान्वितः ३
दोस्सीमं परहस्तोच्चं शरस्तं मेढ्रसीमकः
नाभेस्तुमणिबन्धान्तं मात्रमेकोनविंशतिः ४
पार्श्वमध्यमबाह्वोश्च मध्यमन्तु शरांगुलम्
दोर्मूलात्परहस्तान्तं षोडशांगुल ईरितः ५
परहस्तोच्छ्रितोवाथ द्विहस्तस्त्रिपुरान्तकः
शिरसोवामदृक् कृष्ण मण्डलस्य च दक्षिणे ६
सूत्रन्तुलंबमयेद्वामे वामनासा पुटस्यतु
दक्षिणस्थितपादे च पुरस्तान्मुनि पुंगवाः ७
हृन्नाभिमेढ्रसव्यांघ्रि जानूनां सूत्रतोन्तरम्
सव्येग्निभागा देवं स्यात् सम भागे स्थिराननतिः ८
तत् पादांगुष्ठपार्ष्णयोश्च द्व्यन्तरं दश भागिकम्
कुर्यात् सलक्षणां वाथ वामभागे तु पार्वतीम् ९
एवं कृत्वा पुरारिन्तु प्रतिष्ठा कारयेत्ततः
सुमुहूर्ते सुलग्ने च कृत्त्वैवांकुर कर्म च १०
रत्नन्यासं दृशांमोक्षं बेरशुद्धिं प्रदक्षिणम्
तोयाधिवासनं पश्चात् स्नपनं कोतुकं नयेत् ११
मण्डपे स्थण्डिलं कृत्वा नवपञ्चैक संख्यया
कुण्डाण्यश्राणि वृत्तानि तद्दिगश्राणि तानि वा १२
संकल्प्य शयनं तस्मात् आरोप्य च महेश्वरम्
देवेशस्य शिरोदेशे शिवकुंभं च वर्धनीम् १३
लक्षणोक्तञ्चरुपन्तु ध्यात्वा तत्रैव पूजयेत्

अभितोष्टघटान्यस्वा विद्येशांस्तत्र पूजयेत् १४
गन्धाद्यैरपि नैवेद्य पर्यन्तैभावितो गुरुः
तत्वमूर्त्यादि विन्यासं कृत्वाहोमं समाचरेत् १५
संस्कृत्य कुण्डंवह्निञ्च समिदाज्यान्नकैस्तिलैः
पलाशोदुंबराश्वत्थ वटाः प्रागादि दिक्षु च १६
शम्यपामार्गश्रीवृक्ष मायुरावह्निकोणतः
प्रधानस्य पलाशस्यात् स च सर्वत्र वामतः १७
प्रत्येकं पूर्ववत् हुत्वा पूर्णाहुत्यन्तमेव च
ततो द्वितीय दिवसे देवकुंभाग्नितर्पणम् १८
पूहितोमूर्तिपैस्सार्धं प्राप्तपूर्वोक्तदक्षिणम्
सुमुहूर्ते ततः प्राप्ते मनुन्यासं समाचरेत् १९
कुंभात् बीजं समादाय शिवस्य हृदि विन्यसेत्
वर्धन्याबीजमादाय तत् पीठे विन्यसेत् गुरुः २०
सहासनातु देवी चेत् तस्यास्तु हृदिविन्यसेत्
विभिन्नपीठा चेत्तस्याः पृथक् मण्डपमाचरेत् २१
कल्याणं कारयेत् पश्चात् तदन्ते स्नपनं नयेत्
उत्सवं भूरिनैवेद्यं कारयेद्वा न वा गुरुः २२
अनुक्तमत्र यत् ग्राह्यं सामान्य स्थापनोक्तवत्
प्रतिष्ठैवं समाख्याता पुरारेरिष्टदायिनी २३
इत्थं कारितवान्यस्तु प्रतिष्ठां भक्ति पूर्वकम्
सोनेक भोगान् भुक्त्वेह यायादन्ते शिवं पदम् २४

इति उत्तरकामिकाख्ये महातन्त्रे पुरारिस्थापन विधिः
एकोनपञ्चाशत्तमः पटलः

चतुर्भुजस्त्रिनेत्रश्च जटामकुट संयुतः
सम भङ्गयुतस्सम्यक् स्थानकेन समन्वितः

सव्यकर्णस्थमकर कुण्डलेन समन्वितः
किष्णापरशु संयुक्त परहस्त द्वयान्वितः
धनुर्बाणयुतोपेत वामेतर करान्वितः
देस्सीम परहस्तोच्चं शरास्तन्मेद्र सीमकम्
कुर्यात् सलक्षणां वाथ वामभागे तु पार्वतीम्
एवं कृत्वा पुरारीं तु प्रतिष्ठां कारयेत्ततः

पञ्चाशत्तमे पटले लिंगोद्भव विधिः

लिंगोद्भवस्य देवस्य प्रतिष्ठाद्यं निगद्यते
गर्भमानवशाल्लिंगं प्राग्वत् सम्यक् प्रकल्पयेत् १
लिंगोच्चे वेदपञ्चर्तु सप्तांशे शमधस्त्यजेत्
तत्समं वा तदर्धं वा त्यक्त्वा चोर्ध्वे तदन्तरे २
पूर्ववत् कारयेत् सम्यक् चन्द्रशेखरमूर्तिनम्
लिंगाधो शर्वजान्वन्त भागन्नेंद्रिय गोचरम् ३
लिंगोर्ध्वोधः प्रदेशेतु हंससूकरमाचरेत्
बिंबस्यानन मानेन कारयेत् हंसमादरात् ४
बिंबाद्विमिखमानेन भूकृष्टास्यं तु सूकरम्
तल्लिंगरसभागैक द्वित्रिवेदशरैर्नयेत् ५
व्रह्मविष्णू द्विपार्श्वस्थौ नतौ तस्यानुकूलकौ
तिर्यग्गत सुपादौ तौ सर्वावयवसुन्दरौ ६
लिंगोद्भूतस्त्विति ख्यातो ब्रह्मविष्णवभिनन्दितः
ब्रह्मविष्णूविहीनो वा हंस सूकर संयुतः ७
इत्थं लक्षणमादिष्टं प्रतिष्ठां विधिरुच्यते
कालश्च पूर्ववत् ग्राह्यः तद्वदेवांकुरार्पणम् ८
पश्चान्मण्टपनिर्माणं कृत्वातत्रैव कल्पयेत्
कुण्दानि परितोश्राणि नव पञ्चैक संख्यया ९

दिगश्रान्यथवृत्तानि रत्नन्यासोत्रनास्ति हि
नयनोन्मीलनं पश्चात् बेरशुद्धिमनन्तरम्  १०
प्रदक्षिणं पुरादीनां जलेचैवाधिवासनम्
भूषणं मण्डपस्यैव वास्तुहोममतः परम्  ११
भूपरिग्रहमादौ वा पूर्ववत् कारयेत् बुधः
वेद्यूर्ध्वे स्थण्डिलं कृत्वा शयनं कल्पयेत्ततः  १२
जलादुद्धार्यदेवन्तु प्रतिमां शोधयेत्ततः
कृत्वा कौतुक बन्धन्तु शाययेच्छयनोपरि  १३
नयनोन्मीलनाद्यं तु ब्रह्मविष्णवोस्तु कल्पयेत्
ब्रह्माणं दक्षिणे चैव विष्णुं वामे तु शाययेत्  १४
वस्त्रैश्चैवतु संवेष्ट्य गंधाद्यैरर्चयेत्ततः
प्रधानकुंभं तेषां तु शिरो भागे तु विन्यसेत्  १५
वर्धनीं विन्यसेत् धीमान् शिवकुंभस्य चोत्तरे
अभितश्चघटानष्टौ न्यस्यविद्येश्वरात्मकान्  १६
लक्षणोदित रूपन्तु ध्यायेत् स्वहृदिदेशिकः
रूपसंस्थान भावैस्तु पूजयित्वा यथाविधि  १७
देवस्य ब्रह्मणो विष्णोस्तत्वमूर्त्यादिकं न्यसेत्
प्राग्वत् देवस्य तत्वाद्याः कविष्णोस्तु यथोदितम्  १८
ततो होमं प्रकुर्वीत मूर्तिपैस्सहदेशिकः
समिदन्नाज्यलाजैश्च तिलसर्षपवैणवैः  १९
पलाशोदुंबराश्वत्थ प्लक्षाः पूर्वादि दिक्षु च
शम्यपामार्गश्रीवृक्ष मायूरावह्नि कोणतः  २०
प्रधानस्य पलाशस्तु स च सर्वत्रवामतः
द्रव्यैरेभिः क्रमात् हुत्वा ब्रह्माणं विष्णुमेव च  २१
गुरुः प्रधानकुण्डेतु तर्पयेत् समिधादिभिः
रात्रिशेषं व्यपोह्याथ प्रभाते विमले ततः  २२

देशिकस्सुविशुद्धात्मा मूर्तिपैस्सह तत्ववित्
बिंबानुद्धृत्य संपूज्य कुभान् कुराडेषु पावकान् २३
देशिकादींश्च संपूज्य दत्तिणां दापयेत्ततः
मुहूर्तनाडिकापूर्वे मन्त्रन्यासं समाचरेत्
वेद्याः कुंभान् समुद्धृत्य तदग्रेस्थरिडले न्यसेत् २४
कुंभात् बीजं समादाय देवस्य हृदि विन्यसेत्
वर्धन्याबीजमादाय पाददेशोभिषेचयेत् २५
विद्येशेभ्यस्तहान्यस्य तज्जलैस्नापयेत् प्रभुम्
ब्रह्मविष्णवोस्स्वबीजन्तु तद्वन्नयस्याभिषेचयेत् २६
स्नपनं पूजनं कुर्यात् अन्तेचोत्सव संयुतम्
बिंबान् संस्थापयेत् पश्चात् ब्रह्माणन्दत्तिणे गुरुः २७
वाम भागे तु देवस्य विष्णुं संस्थापयेत् गुरुः
अनुक्तमत्र सामान्य प्रतिमास्थापनोक्तवत् २८
लिंगोद्भव प्रतिष्ठान्तु कुर्यादेवं हि योनरः
इहैव धनवान् धीमान् सोन्ते सायुज्यमाप्नुयात् २९
इति उत्तरकामिकाख्ये महातन्त्रे लिंगोद्भवप्रतिष्ठा विधिः
पञ्चाशत्तमः पटलः

गर्भमानवशाल्लिंगं प्राग्वत् सम्यक् प्रकल्पयेत्
लिङ्गोच्चेवेदपञ्चर्तु सप्तांशेऽशमधस्त्यज्ते
पूर्ववत् कारयेत् सम्यक् चन्द्रशेखरमूर्तिनम्
लिङ्गाधो शर्वजान्वन्त भागं नेन्द्रियगोचरम्
लिङ्गोर्ध्वाधः प्रदेशेतु हंसं सूकरमाचरेत्
बिंबस्याननमानेन कारयेद्धंसमादरात्
बिंबद्विमुखमानेन भूकृष्टास्यंतु सूकरम्
ब्रह्मविष्णूद्विपार्श्वस्थौ नतौतस्यानुकूलकौ

## एकपञ्चाशत्तमे पटले दक्षिणामूर्ति स्थापन विधिः

स्थापनं दक्षिणेशस्य शृणुध्वं विप्रसत्तमाः
व्याक्यान गेय योगेषु निष्ठस्य त्रिविधस्य च १
व्याख्यायुक्ज्ञानमुद्रातो गेयी वीणा समन्वितः
द्वाभ्यां विरहितो योगी स नानाकार भेदतः २
चतुर्भुजस्त्रिणेत्रस्तु कुन्देन्दु धवलप्रभः
श्वेतविद्रुमहेमाभश्श्यामाभो वा प्रकीर्तिताः ३
व्याघ्रचर्माम्बरो वापि दिव्याम्बरधरस्तु वा
उत्तरीय समोपेतः शुक्ल यज्ञोपवीतकः ४
विकीर्ण मूर्धजोवापि जटामकुट एव वा
पट्टिकाबन्धनो वापि सत्करोटिकयायुतः ५
धूर्तूरारग्वधैर्नाग पत्रैश्चन्द्रेण मण्डितः
पञ्चमुद्रासमोपेतो गंगा किंकिणि संयुतः ६
अधस्ताद्वटवृक्षस्य शैलादूर्ध्वं श्रितः पुनः
व्याघ्रचर्मोपरिष्टात्तु स्थितो वीरासनोऽथवा ७
लम्बितं दक्षिणं पादं तज्ञानूपरि संस्थितम्
वामांघ्रिनालकं कुर्यात् सव्यहस्तन्तुमुद्रया ८
सन्दर्शसंज्ञयोपेता वामहस्तस्थ पुस्तकः
द्वात्रिंन्नृत्तमात्रान्तं दैर्घ्यं स्यात् सतु पुस्तकः ९
अथवा नागसंयुक्तो वामहस्तस्समीरितः
वरदन्तं विजानीयाज्ञानुस्थ मणिबन्धकम् १०
दण्डहस्तो यदा स स्यात् प्रकोष्ठज्ञानुसंस्थितम्
विकसत् पद्मसंकाशः अधस्ताद्विस्तृतांगुलिः ११
परहस्तद्वये चाक्ष माला ज्वाला समन्वितः
पद्मं वा चोत्पलं वापि व्यालं वा मेतु कल्पयेत् १२
कटकौतौ प्रकर्तव्यौ प्रसन्नसमलोचनः

नासाग्रदृष्टियुक् वामहस्तो वा स्यात्सुपुस्तकः १३
आभंगसहितं कुर्याद्देहमध्ये तु वामतः
सूत्रं वामे च हृदयं नाभेर्मेढ्रात् क्रमेण तु १४
मात्रंकालञ्च भागञ्च त्यक्त्वातिष्ठति मध्यतः
लंबपादस्थितं मध्य सूत्रादर्धांगुलान्तरे १५
अर्द्धार्धांगुल वृद्ध्या तु यावत् सार्द्धयवं भवेत्
सदशांगुष्ठ मूलोच्च स्तनाग्रावधिरेव तु १६
नयने मध्यमं विद्यात् अंगुष्ठस्तनयोस्ततः
नाभेस्तु मणिबन्धान्तः धृत्यंगुलमुदाहृतः १७
सपुस्तकस्य हस्तस्य चोरूर्ध्वात् भागमन्तरम्
नाभेस्तुमणिबन्धान्तं सस्यादेकोनविंशतिः १८
दोर्मध्यात् पार्श्वमध्याच्च द्व्यन्तरस्स्याद्रसांगुलम्
परस्यमणिबन्धाच्च भुजमध्याद्भवांगुलम् १९
द्व्यन्तरं दशमात्रं स्यात् दोर्मूलान्मध्यमांगुलात्
हिक्कासूत्र द्विमात्राथ कटकाग्र समुच्छ्र्या २०
सजटामकुटादेव चूचुकास्य गलान्तकाः
ततत् कलासमोपेता श्शुक्ल यज्ञोपवीतिनः २१
शुक्लाद्यंबर संयुक्ताः भस्मरुद्राक्षसंयुताः
कौशिकः काश्यपश्श्याम इतरः पीत वर्णकः २२
रक्तवर्णो भरद्वाजो धूम्राभावत्रिगौतमौ
एषामेकद्वयं वापि त्रयं वा पार्श्वयोर्न्यसेत् २३
व्याख्यानमूर्तिरेवं स्यात् गेयमूर्तिस्ततोमतः
ऊर्ध्वाद्वोमध्य कटकौ सव्यासव्यकरावुभौ २४
वीणातु दक्षिणेवाग्रे दक्षिणेकटकास्थितः
दक्षिणेकटकञ्चोरू स्थितायां विनिवेशयेत् २५
कोलकञ्चोरुबाह्येतु तन्मूलं कटकोर्ध्वतः

भागमग्रन्तदावामो भागाधिक चतुर्मुखः २६
विस्तारस्तुकलास्तस्याः परिणाहन्तु पूर्ववत्
कलावक्रास्य विस्तारा यामं वापि षडंगुलम् २७
तत्तुंगन्तु तदर्धं स्यात् एवं ज्ञात्वा समाचरेत्
हस्तस्यमणिबन्धान्तं हिक्कासूत्रादितः क्रमात् २८
त्रिंशदंगुलमित्युक्तमथान्यमणिबन्धतः
आनाभेरन्तरंनालं शेषं सर्वन्तु पूर्ववत् २९
व्याख्यान सहित स्त्वेवं सन्दर्शस्य समास्ययुक्
तत्राक्षिपात येगेन सदाकुञ्चित लोचनः ३०
प्रसृतोवामहस्तः स्यात् योगमूर्तिरयम्मतः
अथकुञ्चितवामांघ्रि युग्मस्फिग्गतपार्ष्णिकः ३१
उद्धृतन्तस्य जान्वग्र दण्डकोर्पर कान्तयुक्
संदर्शदृष्टिपातश्च आभंगञ्चैव पूर्ववत् ३२
नानामृगैस्तु संकीर्णं नाना व्यालैस्तु संयुतः
नानामुनिगणैस्सार्धं सिद्धविद्या धरैरपि ३३
भूतैश्चकिन्नरैरन्यैः पुष्पवृक्षैश्च मण्डितम्
शैलंकुर्यात्तुतत्पार्श्वे वटवृक्षस्तु शाद्वलः ३४
फलशाखोप शाखाढ्यो नानापक्षिसमायुतः
तन्मूले दक्षिणे छाया निषण्णः कृपयायुतः ३५
रत्नोपशोभिते पीठे व्याघ्रचर्मोत्तरच्छदे
आसीनोमुनिभिः सम्यक् कौशिकादिभिरादरात् ३६
शिवद्विजकुलस्यादि भूतैस्तु परितस्थितैः
आगमाहित चेतोभिः परमेशेन दीक्षितैः ३७
एवन्तु दक्षिणामूर्तेः मूर्तिभेदा उदाहृताः
व्याख्यायुक् ज्ञानतः प्रोक्तो गेययुक् भुक्तिदोमतः ३८
सयोगोमुक्तिदोज्ञेयः इति ज्ञात्वा समाचरेत्

आसीनो वा स्थितो वापि ऋषिभिः स्संवृतो न वा ३९
वटवृक्ष विहीनो वा भूताद्यावृत एव वा
भूतस्थलंब वा दक्षिणेशस्समीरितः ४०
एवं लक्षणमादिष्टं प्रतिष्ठाविधिरुच्यते
वाराद्यं पूर्ववत् ग्राह्यमंकुरार्पणमेव च ४१
मण्डपं पूर्ववत् कुर्यात् नवपञ्चैक सख्यया
कुण्डानि परितो श्राणि तद्दिगश्राणि वा भवेत् ४२
रत्नन्यासाक्षि मोक्षौ च प्रतिमाशोधनं तथा
ग्रामप्रदक्षिणञ्चैव जले चैवाधिवासनम् ४३
पुण्याहप्रोक्षणञ्चैव पश्चात् ब्राह्मण भोजनम्
पुण्याहं वास्तु होमञ्च भूपरिग्रहमेव वा ४४
कृत्वातु देव देवस्य ऋषीणां च यथार्हकम्
वेद्यूर्ध्वेस्थण्डिलं कृत्वा शयनं कल्पयेत् पृथक् ४५
स्नानवेद्यान्तु ऋषिभिः स्नपनं कारयेत् शिवे
शय्यायां शाययेद्देवं कौशिकादि ऋषीनथ ४६
दक्षिणे तु भरद्वाज प्रमुखानप्य दक्षिणे
शाययेद्वस्त्रकूर्चादि भूषितांस्तान् पृथक् पृथक् ४७
व्याख्यान गेय योगाना मेतत् सामान्यमीरितम्
स्वांस्तुकुंभान् शिरोदेशे न्यसेद्वस्त्रादि भूषितान् ४८
वर्धनीं विन्यसेत् धीमान् शिवकुंभस्य चोत्तरे
अभितोवसुकुंभांस्तु विद्येशाधिष्ठितान्नयसेत् ४९
रूपसंस्थान भावैस्तु पूजयित्वा यथाक्रमम्
तत्वमूर्त्यादि विन्यासं कृत्वा होमं समाचरेत् ५०
तत्वाद्याः पूर्ववद्दत्वा मुनिष्वपि यथोदितम्
कृत्वाग्निकुण्डसंस्कार मुत्पाद्यशिवपावकम् ५१
समिदाज्यचरून् लाज तिलसर्षपवैणवान्

जुहुयात्तु महाशासु प्रधानेपि पलाशकम्  ५२
बैल्वाः कोरोषु होतव्याः प्रधानेतर्पयेत् ऋृषीन्
द्रव्यैरेभिः क्रमात् हुत्वा पूर्णाहुत्यवसानकम्  ५३
रात्रिशेषं व्यपोह्यैवं प्रभाते विमले ततः
समूर्तिपैर्गुरुःस्नातः कृतमन्त्राधिविग्रहः  ५४
संपूज्योद्धत्य बिंबांश्च कुंभान् कुराडेषु पावकान्
देशिकार्दीश्च संपूज्य दक्षिणां दापयेत् पृथक्  ५५
मुहूर्तेनाडिकापूर्वे मन्त्रन्यासं समारभेत्
कुंभान् बिंबपुरोन्यस्य स्थरिडले पूर्ववत् कृते  ५६
कुंभात् बीजं समादाय शिवस्य हृदि विन्यसेत्
वर्धन्याबीजमादाय तस्यपीठे तु विन्यसेत्  ५७
विद्येशानान्तु बीजानि पीठे शक्रादितो न्यसेत्
तत्तत् कुंभ जलैश्चैव तत्तद्देशोभिषेचयेत्  ५८
ऋृषीणामपि बीजानि तेषान्तु हृदि विन्यसेत्
तत्तत् कुंभादकैश्चैव तेषां च स्नपनन्नयेत्  ५९
श्रीकराठमुनिहस्तस्थ पुस्तकेष्वखिलागमम्
विन्यसेत् कामिकाद्यन्तु सोपभेदं गुरुत्तमः  ६०
देवेशं स्थापयेत् पश्चात् ऋृषींस्तद्दक्षवामयोः
स्नपनं चोत्सवं भूरि नैवेद्यं कारयेन्नवा  ६१
अनुक्तमत्रसामान्य स्थापनोक्तवदाचरेत्
एवं यो दक्षिणामूर्तेः स्थापनं कुरुते नरः  ६२
सोऽखिलानिह भुक्त्वाऽथ भोगान् स्वात्माभिवाञ्छिता
देहान्ते परमेशानं कर्ता यायादसंशयः  ६३

इति उत्तरकामिखे महातन्त्रे दक्षिणामूर्तिस्थापन
विधिरेकपञ्चाशत्तमः पटलः

व्याख्यानसहितस्त्वेवं सन्दर्शस्य समास्ययुक्
तत्राक्षिपातयोगेन सदाकुञ्चितलोचनः
प्रसृतोवाम हस्तस्स्या द्योगमूर्तिरयंमतः
अथकुंचितवामांघ्रियुगस्फिग्गतपार्ष्णिकः
उद्धृतं तस्य जान्वग्र दण्डकोर्परकान्तयुक्
संदर्श दृष्टिपातश्च आभङ्गं चैव पूर्ववत्

चतुर्भुजस्त्रिणेत्रश्च कुन्देधवलप्रभुः
श्वेतविद्रुमहेमाभः श्यामाभोवाप्रकीर्तितः
व्याघ्रचमाम्बरो वाऽपि दिव्याम्बर धरस्तुवा
उत्तरीय समोपेतः शुक्लयज्ञोपवीतकः
विकीर्णमूर्धजो वाऽपि जटामकुट एव वा
पट्टिकाबन्धनो वाऽपि सत्करोटि कयायुतः
धुत्तूरारग्वधैर्नागपत्रैश्चन्द्रेण मण्डितः
पञ्चमुद्रा समोपेतो गङ्गाकिङ्किणि संयुतः
अधस्ताद्वटवृक्षस्य शैलादूर्ध्वश्रितः पुनः
व्याघ्रचर्मोपरिष्टात्तु स्थितो वीरासनोऽथवा
लम्बिदं दक्षिणं पादं तज्जानूपरि संस्थितम्
वामांघ्रिनालकं कुर्यात्सव्यहस्तं तु मुद्रयां
संदर्श संज्ञयोपेतं वामहस्तस्थ पुस्तकः
अथवा नागसंयुक्तो वामहस्तस्समीरितः
परहतद्वये चाक्षमाला जालसमन्वितः
व्याख्यानमूर्तिरेवं स्यात् गेयमूर्तिस्ततोमतः

ऊर्ध्वा मध्य कटको सव्यासव्यकरावुभौ
वीणातु दक्षिणे वाग्रे दक्षिणे कटकस्थीः

दक्षिणे कटकं चोरुस्थितायां विनिवेशयेत्
कोलकं चोरुबाह्ये तु तन्मूलं कटकोर्ध्वतः

द्विपञ्चाशत्तमे पटले भिक्षाटन प्रतिष्ठाविधिः

भिक्षाटनस्य वक्ष्येहं कंकालस्यापि लक्षणम्
प्रतिष्ठातु द्विजश्रेष्ठाश्शृणुध्वं द्विजसत्तमाः १
पादे पादकसंयुक्तं चतुर्दोर्भिस्समन्वितम्
स यज्ञसूत्रं शान्तं च गमनोन्मुखमीश्वरम् २
आबद्धक्षुरिकं सौम्यं कपर्द मकुटोज्वलम्
क्षौमांबरं सितं कुर्यात् सुन्दरं तं विभूषणम् ३
स शंख पत्रिका वामे दक्षिणे नक्रकुण्डलम्
दक्षिणं कुञ्चितं पादं वामपादन्तु सुस्थितम् ४
समभंगयुतं वापि कान्तियुक्त निजांगकम्
प्रहारं दक्षिणे हस्ते ढक्कां वामे तु पूर्वयोः ५
सव्यमध्यांगुलाग्रन्तु कृष्णाजिह्वाग्रगं भवेत्
वामकरेऽपरेपिञ्च दण्डकं काल दण्डकम् ६
उभयोर्दण्डयोर्मूलं स्कन्धमूलोपरिस्थितम्
नानागणसमायुक्तं नानाभूतसमाकुलम् ७
असव्ये भूतमूर्धस्थ बलिपात्रेण संयुतम्
नानारूपधरैर्भूतैः अनेकैः परिवारितम् ८
भेरिका काहलाद्याढ्यैः गाननृत्तरवाकुलैः
योषितश्चानवद्याङ्गा मत्प्रेक्षावश्य मोहिताः ९
स्रस्तभूषणवस्त्राद्याः बलिदान समुन्मुखाः
आशीर्वादान्विताः काश्चित्काश्चिदालिंगनोन्मुखाः १०
मूर्ध्नस्सूत्रं ललाटस्य मध्यं नीत्वांगुलं नयेत्
सव्यनासापुटाग्रात्तु स्थिताङ्घ्र्यङ्गुष्ठमूलतः ११

दक्षिणेऽष्टयवं हित्वा हृदयाद्दक्षिणेत्रिकम्
नाभेर्मेढ्रात्तु वामे तु भागं सप्तांगुलं भवेत्  १२
पादांगुष्ठद्वयोर्मध्यं स्मृतिमात्रमुदाहृतम्
पार्ष्णियोश्च मुनिमात्रंस्स्याज्ञान्वोर्मध्यं मुखेन तु  १३
सार्धविश्वांगुलैर्वाऽथ तयोरन्तर मिष्यते
प्रहार हस्तेयोवक्रः कटकोनाभिसीमकः  १४
नाभेस्तन्मणिबन्धातो भाग-इत्यभिधीयते
पार्श्वमध्यमबाह्योश्च मध्यमं भूतमात्रकम्  १५
हरिणयास्यगतोहस्त ऊरुमध्यसमो भवेत्
ऊरुमध्याच्च तस्याग्रं एकविंशति मात्रकम्  १६
अधोमुखस्सकटक स्मृतिर्वाग्र समन्वितः
पार्श्वमध्यमबाह्योश्च मध्यं पाताल मात्रकम्  १७
कंकालपिंचधृग्घस्तः कक्षतुल्योच्छ्रयो भवेत्
भुजान्ता मणिबन्धाता द्व्ययन्तरं षोडशांगुलम्  १८
अर्कमात्रं तु वा प्रोक्तं पिञ्च दण्डस्तु हस्ततः
तत्समं पिञ्छदैर्घ्यं स्यात् देवनासाग्रमात्रकम्  १९
कंकालदण्डमानन्तु देवस्याधो गलान्तकम्
दंडाग्रेकारयेत् धीमान् कंकालं हि मुनीश्वराः  २०
योषितोदेव कन्याः स्युः स्तननाभ्यन्तसीमकाः
भूतरूपाणि सर्वाणि त्रिमुखेनेच्छया तथा  २१
एषएवपरोदेवो नग्नः कंकाल वर्जितः
विकीर्णोभय पार्ऽस्वस्थ जटालकविभूषितः  २२
कटिदेशे प्रर्तव्यः फणिसूत्रेण वेष्टितः
सत्कपालञ्चवरदं वामहस्तन्तु कल्पयेत्  २३
दिव्यढक्का समायुक्तं वामस्थमपरं करम्
शिखिपिञ्छधरं कुर्यात् सव्यस्थमपरं करम्  २४

व्यालः पार्श्वस्थितः कार्यः पूर्वसव्यो मृगास्यगः
सव्यं कोण समायुक्तं अथवा परिकल्पयेत् २५
कपाल हस्त पृष्ठन्तु नाभिदघ्नं प्रकल्पयेत्
नाभेस्तं मणिबन्धान्तं षोडशागुल ईरितः २६
डमरूच्चन्तु कर्णान्तं तद्धस्तमणिबन्धनात्
कर्णान्तं षोडशैर्मात्रैः शेषं कंकालवद्भवेत् २७
भिक्षाटनो हरः प्रोक्तः पृथग्विष्णुयुतो न वा
स्थापनं च समासेन वक्ष्येऽहं मुनिपुंगवाः २८
कालः प्राग्वत् समुद्दिष्टस्तद्वदुक्तांकुरक्रिया
रत्नन्यासं ततः कृत्वा देवे भूते यथाक्रमात् २९
जायासुचपृथक् पीठे चैकत्र च गुरूत्तमः
अथवा रत्नविन्यासं कृष्णादीनां विसर्जयेत् ३०
नेत्राणां मोक्षणं कृत्वा बेरशुद्धिमतः परम्
जलाधिवासनं ग्रामप्रदक्षिण पुरस्सरम् ३१
यागमण्डपमासाद्य पूर्ववत् परिकल्पयेत्
तद्दिगश्राणि वृत्ताभ नवपञ्चैककुण्डकम् ३२
उद्वास्य शिल्पिनं विद्वान् भोजयेत् तद्विशुद्धये
पुण्याहं वास्तुहोमं च स्थण्डिलं शयनं पृथक् ३३
स्नपनं कौतुकं तेषां पृथक् कृत्वा तु शोधयेत्
मध्ये देवं च तद्दक्षे जाया भूतानि वामके ३४
यथावच्छाययेत् सर्वान् पृथक्वस्त्रादि भूषितान्
पृथक् कंकाल दण्डश्चेत् शिरोदेशेतु शाययेत् ३५
शक्रशांकरयोर्मध्ये न्यसेत् कुंभञ्च वर्धनीम्
अन्येषां च शिरोदेशे घटं जाया सुवर्धनीम् ३६
विन्यस्य गन्धपुष्पाद्यैः पूजयेत् स्वस्वमन्त्रयुक्
वीरेशाय नमश्चेति भूतकुंभे यजेत् गुरुः ३७

नन्दनायै नमश्चेति तद्वर्धन्यां यजेत् हृदा
कंकालकुंभे कंकालं न्यस्त्वा तत्वादिकान्नयसेत् ३८
तत्वादयः शिवे प्राग्वत् वीरेशे पुनरुच्यते
मूर्तयः प्राग्वदेवस्युः प्रमुखोदुर्मुखस्तथा ३९
प्रमोदश्चतदामोदो विघ्नराडिति मूर्तिपाः
विष्नूक्तवत् स्यात् कंकाले तथाहोमं समाचरेत् ४०
कुण्डाग्निसंस्कृतिं कृत्वा समिदाज्यान्नलाजकैः
तिलैः सस्येन्द्रकैस्साधं साक्षतैर्होममाचरेत् ४१
पलाशखादिराश्वत्थोदुंबरो दिक्षु संमताः
शमी च वटश्रीवृक्ष मायूरावह्नि कोणतः ४२
प्रधानेपि पलाशस्यात् स च सर्वत्र वामतः
देशिकेन्द्रः प्रधाने तु देवानावाह्य तर्पयेत् ४३
ततो द्वितीयदिवसे देवकुंभाग्नि तर्पणम्
पूजितो वस्त्र हेमाद्यैः मूर्तिपैः प्राप्त दक्षिणाः ४४
मन्त्रन्यासं ततः कुर्यात् न्यस्त्वाबिंबपुरो घटान्
कुंभाम्मनुं समादाय देवस्य हृदि विन्यसेत् ४५
वर्धन्यामनुमादाय तस्य पीठांबुजे न्यसेत्
अन्येभ्यो बीजमादाय तेषां च हृदि विन्यसेत् ४६
तत्तत् कुंभजलैः स्नाप्य स्नपनञ्चोत्सवं महत्
नैवेद्यं च प्रतिष्ठान्ते देशिकेन्द्रस्तु कारयेत् ४७
अनुक्तमत्रसंग्राह्यं सामान्यं स्थापनोक्तवत्
एवं यः कुरुतेमर्त्यः स पुण्यांगतिमाप्नुयात् ४८
मध्य सूत्रादि सूत्राणां द्व्यंगुल द्व्यंगुलञ्च यत्
अंगानामपि सर्वेषां तेषां वै सन्निवेशनम् ४९
हस्तानामपि संख्या च वस्त्राण्याभरणानि च
मुद्राश्वेतादि वर्णं च देवानां संस्थिति स्थिताः ५०

आचार्यशिल्पिकर्तॄणां यथा शोभञ्च वाञ्छया
भवेत् सामान्यमेतत् हि सर्वदेवेषु च द्विजाः ५१
एषां प्रतिष्ठा सर्वत्र बालस्थानान्विता न वा
भिक्षाटने च कंकाले प्रतिष्ठैवं समीरिता ५२

इति उत्तरकामिकाख्ये महातन्त्रे भिक्षाटन प्रतिष्ठा विधिः
द्विपञ्चाशत्तमः पटलः

पादे पादुकया युक्तं चतुर्दोर्भिस्समन्वितम्
सयज्ञ सूत्रं शान्तं च गमनोन्मुखमीश्वरम्
आबद्ध क्षुरिकं सौम्यं कपर्द मकुटोज्ञवलम्
समभङ्गयुतं वापि कान्तियुक्तनिजाङ्गकम्
नानागण समायुक्तं नानाभूतसमाकुलम्
असव्य भूतमूर्धस्थ बलिपात्रेण संयुतम्
एष एव परोदेवः नग्नः कङ्कालवर्जितः
विकीर्णोभय पार्श्वस्थ जटालकविभूषितः
कटिप्रदेशे प्रकर्तव्यः फणिसूत्रेण वेष्टितः
सत्कपालं च वरदं वाम हस्तं तु कल्पयेत्
दिव्यढक्का समायुक्तं वामस्थमपरंकरम्
शिखिपिञ्छधरं कुर्यात् सव्यस्थमपरंकरम्
व्यालपार्श्वस्हितः कार्यः पूर्वसव्योमृगास्यगः
सव्यं कोण समायुक्तं अथवा परिकल्पयेत्

पादे पादुकया युक्तं चतुर्दोर्भिस्समन्वितम्
सयज्ञ सूत्रं शान्तं च गमनोन्मुखमीश्वरम्
आबद्ध क्षुरिकं सौम्यं कपर्द मकुटोज्ज्वलम्
क्षौमाम्बरं स्थितं कुर्यात् सुन्दरं तं विभूषितम्

सशङ्ख पत्रिका वामे दक्षिणे नक्र कुण्डलम्
दक्षिणं कुञ्चितं पादं वामपादं तु सुस्थितम्
प्रहारं दक्षिणे हस्ते ढक्कां वामे तु पूर्वयोः
सव्य मध्याङ्गुलाग्रं तु कृष्ण जिह्वाग्रगं भवेत्
वामेकरेऽपरे पिञ्छदण्डकं कालदण्डकम्
उभयोर्दण्डयोर्मूलं स्कन्धमूलोपरि स्थितम्
नानागण समायुक्तं नानाभूतसमाकुलम्
असव्यभूतमूर्धस्थ बलिप्रात्रेण संयुतम्
कङ्कालपिञ्छधृग्धस्तः कक्षतुल्योच्छ्रयो भवेत्

त्रिपञ्चाशत्तमे पटले बलिभर्तुः प्रतिष्ठा विधिः

बलिर्भर्तुः प्रतिष्ठान्तु वक्ष्ये तल्लक्षणन्तुवै
नित्योत्सवे तु कथितं सूत्राद्यञ्चेन्दुमलिवत् १
प्रायश्चितादिके वाथ सर्वकाम प्रसिद्धये
नित्योत्सवेपि तत् श्रेढन्तन्मन्त्रैश्च विशेषतः २
प्रतिष्ठाञ्च समासेन प्रवक्ष्यामि मुनीश्वराः
कालोंकुरक्रियारत्नन्यासो वै दृष्टिमोचनम् ३
शुद्धिः प्रदक्षिणं ग्राम प्रभृतीनां जलस्थितिः
पूर्वमेवोदितं यस्मात् तद्वत् सर्व समाचरेत् ४
मण्डपं कारयेत् तत्र नवपञ्चैककुण्डकम्
कुण्डानि वृत्तान्यश्राणि तद्दिगश्राणि वा भवेत् ५
कुण्डं वृत्तं प्रधानंस्यात्रिषु पक्षेषु वै द्विजाः
पश्चात् शिल्पिनं उद्वास्य ब्राह्मणांस्तत्र भोजयेत् ६
पुण्याह प्रोक्षणं कृत्वा वास्तुहोमन्तु कारयेत्
जलादुत्तीर्य बिंबन्तु मृदाद्यैस्स्नपनं नयेत् ७
गन्धादिना ततोभ्यर्च्य कौतुकं बन्धयेत् ततः

शयनं कल्पयेत् पश्चात् तस्यां स्थरिडलं पूर्वकम् ८
शयनेशाययेद्देवं रक्तवस्त्रादि भूषितम्
पूर्ववत् स्हापयेत् कुंभान् परितश्शिवकुंभकम् ९
सुवस्त्राढ्यं शिरोदेशे सर्वे वस्त्रादि भूषिताः
शिवंकुंभे यजेदस्त्रन्देवं पाशुपताह्वयम् १०
तल्लक्षणोक्तरूपन्तु ध्यात्वागंधादिभिस्तदा
हुं फट् इति मन्त्रेण चतुर्थ्यन्तेन नामतः ११
दीपंश्लीं पशुपूर्वञ्च हुं च फरणम इत्यपि
मन्त्रेण वाथ संपूर्णन्देवं पाशुपताह्वयम् १२
अकाराद्यौकारान्ताश्च स्वरास्सद्यादयो मताः
ओंकाराद्याफडन्ताश्च मन्त्रास्स्युहृदयादयः १३
मन्त्रेण विधिवत् भिन्ना ओंकाराद्याहृदादयः
हृदयादि समोपेता हुंफडन्ताः नमोन्तकाः १४
हृत्पुटाजात मूर्त्या च विद्यादेहाणुनापि वा
हुंकारकल्पितेनैव हृदासंपुरितेन च १५
वज्रादीनायुधान्यष्टौ परितोभ्यर्चयेत् गुरुः
तत्त्व तत्त्वेश्वरान्यस्त्वा न्यसेन्मूर्तीश्च पूर्ववत् १६
मूर्तीशांश्च न्यसेद्धीमान् वज्रादीन् देशिकोत्तमः
कृत्वा कुराडेषु संस्कारं संपाद्य च शिवानलम् १७
समित् घृतान्नसस्येन्द्र तिललाज समन्वितम्
पूर्वोक्तमूलब्रह्मांगैर्होमं पूर्वोक्तसंख्यया १८
तत्वमूर्त्यादिमन्त्रैश्च सार्धं कुर्यात् गरूत्तमः
पलाशोदुंबराश्वत्थ वटा इन्द्रापि दिक्षु च १९
शमीखादिरश्रीवृक्ष पिप्पला अग्निकोणतः
प्रधानेऽपि पलाशस्यात् द्वितीयेह्वयेमाचरेत् २०
संपूज्यदेशिकाकादींश्च दक्षिणान्दापयेत् ततः

प्रतिमाग्रेघटान्यस्वा तत् कुंभात्तुमनुं हृदि २१
न्यसेत् पीठांबुजेतस्य परिवारमनुन्यसेत्
स्नपनं चोत्सवं भूरिनैवेद्यं कारयेन्नवा २२
अनुक्तमत्रसामान्य स्थापनोक्तवदाचरेत्
एवमस्त्रप्रतिष्ठान्तु यः कुर्यादस्त्रमूर्तिनः २३
यात्त्येव च सुखं मोक्षमिहापि च परत्र च २३ १-२

इति उत्तरकामिकाख्ये महातन्त्रे बलिभर्तुः प्रतिष्ठा विधिः
त्रिपञ्चाशत्तमः पटलः

## चतुष्पञ्चाशत्तमे पटले शरभेश्वर प्रतिष्ठाविधिः

शरभेशप्रतिष्ठान्तु वक्ष्ये लक्षणपूर्विकाम्
पक्ष्याकारं सुवर्णाभं पक्षद्वय समन्वितम् १
उर्ध्वपक्षसमायुक्तं रक्तनेत्रद्वयान्वितम्
पादैस्सिंहपदाकारैश्चचतुर्भिश्च समन्वितम् २
सुतीक्ष्णनखसंयुक्तैः ऊर्ध्वस्थैर्वेद पादकैः
दिव्यलांगूलसंयुक्तं सुविकीर्ण जटान्वितम् ३
कन्धरोर्ध्वंनराकारं दिव्यमौकि समायुतम्
सिंहास्यं भीमदंष्ट्रंच भीमविक्रमसंयुतम् ४
हरन्तं नरसिंहन्तु जगत् संहरणोद्धतम्
कृताञ्जलिपुटोपेतं निश्चेष्टित महातनुम् ५
नम्रदेहन्तदुर्ध्वास्यं विष्णुं पद्मदलेक्षणम्
पादाभ्यामंबरस्थाभ्यां कुक्षिस्थाभ्याञ्च तस्य तु ६
गगनाभिमुखं देवं कारयेत् शरभेश्वरम्
एवं लक्षणमादिष्टन्तस्य मन्त्रश्च कथ्यते ७
अष्टवर्गादिमंबीजं चतुर्दशविभूषितम्
षष्ठस्वरसमोपेतं बिन्दुनाद समन्वितम् ८

शारम्भं बीजमत्युक्तं शरभेश्वर इत्यपि
ततो हरिहरस्त्वेवं चतुर्थ्यन्तं पदद्वयम् ९
आदौ प्रणवसंयुक्तन्नमस्कारान्तसंयुतम्
योजयेच्छरभेशार्थं पूजादिष्विष्टसिद्धये १०
कल्पयेदाद्यवर्णेन ब्रह्मारयंगानि देशिकः
वज्रदेहो भवेदाद्यः खादकश्च वियोजकः ११
मारणोदीर्घहस्तस्तु तीक्ष्णदंष्ट्रो जटाधरः
बलिप्रियेण चाष्टौस्युः प्राग्दिगारभ्य संस्थिताः १२
पूजायाञ्च प्रतिष्ठादौ क्रमेण परितस्थिताः
स्वनामाद्यक्षरेणैषां मन्त्राणामुध्दृतिर्भवेत् १३
कुर्याश्छिलादिविष्टेन द्रव्येण शरभेश्वरम्
प्रतिष्ठां च ततः कुर्यात् शुभलग्नोदयेऽहनि १४
अंकुरार्पणकार्यन्तु तद्विधानेन कारयेत्
नेत्राणाश्रमपिरक्षानाम्मोक्षणं न्यासमाचरेत् १५
मृदादिशोधनं ग्रामप्रभृतीनां प्रदक्षिणम्
जलाधिवासनं प्राग्वत् पृथक् कुर्यात् हरेहरौ १६
मराडपं पूर्ववत् कृत्वा वेदाश्रन्नवकुराडकम्
पञ्चाग्न्यायतनोपेत मेकाग्न्यायतनेन वा १७
स्थपत्युद्वासनं पुराय तोयसेचनमाचरेत्
विप्रभुक्तिन्तदुच्छिष्टोद्वासनं मार्जनं पुनः १८
पुरायाहं वास्तु पूजाग्निकार्यं स्थरिडल कल्पनम्
शयनं स्नपनं प्राग्वत् बन्धनं कौतुकस्य च १९
पृथक् द्वयोस्समादिष्टं शयनारोहणन्नयेत्
उकक् पादं यथादेवं पूर्वदिङ्मस्तकं यथा २०
भिन्नपीठो हरिस्तर्हि वामेतं शाययेत् प्रभो
रक्तवस्त्रेण संवेष्ट्य कुंभस्थापनमारभेत् २१

विन्यसेत् शिवकुंभं च विष्णुकुंभं च विन्यसेत्
स सूत्रसापिधानञ्च सवस्त्राद्यं शिरोन्तिके २२
परितोष्टौघटान्यस्त्वा स्वर्ण वस्त्रादि संयुतान्
ससूत्रान् सोदकान्वज्रदेहाद्यैरप्यधिष्टितान् २३
प्रागुक्ताणु स्वरूपज्ञो गंधाद्यैरर्चयेत् गुरुः
हृत्पुटाजातमूर्त्यातानावाह्य सकलीकृतम् २४
विधाय हृत् पुटेनैव मूलेनावाह्यतन्मनुम्
शरभेशमनुन्यस्त्वा यजेत् विष्णौ सदुक्तवत् २५
मूर्तिमूर्तीश्च न्यासं कारयेत् प्राग्देव हि
मूर्तयो वज्रदेहाद्यास्तदीशाना इति स्मृतः २६
ततो होमं प्रकुर्वीत कृत्वा कुण्डाग्नि संस्कृतिम्
समिद्भिरपिपालाशैः घृतेन चरुणापि च २७
तिलैर्लाजैश्च सस्येन्द्रैः मूर्तीशान्यणुभिर्युतम्
पूर्णाहुत्वा द्वितीयेह्नि वह्निकुंभामरार्चनम् २८
संप्राप्तदक्षिणस्तुष्टो गुरुस्संपूजितस्सह
मूर्तिपाद्यर्यथायोग्यं मन्त्रन्यासं समारभेत् २९
देवेशाग्रेघटान्यस्वा संकल्प्य स्थण्डिलं गुरुः
कुंभात् बीजं समादाय शरभेश हृदि न्यसेत् ३०
विष्णुबीजं समादाय नरसिंह हृदिन्यसेत्
अन्येभ्यो बीजमादाय पीठाब्जे परितो न्यसेत् ३१
तत्तत् कुंभोदकैश्चैव स्नापयेत्परमेश्वरम्
स्नपनं कारयित्वा तु नैवेद्यं चोत्सवं नयेत् ३२
एवं देवं प्रतिष्ठाप्य प्रत्यहं तं समर्चयेत्
अर्चनं प्राग्वदेव स्यत् किन्तु मन्त्रैस्तु शारभः ३३
स्नपनोत्सव कर्माद्यं तदर्थं विधिना चरेत्
देशिकश्चास्य मन्त्रैस्तान्नाशयेत् शत्रु वर्गिनः ३४

सर्वव्याधिसमुत्पत्तौ मन्त्रेणानेन नाशयेत्
वश्याकर्षण विद्वेषमनेन विधिना नयेत् ३५
अनुक्तमत्रसंग्राह्यं सामान्यस्थापनोक्तवत्
कुर्यादेवं स्थापनं तु योनरश्शरभेश्वरे ३६
भक्त्या भावनया सार्धं तस्यैवं कलये द्विजाः
इयत्ता पुण्य संघस्य भोगान् भुक्त्वेह जन्मनि ३७
वाञ्छितांस्तान् परत्रापि प्राप्नोति पदमैश्वरम्

इति उत्तरकामिकाख्ये महातन्त्रे शरभेश्वर प्रतिष्ठाविधिः
चतुष्पञ्चाशत्तमः पटलः

पक्ष्याकारं सुवर्णाभं पक्षद्वयसमन्वितम्
ऊर्ध्व पक्ष समायुक्तं रक्तनेत्रत्रयान्वितम्
पादैस्सिंह पदाकारैः चतुर्भुजश्च समन्वितम्
सुदीक्षण नवसंयुक्तैः ऊर्ध्वस्थैः वेदपादकैः
दिव्यलाङ्गूल संयुक्तं सुविकीर्णं जटान्वितम्
कन्धरोर्ध्व नराकारं दिव्यमौलि समायुतम्
सिंहास्यं भीमदंष्ट्रं च भीमविक्रम संयुतम्
हरन्तं नरसिंहन्तु जगत्संहरणोद्धतम्
कृताञ्जलि पुटोपेतं निश्चेष्टित महातनुम्
नम्रदेहं तदूर्ध्वास्यं विष्णुं पद्मदलेक्षणम्
पादाभ्यां अम्बरस्थाभ्यां कुक्षिस्थाभ्यां च तस्य तु
गगनाभिमुखं देवं कारयेत् शरभेश्वरम्

पञ्चपञ्चाशत्तमे पटले चण्डेशाद्यनुग्रह विधिः
अथ चण्डेश नन्दीशं विष्णवनुग्रहकृत् प्रभोः

प्रतिष्ठां संप्रवद्व्यामि तल्लद्मण पुरस्सरम्  १
उमया सहितस्याऽथ चन्द्रशेखर मूर्तिनः
वामे वा दद्विणे वापि कारयेद्देशिकोत्तमः  २
एवं जानुरुनाभ्यन्त स्तनवद्वो गलास्यगम्
सुखासीनं स्थितंवापि कृताञ्जलि पुटान्वितम्  ३
देवेद्वणसमोपेतं मद्भक्तं चराडनायकम्
सर्वांगसुन्दरं कुर्यात् कनिष्ठदशतालतः  ४
मालाग्रं देववरदे कटकेनेतरेण तु
देवश्शिरसि चराडस्य मालया परिवेष्टयेत्  ५
नन्दीश्वर प्रसादे तु विशेषः कश्चिदिष्यते
द्विनेत्रं द्विभुजं शान्तं कृताञ्जलि पुटान्वितम्  ६
सुविकीर्ण जटोपेतं जटामकुटकान्वितम्
स्राभंगसहितं कुर्यादागम शवणोन्मुखम्  ७
नन्दीश्वर प्रसन्नन्तं कारयेत् पूर्व मानतः
नन्दीश्वरानुग्रहस्त्वेवं तद्वद्विष्णुप्रसादकृत्  ८
हित्वानन्दीश्वरन्तस्मिन् विष्णुं तल्लद्मणान्वितम्
सचक्राञ्जलि हस्तञ्च शंखाब्जापरहस्तकम्  ९
कारटेद्देव एषस्या च्चक्रदो विष्णुमूर्तिनः
कारयेदेव मेवान्य प्रसादाभिमुखं शिवम्  १०
इत्थं लद्मणमादिष्टं प्रतिष्ठाविधिरुच्यते
वाराद्यंमंकुरं रत्नविन्यासमुभयत्र च  ११
नेत्रमोद्मं तथाशुद्धिं पुरादीनां प्रदद्विणम्
तोमाधिवासनं यागमराडपस्य प्रकल्पनम्  १२
कुराडानामथवृत्ताश्र दिगश्राणान्तु कल्पनम्
नवपञ्चैक संख्यानां लद्मणैः पूर्ववत् द्विजाः  १३
तद्मकोद्वासनं विप्र भित्तिं पुरायोदसेचनम्

वास्तुहोमन्तु वेद्यान्तु स्थण्डिलं शयनं पृथक् १४
स्नपनं कौतुकं चैव देवानां पूर्ववत् पृथक्
आरोहणं च शय्यायाः तस्याञ्च शयनं नयेत् १५
देवास्त्वनुग्रहीताये भिन्नपीठ स्थिता यदि
देवेश पादमूलेतु तेषां च शयनं नयेत् १६
देवोत्तमांगदेशेतु शिवकुंभञ्चवर्धनीम्
अनुग्रहीतदेवानां तत्तन्मूर्त्यष्टकं मतम् १७
तत्तदध्याय संसिद्धिं संग्राह्यं मुनि पुंगवाः
कृत्वाकुण्डाग्निसंस्कारं द्रव्यैर्होमं समारभेत् १८
समिदाज्यान्नलाजैश्च तिलशाल्यक्षतैः क्रमात्
सत् पलाशवटप्लक्षो दुंबराः पूर्वतो भवेत् १९
शमीखादिर श्रीवृक्षा अश्वत्थावह्निकोणतः
प्रधानस्य पलाशस्स्यात् स च सर्वत्र वामतः २०
चण्डनन्दीश विष्णूश्च प्रधाने तर्पयेत् गुरुः
निष्कृतौ पूर्णयोपेतं होमकर्म पृथक् नयेत् २१
द्वितीयेतु ततः श्शुद्धो मूर्तिपैः तत्वविद्गुरुः
संपूज्योद्धृत्य देवांस्तु कुंभान् कुण्डेषु पावकान् २२
सुमुहूर्तेऽठ संप्राप्ते सन्त्रन्यासं समाचरेत्
वस्त्रहोमागुलीयादि पूजितोमूर्तिपादिभिः २३
संप्राप्तदशनिष्कादि दक्षिणस्तुष्टधीर्गुरुः
कृतस्थण्डिलका धारा बिंबाग्रेतु घटा न्यसेत् २४
कुंभान्मनुं समादाय शिवस्य हृदि विन्यसेत्
वर्धन्यामनुमादाय तत् पीठोपरि विन्यसेत् २५
देवी सहासनाचेत्तु तस्याहृदि मनुन्यसेत्
अन्येभ्यो बीजमादाय पीठस्यपरितो न्यसेत् २६
चण्डेशादिषु देवेषु तत्तत् कुंभान् मनुं न्यसेत्

तत्तत् घटोदकः स्तत्तत् द्देवमप्यभिषिञ्चयेत्  २७
स्नपनंञ्चोत्सवं भूरिनैवेद्यं कारयेन्नवा
देवी विभिन्नपीठा चेत् कल्याणं कारयेद्गुरुः  २८
एवं च कुरुतेमर्त्यः सोन्ते मोक्षमवाप्नुयात्  २८ १-२

इति उत्तरकामिकाख्ये महातन्त्रे चण्डेशाद्यनुग्रह विधिः
पञ्चपञ्चाशत्तमः पटलः

उमया सहितस्याथ चन्द्रशेखरमूर्तिनः
वामे वा दक्षिणे वापि कारयेद्देशिकोत्तमः
एवं जानूरुनाभ्यन्तस्तनवक्षोगकास्यगम्
सुखासीनं स्थितं वाऽपि कृताञ्जलि पुटान्वितम्
हित्वा नन्दीश्वरं तस्मिन् विष्णुं तल्लक्षणान्वितम्
सचक्राञ्चलिहस्तं च शङ्खब्जापरहस्तम्
कारयेद्देवे-एषस्याच्चक्रदोविष्णुमूर्तिनः

उमया सहितस्याथ चन्द्रशेखमूर्तिनः
वामे वा दक्षिणे वापि कारयेद्देशिकोत्तमः
एवं जानूरुनाभ्यन्तस्तनवक्षोगकास्यगम्
सुखासीनं स्थितं वाऽपि कृताञ्जलि पुटान्वितम्
देवेक्षणसमोपेतं मद्भक्तं चण्डनायकम्
सर्वाङ्गसुन्दरं कुर्यात् कनिष्ठदशतालतः
मालाग्रं देववरदे कटकेनेतरेण तु
देवश्शिरसि चण्डस्य मालया परिवेष्टयेत्

नन्दीश्वरप्रसादे तु विशेषः कश्चिदिष्यते
द्विनेत्रं द्विभुजं शान्तं कृताञ्जलि पुटान्वितम्

सुविकीर्ण जटोपेतं जटामकुटकान्वितम्
आभङ्गसहितं कुर्यात् आगमश्रवणोन्मुखम्
नन्दीश्वरं प्रसन्नं तं कारयेत्पूर्वमानतः

षट्पञ्चाशत्तमे पटले भक्तानुग्रहदेवस्थापन विधिः

भक्तानुग्रहदेवस्य तल्लक्षण पुरस्सरम्
स्थापनं संप्रवक्ष्यामि श्रूयतां द्विजसत्तमाः १
सदाशिवादेयो देवाः प्रागेव प्रतिपादिताः
त एवानुग्रपराः भक्तानुग्राहकामताः २
देवदानव गंधर्व मुनयो मनुजातयः
पिपीलिका गजाद्यन्ताः जंगमास्थावराश्च ये ३
तेऽनुग्राह्या स्मृताश्शास्त्रेऽनुग्रहो बहुधामतः
दीक्षा व्याख्यानं संस्पर्शाऽवलोकोक्ति मुखोद्विजाः ४
शिवाधिष्टित देहस्तु मरणं याति यो नरः
सनरश्शिव एव स्यात् सर्वपाप बहिष्कृतः ५
तस्मादुत्क्रान्तिकालेतु स्वेष्टलिंगन्तु संस्पृशन्
प्राणमोक्षं च कुर्याद्यः स शिवोनाऽत्र संशयः ५
सुसंस्पृष्टोक्त गोत्रादि देहं कृत्वातु साकृतिम्
आसीनां वा स्थितां वापि शयितां शुभलक्षणाम् ६
कृताञ्जलि पुटोपेतां प्रतिमां लोहपूर्वकैः
द्रव्यैस्सदाशिवाद्यान्तु कृत्वा संस्थापयेत्सुधीः ८
तत्पीठानथ तद्देवाकृतिं कुर्यात् गुरुस्सुधीः
भक्तानुग्रह देवस्य लक्षणं त्वेवमीर्तितम् ९
संस्थापनमथोवक्ष्ये श्रूयतां द्विजसत्तमाः
कालः प्राग्वत् समुद्दिष्ट स्तथैवांकुरकर्म च १०
रत्नन्यासं तथैवाक्षिमोचनं बेर शोधनम्

ग्रामप्रदक्षिणं मध्यमे त्वधिवासनम्  ११
प्रतिष्ठामण्डापाख्यं यत् पूर्वोक्त विधिना चरेत्
कुण्डानिकारयेत्तत्र नवपञ्चैक सख्यया  १२
चतुरश्राणि कार्याणि प्रधानं वृत्तमेव वा
तक्षकोद्वासनं विप्रभुक्तिं पुण्योद सेचनम्  १३
स्थैण्डिलं शयनं स्नानं तद्वत् कौतुकबन्धनम्
शयनारोहणं कुंभस्थापनं पूर्ववन्नयेत्  १४
तत्पादेभक्तकुंभन्तु तत्तद्ध्यान समन्वितम्
आत्ममन्त्र समोपेतं विद्येश्वर घटान्वितम्  १५
तद्वन्मूर्त्यादिविन्यासं प्रागुक्तविधिना नयेत्
अग्निकुण्डादिसंस्कारं कृत्वा होमं समाचरेत्  १६
समिदाज्यान्नलाजैश्च तिलैर्वेणुयवैर्द्विजाः
पलाशोदुंबराश्वत्थ न्यग्रोधाः प्राग्दिगादितः  १७
शम्यपामार्गश्रीवृक्ष प्लक्षाश्चाग्नेयगोचराः
प्रधानेतु पलाशस्यात् यस्या भावस्स एव हि  १८
ततो द्वितीयदिवसे कृतकुंभाग्नि पूजितः
पूजितोवस्त्रहेमाद्यैर्मूर्तिपाद्यैस्समन्विताः  १९
संप्राप्तदशनिष्कादि दक्षिणस्तुष्टधीर्गुरुः
मन्त्रन्यासन्ततः कुर्यात् न्यस्त्वाबिंबपुरोघटान्  २०
कुंभान्मन्त्रं समादाय देवस्य हृदये न्यसेत्
देव्या देवस्समायुक्तो यदि देवी मनुं गुरुः  २१
विन्यसेत् हृदये देव्या ने चेत् पीठेतु विन्यसेत्
ततः कुंभाजलेनाथऽथ तौ च संस्नापयेत् सदा  २२
भक्तकुंभस्य बीजन्तु तत भक्त हृदयेन्यसेत्
आदायबीजान्यन्येभ्यः पीठस्य परितो न्यसेत्  २३
तत् कुंभस्थ जलेनापि स्नापयेत् पीठमादरात्

स्नपनं कारयेदन्ते नैवेद्यन्दापयेत् ततः २४
उत्सवन्तु तदन्ते स्यात् एतत् सामान्यमीरितम्
विशेषस्त्रिपुरघ्नादि प्रतिष्ठाविधि चोदितः २५
तथा भक्तप्रतिष्ठोक्त विधिना च समन्विताः
एवं यः मर्त्यः स पुरयांगतिमाप्नुयात् २६
पुत्रार्थि लभते पुत्रान् धनार्थि धनमाप्नुयात्
देवार्थी देवमाप्नोति मोक्षार्थी मोक्षमाप्नुयात् २७
यान्यान् कामयते भोगान् तान्सर्वानाप्नुयान्नरः
मृतमुद्दीश्य यः कुर्यात् तत् पुत्रः पौत्र एव वा २८
जीवन्नेवाथवा कुर्यात् आत्मानं शिवसंज्ञितम् २८ १-२

इति उत्तरकामिकाख्ये महातन्त्रे भक्तानुग्रहदेवस्थापन विधिः
षठपञ्चाशत्तमः पटलः

सुसंस्पृटोक्त गोत्रादि देहं कृत्वा तु साकृतिम्
आसीनां स्थितां वापि शयितां शुभलक्षणाम्
कृताञ्जलिपुटोपेतां प्रतिमां लोह पूर्वकैः
द्रव्यै स्सदाशिवाद्यां तु कृत्वा संस्थापयेत् सुधीः

सप्तपञ्चाशत्तमे पटले कालारिकामान्तक प्रतिष्ठाविधिः

वक्ष्ये कालारि कामघ्न प्रतिष्ठां लक्षणान्विताम्
चतुर्भुजस्त्रिणेत्रश्च कपर्दमकुटान्वितः १
कुञ्चितासव्यपादस्तु व्याघ्र चर्मांबरान्वितः
ततोद्धृत सदक्षांघ्रिस्तीक्ष्णदंष्ट्रोग्रनासिकः २
दक्षहस्तथ शूलोवा वामहस्तस्थ सूचिकः
दक्षहस्तस्थ परशुर्नागपाशोऽथ वामगः ३
कटाक्षदृष्टिदेवस्य कालदेवे व्यवस्थितः

शूलंह्यधोमुखं प्रोक्तं कालकुराडस्थमेव वा ४
सूचिमुद्रासमोपेत करोच्चन्नाभिसीमकम्
तद्धस्तमणिबन्धाच्च पार्श्वमध्यं कलांगुलम् ५
कर्णान्तं शूलहस्ताग्रं तद्धस्तमणिबन्धकात्
कर्णाग्रंतद्वितालं स्यात् दोस्समं परहस्तकम् ६
कर्णाग्रमणिबन्धान्तं यवञ्चेति प्रकीर्तितम्
मूर्ध्नोदक्षकरीनित्यं वामनासापुटादयः ७
नाभेस्सव्ये च वामांघ्रेरग्रे सूत्रं पुरो भवेत्
तत् सूत्रान्मेद्रमूलस्य वामभागोन्तरोमतः ८
स्थितजान्वन्तरं सूत्रद्वामे सूत्रमूदीरितम्
अधोद्धृतांघ्रि जानूच्चं कटयग्र सममेव हि ९
जंघमध्यात् समोच्चन्तत् तलाग्रान्तमिति स्मृतम्
दक्षपादस्य पार्ष्णाग्रं तिथिस्स्यात् सूत्रदक्षिणे १०
परहस्तौ च कटकौ शूलहस्तस्थैव च
तत् सूत्रन्दक्षिणेनाभि विद्येश्वर यवं भवेत् ११
सूत्रादन्वित जान्वन्तो गुणवह्न्यंगुलो भवेत्
उद्धृतस्य तलस्याग्र जंघायास्मृति मात्रकम् १२
कालन्तु पतितं कुर्यात् तत् प्लुताक्षन्तु मूर्च्छितम्
उद्गिरद्रक्तवस्त्रं च तथालोहितमूर्धजम् १३
शूलपाशकरञ्चैव विकीर्ण चरणान्वितम्
दंष्ट्राकरालवदनं रक्तभ्रूरक्तलोचनम् १४
देवस्थन्नाभिमानेन नवतालेन कारयेत्
कृताञ्जलिपुटं वापि कारयेत् कालमादरात् १५
अथवाथहराल्लिंगात् निर्गतात् पतितन्नयेत्
कालान्तलिंगमानाद्यं लिंगोद्धृतोक्तवन्नयेत् १६
त्रिभंगेनस्थितश्चान्योऽधिमुखो भस्मविग्रहः

बद्धपुष्पाञ्जलिः पार्श्वे मार्कराडेयस्थितोवरः १७
कर्तव्यः कालतोभीत स्सन्तुष्टो नु हरेण तु
मार्कराडेयोनुमानेन युक्तो वा वर्जितस्तुवा १८
अपस्मारशरीरस्थ चरणेन युतो न वा
कालाग्निरेवमाख्यातो मन्मथान्तक उच्यते १९
अग्रेतुदक्षिणामूर्तेर्योगनिष्ठस्य मन्मथम्
कुर्यात्तु पतितं दृष्टिपातादेव च तत्क्षणात् २०
भक्त्वा दशांशन्देवोच्चमेकाद्या सप्तभागिकम्
मन्मथोत्सेधमुद्दिष्टं स तु हेम विभूषितः २१
शुद्धजाम्बूनदः प्रख्यः पुष्पपञ्चेषु संयुतम्
मीनकेतुस्तथैवेक्षु कार्मुका कृतिसंयुतः २२
देवभागवसन्ताख्य मित्रयुक्तोऽपि सुन्दरः
लंभिनी तापिनी चैव वेदिनी द्राविणी तथा २३
मारिणी तु शराख्यास्युर्धनुर्वामे शराः परे
मन्मथो मित्रयुक्तो वाऽयुतोवैक शरेण तु २४
इत्थं लक्षणमाख्यातं प्रतिष्ठाविधिरुच्यते
वाराद्यं अंकुरं यागमराटपं पूर्ववन्नयेत् २५
कुराडानि मराडपे कुर्यात् ग्रहभूतैक संख्यया
दिग्गताश्राणि वृत्तानि चतुरश्राणि वा द्विजाः २६
रत्नन्यासाक्षिमोक्षे च बेरशुद्धिमनन्तरम्
ग्रामप्रदक्षिणं तोयाधिवासं पूर्ववत् गुरुः २७
देवे च काले कामे च कारयेत्तु पृथक् पृथक्
वेद्यूर्ध्वे स्थरिडले चैव शयनं स्नपनं पृथक् २८
देवस्य पाददेशेतु शय्यास्यात् काल कामयोः
कौतुकं शयनारोहं पूर्ववत् पृथागाचरेत् २९
ईशकुंभं शिरोदेशे वर्धनीं तस्य चोत्तरे

कालकुंभं च तन्मूर्ध्नः प्रदेशे तन्मनुंस्मरन्  ३०
कामश्चेत्तच्छिरोदेशे वस्त्राद्याढ्यं घटन्यसेत्
मित्राभ्यां संयुतश्चेत्तु तयोश्चकलशद्वयम्  ३१
कामस्य पार्श्वयोः कॢप्त शय्याशयितयोरपि
देवभाग वसन्ताख्य युक्तयोर्मित्रयोर्गुरुः  ३२
विन्यसेद्वस्त्रहेमाढ्यं पूर्ववत् परितोप्पटान्
विद्येश्वरात्मकान्यस्य यजेत् गंधादिभिस्ततः  ३३
तत्वेशरादिविन्यासं कृत्वा होमं समाचरेत्
तत्वाद्याः पूर्ववद्देव कामेतस्य यथोदितम्  ३४
कालस्य पञ्चमूर्तेस्तु मूर्तीशानपि विन्यसेत्
आत्मविद्याशिवाख्यानां तत्वानां व्याप्तिरिष्यते  ३५
शब्दप्रभृतिकालान्तं तदीशानान्तथैव हि
मूर्तयः प्राग्वदुद्दिष्टा वसन्तोग्रीष्म सञ्ज्ञकः  ३६
प्रावृट् शरश्चेहेमन्त इति मूर्तीश्वरामताः
कृत्वा कुण्डाग्नि संस्कारं समित् घृत चरूंस्तिलान्  ३७
अक्षतं च लुलं लाजं सर्षपं चहुनेत् क्रमात्
पलाशो ढुंबराश्वत्थ वटाः प्रागादि दिक्षु च  ३८
शमीखादिरमायूर श्रीवृक्षावह्निकोणतः
पलाशस्तु प्रधाने स्यात् स च सर्वत्रवामतः  ३९
कालं मामं प्रधाने तु कल्पयेद्देशिकस्सुधीः
नीत्वेवं रात्रिशेषन्तु प्रभाते विमले ततः  ४०
देशिकस्सुविशुद्धात्मा संपूज्योद्धृत बिंबकः
कुंभान् कुण्डस्थवह्निञ्च मन्त्र न्यासं गुरूत्तमः  ४१
वस्त्रहेमांगुलीयाद्यैः पूजितो मूर्तिपादिभिः
संप्राप्त दक्षिणः पश्चात् सुमुहूर्ते सुलग्नके  ४२
कुंभान् बिंबपुरो न्यस्य शिवकुंभमनुस्मरन्

शिवस्य चादरान्यस्य तत् पीठे करकन्यसेत् ४३
वैद्येशकुंभबीजानि तत् पीठे परितो न्यसेत्
अन्येभ्यो मनुमादाय तेषान्तेषां हृदि न्यसेत् ४४
स्नपनं भूरिनैवेद्यं चोत्सवं कारयेन्नवा
अनुक्तमत्र सामान्य स्थापनोक्तवदाचरेत् ४५
एवं यः कुरुते मर्त्यः भोगान् भुक्त्वास्ववाञ्छितान्
देहान्ते पुनरीशानं प्राप्नोत्यत्र न संशयः ४६

इति उत्तरकामिकाख्ये महातन्त्रे कालारिकामान्तक प्रतिष्ठाविधिः
सप्तपञ्चाशत्तमः पटलः

चतुर्भुजस्त्रिणेत्रश्च कपर्दमकुटान्वितः
कुञ्चितासव्यपादस्तु व्याघ्रचर्माम्बरान्वितः
ततस्तूतद्धृतदक्षाघ्रिः कीक्ष्णदंष्ट्रोग्रनासिकः
दक्षहस्तस्थशूलो वा वामहस्तस्थ सूचिकः
दक्षहस्तस्थ परशुः नागपाशऽथवाम्गः
कटाक्षदृष्टिः देवस्य कालदेव व्यवस्थिता
शूलंह्यधोमुखं प्रोक्तं कालकराठस्थमेववा
शूचिमुद्रासमोपेतं करोच्चं नाभिसीमकम्
उद्धृतस्यतलस्याग्राज्जङ्घायाः स्मृतिमात्रकम्
कालं तु पतितं कुर्यात् तं प्व्ताक्षं तु मूर्च्छितम्
देवस्यनाभिमानेन नवतालेनकारयेत्
कृताञ्जलिपुटं वापि कारयेत्कालमादरात्
अथवाथ हराल्लिंगात् निर्गतान् पतितं नयेत्
कालान्तलिङ्गमानाद्यं लिङ्गोद्धृतोक्तवन्नयेत्
बद्धपुष्पाञ्जलिः पार्श्वे मार्गराडेयःस्थितो वरः
कर्तव्यः कालतो भीतः सन्तुष्टोनुहरेण तु

मार्गराडेयोनुमाने युक्तो वा वर्जितस्तु वा

अष्टपञ्चाशत्तमे पटले कल्याणमूर्ते प्रतिष्ठ विधिः

वक्ष्ये कल्याणमूर्तेस्तु प्रतिष्ठां लक्षणान्वितम्
जटामकुट संयुक्तश्चन्द्रार्धकृतशेखरः १
त्रिदृक् चतुर्भुजश्चैव नवयौवनगर्वितः
समभंगयुतो देव स्थानकस्थ प्रकीर्तितः २
सकुञ्चात् सव्यसत्पाद स्थितसव्येतरांघ्रिकः
इन्दुशेखरहस्ताभ परहस्त द्वयान्वितः ३
जल संग्रहणे योग्य वरवाम करान्विताः
स्वदक्षिणग्रहीतो वा दक्षहस्तप्रसन्नधीः ४
आसाग्र लम्बयेत् सूत्रं स्तनमध्यात्तु दक्षिणे
नाभिमध्यात्तु वामे च दक्षिणे बहिरेव च ५
एकैकमंगुलन्नीत्वा नाभिसूत्र समं भवेत्
वरहस्तस्य पृष्ठोच्चं तन्नाह मणिबन्धयोः ६
अन्तरं स्यात्तथैकोन विंशतिर्बाहुमध्यमात्
पार्श्वान्तं रस मात्रं स्यात् अन्तरं मुनिपुंगवाः ७
मेद्रमूलसमन्दक्ष कटकस्यास्य लंबनम्
नाभेस्तं मणिबन्धान्तं स्मृत्यंगुलमितीरितम् ८
तद्बाहुमध्यात् पार्श्वान्तं शरांगुलमितिस्मतम्
पादांगुष्ठद्वयोर्मध्यं मुखपार्ष्णिद्वयान्तरम् ९
सुत्रास्तु जानुनोमध्यं कलया परिकीर्तितम्
अर्धेन्दुमलिवश्चान्य हस्तयेरन्तरं मतम् १०
पूर्ववत् कथितन्देव्या मानं विप्रोत्तमास्विह
देवीदृगास्य चिबुक कक्ष चूचुकमानता ११
तद्देव्यपरभागस्था श्रीदेवी सर्व लक्षणैः

युक्तादेवीकटिस्पृष्ट कराभ्यामपि संयुता १२
श्रीदेवी मध्यमर्काशैः तद्वन्नाभि भुजान्तरम्
पादांगुष्ठद्वयोर्मध्यं भवेदष्टदशांगुलम् १३
रसांगुलान्तरे पाष्र्ण्योः श्रीदेव्येवं प्रकीर्तिता
देवोच्चदशभागैक भागादेकादशावधि १४
भागमानयुतः श्यामः किरीटमकुटान्वितः
गृहीत शंख चक्रश्च हस्ताभ्यां धृतयापि च १५
तोयकुण्डिकयोपेतो विष्णुरेष उदाहृतः
नासाग्रात् स्थितपाद्यस्य चांगुष्ठान्तं विलंबयेत् १६
तत्सूत्रान्नाभिमध्यन्तु वेदमात्रमितिस्मृतम्
कुण्डिकोत्सेधविस्तारो तालसूत्रांगुलौ मतौ १७
तद्गलोत्सेधविस्तारो कलयाकोलकेन च
ग्रास्यंपञ्चांगुलं प्रोक्तं नासिकोच्चन्तु कोलकम् १८
तन्मूलन्तुकलाचाग्रं तस्यवक्त्रा कृतिर्भवेत्
एकांगुलं तत् पदोच्चं तन्मूलाग्रततिस्त्रिभिः १९
पञ्चभिश्चहरेर्वाम करपल्लव संस्थिता
तदूर्ध्वे दक्षिणंहस्तन्धारापाताय कल्पयेत् २०
कुण्डिका मूलहस्तोच्चं नाभिसूत्रं समं भवेत्
नाभेस्तुमणिबन्धान्तं धातुमात्रमितिस्मृतम् २१
तदन्यमणिबन्धात्तु सप्तभिश्चुलुकान्तकम्
वरदः कटकौ स्यातां वामेतर करावुभौ २२
हरेरुक्त प्रमाणेन ब्रह्माणमपिकारयेत्
चतुर्मुखश्चतुर्बाहुः जटामकुटमण्डितम् २३
होमोन्मुखं प्रसन्नन्तं किंकुमक्षोदसन्निभम्
मौञ्जीमेखलयोपेतं सोपवीतोत्तरीयकम् २४
वामेतरकरादूर्ध्वौ कमण्डलवक्षधारकौ

वराभयकरौ पूर्वौस्यातान्तौ दक्षिणेतरौ  २५
स्रुवपातक्रियोपेता वन्यौ तु कटकामुखौ
सूत्रंललटनासाग्र मध्यमे नाभिगुल्फयोः  २६
विलंबितान्ततो नाभे र्द्वयन्तरन्तु दशांशकम्
तत्पादांगुष्ठ मूलान्तान्नाभेर्वसुदशांगुलम्  २७
अभयचूचुकान्तंस्यात् नाभ्यन्तं मणिबन्धकम्
तन्मध्ये विश्वमात्रस्यात् बाहुपार्श्वान्तकं रसैः  २८
ऊर्ध्वकाय समञ्जान्वोः अन्तरं समुदाहृतम्
ब्रह्मरूपमितिख्यात न्तथापद्मासनस्थितम्  २९
देवस्यांगुलमानेन द्विविंशत्यंगुलो भवेत्
अग्निकुण्डस्यविष्कंभस्त्रिमेखल युतस्य च  ३०
मेखलैकांगुलाप्रोक्ता प्रत्येकं मुनिपुंगवाः
द्वादशांगुलविस्तार दैर्घ्या सा सप्तजिह्वकः  ३१
पञ्चभुजिह्वायुतोवाग्निः कुण्डमध्यस्थितस्त्वयम्
शिवादिहस्तसूत्राणां प्रमाणंद्व्यन्तरन्तु यत्  ३२
उद्धृतिर्हस्त पादानामन्यांगाना मिहोच्यते
एषामेवनतिश्चापि संकोचो निर्गमोऽपि वा  ३३
शरचापादि शास्त्राणां संग्रहे संस्थितिस्त्वियम्
अस्त्राणान्नियमश्चापि सर्वशास्त्र प्रचोदितः  ३४
दृष्टान्तमात्र तत्सर्व शास्त्रेषु प्रतिपादिताः
भूषणानाञ्च सर्वेषां वां दक्षिण भेदतः  ३५
दर्शनं सर्वबेराणां सर्वेषां द्विजसत्तमाः
देवीनामेवमेवस्यान्नरादीनां विशेषतः  ३६
इत्थं लक्षणमाख्यातं प्रतिष्ठाविधिरुच्यते
संभाव्य पूर्ववत् कालं प्राग्वत् कृत्वांकुरार्पणम्  ३७
देवस्यसव्ये ब्रह्माणं उत्तरे विष्णुमेव च

गौर्या च दक्षिणे लक्ष्मीं विन्सेद्देशिकोत्तमः ३८
नवरत्नन्यसेत् पश्चात् देवेशे च हरावपि
शिष्टानां ब्रह्मगौरी श्रीदेवीनां कनकन्यसेत् ३९
दृक्मोक्षऽ ततः कृत्वा तदध्यायोक्तवर्त्मना
बेरशुद्धिपुरग्राम प्रभृतीनां प्रदक्षिणम् ४०
तोयेधिवासयेद्देवं मध्येतद्दक्षवामयोः
ब्रह्मविष्णु कृतौ ब्रह्म पार्श्वयोरंबिकां श्रियम् ४१
यागमण्टपमासाद्य पूर्ववत् परिकल्पितम्
पूर्वाशोत्तर काष्ठासु स्नानवेदि त्रयान्वितम् ४२
अस्य पूर्वयमाप्येन्दु स्थाने ष्विष्टस्तुमण्टपः
योन्याभनवपञ्चैक कुण्डैरपि समन्वितः ४३
स्नानश्च भ्रात्रयोपेता देव्याः पूर्ववदीरितः
देवस्यमण्डपे चापि कुण्डानि नव संख्यया ४४
पञ्चैक संख्ययावपि चतुरश्रनिभानि वा
दिगश्रान्यथ वृत्तानि कल्पयेत् कल्पवित्तमः ४५
उद्वास्यशिल्पिनं पश्चात् विप्रान् संभोजयेत्ततः
पुण्याहं वास्तोहोमश्च स्थण्डिलं शयनं तथा ४६
स्नपनं केशगौरी श्रीदेवीनां कौतुकम् पृथक्
शयने शाययेद्देवन्तस्य वामे च दक्षिणे ४७
कृष्णञ्चैवाथभिन्न शय्यायां शाययेत् गुरुः
देव्यास्तु मण्डपे देवीं शाययेद्दक्षिणे श्रियम् ४८
उत्तरे शाययेद्वह्निं संकल्प्य शयनं पृथक्
रक्तेन वासमा देवं देविं पीतेन केशवम् ४९
कृष्णेन पद्मां शुभ्रेण तद्वर्णेन पितामहम्
आचार्या स्संग्रहीतव्याः प्रतिमण्टपमुत्तमाः ५०
गुरवः प्रतिदेवं वा संग्राह्यामुनिपुंगवाः

देवोत्तमांग देशेतु शिवकुंभञ्च वर्धनीम्  ५१
ब्रह्मविष्णवोश्शिरोदेशे विन्यसेत्तु घटद्वयम्
परितोटौ घटान्यस्व विद्येशाधिष्ठिता न्यसेत्  ५२
देवी श्री पावकानान्तु शिरोदेशे घटत्रयम्
वामाद्याधिष्ठितानष्ट कुंभाश्च परितो न्यसेत्  ५३
तल्लक्षणोदिताकारं ध्यानयुक्तस्वतन्त्रयुक्
यजेत् गंधादिभिर्देवा नैवेद्यान्तैः पृथक् पृथक्  ५४
तत्वमूर्त्यादिविन्यासं कारयेत् पूर्ववत् प्रभोः
अन्येषां स्तत्तदध्याय प्रोक्तांस्तत्वादिकान्यसेत्  ५५
ततो होमः प्रकर्तव्यः कृत्वा कुण्डाग्नि संस्कृतम्
समिदाज्यान्नलाजैश्च तिलसर्षपमुद्रकैः  ५६
पलाशोदुम्बराश्वत्थ वटाः पूर्वादि दिक्षु च
शम्यपामार्ग श्रीवृक्ष मायूरावह्निकोणतः  ५७
प्रधाने तु पलाशस्यात् सर्वत्रैव च वामतः
प्रत्येहं पूर्ववत् हुत्वा पूर्णान्ते देशिकोत्तमः  ५८
स्वगृहेतत् प्रदेशे वा स्वपेतायास शान्तये
प्रभाते कृतनित्यन्तु कर्ता संपूजयेत् गुरुम्  ५९
वस्त्रहेमांगुलीयाद्यैः मूर्तिपाद्यैस्समन्वितम्
तदन्ते दक्षिणान्दत्वा पञ्चनिष्कादि सम्मिताम्  ६०
प्रतिमाग्रे घटन्नयस्त्वा कुंभान् बीजन्तु विन्यसेत्
वर्धन्याबीजमादाय देवीहृदय मध्यमे  ६१
सहजा चेदुमादेवी भिन्ना चेत् पीठमध्यमे
भिन्नपीठाथवा देवी तद्गतं वा मनुं न्यसेत्  ६२
अन्येभ्यो बीजमादाय पीठस्यपरितो न्यसेत्
संपूज्य स्नपनं कुर्यादर्चनोक्तवदर्चयेत्  ६३
दत्वा नैवेद्यमन्तेतु प्रतिष्ठोत्सवमाचरेत्

कश्चिदस्मिन्विशेषोस्ति श्रूयतां द्विजसत्तमाः ६४
सदाशिवादि देवानां देवीयस्य यथा मता
तथा विध्येया सा देवी स्वतन्त्रे देव पद्मनि ६५
प्रासाद मराटपादीनां बाह्ये संस्थापिता यदा
तेषां हस्तादिविन्यास स्वस्वपूर्वादि देशतः ६६
यथा वा लभते शोभा बलन्तेषां यथा भवेत्
तेषां देव्यश्वतत्पार्श्वे कर्तव्या वा न वामताः ६७
सवतन्त्रे सर्वथाकार्या वृषवाहनकादिषु
दक्षिणेशादि देवानान्देव्यो नक्वापिसम्मताः ६८
प्रासादभित्तिदेवानां प्रतिष्ठाभिन्नगानवा
एवं मर्त्योऽपि यः कुर्यात् वाञ्छितं फलमाप्नुयात् ६९

इति उत्तरकामिकाख्ये महातन्त्रे कल्याणमूर्तेः प्रतिष्ठा विधिः
अष्टापञ्चाशत्तमः पटलः

जटामकुट संयुक्तः चन्द्रार्धकृतशेखरः
त्रिदृक् चतुर्भुजश्चैव नवयौवन गर्वितः
समभङ्गयुतो देवः स्थानकः संप्रकीर्तितः
कुञ्चितः सव्यपादस्तु स्थितसव्येतरांध्रिकः
इन्दुशेखर हस्ताभ परहस्त द्वयान्वितः
जलसंग्रहणे योग्य वरवामकरान्वितः
स्वदक्षिणगृहीतो वा दक्षहस्तः प्रसन्नधीः
पूर्ववत् कथितं देव्या मानं विप्रोत्तमास्त्विह
देवी दृगास्य चिबुक कक्षनूचुक मानका
तद्देव्यपर भागस्था श्रीदेवी सर्वलक्षणैः
यक्ता देवी मध्यमर्कां शस्तद्वन्नाभिजान्तरम्
देवोच्च दशभागैक भागादेक दशावधि

भागमानयुतः श्यामः किरीट मकुटान्वितः
गृहीत शङ्खचक्रश्च हस्ताभ्यां धृतयापि च
तोयकुण्डिकयोपेतो विष्णुरेव उदाहृतः
हरेरक्त प्रमाणेन ब्रह्माणमपि कारयेत्
चतुर्मुखं चतुर्बाहुं जटामकुटमण्डितम्
होमोन्मुखं प्रसन्नं तं कुङ्कुमक्षोदसन्निभम्
मौञ्जीमेकलोपेतं सोपवीतोत्तरीयकम्
वामेतरकरावूर्ध्वौ कमण्डल्वक्षधारकौ
वराभयाकरौ पूर्वौ स्यातां तौ दक्षिणेतरौ
स्त्रुवपात क्रियोपेतौन्योतु कटकामुखौ
भूषणानां च सर्वेषां वामदक्षिण भेदतः
दर्शनं सर्वबेराणां सर्वेषां द्विजसत्तमाः

## एकोनषष्टितमे पटले कल्याण कर्म विधिः

वक्ष्ये कल्याण कर्मापि सर्वदेवे सनातने
पूर्वोक्ते सुमुहूर्ते तु तद्दिने वा परे दिने १
तृतीयेऽह्नि चतुर्थे वा दिवाकालेऽर्धरात्रके
प्रपायां मण्डपे वेष्टदेशे गोमयलेपिते २
स्तण्डिलं तत्र संक्ल्प्य सितवस्त्रोत्तरच्छदम्
स्तापयेत्तत्र देवेशं भूषितं भूषणार्हकैः ३
गेयपञ्चमहाशब्दं छत्र चामर दर्पणैः
अनेक धूपैः सद्दिपैः आनीतं शिबिकादिभिः ४
प्राङ्मुखं तत् पुरः स्थण्डिलं सिकतादिभिः
देवस्थण्डिलयोर्मध्ये स्थापयेद्वह्नि मूर्तिनम् ५
तस्यैव वामभागेऽजं सौम्यास्यं दक्षिणाननम्
विष्णुं तत्सव्य भागे तु वस्त्राभरण भूषितम् ६

पाद्याचमनं सदशं चाम्बरद्वयम्
ग्राच्छादनोत्तरीयार्थं गुरुर्दद्यात् प्रभोर्हृदा ७
स्थरिडलेऽग्निं विनिक्षिप्य पञ्चसंस्कार माचरेत्
सषडङ्गं शिवं चेष्ट्वा समिदाज्यानकैस्सह ८
पूर्णाहुतिं तदा दत्वा सर्वभरण संयुताम्
गौरी मीश्वर सव्ये तु हृद संस्थाप्य देशिकः ९
पाद्या चमनं चार्घ्यं दद्यात्तेनैव मन्त्रतः
देव्यामङ्गल सूत्रं तु दद्याद् धृदयमन्त्रतः १०
ग्राच्छादनोत्तरीयार्थं वस्त्रयुग्मं च दापयेत्
ग्रथ पार्श्वेन्यसेल्लक्ष्मीं देव्यास्सर्वाङ्ग सुन्दरीम् ११
कौतुकं बन्धयेद्देव देव्योस्सर्वात्मना गुरुः
शिवाद्विज कुलोद्भूत स्समधीत शिवागमः १२
सोष्णीषस्सोत्तरीयश्च धृतपञ्चाङ्ग भूषणः
ग्रनेन गुरुणा दिष्टो गुरुरन्यः प्रसन्नधीः १३
वस्त्रद्वयाङ्गुलीयस्सन् निजदेहं तु विष्णुवत्
ध्यात्वोदकं हृदा दद्यात् कराभ्यां करकेण च १४
शैवेऽपरे करे भस्म पश्चाद्दद्याद्द्वयोरपि
पुरयाहं वाचयेत्पश्चात् सूक्त वेदधनीनपि १५
समिधः षोडशैवाग्नौ शिवेनाङ्गैश्च तर्पयेत्
गुडदुग्धाज्य संमिश्रं मधुपर्कं हृदा प्रभोः १६
दद्याद्वक्त्रेण चाचान्तं पुनराज्येन वै हृदा
हुत्वा षोडश संख्यातं ततस्त्वाज्येन षोडश १७
नैवेद्यं चोपदंशं तु दत्वा शान्तिं च वै हृदा
ताम्बूलमपि तेनैव स्तुत्वा परमकारणम् १८
त्रिंशद्दर्भमितं कृत्वा ग्रन्थियुक्तं द्वितालकम्
शिवहस्तमिति ध्यात्वा गौर्या हृदि हृदा न्यसेत् १९

तस्माद्दक्षिण कर्णे तु बीजमुख्यं जपेद् गुरुः
ततो वामेऽश्म संस्थाप्य शालिस्थण्डिलकोपरि २०
पूर्वोक्त शिवहस्तेन देव्या दक्षिणपात्तलम्
संगृह्य विन्यसेत् तस्मिन्नश्मन्येव हृदा गुरुः २१
उष्णीषाद्यैस्ततो विष्णुं तोषयेदीश्वराज्ञया
प्राग्वद्दर्भस्य हस्तस्य कृत्वैवाथ चतुष्टयम् २२
शिवहस्तद्वयं देव्या हस्तद्वयमिति स्मरेत्
तत शिवाग्निं प्रज्वाल्य हस्तैस्तैस्तु विनिक्षिपेत् २३
अतीवधवलान् लाजान् शुद्धानस्त्रेण शोधितान्
देशिकस्य तथान्यस्य सङ्गुलीय करेण च २४
प्रदद्यात् हृदयेनैव तस्मिन्नाग्नौ शिवानुणा
अग्नेः प्रदक्षिणं कृत्वा संस्पृस्याश्म ततो गुरुः २५
द्वीइयं लाजदानं च प्रदक्षिण मनुव्रजेत्
कृत्वैव मपरं चापि व्यहृतिं जुहुयात्ततः २६
शतमष्टोत्तरं कृत्वा पूर्णां चान्ते शिवेन तु
विसृज्य पावकस्थं तं शिवं साङ्गं तु पूर्ववत् २७
शिवाग्निं च विसृज्याथ तद् भस्म च विसर्जयेत्
संपूज्य पुष्कलैः गन्धपुष्प स्त्रगादिभिः २८
ततश्चतुर्थदिवसे चतुर्थं कर्म कारयेत्
तद्दिने वापरे वापि दिवाकालेऽर्धरात्रके २९
समिदाज्यानकैरग्नो पञ्च संस्कार संस्कृते
शिवेनैव शतं शाङ्गैः प्रत्येकं दशकं हुनेत् ३०
अधोरास्त्रं शतं हुत्वा पूर्णां दद्याच्छिवाणुना
शयनं चर्मजाद्यैर्वा पञ्च वस्त्रस्तु वानयेत् ३१
वर्मणा तच्च संपूय नवखट्गोपरि स्थितम्
दम्पती तत्र विन्यस्य चापूपाद्यैस्तु तोषयेत् ३२

स्नपनं कारयेन्नोवा तदन्ते तु शिवोत्सवम्
चलं चेदचलं चेत्तु स्थापयेत्तु सहासने ३३
देवं ह्रीश्रीयं विद्वान् वह्निं तत्पुरतो नयेत्
वह्नेर्वामेऽप्य वामेऽजं हरिं वा विपरीततः ३४
एवमेवान्यदेवानां कर्म वैवाह्यमाचरेत्
भिन्नपीठाम्बिकानां तु मूललिंगस्य च द्विजाः ३५
किंतु श्री हरिबेरायां ब्रह्मबेरेण वोज्झितम्
गन्धाद्यैः स्थण्डिलं तत्र तानभ्यर्चैव कारयेत् ३६
मूललिंगस्य चोद्वाह्ये गर्भागारात्तु मण्डपे
विन्यस्य स्थण्डिले देवीं कर्मवैवाहिकं नयेत् ३७
प्रतिष्ठा कर्म यः कुर्यादेवं कल्याणमूर्तिनः
स्वबन्धुजन वर्गैस्तु सर्वैरेतैरतन्द्रितः ३८
आयुः श्रीकीर्ति संयुक्तः पुत्तपौत्रादि संयुतः
इहलोके सुखं प्राप्य नृपणामपि दुर्लभम् ३९
गच्छत्स्वदेह पादान्ते शैवं स्थान मनुत्तमम्
यत्दग्वा निवर्तन्ते मम भक्ता द्विजोत्तमाः ४०
इति उत्तर कामिकाख्ये महातन्त्रे कल्याण कर्म विधिरेकोनषष्टितमः पटलः

## षष्ठितमे पटले विष्णूमार्ध प्रतिष्ठा विधिः

विष्णूमार्ध प्रतिष्ठां तु वक्ष्ये तल्लक्षणान्वितम्
द्रव्यैश्शिलादिभिः कुर्यात् प्रतिमां तु विशेषतः १
उमार्धं दक्ष शश्यर्धाङ्कितमग्रजाः २
करमकुटं वाममलकेन समन्वितम्
ललाट दक्षिणे भागे नयनार्धेन संयुतम् ३
पत्रं तु वामकर्णे स्याद्वालिकेनापि संयुतम्

सनक्र कुराडलं तं विनावाथ कारयेत् ४
सव्ये टङ्काभयौ हस्ते उत्पलं वामगे करे
देव्यध्यायोदि तास्त्रं वा दर्पणासक्त लोचनम् ५
दर्पणं मुख वृत्तं स्यात्तन्मुष्टिस्स्यातदर्धतः
तत्पुच्छं मुकुलाकारं पादे शोभाविराजितम् ६
उमाभागं स्तनपेतं चित्रवस्त्रपरिच्छदम्
व्याघ्राजिनांबरं सव्यपादं कुञ्चितमिष्यते ७
सुस्थितं वामचरणं नूपुरेणाप्यलंकृतम्
आभङ्ग सहितं तच्च कोलकाङ्गुलकैर्नतिः ८
वामं मरकताभं स्यात् दक्षिणं मणिसन्निभम्
नाभिहृन्मेढ्रदेशोभ्यो वामे दक्षे च वामके ९
चन्द्रे तु भागान् हित्वाग्रे स्थितांङ्घ्रिमध्यमे नयेत्
सूत्रमुत्पल हस्तोच्चं चूचुकां तदनन्तरम् १०
द्वादशाङ्गुलमित्युक्तं विश्वाङ्गुलमथापि वा
पार्श्वमध्यम बाह्वोस्तु मध्यमं तु षडङ्गुलम् ११
अङ्गुष्ठापार्ष्णि मध्यं तु तिथिभूताङ्गुलं भवेत्
चन्द्रशेखर वच्छेषं कर्तव्यं हिं मुनीश्वराः १२
अर्धनादीश्वरोह्येवं हर्यर्धं श्रुणुतद्विजः
प्राग्वत्कृत्वा महेशार्धं विष्णवर्धमितरत्र च १३
भुजद्वययुतं शङ्ख कटकस्तत्र संमतः
पीतांबर समोपेतं सर्वाभरण संयुतम् १४
चन्द्रशेखर वच्छेषं सूत्र पातादिकं भवेत्
हर्यर्धमेवं ब्रह्मादि भागं चैवं समाचरेत् १५
बेरमेवं समापाद्य प्रतिष्ठां कारयेत्ततः
तां प्रतिष्ठां च विप्रेन्द्राः शृणुध्वं हि समासतः १६
कालः पूर्व समादिष्टस्तद्वदेवाङ्कुरार्पणम्

रत्नन्यासाद्विमोन्नौ च मृदाद्यैर्बेरशोधनम् १७
प्रदन्तिणं पुरादीना मुदके चाधिवासनम्
सामान्यस्थापन प्रोक्त मार्गेणैव समाचरेत् १८
किं त्वर्धभागं देवाणु संयुक्तं कारटेद् गुरुः
मुख वास ग्रहेष्वेक कुगडं तु परिकल्पयेत् १९
प्राच्यैश दन्ने वेदाश्रं कुगडमेकं तु कल्पयेत्
शिल्पिनं तु विसृज्याथ विप्रान् संभोजयेत्ततः २०
पुगयोदसेचनं कृत्वा स्थगिडलं च ततो नयेत्
शयनं कल्पयेत्तस्मिन् स्नपनं कौतुकं पृथक् २१
बन्धयेद्देशिकां धीमानुभयोः पूर्वहस्तयोः
शयनारोहणं कृत्वा शाययेद्देवमादरात् २२
शिरः प्रदेशे देवस्य शिवकुंभं तु विन्यसेत्
उमोत्तमाङ्गदेशे तु वर्धनीं विन्यसेत् गुरुः २३
विष्णुश्चेत्तच्छिरोदेशे विष्णु कुंभं तु विन्यसेत्
तत्तत् कायार्धभागं तु तत्र ध्यात्वा यजेत् गुरुः २४
परितोष्टघटान् न्नयस्त्वा विद्येशाधिष्टितान्नयेत्
गन्धस्त्रग्धूप नैवेद्य प्रमुखैर्देशिकोत्तमः २५
तत्वतत्वेश्वरन्यासं कृत्वा व्याप्तिं च भावयेत्
न्मामूर्त्यष्टकं न्यस्त्वा मूर्तीशनपि विन्यसेत् २६
मूर्तीशानां तु विन्यासे विशेषः कश्चिदिष्यते
शर्वं च पशुपत्युग्ररुद्रांश्चेतांबलोत्कटान् २७
धात्रीं विभ्वीमथेन्द्रादि काष्ठादि क्रमशो न्यसेत्
विष्गवर्ध स्थापने शर्व पशुपत्युग्ररुद्रकान् २८
पुरुष्टुतं च विष्णुं च गोविन्दं वित्तनाथकम्
पञ्चमूर्त्यात्मकेन्यासे मूर्तयः पूर्ववर्त्मना २९
ब्रह्माणं केश्वं ज्ञानी मीच्छां तु पश्चिमात्

न्यसेद् गौर्यर्ध पक्षे तु ब्रह्माविष्णू च रुद्रकम्  ३०
जनार्दनं ततस्सम्यक् पुरुष्टुतमथाप्यथ
न्यसेत् विष्णवर्ध पक्षे तु पञ्चमूर्तीश्वरानपि  ३१
शिवांशे शिवमन्त्रं न्यसेदन्यत्र तन्मनुम्
ईशादि संहिता मन्त्रान् देवस्यार्धे तु विन्यसेत्  ३२
तत्रैव योजयेदन्य देवोक्ते शाद्यणून्मनून्
एवमेवान्य मन्त्रांश्च युक्त्या ज्ञात्वैव विन्यसेत्  ३३
संस्कृत्य कुण्डमन्ते तु जनयेत्तत्र पावकम्
अवाह्य मूर्तिमूर्तीशांस्तत्तद्दिक्षु व्यवस्थितान्  ३४
समिदाज्यान्नलाजैश्च तिल वेणुयवैरपि
होमयेत् सर्वमन्त्रैश्च प्रधाने पूर्ववद् गुरुः  ३५
पलाशोदुम्बराश्वत्थ वटाः प्रागादि दिक्षु च
शम्यपामार्ग श्रीवृक्षमायूरा वह्निकोणतः  ३६
प्रधानेऽपि पलाशः स्यात् विशेषः कश्चिदिष्यते
विष्णवर्ध पक्षे तुलसी पलाशश्च प्रधानके  ३७
ततो द्वितीये दिवसे देवान् कुंभाश्च पावकान्
यजेद् गन्धादिभिश्चैवं वस्त्र हेमाङ्गुलीयकैः  ३८
मूर्तिपाद्यैर्गुरुं चेष्ट्वा दक्षिणां दापयेत्ततः
शुभे महूर्ते संप्राप्ते मन्त्रन्यासं समाचरेत्  ३९
कुंभान्मनूंश्च वर्धन्या शिवोमांशे क्रमान्यसेत्
विष्णवर्धपक्षे वर्धन्या मनुं पीठे तु विन्यसेत्  ४०
कृष्णस्य कुंभात् कृष्णस्य बीजं कृष्णहृदि न्यसेत्
अन्येभ्यो बीजमादाय तत्पीठे परितो न्यसेत्  ४१
उत्सवं स्नपनं भूरि नैवेद्यं कारयेन्नवा
अनुक्तमत्र संग्राह्यं तद्देव स्थापनोदितम्  ४२
विष्णूमार्ध प्रतिष्ठा तु कथिता भुक्ति मुक्तितदा  ४२ १-२

इति उत्तरकामिकाख्ये महातन्त्रे विष्णूमार्ध प्रतिष्ठाविधिः
षष्ठितमः पटलः

उमार्ध वाम भागन्तु हरार्धं दक्षिणं वपुः
सजटामकुटं दक्ष शश्यर्धाङ्कितमग्रजाः
करण्ट मकुटं वामं मलकेन समन्वितम्
ललाट दक्षिणे भागे नयनार्धेन संयुतम्
पत्रं तु वामकर्णेस्यात् वालिकेनापि संयुतम्
सनक्र कुण्डलं सव्ये तं विना वाथ कारयेत्
संव्ये टंकाभयौ हस्ते उत्पलं वामगे करे
उमा भागं स्तनोपेतं चित्रवस्त्र परिच्छदम्
व्याघ्राजिनाम्बरं सव्यपादं कुञ्चितमिष्यते
सुस्थितं वामचरणं नूपुरेणाप्यलंकृतम्
आभङ्गसहितं तच्च कोलकाङ्गुलकैर्नतिः
चन्द्रशेखरवत् शेषं कर्तव्यं हि मुनीश्वराः

प्राग्वत् कृत्वा महोशार्ध विष्णवर्ध इतरत्र हि
भुजद्वयुतं शङ्कं कटकस्तत्र संमतः
पीताम्बर समोपेतं सर्वाभरण संयुतम्
चन्द्रशेखरवत् शेषं सूत्रपातादिकं भवेत्

एकषष्ठितमे पटले त्रिमूर्ति स्थापन विधिः
त्रिमूर्ति स्थापनं वक्ष्ये तल्लक्षण पुरस्सरम्
रक्तवर्णस्त्रिणेत्रश्च वरदाभय हस्तकः १
कृष्णा परशु संयुक्तो जटामकुटमण्डितः
ऋज्वागतस्तथैकेन पादेनापि समन्वितः २

दक्षिणोत्तरयोश्चैव पार्श्वयोरुभयोरपि
कटि प्रदेशादूर्ध्वे तु ब्रह्मविष्ण्वर्ध काययुक् ३
स्त्रीमान वत्योर्मानं ब्रह्मविष्ण्वोस्तु कल्पयेत्
कृताञ्जलिपुटौ एकपादयुक्तौ च वा मतौ ४
अथवा शिवलिंगस्य पार्श्वयोः नतगतौ तु तौ
अथवा तौ पृथक् स्थाप्या वेकविष्टरमस्थितौ ५
अथवा मध्यमे लिंगं पृथगालय संस्थितम्
तस्यसव्येपि असव्ये च ब्रह्म विष्णू तथा मतौ ६
पृथग्धामस्थिता वा एकधामस्था वा त्रिमूर्तयः
संश्लिष्ट धामयुक्ता वा ब्रह्मविष्णुशिवा मता ७
पूर्वास्याः पश्चिमास्या वा परिवारादि संयुताः
भिन्नप्रकारगा वापि एक प्राकारसंस्थिताः ८
नृत्तमूर्त्यादि देवा वा स्थापनीयास्तु मध्यमे
एवं लक्षणमादिष्टं प्रतिष्ठा विधिरुच्यते ९
शिवलिंग प्रतिष्ठा च ब्रह्मणः केशवस्य च
तत्तदध्याय संसिद्धाः कर्तव्या मुनि पुङ्गवाः १०
इदानीमेकपादस्य प्रतिष्ठा विधिरुच्यते
पूर्ववत् काल इत्युक्त स्तद्वेदेवाङ्कुरार्पणम् ११
रत्नन्यासं च दृङ्गिक्षं बेरशुद्धिं पृथङ्नयेत्
प्रक्षिणं जलावासं मण्डपं पूर्वन्नयेत् १२
कुण्डानि कारयेत्तत्र नवपञ्चैक संख्यया
दिगश्राण्यथ वृत्तानि चतुरश्राणि तानि वा १३
तक्षकोद्वासनं विप्रभुक्तिं पुण्योदसेचनम्
स्थण्डिलं शयनं स्नानं कौतुकानां च बन्धनम् १४
ब्रह्मविष्णु हराणां च दक्षहस्ते तु वै पृथक्
शयनारोहं कुंभ स्थापनं पूर्वन्नयेत् १५

देवस्य ब्रह्मणेः विष्णोः शिरोदेशे घटत्रयम्
न्यस्त्वा तु शिवकुंभस्य उत्तरे वर्धनीं न्यसेत् १६
तत्तद्रूपं तु तत्रैव ध्यात्वा गन्धादिभिर्यजेत्
तत्वमूर्त्यादि विन्यासं तेषां कुर्याद्यथोदितम् १७
अग्निकुण्डादि संस्कारं कृत्वा होमं तु कारयेत्
तिलसर्षप मुद्गांश्च माषशिंबाद वैणवैः १८
पलाशोदुंबराश्वत्थ न्यग्रोधाः प्राग्दिगादितः
शम्यमामार्ग श्रीवृक्ष प्लक्षा श्चाग्नेयकोणतः १९
प्रधाने तु पलाशस्यात् स च सर्वत्र वा मतः
ततो द्वितीय दिवसे देव कुंभाग्नि तर्पणम् २०
पूजितो वस्त्र हेमाद्यैः मूर्तिपाद्यैस्समन्वितः
संप्राप्त दशनिष्कादि दक्षिणस्तुष्टधीर्गुरुः २१
मन्त्रन्यासं ततः कुर्यान्नयस्त्वा बिंब पुरो घटान्
कुंभान्मनुं समादाय देवस्य हृदि विन्यसेत् २२
वर्धन्या बीजमादाय तस्य पीठे तु विन्यसेत्
ब्रह्म विष्णु घटाद्बीजं तद्धृदि विन्यसेत् २३
आदाय बीजमन्येभ्यः पीठस्य परितो न्यसेत्
तत्तत् कुंभजलैश्चैव तत्तद्देशेऽभिषेचयेत् २४
स्नपनं चोत्सव कुर्याद् भूरि नैवेद्यमेव च
अनुक्त मत्र संग्राह्यं तत्त दध्याय चोदितम् २५
प्रतिष्ठेयं कृतायेन त्रिमूर्तीनां नरेण तु
इह लोके सुखं प्राप्ते याति सोऽन्ते परं शिवम् २६

इति उत्तरकामिकाख्ये महातन्त्रे कृतायेन त्रिमूर्ति स्थापन विधिर्नाम
एकष्टितमः पटलः

रक्तवर्णः त्रिणेत्रश्च वरदाभय हस्तकः
कृष्णापरशु संयुक्तः जटामकुटमण्डितः
ऋृज्वागतस्तथैकेन पादेनापि समन्वितः
दक्षिणोत्तरयोश्चैव पार्श्वयोरुभयोरपि
कटिप्रदेशदूर्ध्वेतु ब्रह्मविष्वर्धकाययुक्
सतीमानवत्तयोर्मानं ब्रह्मविष्णोस्तुकल्पयेत्
कृताञ्जलिपुटावेक पादयुक्तौ च वामतौ

द्विष्ठितमे पटले वृषभारूढ प्रतिष्ठा विधिः

वृषारूढ प्रतिष्ठां तु वक्ष्ये तल्लक्षणान्विताम्
चतुर्भुजस्त्रिणेत्रश्च जटामकुट संयुतः १
परशुर्दक्षिणे हस्ते वामहस्ते मृगेश्रो भवेत्
पूर्वदक्षिण हस्तस्तु कटको वक्रदण्डयुक् २
अस्य सव्य प्रकोष्ठं तु विन्यसेद् वृषमस्तके
स हस्तो हंस पक्षो वा पताकाधोमुखस्तु वा ३
तन्मध्यां गुलाग्रेण नाभि सूत्रं समं भवेत्
तदग्रान्नाभिसूत्रान्तं पञ्चाधिक दशाङ्गुलम् ४
तद्धस्त मणि बन्धाच्च पार्श्वतो द्वयङ्गुलं भवेत्
प्रकोष्ठमूलाद् धृन्मध्यात् पञ्चाङ्गुलं भवेत् ५
हस्तस्य मणिबन्धाधो मेढ्र मूल समो भवेत्
एकोन विंशन्मात्रं स्यात् पार्श्वतो मणि बन्धकम् ६
पार्श्व मध्यम बाह्वोश्च मध्ये सप्ताङ्गुलो भवेत्
समभङ्गयुतो देवः स्थानकेनापि संयुतः ७
ललाट घ्राणमध्याच्च दक्षिणे स्थितपादके
गुल्फमध्ये स्थितं सूत्रं शिवसूत्रिमिति स्मृतम् ८
सूत्रं हृन्मध्यगं प्रोक्तं गुणाङ्गुलमिति स्मृतम्

सूत्रं नाभ्यन्तरं मात्रं चतुर्भिर्मेढ्र सूत्रयोः ९
सूत्र दक्षिण जान्वोस्तु मध्यमं हि गुणाङ्गुलम्
शराङ्गुलोऽन्तरे पार्ष्ण्योर्दक्षपादस्य वक्रताः १०
द्व्यङ्गुलेन तु शेषं तु चन्द्रशेखर वद्भवेत्
तस्यैव दक्षिणे देवीं कारयेल्लक्षणान्विताम् ११
अथ स्वदक्षिणे देव्या युक्तो वा मूर्त्यपेक्षया
आयुधव्यतिरिक्तैःस्वै रङ्गैस्तु विपरीतकैः १२
संयुक्तो वा वृषारूढस्त्वेवं मुक्तिप्रदो भवेत्
पृष्ठस्थो वृषभो देवजानूरुकोच्छ्र्यः १३
मेढ्रान्तो नाभि सीमान्तश्शेषं सर्वं तु पूर्ववत्
एवं देवं समापाद्य शिलाद्यैः स्थापनं नयेत् १५
कालेऽङ्कुरार्पणं रत्नन्यासं संप्रोक्षणं नयेत्
वृषस्य नेत्रमोक्षं तु शुद्धिं ग्रामप्रदक्षिणम् १५
जलाधिवासनं कृत्वा मण्डपं पूर्ववन्नयेत्
कुण्डानि नवपञ्चैक संख्यया तत्र कारयेत् १६
चतुरश्राणि वृत्तानि तद्दिगश्राणि तानि वा
पश्चाच्छिल्पिनमुद्वास्य तस्मिन्विप्रांस्तु भोजयेत् १७
पुण्याह प्रोक्षणं कृत्वा स्थण्डिलं शयनं न्यसेत्
स्नपनं कौतुं कुर्यात् वृषेऽपि च यथोदितम् १८
आरोप्य शयने पश्चात् कुंभान् संस्थापयेत्तमः
शिवस्य च शिरोदेशे शिवकुंभं च वर्धनीम् १९
यदि भिन्नो वृषो देवपादमूले तु शाययेत्
दक्ष मस्तक संयुक्तां शय्यां संकल्प्य व पृथक् २०
वृषमस्तकदेशे तु वृषकुंभं तु विन्यसेत्
परितोष्ट घटान्नयस्त्वा विद्येशांस्तत्र पूजयेत् २१
गन्धपुष्पादिभिर्धीमान् नैवेद्यान्तैर्गुरूत्तमः

तत्वमूर्त्यादि विन्यासं कृत्वा देवे वृषेऽपि च  २२
अग्निकुण्डादि संस्कार कृत्वा होमं समाचरेत्
समिदाज्यान्नलाजादि तिलसर्षप माषकैः  २३
पलाशोदुंबराश्वत्थ वटाः प्रागादि दिक्षु च
शम्यपामार्ग श्री वृक्ष मायुरोत्था भवन्ति हि  २४
प्रधानेऽपि पलाशस्यात् तर्पयेत्तत्र वै वृषम्
ततो द्वितीये संतर्प्य देवान् कुंभांश्च पावकान्  २५
समूर्तिपो गुरुस्सम्यग् वस्त्र हेमादि पूजितः
संप्राप्त दक्षिणः पश्चान्मन्त्रन्यासं समाचरेत्  २६
घटान्नयस्त्वा तु देवाग्रे स्थण्डिले तु गुरुः क्रमात्
कुंभाद्बीजं समादाय देवस्य हृदि विन्यसेत्  २७
वर्धन्याः मनुमादाय तस्य पीठे तु विन्यसेत्
सहजा यदि सा देवी तस्यास्तु हृदि विन्यसेत्  २८
वृष कुंभान् मनुं स्मृत्वा वृषभस्य हृदि न्यसेत्
अन्येभ्यो बीजमादाय पीठस्य परितो न्यसेत्  २९
विभीन्न पीठा देवी चेत् प्रतिष्ठां पृथगाचरेत्
कल्याणं कारयेत्पश्चात् तद्विधानेन देशिकः  ३०
उत्सवं स्नपनं भूरि नैवेद्यं कारयेन्नवा
अनुक्तमत्र संग्राह्यं सामान्य स्थापनोदितम्  ३१
इत्याख्याता प्रतिष्ठेयं वृषवाहनमूर्तिनः
घनो वाप्य घनो वापि वृषभस्य च संमतः  ३२
प्रतिष्ठानुष्ठिता येत्र भक्त्या भावनया सह
लभेते स पदं शैवं भुक्त्वा भोगान्यथेच्छया  ३३

इति उत्तरकामिकाख्ये महातन्त्रे वृषभारूढ प्रतिष्ठा विधिः
द्विषष्ठितमः पटलः

वृषभारुधः
चतुर्भुजस्त्रिणेत्रश्च जटामकुट संयुतः
परशुर्दक्षिणे हस्ते वामहस्ते मृगो भवेत्
पूर्वदक्षिण हस्तस्तु कटको वक्रदराडयुक्
अस्य सव्य प्रकोष्ठं तु विन्यसेत् वृषमस्तके
सहस्तो हंसपक्षोवा पताकाधोमुखस्तु वा
तन्मध्यमाङ्गुलाग्रेण नाभिसूत्रं समं भवेत्
समभङ्गयुतो देवण् स्थानकेनापि संयुतः
तस्यैव दक्षिणे देवीं कारयेल्लक्षणान्विताम्
अथ स्वदक्षिणे देव्या युक्तो वा मूर्त्यपेक्षया
आयुधर्व्यतिरिक्तैः स्वैरङ्गः तु विपरीतकैः
संयुक्तो वा वृषारूढः त्वेवं भुक्तिप्रदो भवेत्
पृष्ठस्थो वृषभः कार्यः देवजानूरुकोच्छ्रयः
मेद्रान्तो नाभिसीमान्तः शेषं सर्वं तु पूर्ववत्

## त्रिषष्ठितमे पटले गङ्गाधर प्रतिष्ठा विधिः

गङ्गाधर प्रतिष्ठां तु वक्ष्ये तल्लक्षणान्विताम्
चतुर्भुजस्त्रिणेत्रश्च जटामकुट मरिडतः १
दक्षिणाभय हस्त स्थोऽप्यन्यत्र कटकामुखः
तेन हस्त्ने धृत्वैकां जटां गङ्गासमन्विताम् २
संस्थितस्तु प्रसन्नात्मा कृष्णापरशु संयुतः
जटायुक्त करोच्चं तु कर्णस्योर्ध्व समं भवेत् ३
तदन्तरं तु द्विमुख माभङ्गेन समन्वितम्
स्थानकस्तु तदुष्णीष नासापाद् दक्षमध्यमे ४
सूत्रं वामे तु हृदयाद्दक्षे वै नाभिमढ्रयोः
हिक्का सूत्राच्चतुर्मात्रं सव्यजानोर्गुणाङ्गुलम् ५

पादाङ्गुष्ठद्वयोः पाष्र्ययन्तरं तिथि बाणकम्
वाम पादस्य वक्त्रं तु सूत्राद्वामे गुणाङ्गुलम् ६
इन्दुशेखर वच्छेषं कर्तव्यं मुनिपुङ्गवाः
देवस्य वामभागे तु देवीं कुर्यात्सलक्षणाम् ७
कुर्याद् भगीरथं देवनाभ्यन्तस्तनसीमगम्
गलान्तं वाष्टतालेन विलंबितं जटान्वितम् ८
वल्कलाम्बरं संयुक्तं हृन्मस्तक कृताञ्जलिम्
द्विनेत्रं च द्विबाहुं तमेवं गङ्गादधरो भवेत् ९
कालेऽङ्कुरार्पणं रत्नन्यासो वै नेत्रमोक्षणम्
रत्नन्यासो न गङ्गायाः करव्यो नेत्रमोक्षणम् १०
तथा भगीरथस्यापि रत्नन्यासस्तु पञ्चभिः
प्रतिमाशोधनं ग्राम पुरादीनां प्रदक्षिणम् ११
तोयाधिवासो यागार्ह मण्डपः पूर्ववर्त्मनः
चतुरश्राणि कुण्डानि नवपञ्चैक संख्यया १२
मोचनं शिल्पिनः कृत्वा कुर्याद् भूसुर भोजनम्
पुण्याहोदेन संसिच्य वास्तु होमं ततो नयेत् १३
स्थण्डिलं शयनं बिम्ब स्नपनं कौतुकं
भगीरथस्य गङ्गायाः देवस्यापि नयेत् गुरुः १४
शयनं भिन्नपीठस्थो यदि स्यात्तु भगीरथः
देवस्य पाददेशे तु शयनं तत्र कल्पयेत् १५
देवेशस्य शिरः पार्श्वे शिवकुंभं च वर्धनीम्
भगीरथ शिरोदेशे घटं वस्त्रादि भूषितम् १६
हैरण्य पङ्कजाढ्यं वा गङ्गायाश्चैव माचरेत्
परितोष्टौ घटान्नयस्तवा विद्येशस्तैसधिष्टितान् १७
पूर्वक्त रूप संस्थान् ध्यान युक्तो गुरुत्तमः
गन्धपुष्पादिभिः सर्वान्देवान् अभ्यर्चयेत् क्रमात् १८

तत्व मूर्त्यादि विन्यासं प्रकुर्यात्पूर्ववत्प्रभोः
भगीरथस्य मूर्तीशैः पञ्चभिश्च समन्वितान् १९
पञ्चमूर्तीन्यसेधीमान् मूर्तयः पूर्ववर्त्मना
मूर्तीशास्युर्भकारो त्थास्सद्यो जातादयोऽणवा २०
बान्तं चतुर्दशं षष्टं बिन्दुनादौ नियोजयेत्
चतुर्थ्यन्तं स्वनामान्ते चेति मूलाणुरेष वै २१
भगीरथाद्धरेणैव हृदादीनां समुद्धृतिः
गङ्गायास्तद्विधानोक्त मार्गेणैव समाचरेत् २२
कृत्वा कुण्डाग्नि संस्कारं समिदाज्यान्नलाजकैः
तिलैश्च जुहुयात्पश्चात् वस्त्र हेमाङ्गुलीयकैः २३
दक्षिणां दापयेत्तेषां मन्त्रन्यासं ततो नयेत्
तत्तद्देव पुरस्तत्तत् कुंभान् न्यस्त्वा गुरूत्तमः २४
शिव कुंभमनुं ज्ञात्वा शिवस्य हृदि विन्यसेत्
वर्धन्या मनुमादाय तस्य पीठे तु विन्यसेत् २५
अन्येभ्यो बीजमादाय पीठाब्जे परितो न्यसेत्
गङ्गाया बीजमादाय तस्यास्तु हृदि विन्यसेत् २६
भगीरथघटाद् बीजं स्मृत्वा तस्य हृदि न्यसेत्
तत्तत् कुंभ जलेनैव स्नापयेत्तत् प्रदेशके २७
सहासना तु देवी चेद् वर्धन्यास्तद्धृदि न्यसेत्
विभिन्न पीठा देवी चेद् प्रतिष्ठां पृथगाचरेत् २८
कल्यां कारयेदन्ते स्नपनं चोत्सवं ततः
कारयेद् भूमिनैवेद्यं कर्तुरिच्छावशेन तु २९
अनुक्तमत्र संग्राह्यं सामान्य स्थापनोक्तवत्
भगीरथ युतो वायं वियुक्तो वा महेश्वरः ३०
जाह्नवीश प्रतिष्ठां तु भक्त्या यः कुरुते नरः
इहलोके सुखं प्राप्य स्वबन्धुजन संयुतः ३१

यायात् स्वदेह पादान्ते शैवं स्नानं तु दुर्लभम्   ३१ १-२
इति उत्तरकामिकाख्ये महातन्त्रे गङ्गाधर प्रतिष्ठा विधिर्नाम
त्रिषष्टितमः पटलः

चतुष्षष्ठितमे पटले गुह स्थापन विधिः

गुहस्य स्थापनं वक्ष्ये तल्लक्षण पुरस्सरम्
पुरादे र्मध्यमे वाग्नौ यमे वा मध्यमे तयो  १
नै-ऋृते वरुणे वायौ सोमे शर्वेऽथवा भवेत्
अन्तरालेऽथवा तेषां शिवधाम्नि एवमेव वा  २
अन्येदेवालयेऽप्येवमथवा पर्वतोपरि
पर्वतस्यान्तिके वापि नद्युद्यानादिकेऽथवा  ३
राजधान्यादिके वाथ पुण्यक्षेत्रे ह्रहेषु वा
प्रासाद मण्डपादीनां देशे पुण्यतरुष्वथ  ४
कुमारालय इष्टस्यात् धाम लक्षण लक्षितः
अथैकादि त्रयस्त्रिंशद्धस्त विस्तार संयुतः  ५
त्रयस्त्रिंशत्करादूर्ध्वं विस्तारो नेष्यते द्विजाः
दिङ्न्यस्त स्कन्दरूपाढ्यः केवलो वा तदालयः  ६
रुद्रोमाविघ्न रूपाढ्यः अथवा हंसकोनयुक्
गणकोणोऽथवा सस्यात् केवलो वा गुहालयः  ७
एकभूम्यादि सप्तान्त तलेष्विष्ट तलान्वितः
शिवोक्त मार्ग संकप्त गर्भाद्येष्ट कयान्वितः  ८
तद्वन्मूर्धेष्टकास्थूपि प्रतिष्ठाभ्यां समायुतः
दिङ्न्यस्त देव विन्यस्त मध्यकुंभ युतेन च  ९
धाम्न संस्थापनेनाढ्यः प्रागुक्त विधिना सह
प्रागुक्त मण्डपाद्यैश्च प्राकाराद्यैश्च मण्डितः  १०
पूर्वास्यः पश्चिमास्यो वा दक्षोत्तरमुखस्तु वा

परिवारामरैर्युक्तः कथ्यन्ते ते प्रसङ्गतः ११
यक्षेन्द्रो राक्षसेन्द्रश्च पिशाचेन्द्रश्च भूतराट्
गन्धर्वः किन्नरो दैत्य नायको दानवाधिपः १२
क्रमात्पूर्वादि शर्वान्तस्थिता एते चतुर्भुजाः
वरदाभय संयुक्ताः खड्ग खेट समन्विताः १३
खड्गखेट समायुक्ता द्विभूजा वाञ्जनप्रभाः
भीमरूपास्सुशान्ता वा बद्ध केशास्तु वा मताः १४
शकुनी पूतना चैव रेवती चार्धपूतना
वक्त्रमराडी शकारी च निशान्ता मेषदेवता १५
षरामुखश्शक्ति पाणिश्च कार्तिकेयो गुहस्ततः
स्कन्दो मयूर वाहस्स्यात् सेनानी शक्तिहस्तवान् १६
एते वा मूर्तिपास्तस्य कृताञ्जली पुटान्विताः
वज्र पद्मधरास्सर्वे स्कन्दोक्ताक्षर संयुताः १७
चतुर्भुजा द्विहस्ता वा षड्वक्त्राश्चैक वक्त्रकाः
एते वा परितः स्थाप्याः क्रमात् पूर्वादि योगतः १८
इन्द्रादीन्वाष्ट पीठं वा मयूरं वाग्रजे गजम्
विघ्नेशं क्षेत्रपं भानुं महापीठं प्रकल्पयेत् १९
बलिपीठं च शर्वोक्तान् परिवारांस्तु वा न्यसेत्
बलिपीठ दलेष्विन्द्र पूर्वान्मध्ये ग्रहेश्वराः २०
द्वारपौ कल्पयेद् द्वारे श्यामरत्ननिभौ क्रमात्
दक्ष वाम गतौ द्वारे द्विभुजौ वा चतुर्भुजौ २१
खड्गखेटधरौ सूचिमुद्रा विस्मय संयुतौ
श्यामाभौ रक्तवर्णौ वा सितकृष्णौ भयंकरौ २२
जयाख्य विजयाख्यौ द्वौ द्वारपौ विकृताननौ
ईशाने कल्पयेत् स्कन्द चराडं वेदकरं वरम् २३
अभयं वज्रपद्मे च वरदं द्विभुजं तु वा

शाकल्य संज्ञया ख्यातं तदर्थं पीठमेव वा २४
लक्षणं तस्य संक्षेपाच्छृणुध्वं विप्रसत्तमाः
द्रव्यैश्शिलादिभिः कुर्यात् प्रतिमालक्षणोदितैः २५
प्रतिमालक्षण प्रोक्तं विश्वमानं गुहस्य तु
योजनीयं द्विजाः गर्भद्वारस्तम्भादिसंयुतम् २६
द्विभुजश्च द्विनेत्रश्च सुब्रह्मस्सुसुन्दरः
पद्म धृक् सव्यसत्पाणि र्लम्बितेतरसत्करः २७
बालरूपी प्रतिष्ठाप्यो ग्रामस्यैवाभिवृद्धये
द्विहस्तो यज्ञसूत्राढ्यः सशिवखस्स त्रिमेखलः २८
कौपीनदण्डधृक् सव्य पाणिःकट्याश्रितोऽपरः
स्थाप्योऽयं ज्ञानदः स्कन्दः पर्वतेषु वनादिषु २९
चतुर्भुजस्त्रिणेश्च कर्णयोः पत्रपिण्डयुक्
नक्र कुण्डल युक्तो वा ह्यक्षशक्तिकरद्वयः ३०
वरदाभय संयुक्तः शक्तिद्वययुतो न वा
शक्त्यैकया युतो वा स्यात् तयोर्लक्षणमुच्यते ३१
द्विनेत्रे द्विभुजे शान्ते पद्मोत्पलकरद्वये
श्यामरक्तनिभे सव्य वामपार्श्वे व्यवस्थिते ३२
गौरी लक्षण संयुक्ते कल्पयेत्तु शुभानने
गजेति गजवल्लीति नाम्नाख्यातेऽति सुन्दरे ३३
इत्थं लक्षणयुक् स्थाप्यः पुरे वा नगरेऽपि वा
षडाननश्च षड्बाहुरर्क श्रोत्रे क्षणान्वितः ३४
षट्कण्ठस्त्वेक कण्ठो वा षड्भिर्मौलिभिरन्वितः
स शक्तिस्साभयस्सासिस्साक्षमालस्सकुक्कुटः ३५
सखेटकस्त्वयं स्थाप्यो वृद्धये राजधानिके
रक्ताम्बर समायुक्तो बालचन्द्र समप्रभः ३६
करण्ड मकुटोपेतो नेत्रत्रय समन्वितः

शक्तिं च मसुलं खड्गं चक्रं पाशाभये वहन् ३७
दक्षिणेऽदक्षिणे वज्रं कार्मुकं खेटकं तथा
समयूरध्वजं चैवमङ्कुशं वरदं वहन् ३८
सोपवीतोः मयूरस्थोः शक्तितद्वय समायुतः
ग्रामादौ स्थापनीयोऽयं प्रासादादै च सिद्धये ३९
एवं पञ्चविधस्कन्दो विभागस्थानभेदतः
द्वापरे स्यान्नवान्यत्र सर्वे सर्वत्र वा मताः ४०
एवं संपाद्य तन्मन्त्रैः प्रतिष्ठामरभेत्ततः
शवर्वस्य तृतीयं तु षष्ठस्वर समन्वितम् ४१
चतुर्दश स्वरोपेतं बिन्दुनादविभूषितम्
सुब्रह्मरायं चतुर्थ्यन्तं नमोऽन्तं प्रणवादिकम् ४२
मूलबीजमिति ख्यतं तस्मिन् ब्रह्माङ्ग कल्पना
शान्तान्तं दीर्घह्रस्वार्णैर्जात्यन्तैर्वा नमोन्तकैः ४३
ईशानादि पदोपेतैर्ब्रह्माङ्गानि समुद्धरेत्
महासेनाय संयुक्तं विद्महे पद संयुतम् ४४
षडाननाय संयुक्तं धीमहीति पदं ततः
तन्नः स्कन्द पदोपेतमन्ते युक्तं प्रचोदयात् ४५
गायत्री बीजमेतत्स्याद्दिपपूर्वं प्रयोजयेत्
हृत्पुटाजातमूलाणू मूर्तिविद्यामनू स्मृतौ ४६
गजाया गजवल्याश्च मन्त्रास्तन्नामकल्पिताः
ततः प्रतिष्ठा कर्तव्या प्राग्वत्कृत्वाङ्कुरार्पणम् ४७
शुभे पूर्वोदिते काले पञ्चरत्नानि विन्यसेत्
देव्योश्च हृदयेनैव पञ्चहेमाब्जमेव वा ४८
कृत्वा पद्मस्य संघातं नेत्रमोक्षणमाचरेत्
मध्वाज्याभ्यां सहेमाभ्यां पात्रस्थाभ्यां प्रकल्पयेत् ४९
हृदा स्वर्णं नखन्यासं धान्यगो विप्रदर्शनम्

कुर्यात् प्रच्छन्न वस्त्रेण सह सर्वात्मना गुरुः ५०
यदि देवीयुतः स्कन्दः पृथक् तस्याश्च कारयेत्
प्राग्वच्छुद्धिं प्रकल्प्यास्मै ग्रामादीनां प्रदक्षिणम् ५१
जलेऽधिवासयेत् स्कन्दं लम्बकूर्चयुतं हृदा
परितः कलशान्मन्त्री न्यसेदिन्द्राद्यधिष्टितान् ५२
प्रासादस्य चतुर्दिक्षु वह्नावीशेऽथ मण्डपम्
पद्माभनवपञ्चैक संख्या कुण्ड प्रकल्पनम् ५३
पूर्वोत्तरेशसंकप्त स्नान वेदिकयान्वितम्
तक्षकोद्वासनं विप्र भुक्तिं गोमयालेपनम् ५४
पुण्योद शेचनं वास्तु देव तैज्याग्नि तर्पणे
स्थण्डिलं शयनं प्राग्वच्चर्म जाद्यैस्तु वाम्बरैः ५५
जलादानीय तं स्कन्दं स्नपनं प्राग्वदाचरेत्
गन्धापिष्पादिनाभ्यर्च्य बन्धयेत् कौतुकं हृदा ५६
आरोप्य शयने स्कन्दं शाययेत् प्राक्शिरो यथा
वस्त्रैरावेष्टय संपूज्य सासनं मूर्तिः संयुतम् ५७
सदेह मूलमन्त्राढ्यं साङ्गं गन्धादिभिर्गुहम्
शिरः प्रदेशे सूत्राढ्यं कुंभं वस्त्रादिभिर्युतम् ५८
न्यस्त्वा तस्मिन्यथा बेरे तथा स्कन्दं प्रपूजयेत्
देवियुतं चेत् विन्यस्य वर्धनीं तत्र तां यजेत् ५९
परितोष्टौ घटान्यस्त्वा गुहविद्येश्वरान्यजेत्
सूत्र वस्त्र सुवर्णादि युक्तास्सर्वे घटा मताः ६०
आत्मविद्या शिवाख्यं च जानुकण्ठ शिरोवधि
न्यस्त्वा तत्वत्रयं सेशं मूर्तिमूर्तीश्वरान्यसेत् ६१
मूर्तयः क्ष्मादयो लोकपाला मूर्तीश्वरा मताः
प्रागुक्ता वा तदीशानास्तत्रो होमं समाचरेत् ६२
गुरुः पूर्वोक्त पञ्चाङ्ग भूषणस्सोत्तरीयकः

सोष्णीषस्साम्बरस्स्नातः श्शिवः द्विजकुलोद्भवः ६३
मूर्तिपैरीदृशैर्युक्तः कृत्वा कुराडाग्नि संस्कृतिम्
प्रधाने स्कन्दमावाह्य सब्रह्माङ्गं सलोचनम् ६४
तत्वत्रयं सनाथं च मूर्तिमूर्तीश्वरान्वितम्
गजां च गजवल्लीं च तर्पयेत्संभवे तयोः ६५
सहस्त्रं वा तदर्धं वा शतं मूलाहुतिर्गुरोः
ब्रह्मांगानां दशांशः स्यान्मूलार्धं मूर्तिपहूतिः ६६
मूर्तिपा जुहुयाद्दिन्नु विधिन्दवीशहृदाद्यगून्
तत्तदिङ्मूर्तिमूर्तीशानपि शान्ति घटान्वितम् ६७
समिद्धृतान्नसस्येन्द्र तिलसलाज तराडुलाः
पलाशो दुम्बराश्वत्थवटा दिन्नु विदिन्दवथ ६८
शम्यपामार्गश्रीवृन्ना होम्या पिप्पल पश्चिमाः
पलाशस्स्यात् प्रधानेऽपि स च सर्वत्र वा भवेत् ६९
वेदपाठश्चतुर्दिन्नु कोरोष्वत्र जपो भवेत्
शान्त्यम्भः प्रोन्नणं स्वस्व मन्त्राणां च जपक्रियाम् ७०
दर्भ संस्पर्शनं चेत्थं प्रतिभागं समाचरेत्
ततः प्रभाते संशुद्धो मूर्तिपैस्सह देशिकः ७१
उद्धृत्य षरामुखं तं च कुंभाग्नींश्च सु तर्पयेत्
प्रायश्चित्त निमित्तं तु दन्निरोन शताहुतिम् ७२
दत्वा पूर्णाहुतिं प्रविशेद्धाम देशिकः
मानुषे दविके वापि प्राग्वत् संस्कार संयुताम् ७३
कशिलां हृदयेनैव रत्नधान्यादिगर्भिताम्
विन्यस्य स्थापयेत्तस्यां षरामुखं मूलमुच्चरन् ७४
सुलग्ने सुमूहूर्ते तु तथा द्वारस्य संमुखम्
अथ ब्रह्मशिलोपेतं स्थापयेद्वा षडाननम् ७५
देवाग्रे तु घटान्यस्त्वा मन्त्रन्यासं समाचरेत्

कुंभाद्बीजं समादाय षरामुखस्य हृदिन्यसेत् ७६
यदि देवी सती तस्यां वर्धन्यां विन्यसेन्मनुम्
पीठस्य परितश्चान्य कुम्भेभ्यो विन्यसेन्मनून् ७७
तत्तद् घटस्थिताद्भिस्त मभिषिञ्चेत् षडाननम्
तत्वमूर्त्यादि विन्यासं कारयेत्पूर्ववत्ततः ७८
स्नपनं कारयेदन्ते नैवेद्यं चोत्सवं चले
गुरुं च मूर्तिपादींश्च वस्त्राद्यैर्दक्षिणायुतम् ७९
इष्ट्वा हेमाङ्गिलीयैश्च प्रतिमास्थापनोक्तवत्
सनातन प्रतिष्ठोक्तं यदनुक्तं समाचरेत् ८०
एवं यः स्थापनं कुर्यात् षरामुखस्य द्विजोत्तमाः
आयुः लब्ध्वा परत्रापि मोक्षं च लभते नरः ८१
सौभाग्यं महतीं लक्ष्मी नीरोगत्वं यशस्सुखम्
शुभं लब्ध्वा परत्रापि मोक्षं च लभते नरः ८२
तस्यार्चनं च संक्षेपात् शृणुध्वं विप्रसत्तमाः
अथ प्रातः कृता वश्यश्शौचस्नाने विधाय च ८३
सन्ध्यो पस्थापनं मन्त्रतर्पणं प्राग्वदाचरेत्
गत्वा धाम प्रविश्यान्तर्निर्णिक्ताङ्घ्रिकरद्वयः ८४
आचान्तस्सकलीकृत्य स्कन्देशान हृदादिभिः
सनातनं विधायार्घ्यमस्त्र मन्त्रेण तज्जलैः ८५
द्वारं संप्रोक्ष्य संपूज्य जयं च विजयं तथा
स्वनाम्नो दुम्बरे हेति प्रविश्यान्तस्समर्चयेत् ८६
वास्तु नाथ मुदग्ववक्त्रः स्वासनस्थोऽणु विग्रहः
शक्तिस्थं स्वं समायोज्य रक्षायै ध्वंसित स्थितिः ८७
शक्त्युद्भूत सुधौघेन कृत पूतमहातनुः
अस्त्रमन्त्रं सुसंशुद्धं चन्दनार्पित सत्करः ८८
न्यस्तेशान नराघोर वामजाङ्गुष्ठकादिकः

तलद्वयनिविष्टाग्नि देहमूलाणु संयुतः ८९
कनिष्ठद्यङ्गुलिन्यस्त हृच्छिरऽस्चूलिकाद्यणुः
भूयस्तल कृतन्यास मूलमन्त्र परान्वितः ९०
देहन्यासं च तैर्मन्त्रैः माला ब्रह्मान्वितैर्न वा
सैकत्रिंशत् कला मन्त्रन्यासं प्राग्वन्नयेन्नवा ९१
आपाद्यैवं तनुं मन्त्री गुहवत्तामनुस्मरन्
इष्ट्वा हुत्वा विभाव्य अन्तर्गुहं हृन्नाभिबिन्दुषु ९२
शिवाणुभिस्तनुं शैवीमथापाद्यगुहं यजेत्
अवकुण्ठनदिग्बन्ध प्राकारैः स्थानशोधनम् ९३
विशेषार्घ्यं च संकल्प्य गन्धपुष्पान्नतैर्हृदा
अर्चनाङ्गोदितैर्वाथ पाद्यमाचमनं तथा ९४
अर्घ्यं वा केवलं तेन संप्रोन्द्य द्रव्यसंहतिम्
हृदाभिमन्त्र्य स्वं चेष्ट्वा शुध्यै मन्त्रान् समुच्चरन् ९५
इष्ट्वा पर्युषितां पूजां गायत्र्यार्घ्यं सनातनम्
दत्वा मुर्ध्नि हृदा तां च दद्यान्निर्माल्य धारिणे ९६
त्यजेद्वा बेरसंशुद्धिं नयेत् प्रागुक्त वर्त्मना
लोहजं यदि तद्बेरं स्नानं पर्वणि पर्वणि ९७
चित्रादिजं चेत् कर्मार्चा शुद्धया शुद्धर्मता द्विजाः
इत्थमात्मधाराद्रव्य मन्त्रबिंब विशोधनम् ९८
कृत्वासनं गुहस्यैवं कल्पयेत् प्रणवादिभिः
प्रणवं मध्यमे धर्माधर्मादीन् कल्पयेत्पुनः ९९
अधश्चोर्ध्वच्छदे पद्मकर्णिकेऽन्ते गुहासनम्
संक्ल्प्य चासनं मूर्तिमावाह्यास्मिन् हृदाद्यणून् १००
ईशानादीन्नयसेन्माला ब्रह्माण्यर्णास्तु वाखिलान्
विद्यादेहं च संक्ल्प्य तस्मिन्मूलेन षणमुखम् १०१
हृदयानुगतेनैव पुष्पसंपूर्णसत्करः

आवाह्य बिम्बे तद्विन्द्रो रानीय स्थापयेद्धृदा १०२
निष्टुरां सन्निधानाद्यं हृदा कृत्वावकुरठयेत्
हृदादि नेत्र पर्यन्तं मन्त्रन्यासोऽवकुरठनम् १०३
महामुद्रां च मूलेन कल्पयेद्वामृती कृतिम्
पाद्यं पादे हृदाचान्ति मुखेर्घ्यं शिरसि क्रमात् १०४
नमः स्वाहा स्वधा वौषट् जात्यन्तेन गुहस्य तु
गन्धं पुष्पं च धूपं दत्वा पञ्चामृतादिभिः १०५
विभूतौ स्नापयेत् पिष्टामलकादि समन्वितम्
वाससोन्मृज्य वक्त्रेण दत्वा चान्तिं गुहस्य तु १०६
चन्दनागरु कर्पूर कुष्ठान् पूर्वप्रमाणजान्
पिष्टवालिप्य हृदा स्कन्दं केवलं चन्दनं तु वा १०७
कृष्णागरु कृतं धूपं दद्याद् धृदयमन्त्रतः
लघु चन्दन निर्यासं भस्मजं वा पुरोहितम् १०८
सुरभीणि विचित्राणि सर्वर्तु प्रसवानि तु
तत्त्वण प्रति बुद्धानि प्राग्वत् पुष्पाणि दापयेत् १०९
हृदा तैलाद्य संकप्तिं दद्यात् प्राग्वद् धृदाणुना
आमन्त्रण हबिर्दद्यात् प्रागुक्त विधिना न वा ११०
गन्धादीनां प्रमाणं तु पश्चिमास्यार्चनोक्तवत्
पूजयेदावृतिं पश्चात् धूपदाना वसानके १११
वह्नीशरत्तोवातेश दिग्विदित्तु हृदाद्यणून्
तद्वहिर्वसुमूर्तीश्च बहिरिन्द्रादि देवताः ११२
ततोस्त्राणि यजे देवं त्रिभिर्वावरणैर्गुहम्
द्वाभ्यां वैकेन भूयोऽपि धूपदीपं प्रदापयेत् ११३
गानयेन्मन्त्रगानाद्यं जपं कृत्वा निवेदयेत्
नैवेद्यं च बलिं दत्वा कुराडे शैवेऽनले गुहम् ११४
आवाह्य साङ्गं चर्वन्तं पलाश समिदाज्ययुक्

मूलेन शतपञ्चाशत् पञ्चविंशति संख्यया ११५
जुहुयात्त दृशांशेन षडङ्गाहुतिमाचरेत्
दत्वा पूर्णाहुतिं पश्चात् नित्योत्सवमथाचरेत् ११६
तदन्ते तारण्डवं कुर्यात् प्रागुक्त विधिना सह
एका हादि नवाहान्तं कुर्यात्संवत्सरोत्सवम् ११७
ध्वजे मयूर मालिख ध्वजारोहणमाचरेत्
तद्दिन त्रिगुणे वाथ द्विगुणे वाथ तद्दिने ११८
अङ्कुरार्पण पूर्वं तु भेरी ताडन पूर्वकम्
ध्वजारोहणपूर्वं वा कारयेदुत्सवं बुधः ११९
शकुनी रेवती चैव पूतना मण्डपूतना
वक्त्रमण्डी ततः प्रोक्ता निशान्तामेषदेवता १२०
शकारीति परि ज्ञेयाः सुब्रह्मण्यस्य सुव्रताः
षट् कुमारास्तु विज्ञेयास्तेषां नामानि च द्विजाः १२१
सेनापतिस्सुरेशश्च हरसूनुस्सुराग्रजः
सुब्रह्मण्यः कुमारश्च षट्कुमाराः प्रकीर्तिताः १२२
कुण्डं षडश्रमिष्टं स्यादीशाने वाथ पावके
वज्रं रूपं भवेदस्त्रं पुष्पे वा तण्डुले यजेत् १२३
द्विनेत्रं द्विभूजं रौद्रं शिखाकोटि समुज्वलम्
तीक्ष्ण वज्रधरं सव्ये वामहस्ते तु चित्रके १२४
शुकुन्यादि कुमारान्ता दिनानामधिपा मताः १२४ १-२

इति उत्तर कामिकाख्ये महातन्त्रे गुहस्थापनविधिर्नाम
चतुष्षष्टितमः पटलः

द्विभुजश्च द्विनेत्रश्च सुब्रह्मण्यस्सुसुन्दरः
पद्मधृक् सव्यतस्पाणिः लम्बितेतरसत्करः
वालरूपी प्रतिष्ठाप्यो ग्रामस्यैवाभिवृद्धये

द्विहस्तो यज्ञसूत्राढ्यः सशिखः सत्रिमेखलः
कौपीन दण्डधृक् सव्यपाणिः कट्याश्रितः अपरः
स्थाप्योऽयं ज्ञानदः स्कन्दः पर्वतेषु वनादिषु
चतुर्भुजः त्रिणेत्रश्च कर्णयोः पत्रपिण्डयुक्
नक्रकुण्डलयुक्तोवा ह्यक्षशक्तिकरद्वयः
वरदाभय संयुक्तः शक्तिद्वययुतो न वा
षडननश्च षड्बाहुः अर्कश्रोत्रेक्षणान्वितः
पट्कण्ठस्त्वेककण्ठकण्ठो वा षड्भिमौलिभिरन्वितः
सशक्तिः साभयः सासि साक्षमालः सकुक्कुटः
सखेटकः त्वयं स्थाप्यः वृद्धये राजधानिके
रक्तांबर समायुक्तः बालचन्द्र समप्रभैः
करण्ड मकुटोपेतो नेत्रत्रय समन्वितः
शक्तिं च मुसलं खड्खं चक्रं पाशाभये वहन्
दक्षिणेऽदक्षिणे वज्रं कार्मुकं खेटकं तथा
समयूर ध्वजं चैवं अङ्कुशं वरदं वहन्
सोपवीतो मयूरस्थो शक्तिद्वय समायुतः
ग्रामादौ स्थापनीयोऽयं प्रासादादौ च सिद्धये

## पञ्चषष्टितमे पटले चण्डेश स्थापन विधिः

चण्डेश स्थापनं वक्ष्ये तल्लक्षण पुरस्सरम्
परस्वतन्त्र भेदेन द्विविधं तच्च संमतम् १
पुरादौ मध्यमे वाष्टदिक्षु चण्डेश्वरालयः
वामेशानेऽथ सौम्ये वा सोमेशेन्द्रान्तरेऽथवा २
अन्तर्मण्डल देशेऽन्तर्हारायां वेष्टशालके
अथैकादि त्रस्त्रिंशद्धस्त विस्तार संयुतः ३
धामलक्षण संसिद्धायामेनापि समन्वितः

एकादि सप्तभूम्यन्तं भूमिभाग समन्वितः ४
धामोक्ताकार संयुक्तो दिन्नु चराडेश्वरान्वितः
इष्टदेवान्वितो वा स्यात् केवलो वा वृषान्वितः ५
प्रागुक्त विधिना नीतगर्भाद्येष्टकया युतः
मूर्धेष्टका समायुक्तः स्थूपिस्थापन संयुतः ६
दन्निरा द्वार संयुक्तं पराङ्गं चेन्मुनीश्वराः
स्वतन्त्र स्थापने दन्न पूर्व पश्चिमादिङ्कुखः ७
दिङ्न्यास्तामर विन्यस्त मध्यकुम्भयुतेन च
धाम संस्थापने नाढचः प्रागुक्त विधिना सह ८
प्रागुक्त गर्भमानाद्यं सर्वमत्र प्रयोज्यताम्
प्राकार मराडपोपेतः परितः परिवारः युक् ९
रुद्र भक्त स्ततो रुद्रः चराडश्चराडप एव च
महाबलस्तथा विप्राष्टङ्क पाणीश सेवकौ १०
रुद्रकोपज इत्यष्ट मूर्तयः परिवारगाः
एते श्वेता महाकाया कृताञ्जलिपुटान्विताः ११
सटङ्कास्तद्विहीना वा वीराद्यासन संस्थिता
कृत्तिवासोऽन्विता वाथ चराडरूपधरास्तु वा १२
इन्द्राद्या वा तदर्थं तु पीठं वा पूर्वतो वृषः
बलिपीठादि पीठान्तं पूर्ववत् कल्पयेत्तु वा १३
द्वारस्थौ द्वापरौ कार्यौ द्विकरौ दराडधारकौ
चराडानुगः चराडमान्यो नेष्टौ वा देशिकाग्रजाः १४
बलिपीठे बलिर्देयो यथादेशं बलिर्हितः
देवोक्त परिवारान्वा विघ्नन्नेत्रेश् भानुभिः १५
द्रव्यैश्शिलादिभिः कार्यः पूर्ववल्लन्नणान्वितः
मध्येन दशतालेन दशतालाधमेन वा १६
प्रतिमा लन्नण प्रोक्तमानेनायादि संयुतः

बद्ध पद्मासनश्चण्डनाथो दुर्दर्श भीषणः १७
व्यालयज्ञोपवीती च मुखोद्गीर्ण महानलः
करालकज्जलाभासो जटिलश्चन्द्रशेखरः १८
चतुर्वक्त्रश्चतुर्बाहुश्चाक्षमालात्रिशूलवान्
टङ्कं कमण्डलुं वामे भानुरक्तार्क लोचनः १९
अथवा शंख वर्णाभश्चतुर्बाहुस्त्रिलोचनः
चन्द्रार्ध मण्डितः कृत्तिवासा वीरासनस्थितः २०
पिनाका मोघ बाणाभ्यां व्यग्रपाणितलद्वयः
वराभय प्रदानाभ्यामन्यत्र परिमण्डितः २१
अथवा द्विभुजश्शुक्ल वस्त्रस्त्र्यक्षोऽजनप्रभः
जटामकुट युक्तो वा धवली कृत मूर्धजः २२
स्थानको वासनस्थो वा शयिता सव्यवात्तलः
सलम्ब सव्य पादस्तु वामहस्त भुजानुगः २३
वरहस्तोऽथवा स स्यादिरष्टङ्क संयुतः
वामेतरकरष्टङ्क युक्तोऽञ्जलि पुटोऽथवा २४
शंकरेक्षण संपन्नश्शोकनम्र शिरास्तु वा
उत्कुटा सन युक् शान्तो जटिलष्टं धृक्करः २५
एवं वा चण्डनाथस्तु कार्यस्त्विष्टासनान्वितः
अथवा भयटङ्काभ्यां पाशशूलद्वयेन तु २६
चतुर्भुजस्तु वा कार्यश्शङ्कराज्ञानुपालकः
विशेषस्सिंहले देशे कश्चिदत्राभिधीयते २७
कृतायामष्टहस्तस्यात् त्रेतायां षड्भुजो मतः
द्वापरे च चतुर्हस्तः कलौतु द्विकरो मतः २८
अन्यदेशे तु सर्वत्र विभागो नायमीर्तितः
अथवा चण्डनाथस्तु देव्या तु सहितो न वा २९
सा देवी श्यामला हस्त द्वयाखिलविभूषिता

धर्मनीत्याख्यया ख्याता धृतनीलोत्पला वरा ३०
एवमापाद्य बेरं मनुभिंस्थापनं नयेत्
चराडासनं चतुर्थ्यन्तं नत्यन्तं मनुरासने ३१
चराडमूर्ति पदं दीप पूर्वं नत्यन्तमेव च
चतुर्थ्यन्तमिदं मूर्ति मन्त्रमित्यभिधीयते ३२
ध्वनि चराडेश्वरायेति हुफट् स्वाहा पदेन च
मूलमन्त्रस्समादिष्टस्तदग्रे दीपसंयुतः ३३
ईशानादीनि दराडस्य चकोरेणोद्धरेद् गुरुः
ओं चराड पूर्वको हुफराणमोन्तः स्याद् धृदादिकाः ३४
तन्नान्मा हुफडन्तेन मूर्तिनामपरो मनुः
अथवान्य प्रकारेण मन्त्रश्चराडाय कल्पते ३५
ज्ञानशक्ति पदैर्मन्त्रैः हुंट्कार समन्वितैः
चराडायेति पदोपेतैश्चराडमन्त्रोऽयमीरितः ३६
विद्याङ्गैरावृतो वाथ चराडनाथस्समीरितः
ततः प्रतिष्ठा कर्तव्या चाङ्कुरार्पण पूर्विका ३७
कालः पूर्ववदेवाक्ते रत्नन्यासश्च पूर्ववत्
सौवर्णबेरे रत्नादि विन्यासो नात्र कथ्यते ३८
कृत्वा पद्मस्य संघातं नेत्रमोक्षणमाचरेत्
मध्वाजयाभ्यां सहेमाभ्यां पात्रस्थाप्यां हृदाणुना ३९
सौवर्ण नख विन्यासः प्रच्छन्नपटकादिभिः
बेर शुद्धिं पुरादेश्च प्रदक्षिणमथाचरेत् ४०
तोयाधिवासयेद्देवमिन्द्राद्यष्ट घटावृतम्
यागार्थ मराडपं कुर्यात् धाम्नोऽग्रे तस्य पार्श्वयोः ४१
याम्याप्यैन्द्रेषु वार्धेन्दुनिभकुराडानि कल्पयेत्
नवपञ्चैक संख्यानि वृत्तान्यश्राणि वा द्विजाः ४२
मराडपं कल्पयित्वैवं पूर्वोक्त विधिना सह

उद्वास्य शिल्पिनं पश्चात् शैवान् भक्तांश्च भोजयेत्  ४३
पुण्याह प्रोक्षणं कृत्वा वास्तु होमं समाचरेत्
जलादानीय चण्डेशं प्राग्वत् स्नपनमाचरेत्  ४४
कौतुकं बन्धयित्वान्ते सर्वात्मानं समुच्चरन्
कल्पयेच्छयनं वेद्यमण्डजाद्यैरनुक्रात्  ४५
पञ्चभिर्वाम्बैरैश्शुद्धैश्शाययेत् हृदयेन तु
वासोभ्यां वेष्टयित्वा तु कुंभन्यासं समाचरेत्  ४६
चण्डोत्तमाङ्ग देशे तु सूत्रकूर्चाम्बरान्वितम्
सहैमटङ्कतोयढ्यं विन्यसेत्तु सपल्लवम्  ४७
तथा विधघटानष्टौ विन्यसेत् परितो बहिः
चण्डेशो देवियुक्तश्चेत् वर्धनीमूत्तरे न्यसेत्  ४८
सासनेन सदेहेन चण्डेशेनाप्यधिष्टितान्
कुंभमिष्ट्वा तु पूर्वोक्त ध्यान युक् चन्दनादिभिः  ४९
हृच्छिरश्शूलिकावर्म शस्त्राणि परितो बहिः
घटेषु पूजयेन्मन्त्री ईशानादुत्तरा वधि  ५०
लोकपालास्तु वा तेषु चण्डमूर्त्यष्टकं तु वा
गन्ध पुष्पादिभिश्चेष्ट्वा तत्वमूर्त्यादिकं न्यसेत्  ५१
आत्म विद्या शिवाख्यं च ब्रह्मादींश्च तदीश्वरान्
क्ष्मामूर्तितदीऽसानान् लोकपानपि विन्यसेत्  ५२
प्रागुक्त मूर्त्यो वाथ रुद्रभक्तादयोऽथवा
सासनं मूर्तियुक् चण्डं ब्रह्माङ्ग सहितं यजेत्  ५३
मूर्ति भृद्भिर्गुरुस्सार्धं होमार्थं कुण्डमाशयेत्
संस्कृत्य वह्निं कुण्डं च दिक्षु तत्पुरुषाद्यणून्  ५४
कोणेषु हृदयादींश्च सब्रह्माङ्गं तु चण्डपम्
प्रधाने तर्पयेन्मन्त्री समिदाज्यान्नसत्तिलैः  ५५
लाजसक्तु यवैस्सार्धं पलाशोदुम्बरौ वटः

प्लक्षश्च समिधो दिक्षु प्रधानेऽपि पलाशकः ५६
शमी खादिर मायुर श्रीवृक्षा वह्निकोणतः
तत्वमूर्ति तदीशांश्च क्रमशस्तर्पयेत् पृथक् ५७
शान्त्यम्भः प्रोक्षणं स्वस्वमन्त्राणां च जपक्रियाम्
दर्भ संस्पर्शनं चैव प्रतिभागं समाचरेत् ५८
ततः प्रभाते शुद्धस्तु मूर्तिपैस्सह देशिकः
उद्धृत्य चण्ड बिंबं तु कुंभानग्नींश्च तर्पयेत् ५९
पार्यश्चित्तं च पूर्णां च गुरुः कृत्वा समूर्तिपः
वस्त्रस्वर्णाङ्गुलीयाद्यैः पूजितः प्राप्त दक्षिणः ६०
अधमा निष्का तु द्विगुणा मध्यमा भवेत्
त्रिगुणा चोत्तमा प्रोक्ता चान्येषां पूर्ववद् भवेत् ६१
प्रतिष्टा कशिलादीनां कार्या द्विजोत्तमाः
सुमुहूर्ते प्रतिष्टाप्य धाम्नि मन्त्रांस्तु विन्यसेत् ६२
देवाग्रस्थण्डिलस्तेभ्यः कुंभेभ्यो देशिकोत्तमः
तत्तत् कुंभगतैस्तोयैः स्नापयेच्चण्ड विग्रहम् ६३
स्नप्नं भूरि नैवेद्यमुत्सवं चचलं यदि
कारयेद्देवियुक्तं तस्याश्च स्थापनं नयेत् ६४
चण्डेश्वर प्रतिष्ठेयं बालस्थानान्विता न वा
चण्डेश स्थापनं ह्येवं यः कुर्यान्नर पुङ्गवः ६५
आयुष्कामो लभेदायुर्धनार्धी चेद्वसूनि च
विद्याकामोऽमलां विद्यां प्त्रार्थिं चेत्सुतं लभेत् ६६
लक्ष्मीकामो महालक्ष्मीं रतिकामो वरस्त्रियः
चण्डेश्वरं प्रपन्ना येन तेषां भवकारणम् ६७
चण्डेश स्थापनं ख्यातं तस्य पूजा च कथ्यते
स्नानाद्यं पूर्ववत्कृत्वा सकलीकृत विग्रहः ६८
चण्डेशानस्य हृत्पूर्वं सामान्यर्घ्यं च हेतिना

द्वारपौ तेन गन्धाद्यै रिष्ट्वास्त्र द्वरमध्यमे ६९
ग्रालयस्य प्रविश्यान्तर्भूतशुद्धिं विधाय च
सकलीकृत देहस्तु कृत्वान्तश्चराड पूजनम् ७०
ग्रस्त्रप्राकार दिग्बन्धैः स्थानशुद्धिं विधाय च
पाद्यमाचमनं दत्वा हृदार्घ्यं संहिताणुभिः ७१
ग्रर्घ्यं वा केवलं तेन प्रोन्दय द्रव्यं हृदालभेत्
स्वस्वमिष्ट्वा हृदा मन्त्रानुच्चरेन्मंत्रशुद्धये ७२
पूर्वपूजां समभ्यर्च्य चराडेशानाय विद्महे
इत्युक्त्वा टङ्कहस्ताय धीमहीति पदं ततः ७३
तन्नश्चराड पदं पश्चात् पदमुक्त्वा प्रचोदयात्
दत्वा सामान्यमर्घ्यं च निर्माल्यमपनीय च ७४
संशोध्य चराडमस्त्रेरा सामान्यार्घ्योदकेन च
चराडासनं च मूर्तिं च संक्ल्प्येशाद्यराून् क्रमात् ७५
हृदादींश्च यथा स्थानं न्यस्य मूलेन चराडपम्
बिन्दोरावाह्य संस्थाप्य हृदा सन्निधिरोधनम् ७६
न्यासं च हृदयादीनामप्यङ्गा भेदभावनम्
पाद्यमाचमनं चार्घ्यं दत्वा हृदय मन्त्रतः ७७
ग्रभ्यङ्गोद्वर्तनाद्यैश्च पञ्चगव्यामृतैरपि
इष्ट्वा चराडेश्वरं शक्तौ वस्त्रं गन्धं च पुष्पयुक् ७८
धूपं दीपं हृदा दद्यादर्चाङ्ग विधानतः
हृदादीन् रुद्रभक्तादीन् सास्त्रानाशापतीनपि ७९
परितश्चराडनाथस्य तानिष्ट्वावार्घ्योपचारतः
नैवेद्यः तद्विधानोक्तं दत्वा तांबूल संयुतम् ८०
पराङ्गं चेच्छिवेनोपभुक्तं चापि निवेदयेत्
जपं कृत्वा निवेद्यास्मै परिवारे बलिं नयेत् ८१
पलाशसमिदाज्यान्नैर्होमं च विभवे सति

मूलेन तद्दशांशेन तदङ्गैर्होममाचरेत् ८२
नित्योत्सवं ततश्चराड बेरस्यान्येन कारयेत्
पुष्पान्नाद्दत लिङ्गैश्च चराडेशास्त्रेण पूजितैः ८३
प्रातर्मध्याह्नारात्रेषु चराडबेरोभ्कितैस्तु वा
पादुकाराधनोपेतं प्रविशेदालयं प्रति ८४
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्ट विभेदिषु
कालेष्विष्टेषु चराडेशं यजेत्प्रत्यहमादरात् ८५
पराङ्ग चराडनाथस्य विशेषः कथ्यतेऽर्चने
श्रादौ पर्युषितां पूजां पीठकादौ हृदाणुना ८६
चराडेशायेति संक्ल्प्य यच्छिवाय निवेदितम्
नैवेद्याद्यं च पूजान्ते चराडेशस्यार्चकोत्तमाः ८७
गत्वातदालयं शुद्धतोयगन्धस्त्रगादिभिः
संपूज्य शिवनिर्माल्यमपि पश्चान्निवेदयेत् ८८
श्रात्मार्थे च परर्थे च सामान्यमिदमीरितम्
नित्येज्यैवं समादिष्टा भिक्ति मुक्ति फलप्रदा ८९
श्रायु। प्रज्ञां सौभाग्यमतुलां श्रियम्
श्रन्यञ्च लभते नित्यं चराडेशस्यार्चनेन तु ९०
विशेषयजनं कुर्यात् स्नपनेनेष्टसिद्धये
स्नपनं पूर्ववत् किंतु मध्ये चराडेश्वरं घटे ९१
देव्या युतस्स चेन्नचस्त्वा वर्धनीं तत्र तां यजेत्
श्रष्टमूर्तिषु पूर्वादि दिक्स्थाः पञ्च प्रकल्पने ९२
रुद्रभक्तादयोऽष्टौस्युर्नवकुंभाभिषेचने
इन्द्राद्या वज्रपूर्वाः स्युस्तद्बाह्ये पञ्च विंशतौ ९३
पञ्चाशत् स्नपने बाह्ये चराडेशास्त्रं तु केवलम्
शतस्थाने तु तद्बाह्ये हृदयं केवलं यजेत् ९४
उत्सवं दमनारोहं पवित्रारोहं नयेत्

दीपावलीं वसन्तेज्यां मासे मासोत्सवक्रियाम् ९५
नवनैवेद्यकर्माणि जीर्णोद्धारं च निष्कृतिम्
किं तूत्सवे ध्वजे टङ्कं वृषं वा केवलं लिखेत् ९६
शिवोत्सत्वेऽपि कर्तव्यश्चण्डनाथोत्सवस्त्विह
धजहोम बलिं हित्वा केवलं यानमेव वा ९७
प्रतिमां चण्डवत् कुर्यात् तत्र टङ्का कृतिर्भवेत्
प्रतिष्टोत्सव कर्मादावनुक्तं कर्म यद् द्विजाः ९८
तत्सर्वं पूर्ववत् ग्राह्यं चण्डेशाणु समन्वितम् १८ १-२

इति उत्तर कामिकाख्ये महातन्त्रे चण्डेश प्रतिष्ठाविधिः
पञ्चषष्ठितमः पटलः

अथवा द्विभुजः शक्ल वस्त्रः त्यक्षोञ्चन प्रभः
जटामकुट युक्तो वा धवलीकृत मूर्धजः
स्थानको वा आसनस्थो वा शयिता सव्यपात्तलः
सलम्ब सव्यपादस्तु वामहस्त भुजानुगः
वामेतरकरष्टङ्क युक्तोऽञ्जलीहस्त भुजानुगः
शंकरेक्षण संपन्नः शोकनम्र शिरस्तु वा

अथवा शङ्खवर्णाभः चतुर्बाहुः त्रिलोचनः
चन्द्रार्धमण्डितः कृत्तिवासा वीरासनस्थितः
पिनाकामोघ बाणाभ्यां व्यग्रपाणितल द्वयः
वराभय प्रदानभ्यां अन्यत्र परिमण्डितः

अथवा द्विभुजः शुक्ल वस्त्रः त्र्क्षोञ्चन प्रभुः
जटामकुट युक्तो वा धवलीकृत मूर्धजः
स्थानको वा आसनस्थो वा शयिता सव्यपात्तलः

सलम्ब सव्यपादस्तु वामहस्त भुजानुगः
वरहस्तोऽथवा स स्यात् इतरष्टक संयुतः
संकरेक्षण संपन्नः शोकनम्र शिरस्तु वा

अथवा द्विभुजः शुक्लवस्त्रः त्र्यक्षोञ्जन प्रभुः
जटामकुट युक्तो वा धवली कृत मूर्धजः
स्थानको वा आसनस्थो वा शयिता सव्यपात्तलः
सालम्ब सव्य पादस्तु वामहस्त भुजानुगः
वामहस्तन्तुजानुकः
वामेतरकरष्टङ्क युक्तोऽञ्जलि पुटोऽथ वा
संकरेक्षण संपन्नः शोकनम्र शिरस्तु वा

जटामकुट युक्तो वा धवलीकृत मूर्धजः
स्थानको वा सासनस्थो वा शयिता सव्यपात्तलः
संकरेक्षण संपन्नः शोकनम्र शिरो तु वा
अथवा भयटङ्काभ्यां पाश शूल द्वयेन तु
चतुर्भुजस्तु वा कार्यः शङ्कराज्ञानु पालकः

बद्ध पद्मासनश्चण्डनाथो दुर्दर्श भीषणः
व्यालयज्ञोपतीती च मुखोद्गीर्ण महानलः
करालकञ्जका भासो जटिलश्चन्द्रशेखरः
चतुर्वक्त्रः चतुर्बाहुः चाक्षमालात्रिशूलवान्
टङ्कं कमण्डलुं वामे भानुरक्तार्क लोचनः

षट्षष्ठितमे पटले शिवभक्त प्रतिष्ठा विधिः

वक्ष्यामि शिवभक्तानां प्रतिष्ठां भोगमोक्षदाम्

ब्राह्मणाः क्षत्रिया वैश्याश्शूद्रा वा ह्यन्तरालजाः १
स्त्रियो वा गुरवश्चैषा मभिषिक्तो नृपोऽथवा
शिवभक्ति समोपेता जीवान्तो वा मृतास्तु वा २
तेषां प्रतिकृतिं कृत्वा प्रतिष्ठाय समर्चयेत्
शैवाः पाशुपताश्चैव महाव्रत धराश्रये ३
लकुला भैरवाद्याश्च येन मार्गेण दीक्षिताः
तेषां तेनैव मार्गेण स्थापनाद्यं विधीयताम् ४
शिव सिद्धान्त मार्गेण सर्वेषां स्थापनं परम्
स्वप्रधानं पराङ्गं च द्विविधं स्थापनं मतम् ५
ग्रामादौ वा नदी तीरे पुष्करिण्यास्तटेऽपि वा
वने चोपवने वापि पर्वते वा मनोरमे ६
स्थानेऽन्यत्र च कर्तव्यं स्वप्राधानस्य मन्दिरम्
देवालयान्तस्सालादौ तत्र कल्पित मन्दिरे ७
परिवार समोपेतं स्वप्रधानं प्रकीर्तितम्
देवालयादौ सर्वत्र मालिका मण्डपादिषु ८
परिवार विहीनं यत् कल्पितं त्वङ्गमिष्यते
त्रिहस्तं तु समारभ्य द्विद्विहस्त विवर्धनात् ९
एक विंशति हस्तान्तो विमान व्यास इष्यते
आयामोत्सेध गर्भाद्यं मण्डपाद्यं तथापरम् १०
सालं च गोपुरं पुण्यमायादीनां निरीक्षणम्
आद्येष्टका विधानं च गर्भ संस्थापनं तथा ११
मूर्धेष्टका विधानं च प्राग्देव समीरितम्
तदर्थं शिवलिंगं वा प्रतिमा वा शिवस्य तु १२
स्कन्द नन्द्यादि रूपं वा मृतप्रतिकृतिं तु वा
कुर्यादायादि संयुक्तं शिलाद्यैरुक्त वस्तुभिः १३
शैलं लोहं तथा वार्क्षं मृण्मयं मणिजं तु वा

अर्ध चित्रमथा भासं पटादि परिकल्पितम् १४
लिंगं चेत् प्रतिमा चेद्वा लिंग बेरोक्त वर्त्मना
मानं तयोश्च संग्राह्या हर्म्याद् गर्भगृहादथ १५
द्वारात् पादोच्च मानाद्वा मानाङ्गुलवशेन तु
षडयवादि प्रभेदेन कर्तुर्मात्राङ्गुलेन वा १६
हर्म्यादिमाने नवधा कृते स्यादुत्तमादिकम्
त्र्यङ्गुलाढ्व्यङ्गुल द्धर्यातु षरणवत्यङ्गुलान्तकम् १७
मानमेतत्समाख्यातं जात्यायांश समन्वितम्
वसुनन्द गुणाद्धर्या तु भानु नाडयष्टभिर्हतम् १८
आयो व्ययोऽथ योनिस्स्यादष्टघ्नं भैर्हतं दिनम्
नववेदहृदं सप्त नवसंख्याहृतं तु यत् १९
वारोह्यंशस्समाख्यातो यजमानानुकूलितम्
मृतनामाक्षरेणानुकूलितं च विधीयताम् २०
लिंगं चेत्तद्विधानोक्त्या प्रतिमा च तथैव च
तदुक्त तालभेदेन कर्तव्यं स्याद् द्विजोत्तमाः २१
मृत प्रतिकृतिं चोक्तामष्ट तालेन कारयेत्
आसीनं स्नानकं वापि वाहनारूढमेव वा २२
आसने स्थानके वाथ पद्मसिंहासनं तु वा
अधस्तात् कल्पयेद्विद्वानुभयं वा विधीयताम् २३
यथेष्टासनयुक्तं वा समाश्रं वा यथाक्रमात्
आसनोन्मान विस्तारायामं तद्वदलंकृतिम् २४
प्रतिमोक्त प्रकारेण प्रागुक्त विधिना नयेत्
शिखी वा बद्धकेशी वा मुण्डितो जटिलोथवा २५
अभिषिक्तो नृपश्चेत्तु किरीट मकुटान्वितः
यथेष्टायुधयुक्तो वा नमस्कारयुतोऽथवा २६
सर्वलक्षण सम्पन्न स्सर्वाभरण भूषितः

गायकाः नृत्तयुक्ता वा पूजका वा यथेष्टकम्  २७
स्त्रियश्चेत्स्वानुरूपेण भूषणैरुपभूषिताः
एवं लक्षणमाख्यातं प्रतिष्ठाद्यं निगद्यते  २८
मधूच्छिष्ट क्रियात्रापि प्रतिमोक्त प्रकारतः
ततोऽङ्कुरार्पणं कुर्यात् प्रतिष्ठार्थं ततः पुरा  २९
रत्नन्यासं ततः कृत्वा नेत्रोन्मीलनमाचरेत्
स्थण्डिलं पूर्ववत्कृत्वा तदूर्ध्वं विन्यसेत्पटम्  ३०
संकल्प्य प्रणवं पीठं तदूर्ध्वे प्रतिमां न्यसेत्
हेम सूचि प्रहाराभिः कृष्णमण्डलमालिखेत्  ३१
ज्योतिर्मण्डलमालिख्य दृष्टिं यूकप्रमाणिकाम्
नेत्र मन्त्रं समुचार्य क्रियामेतां समाचरेत्  ३२
तर्पयेन्मधुसर्पिभ्यां विद्वान् सौवर्णदूर्वया
मध्वाज्य पूरितं पात्रद्वयं तस्य प्रदर्शयेत्  ३३
सौवर्णेन नखेनैव नेत्रमन्त्रेण संस्पृशेत्
धान्यानि गां सवत्सां च कन्यकां ब्रह्मणनापि  ३४
दर्शयित्वा पटं हित्वा बेरशुद्धिमथाचरेत्
सर्वालंकार संयुक्तं ग्रामादौ भ्रमणं नयेत्  ३५
जलाधिवासयेद्बिबं लोकपाल घटान्वितम्
यागार्थं मण्डपं कुर्यात् नामेनाग्रेऽस्य पार्श्वयोः  ३६
नव पञ्चैक संख्यानि तत्र कुण्डानि कल्पयेत्
उद्वास्य शिल्पिनं पश्चात् विप्रभोजनमाचरेत्  ३७
वेद्यूर्ध्वे स्थण्डिलं कृत्वा शालिभिः पूर्वमानतः
प्राग्वद् शुद्धिं प्रकल्प्याथ ग्रामादीनां प्रदक्षिणम्  ३८
जलाधिवासनं चैव मण्डपे कुण्डकल्पनम्
शाल्यादि स्थण्डिलं पञ्चशयनं चर्मजादिकम्  ३९
आधाराख्य मनन्तं च धर्माद्यं च चतुष्टयम्

संकल्प्य मानुषं पीठं प्रणवेन प्रकल्पयेत् ४०
स्नान वेदीं नयेद्बिम्बं शिलाद्यैरपि निर्मिते
पीठे संस्थाप्य बेरं तु प्रागुक्त विधिना गुरुः ४१
वस्त्रैरावेष्टय गन्धाद्यैः मालाद्यरूप भूषयेत्
बद्ध प्रतिसरं बेरं शयनोपरि विन्यसेत् ४२
उपधानं न्यसेत्प्राच्यां तत्र बिंबं शिरो भवेत्
शिरसश्चोत्तरे भागे कुंभं प्राधानिकं न्यसेत् ४३
अभितोऽष्टौ घटान्वस्त्रहेम सूत्र विभूषितान्
चन्दनोदक संपूर्णान् फा पल्लव संयुतान् ४४
तन्मध्यमे न्यसेन्मन्त्रांस्तद्विधान मिहोच्यते
सान्तमाद्यस्वरोपेतं बिन्दुयुक्तं यथा भवेत् ४५
आत्ममन्त्र स्समाख्यातो हंसशब्दोऽथवामतः
सान्तेनैव वर्णे ब्रह्माङ्गानि प्रकल्पयेत् ४६
विद्याङ्गानि च वा तस्य स्वाख्यायुक्तस्य वा मनुः
ह्रींकारः स्त्रीप्रतिष्ठायां तेन ब्रह्माङ्ग कल्पना ४७
स्वपत्नी सहिता यत्र प्रतिष्ठा प्रविधीयते
प्रधनघट सौम्ये तद्भार्यार्थं करकं न्यसेत् ४८
पत्नीद्वयं चेद्याम्येऽपि वर्धनीमपरां न्यसेत्
वह्वयश्चेत् करका ग्राह्या बहवः पार्श्वयोर्वयोः ४९
स्त्री प्रतिष्ठासु सर्वासु वर्धन्यस्संप्रकीर्तिताः
पृथिव्यादीनि भूतानि मनोऽहङ्कार बुद्धयः ५०
परिवार घटे पूज्या अष्टौ वा वसवो मताः
स्त्रीणां दिशस्तु पूर्वस्माद्देवताः प्रैकीर्तिताः ५१
पुरुषे लोकपला वा पूर्वाद्यष्टघटेषु च
संपूज्य गन्धपुष्पाद्यैः तत्वतत्वेश्वरान्यसेत् ५२
आत्मविद्या शिवाख्यं च तत्वत्रयमुदीरितम्

आत्मानमन्तरात्मानं परमात्मानमेव च ५३
तत्वतत्वाधिपत्वेन क्रमेण विनिवेशयेत्
स्त्रीणामप्येव मेवं स्यात् क्ष्मादयो मूर्तयो मताः ५४
अष्टौस्युः पञ्चपक्षे तु क्ष्मादयः पञ्च एव हि
इन्द्राद्या मूर्तिपाः पक्षे निवृत्याद्यास्तु मूर्तिपाः ५५
तत्तद्ब्रह्माणि विन्यस्य तत्तन्मूर्तिं हृदि न्यसेत्
अकारादि क्षकारान्तं न्यस्त्वा मूर्धादिषु क्रमात् ५६
जीवन्यासं स्वमन्त्रेण न्यस्त्वाङ्गानि च विन्यसेत्
संपूज्य गन्धपुष्पाद्यैः वस्त्रेणाच्छाद्य वर्मणा ५७
ततः कुण्डान्तिकं गत्वा होमकर्म समारभेत्
प्राग्वच्च कुण्ड संस्कारं शिवाग्न्याधानमेव वा ५८
तन्मध्ये भक्तमावाह्य साङ्गं संपूज्य तर्पयेत्
समिदाज्य चरूल्लाजां तिलैर्द्रव्यैस्तु मूर्तिपैः ५९
पलाशोदुम्बराश्वत्थवटाः प्रागादिषु क्रमात्
शमीखादिर मायूर श्रीवृक्षस्त्वग्नि कोणतः ६०
प्रधानेऽपि पलाशस्यात् शतं वार्धं तदर्धकम्
हुत्वा पूर्णां ततो दत्वा तत्वतत्वेश्वरान् प्रति ६१
मूर्तिमूर्तीश्वरोपेतं प्रत्येकं चाहुतित्रयम्
कृत्वा घोराणुना होमं निश्छिद्रार्थं शतं द्विजाः ६२
स्पृष्ट्वा मूर्धादिपादान्तं शान्तितोयेन सेचयेत्
ततश्चान्तर्बलिं बाह्य बलिं दत्वा शुचिर्गुरुः ६३
रात्रिशेषं व्यपोह्याथ प्रभाते मूर्तिपैः सह
स्नात्वा समाप्य सन्ध्यां तु कृतकृत्यो गुरूत्तमः ६४
पञ्च गोचर संजात स्सोष्णीषस्सोत्तरीयकः
पञ्चाङ्ग भूषणोपेतो दक्षिणातुष्टमानसः ६५
तद्वत् संपूजितैर्मूर्ति धारकैरणुजापिभिः

अध्येतृभिश्च दैवज्ञैश्शिल्पिभिस्तोषितैर्युतः ६६
द्वारद्वाराधिपानिष्ट्वा कृतकुंभार्चनो गुरुः
संपूज्य वह्निं कुराडस्थं पूर्णां दत्वा यथा क्रमात् ६७
उत्थाप्य शयनाद्बिम्बं यानमारोप्य युक्तितः
प्रसादादौ नयेद्बिम्बं स्नानश्वभ्रेऽथवा नयेत् ६८
रत्नन्यासं यथापूर्वं स्थापने परिकल्पयेत्
आसनं प्रणवं कृत्वा मूर्तिस्थाणु प्रकल्पिताम् ६९
मातृकां च ततो न्यस्त्वा जीवन्यासं समाचरेत्
संस्नाप्य कुंभपानीयैः परितः स्थापितैरपि ७०
वस्त्रगन्धैश्च पुष्पैश्च धूपदीपैर्निवेद्यकैः
उपचारैस्तथा चान्यैः शिवभक्तं समर्चयेत् ७१
उत्सवं कारयेदन्ते यथा विभव विस्तरम्
ततः प्रभृति तं भक्तं प्रत्यहं पूजयेन्नरः ७२
आदिशैवकुलोद्भूतः पञ्चगोचर संभवः
आवश्यकं तथा शौचस्नान सन्ध्यादि वन्दनम् ७३
कृत्वा प्रविश्य अर्घ्यं तु सामान्यार्घ्यकरो गुरुः
पुरुषं प्रकृतिं चैव संपूज्य द्वारपार्श्वयोः ७४
प्रविस्य गर्भगेहं तु परमात्मानमव्ययम्
वास्तु मध्ये समभ्यर्च्य भूतशुद्धिं विधाय च ७५
कृतमन्त्र तनुः पश्चात् स्थानशुद्धिं विधाय च
परिकल्प्य विशेषार्घ्यं कुसुमाक्षत तोययुक् ७६
प्रोक्षयेद् द्रव्यजालं तु प्रागुक्तविधिना नरः
प्रणवाद्यान् पठेन्मन्त्रान् नमोन्तान्मन्त्र शुद्धये ७७
अस्त्रतोयेन बेराद्यं स्नापयेद् बेरशुद्धये
षडुत्थमासनं कृत्वा पूर्वोक्तेन विधानतः ७८
तन्मध्ये कल्पयेन्मूर्तिं मूर्तिमन्त्रेण पूजितम्

तत्तद्रूपं समोपेतं तत्तन्मूलाणुना बुधः ७९
जीवन्यासं ततः कृत्वा हृदयादि यथा न्यसेत्
पाद्याचमनं चार्घ्यं हृदयेन निवेदयेत् ८०
संस्नाप्य शुद्धतोयेन पञ्चगव्यादिभिस्तु वा
संमृज्य वाससा वस्त्रं गन्धं स धूमकम् ८१
दीपेन सहितं दद्यान्नैवेद्यं सोपदंसकम्
ताम्बूलं च त्रिसन्ध्यासु दद्यात्संध्याद्वयेऽपि वा ८२
अथवा त्वेक सन्ध्यायां बल्युत्सवयुतं न वा
दीपान्तं वा निवेद्यान्तं यजेच्छक्त्यनुरूपतः ८३
अयने विषुवे चैव संक्रान्तौ ग्रहणादिषु
स्नपनं विधिना कार्यं प्रागुक्तेन क्रमेण तु ८४
मध्य कुंभे तु भक्तः स्यात् क्षमादयः प्रथमावृतौ
स्वराष्षोडश तद्बाह्ये तद् बाह्ये कादयो मताः ८५
एवमुत्तम कल्पस्यात् आवृतिद्वययुक् समम्
एकावरण संयुक्तमधमं त्विति कीर्तितम् ८६
प्रतिमासं ततः कुर्यात् उत्सवं विभवे सति
भक्त जन्मदिने वापि कर्तुर्जन्मदिनेऽपि वा ८७
संवत्सरोत्सवः कार्यः प्रत्यशब्दं च विवाहकम्
नवाहं वाथ सप्ताहं पञ्चाहं त्रिदिनं तु वा ८८
अथवैकदिनं वापि बलिहोम समन्वितम्
ध्वजारोहण पूर्वादि कर्तव्यं कर्तुरिच्छया ८९
धजे तु वृषभः कार्यः सर्वेषामुत्सवादिषु
स्वस्व जाति वशेनोक्त मङ्गलाष्टक संयुतम् ९०
भेरी सन्ताडनं रात्रौ भक्तास्त्रेण समन्वितम्
इन्द्रादीनां बलिं दद्यात् गन्धं पुष्पादि संयुतम् ९१
यागाधिवासनं कुर्यात् उत्सवस्यादिरात्रके

यागशालां विधानेन कृत्वा वेदि समन्विताम् ९२
पूर्वादि कुराड संयुक्तं पञ्चकुराडयुतं तु वा
सर्वमङ्गल संयुक्तं मङ्गलाङ्कुरमाचरेत् ९३
बल्यर्थमुत्सवार्थं च भक्त प्रतिकृतिं द्विजाः
अल्पां च महतीं कृत्वा प्रतिष्ठाप्य विधानतः ९४
तत्र प्रतिसरं बध्वा वेदिमध्ये विधानतः
स्थरिडलं शालि पूर्वैश्च कृत्वा संस्थापयेत्घटान् ९५
प्रतिष्ठावित्तथा तेन तत्रोक्तानेव तानयजेत्
प्रत्यहं पूजयेद्देवान् सायं प्रार्गुरूत्तमः ९६
गन्ध पुष्पादि संयुतमन्ते होत्रं समाचरेत्
द्रव्यारयत्रापि विप्रेदाः प्रतिष्ठोक्त प्रकारतः ९७
सायं प्रातर्बलि र्दद्यात् ज्ञुद्र बिंबसमन्वितम्
बल्यन्ते चोत्सवं कुर्यात् सर्वालंकार संयुतम् ९८
परिवेष क्रमं कुर्यात् गेयनृत्तादिसंयुतम्
अन्ते चूर्णोच्सवं कृत्वा तीर्थ कर्म समाचरेत् ९९
प्रत्यहं मूलूबेरस्य पूजा वैशेषिकी भवेत्
शुद्धस्नपनमन्ते च मूले बेरादिके नयेत् १००
धजोत्थान विहीनं वा बलिहोमोभ्फितं तु वा
केवलं तूत्सवं कुर्यादशक्तश्चेन्मुन्मुनीश्वराः १०१
शिवभक्त प्रतिष्ठां तु यः कुर्यान्नर सत्तमः
आयुरारोग्य विजय श्रीकीर्तिफलमाप्नुयात् १०२
अन्ते सायुज्यमाप्नोति नात्र कार्या विचरणा १०२ १-२

इति उत्तरकामिकाख्ये महातन्त्रे शिवभक्त प्रतिष्ठा विधिः
षट्षृटितमः पटलः

सप्तष्टितमे पटले विद्यापीठ प्रतिष्ठा विधिः

विद्यापीठ प्रतिष्ठां तु प्रवक्ष्यामि समासतः
सा विद्या द्विविधा प्रोक्ता संस्कृतान्यात्मिकेति च १
प्रासादादौ चतुर्दिक्षु तद्विदिक्ष्वन्तरालके
भक्तोक्त स्थानके वापि विद्यास्थानं प्रकल्पयेत् २
अङ्गुलत्रयमारभ्य व्योमाङ्गुलं विवृद्धितः
पञ्च विंश्ति मात्रान्तं भवेत् पुस्तक दैर्घ्यकम् ३
व्योमाङ्गुलात्पाद वृद्ध्या रविमात्रावसानकम्
प्रमाऽ तु विशाले स्यात् पञ्चपट्टीयुतं तु वा ४
भूर्जत्वक्कुलसंभूतं शीतालीदलमेव वा
तालसंभूतपत्रं वा सुवर्णादि विनिर्मितम् ५
शैलदारुकृतं वापि लेखये दक्षरैः शुभः
मष्या वा कुङ्कमाद्यै र्वा पुष्पाद्यैर्निर्मितेन वा ६
लिखेत् तूलिकया वापि देशिकः शिष्य एव वा
शुभवारर्क्षयोगादावारभेदनुकूलभे ७
पशुना लेखयेन्नैतच्छिवज्ञानं प्रयत्नतः
न समीपे पशूनां तु कुर्यादध्ययनं बुधः ८
नानादेऽस समुद्भूतैरक्षरैः कान्ति संयुतैः
लेखयेदृजुपङ्क्त्या तं पत्रप्रान्ते न लेखयेत् ९
गन्धाद्यैः शिवमभ्यर्च्य मातृकां शिवरूपिणीम्
वस्त्राद्यैर्देशिकश्चेष्ट्वा पत्रिकामपि पूजयेत् १०
गोमयालिप्त भूभागे रङ्गलेख समन्विते
प्रकीर्ण पुष्प प्रकरे सधुपेन च धूपिते ११
ज्वलद्दीपसमोपेते शुद्धशैव समावृते
लिखेद्वा श्रुणुयाद्वापि पठेद्वादौ शुचिर्नरः १२
नाशुद्धं लेखयेद्विद्वान्यथालिखित पाठकैः

शिवज्ञानस्य कालेन प्रणष्टस्य प्रमाणतः १३
ऊनानितिरिक्त वर्णस्य लिखितस्य प्रमादिभिः
प्रमादीकृत पाठस्य नाशितस्याल्प बुद्धिभिः १४
अल्पज्ञान समोपेतैराचार्यैः शोधितस्य च
व्यर्थैः पदैरुपेतस्य पुनरुक्तस्य चार्थतः १५
पूर्वोत्तर विरुद्धस्य स्वसिद्धान्त विरोधिनः
छन्दसातीव नष्टस्य शब्दार्थ रहितस्य च १६
इत्येवमादिभिर्दोषैरुपेतस्य क्वचित् क्वचित्
यः करोति पुमान् सम्यक् संस्कारं देशिकः सुधीः १७
शिवतत्वार्थ विद्वान्यः स विद्या पारमेश्वराः
अध्यापयेच्छनैश्शिष्याः शिवभक्तान् १८
शिवविद्यानुसारेण विद्यादानं तदुच्यते
संस्कृतैर्द्रामिडैर्वाक्यैर्देशभाषा प्रकारकैः १९
प्राकृत प्रभवैः शब्दैविशुद्धैः संस्कृतैरपि
अत्र लौकिक शब्दैश्च यश्शिष्य मनुरूपतः २०
देशभाषाद्युपायैश्च तथा भूतागमैरपि
प्रदेशवर्तिभिस्सर्व देशथं बोधयेद्यथा २१
यथा शिवस्य नैवान्तस्संपूर्णस्य महात्मनः
तथा विद्याप्रधानस्य नान्तस्सर्व गुणात्मनः २२
शिवान्तगुणमैश्वर्य विद्यादानस्य तत्फलम्
इहकीर्तिः श्रियो ब्राह्मी प्रज्ञा कान्तिर्धनं सुखम् २३
योऽशुद्धमात्मनाधीत्य ज्ञानमध्यापयेत्परम्
स याति नरकं घोरं पापीयाञ्ज्ञान नाशकः २४
शिववत् पूजयेद्भक्त्या शिवज्ञानप्रकाशकम्
प्रत्यहं लेखयोद्विद्वान् यथा शक्ति सुबुद्धिमान् २५
यावदक्षरं संख्यास्युः शिवज्ञानस्य पुस्तके

तावद्युतसहस्राणि दाता शिवपुरे नरः २६
दर्श पूर्वान् समुद्धृत्या दश वंश्यांश्च बुद्धिमान्
मातृः पितृन्धर्मपत्नीस्तैस्स्वर्गं समवाप्य च २७
स्वर्गे संस्थाप्य तान् सर्वान् स्वयं शिवपुरं व्रजेत्
अपि श्लोकं तदर्धं वा शिवज्ञानस्य यः पठेत् २८
वाचयेच्चिन्तयेद्वापि लिखेद्वा लेखयेत्तुवा
श्रुणुयादेकचित्तस्तु तदर्थं च विचारयेत् २९
अन्येभ्यः श्रावयेद्यस्तु तस्य पुण्य फलं महत्
शिवज्ञानाभियुक्तस्य भोजनाच्छादनादिभिः ३०
आसमाप्तेस्तु संरक्षेद्विद्यादानफलं लभेत्
मूल्येन कारयेद्वाथ तदेव फलमश्नुते ३१
यस्य राष्ट्रे शिवज्ञान व्याख्यानं वर्तते द्विजाः
स राजा वर्धते स राजाधिप ऊर्जितः ३२
राज्ये राजगुरुत्वेऽपि सेनापत्येन्यकर्मणि
पुरोहितत्वे सर्वेषां राजकार्येऽन्यदर्शने ३३
शुद्धशैवो भवेद्योग्यस्स चेत्सान्तानिको वरः
यत्सिद्धान्ता विरोधेन वेदं वेदाङ्गमेव च ३४
तथा पाशुपतादीनि गारूडादीन्येनकधा
निश्चिनोति च शास्त्रार्थं स धर्मं वेत्ति नेतरः ३५
निश्चिनोतिच शास्त्रार्थं शुद्धशैव विरोधतः
बुद्धिस्यात्तामसीत्स्य स च धर्म बहिष्कृतः ३६
तस्मात्सिद्धान्त शैवेन शुद्ध शैव विदाररात्
शान्तिकं पौष्टिकं कर्म ज्ञेयं राज्ञा विशेषतः ३७
अन्येषामपि सर्वेषा माभिचारादिकम् तु वा
विधेयं धर्मनिष्टेन सान्तानिक वरेण तु ३८
तेनैवानुष्टितं कर्म फलदं सर्वदा नृणाम्

एवं विद्या प्रभावस्यात् स्थापनं वक्ष्यतेऽधुना ३९
त्रिहस्तं तु समारभ्य त्रस्त्रिंशत्करान्तिकम्
विद्याशाला विशालस्यात् प्रसादो वाथ मण्डपः ४०
एक शालादि भेदेन शाला वा लक्षणान्विताः
विद्यापीठस्य विस्तार सप्ताङ्गुल विशालतः ४१
द्विव्द्यङ्गुल विवृद्ध्या तु स्यादेकत्रिंशदङ्गुलः
तेनायामस्समाख्यातः पञ्चाशत्करजान्तकः ४२
चतुरश्रस्समो वा स्यात् आयताश्रस्तु वा भवेत्
अन्यदासन विध्युक्त मार्गेण सकलं नयेत् ४३
संस्कारांश्च ततो विद्यात् प्रोक्षयेत्पञ्चगव्यतः
मण्डपे स्थण्डिलं कृत्वा वस्त्रोर्ध्वे तां निवेशयेत् ४४
आसनाद्यं शिवे यद्वन्मूर्तिमूर्तीश संयुतम्
शिवभेदे शिवः पूज्यो रुद्रभेदे स एव हि ४५
मध्यमे शिव कुंभं तु पार्श्वयोर्वर्धनीद्वयम्
द्वयोरेकैव पूजास्यात् विद्येशान् बहिरावृतान् ४६
संपूज्य गन्धपुष्पाद्यैः होमं प्राग्वत्समाचरेत्
समिदाज्यतिलोपेतं हविषा च समन्वितम् ४७
यवेनाष्टोत्तरशतं हुत्वा पूर्णां समाचरेत्
संप्राप्त दक्षितणः कुर्यान्मन्त्रन्यासं गुरूत्तमः ४८
मध्यमेतु शिवं न्यस्त्वा देवीं पट्टिकयोर्न्यसेत् ४८ १-२
इति उत्तरकामकाख्ये महातन्त्रे विद्यापीठ विधिर्नाम सप्तषष्टितमः पटलः

## अष्टषष्टितमे पटले दशायुध प्रतिष्ठा विधिः

दशायुध प्रतिष्ठां तु वक्ष्ये लक्षण पूर्वकम्
वज्रं शक्तिं च दण्डं च खड्गं पाशं तथाङ्कुशम् १

गदा त्रिशूलं पद्मं च चक्रं चेति दशायुधम्
एक वक्त्रं द्विनेत्रं च करण्डमकुटान्वितम्  २
कृताञ्जलिपुटोपेतं द्विबाहुं सर्वलक्षणम्
प्रतिमालक्षण प्रोक्तमानेनैव समाचरेत्  ३
जाये शक्तिगदे ज्ञेये चक्रपद्मे नपुंसके
शेषाः पुमांसो विज्ञेयास्त्वष्टतालविनिर्मिताः  ४
स्वमूर्ध्न्यायुध संयुक्ताः स्वकीयादेकतालतः
तालाष्टांश विवृद्ध्या तु चतुस्तालावसनकम्  ५
कल्पयेदायुधं विद्वान् अस्त्र वर्गोक्तमार्गतः
तेषां मूर्ध्न्यायुधं कार्यमथवा मकुटोपरि  ६
हस्तयोरन्तरे वापि वामेतरकरेऽपि वा
परित्यज्याङ्कुशं यद्वा तत्स्थाने कल्पयेध्वजम्  ७
ततः प्रतिष्ठा कर्तव्या तद्विधानमिहोच्यते
रत्नन्यासं पुरा कुर्यान्नेत्र मोक्षणकं ततः  ८
तर्पणं नेत्रयोर्धान्यदर्शनं मधु सर्पिषा
गव्याभिषेचितं शस्त्र मलंकृत्य नयेत्ततः  ९
ग्रामप्रदक्षिणं नीत्वा शाययेज्जल मध्यमे
प्रागुक्त मण्डपं कृत्वा चतुर्द्वार समन्वितम्  १०
एक वेदि समोपेतं पृथग्वेदियुतं तु वा
मण्डपं दशसंख्यातं प्रपा कुण्डसमन्वितम्  ११
पूर्वस्मिन् स्व स्व दिक् कुण्ड संस्थानैरन्वितं यथा
एकस्मिन् मण्डपे त्वष्टदिक्कुण्डं परितो भवेत्  १२
इन्द्रेशानान्तरे वृत्तं पितृ वारुण मध्यमे
वृत्त कुण्डं भवेदेवं कुण्डानि दश संख्यया  १३
ब्राह्मणान् भोजयेद्वास्तुहोमं प्रत्येकमेव वा
पुण्याह प्रोक्षणान्ते तु स्थण्डिलं लक्षणान्वितम्  १४

शयनं कल्पयेद्वस्त्रैरनेकैरेकतोऽपि वा
आसनं प्रणवं कृत्वा दर्भैः पुष्पैः परिस्तरेत् १५
जलानीतं च सुस्नातं पूजितं कृतकौतुकम्
शयने शाययेद् बिंबं प्रदक्षिण शिरोन्वितम् १६
वस्त्रैराच्छादयेत्सर्वान् कुंभान् संस्थापयेद् गुरुः
परितोष्ट घटान्वापि कलशान् प्राग्दिगादितः १७
स्वस्ववर्णैश्च मूलाणुं ब्रह्माण्यङ्गानि कल्पयेत्
मध्य कुंभे च मूलाणुं दिक्षु ब्रह्माणि पूजयेत् १८
विदिक्ष्वङ्गानि संपूज्य वाप्तिं पुरुष गोचरम्
स्मृत्वा होमं स्वमन्त्रैश्च समिदाज्यतिलान्वितम् १९
हविषा पूर्णया युक्तं स्वाग्नौ स्व होममाचरेत्
पलाशोदुम्बराश्वत्थ वटा दिक्षु विदिक्षु च २०
शमीखादिर मायूर श्रीवृक्षास्संप्रकीर्तिताः
पलाशो ब्रह्मणो विष्णोश्श्रीवृक्षसमिधोमताः २१
प्रातः पूर्णाहुतिं हुत्वा मन्त्रन्यासं समारभेत्
संपूज्य गन्धपुष्पाद्यैः नवेद्य सहितं यथा २२
स्नपनं कारयेन्नो वा तद्वदुत्सव एव हि
एवं यः कारयेन्मर्त्यः सर्वारिष्टैर्विमुच्यते २३

इति उत्तरकामिकाख्ये महातन्त्रे दशायुध प्रतिष्ठा विधिः
अष्टषष्टितमः पटलः

एकोनसप्ततितमे पटले त्रिशूल स्थापन विधिः

त्रिसूल स्थापनं वक्ष्ये तल्लक्षण पुरस्सरम्
हैमराजत ताम्रैर्वायसेनाश्मादिभिस्तु वा १
गर्भगेहे नवांशेतु त्रिभागान्तं नवांशतः
महतामेक भागं तु शूलानां मानमिष्यते २

प्रत्येकमष्टधा भक्त्वानेकधा मानमेव च
द्वारस्तम्भो दया देव मानं वा परिभाव्यताम्  ३
द्विहस्तादेकमात्रद्धर्या चतुर्हस्तान्तमेव वा
जात्यंशं पूर्ववन्नीत्वा कल्पयेद्देशिकोत्तमः  ४
यल्लब्धं त्रिंशदंशादि शतान्तादनु भाजयेत्
भामेकं प्रयुञ्जीयाच्छुभायादि प्रसिद्धये  ५
लौकिकं यौगिकं चेति द्विविधं शूलमिष्यते
यजमाननृपग्रामानुकूलं लौकिकं मतम्  ६
जात्यायांशोफ्भितं रुद्राद्यानुकूल समन्वितम्
अंगुलैर्निर्मितं यत्तु यौगिकं शूलमिष्यते  ७
लौकिकं चान्यधामस्थ बेर साधारणं मतम्
युगिकं चान्यनगर स्थानकर्तृनुरूपि यत्  ८
तदन्यत्रापि योज्यं वा प्रतिमास्वेवमेव वा
उत्सेधं दशधा कृत्वा व्योमद्वित्रिभ्रेव वा  ९
तन्मध्याष्टंशमानं वा मध्य पत्रोच्चमानकम्
पादमान युतं वाथ तन्मानं च पृथक् पृथक्  १०
तत् त्रिंशदंशं कृत्वैव द्वित्रिवेदशरांशकैः
रससप्ताष्टनवभिः मध्यपत्रस्य विस्तरः  ११
संग्राह्या पत्रमानं तु चतुरश्रं समं नयेत्
पत्रमानं विसृज्याथ पार्श्वयोरुभयोरपि  १२
वृत्तकारं नयेत्तत्र पत्रमानेन वोभयोः
मध्यपत्र ततिर्यद्वत् पार्श्व पत्रततिस्तथा  १३
चतुष्पञ्चषडंशोन वृद्धिर्वा तारमिष्यते
मध्यपत्राद् बहिश्चान्तर्मध्यसूर समाश्रयात्  १४
पार्श्वपत्रे प्रकर्तव्ये कृशमूलाग्र संयुते
पत्रमूलबलार्धं च मूलाधारं विवर्धयेत्  १५

अर्धपत्रं च पत्राग्रं तु कृशं भवेत्
पत्रतारेण चाग्रे तु तदर्धे नाथ पादतः १६
अधिकं वाथ तत्पार्श्व पत्राग्राभ्यां मनीश्वराः
पत्राग्र मध्यमं तद्वद्विशिष्टं वा प्रकल्पयेत् १७
तद्वन्मूलान्तं प्रोक्तं पार्श्व पत्र द्वयोरपि
पत्रतारं चतुष्पञ्चरस सप्ताष्ट भागतः १८
नवांशांशेन वा प्रोक्तं धनं पत्रेषु वान्यथा
यवार्धं तु समारभ्य यवपाद विवर्धनात् १९
अङ्गुलान्त प्रमाणं वा मध्य देशे धनं भवेत्
मध्य पत्रस्य मध्यात्तु हीनं तत्पत्रं पार्श्वकम् २०
मध्यपत्रस्य मूलेऽग्रे मध्ये पार्श्वद्वयोरपि
एक द्वित्रियवैर्वापि निर्गतं मुकुलं नयेत् २१
पत्रायामं त्रिपञ्चांशं कृत्वैव द्वित्रिभागतः
पादायामस्तु मूले स्यात्तदर्धं पार्श्वपत्रयोः २२
तदर्ध विस्तरस्तस्य पादो वा परिकीर्तितः
द्विगुणो मध्यपादस्य विस्तारः पार्श्वपादतः २३
पत्राणां पादमूले तु कुर्याद्वा चित्रमराडनम्
तस्याधः पालिका कार्या पत्रायामार्ध भागतः २४
हीनावैकेन रुद्रांशी द्विरिभिर्वर्धिताथवा
फलका विस्तृतिं भक्त्वा नवधैकेन वार्धतः २५
पादेन वा त्रिपादेन धनं चाधो द्विपङ्कजम्
एकेन कर्ण विस्तार इष्टाशेन मतो द्विजाः २६
पालिकार्धो घटाकार उत्सेधः स्यात् त्रिपादतः
तदर्धं च गलं प्राग्वत् कर्तव्यं मुनिपुङ्गवाः २७
पादोन कुम्भतारेण वार्धेनास्यं परकल्पितम्
घटवन्नाडिकामानं युघधा विभजेत्त तत् २८

एक भागान्तरं कुर्यात् तत्प्रमाणेन हीरिका
हीरिकाधः प्रकर्तव्यो दण्डस्तु विधिना द्विजाः २९
आस्यातारचतुर्भाग त्रिभागो दण्ड विस्तरः
तदर्धं लोहदण्डश्चेद् यथा शोभांशतोऽथवा ३०
दण्डमूले तु पद्मं वा मध्यपत्रसमं तु वा
तदर्धं वान्तरेऽष्टांशे नवधा मानमेव वा ३१
विस्तारस्तत्समं तूच्चं त्रिपादं वार्धमेव वा
पादं वान्तर मानं वा तदुच्चे दशधा कृते ३२
पट्टिकेका त्रिभिर्द्वाभ्यां वांशैः कुशेशयम्
वृत्तं वा चतुरश्रं वा द्विमिश्रं वा प्रकल्पयेत् ३३
हीरिका सममानेन तस्योर्ध्वे पट्टिकाथ वा
मध्यपत्रस्य मध्येतु लिखेद्वाब्जं तु तन्मुखम् ३४
अथवा मध्य पत्रस्य मूले वृषभवाहनम्
पत्रोच्चनवभागैकद्वित्रिवेदशरोच्चकम् ३५
देव्या समायुतं वाथ वृषभेण युतं न वा
देवान्तरं वा लोकेशानस्त्रान्वेष्ट प्रमाणतः ३६
अथवा पालिकायास्तु विदिग्ग्वश्वत्थपत्रवत्
माला चतुष्टयं कुर्याद् तद्विहीनं तु वा द्विजाः ३७
टङ्कास्य युक्तं दण्डाग्रमथवा परिकल्पयेत्
पालिकोपरि कोणेषु कारयेद्वा वृषेश्वरम् ३८
शैलजे मृण्मये शूले विशेषः कश्चिदुच्यते
मध्यपत्र समायातं त्रिपादेनार्धतोऽपि वा ३९
पादेन मध्यमेऽष्टांश मानाद्वा दण्ड विस्तरः
विस्तारोच्च् समं तद्वद्विस्तार सममेव वा ४०
यथा दण्डधनं प्रोक्तं प्रत्राणां वा धनं तथा
पादभूषण मण्डयादि पत्राधो वा प्रकल्पयेत् ४१

चतुरश्रिशिलायां तु शूलाकारं तु वा लिखेत्
त्रिशूलापरभागे तु वृषभं वा समालिखेत् ४२
अथवा दण्डमानेन पुरुषं जटिलं तु वा
पूर्वभागे परे दण्डं तदूर्ध्वे शूलमाचरेत् ४३
वृषाग्रे वृषपृष्ठे वा बलिपीठाग्र एव वा
सुदृढं स्थापयेच्छूलं तत्प्रतिष्ठा निगद्यते ४४
तदर्थमाहरेद् वृक्षाच्छूलार्थं ये प्रशंसिताः
प्रोक्तकालर्क्ष वाराद्यं तद्वदेवाङ्कुरार्पणम् ४५
संघातमष्टबन्धाद्यैः कुर्याद्दण्डेन बुद्धिमान्
पद्मसंघात मार्गेण चोर्ध्वाधः खण्डयोरपि ४६
रत्नन्यासो न कर्तव्य स्तथा नयनमोक्षणम्
अचल स्थापनं चेत्तु रत्नन्यासं तु कारयेत् ४७
विद्यते प्रतिमाद्यं चेत् तस्य दृङ्मोक्षणं नयेत्
शुद्धिं कृत्वा मृदाद्यैस्तु पुरादीनां प्रदक्षिणम् ४८
जलाधि वासनं कृत्वा ततो मण्डपमाश्रयेत्
पूर्वोक्तमानं भूतेकग्रहकुण्ड समन्वितम् ४९
सन्त्यक्त तक्षकोपेतं विप्रभुक्त्या च पावनम्
वास्तु होमसमायुक्तं वेद्यां स्थण्डिल संयुतम् ५०
शयनेनापि संयुक्तं पञ्चकेनाण्डजादिना
ततो बिंबं समानीय स्नापयेत्पूर्ववर्त्मना ५१
कौतुकं बन्धयेत्पश्चात् पद्मपत्रेषु वा त्रिषु
बेरे च वृषभे चैव बन्धयेत् कौतुकं गुरुः ५२
शयने शाययेत् पश्चात् प्राक्शिरश्चोर्ध्व वक्त्रकम्
आच्छाद्य श्वेत रक्ताभ्यां वासोभ्यामस्त्रमुच्चरन् ५३
त्रिशूलस्य शिरोदेशे वस्त्रहेमकजान्वितम्
शिवास्त्रं संयजेत्तत्र चतुर्बाह्विन्दु भूषितम् ५४

चतुर्वक्त्रं ज्वलत्केशं त्रिणेत्रपरिमण्डितम्
स्वास्ये दंष्ट्रान्वितं शक्ति शूलाभयवरान्वितम्  ५५
विद्युत्पञ्चनिभं भीममशनिध्वनि संयुतम्
द्विरष्ट वर्षेणोपेतं सुभासं स्वस्तिकान्वितम्  ५६
यद्यस्ति प्रतिमा शर्वे शिवकुंभं च वर्धनीम्
वृषो यद्यस्ति तत्कुंभं तेषु तानर्चयेत्क्रमात्  ५७
वज्रादीन् वसुकुंभेषु परितः संस्थितेषु च
तत्व तत्वेश्वरोपेतं मूर्तिमूर्तीश्वरान्न्यसेत्  ५८
पूर्ववत् प्रतिमायां च वृषे च गुरु पुङ्गवाः
दण्डमध्याग्र पत्रान्तं तत्वतत्वेश्वरान्यसेत्  ५९
शूलस्य मूर्तयः प्राग्वत् वज्राद्या मूर्तिपा मताः
न्यस्त्वैवं मूर्ति मूर्तीशाञ्छिवास्त्रं विन्यसेद् गुरुः  ६०
ततस्तद्व्यापकत्वेन सर्वान्देवमनून्न्यसेत्
मध्य पत्रे न्यसेद्रुद्रं ब्रह्माणं दक्षपत्रके  ६१
वामे विष्णुं समावाह्य पालिकायां तु पार्वतीम्
षण्मुखं कुंभदेशे तु कुंभस्यास्ये विनायकम्  ६२
दण्डस्याग्रे तु शास्तार मादित्यान्दण्ड मध्यमे
तन्मूले चण्डाराजं च लक्ष्मीं पूर्वदलाग्रके  ६३
दक्षिणे मातरः सप्त ज्येष्ठां पश्चिमदिग्दले
दुर्गा वै सौम्यदेशे तु रुद्रानर्कान्वसूनपि  ६४
दण्डमूलेऽश्विनौ चैव अष्टादशगणांस्तथा
होमं कुर्यत्तदन्ते तु कृत्वा कुण्डाग्नि संस्कृतिम्  ६५
समिदाज्यान्नलाजैश्च तिलसस्येन्द्र संयुतम्
पलाशोदुम्बराश्वत्थ वटाः प्रागादि दिक्षु च  ६६
पलाशस्त्वन्य कुण्डेषु स च सर्वत्र वा मतः
प्रधाने तर्पयेद्धीमान् शिवं साङ्गं गुरुत्तमः  ६७

पूर्वस्मिन्पार्वतीं दक्षे ब्रह्माणं विष्णुमुत्तरे
सेनानीं पश्चिमे कुण्डे रवीनग्निदिशि स्थितौ ६८
विघ्नेशं नै-ऋते वायौ मदनं चण्डरुद्रकम्
ईशान कुण्डे पूर्वस्मिन् लक्ष्मीं दक्षे तु मातरः ६९
ज्येष्ठां तु पश्चिमे कुण्डे दुर्गामुत्तरतो दिशि
तद्दिङ्मूर्त्यादि संयुक्तं पूर्व संख्या समन्वितम् ७०
रुद्रार्क वसवोऽश्विन्यौ अष्टादश गणा अपि
एकैकाहुति दानेन तर्प्याः कुण्डे प्रधानके ७१
वृषारूढादि देवांश्च पूर्ववत् तर्पयेत् गुरुः
वज्रादीन् पंकजे सर्वान् देवान् प्राग्वन्निवेशयेत् ७२
तत्तत् कुंभजलैश्चैव स्नापयेच्छूलमादरात्
स्नपनं भूरि नैवेद्यमुत्सवं कारयेच्चले ७३
अनुक्तमत्र संग्राह्यं सामान्यस्थापनोदितम्
त्रिशूल स्थापनं ह्येवं कुर्याद्यो नर सत्तमः ७४
भुक्त्वा भोगानिहैवान्ते मोक्षं चैव समाप्नुयात् ७४ १-२

इति उत्तर कामिकाख्ये महातन्त्रे त्रिशूलस्थापन विधिर्नाम एकोन सप्ततितमः पटलः

## सप्ततितमे पटले सिंहासन प्रतिष्ठा विधिः

सिंहासन विधिं वक्ष्ये श्रूयतां द्विजसत्तमाः
देवादीनां नृपादीनां मर्त्यानां च महात्मनाम् १
देवाद्याः शिवपूर्वाःस्युः नृपाद्या बहवो मताः
चक्रवर्ती भवेदाद्यस्त्वधिराजो द्वितीयकः २
तृतीयः स्यान्नरेन्द्रस्तु तेषां लक्षणमुच्यते
चतुःसमुद्रपर्यन्तं पृथ्वीं यः परिपालयेत् ३
चक्रवर्ती समाख्यातः सप्तराज्यं प्रपालयेत्

अधिराज्स्समाख्यातस्त्रिराज्यं यस्तु पालयेत् ४
नरेन्द्रः सति विज्ञेयस्त्वन्येऽपि बहवो मताः
पार्श्वेय प्रमुखास्तेषां आसनानि बहून्यपि ५
द्वारोत्सेध त्रिभागेन उत्तमं हीनमर्धतः
व्द्यन्तरं त्वष्टधा कृत्वा नवोत्सेधाः प्रकीर्तिताः ६
द्वारोदयसमं वाष्ट नवभागोनमेव वा
नरेन्द्र सदृशं तस्य बाहूरुनाभिदघ्नजम् ७
प्रदेशमानमेतत् स्यान्नृपाणामेव कीर्तितम्
तिथ्यङ्गुलं समारभ्य द्विव्द्यङ्गुल विवर्धनात् ८
पञ्चपञ्चाशदंशान्तं तुङ्गानि कथितानि तु
उत्सेध सदृशो वाथ त्रिपादोऽर्धस्तु वा मतः ९
विस्तारो व्द्यन्तरं कृत्वा चतुर्धा नवमानकम्
हीनानां हीनमानं स्याच्छ्रेष्ठानं सर्वमिष्यते १०
चतुरश्रायताश्रं वा सिंहपीठं विधीयताम्
चतुरश्रं समं वृत्तं द्युसदां चक्रवर्तिनाम् ११
अष्टमांशं समारभ्य तद्वृद्ध्या द्विगुणाधिकम्
सिंहासनायतं कुर्याद् अङ्गुलैवथकारयेत् १२
अङ्गुल द्वयमारभ्य द्विव्द्यङ्गुल विवर्धनात्
द्विगुणान्तंविधेयं स्यादायामेऽप्येवमीर्तम् १३
पाद बाह्यं तु देवानां तन्मध्ये चक्रवर्तिनाम्
अन्येषामपि सर्वेषां पादान्तं मानमिष्यते १४
सर्वं सर्वेषु वा ग्रायं पादविस्तार उच्यते
सार्धाङ्गुलं समारभ्य वर्धयेदर्ध मात्रतः १५
पञ्चाङ्गुलान्तं तद्भित्तेः पाद वेदांश निर्गमात्
यथा बलं यथा शोभं भित्तिस्तत्र विधीयताम् १६
एकत्रिपञ्चमुनयो विस्तारे भक्त्यो मताः

दैर्घ्यैर्नवाधिकाः प्रोक्ताः पूर्वोक्ताः भक्तयो द्विजाः १७
पादानामन्तरे पादा भवेयुरुपपीठके
पादे पादान्तरेऽन्यत्र सिंहरूपाणि कारयेत् १८
मकरैर्नक्रकैः पत्रैर्नानाचित्रैर्विचित्रयेत्
सिंहासन त्रिभागेन चतुर्भागे न वा त्वधः १९
एकद्वित्रिचतुर्मात्रिः विस्तारादधिकं ततः
उपपीठं विधेयं स्यात् तद्रूपमिह कथ्यते २०
स्थावरं जङ्गमं चैव द्विविधं तदुदाहृदम्
मृत्पाषाण कुजैर्दन्तैल्लोहैर्वा सुधयाथ वा २१
शैलं नेष्टं नराणां स्यात् सर्वं देवेषु योग्यकम्
दन्त वृक्ष कृतं यच्च स्वर्ण रत्नैर्विचित्रितम् २२
राज्ञां सिंहासनं श्रेष्ठं तल्लक्षणमिहोच्यते
त्रिनवांशे तदुत्सेधे क्षेपणं पङ्कजं लगलम् २३
वेत्रं तलं च पद्मं च कुमुदं पद्मपट्टिके
वेत्रं कर्णं च वेत्रं च कम्पं पत्रं कपोतकम् २४
वेत्रं कर्णं च निद्रा च मसूराधार पट्टिका
सप्तैकार्धांशकार्धैर्वा व्योम वेदांशकार्धकः २५
अर्धांशार्धार्धपादैश्च अर्धार्धधैश्च सार्धकैः
अर्धैनैकोनविंशांऽसं भद्रकं परिकीर्तितम् २६
त्रिंशदंशे तदुत्सेधे वेदार्धे द्वन्द्व सार्धके
सार्धाद्धांश विभागार्धैरेकार्धाष्टांश सार्धकैः २७
अर्धार्धव्द्यर्धकार्धैश्च व्योमार्धैरनुपूर्वशः
पद्मं कम्पं च कर्णं च कम्पं च वाजनम् २८
पद्मं कम्पं च कर्णं च कराठं निद्रा च पट्टिका
अङ्घ्रिरुत्तर पट्टी च निद्रा पद्मं कपोतकम् २९
आलिङ्गान्तरिते चैव प्रतिवाजन मूर्ध्वतः

एतत्सौम्यं समाख्यातं त्रिसप्ताङ्गै स्समायुतम्  ३०
एत देव मुखे पृष्टे सौभद्रं संयुतम्
पार्श्वयोर्भद्रयुग्मं चेच्छ्रीवहं परिकीर्तितम्  ३१
पञ्चा नामासनानां तु विजिः पृष्ठे विधीयताम्
आसन व्यासतुङ्गाढ्या मसूराधार वेशिनी  ३२
यथेष्टोन्नत विस्तारा विधेया वा द्विजोत्तमाः
तद्विस्तार विभागेन मध्ये मकर तोरणम्  ३३
पद्माभिषेक संपन्ना कार्या तोरण मध्यमे
तोरणाङ्घ्रिः स्वविस्तार निर्गता नक्रपट्टिका  ३४
मुष्टि बन्धोपरिक्षिप्त व्यालमस्तक संस्थिता
कम्प क्षेपकपोताद्यैर्बहुभिर्भूषयेत् द्विजाः  ३५
मकरैर्नक्रकाद्यैश्च नानाचित्रैविचित्रयेत्
अयोमयांस्तु नाराचान् कीलान् पट्टांश्च योजयेत्  ३६
स्वर्णनिर्मितं पट्टाद्यैः रत्नैर्वाथ विचित्रयेत्
कुर्यात्तोरण पृष्टे तु कल्प वृक्षं सुवर्णजम्  ३७
नानारत्नसमोपेत मनन्तफण संयुतम्
विजिं हि त्वाथवा कुर्यात् कल्पवृक्षं तु केवलम्  ३८
वितोरणा विजिर्वाथ आसनं केवलं तु वा
पञ्चाङ्गमुपपीठं यत् पद्मकाधो नियोजयेत्  ३९
पद्मकादि चतुर्णां स्यात् द्वादशाङ्ग मुपासनम्
उपपीठ दशांशे तु वेदांशैः कण्ठ उच्यते  ४०
क्षुद्रकम्पौ तदूर्ध्वाधोभागेन द्व्यंशमानतः
महाकम्पौ विधातव्यौ पञ्चाङ्गमुपपीठकम्  ४१
चतुर्शांशके तुङ्गे द्व्येकार्धार्ध चतुष्टयैः
अर्धार्धकैर्द्विचन्द्रैश्च अर्धार्धाभ्यामनुक्रमात्  ४२
पादुकं पङ्कजं वेत्रं कम्पं कण्ठं च वेत्रकम्

वेत्राब्ज वाजनं पद्मं कम्पं वेत्रमनुक्रमात् ४३
द्वादशाङ्गमिदं कुर्याद् उपपीठं मनोहरम्
चतुःसप्तांशके तुङ्गे जगती पङ्कजम् गलम् ४४
वेत्रं गलं च पद्मं च कुमुदं पद्म कम्पके
वेत्रं गलं च वेत्रं च कम्पं निद्रा कपोतकम् ४५
आलिङ्गान्तरिते चोर्ध्वे प्रतिवाजनमेव च
ऊर्ध्वे मसूरकाधार पट्टिका मूलतः क्रमात् ४६
सार्धांशकैस्तथकेन अर्धकार्धार्धकार्धकैः
द्व्यर्धार्धार्धक सप्तांशैः अर्धार्धार्धत्रिभागतः ४७
अर्धार्धैकार्धकैश्चैव श्रीकान्तमितिकीर्तितम्
एत देव गलाधस्तान्नेत्रार्धैकार्ध भागतः ४८
कर्णं च वाजनं निद्रा वेदिका पद्मकम्पकम्
योजयेद् वृत्तकान्तं स्याद् द्वात्रिंशद्भागनिर्मितम् ४९
उच्चे नवदशांशेऽर्धे सार्धैर्वेदार्ध कार्धकैः
त्रिभागार्धार्ध वेदार्धैरर्धद्व्यर्धार्ध कांशकैः ५०
पादुकं पङ्कजं दृक् च पङ्कजं कुमुदपङ्कजम्
वाजनं पद्मवेत्रं च पङ्कजं वाजनं कजम् ५१
वेत्र च वाजनं मूलाद् द्विसप्ताङ्गमुदाहृदम्
श्रीकान्तादि चतुर्णां स्याद् अष्टाङ्गमुपपीठकम् ५२
नेत्रैकार्ह चतुर्भागैः अर्धार्धनयनार्धकैः
पादुकं पङ्कजं वेत्रं पद्मवेत्रं च वाजनम् ५३
पट्टिका वाजनं चैव तत्तुङ्गे रुद्रभाजिते
अष्टाङ्गमुपपीठं स्यात् सर्व सर्वत्र वा मतम् ५४
प्रासाद लक्षणे पूर्वं कथितानि बहूनि च
अधिष्टानि सर्वाणि सोपपीठानि यानि च ५५
संग्राह्याणि च तानीह देशिकैर्नियमावृते

अवलम्बित पादस्याद् देवादीनां विशेषतः ५६
सिंहासनाङ्ग संश्लिष्टं पादपीठं विधीयताम्
सिंहासन विशालोच्च चतुर्थांश प्रमाणतः ५७
कण्ठोर्ध्वांशः कृतः कम्पपद्म कम्पैर्विचित्रकम्
यथा शोभांशमानेन सप्ताङ्गैर्वृत्त सन्निभम् ५८
यवादारभ्य मात्रान्तं वृद्धिर्हानिर्विधीयताम्
आसनानि च सर्वाणि सभद्राण्यथवा नयेत् ५९
पादमर्थं त्रिपादं व समं तस्याङ्ग निर्गमम्
प्रवेशं च तथा कुर्याच्छो भाबलवशेन वा ६०
आसनानां च सर्वेषामायादि विधिरुच्यते
परिधिं विपुलं दैर्घ्यं तुङ्गं सकलमेव च ६१
बन्धवेदचतुर्बन्ध ग्रहैश्च गुणयेत् क्रमात्
सप्तभूतर्क्षमूर्त्यब्धि संख्यैर्भागान् हरेद् गुरुः ६२
आयो व्ययश्च नक्षत्रं योनिर्वारो विशेषतः
शाकस्सालश्च पनसः शिंशुपश्चन्दनासने ६३
तिन्दुकोऽर्जुनतालौ च निम्बश्च सुरभुरुहः
लिकुचस्सहकारश्च कुटजः कट्फलस्तथा ६४
श्री पर्णी जाति वृक्षा ये क्षीर वृक्षाश्चतुर्विधाः
जम्बूश्चैव मधूकश्च वैकङ्कत समाह्वयः ६५
आसनार्थं च संग्राह्या द्रव्यग्रहणमार्गतः
एवं सिंहासनं कृत्वा संस्कुर्यात् तदनरम् ६६
कालश्च पूर्ववत् प्रोक्तो यजमानानुकूलतः
शिल्पिनं च विसृज्याथ पुण्याहप्रोक्षणान्तरम् ६७
पञ्च गव्येन संप्रोक्ष्य हृन्मन्त्रं समुदीरयन्
अष्टमृत्सलिले नैव क्षालयेत् कुश वारिणा ६८
शुद्धोदकेन संस्नाप्य ब्रह्मपञ्चकमुच्चरन्

पुनर्गन्धोदकेनैव स्नापयेत्तदनन्तरम् ६९
स्थरिडलोर्ध्वे च तन्नयस्त्वा वस्त्रैराच्छादयेत्कुशैः
गन्धैः पुष्पैश्च धूपैश्च तन्मत्रेण समर्चयेत् ७०
सिंहासन पदं चोक्त्वा चतुर्थ्यन्त सदीपकम्
नमस्कार समोपेतं स्वबीजेन समन्वितम् ७१
मन्त्रमेवं समुचार्य पूजयेद्देशिकोत्तमः
तस्याग्रे स्थरिडलं कृत्वा जुहुयात्समिदादिभिः ७२
समिदाज्यचरूंश्चैव तिललाज समन्वितम्
शतमष्टोत्तरं हुत्वा तन्मन्त्रं समुदीरयन् ७३
पूर्णाहुतिं ततः कृत्वा शान्तिकुंभांभसा गुरुः
सिंहासनं समुभ्युद्त्य गन्धाद्यैः पूजयेत्पुनः ७४
स्नातं शुक्लांबरधरं मकुटेन विभूषितम्
सर्वाभरण संयुक्तं छत्र चामर संयुतम् ७५
सुमुहूर्ते सुलग्ने च राजानमधिरोपयेत्
नरेन्द्रासन संस्कारस्त्वेवं देवे विशिष्यते ७६
मूर्तिमूर्तीशविन्यासं तत्वत्वेस्वरान्वितम्
तद्देव होम संयुक्तमासनाणुभिरन्वितम् ७७
ग्राधारशक्ति पूर्वैस्तु शिवासन पदान्तकैः
ग्रष्टदिक्वष्ट कुंभांश्च मध्यमे शक्रशर्वयोः ७८
प्रधान कुंभं संस्थाप्य स्वर्णवस्तादिभिर्युतम्
शिवासनाणु मध्ये च लोकपान् परितो यजेत् ७९
एवमादौ च संपूज्य ततो होमं समारभेत्
संतर्प्यासन मन्त्रास्तु पूर्णान्ते देशिकोत्तमः ८०
सर्वानासन मन्त्रांस्तु न्यस्त्वा सिंहासने गुरुः
शिवासनाणुं तन्मध्ये कुंभस्थं विनिवेशयेत् ८१
संस्थाप्य कुम्भतोयैश्च लोकपान्परितो न्यसेत्

संपूज्य गन्ध पुष्पाद्यैस्तैर्मन्त्रैश्च गुरूत्तमः ८२
संस्नाप्य देवदेवेशं विशेषार्चन संयुतम्
सुमुहूर्ते सुलग्ने तु देवेशमधिरोपयेत् ८३
आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः
दक्षिणां च यथाशक्ति दापयेद् गुरुमूर्तये ८४
अन्येषामासनानां च प्रमाणमभिधीयते
सुवर्णं रजतं ताम्रमारकूटं च कांस्यकम् ८५
मिश्रलोह शिलावृक्षमृत्सुधारत्न संभवम्
दन्तजं क्षुद्रसिद्ध्यर्थं त्रपुसीसायसादिकम् ८६
पीठार्थं द्रव्यमुद्दिष्टमेवं चेत्तद्वशेन तु
द्वित्र्यङ्गुलं समारभ्य चैकाङ्गुल विवर्धनात् ८७
पञ्चाशनमानजातं तु विस्तारे मानमीरितम्
सपादं सार्धमष्टांशाधिकं पादत्रयादिकम् ८८
द्व्यङ्गुलं वाङ्गुलद्ध्या तु शताङ्गुल समावधि
आयामे मानमुद्दिष्टं पादानं मानमुच्यते ८९
एकमात्रं समारभ्य व्योममात्र विवृद्धितः
पञ्चाशत्करजान्तं तु पादायामः प्रकीर्तितः ९०
अर्धाङ्गुलं समारभ्यं पादाङ्गुल विवृद्धितः
विस्तारे विश्वमात्रान्तः पादायामः प्रकीर्तितः ९१
पादाश्च ऋजवो येस्युस्सिंहव्याल वृषात्मकाः
भूताभाः खरपादाभास्सचक्रा स्सहजा न वा ९२
पक्ष्याभा मनुजाभावा शेषसत्वाकृतिस्तु वा
ते च सिंहासनाः कार्याः पद्मपीठोपरि स्थिताः ९३
केवला वाथवा कार्या स्वशिरः पादसंयुताः
अन्तर्वक्त्रा बहिर्वक्त्राः पादभूषायुता न वा ९४
नाना पट्टैश्च न्वेत्रैश्च वाजनैर्हिरिकादिभिः

पत्रैः पद्मदलैश्चैव रत्नाद्यैरूपशोभिताः ९५
तदाननेलिकां वाथ फलकां वाथ योजयेत्
तत्पादैश्छेद संयुक्तैरुर्ध्वाधः स्थोच्चसंयुतैः ९६
पादोर्ध्व फलका वाथ योजनीया यथेष्टतः
यवाद्यवार्ध वृद्ध्या तु रुद्रमात्र समावधि ९७
फलकासनमाख्यातं स्वर्णादीनां यथार्हकम्
वाजनैः पद्मपत्रश्च क्षेपणैर्हीरिकादिभिः ९८
रत्नबन्ध सरोजैश्च नानावेत्रदलैरपि
फलकां भूषयेद्वाथ केवला फलकाथवा ९९
तदूर्ध्वे गुलिकापादान् नानाकम्प समन्वितान्
नाना नाटक संयुक्तानयः कीलसमन्वितान् १००
नानापट्टैश्च पुष्पैश्च योजयेत्सदृढं न वा
चतुरश्रं सुवृत्तं वा तत्दायतमेव वा १०१
अष्टाश्रं षोडशाश्रं वा त्रिपञ्चाश्रादि सन्निभम्
आसनं सुविधेयं स्यात् तत्पादाश्चापि तादृशः १०२
त्रिचतुष्पञ्चापादाद्या योजनीया यथेष्टतः
चतुष्पादशिरः पुच्छयुक्त कूर्मो यथा भवेत् १०३
तथा कूर्मासनं कुर्यात् अन्यदप्येवमूह्यताम्
स्वर्णैश्शार्दूल चर्माद्यैः समन्ताच्छादयेन्न वा १०४
सिंहासनोक्तमार्गेण भवेदायादि लक्षणम्
फलकान्तं भवेन्मानं परित्यक्तोर्ध्वकर्मणाम् १०५
तद्युक्तानां तु तद्बाह्ये पाद्बाह्यानां तु मानकम्
एतेषामासनानां तु संस्कारः प्रागुदीरितः १०६
पूर्वोक्त विधिना कुर्यात् आयादीनां च लक्षणम् १०६ १-२

इति उत्तर कामिकाख्ये महातन्त्रे सिंहासन प्रतिष्ठा विधिः
सप्ततितमः पटलः

## एकसप्ततितमे पटले रथादि स्थापन विधिः

रथादि स्थापनं वक्ष्ये तल्लक्षण पुरस्सरम्
रथोऽनेकविधः प्रोक्तस्सच चक्र विभेदतः १
त्रिचक्रोवा चतुश्चक्रो पञ्च षट्सप्त चक्रयुक्
नवाष्ट चक्र युक्तो वा द्विचक्रश्शकटाह्वयः २
त्रिचतुः पञ्चषट्सप्त वसुग्रह वितस्तयः
भारवाह्य विशालं स्यात् तदायामश्च कथ्यते ३
अक्षोन्तरं समाख्यातं उपधानं द्विजोत्तमाः
पोतिकाकरवत् ख्यातं भारतारघनान्वितम् ४
भाअरबाह्य विशालार्ध दैर्घ्यं पादाधिकन्तुवा
पादहिनोपयुक्तंवा तदन्तर्मान षट्कयुक् ५
इदमक्षोत्तरं कार्यं भाराधो द्विजसत्तमाः
यत्र यत्र च भाराक्षं संयोगस्तत्र कथ्यते ६
अयः पट्टैश्च कीलैश्च स्वाग्रकीलैः महत्तरैः
बन्धयेत् स्व स्व रक्षार्थं यथा दृढतरं भवेत् ७
तदधस्त्वक्षरक्षार्थं स्व स्व मध्यम पार्श्वयोः
स्वस्वतारसमाः कार्या शिखास्तारार्ध वाहलाः ८
अक्षावधि विलंबिन्य स्त्वयः पट्टैर्दृढीकृताः
प्रतिचक्रं विधेयास्स्युस्समा वा विषमास्तु वा ९
शिखां विधाय वास्त्वाध स्वल्पच्छेदसमन्वितम्
अक्षोर्ध संप्रवेशार्थ मुपाधानन्तु वा नयेत् १०
अक्षेस्वप्युपधानार्थं प्रवेशार्थन्तु ह्रासयेत्
भारबाह्य विशालन्तु षष्टिभागं विभाजयेत् ११
तत्समं वाधिकं षष्ट्या व्योम भाग विवर्धयेत्
पादोन द्विगुणं दैर्घ्यं मूल मेतदुदाहृतम् १२
तदग्रपृष्ट भागार्धं वसुभागाद्विवर्धयेत्

भागैकेन त्रिपादार्धमायामे परिकल्पयेत् १३
समोप भद्रे कर्तव्ये तदग्रे वाथ वाश्रिते
तयोरपि प्रमाणन्तु पादोक्त विधिनामतम् १४
अधिकं वाग्र भद्रन्तु पृष्ठ भद्रात् शिवाग्रजाः
केवलं भद्रमिष्टंवा भद्राग्रेष्विष्टमानतः १५
ब्रह्मासनं विधेयं वा रहितं वा समाचरेत्
भद्रोपभद्रयोर्मानं समं वाप्यधिकन्तुवा १६
रथ भद्रोप भद्राणां मानं यन्मीलितं भवेत्
तत्सर्वं भारदैर्घ्यं स्यात् भारे सन्धिर्नकारयेत् १७
त्रिचौतुःपञ्चषट्सप्तभाग बाहुल्य संयुताः
द्वित्रिवेद महाभूत भाग विस्तार संयुताः १८
द्विसंख्यादि नवान्ताश्च भारास्त्वक्षोत्तरोपरि
त्रिचतुःपञ्चषट्सप्त विस्तारानर्धनीव्रकान् १९
योजयेदन्तरे चैषामन्यान्विष्टान् बलार्थकान्
भारेषुयोजयेद्विष्टानग्रे पृष्ठेऽन्तरे यदि २०
प्रत्यक्षमूर्ध्व स्वच्छिद्र बन्धपञ्चक संयुतान्
चतुर्भागं समारभ्य भागस्याष्ट दशावधि २१
विस्तारं बहुलं कुर्याद्दक्षाणां भारवाहिनां
चक्रेनेम्यन्तरं व्योम भागात् भाग विवृद्धितः २२
दशभागा वशानन्तु चक्रनेमि घनञ्चयत्
तत बहिश्च शिखामानं भारनेम्यन्तरं समम् २३
एतत् सर्वञ्च दैर्घ्यंस्यादक्षाणां गुरुसत्तमाः
वृत्तान्यश्राणिवाकुर्या दक्षाणि गुरुसत्तमाः २४
पञ्चग्राहि समाविद्धिस्वमध्य मयुतानिवा
पञ्चाङ्गमिति कार्याणि दारुणा वायसादिभिः २५
यथाबलं विशालानि तथा विधधनानिच

चक्राणान्तु प्रमाणन्तु बाह्यं भारान्तरं मतम्  २६
एकद्वित्रिचतुष्पञ्च षट् भागोनन्तुवाधिकम्
द्विगाभाद्वसुभागान्तञ्चक्राणां धनमीर्तितम्  २७
एकद्वित्र्यङ्गुलांधिक्यन्नाभिदेशे भवेत् द्विजाः
तथैव बाह्येनम्याश्च तयोर्मध्येऽरकानि च  २८
मूलाग्र कृशयुक्तानि व्योम द्वित्र्यंशकानि च
त्रिरष्टभ्योष्ट वृध्यातु चतुष्षष्ट्यन्तकानि च  २९
सारथिः षरामुखो वास्यादथ नन्दीशरोथवा
ब्रह्मा रथांग पाणिर्वा शक्रो वा मुनिपुङ्गवाः  ३०
भारोर्ध्वमुपपीठं स्यात्तन्मानमिह कथ्यते
एकभागा द्विकारान्त मेकभाग विवर्धनात्  ३१
तदुपानाद्विनिष्क्रान्ति भार बाह्यादथांशतः
भारबाह्य विवृध्यातु रसभागावसानकाः  ३२
एकोन त्रिंशदंशं वा तदुच्चं विभजेत् गुरुः
गुण चन्द्र महाभूत व्योमनन्द वियद्गुणैः  ३३
त्रिभागे नैक भागेन मूलादारभ्य कारयेत्
उपान पद्मकंपानि कंपं कर्णञ्च कपकम्  ३४
पद्मञ्च वाजनं कंपं दृष्टान्तार्थ मुदाहृतम्
पादोनार्धेन भागेन त्रिभागेन द्विभागतः  ३५
त्रिभागेन चतुर्भागैरूनं वाप्यधिकन्नयेत्
एषां प्रवेशो निष्क्रान्तिः शोभाबलवशात् भवेत्  ३६
धामोक्तमुपपीठंयत् सर्वमत्र विधीयताम्
चतुष्कोणेषु मध्येषु तथा भद्रोप भद्रयोः  ३७
गुलिका पाद पादैश्च नाटकैः भूषयेत् गलम्
उपपीठोच्छ्रयान्तम् वा कर्तव्यमुप भद्रकम्  ३८
उप भद्रोर्ध्वतः कुर्यात् फलकाच्छादनं दृढम्

फलका भार मध्यन्तु पादाद्यैः परिभूषयेत् ३९
फलका मध्य भारान्तं योजयेत् पद्मकुङ्मलम्
सनालन्नालमानन्तु द्विसप्तत्र्यङ्गुलोर्ध्वतः ४०
शतांऽसान्तं समुद्दिष्टं तन्मूलं वेद भागतः
वस्वं शान्त धनोपेतं वृत्तावाष्टाश्रमेववा ४१
षडर्कभागपर्यन्त हीनाग्रं तत्र वक्रयुक्
कुंभ मरिड संयुक्तं युक्तं वा गरिडकाद्वयोः ४२
पद्मं फलकयायुक्तं तदूर्ध्वं पद्मकुड्मलम्
तच्च वेदांशमारभ्य व्योमभाग विवृद्धितः ४३
वस्वं शांताय संयुक्तं तद्विस्तारोदरान्वितम्
तत्रिपाद विशालं वा तदन्तस्सममानकम् ४४
कृशाग्रं वृत्तमष्टाश्रं फूल्ल वाह्य दलन्तु वा
बहिः करणमेवं स्यादत्रान्तं करणं द्विजाः ४५
भारोर्ध्वे वाजनं कुर्यादल्पनिर्गमनान्वितम्
यथेष्टबहुलोपेतं तदूर्ध्वे वाजनान्तरम् ४६
तद्विनिर्गमनोपेत मुपपीठं गलावधि
द्वाभ्यामेकेन वा कुर्याद्दारुभ्यान्दारुणाद्विजाः ४७
तत्संबन्धे विधातव्येष्टिकेत्तोर्ध्व देशतः
पञ्चग्राहि निबन्धेद्वे विधातव्ये विचक्षणैः ४८
यथेष्ट घन विस्तारे तत्संबन्धे परेपि वा
भरमूले तदग्रे च समभदे तथानयेत् ४९
अन्तर्वाजनकोर्ध्वे स्यादुपपीठ गलावाधि
तत्रपादा विधेयास्स्युः उपपीठावसानके ५०
फलके द्वे विधातव्ये तत्पादोपरि संस्थिते
तत्र सन्नद्ध विष्टे द्वे पञ्चग्राही गते च ते ५१
भराग्रयोस्तथाकार्ये त्वेवमन्तरुदाहृतम्

उपपीठोर्ध्वतः कुर्यादधिष्ठानन्तदुच्यते ५२
उपपीठसमं वास्यात्तदर्धं वाथ सार्धकम्
तमध्ये षट्कमानं यत् पूर्ववत् परिगृह्यताम् ५३
अष्टविंशति भागान्तु तदुच्चन्तु समं भवेत्
पंकित्नेत्रैक सप्तैक व्योम द्व्येकैक लोचनैः ५४
पद्मं कर्णञ्च पद्मं च कुमुदं पद्म वाजने
सदन्त गलकंपौच महा वाजन माचरेत् ५५
उपपीठोक्तरीत्यैतत् ऊनाधिक्ये समाचरेत्
प्रवेश निर्गमौवापि तद्वदेव समाचरेत् ५६
एतदन्तर्विधेयं चोपभद्रं भद्रमेव वा
अधिष्ठानोर्ध्वतः कार्यः पादवर्गो द्विजोत्तमाः ५७
अधिष्ठान समोवास्यात् द्विगुणो वा समीर्तितः
तदन्तर्नवमानेवा पादाष्टांशोन्वितोथवा ५८
गुलिकापाद पादैश्च नाटकै र्व्यालराजिभिः
सिंह भूत गजैः पादैर्वर्गं सर्वत्र भूषयेत् ५९
तदन्तः क्षुद्रपादैश्च नाराचैस्सुदृढन्नयेत्
प्रस्तरः पादवर्गोर्ध्वे मानञ्चास्यनिगद्यते ६०
त्रिभागन्तु समारभ्य भागभाग विवर्धनात्
नवभागावसानं स्यादलङ्कारश्च कथ्यते ६१
तदुच्चे षोडशांशेतु गुणैक नयनाब्धिभिः
व्योमैक चन्द्र चन्द्रांशैरुत्तरं वाजिनन्ततः ६२
निद्रा कपोत मालिङ्गं वाजनं प्रतिवाजनम्
प्रवेशो निर्गमञ्चैषां धामोक्तन्यायतो भवेत् ६३
एतदाद्यतलं प्रोक्तं भद्रमेतत् समोदयम्
पादान्तं वाथ भद्रान्तं ह्रास युक्तं च मूलतः ६४
एकादि रसभागान्तं पार्श्वयोरुभयोरपि

प्रवेश रहितं वा स्यात् एव मेवोप भद्रकम् ६५
रथस्त्वेकतलः प्रोक्तो द्वितलाद्यन्वितोनवा
षडादि त्रिंशदंशान्तं समं वा मूलपादतः ६६
प्रस्तरोच्चं भवेन्मानं द्वितलाङ्घ्रि कपोतयोः
अनेनैव प्रकारेण कारयेत् त्रितलादिकम् ६७
छादयेत् फलकैरूर्ध्व तलं सारतरूद्भवैः
एकाङ्गुल घनैरिष्ट घनैर्वा सुदृढं यथा ६८
भद्रञ्चवोप भद्रञ्च छादयेदेव मेवसु
न्यायेनानेन कर्तव्यः प्रवेशो निर्गमोपिवा ६९
पादानां कार्यः प्रस्तराणाञ्च मञ्चतः
प्रवेश निर्गमौ हित्वा कुर्याद्वारज्जु सूत्रकम् ७०
अनेकतलयुक्तं चेद्विशेषः कश्चिदिष्यते
रथस्यारोहणार्थन्तु सोपानाकृति सन्निभम् ७१
भद्रोक्तायाम विस्तारं मुखे पृष्ठ द्वयोस्तुवा
प्रतिभौमण् प्रवेशस्यात् भद्रस्य मुनिपुङ्गवाः ७२
सोपानं वा प्रकर्तव्यं तद्विधान समन्वितम्
उपभद्र विहीनं वा भद्रं भारान्तमेव वा ७३
एतत् सर्वं विहायाथ केवलान्तूपपीठकम्
भारोपरि विधातव्यं तदूर्ध्वे देवसंस्थितिः ७४
उपपीठं विहायास्मिन् केवलवामसूरकम्
बहिः करणमेवस्या दन्तरत्र निगद्यते ७५
पादवर्गेन्तरे क्षुद्रपादाः कंपोपरिस्थिताः
ऊर्ध्वकम्प निबद्धाश्च विधातव्या विचक्षणैः ७६
तदूर्ध्व प्रस्ताराग्रस्ताः पञ्चग्राहियुतानवा
विष्टराबहवः कार्यास्थलं प्रत्येकमाचरेत् ७७
तुलामुखानुगाः कार्या ओजायुग्मा यथेष्टतः

अयन्त्यस्युस्तदूर्ध्वेतु तदूर्ध्वेच्छादनं मतम् ७८
तदूर्ध्वे च विजिः कार्या यथेष्ट धनतुङ्गतः
नाना कीलक पट्टैश्च पञ्चग्राहिभिरेव च ७९
नाराचैः क्षुद्र कीलैश्च ग्राहकैः पुलकादिभिः
कोटिकैर्वक्रपट्टैश्च बन्धयेत् सुदृढं यथा ८०
एतद्रङ्गं समाख्यातं तोरणेन युतन्नवा
पादाकूटयुतं तच्चेद्रथस्तन्मान मुच्यते ८१
वेदतालं समारभ्य तालार्धेन निवर्धयेत्
यावदष्टसवं पाददैर्घ्यमग्रयङ्गुलादिकम् ८२
पाद पाद विवृध्यातु तत्वाङ्गुल समावधि
पाद विस्तार आखातो धाम पादा कृतिर्यथा ८३
अग्रमूल शिखोपेतः पादाः कुम्भादि संयुताः
बहुनीव्र समायुक्ताः फलकासु निवेशिताः ८४
तालाधस्संस्थितैः विष्टैः पादमूलञ्च बन्धयेत्
तथैवायसनालैश्च धारस्सुदृधं यथा ८५
पादोर्ध्वे प्रस्तरं कुर्यात् लुपारोहण योग्यकम्
शिखाकरणमार्गेण लुपारोहण क्रियान्विता ८६
सौवर्णैस्तारजैर्लोष्टैस्ताम्रजैः वृक्षकैः दृधम्
छादयेदन्य देशञ्च ओजस्तूपि समन्वितम् ८७
रथस्त्वेवं समादिष्टश्शुभायादि समन्वितम्
कथ्यते सचलेशेन विस्तारादायतोपिवा ८८
उभाभ्यां सकलस्याथ नाहेनोत्तुङ्गतोथवा
वर्धयेत् द्वित्रिवेदैश्च गुणितेक्रमशोहृते ८९
सप्त भूतर्क्ष पातालैरायोन्यस्तारवारकौ
तिथिस्स्यात् त्रिगुणं त्रिंशद्धस्तमेतद्रथेमतम् ९०
शकटे शिबिकादौच शुभेशुभ मुदाहृतम्

रथस्य स्थापनं यश्च कथ्यते विप्रपुङ्गवाः ९१
उद्वास्य तद्वकं शुद्ध तोयेन द्धालयेत् दृढं
गोमूत्र गोमयांभोभिः कुशोदैस्तज्जलैरपि ९२
गव्येन प्रोद्दय पुरायाहं तोयसेचन माचरेत्
अस्त्रोदेनापि संप्रोद्वय गन्ध पुष्पादिभिः यजेत् ९३
कौतुकं बन्धयेत् पद्ममुकुले हृदयेन तु
वस्त्रेणाच्छाद्य धामोक्त्या तत्वतत्वेश्वरान्वितम् ९४
मूर्तिमूर्तीश्वरोपेतं चक्रेष्विन्दु दिवाकरौ
दद्दिणोत्तर संस्थेषु क्रमशः परिकल्पयेत् ९५
हरिमद्वेषु भारेषु यजेदाधार संज्ञिताम्
उपपीठे वृषं यष्ट्वा धारेऽनन्तं प्रपूजयेत् ९६
धर्मादींश्चरणेष्वेव मधर्मादींस्तदूर्ध्वतः
अधश्चोर्ध्वच्छदेविद्वान् क्रमेण विनिवेशयेत् ९७
फलका प्रस्तरस्याधश्चोर्ध्वं तत्रैव पङ्कजम्
कर्णिकान्नवशक्तींश्च शिवासनं अनुस्मरेत् ९८
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्चरथाधिपाः
शिखरेच सदेशानश्शिवस्यात् स्तूपिनायकः ९९
पद्म कुड्मलकेनन्तो व्याप्तिं प्रासाद वर्त्मना
तदग्रे स्थंडिलं कृत्वा तस्मिन् सूत्रांबरान्वितान् १००
हेम कूर्चादि संयुक्तान्नव कुम्भान्निवेशयेत्
तत्र मध्ये शिवं पूर्वेभानुं इन्दुं तथानले १०१
दद्दिणे हिमाधार शक्तिन्नि-ऋृते घटे
वारुणे वृषभं वायावनन्तं विनिवेशयेत् १०२
धर्माद्यमुत्तरे कुम्भे शेषमीशान गोचरे
गन्धाद्यैरर्चयित्वातु होमकर्म समाचरेत् १०३
संस्थापित घटानांवा समन्ता द्वारथस्यतु

नववा पञ्चकुराडानि एकं वा पूर्वतस्थितम्  १०४
स्रावाह्य स्थरिडलं वाथ कृत्वा कुराडानि संस्कृतिम्
शिवं साङ्गं प्रधानेतु तर्पयेच्छत संख्यया  १०५
भान्वादीन् स्व स्वदिक्कुराडे पञ्चकल्पेद्वयं द्वयम्
एक कल्पे गुरुस्वस्मिन् कुराडे सर्वञ्च तर्पयेत्  १०६
समिदाज्यान्नलाजैश्च तिलैर्होमं समाचरेत्
तत्वमूर्ति तदीशैश्च गुरुर्होमं  माचरेत्  १०७
पलाशोदुंबराश्वत्थ वटाः प्रागादि दिङ्गताः
शम्यापामर्ग श्रीवृद्म पिप्पलास्युर्विदग्गताः  १०८
पलाशश्च प्रधानस्य समिधस्संप्रकीर्तिताः
पूर्णान्दत्वा द्वितीयेह्नि कृत कुंभाग्नि पूजनः  १०९
संप्राप्त दच्चिणो मूर्ति धारदैवज्ञ शिल्पिभिः
मुहूर्ते समनुप्राप्ते मन्त्रन्यासं समाचरेत्  ११०
तत्तत् कुम्भस्थ पानीयैस्तत्तद्देशं सुसेचयेत्
स्रनुक्तमत्र सामान्य स्थापनोक्तवदाचरेत्  १११
एवं रथं समापद्य यः कुर्यात् प्रोद्मणं नरः
इहैव धनवांच्छ्रीमान् वांछितं फलमाप्नुयात्  ११२
रथमेवं सुसंकृत्य रथयात्रां समाचरेत्
पैठीच शेखरीमराडी त्रिविधा परिकीर्तिता  ११३
तिथ्यङ्गुलं समारभ्य व्योममात्र विवृद्धितः
षराणवत्यंश कान्तस्तु शिबिका विस्तरोमतः  ११४
त्रिस्सप्ताङ्गुलमारभ्य वर्धये देकमात्रतः
एकोन् द्विशतं याव दायामं परिकल्पयेत्  ११५
ईषिका बाह्यमाध्यमाध्यान्तर्मान मेतदुदाहृतम्
पादबाह्यन्तु देवानां राज्ञामपि विशिष्यते  ११६
पादमध्यस्तु सामान्यो व्यासायामावधिर्मतः

एव मेवेषिका बाह्या मध्यमं परिकीर्तितम् ११७
पादेषिकान्तर्मानं यत् सर्वेषां परिकीर्तितम्
त्रिचतुर्भूत षट् सप्त नवभिर्वत्सरो भवेत् ११८
दैर्घ्यन्तेवच मन्वन्तवितस्तिरितिकीर्तिम्
वितस्तिरङ्गुलिर्वापि ज्ञेय मायादि शोभनम् ११९
विस्तारेणाथवादैर्घ्यात् सकलेवाथवा नयेत्
अष्टत्रित्रिवसुघ्नञ्च सूर्यैश्च मनुभिर्भजेत् १२०
वसुभिश्चोडुभिः स्त्रिघ्नः पर्यन्तम् केवलन्तु तत्
त्रिंशद्भिः मुनिभिः विप्राः क्रमादायादयोमताः १२१
आयोव्ययश्च योनिश्च नक्षत्रन्तिथिवारकौ
विस्तारेणाथवायस्यादायामेनव्ययो भवेत् १२२
योनिस्तेनैवनक्षत्रं विशालेन प्रकीर्तितम्
विस्तारायाम संयोगात्तिथिर्वारस्तु तुङ्गताः १२३
त्रिमात्र मेकमात्राभ्यां स्वव्यासार्धान्तमीरितम्
हस्तान्तन्तुङ्गमानं स्यादलङ्कारस्तु कथ्यते १२४
त्रिमात्रन्तु समारभ्य पादमात्र विवृद्धितः
त्रिषडङ्गुल पर्यन्तमिषिकाविस्तरो मतः १२५
व्योममात्रं समारभ्य पादमात्र विवृद्धितः
सप्त मात्रान्तमुद्दिष्टमिषिका बहुलं द्विजाः १२६
व्योममात्रात्तु पादर्द्धया सप्तमात्र समावधि
हस्तमानं सुमुद्दिष्टं वृत्तं वाचतुरश्रकम् १२७
वृत्ताश्रमायताश्रंवा हस्तरूपं प्रकीर्तितम्
अष्टांशादंश वृध्यातु स्वन्नयास द्विगुणावधि १२८
इष्टिका हस्तयोः कर्ण निर्गमः परिकीर्तितः
किन्तु हस्ते विशेषोयं स्वव्यासाष्ट गुणावधि १२९
पादमात्रात्तु पार्द्धया चतुर्मात्र समावधि

पट्टिका घन विस्तारो यथायोग्यं विधीयते १३०
व्यालैस्सिंहैः गजैरश्वैर्नरैर्विद्याधरादिभिः
गुलिका पाद पादैश्च पट्टैर्हीनैश्च वाजनैः १३१
क्षुद्रकंपैश्च वल्लीभिर्नाराचैः कोणबन्धनैः
यथा शोभांशमानैश्च कपोत प्रतिवाजनैः १३२
झषैश्च वलयैः क्षुद्रगुलिकापाद बन्धनैः
स्वर्णादितार ताम्रोथैः जन्तजैर्वृक्षजैस्तु वा १३३
शिबिकालंकृतिं कुर्याद्यथा शोभं यथाबलम्
एषा पैठी समाख्याता शेखरी शिखरान्विता १३४
पादैर्मञ्चैश्च मौण्डीचेत् मण्डपाकार शोभिता
शूकः कालश्च तिमिरः पनसो निंबकार्जुनौ १३५
मधूकः खदिरो योऽन्ये सार वृक्षास्समीरिताः
वृक्षेरेतैः प्रकर्तव्या शिबिका लक्षणान्विता १३६
अस्याश्च प्रोक्षणं कार्यं सिंहासन विधानतः
वक्ष्ये पर्यङ्कमानश्च शिबिका विस्तरो यथा १३७
तद्वद्विस्तार संयुक्तं त्रिगुणान्तर संयुतम्
चतुष्पदादि संयुक्तं पादमानञ्च कथ्यते १३८
त्र्यंगुलादंगुलद्धर्यातु पञ्चाशत् करजावधि
पाद दैर्घ्यं समाख्यातं द्वयंगुलात् पादवृद्धितः १३९
तिथि मात्र विशालं स्यात् पादमूले द्विजोत्तमाः
अनेक गण्दिकोपेतन्नाना हीर समन्वितम् १४०
अनेक कर्ण सयुक्तं त्रिगुणान्तायसायुतम्
तत् पार्श्वे त्विषिकां कुर्यात् फलकां वा द्विजोत्तमाः १४१
फलकानाञ्च बाहुल्यं यथाशोभं यथाबलम्
नानापट्ट समायुक्तन्नानावेत्र समायुतम् १४२
नाना नाराच संबन्धं पुलकाद्यैश्च शोभितम्

लोहजन्दन्तजं वाथ दारुजं मिश्रमेववा १४३
शिबिकायद्वदायाद्यैः संयुक्तं संपदेभवेत्
पर्यङ्कमे तत् कथितं बाल पर्यङ्कमप्यथ १४४
प्रोच्यते शिबिकायाद्वत् कर्ण निर्गम वर्जितम्
खट्वा पाद समायुक्तं पट्टिकां एक संयुतम् १४५
पाद मूल विनिक्षिप्तः क्षुद्र चक्र समन्वितम्
निम्बादि तरु संसिद्धं बाल पर्यङ्कमीरितम् १४६

इति उत्तरकामिक महातन्त्रे रथादि स्थापन विधिः एकसप्ततितमः पटलः

## द्विसप्ततितमे पटले करणलक्षण विधिः

लक्षण करणानां च वक्ष्ये संक्षेपतः क्रमात्
याज्ञीयवृक्षजाश्शस्तास्समिधोद्वादशङ्गुलाः १
सत्वचस्तास्समच्छेदा वक्रग्रन्थ्यादिवर्जिताः
त्रिंशद्दर्भदलैर्गाधं ग्रथिता बाहुमात्रकाः २
वेणिका वर्तुला वापि विष्टरा दर्भनिर्मिताः
तन्माना ऋजवस्साग्रास्तत्कुण्डसमिदुद्भवाः ३
निर्व्रणाश्च समच्छेदाः प्रोक्ताः परिधयस्समाः
चत्वारो विष्टरास्तद्वन्मताः परिधयोऽपि च ४
दर्भत्रयं समारभ्य व्योमदर्भविवृद्धितः
षट्त्रिंशद्दर्भपर्यन्तं कूर्चार्थं दर्भमाहरेत् ५
तत्संख्यामात्रदैर्घ्यं स्यात् किंचैकादशमात्रतः
ग्रन्थिरर्धाङ्गुलात्पादवृद्धया स्याद् द्यङ्गुगावधि ६
ग्रन्थेः प्रदक्षिणावर्तशिखामानं द्विमात्रतः
वृद्ध्यैकमात्रया प्रोक्तं नवमात्रावसानकम् ७
ग्रन्थ्यग्ररहिता वाथ कूर्चास्स्युस्त्वितरे मताः

ब्रह्मविष्णवीश्वराः कूर्चमूलमध्यग्रगा मताः ८
उत्कूर्चन्यासपद्मोऽयमधः कूर्चे विलोमगाः
उत्कूर्चश्शान्तिदः प्रोक्तस्त्वधः कूर्चस्तु पुष्टिदः ९
अन्तः कूर्चो न कर्तव्यः स विधेयोऽभिचारके
द्वित्रिवेदशरैर्दर्भैर्मूलाग्रसहितैस्तु वा १०
पवितं दक्षिणावर्तग्रथितं तद्विवर्जितम्
अनामिकाङ्गुलीयोगयोग्यरन्ध्र समन्वितम् ११
प्रागुक्त ग्रन्धिशिखरं पवित्रमतिसुन्दरम्
ईश्वराधिष्ठितं प्राग्वद्दक्षिणे चोभयत्र च १२
करे संयोजनीयं स्यात् काले देवार्चनादिके
अङ्गुलीयकमिष्टं स्यात्तदर्थं स्वर्णनिर्मितम् १३
त्रयोविंशतिसंख्यातदर्भैस्स्यान्निर्मितेन च
अर्कमात्रादिषट्त्रिंशदङ्गुलावनतेन च १४
यथेष्टान्तरयुक्तेन लम्बनेन समन्विता
दर्भमाला विधेया स्यात् कनिष्ठाङ्गुलिनाहया १५
रज्ज्वा चैव विधेया स्यात् साश्वत्थदलरञ्जिता
आरभ्य हस्तत्रितयं त्र्यङ्गुलेन विवर्धनात् १६
तिथिहस्तान्तदैर्घ्यं स्यात्तदर्धा विस्तृतिर्भवेत्
सदृशे वान्तरेऽष्टांशे नवमानं प्रकीर्तितम् १७
द्वारमानोच्चतत् प्रोक्तविस्ताराद्दैर्घ्यतोऽपि वा
स्तम्भयोर्विष्टरस्यापि प्रमाणं त्र्यङ्गुलादितः १८
पादाङ्गुलविवृद्ध्या तु त्रिंशन्मात्रान्तमीर्तितम्
याज्ञिकैस्तरुभिः कुर्यात् प्रतिष्ठादौ च तोरणम् १९
शिलयेष्टकयाऽन्यत्र दारुभिस्तोरणं नयेत्
इष्टमानेन खातं स्याच्छिखामानं तथैव च २०
विष्टरोर्ध्वे त्रिशूलानि नवशूलानि पञ्च वा

सप्ताङ्गुलं समारभ्य व्योममात्रविवृद्धितः २१
पञ्चमात्रावसानं तुशूलदरिघ्यं प्रकल्पयेत्
विस्तारात् पादवृद्ध्या तु द्व्यङ्गुलादर्कमात्रकम् २२
यावत्तावद् घनं तेषामिष्टमानेन कारयेत्
एवं तोरणमाख्यातं मङ्गलाष्टकमुच्यते २३
नवाङ्गुलं समारभ्य वृद्ध्या व्योमाङ्गुलेन च
षट्त्रिशन्मात्रपर्यन्तं दैर्घ्यं तेषु प्रकल्पयेत् २४
पादमर्धं त्रिपादं वा विशालं तेषु कल्पितम्
अन्तरेष्टविभागे तु नवमानमुदाहृतम् २५
घनमेकाङ्गुलात्पादवृद्ध्या सप्ताङ्गुलावधि
याज्ञीयवृक्षैर्लोहैर्वा मङ्गलाष्टकमाचरेत् २६
दर्पणं पूर्णकुम्भं च वृषभो युग्मचामरम्
श्रीवत्सं स्वस्तिकं शंखो दीपश्शैवाष्टमङ्गलम् २७
अन्येषामपि देवानां देवीनां चाष्टमङ्गले
वृषं त्यक्त्वा तदर्थं तु स्वस्ववाहनमाचरेत् २८
शैवाष्टमङ्गलं कुर्याद्देवानां वाथ वर्णिनाम्
ग्रामादौ स्वगृहे वापि यजमानानुरूपतः २९
विलिखेद्दर्पणादीनि तन्मानमधुनोच्यते
पञ्चाङ्गुलं समारभ्य व्योमाङ्गुल विवृद्धितः ३०
पञ्चविंशतिमात्रान्तं तेषां दैर्घ्यं समाचरेत्
विस्तारस्तद्दशाज्ञेयस्सपादं वाथ दर्पणम् ३१
पादोनार्धेन वा तस्मिन् पादं तस्य प्रकल्पयेत्
तथैव पूर्णकुम्भे तु पादमानं प्रकीर्तितम् ३२
स्वास्यतिर्यग्लतोपेतं लतामानं ततो बहिः
तथिव पादमुक्ते स्यात् स्थितो वा शयितोऽथवा ३३
पादपद्मसमायुक्तं तूर्ध्वे छत्रसमायुतम्

श्रीवत्सस्तु यथोद्दिष्टः स्वस्तिको ग्रामवेशने ३४
शङ्खश्चोर्ध्वमुखो ज्ञेयस्सृष्टौ मुक्तौ विपर्ययात्
श्रीवत्से पादपद्मं च छत्रं च विनिवेशयेत् ३५
स्त्रीणां मूर्धनि वा कुर्याद्देवताः शृणुत द्विजाः
दर्पणे पूजयेत्सूर्यं पूर्णकुम्भे जलेश्वरम् ३६
चामरे मातरिश्वानं स्वस्तिके तु सरस्वतीम्
शङ्खे तु विमलं दीपे पूजयेद्धव्यवाहनम् ३७
लक्-ष्म्यां लक्ष्मी वृषं चोक्षे विन्यसेत्स्वाणुना गुरुः
पूर्वस्मिन् पश्चिमे भागे चामरद्वितयं न्यसेत् ३८
एकैकं दक्षिणे वामे वेदिकायं च विन्यसेत्
हित्वाष्टमङ्गलं वाथ तत्स्थाने तान् प्रपूजयेत् ३९
वज्रं शक्तिं च दण्डं च खड्गं पाशं तथाङ्कुशम्
ध्वजं वाथ गदां पद्मं चक्रं च कारयेत् ४०
ध्वजाङ्कुशौ वा कर्तव्यौ दण्डं हित्वा द्विजोत्तमाः
लोहैर्वा याज्ञिकैर्वृक्षैर्लोहश्चेद् बेरमानतः ४१
देवान् कृत्वा तु हस्ताभ्यां कृताञ्जलिपुटान्वितान्
जाये शक्ति गदे ज्ञेय शेषाः पुरुषलक्षणाः ४२
नवतालप्रमाणेन तेषां लक्षणमुच्यते
तन्मूर्ध्निकुटोर्ध्वे वा हस्ते वज्रादिकान्नयसेत् ४३
देहलब्धेन तेषां तु प्रमाणं प्रविधीयते
षट्त्रिंशदङ्गुलायाममष्टाङ्गुलसुविस्तरम् ४४
तिथ्यङ्गुलं समारभ्य द्विद्यङ्गुलविवर्धनात्
मात्रैरेकोनपञ्चाशत् पर्यन्तैर्दीर्धमुच्यते ४५
लोहजं यदि दारूत्थं नयेन्मात्राङ्गुलेन तु
इष्टमानेन चैतेषां विस्तार इह कथ्यते ४६
स्रुक्स्रुवौ विधिना कार्यौ तद्विधानमिहोच्यते

तत्पार्श्वे वान्तरे वापि तद्बिलं विधिनाचरेत् ४७
षट्त्रिंशदङ्गुलं पञ्चत्रिंशन्मात्रमथापि वा
दैर्घ्यं तस्य रसाङ्गेषुवेदिकाङ्गुष्ठकर्णिका ४८
त्रिगम्भीरा चतुष्पञ्चषट्कृतावटमण्डला
सप्ताङ्गुलार्धविच्छिन्नचतुस्संवर्तितानना ४९
कनिष्ठप्रथुनिर्यासा पुरोनिम्नाज्यनिर्गमा
कलशोद्गतषण्णाहदण्डाग्रश्रुतिवेदिका ५०
यथेष्टं कलशे मानं व्द्यङ्गुला वेदिका यदि
नानावाजनवेत्रैश्च पद्मपत्रैर्विचित्रिता ५१
शुभा या स्रुक् शरावस्य यथापृष्ठाकृतिर्भवेत्
कर्णपार्श्वैकमात्रोनशरावादामुखावधः ५२
कनिष्ठानाहसंयुक्ततिर्यग्वेत्रयुता च स्रुक्
अथवा त्रिंशदायाममष्टाङ्गुल सुविस्तरम् ५३
तर्दर्धं तु घनं प्रोक्तमास्यं कौशिकमात्रकम्
आस्यं त्रिकोणवत्कार्यं मध्ये बिलसमन्वितम् ५४
कर्णो द्व्यङ्गुल इष्टस्स्याद्वेदिकाष्टाङ्गुला मता
तदधो गण्डिका कार्या मात्रार्धादर्धवृद्धितः ५५
दण्डो नवाङ्गुलः प्रोक्तस्तन्नाहस्स्यात् षडङ्गुलः
मुष्ट्यष्।आङ्गुलमानेन तन्नाहोऽष्टाङ्गुलेन च ५६
अथवान्यप्रकारेण स्रुङ्मानामिह कथ्यते
द्वात्रिंशदङ्गुलायामं सप्ताङ्गुलसुविस्तरम् ५७
तद्धनं तु चतुर्मात्रिमास्यायामः षडङ्गुलः
कर्णः पञ्चाङ्गुलायामो विस्तारश्शरमात्रकः ५८
सप्तागुलायता वेदी पद्मं पञ्चाङ्गुलं भवेत्
गण्डिकैकाङ्गुला प्रोक्ता तन्नाहश्चाब्धिमात्रकः ५९
र्व्यङ्गुलेन दण्डस्सयान्नाहं भागार्धतो भवेत्

तन्मूले कलशाकारो व्द्यङ्गुलो दशनाहकः  ६०
पादं कलशमूले स्यादन्यथा वा निगद्यते
षट्त्रिंशदङ्गुलायाममष्टाङ्गुलसुविस्तरम्  ६१
विस्तारार्धघनोपेतमास्यं सप्ताङ्गुलं भवेत्
विस्तारेण च दैर्घ्येण सूकराननसन्निभम्  ६२
त्रिभागेन भवेदग्रं कृत्वा शेषं परित्यजेत्
कर्णदैर्घ्यं द्विमात्रं स्याद्विस्तारं चतुरङ्गुलम्  ६३
वेदिकाष्टाङ्गुलायामा विस्तारस्सदृशो भवेत्
त्रिमात्रं वा चतुर्मात्रं तन्मध्ये बिलमुच्यते  ६४
दण्डः षडङ्गुलः कार्यस्तन्मध्ये गण्डकात्रयम्
अर्धार्धाङ्गुलवृद्ध्या तु कर्तव्यं चतुरङ्गुलम्  ६५
त्रयोदशाङ्गुलो दण्डस्तन्मूले पूर्ववद्घटः
स्रुक् स्यात् स्रुवेऽपि तद्योनिस्तन्मानं तस्ततो भवेत्  ६६
एकाद्वित्र्यङ्गुलैर्हीनं दीर्घं वा परिकल्पयेत्
षडङ्गुलपशीणाहो दण्डमूले च पुष्करे  ६७
तदर्धमानकण्ठस्स्यात् क्रमेणैव कृशो भवेत्
गोपुराकारवत् कार्यमाज्यस्थानं तदग्रके  ६८
पृष्ठे कुम्भद्वयोपेतं कर्षापूरस्य पुष्करः
नूतनं करणं श्रेष्ठं पुराणं तदभावतः  ६९
पुराकरणं ग्राह्यं वित्तं दत्त्वा गुरोर्द्विजाः
तदाज्ञापूर्वकं स स्यात्तद्भोग्यकरणं ततः  ७०
सहस्राघोररजापस्यात् पुराणकरणग्रहे
येन शास्त्रेण यत्स्थाने क्रिया पूर्वं प्रवर्तते  ७१
तत्र तच्छास्त्रसंसिद्धं करणं विहितं बुधाः
अनुक्तमन्यतो गाह्यमुत्सवादिषु कर्मसु  ७२
अस्त्रं वा प्रतिमा वापि देवोपकरणादिकम्

श्रेष्ठस्तद्धामसंसिद्धो न ग्राह्योऽन्यालयस्थितः ७३
तल्लिङ्गादेर्विरुद्धत्वादायाद्यैरशुभैर्युतः
तल्लिङ्गाद्यनुकूलं चेद्बेराद्यं यत् प्रतिष्ठितम् ७४
तेनैवोत्सवकर्माद्यं विहितं मुनिपुंगवाः
स्थानात् स्थानान्तरप्राप्तिदोषशुद्ध्यर्थमाचरेत् ७५
समिदाज्यान्नकैश्शान्तिहोमं दशशतेन च
ह्रस्वप्रासादमन्त्रेण प्रभूतयजनान्वितम् ७६
तोरणानि पयोवृक्षजातिलक्षणवन्ति च
पञ्चषट्सप्तहस्तानि कन्यसानां समुच्छ्रयः ७७
वसुवेदाङ्गुलाग्राणि परेषां परिकल्पयेत्
तेषु हस्तात् परः ख्यातः स्ववृद्ध्यर्होपलक्षितः ७८
शाखयोरन्तरं तुल्यमुच्छ्रायेणान्यथा क्षयेत्
शल्यवस्वङ्गुलान्वाथ परेषां षोडशाङ्गुलम् ७९
एकादिवेदहस्तान्ततोरणे क्षुद्रमानके
उदयार्धप्रमाणं वा यादादौ परिपठ्यते ८०

इति उत्तरकामिकाख्ये महातन्त्रे करणलक्षणविधिर्द्विसप्ततितमः पटलः

## त्रिसप्ततितमे पटले सौख्य कर्म विधिः

प्रतिष्ठोत्सवकर्मादावन्ते नित्योत्सवस्य च
सौख्यकर्म प्रकर्तव्यं यथावच्छृणुत द्विजाः १
सौख्यं च रुद्रकन्याभिः कर्तव्यं तद् द्विधा मतम्
ससर्जाप्सरसो रुद्रः कौशिक प्रीतिकारणात् २
तासां चिरन्तने वंशे तद्रुद्रगणिकाकुलम्
अस्पृश्यं प्रतिलोमाद्यैः अजायत सनातनम् ३
ता एव रुद्रकन्यास्स्युः कथ्यन्तेऽन्यैर्द्विजोत्तमाः

देवतारुवने पूर्व विनोदार्थं मया पुरा ४
कल्याणं वपुरास्थाय प्रविष्टं द्विजसत्तमाः
तत्रस्था मुनिपत्नयो मां दृष्ट्वा सादरमक्षमाः ५
विश्लिष्टकेशवस्त्राधा जायन्ते मदनातुराः
तथा विधाश्च तास्सर्वा दृष्टाः खलुमयादरात् ६
मदालोकन मात्रेण दधते गर्भमक्षयम्
तत्तद्गर्भभवा याश्च ता रुद्रगणिका मताः ७
तास्सर्वास्तत्र संपूज्य कानो वृत्तिर्भविष्यति
एवं पृष्टो ब्रवीम्येवं शृणुध्वं यन्मयोदितम् ८
मदर्चनं तु यच्छ्रेष्टं तत् सौख्यसहितं यदि
तदेव शुद्ध नृत्तं तु लक्षणं भरतोदितम् ९
तत् पूजायां नियोज्यं तन्मत्प्रीत्यर्थं दिने दिने
स्त्रीभिस्तद्वंश जाताभिः पञ्चाचार्य समन्वितम् १०
इत्येवं तु क्रमेणोक्ते प्रणेमुस्ते महीतले
मया तुष्टेन तास्सर्वा दीक्षिता दीक्षया खलुः ११
आहूय नन्दिनं चादाय करमध्यगम्
वेत्रं तस्माच्छिरांस्यासां स्पृष्टानि द्विजसत्तमाः १२
ततः प्रभृति वर्तन्ते भुवि नन्दाव्य संज्ञया
यतो दण्डेन संस्पृष्टं शिरो दण्डिन्य इत्यपि १३
विख्यातास्तत्कुलोत्याभिः श्शुद्धनृत्तं प्रवर्त्यताम्
नर्तको मर्दकश्चैव गायको वांशिकस्तथा १४
तथा मौर विकश्चैव पञ्चाचार्याः प्रकीर्तिताः
चतुर्वर्णानुलोमात्था नाटचवेद कृतश्रमाः १५
भावना गेयनृत्तज्ञा वाद्यज्ञान विशारदाः
नव नाटच रसज्ञाश्च मद्भक्ता वीत कल्मषाः १६
तेषु श्रैष्ठ इति प्रोक्तो नर्तको नृत्तशास्त्रवित्

नर्तने च स्वयं शक्तो मात्रागणन तत्परः १७
मर्दको मल्ल विद्यायां सम्यक् कृतपरिश्रमः
प्रवृत्ते शुद्धनृत्ते तु तदङ्गेक्षण तत्परः १८
गायको गान विद्याज्ञस्सप्तस्वर विशारदः
सप्त स्वर विभेदेन गायको गान नायकः १९
वांऽसिकस्तद्वदेव स्यात् किंतु वंशकृतश्रमः
सौख्ये तु वादयेद्वंश मुदात्तादि विभेदतः २०
वादयेन्मुखं सौख्य काले मौर विको मतः
नर्तको मर्दकोऽन्यश्च दक्षिणे तु व्यवस्थितौ २१
गायको वाम्शिकाख्यश्च वामभागे व्यवस्थितौ
अग्रे मौरविकस्सौख्ये वादयेन्मुखं तथा २२
ताः पूर्वसंस्कृतास्सर्वाः यद्यप्यासां पुनर्भवात्
पुनर्दीक्षा विध्येया स्यात् सा च लेशान्निगद्यते २३
अनुकूल दिने स्वस्याः पञ्चसंवत्सराधिकाः
पञ्चाशद्वत्सरान्तास्ता योग्या नैवेतराः क्वचित् २४
मण्डपं सौख्य नृत्तार्थं कारयेल्लक्षणान्वितम्
त्रस्त्रिंशत् कराद् द्विद्वि हस्ताभ्यां ह्वासयेद् द्विजाः २५
देवादि शूलं पर्यन्तं श्रष्ट मध्याधम क्रमात्
प्रत्येकं त्रित्रिमानानि तेष्विष्टं परिगृह्यताम् २६
युग्मेष्वेवं परिग्रायं देवादिप्रक्रमादिदम्
अथवा सर्व सामान्या मण्डपाः प्राग्विनिर्मिताः २७
पङ्क्तिहस्तादि भेदेन तेन ग्राह्यास्तु नर्तन
सर्वे च मण्डपाः कार्याः निवृत्त्यादि कलामयाः २८
तन्मध्ये च विधातव्यं शुद्धनृत्तं यथाविधि
नटेशं मण्डपेभ्यर्च्य साङ्गं गन्धादिभिस्ततः २९
आहूय रुद्र गणिकाः प्रोक्सयेत् शङ्खवारिणा

पञ्चाक्षरादि जप्तेन द्वाग्रे लेपिते पुनः ३०
आसनं प्रणवं तत्र कल्पयेत्तस्य मध्यमे
क्षालितं वेत्रमादाय हेतितो येन देशिकः ३१
संस्थाप्य वेत्रं पूर्वाग्रं उत्तराग्रमथापि वा
नन्दिनं तत्र संपूज्य गन्धपुष्पादिभिर्गुरुः ३२
नववस्त्रस्त्रगुष्णीषस्सोत्तरीयस्सुमाल्यकैः
श्वेतचन्दन लिप्ताङ्गः आदिशैवोऽङ्गुलीयकैः ३३
संप्राप्त दक्षिणः पञ्च निष्काद्या दक्षिणा अपि
तच्छिष्यो वा तदादाय मूर्धादि क्रमशो न्यसेत् ३४
शिवायनम इत्येवं समस्तं शिरसि न्यसेत्
गन्धादिना समभ्यर्च्य प्राग्वद् वेत्रं पुनर्न्यसेत् ३५
नामोक्त्वा नन्दपूर्वं तु संबुध्यन्तं यथा भवेत्
नामान्तरं च दास्यामि दण्डिन्यस्तं महत्तरम् ३६
मदीयोत्सव कालादौ तव नृत्तानुकूलतः
एवं प्रशास्य तद्धस्ते प्रक्षिपेत् पुष्पसंहतिम् ३७
तामादाय तदा दद्याद् गुरवेऽञ्जलिसंयुतम्
पुनरादाय पुष्पाणि शिवाय विनिवेदयेत् ३८
ततः पञ्चपदीत्यादि नृत्तं यद् भरतोदितम्
शिव प्रीतिकरम् सौख्यं कारयेच्छिव सन्निधौ ३९
एवं स्त्रीणां तु दीक्षा स्यात् पञ्चाचार्येषु कथ्यते
देशिकस्य गृहे वाथ स्वगृहे वा मनोरमे ४०
देवेशं मध्यमे भागे समभ्यर्च्याङ्ग संयुतम्
विन्यस्य तत्पुरः कुंभं स्वर्णवस्त्रादि संयुतम् ४१
पञ्चाक्षरेण जप्तेन तत्तोयमभिमन्त्रयेत्
पञ्चाचार्यान् कृतस्नाताञ्शुक्लवस्तादिभिर्युतान् ४२
तदम्भसा तु संप्रोक्ष्य शिरः कूर्चेन संस्पृशेत्

पञ्चाक्षर समोपेतं तदा कर्माधि कारिता ४३
प्रवेशो रुद्रकन्यानामादौ संक्षिप्य कथ्यते
निर्दिष्ट दिवसात् पूर्वं मङ्गलांकुर माचरेत् ४४
प्रासादस्य चतुर्दिक्षु पूर्वास्यं मण्डपद्वयम्
विधाय मण्डपे पीठं बलिपीठ वशान्नयेत् ४५
सर्वस्मिन्मण्डपे कुण्डं स्थण्डिलं वा तदग्रतः
निष्पाद्य देवदेवेशं पूर्वेद्युस्संप्रपूजयेत् ४६
गन्धाद्यैर्युग संख्याता रुद्रकन्या उपोषिताः
धौतदन्ताश्च सुस्नातास्सर्वावयव शोभिताः ४७
सर्वमङ्गल संयुक्ताः पञ्चाचार्या स्तथाविधाः
कृतशर्वनताः शान्ता बद्धप्रतिसरान्विताः ४८
अधिवास्य च पूर्वेद्युः प्रातरेनां क्रियां नयेत्
संस्थाप्य देव देवेशं सहस्रकलशादिभिः ४९
संपूज्य गन्धपुष्पाद्यैः प्रभूतहविषान्वितम्
मण्डपाच्छिल्पिनं सम्यग् विसृज्यालिप्य गोमयैः ५०
पुण्योद प्रोक्षणं कृत्वा ब्राह्मणान् भोजयेत्ततः
मध्यपीठस्य मध्ये तु यजेद्देवं सदाशिवम् ५१
नटेश्वरं देव्या च सासनं ब्रह्मविग्रहम्
साङ्गं चावरणोपेत मावृतिस्त्वधुनोच्यते ५२
नन्दिनं पूर्वदेशेतु ब्रह्माणं दक्षिणे यजेत्
स्कन्दं च पश्चिमे देशे विष्णुं सौम्ये समर्चयेत् ५३
तत्बहिर्ल्लोकपालांश्च शस्त्रजालं बहिर्यजेत्
पूर्वास्यां रुद्रमभ्यर्च्य गौरीदेव्या समन्वितम् ५४
प्राग्वदावरणोपेतं ब्रह्माणं दक्षिणे यजेत्
सरस्वत्या समोपेतं लोकपालादि संयुतम् ५५
पश्चिमे मण्डपे स्कन्दं लोकपालादि संयुतम्

उद्व विष्णुं यजेत् धीमान् लोकपालावृतिं बहिः ५६
संस्कृत्य वह्निं कुराडं च स्वस्ववह्नौ स्वदेवताम्
आवाह्याभ्यर्च्य गन्धायैर्नाडी सन्धान पूर्वकम् ५७
होमयेच्छत संख्यातामावृतिं दशसंख्यया
समिदाज्यान्न लाजैश्च तिलैः पूर्णां समाचरेत् ५८
देवं संपूज्य रङ्गे तु शुद्धनृत्तं च कारयेत्
प्रागुक्त विधिना पूर्वं संस्कृताश्चेद् द्विजोत्तमाः ५९
तद्धीनाश्चेत्तु संस्कारं कृत्वा नृत्तं च कारयेत्
नृत्तारम्भे च पूजा स्याद् देशिकस्य विशेषतः ६०
पञ्चाचार्येषु कन्यासु वस्त्राद्यैर्भूषणादिभिः
भृतिं दद्यात्ततस्तासां यथा स्यात् प्रेम तुद्विजाः ६१
नित्योत्सवान्ते कर्तव्यं सौख्यं तद्रुद्रकन्यया
कृतस्नानाङ्ग भूषाढ्य शुक्लमाल्यादि युक्तया ६२
पञ्चाचार्य समोपेतं रङ्गेशं प्राग्वदावृतिम्
समभ्यर्च्य तदग्रेतु नव नाट्य रसान्वितम् ६३
श्लोकार्थ भावनोपेतं शुद्धनृत्तं समाचरेत्
ब्रह्मा विष्णुश्च रुद्रश्च सन्ध्यात्रयाधिपाः स्मृताः ६४
प्रातर्मध्याह्नसायेषु क्रमाच्छ्लोकत्रयं पटेत्
मन्दार पुष्प परिकीर्ण विचित्रगन्ध मत्तालिबृन्दमधुरध्वनिगीतयुक्तः
नानाविधाङ्ग करणैरभिवर्धमानः पुष्पाञ्जलिर्भवतु मे कमलासनाय
६५
भावानु बन्धेन रसोत्तरेण नृत्तेन नृत्तागम सम्भवेन
आमोद मत्तरलिभिर्रिकूजत् पुष्पांजलिस्यात् पुरुषोत्तमाय ६६
सान्तानिकादि शिव संस्कृत रुद्रकन्या
नानाविधाभिनयकै रभिवर्धमानः
नाना प्रसून निच्यै र्नृपराष्ट्र वद्धयै

पुष्पाञ्जलिर्भवतु मे परमेश्वराय ६७
स्थापने प्रोन्नगेन्यत्र प्रायश्चित्तेऽद्भुतादिए
उत्सवे स्नपने मासपूजायां होमकर्मणि ६८
धजारोहण कलादौ काम्यादौ च विशिष्यते ६८ १-२
इति उत्तरकामिकाख्ये महातन्त्रे सौख्यकर्मविधिस्त्रिसप्ततितमः पटलः

चतुस्सप्ततितमे पटले वैशिष्य विधान विधिः

विधीयतेथ वैशिष्यं सर्वेषां सर्व कर्मसु
आचार्यः साधकोन्यश्च पुत्रक स्समयीति च १
महेश्वरेण पञ्चैते पुर्व पूर्व गुणाधिकाः
संस्कारेण विशेषोऽयंजात्या वैशि॥य मुच्यते २
ब्रह्मणाद्याश्चतुर्वर्णास्त्वनुलोमाष्षडेवहि
प्राग्वदेव गुणोत्कृष्टा जात्या वैशिष्य मीर्तितम् ३
वयसा विद्ययाचैच भक्त्या वेराग्यतोऽपि वा
योगेन क्रियया वाथ चर्ययापि विशिष्यते ४
आदौ राजगुरू राजा तत्पत्नी तत्पुरोहितः
तपुत्रा मन्त्रीणश्चैते विशिष्यन्ते क्रमेण तु ५
आचार्यस्त्वर्चकश्चैव निष्कलस्येतरस्य च
दैवज्ञश्च क्रमेणैषां वैशिष्यं शिवधामनि ६
पश्चान्मठपती राजा तन्नियुक्तस्त्वनन्तरम्
मद्भक्ता नैष्ठिका पश्चात् भौतिका भृति वर्जिताः ७
परिचारक पूजकाश्च भक्ताश्च भृतिसंयुताः
स्वतन्त्रगान कृद्विणा मन्त्र गानादि तत्पराः ८
पञ्चाचार्याश्च मत्कन्या देवतास्यश्च वादकाः
क्रमेणैषां च वैशिष्यं स्वस्वकर्मभिरीरितम् ९

अनुक्तानामतोऽन्येषां तत्तत्कर्मानुरूपतः
ब्राह्मणादि क्रमेणापि ज्ञात्वा वैशिष्यमादरात्  १०
पूजयेद्देव कल्याणे पवित्रारोहणादिके
सर्वेषामुदितं तेषां मुख्यन्तं देशिकाज्ञया  ११
देशिकोहमिति प्रोक्तो येन तेन गुरुर्वरः
देशिकाज्ञा ममाज्ञा सा मयैवोक्ता शिवागमे  १२
तस्मादादौ तु सर्वेषां पूजनीयो यथाह्यहम्
सन्मार्गादि क्रमेणापि वैशिष्यमिह संभ्रतम्  १३
सन्मार्गी पुत्रमार्गी च सहमार्गी तथापरः
दासमार्गी चतुर्धैषां क्रमात् वैशिष्य मिष्यते  १४
सन्मार्गी त्यक्त संस्कारस्समर्थः शुचि भक्तियुक्
पुत्रमार्गी भवेत् सर्व शैवागमविशारदः  १५
पुत्री कृत जनश्चैवाचार्य स्सान्तानिकश्च सः  १६
सहमार्गी शिवार्चाग्नि जपहोमं परायणः
प्रवेशक श्शिवज्ञानी त्वौप देशिक एव वा  १७
दासमार्गी शिवोद्यानलिंग बिम्बालयादि कृत्
शैव नृत्त नति स्तोत्र गान् कृद्द्रोहिमर्दकः  १८
एवं बहु प्रकारेण शैवैस्सह विचार्य च
एवं गुण समायुक्तैः विशिष्यं परिकल्पयेत्  १९

इति उत्तर कामिकाख्ये महातन्त्रे वैशिष्य विधान विधिः
चतुस्सप्ततितमः
पटलः

पञ्चसप्ततितमे पटले व्याधिनाश विधान विधिः

व्याधिनाश विधानं तु वक्ष्ये संक्षेपः क्रमात्
सर्वेषामपि मर्त्यानां भूपतीनां विशेषतः  १

गोगजाश्वाज महिष प्रमुखानां चतुष्पदाम्
ज्वरमारिग्रहा वेशापस्मारेषु विशेषतः २
ज्ञयशोफप्लिहागुल्मशूलाद्युन्माद शाधने
वात पित्तकफोद्रेके दाहमोह वणोकटे ३
महोदराश्मरी ग्रन्थि प्रमेहादि समुद्भवे
एवमन्यमहाव्याधौ शिरोदृग्दन्तकर्णजे ४
आस्याद्यङ्ग समुद्भूतरोगेऽनुक्ते समुत्थिते
पालकादि समुत्पत्तौ गजादीनां द्विजोत्तमाः ५
तद्व्याधि निवृत्यर्थं रोगानुत्पत्तिहेतवे
पुष्टयर्थं च बलार्थं च विधिर्गेशान्निगद्यते ६
देवालये नदीतीरे पर्वते काननेऽपि वा
अन्यस्मिन् पुण्यदेशे तु तत्तत्स्थाने स्वमन्दिरे ७
गुप्ते मनोरमे शुद्धे गोमयेनानुलेपिते
लिंगे वा मण्डले कुम्भे स्थण्डिले फलकादिषु ८
शिवादि प्रमुखान्देवान् आवाह्याभ्यर्च्य पूर्ववत्
गन्ध पुष्पैस्सधूपैश्च दीपैश्च हविषान्वितम् ९
स्नपनेन समोपेतं पञ्चगव्यामृतादिना
संपूज्येष्टमं देवं जपं कुर्याद्विचक्षणः १०
अयुतं वा तदर्धं वा अयुतार्धार्धमेव वा
सहस्त्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ११
तत्तन्मन्त्रानुरूपेण जपकर्म समाचरेत्
मन्त्रमुच्चार्य हे देव व्याधिं नाशय नाशय १२
पठित्वा देवदत्तस्य पदं चात्र विशेषतः
एवं जपं विधायैत दिष्टदेवे निवेदयेत् १३
गन्ध पुष्पाक्षतोपेतं कुशदूर्वादलान्वितम्
स्तुत्वा प्रणम्य देवेशं होमस्थानं समाश्रयेत् १४

तत्पूर्वे चैश दिग्भागे चतुरश्रेऽथ वृत्तके
कुराडे वा स्थरिडले वाथ शिवाग्निं विधिना नयेत् १५
तन्मध्ये त्विष्टदेवं स्यातु समावाह्य समर्चयेत्
गन्धाद्यैस्समिदाज्यान्नतिलः कल्पोदितैस्तु वा १६
होमं जपाद्दशांशं तु शतमष्टोत्तरं तु वा
कृत्वा पूर्णां समादाय तस्माद्भस्म विसर्जयेत् १७
देवं कुंभं शिवाग्निं च गत्वा कुम्भान्तिकं गुरुः
होम कर्म निवेद्यास्मै देवं स्तुत्वा प्रणम्य च १८
तत्कुंभसंस्थतोयेन व्याधितं प्रोक्षयेत्सुधीः
तद्भस्मालेपनं कुर्यात्तन्मन्त्र ध्यान संयुतम् १९
रुद्रादिभ्यो बलिं दद्याद्दध्यन्नं सधृतं गुरुः
होमान्ते वा बलिं दद्यादन्यथापि निगद्यते २०
कृत्वा प्रतिकृतिं पैष्टिं तदाकृत्यनु रूपतः
गन्धपुष्पादिनाभ्यर्च्य तथा बल्यन्तमेव च २१
नाना व्यञ्जन संयुक्तं पायसं मौद्गमेव वा
शुद्धान्नं वाज्य संयुक्तं दध्यपूपादि संयुतम् २२
प्रत्यहं तु त्रिसन्ध्यायामेककालेऽथवा पुनः
चतुरे चैत्य वृक्षस्य मूले रथ्यामथापि वा २३
मातृस्थान समीपे वा श्मशानादौ विनिक्षिपेत्
यस्सत्वो देवदत्तं तु समाश्रित्येह वर्तते २४
तस्यैवेष बलिर्भूयान्मन्त्रस्साधारणो मतः
एकाहादि दशाहान्तं मासात्संवत्सरान्तकम् २५
वत्सराच्छत वर्षान्तमात्मनः प्राणिनामिह
बलिरेष समाख्यातो धूपदीपसमन्वितः २६
पताकास्वादुपानीय युक्तसाधारणो मतः
अथवान्य प्रकारेण व्याधिमोचनमुच्यते २७

लिंगादौ देवमभ्यर्च्य जपहोमौ समाप्य च
सौवर्णां राजतां वाथ शतनिष्क विनिर्मिताम् २८
तदर्ध निर्मितां वाथ पञ्चविंशति निर्मिताम्
दशनिष्कमिमां वाथ पञ्चनिष्क विनिर्मिताम् २९
तदर्ध निर्मितां वापि निष्कमात्रमितं तु वा
कुर्यात् प्रतिकृतिं विद्वान् वित्तशाठ्यं न कारयेत् ३०
रोगार्त रूपं निर्माय तत्तदाकृतिरूपतः
कालरूपं तु वा नेमिरूपं रूपान्तरं तु वा ३१
पूर्वोक्त विधिनाभ्यर्च्य तच्छिवाय प्रदापयेत्
अनेन विधिना रोगी अरोगी स्यान्न संशयः ३२
केवलं बलिदानं वा चतुर्मासान्तमेव वा
पञ्चषण्मासपर्यन्तं यावत् व्याधि विनाशनम् ३३
अथवान्य प्रकारेण व्याधिनाशनमुच्यते
अष्टम्यां वा चतुर्दश्यां पर्वण्यापि च पक्षयोः ३४
ग्रहणे विषुवे वापि द्वयोरयनयोरपि
स्वजन्मर्क्षेऽनु जन्मर्क्षे शुद्धदेशे मनोरमे ३५
गोमयेनानुलिप्तेऽथ प्रोक्षयेदस्त्रवारिणा
स्थण्डिलं तत्र कृत्वान्ते साधयेत् कलशान्नवा ३६
पञ्चविंशति संखायतान् पञ्चसंख्यानथापि वा
एको वा मध्यमे तेषां घटस्स्याद्द्रोणपूरितः ३७
ससूत्रान्सापिधानांश्च सवस्त्रान्हेम संयुतान्
सर्वौषधि समायुक्तान्नानाबीज समन्वितान् ३८
सकूर्चान् पल्लवोपेतांश्चन्दनाक्षत संयुतान्
गन्धतोय समायुक्तांस्तत्तन्मन्त्र समन्वितान् ३९
अभ्यर्च्य गन्धपुष्पाद्यैः धूपदीपैर्विशेषतः
तत्तन्मन्त्रशतालब्धां स्तत्पूर्वे वा चतुर्ष्वपि ४०

होमं कुर्याद्विशेषेण कुण्डे वा स्थण्डिलेऽपि वा
शिवाग्नौ जुहुयाद्धीमान् समिदाज्यान्न संयुतम् ४१
तस्मात्तद्भस्म संग्राह्य व्याधितं स्नापयेद् गुरुः
गोमयालिप्तदेशे तु फलकोपरि संस्हृतितम् ४२
तत्तदूत्तर देशस्थं स्नापयेद्रोगसंयुतम्
निर्मृज्य पैष्टिकैवापि यवाद्यैर्गोमयोद्भवैः ४३
स्नापयेत् संस्मरन्मन्त्रं तत्तद्ध्यान समन्वितम्
प्रोक्षयेद्वाथ मन्त्रेण तद्भस्मालेपनं ततः ४४
कुर्याद्रोगयुतस्सोपि पूजयेद्देशिकं तदा
राज्ञां पट्टभृतां वाथ सामन्तानां महात्मनाम् ४५
साधयेच्छत संख्यातान् कलशाष्टक संयुतान्
पञ्चाशत् संख्यया तेभ्यो न हीनान् साधयेत्गुरुः ४६
कलशेष्वपि सर्वेषु मनुरेकस्तु पूज्यते
मध्यमे च विशेषेण तैस्तान् संस्नापयेद् गुरुः ४७
अथान्योऽपि प्रयोगः स्याद् व्याधिनाशो विशेषतः
आदित्योदयमारभ्य जले स्थित्वा मनुं जपेत् ४८
अयुतं वा तदर्धं वा तदर्धं वा सहस्रकम्
शतमष्टोत्तरं वापि प्रत्यहं जपमाचरेत् ४९
सर्वत्र तर्पणं कुर्यात् प्रागुक्तैर्वक्ष्यमाणके
होमेन समसख्यां वा जप तुल्यं परं मतम् ५०
शक्तश्चेज्जलमध्यस्थो जपेन्नित्यं समाचरेत्
अनेनापि प्रकारेण भूर्जपत्र त्वगादिके ५१
सुमुहूर्ते सुलग्ने तु व्याधितस्यानुरूपके
कुङ्कुमेन लिखेद्वर्णां तद्देवेज्यापुरस्सरम् ५२
पूर्वहोमसमायुक्तं जपतर्पणं संयुतम्
विधाय जपमात्रं वा गोरोचनयुतं तु वा ५३

शलाकया लिखित्वार्णान्नाराचेनाथवा गुरुः
संपूज्य गन्धपुष्पाद्यैः र्गुलिकां कारयेत्ततः ५४
स्वर्णेन रजतेनाथ बध्वा ताम्रेण तत्नुना
लात्तया वाथ सा धार्या यावत् व्याधि विमोचनम् ५५
दुर्बलो बलवान्धीर स्सर्वैस्संपूज्यते भुवि
कर्णे वा कराठदेशे वा शिखायां वा करेऽपि वा ५६
नाधः कटि प्रदेशाच्च मन्त्रसन्निधि हेतवे
प्रत्यहं पूजनीयो वा मन्त्रस्सर्वफलप्रदः ५७
जपं वा कारयेन्नित्यं पूजां श्रद्धासमन्वितः
पूजां होमं च वा नित्यं जपतर्पण संयुतम् ५८
एवं करोति यो मर्त्य स्सोऽनिष्टैर्विप्रयुज्यते
बलवान् प्रियदर्शश्च राजा धार्माधिको भवेत् ५९
अशक्तानां च सर्वेषां शक्तः कर्मणि देशिकः
तन्नियुक्तो वाथवा नान्यो विशेषाद्राज कर्मणि ६०
विस्वासस्तत्र कर्तव्यो यः परानुग्रहे रतः
सर्वत्र सर्वधा सोऽयमादिशैवः प्रक्रीर्तितः ६१
गजानां बाधकादौ तु रोगे शान्तिरिहोच्यते
मध्ये वा गजशालायां शूलस्थाने मनोरमे ६२
शिवस्य हर्म्ये विष्णवो र्वा दुर्गाया भास्कररस्य च
विघ्नराजस्य शास्तुश्च मातृणामालयेऽपि वा ६३
नद्यास्तीरे तटाकस्य देवोद्यानेऽन्यदेशके
गोमयेनोपलिप्याथ प्रोत्तयेदस्त्र वारिणा ६४
स्थणिडलं विधिना कृत्वा शालिभिस्तराडुलैस्ततः
समायुक्तं द्रोणतोय प्रपूरितम् ६५
स कूर्चं सापिधानं च गन्धोदक समन्वितम्
एला कुङ्कुम कर्पूर फलत्रय समन्वितम् ६६

दूर्वापत्र समायुक्तं श्वेततराडुल चर्चितम्
तत्र साङ्ग मघोरास्त्रं सासनं सम्यगर्चयेत्  ६७
पङ्कजासन मध्यस्थं षड्भुजं सत्रिलोचनम्
सर्वाभरण संयुक्तं पूर्ण चन्द्र समप्रभम्  ६८
कपालशूल संयुक्तं धनुर्बाण समन्वितम्
ऊर्ध्वकेशं विरूपाक्षं खड्गखेटकधारिणम्  ६९
एवं ध्यात्वा द्विजश्रेष्टा अघोरास्त्रस्वरूपणम्
पूर्वोक्ता कृतिसंयुक्तं श्वेतवर्णमथापि वा  ७०
गन्ध पुष्प समायुक्तं धूपदीप समायुतम्
नैवेद्यमुपपदंशाद्यं सताम्बूलं निवेदयेत्  ७१
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा
प्रत्यहं तु जपं कुर्यादस्त्रराजेन देशिकः  ७२
तस्याग्रे वैशदिग्भागे वृत्ते वा चतुरश्रके
कुराडे वा स्थरिडले वापि शिवाग्नौ होममाचरेत्  ७३
समिदाज्य चरूपेतं तिलतराडुल संयुतम्
क्षीरवृक्ष समुद्भूता बिल्वजा ब्रह्म वृक्षजाः  ७४
समिधस्संप्रशस्तास्स्युः दूर्वाहोमोऽथवा मताः
संहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा  ७५
प्रायश्चित्तं ततो हुत्वा पूर्णामन्ते समाचरेत्
तद्भस्म संग्रहं कृत्वा देवं कुंभे विसर्जयेत्  ७६
तत्तो प्रोक्षणोपेतं भस्मलेपनं नित्यशः
ग्रहा रोगाश्च नश्यन्ति तेषां पुष्टिश्च जायते  ७७
अनुत्पत्तिश्च रोगाणां तेषामायुष्यमेव च
स्यात्तेषां विजयी स्वामी यत्रैष क्रियते विधिः  ७८
रुद्रादिभ्यो बलिं दद्यात् क्षेत्रपालान्तिमं यथा
बलिभिर्लोकपालेभ्यः कृतगोमय मराडले  ७९

गजशाला समीपे वा होमस्थानेऽथवा बैः
एष एव विधिः प्रोक्तो हयादीनां तु रक्षणे ८०
किं तु धूम्रनिभो देवो ध्यातव्यस्साधकोत्तमाः
गज यूथं हयाजं वा गोमहिष्यादिकं तु वा ८१
सम्यक् संरक्षणीयं स्यात् अस्त्रराजाहितं तदा
तत्सर्वं व्याधिनिर्मुक्तं हृष्ट पुष्टं विचिन्तयेत् ८२
पूर्वाह्ने वाथ मध्याह्ने रात्रावेतत्समाचरेत्
एककालं द्विकालं वा त्रिकालं वा विशिष्यते ८३
नित्यं यः कारयेद्राजा स पुण्यो विजयी भवेत्
साधकं पूजयेत् कर्ता सन्तुष्टस्य यथा भवेत् ८४
हयानां च गजानां च रक्षणं चान्यथोच्यते
तर्पणं प्रथमं कृत्वा जलेन तदनन्तरम् ८५
कुंभेऽधोरं समभ्यर्च्य स्थण्डिले शास्त्रचोदिते
अष्टद्रोणैस्तदर्धैर्वा खारिभिः द्रोणनिर्मितैः ८६
तदर्धैर्वा दरिद्रश्चेत् तस्याप्यर्धेण वा द्विजाः
व्रीहिभिः स्थण्डिलं कृत्वा तत्तदर्धैश्च तण्डुलैः ८७
तिलैर्लाजसमोपेतैः गन्धपुष्प समन्वितम्
तन्मध्ये द्रोण संपूर्णं कुंभं विन्यस्य देशिकः ८८
सापिधानं सकूर्चं च ससूत्रं पल्लवान्वितम्
पूर्वोक्त द्रव्य संयुक्तं गन्धतोयप्रपूरितम् ८९
तन्मध्येऽघोरमावाह्य पूर्वोक्त ध्यान संयुतम्
चन्दनं च लघूपेतं पुष्पं धूपं च दीपकम् ९०
नैवेद्यं च निवेद्याथ शुद्धं पायसमेव वा
ताम्बूलेन समोपेतं होमं पश्चात् समापयेत् ९१
समिदाज्य चरूपेतं तिलसर्षप लाजकैः
क्षीरवृक्षसमुत्पन्न समिद्भिर्दूर्वयाथवा ९२

सहस्त्रं वा तदर्धं वा शतमष्टोत्तरं तु वा
पञ्चाशत्संख्यया वाथ पञ्चविंशति संख्यया ९३
प्रतिद्रव्यं च जुहुयात् अघोराणुं समुच्चरन्
अघोरास्त्रं तत्सख्यं भक्ताद्य चोत्तरामुखः ९४
कुण्डद्वये वा होतव्यं एकस्मिन्स्थण्डिलेऽपि वा
पूर्णाहुति प्रधानेन मनुना तर्पयेन्नवा ९५
पृथक् पूर्णाहुतिं दत्वा तदन्ते बलिमाचरेत्
साज्येनान्नेन मध्ये तु दिक्ष्वष्टासु बलिं नयेत् ९६
अघोरास्त्रेण मन्त्रेण बलिः स्वाहान्त ईरितः
कुण्डस्यैशान दिग्भागे बलिमेनं तदाचरेत् ९७
अघोररास्त्र महाज्वाला विस्फुलिङ्ग शिखान्वितः
पूजितस्तर्पितो येन बलितुष्टोऽधुना ततः ९८
रक्ष रक्ष गजानस्य स्वामिनं च विशेषतः
स्वाहान्ते बलिरिष्टः स्यात् तर्पणं च विशेषतः ९९
पूर्वाह्ने वाथ मध्याह्ने रात्रौ कुर्यात् क्रियामिमाम्
महाबलिश्चेत् कर्तव्यो मध्यरात्रे समाचरेत् १००
अन्नं मधुघृतोपेतं दधिलाज समन्वितम्
कदलीफल संयुक्त मपूपैश्च समन्वितम् १०१
नानाघोषसमायुक्तं भैरवाद्यैस्समन्वितम्
दीपहीन बलिं दद्यात् ग्रामादौ नित्यमेव च १०२
विशेषाद्राज सदने रक्ष्यस्थाने द्विजोत्तमाः
अघोरास्त्र ध्वजोपेतं मौनव्रत समन्वितम् १०३
क्षेत्रपालबलिं दद्यात् रुद्रादिभ्यो यथाबलिम्
तदन्ते कुम्भतोयेन व्याधितान् प्रोक्षयेत्ततः १०४
अघोरं च तदस्त्रं च तस्मिन् काले समुच्चरन्
तन्मन्त्रमन्त्रितं भस्म दद्यान्मन्त्रद्वयं स्मरन् १०५

दद्यात् होमोद्भवं भस्म नीरोगास्युर्द्विजोत्तमाः
गुरुं सन्तोषयेत् कर्ता भोजनाद्यश्च देशिकम् १०६
तुष्टेन गुरुणा सर्वं तुष्टं स्थावर जङ्गमम्
आलयादावघोरं तु कृत्वा संस्थाप्य देशिकः १०७
शैलादावर्चयेन्नित्यं होमं च बलिमाचरेत्
कृत्वादौ घटसंस्थं तु न्यस्य पूजादिकं नयेत् १०८
व्याधयस्सोपसर्गाश्च नश्यन्त्यस्मिन्धरातले
केवलं तर्पणं वाथ पूजां हवन संयुताम् १०९
केवलं यजनं होमं बलिं नित्यं समाचरेत्
मर्त्यानामपि सर्वेषां एतत्सामान्यमुच्यते ११०
होमयेज्जपकार्यं तु पूजान्ते नित्यमाचरेत्
केवलं वा जपं कुर्यात् सर्वोपद्रव शान्तये १११
उच्यतेन्यप्रकारेण गजानां व्याधिनाशनम्
शुद्धदेशमनुप्राप्य गोमयेनानुलेपयेत् ११२
द्रोणपूर्णं समादाय कुम्भं बिंब समप्रभम्
तन्तुना वेष्टयित्वा तु द्रोण ब्रीहि विनिर्मिते ११३
तदर्ध तण्डुलोपेते तण्डुलार्ध तिलान्विते
तिलार्ध लाजसंयुक्ते स्थण्डिले स्नापयेत् बुधः ११४
तन्मध्ये विन्यसेत् कूर्चं पञ्चदर्भ विनिर्मितम्
विन्यसेत् कुम्भमध्ये तु द्रव्याण्येतानि चन्दनम् ११५
फलत्रय समायुक्तं कुष्टोशीरसमन्वितम्
एलालवङ्ग संयुक्तं चूर्णितानि विनिक्षिपेत् ११६
छादयित्वा पिधानेन कल्पयेदासनं बुधः
आधाराख्यमनन्तं च धर्माद्यं च चतुष्टयम् ११७
अधर्मादि चतुष्कं तु अधश्चोर्ध्वछदान्वितम्
तन्मध्ये संस्मरेत् पद्मं बीजनालदलानि च ११८

कर्णिकास्वस्व मन्त्रेण पूजये दासनं गुरुः
मूर्ति भूतं स्मरेत् कुम्भं पूर्वोक्तध्यान संयुतम्  ११९
तन्मध्ये प्रणवं देवमघोरं दक्षिणामुखम्
अघोराणुम् समुचार्य यजेत् पाद्यादिभिर्गुरुः  १२०
चन्दनोशीर संयुक्तं पादयोः पाद्यमाचरेत्
एलालवङ्ग संयुक्तं फलत्रय समन्वितम्  १२१
दद्यादाचमनीयापः पश्चादष्टाङ्ग मर्घ्यकम्
आपः क्षीर कुशाग्राणि तण्डुलास्सुमनास्थिलाः  १२२
अर्घ्योष्टाङ्ग इति प्रोक्तो यवैस्सिद्धार्थकैस्सह
चन्दन लघु कुष्टं च गन्धाद्यं त्रयमुच्यते  १२३
नाना पुष्पाणि पत्राणि धूपं दद्यादनन्तरम्
तत्पद्मदलमूले तु दक्षिणेऽस्त्रं समुच्चरन्  १२४
अघोरास्त्रं समभ्यर्च्य प्राग्वत् पाद्यादिकं गुरुः
दत्वा स्वावरणोपेतं निरावरणमेव वा  १२५
भैरवानथसिताङ्गादीन् पूजयेत् प्राग्दिगादितः
असिताङ्गो रुरुश्चण्डः क्रोत उन्मत्त भैरवः  १२६
कपाली भीषणश्चैव संहारश्चाष्टमः स्मृतः
तद्बाह्ये लोकपानिष्ट्वा तदस्त्राणि च तद्बहिः  १२७
अस्त्रावरण मात्रं वा लोकभृद्भैरवैर्वतान्
गन्धाद्यै रावृतानिष्ट्वा दीपमाज्य समुद्भवम्  १२८
नैवेद्यं सोपदंशं तु साज्यं देवाय कल्पयेत्
अघोराय तदस्त्रय पानीयं च निवेदयेत्  १२९
विनिवेद्य च ताम्बूलं जपेदष्टोत्तरं शतम्
अघोराय तदस्त्राय संनिवेद्य जपं गुरुः  १३०
तदग्रे होमयेद्विद्वान् स्थण्डिले सैकते बुधः
प्राग्वत् कुण्डस्य संस्कारं पञ्चसंस्कार संस्कृते  १३१

यजनोक्त क्रमेणैव वह्नावावाह्य होमयेत्
क्षीर वृक्ष समिद्भिश्च घृतेन चरुणा पुनः १३२
लाजैश्च तण्डुलोपेतैः तिलैरष्टोत्तरं शतम्
ताम्बूलं जुहुयादन्ते स्वदेवायास्त्र रूपिणे १३३
होमं कृत्वा तदन्ते तु पूर्णाहुतिमथाचरेत्
अघोरेण च तद्भस्म संग्राह्यास्त्रेण रक्षयेत् १३४
भोगाङ्गं च लयाङ्गं च कृत्वा वह्निं विसर्जयेत्
होमकर्म निवेद्याथ कुम्भस्थेऽघोर रूपिणे १३५
प्रार्थयेद्वाञ्छितं कर्म लब्धानुज्ञस्ततो बुधः
दत्वा पराङ्मुखार्घ्यं तु भोगाङ्गान्युपसंहरेत् १३६
कृत्वा लयाङ्गमस्त्राणुमघोरमुपसंहरेत्
हृत्सरोरुह मध्ये तु स्व्स्यान्यानपि शम्बरान् १३७
तस्मादुद्धृत्य कुंभं तु व्याधिस्थभिषेचयेत्
प्रोक्षयेद्वाथ तत्तोयैः प्रत्यहं त्वेवमाचरेत् १३८
सर्वार्थं तद्भवं वाथ सेचयेदङ्कणादिकान्
हित्वाघोरमघोरास्त्रं कुम्भमध्येऽथवार्चयेत् १३९
एकाहं वा त्र्यहं वाथ पञ्चसप्ताहमेव वा
पक्षाहं वाथ मासं वा द्वित्रिमासमथापि वा १४०
प्रत्यहं वा प्रकर्तव्यं पालकादि ज्वरापहम्
यत्रैतत् क्रियते शान्तिर्नष्टरोगा गजादयः १४१
पुष्टाश्चैव भवेयुस्ते नात्र कार्या विचारणा
तद्वज्जगत्पतिः पुष्टो नीरोगी च भवेद्ध्रुवम् १४२
एष एव विधिः कार्यो ह्यश्वानां रोगशान्तये
महिषाज गवामेवं कारयेद्विजसत्तमाः १४३
अथोपयुक्तं यद् द्रव्यं आचार्याय प्रदापयेत्
प्रत्यहं भोजनादीनि दद्यादाज्य समन्वितम् १४४

तदन्ते दक्षिणां दद्याद् यथाशक्त्या नृपोत्तमाः
एवं वाह्नि च रात्रौ वा कर्म नित्यं समाचरेत्  १४५
होमान्ते तु बलिं दद्यात् रात्रौ प्रत्यहमाचरेत्
गजानां वा हयानां वा शालायमङ्कणेऽपि वा  १४६
तत्समीपेऽथवा कार्यो बलिरन्नाज्य संयुतम्
शुद्धे मनोरमे देशे गोमयेनोपलेपयेत्  १४७
संप्रोक्ष्य त्वम्भ साधोर मघोरास्त्र समन्वितम्
वज्रादि चक्र पर्यन्तं शस्त्रावरण संयुतम्  १४८
गन्धाद्यै रर्चयित्वा तु स्वाहान्तं बलिमाचरेत्
वायु वारुण दिग्भागे क्षेत्रेशस्य बलिं क्षिपेत्  १४९
हित्वाघोरमघोरास्त्रं केवलं मध्यमे यजेत्
अस्त्रावरण संयुक्तं रुद्रादिभ्यो यथा बलिः  १५०
यत्रैष क्रियते राष्ट्रे बलिः प्रत्यहमादरात्
नोप सर्गभयं तत्र रोगपीडा न विद्यते  १५१
उत्पन्नरोग नाशश्च भवत्येव न संशयः
कर्तुः कारयितुश्चापि देशिकस्य विशेषतः  १५२
अघोरस्य तदस्त्रस्य यजनं होम संयुतम्
वर्तते बलि संयुतं यस्य राष्ट्रेषु तस्य तु  १५३
आयुष्यमभिवृद्धिश्च भवेन्नीरोगता द्विजाः
अनेन सदृशो योगो दुरिक्षयहेतुकः  १५४
नास्ति लोके यतस्तस्मात् यत्नादेवं समाचरेत्  १५४ १-२
इति उत्तरकामिकाख्ये महातन्त्रे व्याधिनाशविधान विधिः
पञ्चसप्ततितमः पटलः

षट्सप्ततितमे पटले राज रक्षा विधिः

राज्ञां रक्षा विधानं तु प्रवक्ष्यामि समासतः

भस्म कल्पादिजं सूद्मं मन्त्र संस्कृतम् १
ईषद्रक्तं नृपे दद्यान्नाभेरूर्ध्वं गुरूत्तमः
ललाट मुख हृन्नाभि बाहुमूलद्वये मनुम् २
ईशानाद्यं स्मरन्दद्यादिष्टमन्त्रेण वा सुधीः
मध्यमस्थैस्त्रिभिः कुर्यादङ्गुलैदैवतात्मकैः ३
ब्रह्मविष्णवीश देवाद्यै रीशानादि क्रमेण तु
दद्याद्वानाभिकाङ्गुल्या तद्देवात्मिकया शुचिः ४
ब्रह्म विष्णु शिवा मूल पर्वादिरनु पूर्वशः
स्वानुकूलेन मन्त्रेण तत्तत् कर्त्रनुरूपिणा ५
सर्वमन्त्राश्च योग्या स्युः चतुर्जातिसमन्विताः
प्रणवादि नमोऽन्तं तु ब्राह्मणस्य प्रयोजयेत् ६
स्वाहान्तं त्ववियस्योक्तं वैषडन्तं विशां मतम्
वौषडंतं तु शूद्राणां तद्देव ध्यान सम्युतम् ७
स्व स्व जातीश मन्त्रैर्वा तेषां रत्ना विधीयताम्
दद्याद्यज्ञोपवीतं तु स्व स्व जातीश मन्त्रितम् ८
स्वानुकूलानु संजप्तमथवा विनिवेदयेत्
यज्ञोपवीतद्वितयं स्वोत्तरीयं नृपे मतम् ९

इति उत्तरकामिकाख्ये महातन्त्रे राजरत्नाविधिः षड्सप्ततितमः पटलः

## सप्तसप्ततितमे पटले दुर्गा पूजा विधिः

दुर्गा पूजा विधिं वद्त्ये सर्वकामार्थसाधनीम्
लोकाभिचार पूर्वं तु श्रूयतां द्विजसत्तमाः १
कन्यागते सवितरि शुक्लपद्तेऽष्टमीयुता
मूलनद्त्त्र संयुक्ता सा महानवमी स्मृता २
आश्वयुक्शुक्लपद्ते वा अष्टमी मूल संयुता

सा महानवमी नाम्ना त्र्यैलोक्येऽति सुदुर्लभा ३
अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम्
पूजयित्वाश्वयुङ्मासि विशोको जगति द्विषः ४
सन्तर्जयति हुंकारैः खड्गोपान्तकरान् परान्
तस्यायेऽप्युपयुज्यन्ते प्राणिनो महिषादयः ५
सर्वे ते सुगतिं यान्ति यतः पापो न विद्यते
भवानी प्राङ्गणे प्राणान् ये च मुञ्चन्ति देहिनः ६
तेषां स्वर्गे भवेद्वासः वीरास्तेप्सरसां प्रियाः
पूजनीया जनैर्धीराः स्थाने स्थाने पुरे पुरे ७
गृहे गृहे भुक्तिपरैर्ग्रामे ग्रामे वने वने
प्रागुदक् प्रवणे देशे रुद्राष्टाब्धिकरैर्गुरुः ८
मण्डपं कारयेत् कुण्डमाग्नेयां हस्तमात्रतः
मेखलात्रय संयुक्तं योनिरश्वत्थ पत्रवत् ९
राज चिह्नानि सर्वाणि सर्वाण्यस्त्राणि यानि च
पूजयेद्वेदिकोर्ध्वे तु सर्वत्रैवाधिवासयेत् १०
तन्मत्रैरर्चयेत्तानि गन्धाद्यैः प्रत्यहं गुरुः
तन्मन्त्रैरेव होमस्याद् दुर्गायाश्च विशेषतः ११
समिदाज्येन हविषा पायसेन च होमयेत्
हुतशेषं तुरङ्गानां गजानामुपहारयेत् १२
बद्ध प्रतिसरान् पञ्च गजाश्वान् समलंकृतान्
भ्रामयेन्नगरे नित्यं नानाघोष पुरस्सरम् १३
प्रत्यहं नृपतिः स्वाः स्वाः संपूज्य पितृदेवताः
पूजयेद्राजचिह्नानि फलमाल्य विलेपनैः १४
नैवेद्यान्तैस्सताम्बूलैः नानापूप समन्वितैः
हुतशेषं प्रदातव्यमौपनायनिके गजे १५
तस्यापि हरणे राज्ञो विजयस्समुदाहृतः

पूजामन्त्रान् प्रवद्द्यामि श्रुणुध्वं विप्रसत्तमाः १६
यथाम्बराश्छादयन्ति शिवायेमां वसुन्धराम्
तथाच्छादय राजानं विजयारोग्य वृद्धये इति १७
ओं छं छत्राय नमः
गन्धर्वकुलजातिस्त्वं भूयस्त्वं कुलभूषणः
ब्रह्मणः सत्यावाक्येन सोमस्य वरुणस्य च १८
ओं तुं तुरङ्गाय नमः
प्रभावाच्च हुताशस्य विजयस्व तुरङ्गम्
तेजसा चैव सूर्यस्य मुनीनां तपसा तथा १९
रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च
स्मरत्वं राजपुत्रोऽपि कौस्तुभं च मणिं स्मरन् २०
यां गतिं ब्रह्मभागच्छेत् पितृहा मातृहा तथा
मूल्येऽर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः २१
सूर्याचन्द्रमसौ वायुर्वावत्पश्यन्ति दुष्टकृतम्
व्रजेस्त्वं तां गतिं क्षिप्रं तज्ञवोयं भवेत्तव २२
निष्कृतिं यदि गच्छेन्नो युद्धेऽध्वनि तुरङ्गम
रिपून्विजित्य समरे सह भर्त्रा सुखी भव २३
अं अश्वाय नमः
इत्यश्वमन्त्रः
शक्रकेतो महावीर्य सुपर्णः स्वरूपाश्रितः
पतत्रिराड् वैनतेयस्तथा नारायणध्वजः २४
ओं ध्वं ध्वजाय नमः
काश्यपेयोऽमृता हर्ता नागारिर्विष्णु वाहनः
अप्रमेयो दुराधर्षो रणे वै रिपु सूदनः २५
गुरुत्मान्मारुत गतिस्त्वया सन्निहितस्थितः
साश्वधर्म युतान् योधान् रक्षत्वं रिपुसूदन २६

कुमुदैरावतौ नागो पुष्पदन्तेऽथ वामनः
सुप्रतीकोऽञ्जनो नील एतष्टौ देवयोनयः २७
ग्रां गं गजाय नमः
एषां पुत्राश्च पौत्राश्व वनान्यष्टौ वनाश्रिताः
भद्रो मन्द्रो मृगश्चैव गजसङ्कीर्ण एव च २८
वने वने प्रसूतास्ते वनयोनिर्महागजः
पान्तुत्वां वसवो रुद्रा ग्रादित्यास्समरुद्गणः २९
भर्तारं रक्ष नागेन्द्र समयः प्रतिपाल्यताम्
ग्रवाप्नुहि जयं युद्धे गमने स्वस्तिनो व्रज ३०
श्रियं सोमाद् बलं विष्णोस्तेजस्सूर्याज्जवोऽनिलात्
स्यथिर्य मेरोर्जयं रुद्राद् यशोदेवात्पुरन्दरात् ३१
युद्धे रक्षन्तु नागास्त्वां दिशश्च सह देततैः
ग्रश्विनौ सह गन्धर्वै पान्तु त्वां सर्वतस्सदा ३२
हस्तिमन्त्रः
ग्रों हं हस्तिने नमः
हुतभुग्वसवो रुद्रो वायुस्सोमो महर्षयः
नागाकिन्नरा गन्धर्व यक्ष भूतगणा ग्रहाः ३३
प्रमथाश्च सहादित्यैर्भूतेशो मातृभिस्सह
गणस्सेनापतिः स्कन्दो वरुणश्चाश्रितास्त्वयि ३४
व्रजहन्तुरिपून्सर्वान् राजा विजय मृच्छतु
श्वानः प्रयुक्तान्यरिभिः दूषणानि समन्ततः ३५
पतन्तु परिशत्रूणां हतानि तव तेजसा
कालनेमिवधे यद्वद्यावत् त्रिपुरधातिनि ३६
हिरण्यकशिपोर्युद्धे यद्वद्देवासुरे तथा
शोभितासि तथैवाद्य शोभया समयं स्मर ३७
नीलां श्वेतामिमां दृष्ट्वा नश्यन्त्वाशु नृपारयः

व्याधिभिर्विविधै घोरैश्शास्त्रैश्च युधिनिर्जिताः ३८
सद्यः स्वस्था भवन्ति स्म त्वत्पातेनापमार्जिताः
पूतना रेवती नाम कालरात्रीति याः स्मृताः ३९
दहित्वाशु रिपुन् सर्वान् पताके त्वं मयाश्रिता ३९ १-२
पताका मन्त्रः
ओं पं पताकाय नमः
असिर्विशसनः खड्गस्तीक्ष्ण धर्मा दुरासदः ४०
श्रीगर्भो विजयश्चैव धर्मधारस्तथैव च
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ४१
ओं खं खड्गाय नमः
नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः
हिरण्यं च शरीरं ते धाता देवो जनार्दनः ४२
पिता पितामहो देवस्त्वं मां पालय सर्वदा
शमप्रदस्त्वं समरे वर्म सर्वापदो ह्यसि ४३
रक्ष मां रक्षणीयोऽहं तवानध नमोस्तु ते
ओं वं वर्मणे नमः
दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः ४४
तव भूमि प्रधानानां तथा विजयवर्द्धनः
यथा जीमूतघोषेण हृष्यन्ति परवारणाः ४५
तथास्तु तव शब्देन हर्षोऽस्माकं मुदावहः
यथा जीमूतशब्देन श्त्रीणां त्रासो हि जायते ४६
तथा च तव शब्देन रुद्रस्य त्वद् द्विषोरणे
ओं दुं दुन्दुभये नमः
सर्वायुध महामात्र सर्वायुध निषूदन ४७
चाप मां सर्वदा रक्ष साकं सायकसत्तमैः
ओं चं चापाय नमः

पुरायस्त्वं पुरायशङ्खानां मङ्गलानां च मङ्गलः  ४८
विष्णुना विधृतो नित्यमतश्शान्तिप्रदो भव
ओं शं शङ्खाय नमः
शशांकाकार संकाश हिमपिरिडत पारडर  ४९
प्रोत्साधयाशु दुरितं चामरामर वल्लभ
ओं चं चामराय नमः
सर्वायुधानां प्रथमे निर्मितासि पिनाकिना  ५०
शूलायुधाग्रं निष्कृत्य कृत्वा मुष्टिग्रहं शुभम्
चरिडकायाः प्रदत्तासि सर्व दुष्ट निबर्हिणी  ५१
त्वया विस्तारिता चासि देवानां प्रतिपादिता
सर्वतत्वाङ्ग भूतासि सर्वाशुभ निवारणी  ५२
क्षुरिके रक्ष मां नित्यं शान्तिं यच्छ नमोस्तु ते
ओं क्षुं क्षुरिकाय नमः
प्रोत्सारणाय दुष्टानां साधूनां ग्रहणाय च  ५३
ब्रह्मणा निर्मितश्चासि व्यवहार प्रसिद्धये
यशो देहि सुखं देहि देवो हि भव भूपतेः  ५४
ताडयामून् रिपून् सर्वान् हेमदराड नमोस्तु ते
ओं कं कनकदराडाय नमः
विजयी भव देवोऽसि रिपुधाती प्रियंकरः  ५५
दुःखहा धर्मदश्शान्तस्सर्वारिष्ट विनाशकः
एतेऽष्टौ सन्निधौ यस्मात् तवं सिंहा महाबलाः  ५६
तेन सिंहासने नित्यं विप्रैर्देवेषु गीयसे
त्वयिस्थितश्शिवस्साक्षात् त्वयि शक्रस्सुरेश्वरः  ५७
त्वयि स्थितो हरिर्देवस्त्वदर्थं तप्यते तपः
नमस्ते सर्वतोभद्र भद्रं ते भव भूपतेः  ५८
त्रैलोक्यं जय सानिध्यं सिंहासन नमोस्तुते

ओं सिं सिंहासनाय नमः
लोकभिचारकं कुर्यात् कर्मेदं मन्त्रपूर्वकम् ५९
फलनैवेद्य कुसुमैः धूपदीप विलेपनैः
अष्टम्यां पूजयेद्देवीं दुर्गाख्यां स्वर्ण निर्मिताम् ६०
रप्यां वा ताम्रजां शैलां दारुजां मृत्तिकोद्भवाम्
प्रतिमां चित्रसंयुक्तां कृत्वा शक्त्यनुसारतः ६१
पूर्वाह्ने वाथ मध्याह्ने क्रियामेनां समाचरेत्
राजा स्नात्वा विभूष्याङ्गं सकलीकृत विग्रहः ६२
स्नापयित्वा विलिप्याथा चन्दनागरु कुङ्कुमैः
कर्पूर सहितैः पुष्पैः बहुभिर्गन्ध संयुतैः ६३
कुमुदैर्गन्ध पुष्पैश्च धूपदीप समन्वितैः
नैवेद्यैः फल संयुक्तैः नृत्तगानादिभिस्सह ६४
द्रोणपुष्प समायुक्तै र्बिल्वपत्रैश्च पूजयेत्
अष्टदोर्भिसमायुक्तां महिषासुरमर्दिनीम् ६५
तस्योरः क्षिप्त शूलाढ्य कपालां शूलमण्डिताम्
धनुर्बाण समायुक्तां खड्गखेष्टक धारीणीम् ६६
शङ्ख चक्र समायुक्तां सर्वालंकार भूषिताम्
वराक्षमालाः मखरां महिषासुर संस्थिताम् ६७
सिंहानुगां त्रिणेत्रां वा सर्वशत्रु विनाशिनीम्
चतुर्भुजां वा संपूज्य वरदाभय संयुताम् ६८
शङ्खं चक्र समायुक्तां स्थितां तां शान्तरूपिणीम्
नाना विधैश्च गानैश्च नृत्तैर्नानाविधैरपि ६९
एवं हृष्टैर्निशां नीत्वा प्रभाते त्वरुणोदये
घातयेन्महिषान्मेषान् अग्रतो मृदुकन्धरान् ७०
शतमर्धं तदर्धं वा तदर्धं वा यथेच्छया
ततोऽपराह्नसमये नवम्यां स्यन्दनेस्थिताम् ७१

भवानीं भ्रामयेद्राष्ट्रे स्वयं राजा च सैन्यवान्
कश्चिद्वा प्रेषितो वीरो विभूतेन च हेतिना ७२
भूतेभ्यस्तु बलिं दद्यात् अन्नं साज्यं मधुप्लुतम्
दिग्विदिक्षु बलिं दद्यान्मन्त्रेणानेन बुद्धिमान् ७३
बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा
मरुतो वाश्विनौ रुद्राः सुपर्णाः पन्नगाः ग्रहाः ७४
असुरा यातुधानाश्च मातृसर्प पिशाचकाः
डाकिन्यः क्षेत्रवेतालाः योगिन्यः पूतनाश्शिवाः ७५
जृम्भकास्सिद्ध गन्धर्वाः वीरा विद्याधरा नराः
दिग्पाला लोकपालाश्च ये च विघ्नविनायकाः ७६
जगतां शान्तिकं कर्म ब्राह्मणाद्या महर्षयः
मम विघ्नं मा चरन्तु मा सन्तु परिपन्थिनः ७७
सौम्या भवन्तु तृप्ताश्च भूतप्रेतास्सुखा वहाः
इत्येवं भ्रामयेद्राष्ट्रे राजा देवीं यथास्थिताम्
नरयानेन वा देवीं सर्वविघ्नविनाशिनीम् ७८
इति उत्तरकामिक महातन्त्रे दुर्गापूजाविधिः सप्तसप्ततितमः पटलः

## अष्टसप्ततितमे पटले वाजि नीराजन विधिः

शान्ति नीराजनाख्यं तु संप्रवक्ष्यामि वाजिनाम्
कुर्यादाश्व युजे मासि प्रतिसंवत्सरं कुरु १
नवम्यामथवाष्टम्यां पञ्चदश्यामथापि वा
द्वादश्यां वा तथा कुर्याच्छुक्लं पक्षे विशेषतः २
नगर्याश्चोत्तरे पूर्वे कुर्यादीशान देशके
अन्यस्मिन् वा प्रकर्तव्या तद्विधान मिहोच्यते ३
विस्तारतोष्टरत्नीका दशहस्त समुच्छ्रिता
विंशद्धस्त समायामायागशालेय मीरिता ४

षट् संमितां चतुःश्रेणीं त्रिमध्यां वेदिमुद्धरेत्
तदर्धं शिर्षकं चैव सा राज्ञां वेदिका मता ५
गंभीरं वेदिमध्ये तु वह्निस्थानं प्रकल्पयेत्
हस्तमात्र प्रमाणे मेखलात्रय संयुतम् ६
आदौ प्रतिसरं कृत्वा किङ्किण्यौषधिसंयुतम्
अपां समीपं नीत्वातु सोऽश्वं सत्स्त्रीभिरावृतम् ७
प्रदक्षिणोदके तीरे वेदीं प्रागाननां नयेत्
कुण्डं तदूर्ध्वे कर्तव्यं होमार्थं पूर्वमानतः ८
संस्कृत्य कुण्डमग्निं च होमये द्देशिलोत्तमः
प्रबुद्धेऽग्नौ तत इमां जुहुयाद् ब्रह्मणे हविः ९
ततो विष्णवग्नि रुद्रेभ्यश्शक्राय वरुणाय च
ततश्चाचल देवाय सेनान्यै धनदाय च १०
नागेभ्यश्च सरिद्भ्यश्च ब्रह्मादिभ्यो यथाक्रमम्
जुहुयादाहुतीरेता बलिं चैतेषु विन्यसेत् ११
नद्यां वाथ समुद्रे वा तटाकादौ सरस्सु वा
स्नापयेत् स्थापयेच्चैव यथोक्तैरोषधीगणैः १२
तिलसर्षपकल्कैश्च दघ्ना चैतान् विधर्षयेत्
विमार्दितान् वीतमलान् पीतस्नातान्वगाहितान् १३
वाहनागार मागम्य ब्रह्मचर्यसमन्वितः
बद्धौषधानि वीर्यानि रक्षार्थं तेषु बन्धयेत् १४
सायं प्रातश्च जुहुयात् सप्ताहं पूर्ववद् बुधः
कुशैस्संशोधयित्वाज्यं कुशैराज्यं समर्पयेत् १५
समिद्भिस्सु समिद्धेऽग्नौ द्वितीय मुपहारयेत्
आज्यं स्त्रुचा तृतीयं तु लिहिताश्वमुपाहरेत् १६
दध्यपूपवरान्नैश्च चतुर्थमपि तर्पयेत्
ब्राह्मे मुहूर्ते प्रत्यूषे ब्रह्म धोषाभिनादिते १७

सूर्यचन्द्रमसो रश्मिर्यथा न स्पृशते हयान्
तथा तेषां प्रचार स्यात् स्नानं प्रातः प्रशस्यते १८
कालद्वये प्रधानस्य तुरगस्य विशेषतः
पुण्याहं वाचयेन्नित्यं स्वस्त्याशीर्मङ्गलान्वितम् १९
निवृत्ते सप्तरात्रे तु स्नातश्च पुरतः स्थितः
अष्टम्यां स्नापयित्वा तान् गौर सर्षप गोरसैः २०
उत्तराषाढतरस्य सन्धाने श्रवणस्य च
नवम्यां शुक्लपक्षस्य नगराद्वासयेत् बहिः २१
दिशि पूर्वोत्तरायां वा देशे प्राक् प्रवणे शुचौ
प्रदक्षिणोदके सौम्ये विशाले द्रुमसंकटे २२
तत्र तोरणमुत्थाप्य दशहस्तसमुच्छ्रितम्
विस्तारतोष्टरत्नीकं प्राङ्मुखं माल्यशोभैतम् २३
तत्पार्श्वे कृतकूटे तु क्रियां पूर्ववदाचरेत्
सर्वमङ्गल संयुक्तो राजा पौरनरैर्वृतः २४
गच्छेच्छान्तिगृहं हृष्टः शङ्खतूर्यादिभिस्सह
प्रविश्य शान्ति गेहं तु विधानमिद माचरेत् २५
माञ्जिष्टां चन्दनं कुष्टं हरितालमनश्शिलाम्
वचां दन्तीं गुलूचीं च प्रियङ्ग्वर्जुन संज्ञिमम् २६
हरिद्रां स्वर्ण पुष्पं च वह्निमन्थं ततः परम्
स कौशं गिरि कर्णिं च हीयमाणं कटम्भराम् २७
सहदेवीं नागपुष्पं कपिकच्छुकमेव च
शतावरीं सोमवल्लिं निक्षिपेत् कलशेषु च २८
कुंभेषु वाष्ट संख्येषु वस्त्रादि सहितेषु च
गन्धैः पुष्पैश्च धूपैश्च दीपनैवेद्यकैरपि २९
नानाविधैरपूपाद्यर्दत्वा बल्युपहारकम्
जुहुयात् पूर्ववत् कुण्डे पूर्वद्रव्यैर्यथा क्रमम् ३०

वैयाघ्र चर्मण्यासीनो राजा गुरुसमन्वितः
वेद विद्वाजि वैद्याभ्यां सहितः पूर्वदिङ्मुखं ३१
अग्रेश्शुभाशुभे ज्ञात्वा पूर्णाहुत्यवसानके
आरुह्य तुरगश्रेष्ठं प्रापयेत्तोरणान्तिकम् ३२
शनैस्सान्त्वनवाग्भिश्च गानवाद्यादिभिर्यतम्
श्वेतचन्दनमालाढ्यं श्वेत वस्त्र समन्वितम् ३३
होमशेषं तदा पिण्डं पयोदधि समन्वितम्
कदली फल संयुक्तं दद्याद्वाजि वराय च ३४
यदि शीघ्रं समश्नीयाद्विजयाय भविष्यति
केवलस्थैस्तदा तोयै श्शाखयो दुंबरो त्थया ३५
प्रोक्षयेत्तु गुरुर्मन्त्रैस्तदा शान्ति कपौष्टिकैः
राजानं हस्तिनं पश्चाच्चमूं संप्रोक्ष्य त्तदा ३६
शूलेनोरस्थले भिन्द्याद्धीरं विप्रोऽथ मृण्मयम्
आभिचारकमन्त्रैस्तु तीक्ष्ण कृष्नमयेन च ३७
हयाय रक्षकां दत्वारुह्य प्रागुत्तरां दिशम्
राजा विजय सिद्ध्यर्थं गच्छेन्मङ्गल संयुतम् ३८
एवमेव गजादीनां तदा नीराजनं नयेत्
किं तु तत् कृत्तिकामासे तुरङ्गर्क्षेऽसमाचरेत् ३९
पूर्वोक्तासु च सर्वासु तिथिष्वपि च कारयेत्
गजयाने विशेषोऽयं चतुरश्रं च कूटकम् ४०
वेदिका चतुरश्रा च गजभूमिरथोच्यते
शतहस्तमितं कुर्याच्चतुरश्रं समाहितः ४१
पञ्चाशत् पञ्च विंशाद्वा समन्तात्समिधो हवेत् ४२

इति उत्तर कामिकाख्ये महातन्त्रे वाजि नीराजन विधिः
अष्टसप्ततितमः पटलः

एकोनाशीतितमे पटले राज नीराजन विधिः

कार्तिके शुक्ल द्वादश्यां प्रदोषे रजनीमुखे
वेद्यां तोरण मालाभी रम्ये श्रीचातुरन्तके १
ज्वालयित्वा नवं वन्हिं हुत्वा मन्त्रैर्गुरूत्तमः
वर्धमानतरूत्थाभिः दीपिकाभिर्हुताशनम् २
बदरै कूर्चकैश्चैव पत्रपुष्पाक्षतै स्तथा
संपूज्य गन्धपुष्पाद्यैः भवं नीराजयेत्पुरा ३
तस्यैवानिमतां गौरीं हरिं लक्ष्मीं चतुर्मुखम्
विघ्नेशं चण्डिकां सूर्यं यक्षान्मातृगणांस्तथा ४
गुहं पितृगणं नागान् सर्वान्नीराजयेत्ततः
नीराजनं गवां कुर्यान्महिष्यादेश्च भ्रामयेत् ५
त्रासयन्विघ्नजालं च घण्टानाद महारवैः
नीराजयेद्विशेषेण राजानं देशिकोत्तमः ६
तुरगान् द्विरदान् राजचिह्नानि च गरूत्तमः
सिंहासनस्थं राजानं सामन्त प्रमुखावृतम् ७
नीराजयेत् कुलस्त्रीभिः गन्धपुष्पादि पूजितम्
रूपयौवन संपन्न वेश्याभिर्वाथ कारयेत् ८
यत्रै तत् क्रियते राष्ट्रे पुरे ग्रामे द्विजोत्तमाः
तेषां राजा सुखं याति सुभिक्षं जायते तथा ९
चतुर्णामपि वर्णानां रोगोत्पत्तावपीष्यते ९ १-२

इति उत्तरकामिकाख्ये महातन्त्रे रजनीराजन विधिः
एकोनाशिशितितमः
पटलः

अशीतितमे पटले पुष्याभिषेक विधिः

पुष्याभिषेकं वक्ष्यामि पवित्रं पापनाशनम्

सर्वोत्पात विनाशार्थं श्रूयतां द्विजसत्तमाः १
पुराये मनोरमे देशे रविहस्त प्रमाणतः
कूटं कुर्याच्छुभं भक्त्या मध्यपादं यथा भवेत् २
द्वादशस्तम्भ संयुक्तं त्यक्त मध्यम वेदिकम्
दर्पणोदरसंकाशं मराडनैरुपशोभितम् ३
तस्यपश्चिमभागे च दक्षिणे तस्य बाह्यतः
वेदिका द्वितयं कार्यं पञ्चषड्ढस्तमानतः ४
चतुरश्रं समं हस्त द्विहस्तोत्सेध संयुतम्
पार्श्वे सोपान संयुक्तं संश्लिष्टं तद्द्वयं तथा ५
एवं सर्वं समापाद्य कुर्याद्राजाभिषेचनम्
पुष्यमासे तु पुष्यर्क्षे तीर्थेष्वायतनेषु च ६
उद्यानेषु च पुरायेषु शिवस्थाने विशेषतः
कुबेरन्द्रेशकाष्टासु गुरुर्मन्त्र समन्वितः ७
दैवज्ञेन बलिं कुर्यात् तत्पूर्वेद्युरुदारधीः
दधिलाजाक्षतोपेतं गन्धपुष्पादिभिः सह ८
आगच्छन्तु सुरास्सर्वे त्वत्र पूजाभिलाषिणः
दिशो नागा द्विजाश्चैव ये चाप्यन्येश भागिनः ९
आवाह्यैक मास्सर्वानेवं ब्रूयाद् गुरूत्तमः
पूर्वं स्वपूजां संप्राप्य दत्वा शान्तिं महीपतेः १०
एवमुक्त्वा बलिं दत्वा रात्रौ स्वप्नं परीक्षयेत्
शुभं चेदारभेत् प्रातरशुभे शान्ति संयुतम् ११
मराडपं भूषयेत् पश्चाद्द्वार तोरण संयुतम्
मङ्गलाङ्कुर कर्मात्र पूर्वप्रोक्त मथाचरेत् १२
यज्ञ वृक्ष समुद्भूतं कुर्याद्भद्रासनं द्विजाः
पञ्च षरामात्र मारभ्य पञ्चाशत् करजान्तकम् १३
मानं भद्रासने प्रोक्तं सभद्रं वा विभद्रकम्

सोपानं द्वय संयुक्तं मग्रे पृष्ठे विशेषतः १४
तद्दक्षिणे विधातव्यं आसनं पाद संयुतम्
सोपान सहितं कुर्यादिष्टमान समन्वितम् १५
श्राद्धं वृद्धि निमित्तं यत् पूर्वेद्युर्विधिना नयेत्
कुर्यात् प्रतिसरं रात्रौ सर्वालंकरा संयुतम् १६
प्रभाते ग्रहयज्ञं तु तद्विधानेन कारयेत्
चतुर्हस्तं समारभ्य षडङ्गुल विवर्धनात् १७
षड्ढस्तान्तप्रमाणं यन्मण्डले मानमिष्यते
शत भागं तु तत्कृत्वा दक्षिणादि ततः क्रमात् १८
नवांशं भारतं वर्षं वर्णः स्वाभाविको मतः
भागद्वयेन हिमवान् श्वेतवर्णः प्रकीर्तितः १९
वर्षं किम्पुरुषाख्यं यन्नवांशेन प्रकीर्तितम्
स्वर्ण वर्णं तु तत्प्रोक्तं हेमकूटो द्विभागतः २०
हेमकूटस्समाख्यातः चोत्तरे हरिवर्षकम्
स्वर्ण वर्णं समाख्यातं द्वाभ्यान्निषध मश्रवत् २१
पश्चिमात् पूर्व पर्यन्तमेतेषां संव्यवस्थितिः
उत्तरांशात् समारभ्य नवांशं कुरु वर्षकम् २२
तत्स्वर्ण वर्णं विज्ञेयं शृङ्गवान् स्याद्विभागतः
मयूर वर्णो विज्ञेयस्सुवर्ण वर्ण संयुतः २३
हिरण्यं वा नवांशं तु स्वर्ण वर्णं प्रकीर्तितम्
श्वेताचलो द्विभागेन स्वर्णयुक् श्वेतवर्णकः २४
रम्यवर्षं नवांशेन स्वर्ण वर्णं प्रकीर्तितम्
नीलाचलो द्विभागेन वैडूर्यद्युति संयुक्तः २५
अविष्टाश्चतुर्त्रिंशद्भागा मध्ये व्यवस्थिताः
पूर्वां दिशं समारभ्य द्वात्रिंशद्भाग संयुतम् २६
भद्राश्ववर्षमाख्यातं श्वेत वर्णं प्रकीर्तितम्

माल्यवान् पश्चिमे भागे निर्मितः कृष्णवर्ण युक् २७
पश्चिमां दिशमारभ्य वर्षं स्यात् केतु मालकम्
द्वात्रिंशत्पदकं कृष्णं नाम्नैतद्गन्धमादनम् २८
समन्तादेक भागेन वर्षकं स्यादिलावृतम्
एकेन श्वेतवर्णं स्यात् चतुरश्रं तु मध्यमे २९
एषु द्वात्रिंशदंशेन वर्तयेन्मेरु पर्वतम्
वायव्याग्नेय पर्यन्तं वृत्ते सूत्रं प्रसार्य च ३०
तथैव नै-ऋतादीश विदिक् सूत्रं प्रसारयेत्
श्वेतवर्णं तु पूर्वे स्यात् दक्षिणे हेमवर्णकम् ३१
पश्चिमे कृष्ण वर्णं स्यात् उत्तरे रक्त वर्णकम्
अवशिश्टस्तु यो देशस्सर्वः पीतः प्रकीर्तितः ३२
जम्बूद्वीपः समाख्यातो शतभाग विनिर्मितः
जम्बूदीपसमः प्रोक्तो लवणाब्धिस्ततो बहिः ३३
शाक द्वीतं तु तद्वत्स्यत् तत्तद् द्विगुण मानतः
बहिस्समुद्रा दीपाश्च सप्तसंख्याः प्रकीर्तिताः ३४
जम्बूद्वीपः समाख्यातो लक्षयोजन विस्तरः
तद्बाह्ये तत् प्रमाणेन क्षारोदः परीकीर्तिताः ३५
क्षारोदाद् द्विगुणं क्षीरं क्षीरोदाद् द्विगुणं दधि
दध्नस्तु द्विगुणं सर्पिस्तस्मात्तु द्विगुणो रसः ३६
रसात्तु द्विगुणं माद्यं स्यात् स्वादुदकं तथा
जम्बू द्वीपात्तथा शाकश्शाकाच्च कुश संज्ञकः ३७
कुशात् क्रौञ्चो विनिर्दिष्टः क्रौञ्चात्स्याच्छाल्मली तथा
तस्माद् गोभेद संज्ञश्च गोभेदात् पुष्कलं पुनः ३८
ज्ञेयं स्वादूदकाद्बाह्ये लोका लोक इति स्मृतः
अन्तरे रक्त वर्ण स्याद् बाह्ये कृष्णः प्रकीर्तितः ३९
दशकोटिमिश्रोत् ज्ञेयः क्रीडार्थं स्याद्दिवौकसाम्

तस्माच्चाद्रिवरो ज्ञेयो लोका लोक इति द्विजाः ४०
सहस्रदश विस्तीर्णो देवानामाश्रमो मतः
हिमा चले पिशाचाःस्युस्तेषां नामान्यमूनिवै ४१
ध्वजश्चण्डस्य कंलासः कदली बक एव च
वडवामुखो द्विपादः कारकः स्मृतः ४२
ज्वाला च कुम्भपात्रश्च तथा कुम्भी प्रतुन्दिकः
प्रतुन्दिकोप वीरौ च प्रवीरो लूखल स्मृतः ४३
उलूखली मर्कटीस्यान्मर्कटश्चक्र षण्डकः
चक्र षण्डी पाणिपत्रः पाणिपत्री च वासुकः ४४
वासुकिः पांसुकृत्पांसुमथनी निपुणो मतः
निपुणा बलिभुग् ज्ञेया पश्चादुच्छेषषा मता ४५
प्रस्कन्दः स्कन्दिका प्रोक्ताश्चतुस्त्रिंशदुदाहृता
मांसेनान्नेन संपूज्य मद्यैः प्रतिसरादिभिः ४६
श्वेता चले दितसुता दानवाश्च समीरिताः
हिरण्य कशिपुर्नाम्ना हिरण्याक्षो द्वितीयकः ४७
एतौ दिति सुतौ ज्ञेयौ विप्रचित्तिरानन्तरः
द्विमूर्धा शम्बरश्चैव ततश्शङ्कुशिरा मताः ४८
यमश्च शङ्कुकर्णश्च द्विपादस्तदनन्तरः
गवेष्टिर्मेष वक्त्रश्च मखवान् कपिलोमतः ४९
वामनश्च मरीचिश्च तथेन्दुप उदाहृतः
भागोऽभागस्तथा ज्ञेयश्शालाग्रह इति स्मृता ५०
दिक्क्षोभश्च सुकेशश्च केतुवीर्यश्शतहृदः
मन्त्रजिच्चाश्वजित् प्रोक्तस्तथा रजिरुदाहृदः ५१
देविजिच्चैक वक्त्रश्च सुबाहुर्वारको मतः
वैश्वानरस्सुलोभाच द्रविणश्च महाशिराः ५२
स्वर्भानुः पूषपूर्वश्च द्विभुजो घृतराष्ट्रकः

चन्द्रतापन संज्ञश्च सूक्ष्मो निश्चन्द्र एव हि ५३
स्वर्ण नाभस्ततः प्रोक्तो महागिरिरनन्तरः
आभिलोकः सुकेशश्च मलयो मलकस्तथा ५४
नयश्च नगमूर्धा च महोदर उदाहृतः
प्रमोदः कुमुदश्चाश्वग्रीवो वैश्रव संज्ञकः ५५
विरूपाक्षश्चरूपथो हरो राजा उदाहृतः
हिरण्य युक् शतमखश्शंबरश्शरभो मयः ५६
शरभयस्सूर्य संज्ञश्च चन्द्रमास्स उदाहृतः
चतुष्षष्टिश्च संज्ञानां पूजाश्चैषां च पूर्ववत् ५७
शृङ्गवत्यचले पूज्याः पितरसमुदाहृता
सुभास्वरामृताश्चाग्निष्वात्ता उपहुता मताः ५८
सोमपाश्च ततो ज्ञेया विज्ञेयाश्च सुकालिकाः
क्रव्यादा आज्यपाश्चैव पृथक् त्रय उदाहृताः ५९
सप्तभिश्च गणैरेक विंशतिस्संख्यया मताः
अग्निष्वात्ता बहिर्षदस्सोमाश्च ततो मताः ६०
हविष्मन्तश्चाज्यपास्स्युस्तद्वदेव सुकालिकाः
अग्नयनग्निर्हव्यवाहा हविस्सौम्या दशैव हि ६१
तिल तैलान्नकैर्मांसैः पूज्या प्रतिसरादिभिः
नीलाचले च ऋषयः संपूज्या काश्यपादयः ६२
काश्यपोऽत्र् र्वसिष्टश्च भरद्वाजोऽथ गौतमः
विश्वामित्रो जमदग्नि र्मरीचिश्च ततो मतः ६३
पुलस्त्यः पुलहश्चैव क्रतुश्चैवांगिरा भृगुः
सनत्कुमारस्सनकः सनन्दश्च सनातनः ६४
दक्षोऽथ जैगीषीव्यश्च दहनैकत एव च
द्वितस्त्रितोऽथ जाबाली दुर्वासा दुर्वनीतकः ६५
कण्॥वः कात्यायनो मार्कण्डेयो दीर्घतमो मतः

शुनश्शेफो विदुरथस्साध्वं स्संवर्त इत्यपि ६६
च्यवनः पराशरश्चैव ततो द्वैपायनस्ततः
यवक्रीतदेवरातौ देवराजोऽजकस्तथा ६७
चत्वारिंशच्च मुनयो गन्धैः प्रतिसरादिभिः
ऋग्यजुस्साम मन्त्रैर्वा पूज्या वा स्वस्वनामभिः ६८
निषधे पर्वते नाना अनन्ताद्या उदाहृतः
अनन्तो वासुकिश्चैव तक्षः कार्कोटकः स्मृतः ६९
पद्मश्चैव महापद्म शङ्खपालोऽष्टम स्मृतः
गुलिकश्च यजेदष्ट विमिश्रैर्गन्ध पुष्पकैः ७०
सितामधुघृतं दत्वा दद्यात् प्रतिसरादिकम्
देवा पूज्याः महामेरौ त्रस्त्रिंशच्च ते मताः ७१
धरो ध्रुवश्च सोमश्च आपश्चैवानिलोऽनलः
प्रत्युषश्च प्रभासश्च वसवोऽष्टा विमे मताः ७२
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः
हरश्च बहुरूपश्च त्र्यम्बको नाम रुद्रकः ७३
सावित्रश्च जयन्तश्च पिनाकी चापराजितः
रुद्रा एकादश प्रोक्ता इन्द्रो धाता भगोऽर्यमा ७४
त्वष्टा मित्रश्च वरुणो विवस्त्वांस्तु ततं परः
सविता पूषांशुमान् विष्णु र्द्वादशार्का उदाहृताः ७५
प्रजापतिर्वषट्कार त्रयास्त्रिंशच्च देवताः
यष्ट्वा प्रणामधूपैश्च घृताहुतिभिरेव च ७६
दद्यात् प्रतिसरार्घ्यं च हेमकूटाख्य पर्वते
गन्धर्वाप्सरसः पूज्याः चित्र सेनाग्निसेनकः ७७
सुवर्णो गणपश्चैव धृतराष्ट्रस्ततः परम्
सूर्यवर्चा युगपुत्रो सुशिरामर नन्दिनौ ७८
द्वेधामतिश्चित्ररथं पर्जन्यश्च ततो मतः

उर्वीशश्च कलिश्चैव पर्वतो नारदस्तथा ७९
साधनश्चैव सन्धिश्च कुहरश्च करालकः
कृतवीर्यो ब्रह्मचारी सुपर्णो मीन इत्यपि ८०
हिरण्यश्च सुचन्द्रश्च गन्धर्वासप्तविंशतिः
अकृतयश्चोदयन्त्यो गन्धवत्यस्ततः परम् ८१
ऊर्जा युवतयश्चैव हेतुकाया उदाहृताः
स्तवाश्चैवामृता मोदाः सुशिवास्तु ततः परम् ८२
रूपाश्च भीरवाश्चैव शौर्याः सत्याश्चतुर्दश
मेनका सहजन्या च तत्पूर्वा पुञ्जिकस्थला ८३
घृतस्थला घृताची च विश्वाची पूर्वचित्तिका
प्रम्लोचन्त्युनुम्लोचन्ती मोचयन्त्य नुगा ततः ८४
रुद्रारुण प्रिया चैव अत्रसा सुभगा ततः
दास्यरिष्टा मनोवर्ती सुकेशाच तिलोत्तमा ८५
अग्निभत्री च हेमा वै मेनका चोर्वशी ततः
चौर्विंशति संख्याताः सुगन्धैश्च सुमाल्यकैः ८६
यष्ट्वाप्रतिसराद्यं हेमाढ्य पर्वते ततः
यक्षान्संपूज्येत्ते च महावैश्रवणस्तथा ८७
माणिभद्रश्च सुशिराः पञ्चभिञ्च विभण्डकः
विधृतः पूर्णभद्रोऽठ विरूपाक्षोऽष्टयक्षराट् ८८
सर्ववर्णक बलिभिः पूज्य सूत्रादि कंददेत्
ततो नीलाचले सिद्धा मन्त्रज्ञो मन्त्रवित्तमः ८९
प्राज्ञोऽथ हषराजश्च सिद्ध पूजित एव च
सिद्धि मत्परमस्सिद्धस्तथा केसरभद्रकः ९०
एतानष्टौ यजेत् सिद्धान् बलिभिस्सर्ववर्णकैः
दद्यात् प्रतिसराद्यं तु मेरौ नवग्रहान्वितम् ९१
नक्षत्रैर्वीर विघ्नेश संयुक्तान् मातृभिस्सह

ब्रह्म विष्णु महादेव विशाखांश्चैव लोकपैः ९२
सहिताभिस्सुरस्त्रीभिर्दस्त्रादिभिः समन्वितम्
संयजेद् बलिभिस्सार्धं वर्णकैः क्रमशस्तथा ९३
दद्यात् प्रतिसराद्यं च तेषां नामान्यमूनि वै
आदित्यश्चैव सोमश्च अक्ङरक बुधौ ततः ९४
बृहस्पतिश्च शुक्रश्च अर्की च राहु केतुकौ
एते नवग्रहाः प्रोक्ताः कृत्तिका वै ततः पराः ९५
पूर्वाषोढोत्तराषाढाभिजिच्छ्रोणा च पश्चिमे
धनिष्टा शतभिषक् चैव पूर्वाभाद्रपदा पुनः ९६
उत्तराभाद्रपादा च रेवत्यश्वयुजौ मतौ
भरणया चोत्तरस्यां तु ब्राम्ही माहेश्वरी ततः ९७
वाराही वैष्णवी चैव कौमारी च ततो मताः
माहेन्द्री चैव चामुणडी वीरभद्र गणाधिपौ ९८
स्कन्दो विष्णुर्महादेवो ब्रह्मा चैव विशाखकः
इन्द्रानलयमाश्चैव निर्-ऋति र्वरुणस्तथा ९९
वायुश्च धनदश्चैव ईशानश्चाष्टमो मतः
शची भाजीवनस्कन्दा धूम्रा मणडल वर्तिनी १००
पूर्णा चैव सिनीवाली कुहू राकानुमत्यपि
आयता व्ययनी चैव प्रज्ञा मेना बला ततः १०१
एताः सुरस्त्रियः प्रोक्ता स्संख्यया च चतुर्दश
नासत्या वश्विनौ दस्त्रौ क्रमशस्संयजेत् बुधः १०२
प्रतिसरं च वस्त्रं च पताका भूषणं तथा
यज्ञोपवीतं सर्वेभ्यः प्रदद्याच्च गुरूत्तमः १०३
सार्व वर्णिक मित्युक्तं पञ्चवर्ण हविस्ततः
ततः पश्चिमवेद्यां तु घृतेना पूरितान् घटान् १०४
ससूत्रान् सापिधानांश्च सवस्त्रान् पल्लवान्वितान्

अष्टाविंशतिमष्टौ वा अष्टोत्तरशतं तु वा १०५
संस्थाप्य निश्चलं तस्य चतुष्कोणेषु षोडश
सूत्रवस्त्रादि संयुक्तांस्तेषु द्रव्याणि विन्यसेत् १०६
ज्योतिष्टोमत्रयं पूर्वं अभया चापराजिता
जीवा विश्वेश्वरी वारा समाङ्गा विजया तथा १०७
सहा च सहदेवा च पूर्णकोशा शतावरी
अरिष्टा च शिवा भद्रा कुंभेष्वेतानि विन्यसेत् १०८
ब्राह्मी क्षमायुजा चैव सर्व बीजानि काञ्चनम्
मङ्गलानि यथालाभं सर्वौषधि रसांस्तथा १०९
रक्तानि सर्व गन्धांश्च बिल्वं च सविकङ्कतम्
प्रशस्त नाम्नयश्चौषध्यो हिरण्यं मङ्गलानि च ११०
आदावाडुहं चर्म जरया संभृतायुषः
प्रशस्त लक्षणं भूतं प्राचीनग्रीव मस्तकम् १११
ततो भूपस्य यौषव्य चर्मालोहित मक्षतम्
सिंहस्यापि तृतीयं च व्याघ्रस्य च ततः परम् ११२
चत्वार्येतानि चर्माणि तस्यां वेद्या मुपस्तरेत्
पूजयेद् गन्धपुष्पाद्यैः मृत्युजिन्मन्त्रमुच्चरन् ११३
तदूर्ध्वे स्थापयेद् भद्र पीठ सिंहासनस्थितम्
सौवर्णं राजतं ताम्र निर्मितं क्षीर वृक्षजम् ११४
सपाद सार्ध हस्तोच्चं हस्तोत्सेधमितं तु वा
सार्वभौमस्य तच्छ्रेष्टं मण्डलीकस्य कन्यसम् ११५
अनन्तरचितं मध्यमेवं वा परिकल्पयेत्
श्रेष्ठमध्यादि भेदेन सर्वं वैकस्य संमतम् ११६
तदूर्ध्वे विन्येत्पुष्पं सौवर्णं तस्य मध्यमे
कृतस्नानं विलिप्ताङ्गं सर्वालंकार संयुक्तम् ११७
निवेशयेन्नृपेन्द्रं तु पुरन्दर मुखं गुरु

दैवज्ञं मन्त्रिसामन्तैः पुरोहित मुखै र्वृतम्  ११८
वेद पुरयाह घोषैश्च नृत्तवाद्य समन्वितम्
गेयमङ्गल शब्दैश्च शैवस्थापन पूर्वकैः  ११९
ग्रहतत्तौम वासोधृग् गुरुः पञ्चाङ्ग भूषणः
कम्बलेन समाच्छाद्याभिषिञ्चेदुत्तरा मुखः  १२०
ग्राज्यं तैजसमुद्दिष्टं माज्यं पापहरं परम्
ग्राजयं सुराणामाहार ग्राज्ये लोकाः प्रतिष्टिता  १२१
भौमान्तरिज्ञं दिव्यं वा यत्ते कलुषमागतम्
सर्वं तदाज्य संस्पर्शात्प्रणाशमुपगच्छ तु  १२२
उद्धार्य कम्बलं न्यस्त्वा स्थापितैश्च घटाम्बुभिः
विविधैः फलपुष्पैश्च खादुभिश्च सुगन्धकैः  १२३
ग्रभिशिञ्चेन्नृपेन्द्रं तु मन्त्रेणानेन देशिकः
सुरास्वामभिषिञ्चन्तु ये च सिद्धाः पुरातनाः  १२४
ब्रह्मा विष्णुष्व रुद्रश्च मरुतां साध्याश्च मरुतां गणाः
ग्रादित्या वसवो रुद्राश्चाश्विनौ च भिषग्वरौ  १२५
ग्रदितिर्देवमाता च स्वाहा सन्धिस्सरस्वती
कीर्तिर्लक्ष्मीर्धृतिः श्रीश्च सिनीवाली कुहुस्तथा  १२६
नक्षत्राणि मुहूर्ताश्च पक्षाहोरात्र सन्धयः
संवत्सरा दिनेशाश्च कलाः काष्टाः क्षणालवाः  १२७
सर्वेत्वामभिषिञ्चन्तु कालस्या वयवाश्शुभाः
ग्रदितिस्सुरसा चैव विनता कद्रुरेव च  १२८
देव पत्न्यश्च याश्चोक्ता देवमातर एव च
सर्वास्त्वामभिषिञ्चन्तु शुभाश्चाप्सरसां गणाः  १२९
वैमानिकास्सुरगणा मनवस्सागरैस्सह
सरितश्च महाभागाः किन्नराः पुरुषास्तथा  १३०
वैखानसा महाभागा द्विजा वैहायसाश्चये

सप्तर्षयस्सदाराश्च ध्रुवस्थानानि यनि च १३१
मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः
भृगुस्सनत्कुमारश्च सनकोऽथ सनन्तनः १३२
सनातनश्च दक्षश्च जैगीषव्योऽथ जापालिः
एकतश्च द्वितश्चैव त्रितो जाबालि काश्यपौ १३३
दुर्वासा दुर्विनीता च कण्वः कात्यायनस्तथा
मार्कण्डेयो दीर्घतमाश्सुनश्शेफो विदूरतः १३४
और्वः संवर्तकश्चैव च्यवनोऽत्रिः पराशरः
द्वैपायनो यवक्रीतो देवरातस्सहानुजः १३५
एते वान्ये च बहवः पुण्यसंकीर्तनाशुभाः
तोयैस्त्वामभिषिञ्चन्तु सर्वोत्पात निबर्हणैः १३६
एतैराथर्वणैरन्ये रुद्राध्यायेन वा गुरुः
महारौहिण कूश्माण्डैः कुबेरहृदयैस्सह १३७
जप्त्वा हिरण्य वर्णेति चापो हिष्टेति मन्त्रतः
जप्त्वा शिवमघोरं वा मृत्युञ्जयमथापि वा १३८
अभिषिञ्चेत् क्षितीशं तु निरीक्ष्य स्नापयेत्ततः
कार्पास वस्त्र युगलं दधानः क्षत्रियाधिपः १३९
ततः पुण्याह शब्दैश्च शङ्खतूर्यरवान्वितम्
आचाम्याभ्यर्चयेद्देवान् स्वगुरुं ब्राह्मणानपि १४०
ततोऽर्चयेद्ध्वजं शस्त्रं श्वेतच्छत्रं स्वकीयकम्
अन्योन्यं च तदङ्गानि पूजयेत्पूर्वमन्त्रतः १४१
परिवर्त्य वस्त्रयुगलं सर्वाभरण भूषितम्
सर्वालंकार संयुक्तं होमवेदीं प्रविश्य च १४२
वृषस्य पृषदंशस्य रुरोश्च पृषतस्य च
सिंहस्य व्याघ्र संज्ञस्य चर्माण्यास्तीर्य तत्र च १४३
कुण्डे वा स्थण्डिले वापि मुखस्थाने गुरूत्तमाः

होमंकुर्यात् समिद्भिश्च सर्पिभिश्च शतं शतम्  १४४
पलाश समिधो मृत्युजित्परमो मतः
होमान्ते प्राञ्जलिर्भूत्वा ब्रूयाद्देवं गुरूत्तमः  १४५
यान्तु देव गणास्सर्वे पूजामादाय पार्थिवात्
सिद्धिं दत्वा तु विपुलां पुनरागमनाय च  १४६
तत्काले दक्षिणां दद्यात् गुरवे प्रीतिकारणम्
नृपेन्द्रो ब्राह्मणेभ्यश्च दद्याद्दानं विशेषतः  १४७
ततो बन्धाद्विमुच्येत जनान्सर्वान्नराधिपः
प्रणम्य देवं देवेशं तस्मै ग्रामादि काञ्चनम्  १४८
दत्वा सन्तुष्ट चित्तस्तु ककुटादि विभूषितः
ततो मातङ्गमारुह्य प्रविशेद्भवनं प्रति  १४९
सर्वोत्पातविनाशार्थं सर्वरोगनिवृत्तये
सार्वभौम प्रसिद्ध्यर्थं आयुरारोग्यसिद्धये  १५०
सर्व शत्रु विनाशार्थं विजयार्थं नृपस्य तु
पुष्याभिषेकं प्रत्यब्दं पुण्यस्थाने समाचरेत्  १५१
इति उत्तरकामिकाख्ये महातन्त्रे पुणाभिषेक विधिर्नाम अशीतितमः पटलः

एकाशीतितमे पटले ग्रह यज्ञ विधिः

ग्रह यज्ञं प्रवक्ष्यामि ग्रहाणां प्रीतिकार्णम्
सर्वदुःखं च सर्वेषां ग्रहचाराद्यतो भवेत्  १
नवभागी कृते क्षेत्रे मण्डपादौ गृहेऽपि वा
पूजयित्वा तु जुहुयात् देशिको दीक्षितैस्सह  २
अर्क स्सोम कुजरसौम्यो जीवः शुक्रः शनैश्चरः
राहू केतू नवैव स्यूः पूजयेत् स्वस्वनामतः  ३
प्रणवादि नमोन्तेन मण्डले संयजेत् गुरुः

तच्च वृत्तं चतुष्कोणं त्रिकोणं बाण संयुतम् ४
दीर्घाश्रं पञ्चकोणं च चापाङ्ग शूर्प सन्निभम्
ध्वजाभं मण्डलं प्रोक्तं ग्रहाणां वर्ण उच्यते ५
भास्करङ्गारकौ रक्तौ श्वेतौ शुक्र निशाकरौ
सोमपुत्रो गुरुश्चैव ताबुभौ पीतजौ स्मृतौ ६
कृष्णं शनैश्चरो विद्यात् राहु केतु तथैव च
ध्या त्वैवं पूजयेद्विद्वान् गन्धैः पुष्पैरनु क्रमात् ७
सर्वेषां गुग्गुलु धूपस्तैलेनाथ घृतेन वा
दीपः प्रोक्तस्तु नैवेद्यं शलि संभव मुच्यते ८
चर्वर्थमपि शाली स्यात् होमे गव्यं घृतं मतम्
कुण्डे वा स्थण्डिले वापि पूजास्थानं प्रकल्पयेत् ९
होमं कुर्यात्समित्सर्पिस्तिले नैव समायुतम्
अर्क पलाशः खदिरस्त्वपामार्गो यथाक्रमम् १०
अश्वत्थोदुम्बरौ चैव शमी दूर्वा कुशस्समित्
पलाशः खदिरो वाथ स्वस्मित् कुश संभवे ११
क्षीर वृक्ष समुद्भूताथवा तौ प्रशंसितौ
स्रुक् स्रुवौ लक्षणोपेतौ पलाश दल जावथ १२
होतृणां दक्षिणां दद्यात् तदन्ते फलसिद्धये १३
इति कामिकाख्ये महातन्त्रे ग्रहयज्ञ विधिः एकाशीतितमः पटलः

## द्व्यशीतितमे पटले प्रतिसर विधिः

राज्ञां प्रतिसरं वक्ष्ये सर्वमङ्गल कर्मणि
निर्दिष्ट दिवसात्पूर्व रात्रे कौतुक बन्धनम् १
विदध्याद्देशिकश्शुद्धः कृत्वा च सकलीकृतः
स्थण्डिलं शालिना कृत्वा तदूर्ध्वे स्थालिकां न्यसेत् २
श्वेत तण्डुल संपूर्णं पुण्याह प्रोक्षणान्वितम्

यज्ञ सूत्रं च वलयं अङ्गुलीयकमेव च  ३
कृत्वा प्रतिसरं स्वर्ण पुष्पं हेममयं शुभम्
प्रक्षाल्यस्त्रेण चार्घ्येण तण्डुलोर्ध्वे विनिक्षिपेत्  ४
संपूज्य गन्ध पुष्पाद्यैः मन्त्रयेन्मनुभिः क्रमात्
ईशानेन शिरः पुष्पं वर्मणा ब्रह्मसूत्रकम्  ५
वलयं हृदयेनैव तद्वदेवाङ्गुलीयकम्
बहुरूपेण वा सर्वं मन्त्रयेद्देशिकोत्तमः  ६
कौतुकं हृदयेनैव तेनैव भसितं तथा
चन्दनेन विमिश्रं तदैशान्यां स्थापयेद् गुरुः  ७
मध्यादि सोम पर्यन्तं पुष्पाद्यं विनिवेशयेत्
ताम्बूलं दापयेद्वाथ पुरुषाख्य मनुं स्मरन्  ८
दूर्वाग्रं केवलं निर्मितं राजतं तु वा
आग्नेये नै-ऋते न्यस्त्वा हृदयेनाभि मन्त्रयेत्  ९
पटै राच्छादयित्वा तु नगरीं भ्रामयेत्ततः
सर्वालङ्कार संयुक्तं मातङ्गोपरि संस्थितम्  १०
मुहूर्ते समनु प्राप्ते गुरुर्दैवज्ञ संयुतः
पुरोहितमुखैर्विप्रैरन्वितस्सर्व मङ्गलः  ११
कृतशौचं विलिप्ताङ्गं क्षौमवस्त्रोत्तरीयकम्
सर्वाभरण संयुक्तं सर्वालङ्कार संयुतम्  १२
सिंहासनादौ नृपतिं पूववक्त्रं निवेशयेत्
पुण्याह प्रोक्षणं कृत्वा पुष्पाद्यं पूर्वमन्त्रतः  १३
दत्वा नृपस्य सर्वं तु मृत्युजिन्मन्त्रमुच्चरन्
बध्वा दक्षिण हस्ते तु कौतुकं सौम्यदिङ्मुखः  १४
सर्वात्मानं समुच्चार्य भस्म दत्वा गुरूत्तमः
ईशानाद्यैर्यथा न्यायमथवा परिकल्पयेत्  १५
बृहत्सामक पूर्वन्तु पठित्वादौ समुच्चरन्

नालिकेर फलान्यत्र लाजपुष्पादिभिः सह १६
समन्तात् स्थापयित्वा तु कुर्यात्प्रतिसरं गुरुः
देशिकं पूजयेत्कर्ता दैवज्ञं च पुरोहितम् १७
ब्राह्मणानपि सर्वांश्च ततो मङ्गलवाचकैः
अनेन विधिना कुर्याद्देवदेवस्य शूलिनः १८
अन्येषामपि देवानां चतुर्णामपि वर्णिनाम्

इति उत्तरकामिकाख्ये महातन्त्रे प्रतिसार विधिर्नाम द्वयशीतितमः पटलः

त्रयशीतितमे पटले तुलारोह षोडश दानि विधिः

वक्ष्ये षोडशदानानि सर्वकामार्थ सिद्धये
ब्राह्मणादि चतुर्णां तु भूमीन्द्राणां विशेषतः १
ग्रहणादिषुकालेषु शुभे देशे विशेषतः
हस्तविंशति मानेन अष्टांशेन द्विरष्टभिः २
कूटं वा मण्टपं वाथ तन्मध्ये वेदिका नयेत्
नवष्ट्सप्तहस्तेव द्विहस्ताद्यार्धहस्ततः ३
विस्तारेणोच्छ्रयेणापि द्वादशस्तम्भसंयुतम्
तद्बाह्ये नव कुण्डानि चतुरश्राणि तानि च ४
चतुर्द्वारसमायुक्तं चतुस्तोरण भूषितम्
दर्भमालासमायुक्तं दिग्ध्वजैश्च समन्वितम् ५
अष्टमङ्गलसंयुक्तं वितानेनोपशोभितम्
सामान्यमेतदाख्यातं तुलाभारादिके द्विजाः ६
बिल्वाश्वत्थपलाशास्स्युर्यज्ञ वृक्षश्चये मृतः
पनसाम्रसमुद्भूताः खादिरो वा प्रशस्यते ७
एकदारुमयस्सर्वस्त्वथा मिश्र इष्यते
सप्तषट् पञ्चहस्तैश्च पार्श्वस्तम्भोच्छ्रभौ मतौ ८

उत्तरस्तु तदूर्ध्वे स्यात् षडष्टायाम संयुतम्
अङ्गुलत्रय हान्या तु नवधा मानमीरितम्  ९
पार्श्वस्तम्भ विशालेन विस्तारोत्सेधसंयुतम्
पादाधिकस्त्रिपादो वा उत्सेधः परिकीर्तितः  १०
द्विहस्तं वा त्रिहस्तं वा तयोरन्तरमानकम्
तुलादण्डस्य दीर्घं स्याद्विष्कम्भस्तु दशाङ्गुलः  ११
अङ्गुलेनाधिको वापि हीनो वा विस्तरो भवेत्
षट्त्रिंशन्मात्र संयुक्तमायामं वाथ दैर्घ्यकम्  १२
अष्टाङ्गुलेन विस्तारस्त्वथ पञ्चयवान्वितः
षट्त्रिंशन्मात्रनाहस्तु मध्यमे तु विधीयते  १३
अग्रे मूले च मध्ये वा हेमपट्टैर्विभूषयेत्
तुलादण्डे प्रकर्तव्यमवलम्बनकत्रयम्  १४
ताम्रेणाथ प्रकर्तव्यमायसेनाथवा भवेत्
मध्ये चोर्ध्वे मुखं कार्यं त्ववलम्बस्सुशोभनः  १५
जिह्वामेकां तुलामध्ये तोरणस्य प्रकल्पयेत्
उत्तरस्य तु मध्ये तु अयश्शङ्कु दृढं नयेत्  १६
शङ्कुं सुषिर संपन्नं वलयेन समन्वितम्
सप्ताष्टषट्शतेनाथ ताम्रेणाधारको प्रभोः  १७
एकाङ्गुल प्रमाणाढ्यौ वेदरन्ध्रसमन्वितौ
चतुष्कुण्डल संयुक्तौ हस्तप्रमाण संमितौ  १८
प्रादेशं वा चतुष्कं च षण्मात्रं स्यात् स्थलोपरि
यथा तथा विधेयौ तौ प्राक्पश्चिमगतावृतौ  १९
स्तम्भद्वय शिखमानमुत्तरद्वार संइतम्
कुम्भमध्यादि संयुक्तावथवा परिकल्पयेत्  २०
खात्वा पुरुषमात्रं तु न्यस्त्वा पादशिलां समाम्
तदूर्ध्वे स्थापयित्वादौ वालुकाभिर्दृढं नयेत्  २१

एवं सर्वं समापाद्य शिल्पिमोक्षावसानके
पुण्याहं वाचयित्वा तु मण्डपे समलंकृते २२
मङ्गलाङ्कुर संयुक्ते नानाफल समन्विते
मण्डलं कारयेद्धीमान् सर्वतोभद्र संज्ञकम् २३
वज्रादि शूल पर्यन्तं मण्डपस्याष्टदिक्षु च
शूलस्य वामदेशे चक्रं पद्मं दक्षिणे २४
मध्यमे देवदेवेशं वामे गौरी समायुतम्
संपूज्य गन्ध पुष्पाद्यैः ब्रह्माणं दक्षिणे यजेत् २५
वाम् संपूजयेद्विष्णुं समान्ताल्लोकपान्नयसेत्
सूर्यं मध्येऽग्नि देशे तु भास्करंनै-ऋृतेऽथवा २६
भानुं वायौ रविं चैशे दिवाकरमथार्चयेत्
उषां प्रभां तथा प्रज्ञां संन्ध्यां सावित्रिमर्चयेत् २७
मध्यादीशानपर्यन्तं गन्धपुष्पादिनार्चचेत्
विस्तारां मध्यमे देशे सुतरां वह्नि गोचरे २८
प्रभूतं विमलं सारमारध्यं पूर्वदेशतः
उत्तरान्तं च संपूज्य सुखं मध्ये प्रजूजयेत् २९
बोधनी वायुदेशे तु शार्वेत्वाप्यायनी यजेत्
रविं च मध्यमे देशे पूजयेद्देशिकोत्तमः ३०
दीप्ताद्यां पूजयेत् शक्तीः पूर्वान्मध्यान्तमीरिताः
सोमादि केतुपर्यन्तं ग्रहानष्टौ प्रपूजयेत् ३१
ततो होम प्रकर्तव्यस्तद्विधानमिहोच्यते
प्रधान होमे देवेशं लोकपानष्ट दिक्षु च ३२
गायत्र्या होमयेन्मध्ये दिक्षु लोकेश मन्त्रतः
स्वाहान्तं प्रणवोपेतं स्वस्वनाम्नाद्विजोतमाः ३३
शिवाग्निं स्वस्व शास्त्रोक्तं संपाद्याग्नि मुखान्वितम्
लोकेश सहितं देवं समावाह्य समर्चयेत् ३४

नाडी सन्धान सम्युक्तं जयाद्यान्त समन्वितम्
समिच्चरु घृतोपेतं सहस्त्रं वा तदर्धकम्  ३५
शतमष्टोत्तरंवाथ होतव्यं स्वस्व दिग्गजैः
शुद्ध पायसमुग्जन्नै श्चरुभिस्त्रिभिरन्तितम्  ३६
क्षीराक्त दूर्वयाहोमं पञ्चविंशति संख्यया
मृत्युञ्जयं समुच्चार्य वास्तु होममथा चरेत्  ३७
बहुरूपेण कर्तव्यं पार्यश्चितं शतं शतम्
मण्डले पुजितान्सर्वान् देवानभ्यर्च्य होमयेत्  ३८
पूर्णा कृत्वा पुरेशानां क्रियामत्र समाचरेत्
सहस्त्र कलशार्द्यैश्च संस्नाप्य परमेश्वरम्  ३९
महा पूजा च कर्तव्या प्रभूत हविषान्विता
पञ्चामृतैः पञ्चगव्यैः क्षीराद्यैः स्नपनं तु वा  ४०
ब्राह्मणान् भोजयेत्पश्चात् तुलारोहणमाचरेत्
आहूय नृपतिं स्नातं शुक्लवस्त्रानुलेपनम्  ४१
सर्वा भरण संयुक्तं शुक्लमाल्यविभूषितम्
कृतप्रतिसरं शान्तं खड्ग खेटक धारिणाम्  ४२
आहूय शिवतोयेन प्रोक्ष येच्छिव मूच्चरन्
पुण्याहप्रोक्षणं पूर्वं भूतशुद्धि पुरस्सरम्  ४३
सकलीकरणं कृत्वा रोपयेन्मन्त्रमुच्चरम्
रुद्रगायत्रि संज्ञंतु यजमानस्तदा जपेत  ४४
घटिकार्धं तदर्धं वा तत्रैवायनमाचरेत्
पूर्वदिक स्थान मध्यस्थ पश्चिमालि मुखोय था  ४५
आलोक्य काञ्चनंतत्स्थं कूर्च हस्तो हरंस्मरन्
वेदातोद्य समायुक्तं नृत्तगीत समन्वुतम्  ४६
जयमङ्गलसंयुक्तं तत्सुवर्णसमं यदि
स्वकायेन तदायेन तुलारोहः कृतोभवेत्  ४७

शतमर्धं तदर्धं वा श्रेष्ठाद्यमधिकं वरम्
देवेन्द्रं वाथकर्तारं तुलारोहणमाचरेत् ४८
देशिकं पूजयेत्पश्चाद्वस्त्रकाञ्चन भूषणैः
होतॄंश्च दक्षिणां तेभ्यः प्रदद्याद्विधिपूर्वकम् ४९
शतनिष्कं तदर्धं वा तदर्धं काञ्चनस्य तु
ऋतित्विग्भ्यश्चैव सर्वेभ्यो दशनिष्काः प्रकीर्तिताः ५०
यागोपयुक्तं यद्द्रव्यं देशिकाय प्रदापयेत्
शिवार्चकस्य पूजा च प्राग्व देव समीरिता ५१
तस्यापि दक्षिणा शास्त्रे पञ्चाशन्निष्क संमिता
तुलाधि रोहितं वित्तं ब्राह्मणेभ्यः प्रदापयेत् ५२
मद्भक्तेभ्यो विशेषेण तदर्धवा प्रकल्पयेत्
देशिकेभ्यो विशेषेण दद्यान्छ्रद्धा समन्वितः ५३
तत्काले विसृजेत् बद्धान् कारागृहनिवेशितान्
यत्र कर्म करास्तेषां पृथङ्गिनष्कं प्रतापयेत् ५४
एतत् सामान्य मुद्दिष्टं दानानां द्विजयत्तमाः ५५
इति उत्तरकामिकाख्ये महातन्त्रे तुलारोहणदानविधिः त्रयशितितमः पटलः

## चतुश्शीतितमे पटले हिरणय गर्भ दानविधिः

हिरणय गर्भं वक्ष्यामि दानं सर्वार्थ सिद्धिदम्
कुर्यात्सहस्रनिष्केण त्वधः पात्रं हिरणयतः १
तदर्धेनोर्ध्वपात्रं तु सहस्रेण द्वयं तु वा
त्रिपादं वार्ध मानं वा सपादं सार्धमेव वा २
द्विगुणं वा प्रकर्तव्यं यथालाभं तु वा भवेत्
वृक्षजं वाथ तत्कृत्वा स्वर्णपट्टैश्च वेष्टयेत् ३
तिथ्यङ्गुलं तु मूलं स्यादेकैकाङ्गुलवर्धनात्

एकोन त्रिंशमात्रं तु मूलविस्तार इष्यते ४
एकपञ्चाशदारभ्य व्योममात्रविवर्धनात्
पञ्चसप्तत्रिमात्रान्तं तदुत्सेधः प्रकीर्तितः ५
विकारांशं तु तन्कृत्वा एकैकांश विवर्धनात्
अर्धाधिकं तु विस्तारा दास्य विस्तार इष्यते ६
अथ पादसमायुक्तो भित्तेः पादस्य निर्गमः
त्रिमात्रान्नवमात्रान्तं निर्गमे मानमिष्यते ७
पादुकोत्सेधमानं तु तदर्धं पादमेव वा
त्रिपादं वा समं वापि फलकाधनमिष्यते ८
पादुकोपरि दीर्घं वा विस्तारो भित्तिबाह्यतः
मायान्ता वा प्रकृत्यन्ता फेलाव्याप्तिरिहागमे ९
शिवान्तमूर्ध्वपात्रं स्यात् मध्ये पुरुषरूपवत्
आत्मानं भावयेद्विद्वांस्तद्विधान मिहोच्यते १०
स्थानं च वेदिकोपेतं मण्डलेन समन्वितम्
कृत्वातु पूत्ववत्तस्य मध्ये शालिं विनिक्षिपेत् ११
तदूर्ध्वे विन्यसेत्फेलां नववस्त्रैर्निवेष्टिताम्
नीरन्ध्रं माषकल्पेन कृत्वा गव्येन पूरयेत् १२
प्रत्येकं पञ्चभिर्वाथ तद्वत्पञ्चामृतैरपि
ब्रह्मभिः पूरयेद्विद्वानीशानाद्यैर्गुरूत्तमः १३
गायत्र्या पूजयेत्पश्चाद्यथा शिवमयं भवेत्
पूर्ववत्कारयेत्पूजां सामान्यं द्विजसत्तमाः १४
प्राङ्मुखः प्रविशेत् कर्ता गौरीगायत्रिकां जपेत्
छादयेत्तं प्धानेन गुरुश्शिवमनुं स्मरन् १५
तदा षोडशंसंस्कारान् गर्भाधानादिकान्गुरुः
कुर्यादनन्तरं वाथ तद्विशेषस्तु कथ्यते १६
कर्तारं भार्यया युक्तं सर्वालङ्कारशोभितम्

ग्रानीय कुर्यात्तस्यैव गर्भाधानादिकाः क्रियाः १७
भार्यादक्षपुटे दूर्वारससेचन माचरेत्
एकविंशति संख्यातानुदुम्बर फलान्वितान् १८
कुशानानीय शक्त्याथ कुर्यात्सीमन्तकर्म च
त्रिंशन्निष्कमितां कन्यां सर्वालङ्कारशोभिताम् १९
भार्यापार्श्वे विनिक्षिप्य शिवादिभ्यो निवेदयेत्
भोजयेत्पायसैर्विप्रानन्नप्राशानकर्मणि २०
हृल्लेखामन्त्रमुच्चार्य सर्व कर्म समाचरेत्
ग्रनुक्तमत्र यत्कर्म तुलारोह वदाचरेत् २१
एवं यः कुरुते मर्त्यः सोऽनन्त फलमश्नुते २ १-२

इति उत्तरकामिकाख्ये महातन्त्रे हिरगयगर्भादान
विधिश्चतुश्शीतितमः पटलः

पञ्चशीतितमे पटले तिलपर्वतदान विधिः

तिलपर्वतदानं तु वक्ष्यते द्विजसत्तमाः
पूर्ववन्मगडपं कृत्वा वेदिकारहितं यथा १
बाह्यवीथ्यां च कुगडान् प्रागुक्तविधिना नयेत्
पञ्चगव्येन संप्रिक्ष्य मगडलं मध्यकल्पितम् २
संछाद्याहतवस्त्रैश्च द्रोणपुष्पं विकीर्य च
पुगयाह प्रोक्षणं दगडं शतमात्रसमुच्छ्रितम् ३
वेणवेदिकल्पितं तत्र विन्यसेद्देशिकोत्तमः
तिलांश्च निक्षिपेत्तत्र व्योमव्यापिनमुच्चरन् ४
दगडात् प्रादेशमात्रं वा वस्वङ्गुलमथापि वा
कर्तव्यमधिकं सद्भिश्चतुरङ्गुलमेव वा ५
दगडमानसमं वाथ हीनं नैव समाचरेत्
वस्त्रैश्च वेष्टयेत् सर्वांस्तिलान् सद्यादिमन्त्रतः ६

देशं संक्ल्पयित्वा तु पूयत्तु विशेषतः
निक्षिपेत् पर्वतप्रान्ते मूर्तिपान् मूर्तिसंयुतान्  ७
शर्वादिन् क्ष्मादिपूर्वांश्च निष्कत्रयविनिर्मितान्
तत्रस्थमर्चयेद्देवं तिलपर्वतमध्यगम्  ८
अर्चयेच्च विधानज्ञो यजमानेन देशिकः
दर्शयेत् तिलमध्यस्थं देवदेवमुपापतिम्  ९
अयं हि देवदेवेशस्सर्वेषां वृषभध्वजः
अस्मार्चने कृते सर्वं ध्रुवं भवति कल्पनम्  १०
अत्रानुक्तं तु यत् किंचिदर्चनं होममेव वा
स्नपनं देव देवस्य सहस्रकलशादिभिः  ११
प्रागुक्तविधिना सर्वं तुलारोहवदाचरेत्
विसृज्य देवदेवेशं शिवाय शिवधर्मिणे  १२
दद्यात्तिलजगं कर्ता जलदानपुरस्सरम्
अस्मात्परतरं दानं नास्तीह भुवनत्रये  १३
अथवान्यप्रकारेण चाल्पद्रव्य महाफलम्
सर्वदा सर्वकाले च कर्तव्यमिह कथ्यते  १४
गोमयालिप्तदेशोर्ध्वे वस्त्रायास्तीर्य देशिकः
तिलं भारग्रयं तत्र निक्षिपेद्दशबीजतः  १५
कर्णिकाकेसरोपेतं पद्ममष्टदलान्वितम्
दशनिष्कोण कृत्वाथ तदूर्ध्वेनार्धमानतः  १६
तन्मध्ये विन्यसेत्पद्मं तन्मध्ये पूजयेच्छिवम्
तदुत्तरे तदर्धेन कारयेत्तु मनोन्मनीम्  १७
अष्टौ वामादिशक्तीश्च कृत्वा निष्कत्रयेण तु
अष्टौ विद्येश्वरान् बाह्ये तद्वत्स्वर्णमयेन वा  १८
कृत्वा संपूज्य विधिवत् तत्सर्वं तिलसंयुक्तम्
दापयेच्छिवभक्तेभ्यस्तत्कर्त्रा देशिकोत्तमः  १९

इति उत्तरकामिकाख्ये महातन्त्रे तिलपर्वतदान विधिः
पङ्चाशीतितमः पटलः

षड्शीतितमे पटले सुवर्ण भूमिदान विधिः

सौवर्णभूमिदानं तु वक्ष्येऽहं द्विजसत्तमाः
काञ्चनेन सहस्रेण चतुरश्रादिमेदिनी १
एकहस्त प्रमाणेन सप्तद्वीपसमन्विता
समुद्रपर्वतोपेता सर्वतीर्थसमन्विता २
मध्ये मेरुसमायुक्ता कर्तव्या शोभना यथा
अनेकमुनिसंयुक्तां नवखण्डां तु भावयेत् ३
पूर्ववद्देवपूजां च होमं चैव विशेषतः
मेर्वादीन् पूजयेत् स्वस्व बीजेनैव गुरूत्तमः ४
सहस्रकलशाद्यैश्च स्नापयेत्परमेश्वरम्
पूर्ववत्तस्य पूजा च विधेया द्विजसत्तमाः ५
शिवादिभ्यो प्रदातव्या मेदिनी स्वर्णनिर्मिता ५ १-२

इति उत्तरकामिकाख्ये महातन्त्रे सुवर्णभूमिदान विधिः
षड्शीतितमः पटलः

सप्providedाशीतितमे पटले कल्पपादपदान विधिः

कल्पपादपदानं तु वक्ष्येऽहं द्विजसत्तमाः
पादपं शतनिष्केण सुवर्णे समाचरेत् १
बहुशास्वासमोपेतं पत्रपुष्पसमन्वितम्
नानाफलसमायुक्तं सर्वशोभासमन्वितम् २
शाखासु बहुधा कुर्यान्मुक्तादामप्रलम्बनम्
छदनानि विचित्राणि कुर्यान्मरतकैर्द्विजाः ३
कारयेत् पल्लवानीह प्रवालैश्च विशेषतः

फलानि पद्मरागैश्च विविधानि समाचरेत् ४
नीलेन दराडमूलं तु स्कन्धं वज्रेणकारयेत्
वैडूर्येन प्रकर्तव्यं द्रुमाग्रं पुष्यरागतः ५
मस्तकं च प्रकर्तव्यं गोमेदकमयं यथा
स्कन्धं वै कारयेद्विद्वान् सूर्यकान्तेन सुव्रताः ६
इन्दुकान्तेन वा वेदिं स्फटिकेन द्रुमस्य तु
वितस्तिमात्रमायामं वृक्षस्य परिकीर्तितम् ७
शाखाष्टकस्य मानं च विस्तारं चोर्ध्वतस्तथा
स्थापयेद् वृक्षमूले तु लिङ्गं लोकपसंवृतम् ८
मराडपं वेदिकोपेतं मराडलेन समन्वितम्
पूर्ववत् तद्विना कृत्वा तन्मध्ये स्थाप्य पादपम् ९
लोकपावृतिसंयुक्तमीशानं पूजयेद्गुरुः
ईश्वराय द्रुमं दद्यात् तदीयेभ्यो द्विजोत्तमाः १०
अत्रानुक्तं तु यत्सर्वं तुलाभारवदाचरेत् ११

इति उत्तरकामिकाख्ये महातन्त्रे कल्पपादपदान विधिः
सप्ताशितितमः पटलः

## अष्टाशीतितमे पटले गणेश दान विधिः

गणेशदानं वक्ष्यामि सर्वपापप्रणाशनम्
पूर्ववन्मराटपं कुर्याद्वेदिकामराडलान्वितम् १
तन्मध्यमे यजेद्देवं लोकपाल समावृतम्
तद्बाह्ये पूजयेद्ष्टौ विद्येशानष्टदिक्षु च २
सर्वे ते च सुवर्णेन निर्मिताश्च पृठक् पृथक्
तृतीयावरणोपेतान् गन्धपुष्पादिभिर्गुरुः ३
प्रधाने जुहुयादीशं विद्येशानष्टदिक्षु च
ईशानादिषु संस्थाप्य सप्तविप्रान् समर्चयेत् ४

उत्तरे पूजयेत् कन्यां गन्धपुष्पादिभिर्गुरुः
तेभ्यः पदद्याद्विद्येशान् स्वस्वमन्त्रैरनुक्रमात् ५
अत्रानुक्तं तु यत् किञ्चित् तुलारोहवदाचरेत् ६
इति उत्तरकामिकाख्ये महातन्त्रे गणेश दान विधिः अष्टाशीतितमः पटलः

एकोननवतितमे पटले हेम धेनुदान विधिः

हेम धेनु प्रदानं तु वक्ष्ये संक्षेपतः क्रमात्
सर्व पाप हरं सर्व भय दुर्भिक्ष नाशनम् १
काञ्चनेन सहस्रेण तदर्धेनाथवा पुनः
तस्याप्यर्धेन वा कुर्याच्छतनिष्केण वा द्विजाः २
गोरूपं कारयेद्विद्वान् सर्व लक्षण सम्युतम्
पद्मरागं तु शृङ्गे स्यात् खुराग्रे वज्रमिष्यते ३
भ्रूमध्ये मौक्तिकं विद्याद्वडूर्यं पुच्छदेशके
पुष्परागं तु दन्तर्थं कल्पयेत्कल्पवित्तमः ४
गोरूपमेवं कृत्वा तु दशांशे नैव तस्य च
वत्सं तद्वत् समापाद्य पूर्ववन्मटपं नयेत् ५
वेदिका मण्डलोपेतं तन्मध्ये विन्यसेत्पशुम्
सवत्सां वस्त्र युग्मेन वेष्टयेद्देशिकोत्तमः ६
पूजयेद्गन्ध पुष्पाद्यैस्तद्गायत्र्या द्विजोत्तमाः
अर्चनं पूर्ववत्कुर्यात् होमं चैव विशेषतः ७
अथैकाग्नि विधानं वा समिदाज्य हविष्य युक्
क्षीराद्यः पूजयेद्देवं सहस्र कलशादिभिः ८
त्रिंऽसन्निष्कोऽथवा ज्ञेयो गुरोरेकाग्निकल्पने
अनुक्तं यद्भवेत् किञ्चित्तुलारोहवदाचरेत् ९
इति उत्तरकामिकाख्ये महातन्त्रे हेमदेनु दान विधिः

# एकोननवतितमः पटलः

## नवतितमे पटले लक्ष्मीदान विधिः

महदैश्वर्य सिद्ध्यर्थं लक्ष्मीदानमिहोच्यते
काञ्चनेन सहस्रेण तदर्धेन तदर्धतः १
तदर्धेनाथवा कुर्यात् श्रीदेवीं लक्षणान्वितम्
अष्टोत्तर शतेनाथ निष्केणैनां प्रकल्पयेत् २
पूर्ववन्मण्डपं कृत्वा वेदिकामण्डलान्वितम्
मण्डले विन्यसेल्लक्ष्मीं विष्णवोर्वामे यथा भवेत् ३
श्री मन्त्रेण यजेल्लक्ष्मीं श्री सूक्तेनाथवार्चयेत्
विष्णुं च विष्णुगायत्र्या गन्ध पुष्पादिनार्चयेत् ४
पूजयेच्छिव पूजां च होमं चैव विशेषतः
एक होमं तु वा कुर्यात् प्रगुक्त विधिना गुरुः ५
स्नपनं देव देवस्य सहस्र कलशादिभिः
पूर्ववत् विधिना कुर्यात् अनुक्तमिह यद्भवेत् ६
इति उत्तर कामिकाख्ये महातन्त्रे लक्ष्मीदान विधिः नवतितमः पटलः

## एकनवतितमे पटले तिलधेनु दान विधिः

तिल धेनु विधिं वक्ष्ये सर्वकामार्थ साधनम्
पूर्ववन्मण्डलं कुर्यात् वेदिका मण्डलान्वितम् १
तस्याग्रे कारयेद्विद्वान् पद्मं तिलमयं शुभम्
अष्टद्रोणेन कर्तव्यं यद्वा भारेण कारयेत् २
वस्त्रैराछाद्य तन्मध्ये स्वर्णपद्मं विनिक्षिपेत्
त्रिंशन्निष्केण चार्धेन तदर्धेनाथवा भवेत् ३
पञ्च निष्केण वा कुर्यात् कर्णिकानालशोभितम्

तस्यैवोत्तरदिग्भागे ब्राह्मणान् रुद्र संख्यया ४
रुद्रानेकादशन् स्मृत्वा समावाह्य समर्चयेत्
विप्रान् द्वादश पूर्वे तु द्वादशादित्यमन्त्रतः ५
दक्षिणेत्वष्ट विद्येशान् बुधान् विप्रान् समर्चयेत्
षौडशैव तु गन्धाद्यैश्चतुर्दिक्षु च भावयेत् ६
अर्चयित्वाथ तन्मन्त्रैर्वस्त्रं प्रावरणानि च
पञ्चाङ्ग भूषणोपेतां स्त्वास्तीर्य च तदश्रके ७
प्रत्येकं नववस्त्रं तु तस्मिन् खारि प्रमाणतः
तिलान्निक्षिप्य कांस्ये तु पात्रे नवफलेन तु ८
इक्षुखण्डं च दातव्यं गां च तेभ्यः क्रमेण तु
हेमशृङ्गामरोगां तु दद्याद्रौप्यखुरामथ ९
प्रतिशङ्गं तु निष्कं स्यात् खुरं तद्विगुणेन च
पूर्ववन्मण्डपं कुर्यात् वेदिका मण्डलान्वितम् १०
तद्वत् पूजा च होमं च स्नपनाद्यं तथैव च
केवलं रुद्रदानं वा सूर्यदान मथापि वा ११
मूर्ति विघ्नेशदानं वा यथा वद्धिं प्रकल्पयेत्
पञ्चाङ्ग भूषणं पञ्च निष्केणात्र प्रकल्पयेत् १२
दक्षिणां पूर्ववद्दद्याद्द्यादनुक्तं पूर्ववद्भवेत् १२ १-२

इति उत्तर कामिकाख्ये महातन्त्रे तिलधेनुदानविधिरेकनवतितमः पटलः

द्विनवतितमे पटले सहस्रगोदान विधिः

गवां सहस्र संख्यानां दानं वक्ष्यामि सिद्धये
सवत्सस्सगुणा एव संग्राह्या गुणवत्तराः १
अष्टौ संपूज्य शृङ्गेषु प्रतिशृङ्गं तु निष्कतः
शृङ्गं कृत्वा तु बध्नीयाद् राजतं खुरमेव वा २

कराठं निष्केरा पट्टं च बध्वा दद्यातृणं ततः
मराडपं वेदिकोपेतं मराडलेन समन्वितम्  ३
पूर्ववच्छिव पूजा च होमश्चात्र विधीयताम्
स्नपनं च शिवस्याथ सहस्र कलशादिभिः  ४
शिवाय शिवविप्रेभ्यो दद्याद् गां दक्षिणायुताम्
दशनिष्कं तदर्धं वा तदर्धं निष्कमेव वा  ५
दानकाले पठेत् स्तोत्रमिदं कर्ता तदुच्यते
गावो ममाग्रतोनित्यं गावः पृष्ठत एव मे  ६
गावो मे हृदयं नित्यं गवां मध्ये वसाम्यहम्
अनुक्तमत्र यत्कर्म तुलाभारवशान्नयेत्  ७

इति उत्तरकामिकाख्ये महातन्त्रे सहस्रगोदानविधिः द्विनवतितमः पटलः

त्रिनवतितमे पटले हिरगयाश्व दान विधिः

हिरगयाश्व प्रदानं तु विजयार्थमिहोच्यते
अयुतस्याश्वमेधस्य फलाच्छ्रेष्ठमिदं मतम्  १
अष्टोत्तर सहस्रेण तदर्धेनार्धमानतः
अष्टोत्तर शतेनाथ कृत्वाश्वं लक्षणान्वितम्  २
पञ्च कल्याण चित्राङ्गं रजतेन तु कारयेत्
सर्वालंकार संयुक्तं कलाद्यैश्च समन्वितम्  ३
मराडपं पूर्ववत् कृत्वा वेदिकामराडलान्वितम्
तन्मध्ये विन्यसेद्वाजि मुच्चैः श्रवसनामतः  ४
गन्धादिभिस्समभ्यर्च्य विप्रेभ्योविनिवेदयेत्
सुरेन्द्र बुद्ध्या संपूज्य पञ्च निष्कं प्रदाय च  ५
दीनान्ध कृपणानाथां स्तोषयेद्भोजनादिभिः
मराडलाभ्यर्चनं होमं कलशस्नपनं तथा  ६

इति उत्तरकामिक महातन्त्रे हिरगयाश्व प्रदान विधिस्त्रिनवतितमः पटलः

चतुर्नवतितमे पटले कन्यादान विधिः

सर्व दानोत्तमं वद्त्ये कन्यादानं द्विजोत्तमाः
सर्व लद्मण संपन्नां दोष विवर्जिताम्  १
विभिन्नगोत्र प्रभवामनुकूल दिनोद्भवाम्
दत्वा धनादिकं पित्रोस्तत्संवाद पुरस्सरम्  २
उभयोश्चित्तमालोक्य पुत्रीकृत्य च तां पुनः
संस्नाप्य गन्धमालाभि र्भूषणैर्वस्त्र संयुतैः  २३
संभूष्य कन्यकां दद्याद्यागाय विधिनामुना
पूर्ववन्मगडपं कुर्यात् वेदिका मगडलान्वितम्  २४
तत्र संपूज्य देवेशं कुर्यात् होमं च पूर्ववत्
नैमित्तिकोदितं शान्तं शिवभक्ति समन्वितम्  २५
संपूज्येश्वर बुद्ध्या च गन्धपुष्पस्त्रगादिभिः
पञ्चाङ्ग भूषणश्चैव वासोभूमिधनान्वितम्  ६
ग्रहोपकरणोपेतं दासी दासमनुत्तमम्
दद्याद्वराय संस्मृत्य शिवं श्रद्धा पुरस्सरम्  ७
एवं यः कारयेद्दानं कन्यायास्सुखमेधते
कन्यारोमाणि यावन्ति तावद्वर्षशतं द्विजाः  ८

इति उत्तर कामिकाख्ये महातन्त्रे कन्यादान विधिश्चतुर्नवतितमः पटलः

पञ्चनवतितमे पटले हिरगयोद्म प्रदान विधिः

हिरगयोद्म प्रदानं तु संद्मेपेणाधुनोच्यते
काञ्चनेन सहस्त्रेण कुर्यान्निष्केण वार्धतः  १

तदर्धेनाथवा कुर्यात् तस्याप्यर्धेन वार्धतः
वृषं सलक्षणं कुर्यात् अष्टोत्तर शतेन वा  २
स्फटिकेनार्ध चन्द्राभं ललाटे राजतं खुरम्
कर्णं च पद्मरागेण गोमेदेन ककुद्भवेत्  ३
घण्टामालां तु कण्ठे तु रत्नचित्रा यथा भवेत्
वृषाङ्गं कारयेद् विद्वान् किंकिणी मालयावृतम्  ४
पूर्ववन्मण्डपं कृत्वा वेदिकामण्डलान्वितम्
तन्मध्ये विन्यसेदुक्षं पश्चिमास्यं द्विजोत्तमाः  ५
गायत्र्या पूजयेदुक्षुक्षं तदूर्ध्वे परमेश्वरम्
पूर्ववच्छिवपूजा च होमं चैव विशेषतः  ६
शिवाय शिवभक्तेभ्यो दद्यादुक्षं महत्तरम्
समिदाज्य चरूपेतं शान्ति होममथापि वा  ७
चरेदनुक्तमिह यत् तत्तुलाभारवद् गुरुः  ८

इति उत्तर कामिक महातन्त्रे हिरण्योक्ष प्रदान विधिः पञ्चनवतितमः पटलः

## षण्णवतितमे पटले गजदान विधिः

अतः परं प्रवक्ष्यामि गजदानं द्विजोत्तमाः
गजं सलक्षणं कुर्यात् सौवर्णं राजतं तु वा  १
सहस्रेण तदर्धेन तस्यार्धेन तदर्धतः
अष्टोत्तर शतेनाथ कारयेद्देशिकोत्तमः  २
पूर्ववन्मण्डपं कुर्यात् वेदिका मण्डलान्वितम्
गजेन्द्रं विन्यसेन्मध्ये गन्धपुष्पादिनार्चयेत्  ३
पूर्ववच्छिव पूजा च होमयेच्च विशेषतः
शिवाय शिवभक्तेभ्यो दद्याच्छ्रद्धा समन्वितम्  ४
अन्यत्सर्वमनुद्दिष्टं तुलाभारवदाचरेत्  ४ १-२

इति उत्तरकामिकाख्ये महातन्त्रे गजदान विधिः षगणवतितमः पटलः

## सप्तनवतितमे पटले लोकपालाष्टकदान विधिः

अष्टानां लोकपालानां दानं वद्म्याम्यतः परम्
प्रागुक्तदेशकाले तु वेदिकामगडलान्विते १
पूर्ववच्छिवपूजा च होमश्चैव द्विजोत्तमाः
शैवानष्टौ समाहूय सर्वलद्मण संयुताम् २
उदङ्मुखसमासीनान्नववस्त्रेपरि स्थिताम्
अर्चयेद्गन्धपुष्पाद्यैर्मन्त्रैर्लोकेशवाचकैः ३
एकस्मिन् स्थगिडले वाथ कुगडे वा होममाचरेत्
दद्मिणा दशनिष्का स्याद् भूषगैश्च समन्विता ४
वस्त्रं प्रावरणं दद्यादासनं कम्बलं तुवा
अत्रानुक्तं तु यत् किंचित् तुलाभारवदाचरेत् ५
लोकेशादनमेव स्यात् सर्वसंपत् समृद्धिदम्
परचक्रप्रमथनं गजवाजिविवर्धनम् ६
पुत्रदं राष्ट्रद्धर्थं गोब्राह्मणहितवहम्

इति उत्तर कामिकाख्ये महातन्त्रे लोकपालाष्टकदान विधिः सप्तनवतितमः पटलः

## अष्टनवतितमे पटले सर्वदानोत्तम विधिः

सर्व दानोत्तमं नाम्ना दानमाद्यं वदाम्यहम्
मगडपं विधिना कुर्यात् वेदिका कुगड संयुतम् १
प्रपायां विधिरेवं स्यात् पूर्ववन्मगडलान्वितम्
मध्यमे देवदेवेशं ब्रह्मविष्णु समन्वितम् २
गन्धाद्यै रर्चयेदीशं ब्रह्मणे विष्णवे पुनः

ब्रह्मन् ब्राह्मण भेदाय ब्रह्मणे धन दायिने ३
शिवाय हरये स्वाहा स्वधा वौषट् वषरणमः
नारायणाय विद्महे वासुदेवाय धीमहि
तन्नो विष्णुः प्रचोदयात्
शेषहोम प्रकर्तव्यस्ततः कुण्डे समाहितैः
चतुर्वेद विदो ग्राह्या जप्तारस्त्रय एव हि ५
तानुद्दिश्य यथान्यायं द्विजेभ्यो दापयेद्धनम्
शतमष्टोत्तरं तेषां पृथक् पृथगनुत्तमम् ६
पञ्चाङ्ग भूषणोपेतं सद्वस्त्रावरणान्वितम्
अत्रानुक्तं तु यत् सर्वं पूर्वोक्तविधिना चरेत् ७

इति उत्तर कामिकाख्ये महातन्त्रे विधिरष्टनवतितमः पतलः

Reference for *Pūrvabhāgaḥ* (pages 1-418):
Svāmināthaśivācārya, Śrī Ce., *Kāmikāgamaḥ Pūrvabhāgaḥ*, (Madras: South Indian Arcaka's Association, 1975).

Data entry by Peter Freund. Proofread by Peter Freund, with occasional reference to the edition by Mark S. G. Dyczkowski.

Reference for *Uttarabhāgaḥ* (pages 419-1033):
*Kaamikaagama, 2 vols.,* CivanaNapotayantracalai, Cintatiripettai, Madras, 1909.

Data entry by the staff of Muktabodha under the supervision of Mark S. G. Dyczkowski.
Conversion to Devanagari using Vedapad software by Ralph Bunker.
Formatted by Peter Freund.